# शिशुपालवधम् ।

---

## महाकवि श्रीमाघ-विरचितम् ।

महामहोपाध्याय-

कोलाचलमल्लिनाथसूरिकृतसर्वङ्कषाख्यया

व्याख्यया समेतम् ।

---

पण्डितकुलपति-

बि, ए, उपाधिधारि-

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्यात्मजाभ्यां

पण्डित श्रीमदाशुबोधविद्याभूषण-

पण्डित श्रीमन्नित्यबोधविद्यारत्नाभ्यां

मूलाङ्कान्वयनिर्देश-संक्षिप्तकथा-टिप्पन्यादिना

संस्कृतं प्रकाशितञ्च ।

षष्ठसंस्करणम् ।


कलिकातानगर्य्यां

सिद्धेश्वरयन्त्रे

मुद्रितम् ।

---

ई १९२० ।

# भूमिका ।



इह खलु सुविशाले तुहिनाचलाऽऽलिङ्गितचारुभाले पारावार-विधौतपादतले बहुलपण्डितकुलकीर्त्तिमालानिलये पुण्यभूमौ भारते वर्षे, वर्षान्तरेषु च वास्तव्यैः संस्कृतभाषारसतत्त्वं विशेषतया विविदिषुभिः विद्वद्भिः सहृदयैः, जिज्ञासुभिः अन्तेवासिभिः, अपरैश्च प्रेक्षावद्भिः राजपुत्राऽऽदिभिः प्रथमं साग्रहं काव्यशास्त्रमेवाधीयते ; तत्र सत्स्वपि सुप्रसिद्धेषु सुबहुषु राघव-पाण्डवीयाऽऽदिषु हरविजयाऽऽदिषु च काव्यसमूहेषु "लघुत्रयी" इति समाख्यया प्रसिद्धं कविकुलशिरोमणि-महाकविकालिदासप्रणीतं रघुवंश-कुमारसम्भव-मेघदूताख्यकाव्यत्रयं, "वृहत्त्रयी" इति नाम्ना प्रथितं प्रसिद्धमहाकवित्रयप्रणीतं किरातार्ज्जुनीयशिशुपालबधनैषधचरिताख्यकाव्यत्रयञ्च क्रमेण तैः सानुरागमभ्यस्यते, वङ्गेषु इत्येषा प्राचीनानुसृता सरणिः प्रतिगृहं चिरमेवावर्त्तत । तत्र वृहत्त्रय्यामपि सकलमहाकाव्यलक्षणसत्त्वेन अलङ्कारप्राचुर्य्येण कवित्वाऽऽधायकविविधगुणविभूषिततया व्याकरण-प्रयोगबाहुल्येनातिव्युत्पत्त्याधायकतया च, शिशुपालबधं महाकाव्य-मेव सर्वथा सर्वेषु काव्येषु प्राधान्यं लेभे, इत्येव बहूनां मनीषिणामभि-मतं, तत्प्रमाणार्थञ्च तैरभिहितम्,—

"उपमा कालिदासस्य भारवेरर्थगौरवम् ।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः ॥
पुष्पेषु जाती नगरेषु काञ्ची नारीषु रम्भा पुरुषेषु विष्णुः ।
नदीषु गङ्गा नृपतौ च रामः काव्येषु माघः कविकालिदासः ॥"

गुर्ज्जरदेशान्तर्गतश्रीमालाऽऽख्यदेशवास्तव्यः, तद्देशाधिपतेः* श्रीधर्म्म-नाभस्य मन्त्रिणः पूतचरित्रस्य सर्वकार्य्यनिपुणस्य सर्वाधिकारिपदभाजः सुप्रभदेवस्य पौत्रः, सर्वगुणाऽऽधारस्य दत्तकस्य तनयः, धाराऽधीश्वर-श्रीभोजभूपालबालमित्रं, महामहोपाध्यायपदभाक् वैष्णवो महा-कविर्माघः शैवेन महाकविना भारविणा कृतं किरातार्ज्जुनीयं महा-काव्यं समालोक्य, तद्यशोजिहीर्षया तच्छायामवलम्ब्य शिशुपाल-बधाऽऽख्यं महाकाव्यमिदं विरचितवान् ; एतत्तु ग्रन्थद्वयपाठेन स्फुटं प्रतीयते ।

तथा हि, शिशुपालबधकिरातार्ज्जुनीययोः रचनाप्रणाली तुल्या एव,—किराते यथा पाण्डवोपदेशार्थं महर्षिव्यासस्योपस्थितिः, तथा शिशुपालबधेऽपि कृत्यवस्तुनि श्रीकृष्णस्य नियोगाय देवर्षिनारदस्या-गमनम् ।

अपि च, किरातार्ज्जुनीये यथा युधिष्ठिराऽऽदीनां राजनीतिविषय-समालोचनम्, एवमेव शिशुपालबधेऽपि श्रीकृष्णबलरामाऽऽदीनां राज-नीतिविषयानुशीलनम् ।

किराते यथा तपस्यार्थं महावीरस्यार्ज्जुनस्य इन्द्रकीलपर्वतावस्थानं, शिशुपालबधेऽपि तथैव इन्द्रप्रस्थप्रस्थानपरस्य वासुदेवस्य रैवतकपर्वता-धिष्ठानम् ।

किराते यमकालङ्कृतिभिः पद्यबन्धैः हिमालयवर्णनमिव शिशुपाले यमकालङ्कारैः रैवतकाद्रिवर्णनमपि दृश्यते ।

किराते यथा सुराङ्गनानां वनविहार-जलविहार-नायकसमागम-विरह-मानाऽऽदीनां विचित्रा वर्णना, एवमेव माघेऽपि वनविहारा-ऽऽदीनां चारुतरा वर्णना विलोक्यते ।

---

* महाकाव्यस्यास्यान्ते स्ववंशवर्णनप्रसङ्गे महाकविना माघेन धर्म्मनाभाख्यमही-पतिर्वर्णितः । एतस्य तु राज्ञः धर्म्मनाभः, धर्म्मनाथः, धर्म्मलाभः, धर्म्मलातः, धर्म्मदेवः, वर्म्मलाख्यः, वर्म्मलातः, वर्म्मनामः, निर्म्मलान्तः इति बहुविधानि नामानि विभिन्नेषु ग्रन्थेषु दृश्यन्ते, तस्य तु याथार्थ्यं सुधीभिर्विचारणीयम् ।

तपस्यतो धनञ्जयस्य समुत्तेजनार्थं किराते किरातनृपतिर्दूतमुखेन तिरस्कृतिसूचकं वचनजातं प्रायुङ्क्त, एवमेव माघेऽपि भगवतो वासुदेवस्य तिरस्कारार्थं चेदिपतिर्दूतमुखेनातिपरुषार्थं वचनमभिहितवान्।

किराते यथा पञ्चदशसर्गे एकद्व्यक्षरयमकालङ्कृतैः पद्यैः विनिबध्य युद्धमुपवर्णितं, तथैव माघेऽपि ऊनविंशसर्गे तादृशैः श्लोकैः समरवर्णना चित्रिता।

अपि च किरातार्ज्जुनीये महाकविना भारविणा यथा सर्गाऽऽदौ श्रीशब्दप्रयोगेण, प्रतिसर्गान्ते च लक्ष्मीशब्दप्रयोगेण स्वकाव्ये वर्णगणाऽऽदिशुद्धिः प्रदर्शिता, शिशुपालवधेऽपि माघकविना तथैव स एव पन्था अवलम्बितः; केवलं सर्गान्त्यश्लोके लक्ष्मीशब्दं विहाय तत्पर्य्यायकश्रीशब्दप्रयोगः कृत इति।

दृश्यन्ते च ग्रन्थद्वये बहवोऽपि अनुरूपाः श्लोकाः; तथा हि,—तत्र किराते यथा,—"ततः शरच्चन्द्रकराभिरामैः" इत्यादिश्लोकः, एवमेव माघेऽपि,—"दधानमम्भोरुहकेशरद्युतीः" इत्यादि। किराते यथा,—"श्रियं विकर्षत्यपहन्त्यघानि", तथा माघेऽपि,—"हरत्यघं सम्प्रति हेतुरेष्यतः" इति। यथा च किराते,—"निरास्पदं प्रश्नकुतूहलित्वम्", तथैव माघेऽपि,—"गतस्पृहोऽप्यागमनप्रयोजनम्" इति। एवमेव यथा किराते,—"अनुभाववता गुरु स्थिरत्वात्" इति, तथा माघे,—"न नीतमन्येन नतिं कदाचित्" इत्यादिषु श्लोकेषु अर्थानां सौसादृश्यं पर्य्याप्ततया परिदृश्यते एवेति।

अत्र हि कविना वासुदेवोद्धवबलरामाणां चैद्याभियानेन्द्रप्रस्थगमनयोरन्यतरस्य कर्त्तव्यनिर्द्धारणमन्त्रणमिषेण अतीव मनोहारिणी श्रेयसी च राजनीतिः प्रदर्शिता; किञ्च, तदनन्तरं भगवतो हरेरिन्द्रप्रस्थप्रयाणावसरे नगनदीप्रभाताऽऽदिवर्णनाऽपि चारुतयैव कृता; शिशुपालप्रेषितस्य दूतस्य शान्तपरुषाऽऽत्मकद्व्यर्थवचनविन्यासेन स्वकाव्ये मधुरतायाः पराकाष्ठा प्रतिपादिता च; एवं गाढतरपदविन्यासेनार्थगौरवस्य

रमणीयोपमाऽऽद्यलङ्कृतिसन्निवेशेन च मनोहरमिदं महाकाव्यं सुधीजनानां परमप्रीतिकरं सञ्जातम् ।

अस्य च महाकवेः दोषोऽपि कश्चित् परिलक्ष्यते ; तथा हि,—एकस्य सुललितपदस्यानुरोधेन अमुना तादृशः श्लोक एवैको निरमायि, यस्य तत्रान्यत् किमपि प्रयोजनं नोपलक्ष्यते ; अप्रस्तुतवर्णनबाहुल्यञ्चात्र दृश्यते ।

महाकविरसौ माघः कस्मिन् समये किमाख्यं जनपदं समलङ्कृतवान्, एतदेव निर्णेतुमिदानीं प्रस्तूयते ; तत्र प्रथमन्तावदस्मत्सङ्कलिते पण्डितप्रवरवल्लालविरचिते भोजप्रबन्धे समाहितं मतमुपन्यस्यते ; तथा हि,—

गुर्जरदेशवास्तव्यो महाकविरयमतिशयितसुनासीरसमृद्धिरासीत्, परन्तु विप्रत्वजातिदोषाच्च नासौ राजपदवीमध्यरुहत् । भोजराजस्तु कदाचिदस्य सदनमुपागतोऽनेन कृताऽऽतिथ्यो लक्ष्मीसरस्वत्योः सहावस्थानमवलोक्य परं पिप्राय, नितरां विसिस्मिये च । अथ कालक्रमेण अतिवदान्यतया च माघकविः तथाविधाद्विपुलादपि विभवाद्विच्युतो बभूव ; ततो दुर्भिक्षनिपीड़िते च स्वदेशे शरणमागतेभ्यः अर्थिभ्यः किञ्चिदपि दातुमशक्ततया नितरां निर्विण्णोऽसौ तदानीं भोजराजमेव धनाऽऽसारवर्षेणैः दारिद्र्यदावदहननिर्वाणक्षमतया समुचितं शरणं मन्यमानः पत्न्या सह तन्नगरं धाराऽऽख्यमुपाययौ ; ततश्च बहिः कल्पिताऽऽवसथः शिशुपालवधमहाकाव्यस्यास्य कवितामेकां विलिख्य पत्नीहस्तेन नृपान्तिकं प्रेषयामास । सा च स्वामिनियोगस्याविचारणीयतया पत्रमादाय कथमपि भोजराजसमीपमुपगम्य आशिषा तं संवर्द्धयामास । राज्ञा च,—"का त्वं भद्रे ? किमर्थमागता ?" इति सादरं पृष्टाऽसौ माघपत्नी यथावत्सर्वमस्मै निवेद्य पत्रं समर्पितवती । राजा तदादाय वाचयति,—

"कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।

उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ह्री विचित्रो विपाकः॥"

इति (शिशुपालवधे ११।६४)।

ततश्चासौ "विचित्रमिदं प्रभातवर्णनम्" इत्युक्त्वा दीनाराणां लक्षत्रयं तस्यै दत्त्वा अब्रवीत्,—"मातः! मदन्तिकं किमिदमपूर्वं रत्नमानीतम्? कोऽस्य विनिमयः? मदीयं समग्रं राज्यमपि नास्य षोड़शीमपि कलामुपभोक्तुमर्हतीति मन्ये, तथाऽपि प्रातराशाय वो यत्किञ्चिदधुना दीयते, प्रातरहं महात्मानं माघपण्डितं स्वयमुपगम्य नमस्कृत्य च पूर्णमनोरथं करिष्यामि" इति। ततः सा तदादाय प्रत्यागच्छन्ती पथि याचकेभ्यः स्वभर्त्तुः शारदचन्द्रकिरणधवलान् गुणान् श्रुत्वा प्रमुदितान्तःकरणा तेभ्य एव भोजदत्तं धनमखिलं दत्तवती। ततः भर्त्तारमुपगम्य सर्वमुदन्तजातं यथावत् न्यवेदयत्। कविस्तु तदाकर्ण्य प्रीतिभरेण पुलकिताङ्गयष्टिरर्थाभावादपरार्थिभ्यः किमपि दातुमसमर्थतया च चिन्तितमानसः प्रत्यवदत्,—"प्रिये! साधु कृतम्; परमेते चान्ये याचकाः समायान्ति, एतेभ्यः किं देयम्?" इत्युक्त्वा नितरां निर्विण्णः क्षणं तूष्णीं स्थित्वा शयनमधिशिश्ये। अत्रान्तरे केनचिदर्थिना तदन्तिकमुपगम्य तस्य तादृशीं दशामवलोक्य उक्तम्,—

"आश्वास्य पर्वतकुलं तपनोष्णतप्तमुद्दामदावविधुराणि च काननानि।
नानानदीनदशतानि च पूरयित्वा
रिक्तोऽसि यज्जलद! सैव तवोत्तमश्रीः॥"

इत्येतदाकर्ण्य माघः स्वपत्नीमाह,—"देवि!

अर्था न सन्ति न च मुञ्चति मां दुराशा
त्यागे रतिं वहति दुर्ललितं मनो मे।
याच्ञा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं परिदेवनेन?॥

दारिद्र्यानलसन्तापः शान्तः सन्तोषवारिणा।
याचकाऽऽशाविघातान्तर्दाहः केनोपशाम्यति ? ॥" इति।

ततः माघपण्डितस्य तादृशीमवस्थां विलोक्य सर्वे याचका यथास्थानं जग्मुः। एवं गच्छत्सु च तेषु माघः प्राह,—

"व्रजत व्रजत प्राणाः ! अर्थिभिर्व्यर्थतां गतैः।
पश्चादपि च गन्तव्यं क्व सोऽर्थः पुनरीदृशः ? ॥"

इति विलपत एव तस्य प्राणाः परलोकाय निरगमन्। ततो माघपत्नी स्वामिनि परलोकमुपगते,—

"सेवन्ते स्म गृहं यस्य दासवद्भूभुजः सदा।
स स्वभार्य्यासहायोऽयं म्रियते माघपण्डितः॥"

इत्युक्त्वा गुरुतरशोकादतिमात्रं यावत् विललाप, तावत् राजा माघं विपन्नमाकलय्य निजनगराद्विप्रशतपरिवृतो रात्रावेव तत्राऽऽजगाम। माघपत्नी च तं वीक्ष्य सर्वमुदन्तजातं यथावत् वर्णयित्वा गद्गदस्वरेण प्राह,—"राजन्! क्रियतामपुत्रस्यास्य मे पत्युः पुत्रकृत्यं भवता सम्राजा" इति। एवमाकर्ण्य भोजभूपतिरात्मानं तादृशसुधीजनपुत्रकृत्यसौभाग्यभाक्तया धन्यं मन्यमानः "तथा" इत्युक्त्वा तं महाकविं माघं नर्म्मदातीरमानाय्य यथोक्तेन विधिना सुत इव तस्य सर्वाः और्द्ध्वदैहिकाः क्रियाः समकारयत्। अपांशुलललनाकुलललामभूता माघपत्नी अपि प्रज्वलितचितावह्नौ निखिलगुणाऽऽधारं तादृशं मृतं स्वामिनं समासाद्य तदन्वारोहणं कृतवती।

भोजप्रबन्धादधिगतादस्मात् प्रबन्धात् एतदेवानुमीयते यत्, कविरयं भोजराजसमसामयिक एवाभवदिति। भोजराजस्य राज्यस्थितिकालस्तु षड़धिकदशशतखृष्टाब्दमारभ्य त्रिचत्वारिंशदधिकदशशतखृष्टाब्दं यावदवधार्य्यते। एवञ्च खृष्टीयैकादशशताब्दीप्रथमार्द्धे माघकविरासीदिति सिद्धान्तः।

जैनमेरुतुङ्गाऽऽचार्य्येण खृष्टीयचतुरधिकत्रयोदशशतवत्सरप्रणीते प्रबन्धचिन्तामणौ पुनः एवं दृश्यते; तथा हि,—भोजभूपतिः पण्डित-

प्रवरस्य महाकवेर्माघस्य गुणराशीन् विद्वत्तां सततं समाकर्ण्य तद्दर्शनौत्सुक्यात् हिमसमये श्रीमालनगरात् तमानीय भोजनाऽऽदिभिः सत्कृत्य च चिरं तेन सार्द्धं प्रियालापान् कुर्वाणः सुखं सुष्वाप। तत्परदिवसे च नृपानुज्ञातोऽसौ स्वदेशमगमत्। तदनु कतिपयदिवसैः तद्विभवदिदृक्षया च श्रीमालनगरमसौ भोजराजः आजगाम; माघकविस्तु यथोचितप्रत्युद्गमाद्युपचारैस्तं सत्कृत्य राजोचितामेव परिचर्य्यां व्यदधात्, अनास्वादितपूर्वम् आकालिकं देशान्तरजञ्च विचित्रमशनजातं तमाकण्ठमभोजयच्च। स च तस्य सौधमध्यास्य काञ्चनबद्धां सञ्चरणभुवं विचित्रमणिमरकताऽऽदिमण्डितं कुट्टिमजातञ्च विलोक्य परं विस्मयं भेजे। अनुचरजनैः सदैव सेव्यमानः, माघपण्डितस्य विचित्रमैश्वर्य्यं प्रत्यक्षीकुर्वाणश्च स कति दिनानि तत्रावस्थाय मालवमण्डलं प्रति प्रतस्थे। ततो गच्छता च कालेन विधिनियोगस्यावन्ध्यतया प्राज्यसाम्राज्योऽप्यसौ माघः अमानैर्दानैरर्थिसार्थं कृतार्थीकुर्वन् विद्वज्जनेभ्यश्च विभवं यच्छन् क्रमेणातिमात्रमेव क्षीणविभवो बभूव। एवंविधविभवक्षयजनितदशाविपर्य्यये सञ्जाते च स्वदेशवसतिं नितरां तिरष्क्रियाकरीं विभाव्य,अर्थिशतानां याच्ञाशतञ्च सोढुमशक्नुवन् सपत्नीको मालवमण्डलं गत्वा धारायामवसत्।

ततश्च धाराऽधीश्वरात् भोजदेवात् कियदपि दैन्यदूरीकरणक्षमं द्रव्यमानेयमिति निश्चित्य, दैन्यनिपीड़ितचेताः महाकविः माघस्तदानीं स्वरचितशिशुपालबधाऽऽख्यमहाकाव्यग्रन्थमेकं गुणग्राहिणे धाराऽधीशाय दानशौण्डाय राज्ञे पत्नीहस्तेन प्रेषयामास। सा तु सती पत्युर्निदेशमविचारयन्त्येव वस्त्रखण्डसमाच्छादितं तत् पुस्तकं राज्ञे दत्तवती। राजा च पुस्तकस्याऽऽवरणमुद्घाट्य उपरिलिखितं तस्यैव महाकाव्यस्य "कुमुदवनमपश्रि........" इत्यादि पद्यमेकमालोक्यातीव प्रीतो बभूव। "का कथाऽस्य ग्रन्थस्य समग्रस्य? केवलमस्यैव पद्यस्य ससागरा विश्वम्भराऽपि मूल्यमल्पम्" इत्येवं विमृशन्नसौ नरपतिः तत्काव्यान्तर्गतस्य केनाप्यव्यवहृतपूर्वस्य कालोपयोगिनः 'ह्री' शब्दस्यैव केवलं पारि-

तोषिकं लक्षदीनाररूपं दत्त्वा तां विससर्ज। अन्यत् सर्वं भोज-प्रबन्धानुरूपम् ।

एतेनापि खृष्टीयचतुरधिकत्रयोदशशतवत्सरात् पूर्वमेव कविरय-माविरासीदिति नूनमेव प्रतीयते, भोजराजसमकालिकत्वेन च पूर्व-वदेवास्य कवेः समयनिरूपणं सम्भवति; अधस्तनन्यस्तयुक्त्या कविसमय-निरूपणसिद्धान्तमिमं न खलु बहुमन्यन्ते केचन मनीषिणः ।

तथा हि,—काश्मीरदेशवास्तव्यः खृष्टीयनवमशतवत्सरोत्तरभागे वर्त्तमानः श्रीमदानन्दवर्द्धनाऽऽचार्य्यो ध्वन्यालोकग्रन्थस्य द्वितीयोद्योते "लासाऽऽकुलः परिपतन्" ( ५।२६ ) "रम्या इति प्राप्तवतीः" ( ३।५३ ) इत्यादि पद्यं शिशुपालवधादुद्धृतवान् । तेन दृढ़मेव प्रतीयते यत्, खृष्टीयनवमशताब्द्याः परमसौ कथमपि न जातवानिति । अस्य च भोजराजसमकालीनत्वे खृष्टीयैकादशशताब्दी एव जन्मकालो भवतीति कथं युज्यते ?

किञ्च, चतुस्त्रिंशदधिकत्रयोदशशतविक्रमाब्दे श्रीप्रभाचन्द्रप्रणीत-प्रभावकचरितस्य चतुर्द्दशशृङ्गेऽपि भोजराजस्य बाल्यसुहृदासीदसौ माघकविरिति दृश्यते ; तथा चोक्तम्,—

"तस्य श्रीभोजभूपालबालमित्रं कवीश्वरः ।
श्रीमाघो नन्दनो ब्राह्मीस्यन्दनः शीलचन्दनः ॥" इति ।

बहवोऽपि भोजराजसमसामयिकोऽयमिति वदन्ति, प्रचरति च एवंविधैव किंवदन्ती, परन्तु ध्वन्यालोकप्रामाण्यादेतदसङ्गतमेव प्रतिभाति ।

केचित्तु, षष्ठशताब्द्या मध्यभागजातोऽयमिति वदन्ति, न च तदपि वयं साधु मन्यामहे;यतो हि भारविनाम्नो महाकवेः अनन्तरजोऽयमित्यत्र कस्यापि नास्ति विप्रतिपत्तिः । भारविस्तु खृष्टीयचतुस्त्रिंशदधिक-षष्ठशतवत्सरात् परमजायत । तेन हि हेतुना सप्तमशताब्दीशेषदशायां कविप्रवरश्रीभारविनामा पण्डितः किरातार्ज्जुनीयं नाम महाकाव्यं

व्यरचयदित्येवावगम्यते। तत्परवर्त्तिनो माघस्य षष्ठशताब्दीमध्य-
भागजातत्वमिति तु न खलु युज्यते।

तदनन्तरमष्टमशताब्द्यां माघकविरजायतेत्येव वक्तुं सर्वथा
शक्यते। आसीद्धि भारविः परवर्त्ती चासौ माघ इत्यत्र तु,—

"भारती भारवेर्भाति यावन्माघस्य नोदयः।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥"

इत्याद्युद्भटश्लोक एव प्रामाण्यं प्रतिपादयति। तेन हि शार्म्मण्यदेश-
वासी "याकोवी" पण्डितः, अपरे च यद्वदन्ति खृष्टाब्दीयषष्ठशतक-
मध्यभागान्नार्वाचीनो माघकविरिति, तदप्यसङ्गतमिव प्रतिभाति।
एतत्समाधानन्तु तत्तन्मतानुसारिण एव यथायथं विदधीरन्। वयन्तु
मन्यामहे यदष्टमशताब्द्यां माघकविर्जातवानिति।

अयन्तु गुर्ज्जरदेशान्तर्गतश्रीमालाऽऽख्यदेशनिवासी, एतत्तु प्रभावक-
चरितात् जनश्रुतितश्च स्फुटं प्रतीयते। तथा चोक्तं प्रभावकचरिते,—

"अजर्ज्जरश्रियां धाम वेधाऽऽलब्धजरज्जरः।
अस्ति गुर्जरदेशोऽन्यसज्जराजन्यदुर्जरः॥ ५॥
तत्र श्रीमालमित्यस्ति पुरं मुखमिव क्षितेः।
चैत्योपरिस्थकुम्भाऽऽलिर्यत्र चूड़ामणीयते"॥ ६॥ इति

एतद्ग्रन्थावसाने स्ववंशवर्णनप्रसङ्गे कविरसौ वसतिस्थानस्योल्लेख-
मपि न कृतवान्, केवलमतिपवित्रचरित्रः कार्य्यनिपुणः "सुप्रभदेवः"
इति नाम्ना स्वपितामहः आसीत्, स च धर्म्मनाभाऽऽख्यनरपतेः सर्वाधि-
कारी बभूव, तद्गुणमुग्धश्चासौ राजा तदुपदेशवचनं सर्वथा स्वीचकार;
सुप्रभदेवस्य तु दत्तकनामा युधिष्ठिर इव धार्मिकः पुत्रो बभूव;
तदात्मजश्चायमित्येतावन्मात्रं वर्णितवान्। धर्म्मनाभराजपरिचयात्
राजधान्याः प्रसिद्धतया वसतिस्थानस्योल्लेखनं नैवासौ प्रयोजनीयतया
मेने इति मन्यामहे।

प्रभावकचरिते तु सुप्रभदेवस्य दत्तः शुभङ्करश्चेति द्वौ पुत्रौ व्यजाये-
ताम् इत्याद्युल्लेखो दृश्यते। विश्वविश्वप्रियङ्करात् शुभङ्करात् सिद्धनामा

पुत्रो कल्पद्रुम इवापरः बभूव, स च रम्यामुपमितिभवप्रपञ्चाऽऽख्यां महाकथां विरचितवानिति । तथा चोक्तं प्रभावकचरिते १४ शृङ्गे,—

"तत्रास्ति हस्तिकाश्रीयापहस्तितरिपुव्रजः ।
नृपः श्रीवर्म्मलाताऽऽख्यः शत्रुमर्म्मभिदाक्षमः ॥ ९ ॥
तस्य सुप्रभदेवोऽस्ति मन्त्री मितनपाः किल ।
तस्य पुत्रावुभावंसाविव विश्वभरक्षमौ ॥ १० ॥
आद्यो दत्तः स्फुरद्वृत्तो द्वितीयश्च शुभङ्करः " ॥ ११ ॥

*　　*　　*　　*

"तथा शुभङ्करः श्रेष्ठी विश्वविश्वप्रियङ्करः ।
यस्य दानाद्भुतैर्गीतैर्हर्य्यंश्वो हर्षभूरभूत् ॥ १५ ॥
तस्याभूद्गेहिनी लक्ष्मीर्लक्ष्मीर्लक्ष्मीपतेरिव ।
यया सत्यापिताः सत्यासीताद्या विश्वविश्रुताः ॥ १६ ॥
नन्दनो नन्दनोत्तंसः कल्पद्रुम इवापरः ।
यथेच्छादानतोऽर्थिभ्यः प्रथितः सिद्धनामतः" ॥ १७ ॥

अनन्तरञ्च,—

"इत्थमुद्वेजितस्वान्तस्तेनासौ निर्ममे बुधः ।
अन्यद्दुर्बोधसंबद्धां प्रस्तावाष्टकसम्भृताम् ॥ ९५ ॥
रम्यामुपमितिभवप्रपञ्चाऽऽख्यां महाकथाम् ।
सुबोधकथितां विद्वदुत्तमाङ्गविधूननीम्" ॥ ९६ ॥

इत्यादिकं सिद्धर्षिचरितं वर्णितमास्ते ; चरितान्ते च—

"श्रीमत्सुप्रभवदेवनिर्म्मलकुलालङ्कारचूड़ामणिः
श्रीमन्माघकवीश्वरस्य सहजः प्रेक्षापरीक्षानिधिः ।
तद्वृत्तं परिचिन्त्य कुग्रहपरिष्वङ्गं कथञ्चित्कलि-
प्रागल्भ्यादपि सङ्गतं त्यजत भोः ! लोकद्वये शुद्धये" ॥ १५६ ॥

एतत् पद्यं दृश्यते । एतद्ग्रन्थसमाप्तौ च खृष्टीयद्विषष्टितमाधिकनवशतवत्सरमितो ग्रन्थनिर्म्माणसंवत्सरो लिखितः । एतदवलोक्य च केनचित् पण्डितेन माघकवेरपि सत्ता दशमशताब्दीप्रारम्भे इति स्थिरीचक्रे । किन्तु

प्रभावकचरितमन्तरेण शुभङ्करस्य सिद्धर्षेश्च उपाख्यानं कुत्रापि नोपलभ्यते। एतन्मात्रप्रमाणेन वा कथं निःसंशयं कालनिर्णयो भवितुमर्हति ? तत् सुदूरमास्तामयं पन्थाः।

महाकवेः श्रीमन्माघस्य प्रणीतं ग्रन्थान्तरमस्ति न वा इति पर्य्यालोचनायां वल्लभदेवेन सुभाषितावलौ,—

"शीलं शैलतटात् पतत्वभिजनः सन्दह्यतां वह्निना
मा शौर्यं जगति श्रुतस्य विफलक्लेशस्य नामाप्यहम्।
शौर्य्यं वैरिणि वज्रमाशु निपतत्वर्थस्तु मे सर्वदा
येनैकेन विना गुणास्तृणबुषप्रायाः समस्ता अमी॥"

"नारीनितम्बफलके प्रतिबध्यमाना
हंसीव हेमरशना मधुरं रराम।
तन्मोचनार्थमिव नूपुरराजहंसा-
श्चक्रन्दुरार्त्तमुखरं चरणावलग्नाः।"

एतत्पद्यद्वयं शिशुपालवधेऽनुपलभ्यमानमपि माघकृतमिति समुद्धृतमस्ति ; तथा औचित्यविचारचर्चायां क्षेमेन्द्रेणापि,—

"बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते।
न विद्यया केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फलाः कलाः॥"

एतत् पद्यमपि माघनाम्नैव समुद्धृतम् ; तेन च माघकविकृतं ग्रन्थान्तरमप्यस्ति इति प्रतीयते।

शिशुपालवधाख्यमहाकाव्यस्यास्य धीरोदात्तो नायको वासुदेवः, प्रतिनायकः शिशुपालश्चालम्बनविभावौ। दूतोक्तानि शिशुपालोक्तानि च वाक्यानि तयोश्चेष्टाऽऽदीनि चोद्दीपनविभावाः। धृत्यादयो व्यभिचारिणः, उत्साहः स्थायी, वीररसोऽङ्गी, अङ्गरसाः शृङ्गारादयः, रीतिर्गौड़ी, ओजो गुणः। शिशुपालप्रहितो दूतो निसृष्टार्थः।

अस्य च महाकाव्यस्य मल्लिनाथकृता सर्वङ्कषाऽऽख्या, वल्लभदेवकृता सन्देहविषौषधाऽऽख्या, भरतमल्लिककृता सुबोधाऽभिधाना, दिनकरमिश्रकृता सुबोधिनीनामधेया, गोपालकृता हसन्तीनाम्नी च

पञ्चसङ्ख्यकाः ; तथा रङ्गराजकृता, एकनाथकृता, चारित्रवर्द्धनकृता च तिस्रः इति मिलित्वा अष्टौ टीकाः सन्ति इति ज्ञायते ।

आसु च टीकासु सर्वङ्कषैव सर्वाङ्गसम्पूर्णतया साधीयसीति तत्-सहितमेव विद्वज्जनसमादृतं पुस्तकमेतदेकोनसप्तत्यधिकसप्तदशशत-शकाब्दे पण्डितप्रवरेणास्मत्पितामहेन महात्मना ४तारानाथतर्कवाच-स्पतिमहोदयेन कतिपयहस्तलिखितपुस्तकानि सङ्गृह्य बहुलाऽऽयास-मङ्गीकृत्य संशोध्य प्रथमं मुद्रितम् । तथाऽप्यस्य सर्वैऽभावास्तदानीं न पूर्णा इति तानिदानीं यथाशक्ति पूरयितुम्, अस्माकं पूज्यपादपितामह-प्रदर्शिता एव कुमारसम्भवपूर्वार्द्धव्याख्यानपद्धतिरिहाप्यनुसृता-ऽस्माभिः ; मल्लिनाथकृतमङ्गलाऽऽचरणपद्यानां, तथा पञ्चदशसर्गे प्रक्षिप्तानां चतुस्त्रिंशच्छ्लोकानां, विंशसर्गे च शेषयोर्द्वयोः पद्ययोः, कवि-वंशवर्णनस्य च प्रायशः सर्वत्र हस्तलिखितेष्वपि पुस्तकेषु दुर्लभं व्याख्यान-मप्यत्र सन्निवेशितम् । परीक्षाप्रदानसमुत्सुकानां सुकुमारधियामन्ते-वासिनां कर्मान्तराऽऽसक्तानामपि सुधियां काव्यरसाऽऽस्वादलोलुपाना-माढ्यजनानाञ्चाल्पेनैव कालेन काव्यार्थबोधसौकर्य्यार्थं प्रतिसर्गसंस्थित-विवरणञ्च सरलसंस्कृतभाषया संक्षेपेण निवेश्य, श्लोकेषु टीकासु च लिपिकरप्रमादवशादायाताः यथासम्भवमशुद्धीः संशोध्य, असङ्गतेषु स्थानेषु युक्तान् पाठानधो विलिख्य मल्लिनाथेनाप्रदर्शितान् दोषानलङ्कारांश्च प्रायशः प्रदर्श्य तदेव पुस्तकं पुनः प्रतिसंस्कृतम् । अभिनवया रीत्या मुद्रितमिदं पुस्तकं यदि लेशतोऽपि विदुषामन्तेवासिनामुपकाराय सञ्जायेत, तदैवायं यत्नः सफलतां यायात् इत्यलमतिपल्लवितेन ।

पण्डितश्रीमदाशुबोधविद्याभूषण-
पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्याम् ।

---

# शिशुपालवधस्य विवरणसंक्षेपः ।

## प्रथमसर्गे

### नारदस्य श्रीकृष्णभवनोपस्थितिः ।

तत्रभवान् भगवान् कुक्षिस्थाखिलभुवनः लक्ष्मीपतिः श्रीविष्णुः लोकशासनाय वसुदेववेश्मनि रुक्मिणीरूपया लक्ष्म्या समेतः कृष्णरूपेणावतिष्ठमानः इन्द्रसन्देशसम्भाषणार्थं गगनमण्डलादायान्तं नारदं दृष्ट्वा प्रथमं तेजःपुञ्जमात्रममुमवधार्य्य, क्रमेण आकारवान् पुमान् नारदोऽयमित्यबोधि। जनास्तु तदानीं "किमयमहिमांशुः? अथवा हुताशनः? अपूर्वमिदं धाम किमधः पतति?" इति वितर्कयन्तो विस्मयात् ससम्भ्रममीक्षाम्प्रचक्रुः। रजतशुभ्रेण शम्भुना स्फुटसादृश्यः, पिशङ्गीः जटाः धारयन्, मुञ्जमेखलायुक्, अञ्जनाऽऽभकृष्णाजिनमाच्छादयंश्च, यज्ञोपवीतवान्, स्वच्छस्फटिकजपमालाशोभमानोऽसौ नारदः मुहुर्मुहुर्महतीनाम्नीं वीणामवलोकयन् सन् कृतप्रणामाननुव्रजतश्च मुनिप्रवरान् निवर्त्त्य इन्द्रभवनवदतिरमणीयं श्रीकृष्णभवनं समाययौ। अच्युतश्च तत्क्षणमेव शैलशिखरात् तड़ित्वानिव निजाऽऽसनादुत्थाय त्रिलोकपूज्यं तमर्घ्यादिपूजोपचारेण सम्यक् पर्य्यपूपुजत्, स्वहस्तसमर्पिताऽऽसने तं समुपावेशयच्च। समुपविश्य च तस्य पुरतस्तदासने मुनिरसौ नानातीर्थोपहृताः कलुषराशिविनाशपटीयसीरपः कमण्डलोः पाणौ निधाय, तदपचितिविधानादतिप्रीतिमन्तमानतशिरसञ्च तमच्युतमभिषिषेच, अनुज्ञया काञ्चनमयाऽऽसने न्यवीविशच्च। उपविष्टश्चासौ स्वभवने नारदाऽऽगमनातिप्रमुदितः सन् अनन्तरोदीरितां वाचं सप्रश्रयमभाषत।

### नारदं प्रति श्रीकृष्णोक्तिः ।

"भवदवलोकनं हि शरीरधारिणां द्रष्टॄणां वर्त्तमानभूतभविष्यत्कालेषु

पवित्रतामेव प्रकटयति, यतः प्रागनुष्ठितैः प्रचुरैः सुकृतैरेव तत् कृतं भवति, दर्शनकाले च निखिलं पापं विनाशयति, सूचयति च विपुलं भावि कुशलम्। तथा सहस्रकिरणोऽपि यदन्धकारजालं निवारयितुं न शशाक, तदज्ञानसम्भूतं तमस्त्वयैव छिन्नम्। हे मुने! यद्यपि श्रुति-सम्प्रदायद्वारा धर्म्माधर्म्मव्यवस्थापकतया जगत्प्रतिष्ठाहेतुभूतस्य तव अमुना दर्शनेनैव कृतार्थीकृतोऽस्मि, तथाऽपि "त्वद्वाक्यमहं श्रोतु-मिच्छामि, श्रेयसि कस्यापि तृप्तिरेव नास्ति। निस्पृहोऽपि त्वमागमन-कारणं कथय, इति यत् वक्तुमिच्छामि, तत्र तवेहाऽऽगमनेन जनिता-ऽऽत्मगौरव एव कारणम्"।

## कृष्णं प्रति नारदवाक्यम्।

"हे पुरुषश्रेष्ठ! योगिनामपि साक्षात्करणीयेन त्वया नैवं भाष्येत, यतस्त्वद्दर्शनमेवातिमहत्प्रयोजनम्। दुर्गमोक्षपथसञ्चरणैषिणां मन-स्विनामपि "न स पुनरावर्त्तते" "तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय" इत्यादि श्रुतिभिः त्वमेव निरपायस्थानमुदीरितम्। त्वामेव च कपिलादयः महर्षयः महदादिभ्यः पृथग्भूतं पुरातनम् उदा-सीनञ्च पुरुषं विदन्ति। वराहरूपिणा त्वया हेलया समुद्धृतं भूतलं पुनः त्वमेवाद्वितीयशिल्पी पुरा शेषफणासहस्रेषु स्तम्भभूतेषु निवेशितवान्। दानवपीड़ितमिदं विश्वञ्च नैशतमोविघटनपटीयान् रविरिव त्वमेव पातुं समर्थः। हिरण्याक्षपुरःसरासुरद्विपविनाशिनस्तव हरेः कंसादि-नृपतिमृगविनाशस्त्वकिञ्चित्कर एव। हे उपेन्द्र! इन्द्रसन्देशादि-दानीमहमुपागतः, सर्वकार्य्यधुरन्धरेण भवता विश्वजनहितकरं हि तद्वचनं निशम्यताम्। पुरा यो हि सूर्य्यवदतितेजस्वी निर्भीकः देवानामुत्पीड़कश्च हिरण्यकशिपुनामा महासुरः नृसिंहावतारभाजा त्वयैव नवोढ़कामिनीकुचसङ्गभङ्गुरैः नखैरुरो विदार्य्य विनाशितः, अथ स एव हिरण्यकशिपुर्जन्मान्तरमासाद्य त्रिदशैर्युयुत्सुः रावणो नाम राक्षसो भूत्वा त्रिलोकस्य प्रभुर्भवितुमिच्छुः पशुपतेः प्रीतये स्वकीयानि

नव शिरांसि अग्नौ हुत्वा, दशमं शिरः समाहोतुं प्रवृत्तः सन्तुष्टात् तस्मात् देवात् त्रैलोक्याऽऽधिपत्यं वव्रे। ततोऽसौ युद्धे कौशिकं विजित्य देवानन्यांश्च वशीकृत्य अहर्दिवं दिवः प्रभूतमस्वास्थ्यं विदधे। भवानपि तदा दाशरथिर्भवन् जलधिलङ्घनेन लङ्कामासाद्य दण्डकारण्यमध्यात् हृतिताऽपहारिणं तं विनाशितवान्। तत् किमिदानीं स्मरसि ?

पुनरप्यदः रक्षः राक्षसदेहमुत्सृज्य नाटकीयवस्तुनि नटस्य भूमिकापरिग्रहवत् जन्मान्तरमासाद्य दमघोषसुतः शिशुपालसंज्ञकोऽभूत्। शैशवे चतुर्भुजस्त्रिलोचनश्च भूत्वा जातोऽसौ सम्प्रति यौवने रविरिव तेजस्वी स्वेच्छया च देवदानवरक्षसां प्रसादानुग्रहौ विदधत् बलगर्वात् सती योषित् स्वपतिमिव स्वां प्रकृतिं प्रागिव समासाद्य जगत् प्रबाधते। अतस्त्वमसुमतिक्रान्तदैवशासनं शिशुपालं शीघ्रमेव विनाशय"। इत्यभिधाय महर्षिनारदे गगनमण्डलमारोहति सति "तथाऽस्तु" इति तद्वचनमङ्गीकृतवतः कृष्णस्याऽऽनने चन्द्रसमुत्थितः धूमकेतुरिव रिपुविनाशपिशुनः भीषणाऽऽकारः भ्रूभङ्गः समजायतेति।

इति प्रथमः सर्गः।

---

## द्वितीयसर्गे

उद्धवबलरामाभ्यामच्युतस्य सभायां मन्त्रणम्।

अथ तत्रभवान् लोकानुग्राहकः परमकारुणिकश्च परमात्मा श्रीकृष्णः कर्त्तव्यबुद्धिपरायणोऽपि लोकशिक्षाऽर्थं सन्दिग्धे कार्य्यवस्तुनि मन्त्रस्यौचित्यं दर्शयितुमिच्छुः, इन्द्रसन्देशश्रवणानन्तरं चैद्यं प्रति च प्रतिष्ठासुः, यज्ञमनुतिष्ठता युधिष्ठिरेणाऽऽहूतश्च सन् विवर्णितकार्य्यद्वयाभ्यां पर्य्याकुलो भवन् मन्त्रणाऽर्थमुद्धवबलरामाभ्यां सह सभावेद्यां समुपविश्य तयोः सुरकार्य्यसुहृत्कार्य्ययोर्विप्रतिषेधं यथायथं ताभ्यां न्यवेदयत्।

तत्र श्रीकृष्णवाक्यम्।

"नाटकीयवस्तुप्रवर्त्तनाऽर्थं पूर्वरङ्गवत् युष्माकं वचनानामवसरप्रदा-

नार्थमेव मदीयभाषणं, न खलु पाण्डित्यप्रकटनाय ; तेन हि प्रस्तूयते यत्, दिग्विजयिभिर्वशीकृतराजमण्डलैः भीमादिभिर्भ्रातृभिरेव धर्म्मपुत्रस्य युधिष्ठिरस्य यज्ञकर्म्म विनाऽप्यस्माभिः सुशृङ्खलतया सम्पत्स्यते एव, हिताभिलाषिणा पुरुषेण तु वर्द्धिष्यमाणव्याधिरिव प्रवर्द्धमानः शत्रुः शीघ्रमेव प्रतिकार्य्यः, न तूपेक्षणीयः कदाचिदपि। चैद्यो यन्मह्यं द्रुह्यति, तेन नाहं कियदपि परितप्ये ; किन्तु यदिह लोकं भृशमुत्पीड़यति, तदेव मां दुःखमनुभावयति ; तेन च पुरत एवासौ यातव्यः इति ; इदं तावन्ममाभिमतम्। विषये चैतस्मिन् युवयोरपि मतं श्रोतव्यं, यतः विदिततत्त्वार्थस्यापि जनस्य कर्त्तव्यार्थे प्रायशः सन्देहः समुत्पद्यत एव, मयाऽप्यत्र सन्दिह्यैवं भवन्तौ पृच्छ्येते इति"।

### कृष्णं प्रति बलरामवाक्यम्।

अभिधेयसम्मिताक्षरतया परिमितां वाचमभिधाय विरते च माधवे, रिपुकृतापकारस्मरणेन परितप्तो हि बलरामो वृद्धत्वादग्रे वक्तुमिष्ट-मप्युद्धवस्य वाक्यमपवार्य्य वक्तुमिच्छन्, मदिरापान-पाटलितनयने विघूर्णयन्, अहङ्कारपरितप्तैर्वदनमारुतैर्वनमालाञ्च म्लापयन्, रिपुं प्रति कोपादुपरक्ताङ्गसंसक्तान् स्वेदबिन्दूंश्च धारयन्निदं वक्तुमुपचक्रमे।

"निर्द्दोषं हि वासुदेवभाषितमस्माभिः सिद्धान्ततया स्वीकर्त्तव्यम् ; केवलं तदनुष्ठानमेव सम्प्रति करणीयम् ; अत्यल्पादपि तद्वचनात् भूयस्याऽपि वाचा किमप्यधिकं वक्तुं न खलु कश्चित् समर्थतरो भवेत्। इन्धन-राशिविनाशी वह्निरपि तेजसा पूषाणं नातिक्रामति। गुर्वर्थवदल्पाक्षरस्य तद्वचसः प्रपञ्चतराणि व्याख्यानरूपाणि हि भवन्तु ममैतानि वचनानि। निपुणानां हि भाषितैः बृहस्पतिसमा अपि प्रतिकूलवादिनो निर्वाचः एव क्रियन्ते, क्रियन्ते चानुकूलवक्तारो जड़ा अपि प्रवाचः।

अधीतग्रन्था हि मन्दमतयोऽपि षड्गुणादीन् व्याख्यातुमलं भवन्तु, किन्तु कार्य्याकार्य्यमजानतामविमृश्यकारिणां वाग्मिनामपि वागाड़-म्बरः व्यर्थ एव भवति, इति दृश्यते। भूपतीनां हि सौगतानामिव सन्ध्या-

दिषु कार्य्येषु पञ्चाङ्गस्कन्धेभ्यो अपरो मन्त्र एव नास्ति। सुगुप्तस्यापि मन्त्रस्य परेभ्यो भेदशङ्कया, मन्त्रभेदे सति कार्य्यहानिर्भवेदिति सम्भावनया च मन्त्रितार्थक्रिया सतामचिरेणैव साधनीया। आत्मोदयः परहानिश्चेति द्वयी एव नीतिः, षाड्गुण्यादिवर्णनमस्य हि प्रपञ्चः ; तस्मादात्मोदयार्थं कैरपि विलम्बो नैव विधेयः। पूर्णचन्द्रोदयमभिलषतः महोदधेरिव लब्धोदयस्यापि पुंसः अल्पसम्पदा परितृप्तिर्नैव युक्ता। अभिमानिनो हि समूलमेव शत्रून् हत्वा स्वीयां समुन्नतिं वाञ्छन्ति, शत्रुविनाशमकृत्वा सर्वेषामेव दुर्घटैव भवति प्रतिष्ठा ; तेन हि एकस्यापि शिशुपालस्य शत्रोरवस्थितौ नास्त्येव सुखम्। अस्माकं पैतृष्वसेयस्य शिशुपालस्य सहजमित्रतया करणीयोऽपि सन्धिरपकारितया तस्मिन् न खलु सम्यगुपयुज्यते, वरमुपकारिशत्रुणाऽपि सन्धिः, न पुनरपकारिणा बन्धुना ; यतः उपकर्त्तैव मित्रम्, अपकर्त्ता च शत्रुरिति ; तेन हि उपकारापकारघटितमेव मित्रामित्रयोर्लक्षणमधिगन्तव्यम्। हे हरे ! बन्धुभिस्तस्मै चेदिपतये प्रदत्तां रुक्मिणीं राक्षसधर्मेणोद्वहता त्वया असावतितरामेव प्रकोपितः। स्त्रिय एव हि भवति गाढ़वैरितायाः प्रधानं निदानम्, अत एव नरकासुरविजयार्थं गतवति च त्वयि असावपि तत्क्षणात् अस्तमिततपनां मेरुतटीं तमोराशिरिव पुरीमिमामवरुद्धवान्, अपहृतवांश्च बभ्रुनाम्नः यादवस्य दारान्। एवं परस्परविरुद्धक्रियया मित्रमप्यसौ कृत्रिमः शत्रुरेव कृतः प्रागेव। सरोषे रिपौ स्वयञ्च वैरं विधाय उदासीनवदवस्थितस्य तु विपदवश्यम्भाविनी ; के वा कक्षे प्रज्वलितमग्निं प्रक्षिप्य मारुताभिमुखं शेरते ? क्षमाशीलश्चेत् सकृदपकुर्वाणं भृशं क्षमतां, पौनःपुन्येन विराध्यन्तं रिपुं न कोऽपि क्षमेत।

क्षमा हि नाम पुंसां परिभवातिरिक्ते काले एव भवति भूषणं, परिभवे तु पौरुषमेव समीचीनमाभरणम्। पाददलितमचेतनं रजोऽपि नाम उड्डीय आहन्तुरेव मूर्द्धानमधिरोहति, का कथा चेतनवतां प्राणिनाम् ? जातिक्रियागुणैः सुकृतकीर्त्यादिपौरुषार्थमस-

न्मादयतः पुरुषस्य व्यर्थमेव भवति जननम्। समुन्नतशत्रुमस्तकेषु पादमसंस्थाप्य कथमाधारहीना कीर्त्तिः स्वर्गमधिरोढुं शक्नुयात्? तेजस्विजनश्च दवीयानपि तेजस्विनामेव मध्ये सङ्गिः सञ्जायते, पञ्चाग्निमध्ये तपस्यतः जनस्य तपनश्च पञ्चमो जातवेदा भवति। हिमांशुः खलु मृगमङ्के निधाय स्वमृदुतयैव कलङ्की जातः, सिंहस्तु मृगसमूहान् विनाशयन्नपि स्वपौरुषतया तेषामधिपतिरेव भवति। दण्डसाध्ये च रिपौ सामप्रयोगोऽपि भवत्यपकाराय, न कोऽपि प्राज्ञः स्वेद्यनपक्वज्वरं प्राप्य सलिलेन सिञ्चति। कोपवति च तस्मिन् प्रियोक्तयस्तु, उष्णे सर्पिषि सलिलविन्दव इव प्रत्युत प्रदीपका एव भविष्यन्ति, न तु शान्तिकराः। ये च मन्त्रिणः सन्ध्यादीनयथातथं प्रयुज्य सिद्धिं विघ्नन्ति, तानमात्यवेशधारिणः रिपूनवश्यमेव राजानः परित्यजेयुः। स्वस्य सामर्थ्यातिरेके, विपक्षव्यसने वा युद्धयात्रायाः प्रशस्ततया तदुभयस्यापीह सत्त्वात् साम्प्रतमेव त्वया रिपुरधिगन्तव्यः। भवतः क्षमैव वेला अम्भोनिधीनिव युयुत्सून् दुर्लङ्घ्यान् यादवानधुना प्रतिबध्नाति। तथा चोदासीनः साङ्ख्योक्तः पुरुषः यथा बुद्धिकृतं कर्म्म उपभुङ्क्ते, एवमेव फलभोक्ता भवान् स्वसैन्यकृतं रिपुविजयफलं लभताम्। भीमसेनेन विनाशिते च महावीरे जरासन्धे वन्धुव्यसनात् चेदिपतिरिदानीं सुखेनैव दमनीयः। किन्तु एवमापदि रिपोराक्रमणं लज्जाजनकमेव भवति वीरजनानाम्। यथा राहुरपि पूर्णमण्डलमेव सुधांशुं ग्रसते, एवमेव हि बलवता च जिगीषुणा बलवानेव रिपुरभियातव्यः, नीतिरेषैव सुष्ठुतया प्रतिभाति। "तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः" इति मनुवचनमुल्लङ्घ्यापि प्रसह्यपीड़नक्षमा बलवन्तः बलवन्तमेव हि गच्छेयुः। न हि भवति कुतश्चित् तेजस्तिमिरयोरेकाऽऽश्रयत्वम्।

अतस्त्वयाऽपि साम्प्रतमिन्द्रप्रस्थगमनं विहाय चेदिपयात्रैव विधीयताम्। यादवा हि माहिष्मतीं पुरीमरीनुपरुन्धन्तु, युधिष्ठिरश्च यजतां, वासवश्च स्वर्गं रक्षतु, तपनश्च तपतु, वयन्तु रिपूनेव हनाम, जगत्यस्मिन् सर्वे एव स्वार्थान्वेषिणः, शत्रुशिरश्छेदनशोणितेनास्माक-

मस्त्राणि सूर्य्यकिरणसम्बन्धात् सौदामनीशोभामिव शोभामधिगच्छन्तु"।

उद्धववाक्यम्।

अनन्तरमतिमात्रं क्षुभितस्य बलरामस्य वाक्यमाकर्णयता च हरिणा नयनभङ्ग्या वक्तुं प्रेरितस्तावदुद्धवोऽनुद्धतभावेन यथार्थं वचनजातमिदमुवाच। "बलरामवचनानन्तरं मादृशजनानां भाषणमयुक्तमेव, तथाऽपि त्वदीयाऽऽग्रहातिशयाद्वच्यामि किमपि, न खलु केनचित् सादरं पृष्टस्य कस्यचिदज्ञवत्तूष्णीम्भावो युक्तः; यद्यपि रामेण सर्व्वं प्रपञ्चेनोक्तं, तथाऽपि कतिपयवर्णगुम्फितशब्दजालस्य सङ्गीतस्येवापरिमितवैचित्र्यादत्र ममापि वक्तव्यमस्ति। स्वप्रतिभाऽनुसारेण लोकैरसङ्गतमेव प्रायशः व्याक्रियते। पदार्थसङ्गतियुक्तः सन्दर्भस्तु दुर्व्वच एव भवति; निपुणा हि वक्तारः सुकुमाराक्षरं गुर्व्वर्थवत् श्लेषादिगुणबहुलं विचित्रं वाक्यजालं विचित्रां शाटीमिव प्रसारयन्ति। भवदन्तिके नीतिशास्त्रोत्कीर्त्तनन्तु मादृशामभ्यासदार्ढ्यार्थमाम्रेडितप्रायमेव।

मन्त्रोत्साहशक्ती हि जिगीषूणां वर्द्धमानप्रभुशक्तेर्निदानम्, अतो जिगीषुभिस्ते स्वस्मिन् सम्पादयितुमवश्यमेव यतितव्यम्। तीक्ष्णबुद्धयश्च स्वप्रतिभया शरा इव स्तोकं स्पृष्ट्वाऽपि अभ्यन्तरं प्रविशन्ति, महदपि कार्य्यमारभ्य महोद्योगा निराकुलाश्चावतिष्ठन्ते। मन्दमतयश्च यत्किञ्चिदल्पमारभ्यापि प्रभूतव्यग्रा भवन्ति, स्थूलपाषाणसदृशाश्च वहिरेवावतिष्ठन्ते, केवलं परिहासाऽऽस्पदं भवन्ति च। उपायेन कार्य्यं साधयतोऽपि प्रमादेन कार्य्यहानिः स्यादेव। निद्रालुर्हि व्याधः उपशयस्थोऽपि न खलु मृगान् निहन्ति। द्वादशाऽऽदित्येषु दिनकृदिव 'अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम्' इत्याद्युक्तद्वादशनृपेषु सम्यगुत्साहवान् जिगीषुरेव नरपतिरुदयाय प्रभवति। यः खलु पार्थिवः बुद्धिं शस्त्रतया, स्वाम्यादिराज्याङ्गानि स्वाङ्गतया, मन्त्रगुप्तिं वर्म्मतया, चारपुरुषान् ईक्षणतया, सन्देशहरान् वदनतया च परिकल्पयितुं शक्नोति,

भवति खलु स लोकविलक्षण एव पुमान्। समयाभिज्ञस्य महीपतेः तेजः क्षमा वा इत्येकान्तं नास्ति नियमः, समयानुसारेण तेन राज्ञा एतद्द्वयमप्याश्रयणीयम्। रसभाववित् कविरपि ओजःप्रसादयोरेकतरं न खलु भजते, असौ सुकविस्तु रसानुकूलमेतदुभयमपि यथायोगं समाश्रयत्येव। रिपुभिरपकृतः अन्तर्गूढ़विकारः नरपतिः व्याधिरिव बलक्षयावसरे अप्रतिविधेयमेव कोपं करोति। क्षात्रं तेजो हि नाम क्षान्तिपूर्व्वमेव फलति; प्रदीपो हि मध्यस्थया वर्त्या तैलादिकमर्थ-मादत्ते। विद्वांस्तावत् न केवलं दैवमेवावलम्बते, न च पुरुषकारेऽपि नियतमवतिष्ठते; सत्कविः शब्दार्थाविवासौ द्वयमेवापेक्षते। क्षमया समयमपेक्षमाणस्य तु नृपस्यापरे भूयांसो राजानः प्रयोजनानि साधयन्ति। तथा स्वपरराष्ट्राभिज्ञेन सामाद्युपायकुशलेन च नरेन्द्रेण, विषवैद्येन फणीन्द्रा इव भवन्ति रिपवः सुनिग्रहाः। भवन्ति च प्रभावादिशक्तित्रयानुसारेण सन्धिविग्रहादिषट्कं सेवमानस्य महीपतेः स्वाम्याद्यङ्गानि बलवन्ति स्थिराणि च। शक्यविषये हि क्षमावतां क्षौणीपतीनां प्रभावाद्यनुसारेण षाड्गुण्यप्रयोगः सम्यगभ्युदयायैव भवति। अयथाबलप्रयोगस्तु नूनमेव विनाशनिदानम्। तदधुना नावमन्यतां भवान् चेदिपतिम्। बलवता च तेन रिपुविनाशक्षमो बलवान् बाणोऽपि सन्धिमेष्यति, कालयवनशाल्वरुक्मिद्रुमादयोऽपि राजानः तद्गृह्या एव भविष्यन्ति; अणुरपि चैद्यविहितोपजापः त्वयि प्रकोपवतः बाणादीन् सद्य एव प्रज्वालयिष्यति। तथा ये तस्य मित्राणि, ये वा तव शत्रवः, उभयेऽपि ते चेदिपतिमेवानुयास्यन्ति। तदवशिष्टा-श्चापरे त्वामनुगमिष्यन्ति। तथा च महासहायवानसौ चेदिपतिः क्षुद्रतरोऽपि, महानदीमासाद्य एकीभावं लभमानाः गिरिनिर्भरिण्यः यथा महासमुद्रमवतरन्ति, तथैवानायासेन कार्य्याणि साधयितुं शक्ष्यति।

इत्थं राजसमूहं क्षोभयित्वा मखं विघ्नन् अजातशत्रोरपि युधिष्ठि-रस्य त्वमेव प्रथमः शत्रुर्भविष्यसि। स खलु बान्धवो युधिष्ठिरो भवन्त-

मतिभारवहनक्षममासाद्य यज्ञभारं वोढ़ुमभिलषति; महात्मानस्तु शरणाऽऽगतान् रिपूनप्यनुरक्षन्ति। महानद्यश्च सपत्नीरपि गिरिनिर्झरिणीरब्धिं प्रापयन्ति। कालान्तरेऽपि शत्रुविनाशः सम्भवति, किन्तु सत्कृतिमनीकृताः सुहृदस्तु आर्ज्जवयितुमशक्या एव। दैवताप्रीत्यर्थं मखविधः श्रेयानिति यदि त्वं मन्यसे, तथाऽपि मखविघातमधुना मा कार्षीः, यज्ञभोजिनो हि विबुधा यज्ञेनापि प्रीतिं लभन्ते।

किञ्च, प्राक् पूज्यायै पितृष्वस्रे यदङ्गीकृतं त्वया तत्पुत्रस्य चैद्यस्य शतापराधसहनं, तदपि प्रतीक्षणीयमेव; अङ्गीकृतपालनं हि सतामवश्यमेव विधेयम्। स्वयं कृतानुग्रहस्य तस्य विनाशाय समयमनपेक्ष्य भवानपि नैव समर्थः। कार्य्यज्ञान् गूढ़चारिणश्चरान् कार्य्येषु नियुज्य, मन्त्राद्यष्टादश स्थानानि ज्ञात्वा त्वया कार्य्यसिद्धिर्विधेया। चारहीना हि राजनीतिः कदाचिदपि नैव शोभते। अतः परमर्म्माभिज्ञैः, अन्यैरविदितस्वकर्म्मभिः, उभयस्मात् जीविकाग्राहिभिः, भेद्यस्याग्रे प्रकटितकूटलेखनैश्च प्रणिधिभिः सचिवादयः दूषयित्वा भेदनीयाः। किञ्च, कार्य्यसाधनकुशलैस्तव सचिवादिभिश्च "इन्द्रप्रस्थे अस्माकं महत् कार्य्यं भविष्यति, तदध्वरयात्राव्याजेन भवद्भिः सन्नद्धैरवश्यमागन्तव्यम्" इति गूढ़ं सन्दिश्य राजसमूहाः इन्द्रप्रस्थप्राप्ताः करिष्यन्ते। तत्र यज्ञसंसदि तत्रभवत्सु भवत्सु युधिष्ठिरस्य समधिकां भक्तिं समीक्ष्य, विद्वेषबुद्धयश्चपलाश्च तव शत्रवो नूनमेव वैरमाचरिष्यन्ति; एवञ्च लप्स्यते तत्रैव युद्धावसरः। ये चैदिपतिना समनैश्वर्य्यमुपगताः अपि स्वाभिजनवेदिनश्च तत्रावतिष्ठन्ते, ते काककूलात् कोकिला इव विपक्षमध्यादचिरेण पृथग्भूता भविष्यन्ति। स्वाभाविकचापलदोषदुष्टाः अस्थिरदुर्बलपक्षावलम्बिनः तस्य चैद्यस्य शत्रुवर्गास्तव दुःसहतेजसि विभावसौ शीघ्रमेव शलभवत् विलयं गच्छन्तु"। इत्थं नीतिमार्गानुसारिणीं रामोक्तिप्रतिबन्धिकां मौद्धवीं रमणीयां वागावलीं समाकर्ण्य निर्ज्जनसंसदः समुत्तस्थौ भगवान् हरिः, तदनुसारतश्च कार्य्यसम्पदं प्रचक्रमे इति।

इति द्वितीयः सर्गः।

---

## तृतीयसर्गः

### हरेरिन्द्रप्रस्थप्रस्थानोद्योगवर्णनम् ।

अथ तत्रभवता कविना उद्धववाक्यश्रवणानन्तरं युद्धाभिनिवेशं परित्यज्य इन्द्रप्रस्थं प्रति प्रतिष्ठासोर्हरेः प्रस्थानोद्योगं समवतार्य्य, प्रथमं पूर्णेन्दुसुन्दरं तस्याऽऽतपत्रं, बिसतन्तुविशदं चामरद्वयञ्च, प्रभाबहुलोज्ज्वलमणिसंवलितं मुकुटं, मरकतमणिशोभितं काञ्चनकुण्डलञ्च, मणिप्रभापटलशोभि केयूरयुगलं, तमालनीलवक्षःस्थलधृतमुक्ताहारञ्च, तथा दिगन्तविश्रान्ततेजसं समुद्रमन्थनोत्थं कौस्तुभमणिं प्रसाधयतः हरेरङ्गलावण्यैः विविधभूषणैश्च मुग्धाभिरङ्गनाभिः सम्बन्धं, तासां तस्मिन् प्रगाढ़मनुरागञ्च रचनानैपुण्येन प्रत्यक्षमिव दर्शयता, चक्र-कौमोदकीनन्दकशार्ङ्गपाञ्चजन्याऽऽख्यदिव्यास्त्रपञ्चकं निवेशयता च सता, पुष्परथं, ध्वजाग्रावस्थितपन्नगारिम्, अतिमहान्तञ्च पटहप्रणादं, ससैन्यस्य हरेरिन्द्रप्रस्थप्रचलनञ्च चारुतया निबध्य, प्रतिरथ्यमवस्थितानां जनौघानां तद्दर्शनौत्सुक्यञ्च सम्यगुपवर्णितम् ।

समनन्तरञ्च जलधिमध्यावस्थिता, समुन्नतप्राकारपरिवृता, विश्वकर्म्मणः शिल्पविज्ञानप्रसरसीमेवावस्थिता, बणिक्पथे पुञ्जीकृतरत्ननिचया, अमरावतीश्वरमणीपरिभाविललनाजनसुशोभिता च, रम्यचन्द्रकान्तमणिमयप्रकोष्ठविराजितमेरुवदुन्नतहर्म्यराजिविभूषिता, कल्पनाऽतीतसमृद्धिशालिनी, स्वर्गादप्यतिरमणीया च द्वारका नाम नगरी प्रदर्शिता ।

ततश्च निषेव्यमाणमन्दमरुता स्वेनैवाधिष्ठीयमानां, मेरुस्थितामरावत्या अपि उत्कर्षायमाणां, परैरलङ्घनीयां द्वारकामीक्षमाणः अतुलप्रतापः श्रीकृष्णः रथ्यां प्रापत्; तदीयसेना अपि तस्याः पुरः निर्गताः । परस्परमुखाग्रसङ्गस्खलत्खलीनमाश्लिष्यच्छिन्नपल्लैरश्वैरश्वाऽऽरोहिणश्च अन्योऽन्यैरुत्पीड़ितजानुप्रदेशाः सन्तः दुःखेन निर्जग्मुः । दीपै-

रिव द्विपैश्चातिप्रबलैः अतिसङ्कटेऽपि पथि भयात् तिमिरैरिव जनै-र्विमुच्यमाने सति निर्बाधमेव जग्मे।

अथ क्रमेण पथि गच्छन्नसौ मुरारिरवलोकयामास जलनिधेरपरतीरे शैवलसदृशीः हरितपर्णपूर्णाः वनाऽऽवलीः। आलिङ्गितभूतलम्, उच्चैः शब्दायमानम्, इतस्ततः पतन्भुजाऽऽकारबृहत्तरङ्गमालासङ्कुलितं, फेनायमानं जलनिधिञ्च असौ अपस्माररोगिणं शङ्कितवान्। तस्य च जलधेर्जलम् एकदेशान्निभृतं पिबद्भिर्मेघैः सम्प्रणीताः तमेव आपगापतिं प्रविशन्तीः नदीश्च हरिः, मुनीन्द्रैः वेदात् वेदार्थमेवोद्धृत्य सङ्कथिताः वेदमेवाभिपतन्तीः स्मृतीरिव ददर्श। ततः दिगन्तराऽऽनीतानि नाना-द्रव्याणि विक्रीय अत्यर्थं लाभवतः, तत्रत्यं द्वैप्यं सारवत् पण्यद्रव्यं नौषु स्थापयतश्च समुद्रद्वीपवासिनः पोतवणिजः समीक्ष्य च मुरारिर-भ्यनन्दत्, अपनुनुदिरे चानुवेलं जललवसंसर्गिणा एलालतासङ्घर्ष-जनितसुगन्धेन समुद्रवायुना वेलायां व्रजतो हरेः स्वेदबिन्दवः।

ततश्च मुरारिचमूचरैः उन्नततालीवनसमुन्नतसमीरणेन सीमन्तित-केतकीकान् लवणसिन्धोरनूपभूमिप्रदेशान् प्राप्य लवङ्गकुसुममाल्यैः आत्मानं भूषयित्वा, नारिकेलाभ्यन्तरस्थितजलानि पीत्वा च आर्द्र-पूगफलानि भक्षितानि।

तदा तु तुरगशतसमाकुलैः, प्रतिपथं प्रमथिताशेषभूभृद्भिः, धृत-शोकैश्च तैः पुरः प्रचलद्भिः एकतुरङ्गजन्मा, भूभृद्विमथितः, विगतलक्ष्मी-कश्चासौ जलधिर्महदन्तरमनायीति।

इति तृतीयः सर्गः।

---

## चतुर्थसर्ग

### कविकृतं रैवतकपर्वतवर्णनम्।

अथ इन्द्रप्रस्थं प्रचलितः महात्मा हरिः, इन्द्रनीलमणिप्रोत-नानावर्ण-धातुरञ्जितम्, अत एव भूमिं भित्त्वोत्थितं सरलप्रभमुरगनिःश्वासधूममिव महाशिलातटीसमीपे समुन्नतैर्मेघवितानैः सूर्य्यस्य पन्थानं पुनारोढुमिव

विध्यायमानं, नवीनप्रभावतां मणीनां स्वर्णसानुषु प्रसृतया दीप्त्या परिव्याप्तं, मेचकोपलानां श्यामलतया च मनोहरं, तथा मकरन्द-लोभसमागतषट्पदाऽऽवलीसमाश्रित-लतिकाभिः परिव्याप्तम्, असङ्ख्य-शिखरैः गगनं, पादैश्च पृथिवीं व्याप्य अवतिष्ठमानं, नयनयोग्यदेशाव-स्थितचन्द्रसूर्य्यम्, अत एव सहस्रशीर्षाणं सहस्रपादं ब्रह्माणमिवानुभूय-मानं, क्वचिच्च धौतोत्तरीयसदृश-शुभ्राभ्रमण्डलतया अर्द्धनारीश्वरसन्निभं, प्रभूतकमलाऽऽकरसमृद्धिसम्पन्नं, स्कन्धाधिरूढ़-विचित्र-नीलकण्ठमण्डल-मण्डिततया भुजगेन्द्राऽऽश्लिष्टतनुराजिविराजमानतया चानेकान् रुद्रा-निव महतः महीरुहान् धारयन्तं, लोध्रकुसुमरजोधवलाः शैवलवतीरपो दधानं, कमनीयाऽऽकृतिभिः सुरललनाभिरध्युषितं रैवतकाऽऽख्यं पर्वतं व्यलोकयत् ।

काव्यरचनानिपुणेन कविना, अतिमहतः यस्मात् आढ्य-तरात् वणिज इव, नानाविधान्यपरिमितानि रत्नजातानि नित्यं जनै-रुह्यन्त, तादृशम्, अत्युन्नतत्वात् सूर्य्यसान्निध्यमधिगतम्, अरविन्दाना-माकरञ्च, तथा राजतगण्डशैलसमन्वितं, समुन्नतमेघमण्डलैः अभिवृष्य-माणञ्च, अर्ककरसम्पर्कादाग्नेयधामोद्गारि-रविकान्तमणिमण्डितं, तमचलराजं हरये दर्शयता च पुनरसौ गिरिः दारुकोक्त्या विवर्णितः। तथा हि, पर्वतं द्रष्टुमुत्कण्ठितं श्रीकृष्णं प्रति दारुको वक्ष्यमाणमुवाच ।

### दारुककृतरैवतकवर्णनम् ।

"आवृताऽऽयतदिगम्बरं, समुन्नतविशालशिखरं, शिखरपरिस्फुर-दिन्दुमण्डलमिममचलराजं समीक्ष्य जगति को न विस्मयते ? य एष समन्तात् दीप्यमाननवांशुकः सदूर्व्वाः स्वर्णभूमीर्वहन् पीतवासा भवा-निव शोभते। समुन्नततमेषु अस्य सानुषु स्थितास्तावत् जनाः शशलाञ्छ-नस्य कलङ्करहितममलं पश्चाद्भागमेव पश्यन्ति। तथा अत्र गिरिणदी-प्रवाहा उच्चैः शिलानामुपरि पतित्वा जर्ज्जरीभूताः द्यामुत्पतन्तः सन्तः कामसन्तप्तानां खेचरीणामप्सरसां शरीरशान्तिं जनयन्ति। क्वचित्

चातकानामुत्कण्ठाऽपनोदकाः तड़िदुपमितकाञ्चनाश्च जलदा भूमि-
माच्छादयन्ति, क्वचिदुल्लसितचामीकराः सवितुः कराश्च तां कपि-
शयन्ति।

इह कस्मिंश्चित् प्रदेशे स्फटिकमयतटांशुसंवलिततया शुभ्राणि,
कस्मिंश्च इन्द्रनीलमणिकिरणभिन्नतया नीलानि सलिलानि वहन्त्यः
सरितः गङ्गायमुनासङ्गमसादृश्यमतिमात्रमेव भजन्ते।

तथाऽत्र सुमेरुसमसानौ परस्परानुरागिणः विलासिजनाः, तेषा-
मनुरूपाणि विहारस्थलानि च वर्त्तन्ते, वर्त्तते च काञ्चनरेखापरि-
शोभिता समुन्नता रजतराजिविराजिता मनोहरा भित्तिः। तथाऽसौ
द्विजवर्य्य इव निधिकल्पमन्त्रसाधनविधानपटुभिः कथञ्चित् प्रकाशितम्,
अशास्त्रज्ञैश्च समाकर्ण्यापि दुर्ग्रहमतिगूढं मन्त्रगणमिव निधिमपि बिभर्त्ति।
अमुञ्च रमणीयतरं गिरिं गिरीशोऽपि गजचर्म्माऽऽवृतशरीरः सन्नधिशेते।
सर्वर्त्तुसुखे चैतस्मिन् निवसन्तः दीनजना अपि शीतोष्णदुःखं किञ्चि-
दपि नानुभवन्ति। एतदनुतटञ्च विस्तृतबहुलतमालतालसङ्कुलतया तिरो-
हिताऽऽतपं पुष्पितनिखिललतापरिशोभितञ्च विशालं वनं विभाति।
तथाऽस्मिन्नन्तर्लीनमहानीलमणिखण्डशोभितासु वापीषु मेघमुक्तं
मौक्तिकशुभ्रमत एव क्षीरमिव संस्थितं सलिलं शस्त्रीश्यामेन्द्रनील-
मरीचिभिश्छुरितं सत् सपदि नीलीरसस्य स्वच्छां छायां वहति।
इहोच्चावचरत्नकिरणमिश्रितचन्द्रकिरणेषु सहस्रसंख्यामुपगतेषु रज-
न्यामपि नलिन्यः सहस्रांशुभ्रान्त्या विकचपद्मतां नूनमेव दधते।

एष च रैवतकः पर्व्वतः कुसुमवसनमाच्छाद्य अगुरुधूमकान्तिमाद-
धानैः नवनीरदपटलैः स्वकीयशरीराणि धूपायतीव। अमुष्मिंश्च
परस्परव्यतिकरचारुभिर्नवमणिमयूखैराकाशे रचितमनाधारं चित्र-
कर्म्म गगनचरान् विस्मितान् विदधाति। समीरशिशिरश्चायमद्रिरना-
वृतेष्वपि शिखरेषु क्रीड़तां पुण्यवतां मेघैरावरणतां विधाय मुदं विद-
धाति। योगिनश्चेह मैत्रीकरुणामुदितोपेक्षारूपाणि चत्वारि चित्तशोधक-
कर्म्माणि सम्यगवगम्य, अविद्याऽस्मितारागद्वेषाभिनिवेशरूपान् निहत्य

च पञ्च क्लेशान्, सबीजयोगञ्च सम्यगुपलभ्य, प्रकृतिपुरुषौ भिन्नाविति ज्ञानमधिगम्य च, तदपि ज्ञानं निवर्त्त्य "प्रकृतावुपरतायां पुरुषस्वरूपेणावस्थानं मुक्तिः" इति साङ्ख्यसिद्धान्तमनुस्मरन्तः सन्तः स्वयंप्रकाशतयैव स्थातुमभिलषन्ति। इह मरकतमयभूमिषु पल्लवान्तरपातिनो भानुमयूखाश्च मयूरकन्धरायाः श्रियं दधति। सानवश्च निशायां शशाङ्ककिरणाऽऽहतचन्द्रकान्तनिस्यन्दिजलप्रवाहकृतस्नानाः, दिवा च सूर्य्यकिरण-प्रतिफलित-सूर्य्यकान्तमणि-समुत्थित-वह्निपरितप्तास्तीव्रतरं महाव्रतमिव चरन्ति। अपि चेह दिशि दिशि मुदितकरिशावकसमूहैर्मधुरभीषणबृंहणध्वनिर्मुहुरेव क्रियते। वने वने च चमरीचयाः तथा काञ्चनभूमिमरीचयश्च स्फुरन्ति। किं बहुना, एष खलु शैलः नवनगवनलेखया श्यामलमध्यैः, स्फटिककटकप्रदेशैश्च नागवेष्टितस्य भस्मधवलदेहस्य च शूलपाणेः शोभामनुकरोति। माधवाश्चेह प्रफुल्लवारिजसुरभिभिः अम्बुप्रवाहैरपनीताऽऽह्निकसन्तापाः कनकभूषणैः कृतशोभाश्च सन्तः सरसकादम्बरं मधु निषेव्य प्रियतमानामङ्कात् अम्बरमपहरन्ति। एष हि रैवतकः त्वयि समुपस्थिते सति मारुतप्रेरितैः श्यामलैरम्बुवाहैः संवर्द्धनार्थं सरभसमभ्युत्तिष्ठतीव"।

इति चतुर्थः सर्गः।

---

## पञ्चमसर्गे

ससैन्यस्य श्रीकृष्णस्य रैवतकवसतिवर्णनम्।

अथ कविकुलतिलकेन भगवता माघकविना, अतिमनोहरं रैवतकवर्णनं दारुकमुखादुपश्रुत्य तत्रैवावस्थातुमभिलषतो भगवतः श्रीकृष्णस्य, सैनिकानाञ्च अवस्थानपरिपाटी सविशेषमेव वर्णिता।

तत्र सञ्चलनेन दिगन्तव्यापि कपिशं पृथ्वीरजः समुत्थापयतां शुभलक्षणानामतिवेगवतां सेनातुरगाणां शीघ्रगतिश्च दर्शिता, दर्शिता च

पथि गच्छतोः गजोष्ट्रयोरन्योन्यतः स्वभावसुलभा भीतिः। इभीभीति-विह्वलस्य खरस्य, तदुपरिस्थितानाञ्चावरोधबधूनां भूमौ पातनं प्रदर्श्य, मृगेन्द्रविनाशकानां, तन्नखाग्रमुक्तवन्यगजशिरःस्थमुक्ताजालशोभित-गृहेषु उपेन्द्रानुचरनरपतीनामवस्थानञ्च सन्निवेशितम्। प्रागेव गत्वा रम्यां वसतिं निर्द्धारयतः कस्यचित् उद्वाहोः, अन्यतो गच्छतामात्मवर्ग्याणां तत्राऽऽगमनार्थमुच्चैराह्वानं प्रदर्श्य, राज्ञीनां यानावतरणक्षणे सभयकौतुकं जनानां तन्मुखावलोकनञ्च चारुतया वर्णितम्। नीरन्ध्रं संस्थितानां रथसमूहानां रैवतकपादेषु संस्थापनं, तथा पटमण्डपेषु अकृत्रिमां दूर्व्वाशय्यामधिशय्य श्रान्तानां मन्दमारुतप्रशमितस्वेदलवानां राज-दाराणां स्वपनञ्च प्रकटीकृत्य, सेनानिवेशसमये तत्र अगण्यपण्य-द्रव्यपरिपूर्णविपणिनिर्म्माणं प्रदर्शितम्। सैन्यानां, तैः सहाऽऽगतानां गजादीनाञ्च जलाशयावगाहनं विचित्रतया समुल्लास्य, गजतुरगमहोक्ष-दासेरकाणां तदानीन्तनं स्वाभाविकप्रचलनावस्थानभोजनतर्ज्जन-प्रभृतिकं, हस्तिपकादिभिः हस्तिनां सान्त्वनादिकञ्च सुष्ठुतया संयोजितम्। ततश्च कलगिरां वैतालिकानां यथाऽवसरं स्तुतिपाठं समुपवर्ण्य शिविरस्य मनोहरत्वं संसाधितम्।

इति पञ्चमः सर्गः।

---

## षष्ठसर्गे

### ऋतुवर्णनम्।

सर्गेऽस्मिन् तत्रभवता माघकविना ऋतुषट्केषु प्रथमं वसन्तः, ततो ग्रीष्मः, ततो वर्षाः, तदनन्तरं शरत्, तदनु हेमन्तः, पश्चाच्च शिशिर इत्येवं क्रमेण सन्निवेश्य, हरिं तद्गतसुषमां दर्शयता, अन्तरा च यमकसन्निवेश-वशादतीव वैचित्र्यमाविष्कृतं स्वरचनासु। द्वितीयश्लोकादेकविंश-श्लोकपर्य्यन्तं वसन्तवर्णनम्। तत्र हि अभिनवपत्त्रोद्गमेन किंशुककान-

नानामतिमनोहरत्वं, पङ्कजानां विकसितानां परागरमणीयतां, पल्लवानां कोमलत्वं, सुरभिकुसुमानां विकासनेन मनोहरगन्धत्वमनिलस्य शीतलत्वञ्च सम्यक् प्रकटीकृतम्। तथा रसालवनानाञ्च परागचूर्णैः पथिकानामत्यन्तसन्तापकरत्वं, वकुलकुसुममधुपानमत्तमधुपानाञ्च मनोहरगुञ्जितपुरःसरं विटपान्निर्गतत्वं, कोकिलकुलानाञ्च कुहूरवेण स्मरपरतन्त्राणां विरहिणां स्मरोत्पीड़ितत्वं बहुलतया प्रदर्शितम्।

ततश्च द्वाविंशश्लोकाच्चतुर्विंशश्लोकान्तं ग्रीष्मवर्णनम्। तत्र हि शिरीषरजसां हरिद्वर्णत्वं, नवमल्लिकानां स्थिरसुगन्धित्वं, विलासिजनानामत्युन्मादकत्वञ्च प्रकटीकृतम्। अनन्तरञ्च चतुर्विंशश्लोकाच्चत्वारिंशश्लोकपर्य्यन्तं वर्षावर्णनम्। तासु च जलदाऽऽवृते हि दिङ्मण्डले, स्फुरति च चलत्सौदामनीसमूहे, नृत्यति च शिखण्डिकुले, प्रवहति च सुगन्धे गन्धवहे, विकसिते च नवकदम्बकुसुमकलापे विलासिजनानां मन्मथसन्तापजनितातिशोचनीयता सम्यक् प्रतिपादिता। तदनु च एकचत्वारिंशश्लोकमारभ्य चतुःपञ्चाशश्लोकान्तं शरद्वर्णनम्। तदागमे च जलदाऽऽवरणानामपगमात् दिशां निर्म्मलत्वं, हंसानां मधुरस्वरत्वं, कलापिकुलानाञ्च परुषीकृतनिस्वनत्वं, बालाऽऽतपताम्रस्थलकमलानां मनोहरशोभया जनानामुत्सुकत्वञ्च सुचारुतया प्रस्फुटीकृतम्। इत्यमतिरमणीयां शरत्समागमशोभां समीक्ष्य शौरिरतितरामेव मुदमगमत्। ततश्च पञ्चपञ्चाशश्लोकादेकषष्टितमश्लोकं यावत् हेमन्तवर्णनं कृतम्। तस्य तु कालस्य शिशिरमृदुवायुभिः मानवतीनामपि भामिनीनां मानभङ्गः सञ्जात इति दर्शितम्। द्विषष्टितमश्लोकात् षट्षष्टितमश्लोकपर्य्यन्तञ्च शिशिरवर्णनम्। तत्र हि प्रियङ्गुलतानां मदनोद्दीपकफुल्लकुसुमवत्त्वम्, उन्मदभृङ्गावलीहुङ्कृतीनां शिशिरानिलानाञ्च युवजनमानसोन्माथकत्वं, सूर्य्यस्य च मन्दरश्मित्वं, शुभ्रलोध्ररजश्चयानाञ्च कामाऽऽवेशजनकत्वं, विकसितेषु लवङ्गकुसुमेषु परागमलिनानां मधुपानां पतनं, कुन्दकुसुमानां विकसनञ्च विचित्रतया चित्रितम्। ततश्च पुनरपि द्वादशभिः श्लोकैः ऋतुं समवतार्य्य कविः प्रथमं चतुर्भिर्वसन्तम्, एकेन

ग्रीष्मं, द्वाभ्यां वर्षर्त्तुं, त्रिभिश्च शरदम्, एकेन हेमन्तम्, एकेन च शिशिरमुपवर्णितवान्।

इति षष्ठः सर्गः।

---

## सप्तमसर्गे

### वनविहारवर्णनम्।

ततश्च सकलर्त्तुप्रादुर्भावात् परतः भगवान् हरिरनुगिरं विततां वनान्तश्रियं निरीक्षितुं निर्गतवान्; निर्गतवन्तश्च तेन सह युवतिगणसमेता यदवः। ततश्च ताः युवतयः स्वभावसुन्दरमूर्त्तयः यथाऽवसरमवनिषु मन्दमन्दं गच्छन्त्यः सत्यः निविड़नितम्बभारनिपीड़ितचरणयुगलात् पादन्यासस्थानेषु समलङ्कृतमलक्तकं द्रवीभावाद्विगलितं स्वरसमिव समस्थापयन्।

कस्याश्चित् सख्याः प्रकुपितां सखीं प्रति अनुनयवर्णनम्।

"हे सौभाग्यशालिनि! 'मत्सखीं सपदि तव समीपमानयिष्यामि' इति कान्तं प्रति कुपिताया अपि तव अत्युत्कण्ठितकान्तसन्निधौ मया त्वरावशात् प्रतिज्ञातं, त्वं मामनृतभाषिणीन्तत्र मा कार्षीः। हे सुतनु! स्वप्रतिज्ञाभङ्गे सञ्जातेऽपि मयि प्रेमवती त्वं मत्प्रतिज्ञामवश्यं पालयिष्यसि, इत्यहङ्कारान्मया निःशङ्कमेतत् प्रतिज्ञातम्। यदि च भवतीं तत्र नेतुं न शक्ष्यामि, तदा भवत्या सह नाहं सम्भाषिष्ये, इत्यपि मया परिपणितम्; 'तथाऽस्तु' इति निश्चितविरोधायान्तु त्वयि विपक्षजनः सकामः भवेदिति। किन्तु भवत्याः सम्भाषणमन्तरेण नाहं क्षणमपि प्राणिमि, यद्यपि स्वप्रेयसि न ते प्रसादबुद्धिः, तथाऽपि मम जीविते कृपावती सती तत्र गच्छ"। इत्थं कयाचित् सख्या, कान्ताय कुप्यन्ती काऽपि सखी सातिशयमनुनीता। अथ सा सखी प्रियमनुजग्राहेति।

अग्रे शीघ्रगामिनं नायकं सखायं प्रति सख्या अनुयोगः।

"हे वयस्य! न खलु युज्यते त्वामनुगच्छन्त्याः कान्तायाः स्तनजघनयोरतिगुरुत्वं जानतोऽपि तव तत्प्रतीक्षणमन्तरेण द्रुतपदं प्रयाणम्" इति वदति च सखीजने कश्चित् नायकः तां दयिततमां चिरं प्रतीक्ष्य भूमिं मिमान इव अनायतपादक्षेपपुरःसरमगच्छत्।

सखीं प्रति सख्या वर्णनम्।

"हे सखि! मयि कान्तं प्रति स्वयंगमनलघुतां प्राप्तायां यदि तव तृप्तिर्भवेत्, तदाऽहमस्मिन्नेव क्षणे गताऽस्मि" इति वदन्ती काचित् द्रुततरपदक्षेपं वल्लभमन्वधावत्।

पथि गच्छन्तीनां वर्णनम्।

काचन विलासिनी रमणी पुलकितेन भर्त्तुर्वामबाहुना व्यतिषक्तं कोमलं स्वदक्षिणभुजं भर्त्तुः कण्ठे समासज्य, नितम्बस्थलेन प्रणदितकाञ्चीदाम्ना प्राणेशमत्यर्थं ताड़यन्ती, तदुरःस्थले च दक्षिणं कुचं विषमीकृतहारयष्टि यथा तथा तिर्य्यक् निपीड्य जगाम। अपरा च पार्श्वगामिनी प्रियस्यांसद्वये पाणिपल्लवौ निधाय नूपुरनिनादमधुरमलसञ्च ययौ। अन्याऽपि पीनस्तनजघनवती दयितग्रीवान्यस्तस्वभुजयुगला गतवती; अनुसृत्य जगाम च कश्चिदपरः वनं प्रति सखीभिः सह पुरः प्रस्थितायाः स्वकान्तायाः सुरते स्वोरःस्थलस्थलाक्षारसाङ्कितपादरेखाप्रायां पदवीम्। ततश्च काचित् पुष्पचयनमकरोत्, काचित् तत्रैव मन्मथोद्दीपिकामङ्गचेष्टां विदधौ। काचिदग्रपुष्पग्रहणाय शरीरविजृम्भणात् स्वभावकृशमपि मध्यं पुनः तनुतां नयन्ती ऊर्द्ध्वदृष्टिश्च सती कुसुमान्यचिनोत्। अपराश्च काश्चन कामभावं व्यञ्जयन्त्यः विचित्रेण नानाविधभावेन कुसुमावचयनमकार्षुः। काचिच्च किसलयशकलेषु विरहतापशान्तये मन्मथभावाऽऽवेदकानि प्रियसन्निधावक्षराणि लिलेख। काचित् कृतकृत्रिमरोषा च "त्वं माल्यग्रथने नैव कुशला" इति सखीं निरस्यन्ती स्वयमेव प्रियाभिमुखं प्रकाशितकक्षप्रदेशं यथा स्यात्तथा शिरसि कुसुममालामबध्नात्।

काञ्चिन्नायिकां प्रति सख्या वर्णनम्।

"हे सखि! तवाभिमुखमागते च मधुपपटले तूष्णीं त्वया स्थातव्यं, यदसौ चिरपरिचितमपि कुसुममकरन्दं विहाय नूनममृतपानाभिवाञ्छया पीयूषमयं मधुसुरभि तवाधरं मा निपप्तत्" इति नायिका काचिदभिदधे तदीयसख्या परिहासकुशलया कयाचित्।

अङ्गनानां विविधावस्थावर्णनम्।

एवं वदति च सखीजने मुकुलिताक्षिपक्ष्ममाला काचिदलिपतनभयेन भर्त्तुरङ्कदेशमशिश्रियत्। यूना च केनचिदभिनवोढ़ा काचिदङ्गना मुखकमलकमुदम्य बलाच्चुम्बिता, चतुरसख्या च तद् बालपल्लवग्रहणाऽऽसक्तया विदित्वाऽप्यजानत्येवावस्थितम्। लताजालतिरोहितायां सपत्न्यां, प्रियेण कृतं गूढ़ं स्वाधरपानं तज्जनितव्यथया चलत्करयोः कङ्कणध्वनिना च कयाचित् प्रकटीकृतम्। काचित् वृक्षाधिरूढ़लताऽऽश्लेषप्रकारमभिनयन्ती सरलबुद्धितया सखीनां पुरत एव अनुचितमपि प्रियेणाऽऽलिङ्गनं विदधौ। अन्या च उन्नतस्तवकजिघृक्षया सविलासं करेण प्रियं सहचरमवलम्ब्य रागात् स्तनाभ्यामाच्छादयामास। अपरा च "कुसुमानामिदं ग्राह्यमिदं ग्राह्यम्" इत्युक्त्वा स्वाभीष्टपूरणाय क्रमेण कान्तेनैकान्तमनायि। अपरा च निर्ज्जनमिति हेतोः प्रियं बलादाकृष्य, समीपे च सपत्नीं समीक्ष्य सत्वरमपसर्त्तुकामाऽपि सपत्नीमपश्यति प्रियामत्यजति च वल्लभे सपत्नीसन्निधावतीव सुभगा सञ्जाता।

सापराधं पल्लवदानेन च प्रसादयन्तं कान्तं प्रति कस्याश्चित् वर्णनम्।

"हे धूर्त्त! न खलु वयं तवैतत्पल्लवदानयोग्याः, तस्यै तव रहः-प्रियतमायै समर्पय पल्लवं, सैव रहसि त्वां विटपं पिबति रक्षति च। अथवा मत्कर्णभूषणार्थं पल्लवार्पणप्रयासस्तव व्यर्थ एव, यतस्तत्त कर्णयुग्मं सततं जनविदितभवदप्रियवचनपूर्णमेवाऽऽस्ते ; कान्तासदनमधिवसन् मह्यत्कलिं (कलहं) दत्त्वाऽपि मह्यं कथमेनां कलिकां दातु-

मिच्छसि ?" इत्येवं वचनजातमभिव्याहरन्ती च काचिदङ्गना शोणार्पितासिताम्बुरुहेण नयनेन च कान्तमतिमात्रमताड़यत् ।

वनविहारोद्भवश्रमवर्णनम् ।

वनविहारक्लिष्टानां तासां रमणीनामुज्ज्वलगण्डमण्डलेषु स्थूलमुक्तासदृशं श्रमजलं क्रमेण कठिनकुचतटप्रपाति सत् शतखण्डत्वमधिजगाम । निरन्तरकुसुमावचयखेदात् भर्त्तृकण्ठे निहितभुजलता विपुलतरस्तनपिहितप्रियवक्षःस्थला च काचित् अवतस्थे । अपरौ च काचित् श्रमापनोदकचेष्टाव्याजेन कठिनोन्नतकुचयुगलमुत्तुङ्गीकृत्य, मिथो धृतभुजलते चोद्यम्य गात्रविजृम्भणं कृत्वा आलिङ्गनादिकं स्वाभिलषितं प्रकटितवती । एवं यदा तासां प्रियकरस्पर्शात् पुनरप्यतितरां हिमलवसदृशस्वेदोद्गमः समजायत, तदा ताः सर्व्वा वनविहारखेदक्लिष्टं शरीरं सलिलैरभिषेक्तुमैच्छन् ।

इति सप्तमः सर्गः ।

---

## अष्टमसर्ग

श्रान्तयदुरमणीनां क्लिष्टगमनवर्णनम् ।

जलविहारं वर्णयिष्यता तत्रभवता महाकविना माघेन प्रथमं, वनविहारजनितक्लेशविवशानां योषितां स्तनजघनादेः पृथुत्वादेव पुनः क्लिष्टतरमलसञ्च प्रयाणं प्रदर्श्य, कस्याश्चित् शीतांशुरूपेण श्वेताऽऽतपत्रेण उष्णकरकिरणक्लेशापनोदनं, कस्याश्चिद्वा सानुरागकान्तधृतोत्तरीयेण आतपदुःखनिवारणं वर्णितम् । परिकल्पितञ्च नदीरयेण नुन्नशुक्तिकोशविगलितमुक्ताभिः शोभितस्य सैकतस्य कस्या अपि गलितहारमनोहरेण पल्यङ्केन सादृश्यं चारुतया । दर्शितः पुनः तासां सुन्दरीणां निश्वासवायुमाघ्राय भृङ्गाणां पुष्पेष्वप्यनभिलाषः । विवृतञ्च मधुरतरैस्तासामालापैः तिरस्कृतरुतानां हंसकुलानामुत्पलपत्रावलीषु सुगुप्तं लज्जयाऽवस्थानम् ।

तासां जलविहारवर्णनम्।

अथ विकसितारविन्दमेवार्घ्यं, विहगरुतमेवाऽऽलापं, फेनमेव हासं विदधतीव सरसी ऊर्म्मिभिरेव हस्तैः प्रीत्येव ताभ्यः माधवरमणीभ्यः व्यतनुतेव पाद्यमिति प्रतीतमासीत्। तास्तु प्रथमं तद्गतं जलं, सचकितं पादमुपन्यस्य गमनेन, ततश्चाग्रप्रविष्टपुरुषमुखेण गाधमिति विभाव्य, पश्चात् मृदुपदविन्यासेन तत्र प्रविष्टाः सत्यः गात्राणामङ्गरागेश्चानुरज्य तद्वर्णाऽऽक्रान्तमकुर्व्वन्। तासां महेभकुम्भसौभाग्यभाजा समुन्नतकुचयुगलेन मुहुः संक्षोभं प्रापितश्च तज्जलं चक्रवाकमिथुनं वियोगमनयत्। शीतभीरुश्च काचित् सरसि अवतरितुमनभिलाषिणी सैकते समुपविष्टा स्वयं सलिलं प्रविष्टेन सस्मितेन तद्भर्त्रा करयुगं धुन्वानाऽपि सिक्ता। स्वभर्त्रा सह सरोऽवगाहितुमनिच्छन्त्यपि काचन नवोढ़ा सखीभिः तटात् जलं प्रति प्रेषिता च भयेन सम्भ्रान्तदृष्टिः तमेव भर्त्तारं लज्जामपहाय समालिङ्गितवती। अंसप्रमाणे पयसि तिष्ठन्तं पुमांसं समीक्ष्य, स्वस्या अपि तावत्प्रमाणं जलमेव तत्रेति विभाव्य मौग्ध्यात् तमेव पुरुषमभ्येतुमभिलषन्ती काचित् निमज्जतीति पश्यता प्रियेण तु द्रुतं समाश्लिष्टा। कयाचित् नाभिपर्य्यन्तं सरसि प्रविष्टे सति, पयोभिश्चञ्चलतया करैरिव तरङ्गैरुन्नतं कुचमण्डलमधिरूढ़म्। शफरीविद्धोरुप्रदेशा च काचित् सातिशयं बिभ्यती सती विलासस्यातिशयमवाप।

ततश्च गम्भीरोऽप्यम्भोधिः अङ्गनाभिर्विहरन्तीभिः जघनविघट्टनेन संक्षोभं नीतः सन् सपदि मर्य्यादामलङ्घयत्। कनकगौरञ्च कस्याश्चित् वपुः जलमग्नमपि निर्म्मलतया लक्ष्यमेव प्रतिभाति स्म। कश्चिद्विलासी "किमेतत् पुरोवर्त्ति कमलम्? उत वा युवत्या मुखं प्रकाशते"? तदा त्वेवं सन्देहविषयतामभजत; परन्तु पद्मे विलासाभावात् मुखे च तस्य सद्भावात् मुखमेवेदमिति विलासादिभिः निश्चिकाय।

जलक्रीड़ासम्भारवर्णनम्।

द्रवीकृतकनकरञ्जितक्रीड़ाजलयन्त्राणि, चन्दनकुङ्कुमादिगन्धद्रव्याणि, स्तनाऽऽवरणसाधकं कुसुम्भकुसुमरञ्जितं वस्त्रं, द्राक्षामद्यं, सर्व्वसाफल्य-

कारणञ्च प्रियतमसन्निधानमित्येतानि तदा तासां नारीणां जल-केलिसाधनान्यासन् ।

## जलकेलिवर्णनम् ।

ततश्च ताः वायुवेगेन चलद्वसनाः अङ्गनाः अनर्थाऽऽशङ्किनां प्रियाणां चेतोभिः सह उन्नततटप्रदेशात् श्रोणीभारतया मन्दं मन्दं समुत्पतन्त्यः द्रुततरं जलेषु न्यपतन् । मुग्धस्वभावतया च कैतवप्रयोगानिपुणाः पुनस्ताः कान्तैः सह स्वयमभिसरणपणेन तिष्ठन्त्यः, करकमलैः परस्परं जलाभ्युक्षणं कुर्व्वन्त्यश्च सत्यः क्रीड़नमकुर्व्वन् ; अवागलच्च तदा कस्याश्चित् कामपीड़िततया दुर्व्बलायाः कथञ्चित् बाहुमुद्यम्य प्रियतमं स्नपयन्त्याः कराग्रात् हिरण्मयं कङ्कणम् । कान्तेन श्यामायाः कस्याश्चिद्वदने प्रफुल्ले कराम्बुना सिच्यमाने च, अन्यस्याः असहमानायाः सपत्न्याः मुखमसिक्तमपि ईर्ष्याकृतस्वेदोद्गमेन सिक्तमेवाजायत । प्रियपाणिपुटसिक्तैः पयोभिरभिषिक्तं कस्याश्चित् कुचयुगलमवलोकयन्त्याः सपत्न्याः कुचयुगलं तदानीं नयनसलिलसिक्तमभवत् । प्रियतमाङ्गात् सङ्क्रान्तमङ्गरागं सपत्नीभयात् सरसि प्रक्षालयन्त्याः कस्याश्चित् स्फुटलक्ष्यमाणं नखक्षतं वीक्ष्य सपत्न्याः सन्तापातिशय एव समजायत । प्रियेण प्रथमं सपत्नीमभिषिच्य पश्चात् सिक्तायाः अपरस्याः रमण्याः मुखं रुषा वैवर्ण्यं प्राप्तम् । निरन्तरजलावगाहभाजां तासां मेखलाकलापः भूयिष्ठश्रेष्ठकिङ्किणीनिबद्धोऽपि जलाऽऽर्द्रतया न च ध्वनिं व्यतनुत । चञ्चलैः सरोवरजलैः अतिस्वच्छैः स्वपरिधाने स्थानादपसारिते सति, कान्ते च श्रोण्यासक्तदृष्टौ लज्जितया कयाचित् स्त्रिया तरङ्गाऽऽनीतेन नलिनीदलेन लज्जानिवारणमकारि । कस्या अप्यङ्गनाया जलप्रवाहैः अङ्गसंसक्तं रक्तचन्दनं निक्षालितं, कुचयुगलात् हारलता च त्रुटिता ।

तदा सरसीनामापः तरङ्गहस्तैः समुत्तोलितैः बधूनां तासां जलकेलिसमये कर्णाच्युतमसितोत्पलं तटप्रदेशं प्रति चिक्षिपुः । तोये प्रक्षालिताङ्गरागं निसर्गरमणीयं तासां जलकेलिरतानां रमणीनां शरीरं नवीनाः सुरतकालकृताः नखाङ्काः, तथा विधौतलाक्षाराग-

मधरपल्लवं तत्कालकृतानि प्रत्यग्राणि दन्तपदानि च विचित्रां शोभां प्रापयामासुः। जलावगाहाऽऽसक्तानां पुंसाञ्च यद्यपि सान्द्रतरमङ्गरागं वक्षःस्थलात् सपदि विच्युतं, शिरोरुहेभ्यः शेखराश्च भ्रष्टाः, तथाऽपि जलविहारस्य रागजनकतया केवलम् अक्षिषु मदरागः अविकृतः एवावस्थितः।

तदानीं केलिसौकर्य्याय विगतभूषणानामपि जलविहारनिरतानां रमणीनां पर्य्याप्तमेवाकृत्रिमं विभूषणं सञ्जातम्; तथा हि, स्तनसङ्क्रान्ता फेनपङ्क्तिरेव हारावलीशोभां, शैवलावली जघनेषु नीलाम्बरश्रियं, कपोलेषु पद्मपत्राणि पत्रावलीशोभाञ्च समजनयत्; एवञ्च यद्यपि जलैः अङ्गरागः तासामपाकृतः, पत्रशोभा च विनष्टा, माला अपि निरस्ता, वसनमपि जलैर्नीरक्तमेव कृतं, तथाऽपि जलावगाहनात् पूर्व्वतोऽपि रमणीयतराः श्रियस्तासां समभूवन्।

तासां जलोत्तरणवर्णनम्।

इत्थं जलक्रीड़ाऽनन्तरं ता रमण्यः शरीरसम्बन्धात् संसक्तं, समधिकं, मूर्त्तिमल्लावण्यमिव संस्थितमम्बु क्षरद्भिः तरलतरङ्गलीलाकुशलैर्वसनाञ्चलैरुपेताः सरसः तीरमुदतरन्। शौरिस्तु काञ्चित् नारीं सौन्दर्य्यातिरेकेण जनिताद्भुतरसां, जलादुत्तरन्तीं, कमलहस्तां, मथ्यमानात् क्षीरसमुद्रात् सद्यः प्रादुर्भवन्तीं श्रियमिव समीक्ष्य समुद्रमन्थनस्य स्मृतवान्। ततश्च ताः आर्द्रवासांसि परिहृत्य, नवानि शुभ्राभ्रधवलानि वसनानि नार्य्यङ्गसङ्गमवाप्य हसन्तीव स्थितानि परिदधुः। काचन अंसयोः विकीर्णकेशकलापा सती स्नानाऽऽर्द्रं यत् शरीरं चिरमशोषयत्, परं नाजानाच्च यत्, समीपे समागतं कान्तमवलोक्य पुनः तस्याः तत् वपुः स्वेदाऽऽर्द्रमेवाभवत्। अपरा च स्वमूर्द्धजमध्यपद्धतिं हस्ताभ्यां विभजन्ती, अत एव बाहुमूलस्तनतटान् प्रियाय प्रकाशयन्ती तदेवाभिलषता प्रियेण पुनः दृष्टा। निर्म्मलजलस्नपनविमलमङ्गं, ताम्बूलरागोज्ज्वलश्चाधरः, सूक्ष्मं विमलं वासश्च, तथा निर्ज्जनस्थानं, विलासिनीनामेतावानेव प्रकृष्टः नेपथ्यविभवः, यदि पञ्चशरविरहितो न भवेत्। ततश्च सूर्य्यदेवः अस्ता-

चलमशिश्रियत् । इत्थमेव रमणीनां विहरणं कविना चारुतया वर्णितम् ।

इति अष्टमः सर्गः ।

---

## नवमसर्गः

### सूर्य्यास्तमयवर्णनम् ।

प्रदोषसमयं वर्णयितुमभिलषता श्रीमता महता कविप्रवरेण प्रथमं प्रखरकिरणस्यास्ताचलशिखरावलम्बनं प्रदर्श्य, निवासशाखिगमनोन्मुखानां विहगकुलानां कूजनं, क्रमेण रविकिरणानां निम्नतरप्रदेशपरित्यागानन्तरमुच्चैस्तरसानुमच्छिखरावस्थानञ्च प्रकटीकृतं, दर्शितञ्च प्रतिकूलदैवतया महतोऽपि विवस्वतः अवश्यम्भावि पतनं, नवसन्ध्याऽरुणमेघया स्वकिरणाऽऽक्रान्तरुचिराऽऽकाशया पश्चिमदिशा सह अतिसन्निकर्षमासाद्य लोहितवर्णत्वञ्च ।

### कविकृतसन्ध्यावर्णनम् ।

ततश्च नलिन्यः अञ्जनयनानि न्यमिमीलन्, मधुकरकुलानि च ततः अपासरन् । अन्तरीक्षे च तदा भानुरस्तङ्गतः, नक्षत्राणि तु सम्यगलब्धाणि सन्ति स्थितानि, चन्द्रबिम्बञ्च न दृष्टिपथमधिगतं, सन्तापाश्च प्रशान्ताः, अन्धकाराश्च नोदिताः ; विकसितकुसुम्भकुसुमवदरुणतां दधती जनसमूहेन कृतप्रणामा च सन्ध्यारूपिणी ब्रह्मणो मूर्त्तिरभ्युन्नता आसीत् । अथ चक्रवाकद्वन्द्वं क्रमेण विघटितं, मित्रेण सह दिवसोऽपि नाशमुपगतः, सन्ध्याऽपि दूरीभूता, सान्द्रकर्द्दमच्छवीनि दिवसावसानपटूनि तमांसि च गिरिगुहाप्रदेशादेत्य वहिः, उत वाह्यप्रदेशादागत्य गिरिगुहाः अधिकमाच्छादयामासुः । जनानां नयनानि भृशमन्धयति अम्बरक्षितितलानि च आच्छादयति सत्यपि तिमिरे, सिद्धाञ्जनरूपमभिनवं रागमधिगतवत्यः रमण्यः प्रियगृहवर्त्म अनिर्बाधमवलोकयामासुश्च । गाढ़ान्धतमसमपि शुभाङ्गीनां प्रियाभिसरणे सम्भोगकार्य्यस्याऽऽवश्यकत्वं

निश्चित्य स्थितम्; तेन हि सर्वप्राणिभयङ्करमपि तत् तदानीं तासां योषितां भीतये नाभवत्। दिवसे दिवाकरकिरणसम्पर्कात् मन्दीभूत-तेजःप्रसरतया य एव ग्रहगणो नैव लक्षितः, स खलु तमोव्याप्तां रजनीं प्राप्य सम्यगेव व्यद्योतिष्ट; जगति चैतदनुक्षणमेव दृश्यते यत्, पापिजनानां संसर्गमागत्य नीचाः नितरां प्रकटीभवन्तीति। असौ तु सन्ध्यासमयः कुङ्कुमचन्दनाद्यनुलेपनानि, माल्यादीनि, पतिषु कृतकोपाः कामिनीः, दीपशिखाश्च मदनोद्बोधनपुरःसरं सममेवो-द्बोधयामास; इत्यादिप्रकारेण कविना प्रदोषसमयं समुपवर्ण्य चन्द्रोदयवर्णनं कृतम्।

## चन्द्रोदयवर्णनम्।

समनन्तरञ्च हिमांशोर्हिमविशदमंशुजालं प्राच्यां दिशि समलक्ष्यत। कलामात्रोदिते च तस्मिन् तुषारकिरणे, नूनं गगनमष्टानां शिवमूर्त्तीनामन्यतममेवेति जनैरभिपन्नम्। प्रथममसौ कलानाथः कलामात्रं, ततः अर्द्धमात्रं, परञ्च साकल्यादुदितो भूत्वा तिमिरसमूहं विभेदयामास, व्यभूषयच्च रजनीं, तामवाप्य स्वयमप्यतितरां शोभां लेभे; उष्णांशु-करक्लिष्टां कुमुदिनीञ्च अलिरुतैः रुदतीमिव स्थितामग्रकरैः परामृश्य समुच्छ्वासयति स्म। ततश्चासौ चन्द्रः चन्द्रकान्तमणिं किरणेन गलदम्बु-समुल्लासितं विदधत्, अमृतद्रवैः करैः मानिनीनां सन्तापकरं मानञ्च निराकुर्व्वन्, निसर्गनिर्म्मलेषु तरुणीकपोलफलकेषु च मुहुः प्रतिफलन्, तथा स्वभावादक्षोभ्यं समुद्रं यदुगणञ्च क्षोभयन्, सुप्तालसं मदनं जागरयन्, दिशामवकाशांश्च सहसा समुल्लासयन्, रतये च रागिणाम् औत्सुक्याधिक्यं जनयन्, सममेव कुसुमेषुमदिदीपत्; स्त्रियश्च प्रियतमाऽऽगमनमवश्यं निश्चित्य अलङ्कर्त्तुमुपचक्रमिरे।

## स्त्रीणां भूषणवर्णनम्।

तथा हि,—तन्वङ्ग्यः स्तनयुगलयोः एकमेव हारं, जघनस्थले च रशनाकलापम्, अधरेषु च लाक्षारसं, गण्डस्थले च शुभ्रं लोध्ररजः,

नेत्रेषु च नवीनमञ्जनं समयोजयन्। प्रियतमो गृहमागमिष्यति इति चिन्तया औत्सुक्येन च कृतत्वराणां निपुणानामपि रमणीनां मनांसि वस्त्रगन्धमाल्येषु, इदं वसनम्, एतदनुलेपनम्, इदं कुसुममिति, अस्माकमिदं पुरोवर्त्ति धारणार्हमिति च न निरधारयन्। काचन आलिङ्गनसुखविच्छेदभीरुतया वपुषि अनुलेपनमपि व्यवधानकरं मत्वा नार्पितवती, अपरा च स्वहस्ततलाभिघातात् नासारन्ध्रं प्रति समुत्पतितं पद्मगन्धं स्वमुखमारुतमाघ्राय प्रीताऽभवत्। अन्या च काचन करे कपोलतलं संस्थाप्य, करञ्च जानुनि निधाय, कालक्षेपार्थं मन्दकण्ठेनैव गायन्ती कान्तार्थमुत्कण्ठामवाप।

ततश्च अत्यन्तकाममोहिता काचन मधुरभाषिणीं रम्याऽऽकृतिम् अनुरागव्यञ्जनचतुरां सखीं प्रियं प्रति प्रेषितवती। अन्यया च मानवत्या अनादिष्टाऽपि सखी तस्याः मरणशङ्कया दयितमानेतुं शीघ्रमेव तत्र गतवती। अपरा च काचित् कलहान्तरिता नायिका "प्राक् सापराधं प्रियं कथमपि निराकृत्य, पश्चात् पतिव्रतानां तदनुसरणमुचितमेवेति विभाव्य तथा कृते, मामभिमानहीनां स मन्येत इति निश्चित्यापि, तेन विना स्थातुमहं क्षणमपि नैव समर्थाऽस्मि, हे सखि! अतस्त्वं त्वरितमेव तत्समीपमुपेत्य तदपराधशतमविगणय्यैव मां प्रति प्रियमनुनयेथाः" इति अभिधाय, कृतापराधायापि कान्ताय विरहासहिष्णुतया सखीं विससर्ज्ज। अन्या च "प्रियं प्रति किं वक्तव्यम्?" इति दूत्या पृष्टाऽपि लज्जया किमपि नोक्त्वा केवलं निशिताशरीरशरकृशीकृतं स्वशरीरमेव ददर्श।

## दूत्या उक्तिवर्णनम्।

नायिकाभिरुपदिष्टा दूत्यश्च तदा दयितसमीपमुपसृत्य पुंभिस्तुल्यमेव वचनजातमब्रुवन्। तथा हि,—"त्वदर्थमुत्कण्ठिता मदनपीड़िता मम सखी नितरां कृशतामलभत। भवद्गुणराशिपरिपूरितश्रवणविवरा सा तावद्गुणानामवकाशं दातुमक्षमतया अतृप्ता सती, बहुतण्डुलमानार्थं प्रस्थादिवद् भूयो गुणप्रवेशाय तव गुणकीर्त्तनेषु अङ्गुल्यग्रेण

श्रोत्रविवरं परिघट्टयति। सातिशयसन्तापजनितोष्णनिश्वासवायुभिश्च अनिशमुपतप्यमानं स्वाधरं नवनागवल्लिदलरागरसेनापि आर्द्रतां नेतुं नैव शक्नोति। निष्कृपो हि कुसुमेषुः कुसुमादपि सुकुमारतरं तच्छरीरमनिशमेव विशिखैः तापयति। अमृतमपि विपरीतप्रयोगेण निषेवितं विषवदहितत्वमेव समुपैति, यतो हि, अमृतमया अपि चन्द्रकिरणाः त्वया विना सेवनात् त्वत्प्रियामतितरां सन्तापयन्ति"। प्रियामुद्दिश्य सस्नेहमेवं दूत्या भाषितं वचनं प्रियेण समाकर्ण्याथ विश्वस्य च तत् तत्र प्रययै।

## यूनि गृहप्राप्ते तात्कालिकवृत्तान्तवर्णनम्।

समुपागते च दयिततमे तदवलोकनोत्सुकत्वरया श्रवणात् भ्रष्टमपि कर्णभूषणभूतं महोत्पलं कयाचिदङ्गनया नैव परिलक्षितम्। पश्चादागतवतश्च कस्यापि प्रेयसः प्रतिबिम्बं दर्पणेन पश्यन्त्याः कस्याश्चित् नवोढायाः शृङ्गारभयाभ्यां कम्पमानादपि पाणितलात् प्रयत्नधारिततयैवासौ दर्पणः कथमपि भुवि नैवापतत्। उन्नतशरीरतया च केनचिदवनम्य गाढमालिङ्गितवता अत एव वक्षोनिविष्टकुचद्वितयेन यूना तत्क्षणे रशनाया उन्नतकलकिङ्किणीरवपूर्वकं काचिदङ्गना ह्रस्वशरीरत्वादूर्द्ध्वमुत्क्षिप्ता। दयिताऽऽगमनजनितत्वरया च काचिदासनं सन्त्यज्य द्रुतमुत्थिततया स्रस्तम्, अत एव करधृतबन्धं वसनं क्षणदृष्टोरुदेशं यथा तथा समाच्छादयामास। अपरा च काचित् नववधूः, पश्चादुपगम्य नयने समाच्छादयन्तं कान्तं, "कोऽयम् ?" इति पृच्छते जनाय वाक्येन वक्तुं लज्जया नोत्सेहे; किन्तु तदङ्गस्पर्शजनितपुलकैः कान्त एवायमिति प्रकटितवती। काचिदपरा ललना पत्युः प्रत्युत्थानाद्युपचारकर्म्मणि ऊर्वोर्गुरुभारतया मन्थराभिः स्खलिताभिरपि गतिभिः प्रेमप्रकर्षं प्रादर्शयत्। अपरा काचित् सपत्नीनामग्रहणाऽऽहता च कान्तं तिरस्कृत्य पुरो जिगमिषुर्णायिका नायकेन करग्रहणपूर्वकमवरुरुधे। काचन प्रियं प्रति कोपवती जाता, काऽपि निविडोन्नतकुचमण्डला कामसन्तप्तहृदया च अप्रतिमेन मुखेन शोभते स्म। ततश्च चन्द्ररुचयस्तदानीं

कृत्य इव इत्थं विगतकोपाः कामिनीः कामिभिः सह घटयितुमल-मेवाभवन् ।

इति नवमः सर्गः ।

---

## दशमसर्ग

### आदौ मधुपानवर्णनम् ।

सर्गेऽस्मिन् कविकुलशिरोमणिना माघेन सुरतप्रसङ्गमवतारयितुं तदनुकूलं मधुपानमेव प्रथममुपवर्णितम् । तत्र च सज्जितानि सुरभीणि च कान्तावदनान्येव सुरापात्राणि परिकल्पितानि । ततश्च ते युवजनाः निवृत्तशङ्कं ता बधूः त्वरां मानमवधूय सुरा अपीप्यन् । मत्तः भ्रमरश्च पानपात्रे विनिहितं कमलं मधुपानसुगन्धि च कामिनीमुखमाघ्रातुं, प्रागिदं भजामीदं भजामि वेत्थमुभयलोभात् दोलायमानचेता बभूव ; अपिबच्च कश्चित् प्रियतमाऽर्पितमिति अतिस्वादु मद्यम् । कस्याश्चिन्मधुसम-स्वादमोष्ठं प्रियतमे पिबति च, अपगच्छताऽपि लाक्षारागेण दशनक्षत-कृतरागतया पूर्ववदेव स्थितम् ।

ततश्च त्रिवारमधुपानोत्कटमदोद्भुद्धसंस्कारप्रभावितप्रगल्भमतीनां कासाञ्चित् रमणीनां प्रतिकूलवाक्यरचनारमणीयः, आदौ लज्जासंवृतो-ऽपि मदेन प्रकाशितरहस्यः सहासः परिहासश्च सम्यक् प्रकाशितोऽभूत्, जनयामास च तदा तदानीन्तनमदातिरेकः मुग्धाया अपि बध्वाः प्रौढा-वत् विलासमनोहरं हसितं, वचनविन्यासकौशलं, नयनविकारविशेषञ्च युगपदेव । अपि च मधुपर्य्यायैः सापराधे स्वामिनि कलुषितस्य कोपप्रज्वलितस्य स्वीकृतकाठिन्यस्य च बधूनां हृदयस्य झटिति तथाविधा अप्रसन्नता दीप्तता कठिनता च सम्यक् प्रशमिता, वपुषि सर्वदा विद्यमानस्याप्यप्रकाशितस्य विलासस्य सम्यक्प्रकाशनञ्च प्रकटितम् । मद्यपानात् पूर्वं सखीप्रेरणया कथञ्चित् प्रियतमसमक्षं ययैव स्त्रिया

प्रगल्भितं, तथैव मदस्य स्वाभाविकधर्म्मप्रकाशनस्वभावतया मद्य-
पानात् परं पुनः सहजा लज्जामुग्धता स्वीकृता। अपराधिनं स्वामिनं
मद्यपानेन मोहितचित्ताऽहं नाभिसारयाणि, इत्यालोचयन्त्याः अपरस्याः
कस्याश्चित् सुरापाने अनभिलाषश्च समजनि। तथा स्त्रीभ्यः आहित-
मदनं यथा तथा दयितार्पितं प्रचुरस्वादुतरं गण्डूषमद्यं नितरां सस्वदे।
मधुपानावसरे योषितां तासां मुखस्य च मद्यस्य च इतरेतरयोगादपूर्व-
गन्धोत्कर्षः भृङ्गोन्मादकरः बभूव। सखीसमक्षं गूढ़चुम्बनचतुराणां
योषितां मधुपानक्षालितलाक्षारागस्य स्वाधरस्य प्रियाधरताम्बूलरागेण
पुनरेव रञ्जनं समभूत्। सपत्नीनामग्रतः दयितेन दत्तं मद्यं पीत्वाऽपि
काचित् न ममाद, मद्यमपिबन्ती अपि सपत्नी तु तद्दर्शनादेव
मत्ततामुपगता। प्रथमं प्रियं प्रति रोषात् तत्प्रार्थनाशतानि अनङ्गी-
कुर्वन्ती, अथ पश्चात्तापतप्ता काचित् मद्यपानेन जनितमोहा प्रेयसमेव
आत्मना प्रकोपितं विज्ञाय तत्क्षमाप्रार्थनां कर्त्तुमारेभे। एवं मद्यस्य
अक्षिनिमीलनवाक्सादाङ्गसादरूपविविधधर्म्मांश्च विवृत्य कविना
यौवनोद्दामरम्याणां मद्यमदेन मदनाऽऽसक्तानाञ्च रमणीनां दयित-
संसर्गेण शोभाऽऽतिशय्यं, कान्तसन्निधौ वदनविकसनम्, अङ्गानां
पुलकितत्वं, वचनानामार्द्रत्वञ्चोपवर्णितम्।

## सुरतवर्णनम्।

वाह्याऽऽभ्यन्तरभेदेन द्विविधयोः सुरतयोः प्रेक्षणभाषणाऽऽश्लेषण-
चुम्बनाद्यनेकभेदभिन्नस्य वाह्यसुरतस्य प्रेक्षणविशेषं प्रथमं दर्शयता कृतिना
कविना, सुखस्पर्शे तथा विहारयोग्यतया सज्जीकृते, सुरताय कल्पिते च
शयनीये प्रियतमे च मृगदृशामनिशं दर्शनं, किमप्यभिधातुमिच्छन्त्या
अपि लज्जया वक्तुमसमर्थायाः, दिदृक्षोरपि अभिमुखीभवितुमशक्नु-
वत्याः कस्याश्चित् नवोढ़ायाः दयितस्पर्शनेन कम्पनञ्च, तथा अन्यस्याः
मुग्धायाः कुचांशुकाऽऽकर्षणात् त्रपमाणायाः कुचाऽऽवरण-
व्याजेन कान्तसमालिङ्गनं, दीपितस्मरतया उरस्युपपीड्य कान्तस्यापि
गाढ़परिरम्भणं, प्रियतमसङ्गमेन प्रमदानां विपुलहर्षञ्च प्राक् समुल्लास्य,

चुम्बनक्रीड़नादिकं, तदनन्तरमाभ्यन्तरसुरतं विश्रम्भसुरतञ्च वर्णितम्। सम्भोगावसाने च प्रियतमैः सार्द्धं सङ्गतानां तासां योषितां पूर्ववदेव लज्जा सखीव समायाता, तया च लज्जया स्खलितदृष्टिपाताभिः ह्रि ताभिः द्रुतगृहीतदुकूलैःससम्भ्रमं शरीरमाच्छादितम्। इत्थं सुरतावसानञ्च वर्णयित्वा महाकविना प्रभातप्राया रजनी सञ्जातेति च प्रदर्शि।

इति दशमः सर्गः।

---

## एकादशसर्गे

### प्रभातवर्णनम्।

अथ प्रसङ्गप्राप्तं प्रभातं वर्णयितुमिच्छता श्रीमता माघकविना मधुरकण्ठानां वैतालिकानां मुखेन माधवप्रबोधनार्थं विशुद्धसङ्गीत-द्वारकं प्रभातवर्णनमासर्गसमाप्ति कुर्वता प्रथममपररात्रव्यापारः समदर्शि। तथा हि,—प्रभाते कामुकानां नैशसुरतसम्भ्रमलीलाऽभ्यास-क्लान्तं लोचनयुगलं यावत् न मुकुलीभूतं, तावदेव निशाऽवसानसूचकः भाविविरहविहितनिद्राभङ्गः मृदङ्गः जनैरभिताड़ितः। दूरतया सूक्ष्मबिम्बस्य ध्रुवस्य उपरि समुज्ज्वलतरं सप्तर्षिमण्डलं पर्य्यस्तं सत्, बाल्ये भगवतस्तव पादघातेन पातितं शकटरूपिशकटासुरशरीरमिव शोभते। तथा केनचित् अतीतप्रहरपालेन अनन्तरप्रहरपालः स्वपाल्यं प्रहरमतिवाह्य निद्रातुमिच्छता सता "प्रबुध्यस्व प्रबुध्यस्व" इत्युच्चैराहृतोऽपि मुहुर्निद्रया अस्पष्टाक्षरमनर्थप्रायम् "अयमहं जागर्म्मि" इति प्रतिवचनं प्रयच्छन्नपि नान्तर्जागरामास। कामुकः कश्चित् प्रमदायाः विशालनितम्बावरुद्धे शयनीये शयनावकाशमलभमानः पुनः पुनः सुरते रतः निद्राप्रयुक्तां तन्द्रां निरस्य कृच्छ्रेण रजनीमति-वाहयामास। महीपतयश्च कवय इव कियत्कालं शयित्वा, तदैव पुनः

प्रतिबुध्य रात्रिपश्चिमयामे बुद्धिप्रकाशं लब्ध्वा च समुद्रगम्भीरे दुष्प्रवेशे राज्ये, काव्यवत् प्रयोगान् ("ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनो हितम्" इति स्मरणात्) तर्कयन्तः सन्तः गहनं पुरुषार्थजातं विचारयामासुः। हस्तिपश्च सुप्ता भूतलशयनादुत्थितं मदपङ्कप्लुतशरीरं गजं पुनः पार्श्वपरिवर्त्तनेन शयनं कारयति स्म। अतिलघुहस्ता गोपालाश्च नवनीतमुत्कृष्टुं मन्थनदण्डेन गम्भीरशब्दपुरःसरं, शैलेन शशिनमुद्धर्त्तुं सुरौघाः वारिधिमिव कलशिं मथ्नन्ति स्म। काचित् कलहान्तरिता नायिका प्रथमं प्रियप्रार्थनां नाङ्गीकृत्य पराङ्मुखीभूय कपटेन सुप्ता, अथ प्रभाते कुक्कुटकूजितमाकर्ण्य गात्रविजृम्भणादिव्याजेन सम्मुखीभूता निद्रया अजानतीव मीलिताक्षी सती प्राणेशमालिलिङ्ग। नरेन्द्राश्च वैतालिकगीयमानमधुरसङ्गीतश्रवणेन सुखनिमीलिताक्षाः सन्तः निद्रां भेजुः। अश्वश्च कश्चित् कर्णग्रीवं स्रस्तमुक्तं विदधत्, ऊर्द्ध्वजानुस्तिष्ठन्, कियत्कालं निद्रामनुभूय, भयः सम्मुखावस्थितं बालतृणमास्वादयितुमभिललाष। प्राक् मल्लङ्गेन प्रवृद्धदीप्तिरुदयगामी च शशधरः सम्प्रति पराङ्गनामिव पश्चिमाशामासाद्य अस्तमेव समाशिश्रियत् इत्यालोक्य प्राचीदिगङ्गना स्वप्रभया अहासतेव। तरुण्यश्च काश्चित् "सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते। नान्यं कामयते चित्ते सा स्त्री ज्ञेया पतिव्रता॥" इति स्मरणात्, पश्चात् सुप्ता अपि पूर्वमेव जागरित्वा अस्पन्दितशरीराः सत्यः रतिश्रमखिन्नप्रियतमनिद्राभङ्गशङ्कया परस्परगाढ़ाऽऽश्लेषविश्लेषं नैव विदधिरे। चन्द्रमाश्च अस्तमयरागेण लोहितायमानैः शुभ्रमयूखैः, कुङ्कुमसंयोगादीषन्निरस्तधवलिमभिः श्रीखण्डरजोभिः प्रेयसीमिव पश्चिमाशां विभूषयन्नतिमात्रमेव शुशुभे। कुमुदानां मुकुलीभवद्दलैः क्षीयमाणशोभाधारणात्, कमलानाञ्च विकसद्दलैः वर्द्धमानशोभाग्रहणात् भ्रमरैरुपगीते उभे अपि कुमुदकमलकदम्बे तुल्यरूपामेव अवस्थां दधाते च। अरुणिमानमुपगत्य मुखप्रकाशनात् चिराय स्थायिनीं लज्जाम् आशु त्यजन्त्या इव प्राच्याः दिगङ्गनायाः मुखस्येव प्राग्भागस्य अवगुण्ठनपट इव

चन्द्रकिरणजालं संसते स्म च। अविच्छिन्नसुरतक्रीड़ाश्रान्तानामङ्गनानामङ्गमाङ्गे उपशाम्यन्तमपि मदनं प्राभातिकजातिकुसुमवासितवातस्पर्शः पुनरुद्दीपयति स्म। भ्रमन्ति स्म सूर्य्यतेजोऽभिभवान्मन्दायमानप्रकाशाः दीपशिखाः। हर्षमन्मथमत्तयुवतीरतिखेदहरणदक्षः प्रभातमारुतश्च विकसितकमलगन्धैः भृङ्गमालाः मोहयन् मन्दमन्दं प्रवहति स्म। निद्राकलुषितनयनकनीनिकाः परिक्षीणमुखचन्द्रमण्डलाः स्रस्तकेशपाशाश्च वारविलासिन्यः राजगृहेभ्यः निर्जग्मुश्च। व्रजति स्म च वासरान्ते शिशिरकिरणमभिसृत्य वायुभिः सुगन्धिः तत्किरणव्याप्तं नभःप्रान्तं भजन्ती रजनिः। निशायां परिरम्भव्यापारवता प्रियेण प्रियायाः आक्षिप्तं वसनं प्रभातेऽपि तत्श्रोणीदर्शनलोभादर्पयितुं नैष्यत च। सपदि च कुमुदिनीभिः मीलितं, रात्रिरपि गता, सकला नक्षत्रराजयश्च अपेताः, इन्दुश्च भ्रष्टशोभः सन्नस्तमगच्छत्। सूर्य्योदयात् प्रागेव अरुणेन निखिलं तिमिरजालं निराकृतम्। चक्रवाकश्च गगनमण्डलं तिमिररहितं वीक्ष्य यावत् पक्षमूले उत्पतनाय धुनोति, तावदेव चक्रवाकी समुत्कण्ठिता सती सरितोऽपरतटात् तत्र समायाता। रात्रौ युवतयः पुष्पमालाश्च तुल्यामेव शोभां धृतवत्यः, प्रभाते तु उपभोगादधिकसुरभिभिर्युवतिभिः निष्प्रभाः मालाः परित्यक्ताः। प्रभातमारुतैश्च वने वने कमलसमूहाः व्यालोलिताः, मालत्यादीनां विस्ताराश्च विक्षिप्ताः, वकुलचम्पकादिशाखिनां प्रसूनानि च अवधूतानि, किन्तु एतेषां कुत्रापि तैर्नावस्थाय वधूकुसुमसङ्घर्षेण उन्नतगन्धेषु गृहान्तरेषु एव स्थायित्वमधिगतम्।

प्रातरागतं सागसं प्रेयांसं प्रति खण्डितायाः नायिकायाः उक्तिवर्णनम्।

• "अपररमणीसंसर्गपीड़नैः अङ्गरागे निःशेषतया भिन्ने सत्यपि यदाश्चर्य्यधाम्नः तव मुखविकासः स्तोकमपि न भेदमुपगतः, इदमेव महदाश्चर्य्यम्। स्फुटतरं हि नखविलिखमन्या रमण्यः तव वपुषि मा पश्यन्तु, इति बुद्धा कान्तया चरणप्रहारसङ्क्रान्तलाक्षया असौ

समाच्छादितः ; किञ्च 'त्वं मम प्रिया' इति यदवोचः, तत् सत्यमेव, यतः प्रियजनपरिहितं वसनं वसान एव मम निवासं प्राप्तः, प्रेयसीनामवलोकनेनैव हि कामिनां भूषणशोभा सफलतां लभते। तथा नवनखक्षतचिह्नितं शरीरमंशुकेन त्वमाच्छादयसि, दशनक्षतमोष्ठञ्च हस्तेनाऽऽवृणोषि, किन्तु स्वान्तरसङ्गसूचकः परिमलाऽऽख्यो नवगन्धस्तु त्वया कथमप्याच्छादयितुं नैव शक्यः"। उक्तप्रकारेण कृतोपालम्भायाः अधैर्य्यान्मुक्ताश्रोः कस्याश्चित् प्रेयस्याः लग्नन् कश्चिन्नायकः आगत्य प्रणामेन तां प्रसादयितुमारभत, यतो हि प्रणयकलहेषु योषितां करुणमपि रुदितं मानिनामपि पुंसां मानभेदपटीयः भवतीति।

## विलासिजनस्य उक्तिवर्णनम्।

कश्चित् विलासिजनः, निशायां स्वकृतनखदन्तक्षतं सपत्नीसम्पादितमेवेति शङ्कया रोषपरवशां स्वस्त्रियं, "मदमूढ़या त्वयैव कृतमिदं, किमिदानीं नाभिजानासि?" अनेन प्रकारेण लज्जितां तामनुनिनाय। गाढ़ालिङ्गनेन मौक्तिकहारच्छेदं विधाय शिथिलीकृताङ्गे स्वामिनि गमनाय आमन्त्रयमाणे सति, तत्क्षणं नवमुक्तारूपस्थूलवाष्पाम्बूनि विसृज्य स्तनयुगमुपाकरोदेव। रात्रौ मत्ततया प्रियसमीपे बहु जल्पितं, प्रौढ़नायिकावत् बहु चाटु कृतञ्चेति दिवसे सखीभ्यः श्रुत्वा विगतमदया कयाचित् मुग्धया विलज्जितम्। एवं क्रमेण प्रातः-सन्ध्याऽपि अतिक्रान्ता।

## यज्ञवर्णनम्।

प्रतिगृहम् क्षतज्योतिरग्निः यथाशास्त्रमुच्चारितश्रुतिभिः ऋत्विक्श्रेष्ठैः अग्निसमिन्धनीः ऋचः पठित्वा देवतोद्देशेन त्यक्तं दुरितौघदहनक्षमं हविर्विशेषमास्वादयति स्म।

## अथ जपवर्णनम्।

प्रक्रान्तजपकर्म्मणां तपस्विनाम ओष्ठाक्षरैरावृतम्, अनोष्ठैश्चाक्षरै-

लेंख्यम् उन्नतदशनकिरणमास्यं तदा मुहुर्घटितविघटितस्य मुग्धमुक्ता-स्फोटस्येव नितरां शोभते स्म।

## सूर्य्योदयवर्णनम्।

शुशुभे च तदा प्राच्यां दिशि महासागरसलिलदाहानन्तरं कृतजग-द्दाहोद्योगं सत् सागरोपरि ज्वलितं वड़वानलज्योतिरिव नवकनकवत् दिनभर्त्तुः पिङ्गलकिरणजालम्। दिग्भिरङ्गनाभिरुद्ध्रियते च प्रसारित-महारज्जुरूपैः किरणजालैः महान् कलश इव जलनिधिजलमध्यादेष दिनकरः। क्षणञ्च उपरिस्थितेन अनेन विवस्वता केवलमुदयाद्रिर्न, अपि तु सर्वेऽपि शैलाः सममेव नवकरनिकरेण समुद्भासिताः। उदितमात्रेणैवैतेन बालसूर्य्येण कराग्रे प्रसार्य्य गगन-मातुरङ्के निपतितं, नलिनीभिश्च रमणीभिः कमलानि मुखानीव विकाश्य तत् वीक्षितं, विहगकुलैश्च हर्षात् कूजितम्। क्रमेणासौ सप्तसप्तिः क्षितिधरपीठमध्या-सीनः, भूतलप्रसारितकिरणजालः उदयाद्रिमतिक्रान्तः। ततश्च बाला-ऽऽतपरूषितं नदीसलिलं भानुकिरणरूपशरसहस्रक्षततिमिररूपकरि-रुधिररञ्जितमिव अदीपिष्ट। नवीनदिनकरकिरणाश्च गवाक्षविवरेभ्यः मन्दिराणामभ्यन्तरेषु निपेतुः। रजन्यां रमणीभिः मद्यपानेन शून्यी-कृतमपि स्वर्णमयपानपात्रं गोरोचनाऽरुणबालाऽऽतपसंयोगात् पूर्व्ववत् मद्यपूर्णमिव बभौ। रात्रौ शय्यायां परित्यक्तं शुभ्रवस्त्रं, किन्तु प्रभाते दिनकरकरसङ्गेन रक्तवर्णतया भासमानं प्रियस्य उत्तरीयं स्वकीय-मिति बुद्ध्वा आददानां नायिकाञ्च सखी परिजहास। निशायां सुधाधवलं यद्गृहं चन्द्रिकासम्बन्धात् स्फटिकमयमिव रेजे, तदिदानीं बालतपनकिरणैररुणीकृतं सत् काश्मीरदेशजातकुङ्कुम-जलसिक्तमिव प्रतिभाति। योषितामार्द्रनखक्षतानां मध्ये संलग्न-केशानां प्रमोचनं प्रिये विदधाने सति, व्यथाऽऽविर्भूतसीत्कारैः प्रकाशितदशनेषु प्रतिफलन्त्यः नवरविभासः पद्मरागाणामनुकरणं विदधिरे च। स्वतः कनकमनोहरं, ततः कुङ्कुमाङ्कितं कामिनीनां वपुः पुनर्बालाऽऽतपव्यापनात् महान्तं वर्णोत्कर्षमापेदे च। सरसिज-

वनकान्तं लोकलोचनानां दर्शनशक्तेर्निदानं किरणसहस्रं दधदयं हरिदश्वः निखिलजगदाक्रान्तवन्तमन्धकारं साधु निजघान। ध्वान्त-ध्वंसाय समुदितोऽपि दिवसेशः दर्शनीयमपि तारागणमरिपक्षावलम्बनेन प्राप्तशिपुरुषवदेव निराकृतवान्; दूरीचकार च सूर्य्योऽसौ अतिधवलायां रजतभित्तौ प्रतिबिम्बितस्य स्वकिरणजालस्य तत्प्रतिघातेन गुहामध्येऽपि प्रवेशात् गुहावस्थितं संहतमप्यशेषं तिमिरजालम्। यथा कश्चिन्निजपद-भ्रष्टः पुनर्लब्धपदः स्वबन्धुवर्गान् काराऽवरुद्धान् स्वयमागत्य काराकपाट-मुद्घाट्य मोचयति, तथाऽसौ सविता भूयः स्वकीयं तेजः प्राप्य निशायां कमले बन्धनप्राप्तानां षट्पदानां बन्धनमोक्षं विदधे; सहस्रसङ्ख्यकैर्मयूखैः कमलानां सहस्रदलानां विघटनञ्च चक्रे। उदयति सवितरि, अस्तङ्ग-च्छति च शीतांशौ कुमुदवनं शोभाविहीनं, कमलवनञ्च शोभायुक्तं, चक्रवाकः प्रीतिमान्, पेचकश्च प्रीतिहीनः सञ्जातः, सर्वमिदं दुर्दैव-चेष्टितानां विचित्रो विपाकः।

उदयरागवतीं शोभां दधानः दिवापतिरसौ निखिलनक्षत्रमण्ड-लानां कुमुदानाञ्च श्रियं द्राक् क्षयं नीत्वा, अन्धकारजालञ्च सम्यक् अवधूय, कृताखिलजगत्प्रबोधः, स्त्रीपुंसानाञ्च वियोगं प्रापयन्, हे कामद! तव सुप्रातं करोतु।

इत्येकादशः सर्गः।

---

## द्वादशसर्गे

### प्राभातिकप्रयाणवर्णनम्।

सूर्य्योदयानन्तरं भगवता सह यादवानां प्राभातिकप्रस्थानं वर्ण-यता कविना रथाश्वगजचारिणां नरपतीनां तोरणबहिःप्रदेशे क्षणं प्रयाणकालोचितवेशरचनार्थं कृतविलम्बस्य भगवतो हरेः समागमाय प्रतीक्षणं प्रथमं प्रदर्श्य, पश्चात् कनकवर्णं समुन्नतमधिकवेगं रथं समा-

कस्य हरेर्गमनञ्च वर्णितम्। ततश्च शुभ्रतराः सरज्जुकाः अतिदीर्घाश्च पटमण्डपाः कुमुदकूटा इव स्थिताः तैर्मुकुलीकृत्य नीताः। उन्नमित-पूर्वकायो हि गजपतिः खमुत्पिपतिषुर्महाऽद्रिरिव आकुञ्चिताङ्घ्रिः सन् तत्र कृतपादन्यासं यन्तारमारोहयते स्म। तुरङ्गिणश्च प्राक् स्वैराऽऽस्फा-लनोपलालितान् पल्याणकोटिसंसक्तमुखरज्जुं पाणौ कृत्वा कम्पित-शरीरानश्वानारूढाः। उपर्य्युपविष्टश्च निषादो यावत् भूयांसमध्वानं गन्तुं तदौपयिकमासनविशेषं न बबन्ध, तावदेव दुःसहवेगाः उष्ट्राः अनर्गलं प्रस्थिताः; कश्चिदुष्ट्रश्च निधीयमाने सति भाराऽऽरोपणाय निर्म्मिते भारयुक्ते गोण्यादौ, बलादुत्थाय गन्तुमिच्छन्, गृहीतश्च मुखभागे, प्रागुपभुक्तनिम्बपल्लवरसनेन विषमस्वरमत्युत्कटमकार्षीत्। न च स्वीकृतवान् जनेन निधातुमुद्धृतां गोणीं नासिकाप्रोतमुखरज्जौ गृहीतः कश्चित् कम्पितविषाणयुगलो महावृषभः। तीक्ष्णाङ्कुश-प्रहारेण निषादो निरुद्धवांश्च प्रतिनागं प्रति चलितं द्विरदम्। पटह-श्रवणाच्च तदा राज्ञां बलान्यभिभवशङ्कया व्यथितान्यासन्, सञ्जाताश्च गिरिगह्वरस्थिताः सिंहादयः किमिदमिति भीतिविह्वलाः। तुरङ्गा-धिरूढाश्च अवरोधस्त्रियः व्रजद्भिश्चमूचरैः क्षणं दृष्टाऽऽननाः चलत्पीन-स्तनैः कम्पितकञ्चुकं यथा तथा समगच्छन्। स्वपृष्ठात् पातिताव-रोहं कयाचित् दिशा पलायितं दुर्विनीतमश्वं जनाः सहासमलो-कयन्। प्रत्यासन्ननागसूत्कारात् त्रस्तौ करभौ, सारथौ व्याकुलं यथा तथा त्यक्तप्रग्रहे सति अवरोधाङ्गनाः भूमौ क्षिप्त्वा अपथेन दूरमतीत्य रथं बभञ्जतुः।

प्राक् लाभार्थं कृतक्रयश्च कश्चिद्वणिक् स्थाणुसक्तशकटभङ्ग-संक्षोभेण विदारितमृन्मयमद्यभाण्डेभ्यो विगलितसुराभिः सिक्ते सति दूरवर्त्मनि तदर्थमत्यर्थं शोकमवाप। तैर्बलैश्च भेरीभिर्गुहा-मुखानि नितान्तवात्यामुखराणि निर्भर्त्स्य, ध्वजांशुकैः गुल्मपत्राणि च तर्ज्जयित्वा, समुन्नतैर्मातङ्गैर्महोपलान् विजित्य च, रैवतकाद्रि-र्दूरगमनेन पृष्ठतः समकारि। कृष्णसारैश्च तदा हरिणीसदृशानि

योषितां नयनानि समालोक्य किञ्चित्कालं तत्रावस्थाय, पश्चात् विभ्रमवन्ति तानि योषितां निश्चित्य स्थानान्तरे पलायितम्। अश्वाश्च सादिभिर्दृढगृहीतवल्गाः सन्तः दुःखात् शनैः शनैर्निम्नभूप्रदेशान् अवतीर्य्य वल्गायां शिथिलितायाञ्च सत्यामुत्तालखुराऽऽरवं यथा तथा द्रुततरमेव अधावन्। शौरिसेना च तत्तेजसा विनतैः, अत एव पार्श्वदेशात्समागतैः राजसमूहैरसङ्ख्याताऽऽतपत्रवद्भिः समाच्छन्नभूमिकतया एकाऽऽतपत्रमयीव रराज। अपठंश्च स्तुतिपाठकसमूहाः शौरेः पुरतस्तद्गुणाऽवलीकलितान् ओजस्विवर्णोज्ज्वलवृत्तशोभितान् अनेकान् श्लोकान्। प्रलये क्षुभितः पयोधिरपि निःशेषाऽऽक्रान्तमहीतलः सन् वेलालङ्घनलक्षणां स्वमर्य्यादां समुज्झति, परन्तु नाकार्षीच्च ग्रामेषु कामप्यमर्य्यादामसङ्ख्यैरवारितैरपि सैन्यैश्चलितोऽसौ निःशेषाऽऽक्रान्तमहीतलः केशवः। ददृशुश्च ग्रामान्तर्गामिनं तमतिमात्रं वृतिभिस्तिरोहिततया सेनासमूहैरलक्षिता एव पटोलीप्रसूनगुच्छसच्छायमुख्यः ग्रामवध्वः। ददर्श च शौरिरसौ सनादं मुहुरुत्प्लवमानान्, मद्यपानरतान्, मण्डलोपविष्टान्, स्वनामसङ्कीर्त्तनप्रवर्त्तितमानसांश्च घोषजनान्; गोपाङ्गनाजनश्च अविदितविलासैरतिविशालैर्लोचनैरसकृदेव तं मुरारिं पश्यन्नपि न ययौ वितृष्णताम्। मुरारिरपि वामपदसंयतवत्सान् रसनया स्वादयन्तीः गा जानुभ्यां दोहनपात्रमवगृह्य क्षीरं दुहतः गोदोहकान्, प्रशस्तां गाञ्च प्रीत्या चिरं निदध्यौ, विलोकयामास च गीतश्रवणाऽऽसक्तानत एव शस्यभक्षणविरतान् मृगसमूहान्। अपाहरच्च मत्तकलहंसकुलानां विलासिनीचरणनूपुररवकोमलं सुमधुरं कूजितं शब्दान्तरतः सौरेर्मानसम्। कतिपये हि पर्व्वताः शिखरैः दूरादागच्छतस्तस्य हरेरतिमहतीं सेनारेणुसंहतिं, तथा नरपतयश्च शिरोभिस्तदाज्ञां सममेव समूहुः। विशालदन्तेन च केनचित् समुन्नतनागेन जनसमागमनमार्गः अचलादप्यधिकतरमरोधि। अन्यैश्च कैश्चित् गजैः विधाय दिशो भग्नद्रुमाः, पिष्ट्वा च बलादचलपृष्ठानि, निजाङ्गैरेव भुवो दुर्गमाः विदधिरे। पार्व्वतीयकिरात-

युवतयश्च शौरिं विस्फारितलोचनैरवलोकयामासुः । मृगेन्द्रवृन्दानि च सकृदवज्ञया चक्षुरुन्मिष्य पुनः सुषुप्सूनि सन्ति समीपगतादपि सैन्यान्नैव कियदपि भीतानि समभवन् । गण्डकण्डूयनकारिणा करिणा च वृक्षस्य स्रस्यमानमधुपटले कम्पिते सति, तैः विदश्यमानजनेन तदा व्यग्रतया पलायितम् । आत्मनः देहान्तरमिव प्लवङ्गमाश्च नागेना-न्तकसन्निभेन विनाशिते सति परिचितपलाशतरौ निवासार्थं वृक्षान्तर-मेवाधिजग्मुः । अतिचक्रमुश्चेत्थं सेनासमूहाः गुरुतरानपि गिरि-प्रदेशान् ।

## जलाशयवर्णनम् ।

समनन्तरञ्च मुरारिसेनाभिरुन्नततटानधिरुह्य कल्लोलिनी काचि-दुपगता, तुरङ्गमखुराऽऽक्षिप्तं हि रजःपटलं तदीयसलिलानि पङ्कता-मनैषीत्, गजपतिभिश्च क्रीड़नार्थं करैरपाकृतानि तत्रत्यशैवलानि । पुनश्च ते भग्नतटैस्तदम्भांसि प्रपूर्य्य, पुराणनदीः स्थलसमाः कृत्वा, स्वमदोदकैरेव नदीरपराः प्रवर्त्तयामासुः । क्रमेण च मुरारिसेना दूरमतीत्य समतिक्रम्य च भूयांसि पुराणि, जित्वा च समुन्नतपटमण्डपैः पुरगृहाणि, स्वच्छन्दं तदानीं तत्स्थानादगच्छत् । द्वारकाभवनमप-हाय तेषां निर्गमनकाले, मन्ये, वियोगविक्लवा द्वारकानगरश्रीरपि तदानीं तदग्रत एव निरगात् ।

## यमुनाप्राप्तिवर्णनम् ।

सौगन्धिकमारुतैः कम्पिते हि यमुनासलिले सूर्य्यकिरणपरितप्तं सैनिकैरूर्द्ध्वमुत्क्षिप्तञ्च राशीभूतं रजः पुरः पपात । सा हि उष्णांशु-तनयाऽपि शीतलसलिला, यमस्वसाऽपि जनजीवनविधायिनी, कृष्णवर्णाऽपि पापविनाशपटीयसी ; आगमादनुमानं चेत् बलीयः-प्रमाणं, तदा जलधिजलानां नीलतया सा खलु यमुनैव नूनं जलधि-मपूरयत्, न जाह्नवी ; जाह्नवीपूरणोक्तिस्तु सर्व्वथैवायुक्तिकेति प्रति-भाति । क्षणमसौ तमालतरुवदतिकृष्णवर्णा हि यमुना भुवमाक्रमितु-

मुद्युक्तस्य सेनासमुद्रस्य वेलेव शुशुभे ; समनन्तरमेव तैरुभयतः लोलैः पादैरिव केनिपातकदण्डैर्वेगेन गच्छन्तीभिर्नौभिरसौ सरित् यमुना प्रतीर्णा। करिणस्तुरङ्गमादयश्च गम्भीरजलान्यवगाह्य सहेलं तां यमुनामतरन्। एवं मुरारिसैन्यं सपदि यमुनां तीर्त्त्वा यथाऽभीष्टमगमत्।

इति द्वादशः सर्गः।

---

## त्रयोदशसर्गः

प्रथमं यादवपाण्डवयोः मिलनवर्णनम्।

अथ हरेर्निजनगरप्रस्थानात् प्रभृति प्रतिक्षणं निखिलदैनन्दिनवृत्तान्तवेत्ता हि धर्म्मनन्दनो युधिष्ठिरः यमुनाऽतिक्रमणेन तत्समागमनश्रवणादतिहृष्टः सन् सानुजः कृष्णाभिमुखमेव निर्ययौ। शौरिसमागमसन्तोषादतिबहुलदुन्दुभिताड़नेन श्रवणेन्द्रियाणां बधिरीभावात् तदा कण्ठोक्तवक्तव्यावशिष्टं वक्तॄणां हस्तसङ्केतमन्तरेण संवदितुमशक्यमेवाऽऽसीत्। परिवर्त्तितकनकचक्रान्ता हि रथा गजाश्वादयश्च क्रमेण द्रुततरमधावन्। परस्परप्रेमवशाद्धि तदानीं तदुभयसैन्यमेकतामेवागमत्, मदमूढ़बुद्धिभिः विषाणिभिः केवलं मिथो रुरुधे। शौरिसन्दर्शनमालक्ष्य दूरादेव हर्षातिशयेन स्यन्दनादवतरितुमिच्छतो धर्म्मनन्दनस्यावतरणात् पूर्वमेवासौ मुरारिस्त्वराविशेषेण विनयं दर्शयितुमवततार, प्रणनाम च भूमिविलुठितस्थूलहारयष्टिना शरीरेणासौ भुवनैर्नतोऽपि विहिताऽऽत्मगौरवः ज्यायांसं पितृस्वस्रीयं तम्। शौरिं शिरसा भूतलस्पर्शनात् प्रागेवासौ क्षितिपः समुत्थाप्य अनपेक्षितक्रमं यथा तथा भुजाभ्यामाश्लिक्षत्, पारिजातकुसुमसुरभिकेशे शिरसि च विनयनम्रं तं काममजिघ्रत्।

ततः प्रहृष्टमानसोऽसौ सर्वजनसम्भावनार्हः मुरारिः परमप्रीतिवशात् भीमादीनपि भूमिभृतोऽनुजन्मनः तत्कालोचितमभ्यनन्दयत्। नरपतयश्चापरे तत्र युगपदागत्य तुल्यमहसः भूपतीनपरान् परस्परं

बाहुभिरालिङ्गन्; परिरेभिरे च इभकुम्भस्तुङ्गस्तन्यः परस्परं तत्रोपगताः हर्षपुलकितगण्डस्थला यादवपाण्डवानामङ्गनाः। सङ्गतञ्च रथवाजिकरिणीसमाकुलं तदुभयसैन्यमन्योन्यं, केवलं तेषु पृथगवस्थापिताः पुंसां गजेन्द्राणां राजयः; महान्तो हि भवन्ति चिराय सर्वलोकविलक्षणस्वभावाः। शौरिरसौ युधिष्ठिरेण "अधिरुह्यताम्" इत्युदितः, जिष्णुना च दत्तहस्तः, यच्चाधिनाथकरगृहीतो मेघवाहनो मेघमिव स्यन्दनं पुनरशिश्रियत्। तदनन्तरमिन्द्रप्रस्थाभिमुखं प्रचलतश्च तस्य हरेः धर्म्मराजः स्वयमेव सारथ्यं, भीमसेनश्चामरग्रहणं, जिष्णुश्चाऽऽतपत्रधारणं हर्षप्रकर्षात् यथायथमकरोत्, चक्रतुश्च नकुलसहदेवौ तत्परिचर्य्यार्थं पृष्ठोपसर्पणम्। इत्थं सन्निहिततया परस्परमेकतामुपगते यमुनाजाह्नवीप्रवाहयोरिव तत्सैन्ययोर्द्वये मङ्गलदुन्दुभिध्वनिरतितरामेव समभवत्। ततोऽसौ मुरारिर्मखमीक्षितुमुपागतानां हि भूपतीनां सैनिकैर्बहिर्निर्म्मितं सेनानिवासमवेक्ष्य, प्रतिपक्षसैन्यवेष्टितमिव स्थितं मयदानवकृतमपूर्वमिन्द्रप्रस्थं ददर्श, प्रविवेश च विरचितनवगोपुरं तत्पुरं क्रमेण इन्द्रियैरिव पञ्चपाण्डवैः सह सुखेन।

## योषितां हरिदर्शनवर्णनम्।

अनन्तरं पौररमण्यः खलु दुन्दुभिध्वानैः कृताऽऽह्वाना इव अवश्यविधेयान्यपि कार्य्यान्तराणि तुच्छतयैव परिहृत्य सत्वराः सत्यः मुरारिमीक्षितुं प्रतिरथ्यमुपाययुः। तदा तु हरिदिदृक्षया कनकहर्म्यगवाक्षे प्रकाशमानं रमणीनामाननारविन्दम् उदयाद्रिगुहामध्यगतमिन्दुमण्डलमिव रराज। ताः खलु पौरयोषितः करयुग्मपद्ममुकुलापवर्ज्जितैः प्रतिगृहमाचारलाजैः शुक्तिकोशसमुत्थमुक्ताफलैरिव मुरजितं तमवाकिरन्; तासाञ्च रमणीनां तदा माधवोऽसौ सर्वथा प्रीतिप्रद एव बभूव। तत्र काचन रमणी मदविकारवशादसमग्रेणैकेन नयनेन सतृष्णं कृष्णं दृष्टवती, नृत्यन्मयूरकलशङ्कस्वना च काचन कामिनी कण्डविनोदव्याजेन तदभिमुखमङ्गुल्यग्रेण एककर्णरन्ध्रमताड़यत्। अपरा च काचित् परप्रकाशनभयात् किमपि स्फुटम-

व्याहरन्ती रक्ताब्जपत्ररुचिरेण चलदङ्गुलिपाणिना, शिरःकम्पनेन च तमामन्त्रयामास। अन्या च रमणी स्वभावसुन्दरं स्वकीयमाननमेकेन पाणिना नलिनान्तिकस्थितपल्लवशोभतां तिरोधाय, समुज्ज्वलाङ्गुलीनानन्तरालविनिर्गतां दशनप्रभां प्रकाश्य च व्यजृम्भत। शौरिसन्दर्शनेन विस्मयाऽऽदरस्तिमितनयना च काचित् रसातिरेकात् स्रंसमानं वसनं वलयघटितनीलमणिप्रभापटलरचितरोमराजिना करपल्लवेन जग्राह। नितम्बिनी च काचिदच्युतगमनेन खिन्नमानसा सती, अच्युतगतं मनः प्रतिपालयन्तीव शून्यतां गता, अत एव स्वगृहगमनेऽप्यनादरवती चित्रलिखितेव क्षणं निस्पन्दमतिष्ठत्। अपरा च काचिदायतेक्षणा अतिमात्रं माधवरूपसुधापाननिर्भरैः मदालसैः शरीरैः शनैः शनैः स्वगृहं प्रतस्थे।

### हरेः सभाप्राप्तिवर्णनम्।

ततोऽसौ शौरिः पूर्वं गन्धवासितोदकैर्विरजीकृताः, कृतागुरुधूपधूमरेणुविभ्रमाः, स्तम्भेषु विलम्बमानपताकासुशोभिताः पुरवीथिकाः अतिक्रम्य, खाण्डवदाहे वह्निदाहाद्विमोचितेन मयनाम्ना असुरेण प्रत्युपकारार्थं, पूर्वम् आत्मनैव बिन्दुसरसि गुप्तेन वृषपर्वगृहनिर्म्माणावशिष्टेन मणिशिलाकलापेन विनिर्म्मितां तां सभां सपदि प्रापत्।

### सभावर्णनम्।

संसदि च तस्यां रजनीषु कलधौतधौतशिलानाम् अभ्रंलिहां भवनानां प्रभायां प्रतिफलन् हि हिमांशुः पुनः क्षणं क्षीरसागरगर्भवासमिव लेभे। सदसः नीलमणिकिरणहरितवर्णीकृतमध्याः पद्मरागनिर्म्मिताः गृहभूमयः शैवलविहीना रक्तवर्णा आप इव सदा शुशुभिरे। तत्रत्याश्च जनाः सम्मुखावस्थितान्यपि स्फटिकभवनानि चन्द्रिकारुचैकतां गतानि चन्द्रिकाभ्रमादतिक्रम्य, पुनः तमसीव करपरामर्शविज्ञातानि तानि कथञ्चिदाप्नुवन्। अपश्यंश्च ते मरकतमणिमयगृहेषु तृणाऽऽशया

मुहुः नमिताऽऽननान् रसनाऽग्रलग्ननीलकिरणाङ्कुरान् गृहीतबालतृणग्रासानिवावस्थितान् हरिणान् । समीपगता अपि चन्द्रांशवः प्रभूतैरिन्द्रनीलमणिकिरणैस्तिरोहिता एवाभवन् । यस्याश्च प्राङ्गणप्रदेशाः भुजगशिरोजरत्नसन्निधानादुदितमेघध्वनिभिर्नववैदूर्य्यप्ररोहयुक्ता आसन् ; यस्याञ्च नलिनीदलच्छन्नतया जलमयप्रदेशेऽपि स्थलभ्रमात् सुयोधने अधःपतति सति, तदवलोक्य भीमसेनस्य तदानीमुच्चैर्हासः क्षुभिताखिलक्षितिपालानां क्षयहेतुरभवत् । तदुपान्तिकेषु च महीधरमूलजलाऽऽधारवारिषु प्रतिबिम्बिता हि वृक्षश्रेणयः सपत्रसन्ततिं मूलसंहतिं दधाना इव विरेजुः । अपि च यस्यां स्फुरदसिश्यामकान्तौ इन्द्रनीलमणिमयप्रदेशे तदानीमागन्तुकजनैः जलभ्रान्त्या नितम्बादुद्धृतं वसनं, पूर्वमेव स्थलमिति जानतां जनानां नितरामुपहासायैव सञ्जातम् ।

## हरेः सभास्थलप्रवेशः ।

अथ शौरिरसौ सभाऽभिमुखं स्यन्दनादवतीर्य्य अत्यादरात् "इत इत आगम्यताम्" इत्यभिदधाने सति युधिष्ठिरे, अदृश्यरत्नभित्तिकं शुभ्रमणिप्रभापुञ्जालक्षितद्वारं तत् सदः प्रविष्टवान् ; प्रविश्य च तदुच्चैस्तरं हिरण्येष्टकारचितं नृपसदनमवलोक्य तत्र सिंहासने समुपविवेश । तदागमनप्रमोदादानन्दिते हि तस्मिन् कुरुकुले नर्त्तकीजनो मधुरसङ्गीतपुरःसरमुज्ज्वलं नृत्यमकरोत् ; समादिदेश च महीपतिस्तदानीमुत्सवव्यापारम् । सकलनामप्रपञ्चाभिज्ञश्चासौ मुरारिः कुमारमारभ्य निखिलबन्धुजनानां प्रत्येकशो नामग्राहमनामयमपृच्छत् । ततश्च शौरियुधिष्ठिरौ मर्त्त्यलोकदुर्लभं प्राप्तरसोत्कर्षमतिबहुलं सङ्कथाऽमृतं स्वादितवन्तौ ।

इति त्रयोदशः सर्गः ।

---

## चतुर्दशसर्गः

### कृष्णं प्रति युधिष्ठिरोक्तिवर्णनम्।

अथ यज्ञानुष्ठाननिविष्टचेता हि साधुवादी युधिष्ठिरो दृष्टिविकाशा-देव प्रकटितप्रेमा सन् वाक्यकोविदवरेण्यं तं श्रीकृष्णं वक्ष्यमाणोक्तं वचनजातमुवाच,—"हे स्तोत्रयोग्य! केनचिदसत्यमपि प्रियमुक्तः त्वदन्यः कोऽपि पुमान् तच्छ्रवणोत्सुक्यादेव न खलु लज्जते, किन्तु वितथवचनप्रयोगेण वक्तुरेवातिमहती त्रपा तदा जायते ; निखिल-गुणशालिनि त्वयि तु न खलु किमप्यसत्यं भवेत्, अतस्त्वां स्तुवन् कोऽपि पुरुषः न लज्जामनुभवति, किन्तु अहो! स्वगुणश्रवणात् त्वमेवात्र प्रत्युत जिह्रेषि। प्रभूतेनापि स्तुतिवचसा जनान्तरवन्नैव त्वं प्रसीदसि, सकलगुणाऽऽधारस्य तव बहुलमपि यथा तथा प्रियं वदन्-प्ययं जनो मृषाभाषणदोषं नैवोपगच्छति। हे विश्वम्भर! त्वत्-प्रसादादेव भारतवर्षमिदं बहुकालं मम वशगतं वर्त्तते, सा हि भवत्-सामर्थ्यातिशयानां भूयसी विभूतिः। हे प्रभो! यज्ञमनुतिष्ठतश्च मम त्वमनुज्ञादानेन अनुग्रहं विधेहि, मूलकारणतामुपगते च त्वयि सर्वथा समर्थोऽहं भविष्यामि धर्म्मार्ज्जने। सम्पादितसाधनेन दोषहीनं यागमनुष्ठातुमभिवाञ्छता हि मया, धान्यराशीन् पुपूषता कृषीबलेन वायुरिव त्वं सदा प्रतीक्षितः एवाऽऽसीः। अधुना तव सन्निधानेन मम यज्ञकर्म्मणा नूनमविघ्नेन भविष्यते, उदिते हि भास्वति न खलु कोऽपि वासरशोभां विहन्तुं शक्नोति। "क्षत्रियस्य विजितम्" इति शास्त्रतः यद्वित्तं समुपार्ज्य यत्नेन पालितवान्, "पालितं वर्द्धये-न्नित्यम्" इति स्मरणात् प्रापितवांश्च तत् वृद्धिम्। तच्च वित्तं "वृद्धं पात्रेषु निर्वपेत्" इति शास्त्रात् सम्प्रति सत्पात्रसात् करिष्यामि ; तच्च पात्रं त्वमेव, अतः सर्वमेव भुङ्क्ष्व, अहमग्नौ च जुहवानि ; अथवा हे कृष्ण! त्वमेव प्रथमं यजस्व, ततः त्वयि सोमपायिनि, यज्ञे स्नातवति च, मया वाञ्छितराजसूयाऽऽख्ययागयाजिना भविष्यते। अथवा

त्वदनुग्रहलब्धया धनसम्पदा किमनुष्ठेयं, तत् त्वयैव विधीयतां, जगत्त्रय-शासकस्त्वं मामपि शिक्षय, सानुजोऽहं भवतो वचने स्थित एवास्मि"।

युधिष्ठिरं प्रति कृष्णोक्तिवर्णनम्।

अथ भगवान् शौरिः पूर्वोक्तं वदन्तं महीपतिं, सभास्थनृप-समूहान् श्रावयन्, वक्ष्यमाणोक्तं वचनजातं व्याजहार,—"मदनुभाव-मन्तरेणापि त्वं निजनीतिमहिम्नैव निखिलराजमण्डलं विजितवान्; यदि हितपथ्यभुगारोग्यं लभते, न तत्र भिषजः कोऽपि गुणोऽस्ति; ततो विजयप्रजारक्षणादिगुणयोगात् सुक्षत्रिये सुराज्ञि त्वयि पुरःस्थिते, त्वदन्यः कः पुमान् क्षत्रियचिह्नं राजसूयं यज्ञं यजतु? आदिवराह-मन्तरेण धरासमुद्धरणे न हि कस्यापि सामर्थ्यमस्ति। अतिदुष्करे-ष्वपि कर्त्तव्यार्थेषु त्वदाज्ञाकरं मां यथेच्छं प्रेषय, मां धनञ्जया-दन्य इति माऽवेहि। इह तव यज्ञानुष्ठाने यो हि भूपतिर्भृत्यवत् कर्म्म न करिष्यति, जगन्मित्रमेतत् मच्चक्रं तस्य शरीरं नूनमेव शिरः-शून्यतां प्रापयिष्यति।" इत्यभिधाय विरते च माधवे "त्वयि क्षेम-ङ्करे सति मम सर्वसम्पत् स्थिरा" इत्युक्त्वा सहायसम्पत्त्या सन्तुष्यन्नसौ नृपः युधिष्ठिरः क्रतुं कर्त्तुमुद्युक्तवान्।

यज्ञवर्णनम्।

ततो होमादिक्रियाः स्वयमननुतिष्ठतोऽपि तस्य, ऋत्विजि ताः कुर्वति च सति, ममेदमित्यनुसन्धानादेव क्रियाऽनुष्ठातृत्वमभवत्। तत्र यजनव्यापारवन्तो हि मीमांसाशास्त्रज्ञाः ऋत्विजः "अनूच्यया याज्यया जुहोति" इति श्रुतेरनुवाक्यया मन्त्रवर्णैनोच्चैः प्रकाशितामिन्द्रादि-देवतामपदिश्य "याज्यया जुहोति" इति श्रुतेः होतृपाठ्यया यागाङ्ग-साधनीभूतया ऋचा सोमादिकं हविरग्नावत्यजन्। तत्र च साम-वित् उद्गाता कश्चित् करविन्यासभेदादिभिर्व्यञ्जितनिषादादिसप्तस्वरं रमणीयं बृहद्रथन्तरादिकं साम अस्खलितम् उदगायत्; होत्रध्वर्या-

दयो विद्वांसश्च "अग्निमीले" इत्यादिकं श्रेयस्करं शोभनमृग्यजुषमध्यगीषत। ते च "गार्हपत्यमूर्द्धज्ञमासीनां पत्नीं सन्नह्य तिष्ठन्तीं वाचयतीत्येके, मौञ्जेन दाम्नाऽन्यतरतः पाशेन योक्त्रेण च" इत्यापस्तम्बवचनात बद्धदर्भविकाररशनागुणया यजमानजायया दृष्टानि आज्यादीनि प्रणयनादिभिः संस्कृते अग्नौ जुहुवुः। तथा अन्यथा श्रुतस्य शब्दस्य अन्यथा लिङ्गवचनादिभेदेन विपरिणामनरूपे ऊहे कुशलाः ऋत्विजः विभक्तिभिर्लिङ्गैश्च मन्त्रं विपर्य्यणीनमन्। तत्र क्रतौ मन्त्रपूतमाज्यादिकं भुञ्जानस्य शिखिनो गन्धमाघ्राय सर्वप्राणिनः पापमुक्ताश्च समभवन्। होमक्षणे एवोद्गच्छन् धूमराशिश्च दिशो धूम्रयन् क्रमेणान्तरीक्षं प्राप्नोत्; पावकश्च तत्र वषट्कृतं विशुद्धं प्रभूतञ्च हविरास्वादयत।

इन्द्रशत्रुरित्यत्र षष्ठीसमासस्य इष्टत्वे वृत्रस्य इन्द्रहन्तृत्वम्, इन्द्रः शत्रुः शातयिता यस्येति बहुव्रीहौ च तस्य इन्द्रकर्त्तृकबध्यत्वमिति फलभेददर्शनात्, शब्दशास्त्राभिज्ञाश्च ऋत्विजः तत्र क्रतौ सन्दिग्धसमासवत्प्रयोगविषये समासान्तरेण विपरीतार्थकतया, क्रियाया विरुद्धफलमाकलयन्तः तत्तत्स्वरविशेषवशेन विग्रहन्तत्र निश्चिक्युः। तत्र च अग्नौ दीयमानं हविरमृतमिव नाकिनः रसोत्कर्षादादन्। क्रतौ च तस्मिन् क्वचिदपि कर्म्मणि लोपविषयविपर्य्यासादिदोषं नागमन्; समपादि च सर्वं साधनम्; ऋत्विजामुत्तरोत्तरप्रयोगविज्ञानानि नरपतेः समृद्धयश्च परस्परमतिशयितवत्य एवाभवन्।

## युधिष्ठिरस्य दानवर्णनम्।

अनन्तरञ्च क्षितिपतिरसौ पङ्क्तिपावनं तथाविधम् ऋत्विग्वर्गं पङ्क्त्यनुसारेण सदसि प्राप्य, यथाविहिता दक्षिणाश्च तेभ्यो दत्त्वा, तत्र मखवेद्यां तान् प्रतिग्राहयंश्च पवित्र एवाभवत्। अभिषेकसंस्कारैः शुद्धेषु द्विजक्षेत्रेषु च भावि महत् फलं बिभ्रन्ति धनान्यसौ बीजवदेव वारिपूर्वकमवपत्। तेऽपि द्विजातयः निरेनसस्तस्मादतिपवित्रं प्रतिग्रहं प्राप्य अतितरां पूता एवाभवन्। देवेन्द्रसमानशासनोऽसौ

महीपतिः दत्तस्वहस्तलेखाङ्कितशासनः सन् आकल्पमेव भूयसीर्भुवो विप्रसादकृत, अष्टणोच्च दानकाले तेषां द्विजन्मनां गुणराशीन् गोष्ठीश्च, अकृत च अनिवारितातिथिरसौ नृपः यज्ञदर्शनार्थमागतानां हृष्टचेतसामग्रजन्मनां यथायथमतिथिसत्कारम्। अपरे भूयांसः नरपतयश्च अन्विष्यमाणमपि दुर्लभं, महासारभूतं रत्नमुपायनार्थं स्वयमुपनीय तत्सेवाऽवसरं प्रतीक्षमाणाः सन्तः बहिरेव समासत। एकनृपदत्तमेवोपायनं यज्ञसम्पूरकमिति तदा जनैरतर्क्यत, किन्तु दानशीले हि तस्मिन् नरपतौ निखिलराजदत्तान्यपि धनानि व्ययमेव ययुः। ददतश्च तस्य राज्ञः युधिष्ठिरस्य तथा तदुपायनानामर्थिसात्करणादेव परमा प्रीतिरभवत्, न तु कोषे संरक्षणात्; यथा तत्प्रियचिकीर्षवो नृपा प्रतिपादितैरुपहारैर्मुदमागमन्, न खलु वेश्मनि निहितैरिति। अजातशत्रुरसौ लघुन्यपि कर्म्मणि शिष्यतुल्यं यं नृपमशिषत्, स एव सगौरवं, तदन्यैरनादिष्टनृपैः "अहो! सम्मानम्" इत्यभिधाय सस्पृहमेव ददृशेतराम्। ततश्चासौ प्रीतः नरपतिः आदिवराहमूर्त्तिरिव पूर्वं विजयोद्धृतेभ्यश्च नरपतिभ्यः महीं दत्त्वा स्वेषु स्वेषु पदेषु पुनरपि स्थापयामास। प्रार्थितश्चायमकृतकालक्षेप एव याचकं मुहुरनादरेण नावलोक्य प्रभूतमेवाददात्, दत्त्वा च नाकरोदात्मश्लाघाम्; नानुतप्तवांश्च स्वप्रियमपि वस्तु दत्त्वा याचकेभ्यः, चकार च गुणहीनानपि पूर्णमनोरथान्। दानशीलश्चासौ सर्वपात्रदानकौतुकतया, स्वयं गुणप्रियः गुणज्ञश्च भवन्नपि याचकेषु अयं गुण्ययमगुणी इति न खलु गणयामास।

तत्र च दर्शनानन्तरमेव यथेच्छधनलाभात् "दीयताम्" इति पदं, याचकानां "मह्यं दीयताम्" इति पदे स्थितिमलब्ध्वा प्रार्थनार्थशून्यं सत् "अस्मै दीयताम्" इति वाच्यार्थे केवलमवर्त्तत। तां सभामुपेयुषा धनार्थिना केनापि धनमप्राप्य नैव प्रत्यावर्त्ति; रोगिणा च रोगोपशमनमकृत्वा न प्रत्यागामि, भोक्तुमिच्छता च भोजनमकृत्वा न खलु प्रतिययै। तत्र च हिङ्गुमरीचादिना

कृतसंस्कारैः प्रकृतिमधुरैश्च नानाविधैः भावशुद्धिसहितैरकृतपात्रसङ्करैश्च भोजनैः मधुरादिकं रसं स्वादयन् भोक्तृजनः अतितरामेव मुदमवाप। तदाऽसौ महीपतिरित्थं राजसूययज्ञे दुष्टदमनसमर्थं केशवं विघ्नविहन्तारं निधाय यथायथं दानहोमयजनानि सम्पादयामास।

भीष्मोक्तिवर्णनम्।

इत्थं विस्तृतानुष्ठाने सति यज्ञकर्म्मणि धर्म्मात्मजेन धर्म्मशास्त्रमनुस्मृत्य सदस्यपूजामुद्दिश्य "कस्मै देयमिदमर्घम्" इति पृष्टः शान्तनुनन्दनः सभ्यमेव वचनमभिहितवान्,—"कर्त्तव्यार्थेषु परोपदेशमन्तरेण सर्वमेव विजानतोऽपि तव यत् गुरून् प्रति प्रश्नकरणं, तत् केवलं सदाचारपरिपाटीसंरक्षणार्थमेव; सत्यप्येवं मया प्रश्नस्योत्तरमवश्यमेव दातव्यम्; अत उच्यते, वृद्धा हि स्नातकरूपं गृहस्थविशेषं, पित्रादिकम्, इष्टबन्धुं, याजकं, जामातरं, राजानञ्च षड़ेतान् अर्घभाजः कीर्त्तयन्ति, ते च षड़पि युगपदेव तव सभामुपागताः। हे पृथापुत्र! अमी पूर्वोक्ताः षड़पि पृथक् पृथक् प्रत्येकमकपटं सत्कारमर्हन्ति; अथवा एतेषु अतिगुणवानेक एव पूज्य इत्यपि शास्त्रानुष्ठानं वृद्धैरिष्यते। एवञ्च अत्र निखिलभूदेवनरदेवसमवाये सर्वगुणाऽऽधारः असुरनिहन्ता भगवान् श्रीकृष्ण एव पूजामर्हति, एतदेव मे मतम्। भवानेनं मनुष्यमात्रं न जानीयात्, यतोऽयं हि सर्वलोकातीतस्य सर्वभूतकृतस्थितेः परमात्मनोऽंशः, योगिनामुपास्यः, स्तुत्यः, अवाङ्मनसगोचरश्च भवति। एष एक एव भगवान् रजोगुणाऽऽश्रयेण जगत् स्रष्टा ब्रह्मा, सत्त्वगुणेन पालयन् विष्णुः, तमोगुणेन च जगत् संहरन् हर इति गुणत्रयेण त्रिविधं समाख्यानं भजते। सन्तो हि सर्वविदमनादिनिधनं भूभारावतारणार्थं मानुषशरीरधारिणममुं परमपुरुषं विदन्ति। अस्मिंश्च भक्तवत्सले अनुरागवन्तो हि जना निरन्तरस्मरणेन पापमुक्ताः सन्तः संसारदुःखमपहाय अमृतत्वमश्नुवते। मोक्षार्थिनश्च निर्वाणमोक्षलाभाय ध्यानमार्गनिविष्टचेतसः ध्येयमद्वितीयमेन-

मेव अपुनरावृत्तये निरन्तरं ध्यायन्ति। निखिलप्राणिनां कारणतां विनाशहेतुताञ्च दधते सर्वव्यापिने स्वयमविनाशिने कूर्म्मरूपेण भुवं बिभ्रते परमात्मने तस्मै नमः। अयञ्च कर्त्तृवाचिनां सृजति-संहरति-शास्ति-धातूनां केवलं कर्त्तैव भवति, कदाचिदपि कर्म्मणि वाच्ये नैव तेषां कर्म्म भवितुमर्हति; प्रत्युत स्तुधातोश्च केवलमसौ कर्म्मणि, न च कदाचित् अयं कर्त्तरि प्रयुज्यते; यतो ह्ययं जगदिदं स्वयमेव सृजति संहरति शास्ति च, न चासौ कमपि स्तौति, स्तूयते चायं सर्व्वैरेवेति विशेषः ज्ञेयः।

एष हि प्रथममपः ससर्ज्ज, तासु च स्वमनिवार्य्यं वीर्य्यं निदधे, तच्च हिरण्मयाण्डं जातं, तदुत्पन्नो ब्रह्मा च ब्रह्माण्डमिदमसृजत्। पुरा मधुकैटभौ सिन्धुशयने मत्कुणाविव निद्रासुखविघ्नकारिणौ असुरौ चानेन नाशितौ। ज्ञानवन्तो हि हरिममुं सत्यव्रतमपि मायाविनं, जगद्वृद्धमपि परिचितयोगनिद्रं बालकं, जातमप्यजं, नवमपि पुराण-पुरुषं कथयन्ति। अयं हरिस्तु पुरा वराहमूर्त्तिं परिगृह्य स्कन्धस्य धूननेन सटाक्षेपात् सागरसलिलान्यपसार्य्य वसुन्धरामुदद्धरत्; दिव्यसिंहमूर्त्तिं परिगृह्य च इन्द्रस्याऽऽयुधशतैरपि दुर्भेदं दुर्ज्जयरण-व्यसनिनो हिरण्यकशिपोः वक्षःस्थलं कोमलैः नखैरभिनत्। सर्व्व-ज्येष्ठोऽपि स्वीकृतवामनरूपोऽसौ ज्योतिर्विजितमार्त्तण्डस्य विरोचना-ऽऽत्मजस्य बलिराजस्य विध्वंसञ्च विदधे।

परशुरामत्वमुपागतश्चायं सहस्रभुजं कार्त्तवीर्य्यार्जुनं निहतवान्। पुनरसौ प्रजाः संरक्षितुमेव दाशरथिभूयं प्राप्य दशाननं निहत्य पुरीं लङ्काम् अधिकविभीषणाम् अकृत। सम्प्रति स एव ब्रह्मणा प्रार्थितः सन् देवराजरिपुविनाशनाय वसुदेवरूपिणः कश्यपस्य पुत्रतां श्रयति। सुरौघैः बलवैश्चासौ सुरौघवल्लभो जगत्पतिः 'हे तात! त्वामपहाय वयं उदधिविलोड़नं दधिविलोड़नञ्च कर्त्तुं नैव समुत्सहामहे' इत्यादिकं वचनजातं सप्रणयं जगदे। यश्च देवराजस्य पारिजात-मपाहरत्, यमवलोक्य च चैदिपस्य तृतीयलोचनं चण्डमारुतमासाद्य

प्रदीपवत् निरवात्; यश्च वराहस्वरूपं बलवत्वञ्च लब्ध्वा जलधौ वर्षासु च निमग्नं पृथिवीमण्डलं धेनुवृन्दञ्च उददीधरत्; यश्च दूरादपि यागकारिभिः सततमेव क्रतुषु पूज्यते, सोऽयमच्युतः याजिनस्तव समक्ष एव सम्प्रति वर्त्तते, निखिलजगति त्वमत एव धन्योऽसि, अलभवते भगवते विष्णवे पूजोपकल्पितमर्घं समर्प्य सर्व्वजनेषु धन्यवादमवाप्नुहि"।

इति चतुर्दशः सर्गः।

---

## पञ्चदशसर्गः

### कृष्णार्च्चने चैद्यस्य रोषवर्णनम्।

अथ शिशुपालः सदसि पाण्डुपुत्रकृतं श्रीकृष्णार्च्चनं सोढ़मक्षमः, पूर्व्वमेव तं प्रति सञ्जातकोपश्च पूजया पुनरनयाऽतिमात्रमेव मन्युमभजत; अहङ्कारिणां मनः सततमेव परशुभद्वेषि भवति। क्रोधाऽऽधिक्यात् सकलमेव नृपकुलमसौ अभितर्ज्जयन्निव नितरां प्रकम्पितजगत्त्रयं शिरः अकम्पयत्। कठिनांसमण्डलेन क्षणं स्तम्भमाहत्य, सरोषभ्रूभङ्गेण ललाटञ्च तेनातिमात्रमेव भीषणं विदधे। ततश्च निर्भीकोऽसौ निशितामसिलतां सखीमिव अवलम्ब्य सभां ध्वनयन् रोषवशाद्दह्यमाणोक्तं वचो वक्तुमुपचक्रमे।

### चैद्यस्य युधिष्ठिराद्यधिक्षेपवर्णनम्।

"हे पार्थ! त्वं प्रेमवशादेव प्रियजने गुणवत्तामारोपयन् सदसि सद्भिरपूज्यमानमपि कृष्णमिह प्रकाममेव पूजितवान्; विद्यमानेष्वपि प्रधाननरेन्द्रवृन्देषु निखिलराजगुणविरहितेऽप्यस्मिन् यत् राजार्हमर्पितमिदमर्घं, तत् निखिलभूपालक्रोधानलेषु प्रज्वलत्सु, श्वा हविरिव नूनं नैवायं प्राप्तुमर्हति। सत्यवादीति जगति पटहैः प्रकाशयन्नपि त्वम् एतेन अपूज्यपूजाकर्म्मणैव स्वस्य केवलं सत्यहीनतामेव प्रकाशयसि। वस्तुतो धर्म्महीनस्यापि ते धर्म्मराज इति नाम तु

निखिलकार्य्येष्वशुभस्य भौमदिनस्य मङ्गलव्यपदेशवदेवेति मन्यामहे। हे कौन्तेयाः! एष शौरिरेव यदि भवतां प्रागेव पूज्यतया अभिमत आसीत्, तदा एते नरपतयः अवमाननार्थं कथमत्र समाहूताः? मूर्खा यूयं यदतिदुर्बोधाऽऽचारं धर्म्ममिमं नैव जानीत, न तदाश्चर्य्यं, किन्तु यदयं वृथा वृद्धतमोऽपि नष्टमतिः भीष्मः तं न सम्यगवगच्छति, तदेव चित्रम्। हे भीष्म! त्वं स्वयमेव स्नातकादीन् यानर्घार्हान् अवोचः, तेषामयं मुररिपुः कतमः भवति? यं हि त्वं प्रगल्भवैतालिकवत् वृथा अभिष्टुषे। समुन्नतं राजकुलमपहाय नीचे निरततया एव त्वं सत्यमेव निम्नगासुत इति स्फुटं भवसि। हे कृष्ण! तव राजार्हपूजास्वीकारश्च नैव खलु युज्यते; अहं राजा न वेति स्वरूपपर्य्यालोचनमवश्यमेव त्वया करणीयम्, अनात्मवेदिता तु जनानां नूनमापदामेव निदानं भवति। मधुनामकदैत्यविनाशनन्तु कथमपि त्वयि न सम्भाव्यते, तथाऽपि धूर्त्तस्वभावतया दण्डेन त्वं मक्षिकासूदनं विधाय मधुसूदन इति नाम्ना प्रसिद्धोऽसि। हे बलहीन! कालयवनविद्रावितस्त्वं मुचुकुन्दशय्याऽऽश्रयेण रक्षितोऽपि, मगधपतिना जरासन्धेन चाष्टादशकृत्वः पराभूतोऽपि केवलं बलभद्रसाहचर्य्यात् सबल इति ख्यातिं युक्ततया अधिगच्छसि, न तु कुत्रापि स्वबलप्रदर्शनात्। वञ्चनाकुशलस्त्वमसत्येन लोकान् वञ्चयमानोऽपि नग्नजितः राज्ञः सुतया सत्यया प्रीतिमनुभवन्, तस्याश्च योगादिष्टसत्य इति सत्यमेव सम्यक् प्रतीयसे। समरे निरन्तरं परसेनानिगृहीतं चकितं चक्रापराऽऽख्यं स्वसैन्यं रक्षितुमसमर्थोऽपि त्वमयोविकारचक्रधारणादेव चक्रधर इति ख्यातिं प्राप्तवान्। ययातिशापात् यदूनां राज्यानधिकारित्वादेव यदुवंशसम्भूतः त्वं सर्व्वथा राजश्रिया विरहितोऽपि श्रीनाम्नीं कन्यामुद्वाह्य श्रीपतिरिति ख्यातिं लब्धवान्। युद्धे कदाचिदपि पराक्रमं नैव प्रदर्शयन् केवलं व्योम्नि कथञ्चित् पादक्षेपं कृत्वा जगति विक्रमीति प्रसिद्धिमगाः। पूर्व्वं भूमिं भृतवांश्चेत्, तदा भूमिभृदिति संज्ञा कथञ्चित् गुणाय वर्त्तते, परन्तु परहारितभूमि-

कस्यापि ते तदाख्यानं कथं सञ्जातं, तन्न जाने। हे पापाचार! सदा अशुभकर्म्मनिरतस्त्वं निरयं जेतुमशक्यतया नरकविजयीति निरर्थकं प्रसिद्धेः प्राप्तये नरकनामानमसुरं जितवान्। हे निर्गुण! सर्व्वगुणविरहितस्य तव गुणालयत्यागप्रयासः व्यर्थ एव। हे असमीक्ष्य-कारिन्! गुणहीने त्वयि इदं पूजनञ्च अपगतकेशे शिरसि कङ्कतिकेव जगति परिहासजनकतया नैव सङ्गतम्।

राज्ञः प्रति चेदिपतेरभिभाषणम्।

हे राजानः! पृथापुत्रैः सिंहानिव युष्माननादृत्य वनशुनकस्येव कृष्णस्य यदित्थं पूजनं कृतं, तत्तु पूजनं भवतां नूनमेव परिभवहेतुः। यदयं पापी चाण्डाल इव वृषभरूपिणमरिष्टासुरं हतवान्, तदा अशुचिशरीरोऽसौ स्पर्शमपि नार्हति, तेन हि स्पर्शायोग्यः गोघ्नः राजो-चितामपचितिं कथमसौ लभेत? पूतनाया विनाशे स्त्रीति कृपा यद्यप्यस्य निर्घृणमनसः नाभूत्, तथाऽपि तदीयस्तन्यपानादुपमातरि तस्यां मातेति चिन्ताऽपि किमस्य न जाता? न केवलमसौ स्त्रीहन्ता, मातृहन्ताऽप्ययं भवति महापापी। चपलमतेरस्य हरेः शकटासुर-मर्द्दनयमलार्ज्जुनभञ्जनगोवर्द्धनधारणादिकं कर्म्म धीरचेतसां न खलु भवति विस्मयकारकम्; किन्तु कंसस्य पशूनवन् लोकवेदविगीतं दुष्करस्वामिबधन्तु विधायासौ सर्व्वेषामेव विस्मयं व्यधात्।

अथ प्रक्षिप्तांशः।

हे कौरवनाथ! गुणानामेव पूजास्थानतया सकलगुणवर्ज्जितस्य हरेरर्चनं व्यर्थमेव; अथवा, त्रिगुणातीतस्य हरेः पूजया कश्चिद्गुण-विशेषोऽस्ति। नायं सर्व्वोत्कृष्टः, न च अन्येषां गुणैः समः, निरहङ्कारश्चायं केवलमनभिमानितां दधत् सततं स्वकीयहीनतामेव प्रकटयति। अविदितविदग्धतया च सकलकलारहितोऽयमतीव वालिशः कूपकोपमः सर्वथा पुरवाह्यः, न तु नृपतिसमाजार्हः। अयोग्योऽपि शिशुपालस्याहं स्वजन इति धक्ति, जनैः सविनयमुपासितोऽपि चलचित्ततया

त्रिभुवनस्याप्ययं रिपुरेव। प्रकृष्टज्ञानाभावादयमपकारकमिवोपकारिणं, तथा मूर्खमपि पण्डितं, प्रियमप्यप्रियं सततमेव पश्यति। कदाचिदपि अयम् अतीवाकृतज्ञः उपकारपरान् बहुगुणवतः श्रुतादिसम्पन्नान् प्रधानानपि परान् किञ्चिदपि नोपकुरुते। असमर्थतया स्वयं निष्क्रियोऽयं परकृतेनैव कर्म्मणा जीवितुमिच्छति। सम्पदि विपदि चैतदवलम्बिनः नितरामेव मृततुल्यस्य मूर्खजनस्य कुत एव सुखं भवति? चपलस्वभावतया चायं गुणवतां सान्निध्यं सन्त्यज्य, समाश्रित्य च केवलं मूर्खजनान् सततमेव सुखमनुभवति। निर्व्विवेकः कुटिलहृदयश्चायमविमृष्यकारी वृथैव बन्धुषु आश्रितेषु अनुरागिजनेषु च वैरायमाणः सततं मोदते। चापल्येन च कदाचित् परस्योपकारं कृत्वाऽप्यसौ मोहेन पुनः सर्व्वमेव प्राकृतं सुकृतं सहसैव नाशयति। अविनीतस्वभावतया च परैरयं ताड्यते, अन्यानभिहन्ति च। मूर्खैरेवमुच्यते यत्, असौ महासत्त्वयुक्तः महाधैर्य्यशीलश्चेति, किन्तु गृहीतधनुषि कस्मिंश्चिदपि पौरुषलेशोऽस्य नैव लक्ष्यते। परः पुमानयमेव पुरा वराहरूपं समाश्रित्य जलनिमग्नं पृथिवीमण्डलमुद्धृतवान्, नरसिंहशरीरं परिगृह्य च हिरण्यकशिपुं नखैरदारयदिति च मूर्खतमाः, अस्य आप्तजनाश्च केवलं सत्यतया मन्यन्ते स्वीकुर्वन्ति च। स्वार्थसिद्धिकरणपटुरेवायं योग्यमप्युन्नतं मानमपहाय, नीचवृत्तिमाश्रित्य च बलिना परेण सह संयुज्यते। ऐन्द्रजालिकः कपटी चायं माययैव केवलं युद्धादौ गगनमण्डलमधिरोहति, नास्त्यस्य काऽपि तात्त्विकी शक्तिः, प्रकटयति च केवलं मोहाय जगति नानारूपतां नटपुरुष इव। पुरा अयमेव हरिः दशाननं हतवान् किल, अपि चायं महासत्त्वः समधिकद्युतिः महाबलश्च, इत्यादिकमलीकवचनं बहुतरमेव जनैः स्वपक्षीयैः हृष्टं यथा तथा निःशङ्कमुच्यतां, तेन न किमपि कृतं भवेत्, अलीकवचनस्यान्तस्याभावात्। यदयं पादाभ्यां महतः शकटस्येषत्स्पर्शनमात्रेणैव दधिघृतादिभाण्डानां दलनेन शकटभञ्जनं कृतवान्, तत्त नैव

विश्वास्यं, नूनं तत् दैवसम्पादितं, तेन नास्ति किमपि पौरुषमस्य। जननीव स्नेहं विधाय स्तन्यं ददती पूतना यदनेन स्त्रीति कृपामकृत्वा, जननीति चाविभाव्य हता, तत्तु नैव साधु कृतम्। विहितपृथिवी-गतिश्चायं यदर्ज्जुनाऽऽख्यौ तरुविशेषौ क्षणात् बभञ्ज, शिशुकर्म्मतया नैतदपि सम्भावयामः, नूनमत्रापि कश्चिद्दैवताविधिर्विलसति। नायं मधुनामानं दैत्यं कदाचिदपि विनाश्य जगति मधुसूदन इति नाम प्राप्तवान्। परन्तु गोपरूपेण विजने वने विहरन् मक्षिकापटलं हत्वैव तदाप्तवान्। यदयं गोबधमविगणय्यैव सुरभीः कामयमानं रिष्टमनडुाहं रुषा हत्वा, असुरो दुर्दान्तः मया हतः, न तु गौरिति प्रख्याप्य लोकस्य परिशुध्यति, तत्तु सर्वथा मृषैव, तत्त्वतस्तु अयं गोघ्न एव। केशिनाम्ना असुरेण विकटदशनेन यदस्य भुजो मुखविवरान्तर्गतः न भक्षितः, तत्तु तिरश्चः तस्यैव मूर्खत्वम्। प्रभूतं सलिलं वर्षति सति मेघे, यदयं बाहुमुद्यम्य गोवर्द्धनपर्व्वतं धृतवान्, तदपि गवां पुण्यवत्तयैव सम्पादितम्, इति न चित्रम्। अचलमहोत्सवकृतस्य प्रभूतान्नस्य भक्षणमपि एतस्य औदरिकतया नाऽऽश्चर्य्यम्, औदरिकस्य तु उदरकृते जगत्यपि न काचित् व्यथा भवति। कुवलयापीड़नाम्नो दन्तिनः करेण यत् विशालदन्तमुषलनिखननं, तेन च यत् तस्य हननं, तदपि बलशालिनः नैव विस्मयकारकम्; यतो हि मर्म्मणि हतस्य तस्य गजस्य शिशुनाऽपि हन्तुं शक्यत्वात्। बालोऽसौ यत् चाणूराऽऽख्यं मल्लं निजघान, तदपि दैवविलसितमिति मन्ये, विधिविपाकात् अतिबलीयानपि दुर्बलेन विहन्यते इति दृश्यते। अयुध्यमानस्यापि कंसस्य राज्ञः जनितसुरौघसाध्वसस्य निर्भीकस्य विनाशनन्तु केनापि सुधिया जनेन नाभिनन्द्यते"।

इत्युक्तप्रकारेण मुरारिं निनिन्दिषता शिशुपालेन प्रयुक्तं वचनजातं यद्यपि तस्य भगवतो हरेः स्तुतिरूपमेवाभवत्, तथाऽपि स्तुति-निन्दोभयार्थकस्य तद्वचनस्य असूययैव प्रयुज्यमानत्वात् अपराधगणनामध्ये भगवता श्रीकृष्णेन तत्परिगणितमेवेति।

इति प्रक्षिप्तांशः।

असहिष्णुः शिशुपालस्तु सभायामित्थमतिपरुषां वाचमुदीर्य्य, सपदि दत्त्वा च वेणुदारिणा सह करतालमुच्चैरहसत्। प्रकृतिधीरो माधवस्तु तत्कटूक्तिश्रवणेनापि न कामपि विकृतिमभजत; यतो हि सत्यसन्धं सुजनं कोऽपि तीव्रवचोभिरपि सत्यपथात् चालयितुं नेशते एव। प्रभुचित्तानुवर्त्तिनः यादवास्तु क्रुद्धा अपि तत्सङ्केत-निरुद्धबुद्धितया तदा क्रोधं न प्रकाशयामासुः। गणयामास च केवलं मनसा शतापराधसहनप्रतिज्ञापाशनिबद्धः शौरिः तत्प्रथमं यथा तथा पूर्व्वं मुहुः कृतापराधस्यापि तस्य चैद्यस्यापराधं, यत् एषः कतिथः भवति इति।

### भीष्मप्रत्युक्तिः।

अथ शिशुपालभाषितशौरितिरस्कारेण कलुषितमानसो हि गाङ्गेयः धीरतया "काममयं वृथापलितः" इत्याद्युक्त्या तत्कृतां निजनिन्दामपरिगणयन्नेव प्रलयमारुतक्षुभितपयोधिनिनादगम्भीरेण स्वरेण सदः संक्षोभयन्, "संसदि मया कृतं हरेरर्च्चनं यस्य न सोढ़ं, स समर्थश्चेत् कार्म्मुकमारोपयतु, न्यस्तोऽयं चरणः सर्व्वनरपतीनां शिरसि" इत्यभाषत।

### चैद्यपक्षीयाणां राज्ञां कोपवर्णनम्।

अथ भीष्मभाषितवचनजातमाकलय्य शिशुपालपक्षीयाः हि नरपतयः अतिमात्रमेव क्रोधमभजन्त। तथा हि, श्यामतारकानुमित-ताम्रवर्णनयनं बाणनरपतेः वदनं तदा रुषा अरुणीकृतं परिधि-युक्तं सूर्य्यमण्डलमिव जगतः भयाय उददीपि। द्रुमराजश्च अपरविषद्रुम इव भीषणनयनकुसुमोज्ज्वलः प्रभातार्कारुणविग्रहः क्रोधादभवत्। निरन्तरप्रज्वलद्विरोधाग्निना सारस्यं त्यक्तवता नरकाऽऽत्मजेन वेणुदारिणा उत्तमौजसा च तरुणेव भृशं ज्वलि-तम्। स्वरूपत एव कोपवन्मुखरागः दन्तवक्रनामा नरपतिरपि

उच्चैर्हसितेन वज्राऽऽहताद्रितटध्वनिना क्रोधमसूचयत् । रुक्मिणीहरणेन प्रागेव जातकोपेन रुक्मिणा तु "हा ! कदा इमं स्वसपहर्त्तारं निर्य्यातयामि" इति भृशं चुक्रुधे । सुबलनामा नरपतिश्च रोषवशात् शिथिलीकृतमहीध्रबन्धनं यथा तथा पृथिवीं चरणेनाऽऽहतवान् । कलह--प्रियस्याऽऽहुकिनाम्नः भूपतेश्च सुहृःसहोऽपि कृष्णोत्कर्षः भाविकलहमाकलय्य अधिकां मुदं दधानस्य मोदहेतुरेवाऽऽसीत् । किमपि वक्तुमिच्छतः कालयवनस्य राज्ञः विकृतं मुखमण्डलं भीषणतां प्रापत् । निखिलनृपतिविनाशाय प्रसारितभुजेन वसुराजेन सत्वरं पदं निधातुमिच्छता उत्पतनवेगात् विस्रंसिनि स्वकीये वसने सहसा स्खलितम् ।

ततश्च इत्थं विकृतिमापन्नाः निर्भीकाः तत्रस्थाः चैद्यपक्षीया मेदिनीपतयः मुकुटमणिकिरणैः स्फटिकस्तम्भानुद्भासयन्तः युद्धार्थिनः सन्तः सहसा सदसः समुत्थिताः । अहङ्कारेण तृणीकृतजगत्त्रयसाराश्च ते माधवं धर्म्मराजञ्च तृणसमममन्यन्त, भीष्मादपि च भीताः नाभवन् ।

चैद्योक्तिवर्णनम् ।

अथ अतिक्रुद्धश्च चेदिपतिः सन्तप्तहृदयः सन् विषप्रायमेवं वचनं तदा अभिहितवान् ।—"हे नरपतयः ! एभिः पञ्चभिः जारजैः पाण्डवैः, क्लीबयाङ्गनातुल्येन भीष्मेण च सह किङ्करममुं हरिं किं न मारयत ? अथवा महापराक्रमशालिभिः युष्माभिः किम् ? युद्धे एकाकिनो ममैवायं बध्यः भवत्विति । भीष्मयुधिष्ठिरौ समग्रसभायां यं कृष्णं श्रेष्ठं विदतुः, तेन सह युद्धे परीक्षा भवतु, वृथा वचनेनालम्, अद्यैवाहमेनं हनिष्यामि" । स च इत्थं परुषवचनमभिधाय पार्थैरभिहितां सानुनयां "न गच्छ" इति वाचम् अनादृत्यैव तदानीं सहसा सदसः निर्जगाम ।

प्रयाणवर्णनम् ।

अथ स्वभावधीराः पाण्डवाः अभ्यागतत्वात् पितृष्वसुरात्मजत्वाच्च असह्यापराधत्वेऽपि कृपया चेदिपाय सद्यो बध्याय न तस्मै चुकुपुः ।

यज्ञभूमितः चैद्यप्रस्थानानन्तरं तत्पक्षीया नरपतयश्च समकालमेव तमनुययुः। शिशुपालश्चासौ शिविरं समागत्य, पथि च "किमिदम्" इति जल्पता जनेन क्षणं वीक्षितः निःशङ्कचित्त एव सेनां समनीनहत्। प्रणादं चास्य निरन्तरं मुखरीकृतशैलकटकतटं यथा तथा योधानां रणसन्नाहप्रवर्त्तकः शङ्खः। कल्पान्ततोयदविषमाऽऽरवः चैद्यस्य तस्य रणदुन्दुभिश्च प्रभूतवादकजनैः सपदि आहतः। ततश्च तत्स्थानं प्रचलितज्योतिश्चक्रगगनपमं सहसा व्यग्रतया चलतां जनानां समूहेन समाकुलमभवत्। कश्चित् सखेदेन परिजनेन विलम्बेन कष्टस्दृष्ट्याऽऽनीतं महर्म्म क्रोधभरात् पाणितलद्वयेन चूर्णितवान्। रणाऽऽरम्भहृष्टानां सेनानां कोलाहलेनाऽऽकुलीकृते च गजे मदस्राविणि परिजनः कथञ्चि-त्पर्य्याणमारोपयितुमशकत्। चक्रधाराभिः पांशून् समुत्थाप्य, स्वघोषैः प्राणिनो भाययित्वा च रथाः तीव्रतरमधावन्। महीभृतश्च तदा सार्द्ध-मङ्गनाजनैः रणोत्साहवर्द्धनाय मधुपानमकार्षुः।

## प्रियासङ्गतभटानां चेष्टावर्णनम्।

अथ प्रेयसः पानार्थमुत्क्षिप्तं, वासनार्थं निहितानामब्जानामुपरि-पततां भृङ्गाणां भारेण गुरु, मद्यपूर्णं पानपात्रं कस्याश्चित् राजवध्वाः शिथिलात्करादपतत्। भाविविरहशङ्कया अप्रसन्नदृष्टेः कस्याश्चित् स्त्रियाः मदमन्तरेणापि तत्कार्य्यभूतं कपोलयोररुणत्वमङ्ग-शैथिल्यमसमाप्तं वाक्यञ्च क्षणेन सञ्जातम्। काचिदङ्गना कान्तजयमङ्गलाभिलाषिणी सती तद्गमने कातराऽपि नाश्रूणि मुमोच, किन्तु शोकशिथिलात् करात् भ्रष्टमवनिञ्च यातं कङ्कणञ्च न ज्ञातवती। नवोढ़ा च काचित् प्रवासमिच्छतः प्रियस्य पादयुग्मे नीलोत्पलदामसच्छायं नयनं निगड़मिवाक्षिपत्। प्रेयसि प्रतिष्ठमाने च स्त्रियाश्च कस्याश्चिदमङ्गलभिया सयत्नं धार्य्यमाणमपि नयनात् सलिल-मगलत्। काचिच्च प्रियतमस्याभिमार्गं स्रस्तामलवसना सवेगं यान्ती महोल्कया समं विरराज। वीरपत्न्याश्च अपरस्याः प्रिये समरो-न्मुखे तदनुमरणे कृतसङ्कल्पतया त्रासो न जातः। अन्या च काचि-

दङ्गना पत्युः पुनर्दर्शनमतिदुर्लभमिति जानतीव अनन्यमनाः सती भृशमनिमेषमा दृष्टिपथात् तमपश्यत्। "इदानीमेव अक्षतः सन् युद्धात् पुनः प्रत्यावर्त्तस्व" इति सस्नेहं पत्ये प्रयुक्तः आशीर्व्वादः कस्याश्चित् अश्रुपतनेन नेत्राभ्यां निराकृत इव। काचिदङ्गसंस्कारत्यागात् पांशुभिः कीर्णा भ्रष्टमुखशोभा सञ्जाता। काश्चित् वीतशोभाः उद्भ्रान्तचित्ताश्च सत्यः आत्मनि सन्तापमतितरामेव धारयामासुः। काश्चिदन्याः रमण्यः वातसमूहा इव प्रतिदिशं केमुः। अपराश्च नार्य्यः भूमिसदृशं साध्वससम्भूतं शरीरकम्पमवापुः। पार्थिवानां प्रयाणकाले पुनरित्थं भाव्यशुभमेव केवलं ता नार्य्यः पूर्व्वमसूचयन्।

इति पञ्चदशः सर्गः।

---

## षोड़शसर्ग

### चैद्यदूतोक्तिवर्णनम्।

अथ दमघोषसुतेन शिशुपालेन प्रेषितः प्रतिभावान् कश्चिद्दूतः शौरिमागत्य युगपत् प्रियाप्रियोभयार्थकं वक्ष्यमाणं वच उवाच। तथा हि,—"शिशुपालस्तदा तव तादृशमप्रियमुक्त्वा पश्चात् अनुतप्तः समुत्कण्ठश्च सन् आगत्य भवन्तमनुनेतुमिच्छति; अथवा, तदा तदप्रियमभिधाय दीर्घद्वेषं गतः निर्भीकोऽसौ शिशुपालः सरोषः सन् स्वयमागत्य भवन्तं हन्तुमिच्छति। उत्सुकचेता असौ सुहृदङ्गस्पर्शेन जनिताङ्गसुखं त्वां विशिष्टपुलकितवपुषा प्रगाढ़मालिङ्ग्य नितान्तं मोदमधिगच्छतु; पक्षे तु, मनस्वी चासौ प्रबलमनोवेदनया विगतशरीरसौख्यं त्वां महासमरेण निर्दयं हत्वा मुदं प्राप्नोतु। अपि चासौ चैद्यः सकलनृपतिभिः समं समागत्य प्रणतः तव आज्ञाकरी भविष्यति, यतोऽसौ सम्प्रति त्वदेकपरतन्त्र एव; पक्षे, निखिलनराधिपैः शिरसा नमस्कृतः सः चैद्यः अधुना तव शिक्षां विधास्यति, यतस्त्वमेक एव अस्य शत्रुरवशिष्टः। सूर्य्याग्निसमतेजसः

नियतचित्तस्य सकलजनस्वामिनस्तव सर्वेऽपि भूभृतः प्रणतिं बिभ्रति ; अथवा, अग्नौ शलभस्येव अव्यभिचारे स्वविनाशे हेतुभूतकर्म्मणः सर्वकिङ्करस्य तव न केनापि गुणेन राजानः प्रणतिं बिभ्रति ।

हे कृष्ण ! निर्भीकचेतास्त्वं यतः शत्रुपराभूतजनसमूहान् सततं रक्षसि, तेन सर्व्वोत्कृष्टस्य तव गुणाः अगण्यतां दधति ; अथवा, हे मलिनाऽऽत्मक ! मूढ़बुद्धिस्त्वमवज्ञया अपरैः परिहृतां पशुपालनादि-कर्म्मरूपां नीचतां यतः समाश्रयसि, ततः मनुष्यतो हीनस्य तव गुणाः सर्वेषामेव जनानामनादरणीयतामेव दधति ।

यतस्त्वमधर्म्मभीरुः, अकार्य्यजुगुप्सुश्च, परित्यक्तारिभयः, आस्तिकश्च, विनयी, गर्वहीनश्च, अत एव त्वया सदृशो गुणवान् न खलु कुत्रापि विद्यते ; अथवा, यतस्त्वं शत्रुभीरुः, निर्लज्जश्च, पराक्रमाभावात् प्रणामेनैव विगतारिभयः, नास्तिकश्च, नीतिच्युतः, अहिताऽऽचारः, गर्वितश्च वर्त्तसे, ततस्त्वत्सदृशो निर्गुणः कुत्रापि नास्ति ।

गोपीजनवल्लभस्य, वृषरूपिणः अरिष्टासुरस्य विनाशिनः, निष्पापस्य च तव भीषणे नरकासुरे सम्प्रति पौरुषं निखिलजनैरेव साधु वर्ण्यते ; अथवा, पारदारिकस्य, वृषभघातिनः, पापिनश्च तव उग्रनिरयप्राप्ति-रवश्यम्भाविनी, इति जनैरुद्घोष्यते ।

महीभृता चैद्येन कृतार्च्चनः सभृत्यस्त्वं बलैः निखिलनरपतीनां जनितातिभयः सन् श्रेष्ठी भव ; अथवा, चैद्येन कृतहानिः, शत्रुबलैश्च भीषितः सन् त्वं पर्वतसानुचरो भव । तव नगररथ्याः मेघसमूहसदृशैः, विविधैः नागेन्द्रवृन्दैः परिकीर्णतया दुष्प्रवेशा एव भवन्तु ; अथवा, राज्ञा चैद्येन सह विग्रहात् सर्पसमूहैर्वन्यमृगादिभिश्च परि-व्याप्तास्तव रथ्या अरण्यप्राया भवन्तु। उदारधीरचेतसः तव शत्रुश्च सततमेव विपद्ग्रस्तः, उन्नतिविहीनः, रोगयुक्तः, नीतिरहितश्च भवतु ; अथवा, अमनस्विनस्तव रिपुश्चैद्यः अनिन्दिताऽऽत्मविक्रमः, बिगताऽऽपत्, अच्छिन्नोदयः, उदारबुद्धिर्मनोव्यथारहितश्च भवतु ।

हे यदुश्रेष्ठ ! सन्धिमुपेयुषः तव गृहे शिशुपालेन बन्धौ त्वयि

स्नेहात्, त्वया सह चारुमहोत्पलकृतसौरभं नवमद्यं पास्यते; अथवा, हे यादवबलीवर्द! चैद्येन सह समराभियोगं गतं त्वामुपेन्द्रं मशकसदृशाः भीष्मादयस्तु सुदूरमासतां, सदेवो विकचोत्पलचारुलोचनः वासवोऽपि सौभ्रात्रात् न त्रातुं समर्थः।

हर्षादुपागतस्त्वं पुरस्खलितैः वसुदेवबलभद्रसारणगदादिबन्धुवर्गैः समेतः सन् सभायां तं चैद्यं सम्भावयितुमर्हसि; अथवा, समरे वेगादुपागतः ससैन्यः कौमोदकीसहितः पुरस्खलितपटहभेरीप्रभृतिकः त्वं युद्धेन सहसा तं चैद्यमभियोक्तुमर्हसि।

अतिशूरेण शिशुपालेन सह ऐक्यं प्राप्नुवन् त्वं सर्वयादवैः सह सम्प्रति शिशुपालभयनिवृत्तेः विश्वस्तविलासिनीजनो भव; अथवा, रिपुघातिना शिशुपालेन सह युद्धेषु सङ्गत्य सम्प्रत्येव सर्वसात्वतैः सह विगतधवविलासिनीजनो भव।

महीपतिरसौ चैद्यः मुदितः सन् मैत्रीकरणात् विगतक्रोधं, महीपति-पूजितं, जितानेकयुद्धं सहर्षं त्वामग्रे पश्यतु; अथवा, महीपतिरसौ असकृज्जितं संयतं, त्यक्तक्रोधं, शिशुपालादीनामरिं, सस्त्रीकं त्वामसकृदीक्षताम्” इति।

सात्यकिवचनवर्णनम्।

अथ शौरिणा “अस्योत्तरं देहि” इति भ्रूसंज्ञया प्रेरितः सात्यकिः, प्रागुक्तां गामभिधाय तूष्णीमवस्थितं तं दूतं युक्तिमत् वक्ष्यमाणं वचनजातमुवाच,—“वाग्मिना त्वया वहिः मधुरम् अन्तश्च परुषं वचनं तथाऽभिहितं, यथा द्व्यर्थतया वहिरप्रियमन्तश्च प्रियमिव तदवधार्य्यते। प्रकाशमधुरमन्तरा च परुषमर्थं सूचयतः ईदृशात् पुरुषात्, अशुभशकुनात् मार्गवर्त्तिभिरिव निखिलैरेव पुरुषैरुद्विजितव्यम्। स खलु युधिष्ठिरः साधुजनपूजितं मुरजितं यदि वा पूजितवान्, तेन भवदधिपस्य चेदिपस्य मत्सरो निरर्थक एव, न हि सुरभिणः कुसुमस्य शिरसि न्यसनाय कश्चिदप्यसूयति। स्वहृदयस्य सङ्कीर्णत्वादेव तद्गतमप्रियं लघीयांसः खलु सहसैव प्रकाशयन्ति, स्वभावधीरतया च

तथाविधमप्रियं कथञ्चित् सम्भाव्यमानमपि न हि समुद्गिरन्ति कदाचिदपि मनीषिणः। यद्यपि स्वभावत एव सर्वेषामुपकारकाः सज्जनाः भवन्ति, तथाऽपि तेषां समुत्कर्षो हि लघुचेतसामसतामतितरामेव हृदयसन्तापकरो भवति। न खलूत्तमप्रकृतयः कदाचिदपि परोत्कर्षदर्शनेन दुःखलेशमप्यनुभवन्ति; मध्यमप्रकृतयश्च परोन्नतिभिः परितप्ता अपि सपदि परशुभद्वेषं न हि वचसा प्रकाशयन्ति। अधमास्तु सन्तप्ताः परोत्कर्षमसहमानाः स्वहृदयस्थितं परशुभद्वेषं नैव सहसा निह्नोतुं समर्था भवन्ति, किन्तु सर्वथा प्रकाशयन्त्येव। सदसद्विचारकुशलो हि जनः सन्तापकारिणीं फलहीनां दुष्टां खलतां गगनलतिकामिव कथमपि नावलम्बते। प्रतिकर्त्तुं समर्थोऽपि केशवः तथा क्रोशते चैद्याय अवज्ञया एव तद्वचनस्य प्रत्युत्तरं नैव दत्तवान्, यतः केशरी घनगर्ज्जितमाकर्णयन्नेव प्रतिगर्ज्जति, गोमायुरवश्रवणेन तु तूष्णीं तिष्ठति। सुधियस्तु स्वगुणैनैव रोषप्रसरमवरुन्धन्ति, लघुर्जनस्तु तमवरोद्धुमशक्नुवन् क्रोधेन नूनं जितो भवति; तथाविधस्य दुर्म्मतेः पण्डितैः समं विरोधिताऽपि नैव युज्यते। भौमैः रजोभिः समाच्छादितस्य मणेः महार्घता यथा न नश्यत्येव, तथा न हि निष्ठुरैः दुर्ज्जनानां वचनैः महतां गौरवं कथमपि व्यपोहति। यस्य च परतोषकरः स्वकीयः कश्चिदपि गुणो न हि वर्त्तते, तुच्छोऽसौ जनः परदोषभाषणैः केवलं स्वजनन्तोषयितुमिच्छति। खलास्तु महत्यपि स्वदोषे जात्यन्धाः इव तिष्ठन्ति, सूक्ष्मस्यापि परदोषस्य दर्शने तु अप्रतिहतदृष्टयः, आत्मप्रशंसायाञ्च प्रगल्भवाचः, परस्तुतौ पुनः मौनव्रतिनः भवन्ति।

आर्य्यचेतसस्तु स्फुटान्यपि परदूषणानि चिराय संवरीतुं, स्वगुणांश्च अप्रकटयितुं महत् कौशलमाश्रयन्ति; स्वत एव सर्वलोकेषु विश्रुतम् आत्मगुणं किमर्थं ते महीयांसः प्रकाशयितुमभिलाषिणो भवेयुः? लघीयांसः खलु स्वगुणप्रकाशकस्य वक्त्रन्तरस्यासद्भावात् किल स्वयमेव सर्व्वत्र अत्यल्पमपि तं बहुकृत्वा प्रलपन्ति। सत्पुरुषा हि निजश्लाघामकुर्व्वन्त एव क्रूरसर्पवत् यथाकाले पराक्रमं प्रकटयन्ति, वाक्यमात्रशूराः

दुरात्मानस्तु केवलं पटहा इव स्वेषामन्तःसारशून्यतां ख्यापयन्ति। भवदधिपश्चेदिपः सन्धिना विग्रहेण वा येन केनाप्युपायेन नरकासुरस्याप्यन्तकमेनं श्रीकृष्णं वीक्षितुमिच्छति, तदनुरूपं स्नेहं विरोधं वा विधातुमसौ शीघ्रमेव यतिष्यते।

शिशुपालोऽसौ शौरिणा सन्धातुमिच्छति चेत्, तदा किमर्थं सन्नद्धवान्? पराभवभिया हरिरिवासौ हरिः कथमपि नम्रतां बिभृयात्, इति सर्वथैवासम्भव एव। आसन्नविनाशत्वाद्विपरीतबुद्धिर्जनस्तु बलेन महानुभावान् विलङ्घयन् स्वापराधेनैव विनश्यति, प्रदीप्तार्चिः वह्निर्हि स्वेच्छया शलभान् नैव दहति, किन्तु तैरेव निजौद्धत्यात् तत्र निपत्य दह्यते एवेति। इतः पूर्वमसौ चेदिपतिः निजाऽऽननेन यदपराधशतं नापूरयत्, अद्य सम्प्रति दूतमुखेन तत् आगसां शतं पूरयित्वा शार्ङ्गिणः शतापराधसहनप्रतिज्ञाभङ्गभयमपि दूरीकृतवान्। वाच्यावाच्यविवेकशून्यस्त्वमितः परं यदप्रियं वक्ष्यसि, तदप्रियोक्तिर्हि चिरात् प्रभृति प्रतिज्ञाप्रतीक्षणरुद्धमस्माकं रोषं नूनमेव सपदि उद्घाटयिष्यति"।

## चैद्यदूतस्य प्रत्युक्तिवर्णनम्।

ततश्च शिशुपालप्रेषितोऽसौ वचोहरः सत्यवचसः सात्यकेः तदूर्जितं वाक्यं निशम्य भयविरहित एव पुनरपि तादृशमेव वचनजातमभिहितवान्;—"बुद्धिशून्यः पामरजनो हि यत् परोपदेशमन्तरेण निजहितं नावगच्छति, तत्तु युक्तमेव, किन्तु परैरुपदिष्टमपि निजहितं यन्न विजानाति, एतदेव महदद्भुतम्। सुबुद्धयः खलु स्वयं स्वधियैव भाव्यनर्थमवगच्छन्ति, आप्तजनोपदेशं वा गृह्णन्ति; मूढबुद्धयस्तु आप्तोपदेशं न शृण्वन्ति, न वा स्वयं किञ्चिदपि जानन्ति, ते तु अनुभवमन्तरेण किमपि नावधारयितुं शक्नुवन्ति। हे कृष्ण! मया यदेतदभिहितं, तत्तु तुभ्यमेव कुशलम्; प्रबलविरोधादात्मविनाशहेतुभूतकर्म्मणि प्रवृत्तेषु रिपुष्वपि कृपालुतयैव हितमुप-

दिशन्ति साधवः। युगपन्मया सान्त्वमसान्त्वञ्च दर्शितं, त्वन्तु स्वधिया विमृष्य त्वरया यत् शुभोदर्कं, तद्विधास्यसि। अथवा, रविरागिषु कमलाऽऽकरेषु सितांशोः करजालमिव दुराग्रहग्रस्तहृदयेषु युष्मासु हितोपदेशवचनमपि नः निरर्थकतामेव व्रजति। त्वत्सदृशो हि पृथग्जनो गुणदोषावविमृश्य स्वनिश्चयादेव स्वाभिलाषमनुसरति. तेन हि मूर्खाग्रणी युधिष्ठिरः स्वमूर्खतयैव सदसि चेदिपति-मपहाय त्वामर्चितवान्। त्वयि प्रेमवता पार्थेन नार्चितोऽपि चेदि-पतिः पूज्य एव, मांसगृध्नुना मृगाधिपेन परित्यक्तोऽपि करिकुम्भजो मणिः न हि निन्द्यतामेति। समर्थोऽप्यसौ चैद्यः भीष्मकाऽऽत्मजाऽपहा-रिणि त्वयि यत् चक्षाम, तया पुनः एकया क्षमया शतापराधसहिष्णु-मपि त्वामतिक्रान्तवानेव। शैलूषवद्बहुरूपधारिणः कोकिलपक्षकान्ते-स्ते, तमसः अंशुमानिवासौ सम्प्रत्याहन्ता। त्वयि क्रुद्धस्य तस्य, मम शान्तोपदेशोऽपि निष्फलः, प्रलयक्षुभितस्य वारिधेः जगत्कृतौ जल-निर्गममार्गः उपकाराय न हि प्रभवति। अहञ्च युद्धाय यादवानाह्वातुं तेन महीभृता चैद्येन प्रेषितः, महावीरास्तु शत्रुषु पाटच्चरा इव कपटा-न्नापकुर्व्वन्ति। तस्मादसौ भूपतिः अनिवारितः पयःप्रवाह इव समराय समुपैति। हे माधव! सम्प्रति वेतसतामाश्रित्य आत्मानं रक्ष, महावृक्ष इव मा भज्यस्व। शिशुपालसंज्ञया केवलमसौ शिशूनेव पालयति, इत्यपि मा विश्वसीः; रक्षणक्षमः क्षमावानसौ शरणागतान् यूनोऽपि शत्रून् रक्षति। स्वार्थनिष्ठाः शत्रवः महतः अप्रियमशङ्कमेव कुर्व्वन्ति, परन्तु महामतिरसौ कुपितोऽपि प्रणति-मात्रकेण निखिलानेव जनाननुग्रहीष्यति। आप्तजनादाकर्णितं परिणामहितमप्रियं जिघृक्षसि चेत्, तदा त्वं तेन सह सन्धेहि, असत्यैः प्रियैर्यदि तुष्यसि, तदा जयतु, जीव, अवनीश्वरश्च भव। अनेकरिपुहन्ताऽपि भवान् युधि शिशुपालेन ध्रुवमेव विजेष्यते, निखिलतमोऽपहमपि तपनं राहुनामधेयं तमः खलु ग्रसते। अचिरादेव जितमीनकेतनः वृष्णिगणनमस्कृतः क्षयितान्धको विलसन्नसौ क्षितिपः

भस्मीकृतमदनस्य महोक्षाऽऽरूढस्य प्रमथगणैश्च नमस्कृतस्य क्षयिता-न्धकासुरस्य हरस्य लीलामनुकरिष्यति। असौ तु नृपतिः निहत-दुष्टकुञ्जरात् क्रमेण भूरि यशो धारयतश्च हरेरपि नैव बिभेति सिंहसदृशात्, का गणनाऽस्य यादवेषु मेषकल्पेषु? शत्रवो हि भिया यदस्य मुखं समरेषु न पश्यन्ति, न तदद्भुतं, परन्तु सोऽपि भयात् पलायमानानां विद्विषां पृष्ठमेव वीक्षते, न जातु वदनम्। अनिशमेव रणरेणुमलिनम् अस्य च चरणयुगलं रिपुरमणीनामश्रुभिः क्षालितं सत् चन्दनसारसदृशैः प्रणतनृपतिमुकुटमणिरश्मिभिर्विलिप्यते। सुहृदश्च प्रीतिप्रदतया राजानममुं शीतरश्मिमेव कलयन्ति, रिपवश्च सन्तापदायकतया तपनमेव मन्यन्ते, यथा हि एकामेव रज्जुम् ऐन्द्रजालिकैर्जनितदृष्टिविपर्य्यया एके जनाः स्रजम्, अपरे च भुजगं पश्यन्ति। अत्यन्तविस्मितपौरुषस्यास्य द्वेषिरूपं किमपि नास्ति, यतः अत्यक्तनीतिपथोऽयं पूर्वं कैरपि क्षयमगमितं द्विषतां कुलं सपद्येव क्षयं नयति। यदि च कश्चित् गर्वेण दुर्व्विनीतः नृपतिः स्वशिरस्तत्पादगतं कर्त्तुं नाभिलषति, तदाऽसौ विगर्वः शिशुपालः तदीयशिरसि स्वचरणमेव निधत्ते। यथा भवान् परैरपर्य्यासितं शोभनं सुदर्शनं चक्रं धारयति, श्रिया समालिङ्गितश्च भवति, तथा सोऽपि शत्रुभिरनास्कन्दितं शोभनं राष्ट्रं भुनक्ति; राजलक्ष्म्या च समाश्लिष्यते, नास्त्यत्र ईषदपि वैषम्यं युवयोः शब्दतः अर्थतश्च; किन्तु अयमेव युवयोः विशेषो यत्, त्वं पुनरिन्द्रानुजत्वात् इन्द्रानुचर एव, स तु देवराज-विजयी इति। महानसौ नृपतिः प्रावृषिजः सरित्प्रवाहस्तटतरुभि-रिव राजसमूहैः निरन्तरमेव क्रीड़ति, तथा कुकुरान्धकद्रुमांश्च दववद्दहन्नपि यत् पृथिवीमकृष्णां करिष्यति, एतदेवातिचित्रम्। अस्य च नृपतेराज्ञा परिमिताक्षराऽपि भूयिष्ठार्था परिभाषेव कुत्रापि न प्रतिहन्यते। विष्णुर्वराहमूर्त्तिं परिगृह्य यामेव भुवमादौ मुहूर्त्तमात्रं धृतवान्, असौ पुनस्तामविकृतदेह एव चिरं बिभर्ति। गुणराशयः शौर्य्यराशयश्चास्य दिगन्तविश्रान्ताः सञ्जाताः। रिपुस्त्रियश्चास्य नित्यमेव

सम्पदि आपदि च नवचन्दनविच्छित्त्यादिभिः समविभूषणाः अभवन्।

विपुलैश्वर्य्यश्चासौ नरपतिः समरे सद्यो भवन्तं हत्वा रुदतां भवदङ्गनागणानां कृपाऽऽविष्टचेताः शिशूनां पालनेन निजां शिशुपालसंज्ञामन्वर्थामेव विधास्यति"।

इति षोड़शः सर्गः।

---

## सप्तदशसर्गः

### सभाक्षोभवर्णनम्।

अथ वाग्मिप्रवरेण दूतेन इत्थमुदीरितेन वचनजातेन, कल्पान्तोद्धतमहावायुना महार्णव इव सपदि तत्सदःचैलमतीव क्षुभितमभवत्। गदनामा कृष्णानुजश्च अतिरोषात् स्वांसप्रदेशं पाणितलाऽऽस्फालितं विधाय, क्षणेनैव केयूरं विभज्य, शकलीकृताङ्गदगलितपद्मरागमणिभिः स्फुलिङ्गवान् कोपपावक इव बभौ। बलभद्रश्च स्वभावशुभ्रं स्वकीयं शरीरं रुषा अरुणरागेण रञ्जितमपि, अनादरेण उच्चैर्हसन् समन्ततः प्रसरतां दशनांशुमण्डलानां प्रभाभिः स्वीयं धावल्यमेव पुनरनयत्। उल्मुकनामा नरपतिश्च क्रोधात् दूताभिमुखं व्यावर्त्तत, तद्व्यावर्त्तनेन च सपदि तत्सभा ब्रूहता शिलातलकठिनेनांसेन भ्रमितेवाभवत्। युधाजितो नाम्नः नरपतेश्च मुखमतिरोषवशात् श्वासानिलाऽऽहतिभिरुत्तप्तैः सूक्ष्मवसनाञ्चलवातैरतितरां वीज्यमानमपि सस्वेदमभवत्। निषधराजश्च साक्षाद्दक्षाध्वरविध्वंसी वीरभद्र इव अप्रतीकारः विद्विषां बधाय च समुद्युक्तः क्रोधादजायत। तथा सुधन्वाऽऽहुकि-मन्मथ-पृथु-गान्दिनीसुताक्रूर-प्रसेनजिच्छिनि-सारण-विदूरथप्रभृतयो भूभृतश्च क्रमेण स्वस्वहृदयगतमतिभूमिङ्गतं क्रोधलक्षणं वहिःप्रकाशितमकार्षुः। वर्षोदकसदृशैः रिपुवचनैस्तथा क्षोभितेऽपि निम्नगाप्राये सदसि, शौरिहृदयं सागरसलिलमिव नैव क्षोभमगमत्। उद्धवश्च परनिन्दा-

प्रकटनं स्वकीयस्तुतिख्यापनञ्च खलानां प्रकृतिरिति जानन्नविस्मितः सन्नेव शरदिन्दुसुन्दरं स्मेरमाननं कामपि विकृतिं नैव प्रापयामास।

### सन्नहनवर्णनम्।

ततश्च तत्र सदसि इत्थम् अतिक्रुद्धैर्यदुभिः धिक्कृते रिपूणां चरे गच्छति च सति स्वनितभीषणपटहं मुरारिसैन्यं युद्धाय क्षणात् समनह्यत्। वीरनरपतयो रणोत्सुक्यात् गजरथतुरगं ससज्जं कर्त्तुं तदधिकृतपुरुषान् स्वत एव त्वरायुक्तानपि तदानीं पौनःपुन्येन कृतत्वरानकुर्व्वन्।

अथ स्वभावसुन्दरमूर्त्तिरपि समरे भीमदर्शनोऽसौ शौरिर्मनोहरैः शार्ङ्गादिभिरायुधैः शोभितः सन् स्यन्दनमारुरोह, पतत्पतिश्च तदैव केतने पदं निदधे। रथप्रस्थानादनन्तरञ्च आच्छादितदिगन्तरं प्रचलितं तद्बलं विलोक्य जनः प्रक्रान्तजगत्संप्लवे वारिधिवारिण्यपि अतितरामेव विगतकौतूहलः बभूव। गजानां बृंहणैरश्वानां ह्रेषणैः महाऽऽनकानाञ्च ध्वनिभिर्गगनन्तदा विदारितमिवाभवत्। सुरवारललनाश्च श्रुतसमरतूर्य्यनिःस्वनाः समरहतान् ग्रहीतुमभीप्सवः अतिमोहनं प्रसाधनमकुर्वत। सैन्यानामतिबहुलतया च प्रतिष्ठमानेष्वपि तेषु सेनानिवेशभूमिः रिक्ततां नैवागमत्। प्रतिपक्षचमूगणाश्च शौरिसेनानां पटहरवमाकर्ण्य बध्व इव आनन्दविह्वला रोमाञ्चितशरीराश्च जाताः। क्रमेण दूरात् प्रतिपक्षसैन्यैरलक्ष्यत ध्वजावलिः।

ततश्च निम्नोन्नतेष्वपि देशेषु तुल्यसञ्चरणक्षमः सेनासमूहः क्षणादेव भूतलं व्यानशे। कुक्षोदरस्थितजगत्त्रयस्य मधुघातिनः अस्य विशाले लोचने क्षणमात्रविलोकनादेव तदतिमहदप्यसुरसैन्यम् अत्यल्पमिव अकिञ्चित्करत्वेन ममौ। चैद्यपक्षाश्च अनुकूलवायुप्रसारितध्वजांशुकैः कृताऽऽह्वानाः इव यादवान् प्रति द्रुततरमुत्क्षिप्तायुधाः सन्तः क्रोधेन त्वरां प्रपेदिरे। हरिसैन्यान्यपि रिपुसेनासमूहान् प्रति अतिवेगेन प्रवव्रतिरे, यतो हि मनस्विनः खलु युयुत्सून् शत्रूनवेक्ष्य विलम्बितुं नैव क्षमाः भवन्ति। नरपतयश्च तदा रणाजिरे वपुषि निहिते-

रच्छिद्रकञ्चुकैः स्फुरद्रत्नप्रसृतमरीचिसूचिभिः निरन्तरशरनिकरप्रोता इव विरेजिरे। बलोत्थापितः क्षितितलरेणुश्च खं व्याप्नुवन् क्वचित् नवाभ्रपटलवत् कर्बुरः, क्वचित् कनकचूर्णराशिकपिशः, क्वचित् शारदशशधरधवलः समन्तात् उज्जगाम। अतिभीषणे रणकर्म्मणि सर्वत्र प्रवर्त्तमाने वियति महीभृतां पराक्रमं कौतुकादवलोकयितुमागतैः त्रिदशैः अनिमिषलोचनेषु रणरेणुभिः विव्यथितेषु सत्सु पलाय्यत। अत्यन्तविशालाः शैलोपमा गजपतयः मदाम्बुवर्षणात् क्रमेण पांशून् शान्तिं निन्युः।

इति सप्तदशः सर्गः।

---

## अष्टादशसर्गे

### सैनयोर्मेलनवर्णनम्।

अथ युद्धादनिवर्त्तिनौ गम्भीरघोषौ तौ सेनासागरौ एकस्मिन् स्थाने सह्यविन्ध्यपर्वताविव सङ्गतौ अभवताम्। ततश्च पदातिः पादचारिणं, वाजी वाहं, नागो नागं, रथस्थश्च रथचारिणं भेजे। तदानीं सर्वगतो हि रणभेरीणां महाघोषः रथध्वनिभिः गजबृंहणैः वाजिह्रेषणैश्च मेलनमधिगच्छन् "अयं दुन्दुभिघोषः" इति दुर्भेदो बभूव। गजाश्वरथञ्च अतितीव्रं प्रतस्थे। ध्वजस्तम्भानामुन्नताः पताकाश्च चारुतरं शोभन्ते स्म ; धनुर्धारिभिश्च कर्कशपीवरोन्नतानि वर्त्तुलानि च धनूंषि पाटवशिक्षार्थमनिशं पाणिभिरास्फाल्यन्ते स्म, निषादिभिश्च कुञ्जरशिरांसि उत्साहार्थमताड्यन्त।

### युद्धवर्णनम्।

आयुधजीविनश्च अभ्यासपाटवं दर्शयन्तः अस्त्रमहास्त्रादिकभेदाच्चातुर्विध्यं प्राप्तैरायुधैः प्राहरन्। रोषपारवश्यात् कौचित् योधौ वेगेन मिथः प्रत्यासन्नौ अस्त्राणि परित्यज्य परस्परं पाणिं गृहीत्वा मुष्टिभिर्घ्नन्तौ बाहुयुद्धे व्यासक्तवन्तौ बभूवतुः।

अभिमानवन्तश्च केचन योद्धारः युद्धस्याग्रिमप्रदेशमाक्रम्य युद्ध-समानुष्यं कृत्वा च शीघ्रमेव सुरभवनमगमन्। अपरेऽपि वीरा युद्धविपणिमासाद्य परिमितैरस्थिरैश्च प्राणैरेव मूल्यैर्द्यावापृथिवीपरिव्याप्तानि अपरिमेयाणि चिरस्थिराणि च यशांसि स्वीचक्रुः। स्वनामाऽऽख्याने सङ्कोचवतां हि मानिनां शौर्य्यश्रीयुक्तानि नामानि तत्र समरशिरसि श्रावयामासुश्च बन्दिनः। तत्र मिश्रीभूते सति तावदुभयपक्षीये सेनासमूहे प्रायेणायमेव धर्म्मः व्यक्तमासीत् यत्, पराङ्मुखवर्त्तिनः रिपवोऽपि नैव बध्याः, विनष्टाश्च सम्मुखवर्त्तिनः स्वजना अपि आसन्निति। शुद्धाऽऽकरत्वेन गौरवात् कामं संयता कस्यचिदसिलता परेण वञ्चयित्वा हस्तं नीता सती हिंसां विदधे। लौहमयेन बाणविशेषेण नासां भित्त्वा वक्षसि प्रहृतः कश्चिदश्वश्च शिक्षावशाद्गाढ़पाशबद्ध इव मुख-माक्रष्टुं नाशकत्। ततश्च दूरतो मदगन्धमाघ्राय प्रतिगजं जिघांसुः कश्चिन्नागः विधूतमस्तकः सन् यन्तारमवधूय घोरध्वनिपुरःसरमुच्चै-राक्रोशति स्म। प्रत्यासन्ने च प्रतिगजे सादिनिरस्तमुखपटोऽपि नागः क्रोधान्धतया पुरतः किमपि नापश्यत्। अपरे गजाश्च परस्परं कटादिमदस्थानानि कराग्रैरास्पृशन्तः भुग्नीकृतपुच्छदेशा उन्नतमस्तकाश्च सन्तः कृतदशनशब्दं सन्निपत्य अपरान्तैः सह प्रायुध्यन्त। क्रुद्धहृदयश्च कश्चिद्दन्ती अग्रपादेन जङ्घामाक्रम्य जङ्घामपरामुन्नतकराग्रेण समा-कर्षयन् कञ्चिद्वीरं मध्यं विभज्य पाटयामास। स्वसैन्ये भङ्गभाजि सत्यपि शलीरभिमुखं गच्छन्तं कञ्चित् सेनानायकं प्रतिपक्षीयाः रिपवः समकालमुक्तशरनिकरैः, विमानचारिणश्च दिव्यमालाप्रदानेन, तथा द्वयेऽपि "साधु साधु" इति वाक्यैश्च निरन्तरमेव अवाकिरन्। शरप्रहारनिपातिताऽऽरोहतया च शून्याऽऽस्तरणानां, परसैनिकैरत एवावरुध्यमानानां केषाञ्चिन्नागानां कदम्बकैः कथञ्चित् प्रति-कूलभूतमपि बन्धनस्थानं संस्मृतम्। कश्चिद्वीरश्च प्रबलप्रहारेण मोह-मुपेत्य हस्तिनः शीतलपुष्करशीकरसिक्ततया लब्धसंज्ञः सञ्जातः, मूर्च्छितं तं नेतुमागता सुरसुन्दरी तु तदुज्जीवनात् विफलमनोरथा

सती सुमूर्च्छ। सायकच्छिन्नकण्ठदेशतया आकाशं प्रति उत्पतिष्णोः राहुसदृशात् भीषणाऽऽकृतेः कस्यचिद्वीरस्य मुखात् सुरगणिकाभिरलस्यत। काचिदमरललना च तूर्णमेव युद्धे मृतं कश्चिद्वीरं गाढ़माश्लिष्य रन्तुं मेरोः कुञ्जं जगाम, यावत् वियोगासहा तत्पत्नी अग्नौ सद्यः देहं त्यक्त्वा मेरुगह्वरमेव न प्रविवेश। करिणीमारूढ़ा च काचित् साध्वी रमणी समरे मृतं वीरं पतिं समीक्ष्य प्रेम्णा तत्क्षणात् गतप्राणा सतीत्वादेव अक्षयं देवत्वं प्राप्य तमेव समालिङ्गितवती। कश्चित् युद्धे प्रहारमूर्च्छितो हि वीरः समनन्तरमेव संज्ञां लब्ध्वा, रणक्षेत्रादपनेतृ उच्चैः क्रोशत् निजमनाट्टत्य पुनरपि युद्धाय व्यावर्त्तिष्ट, त्यक्तवांश्च तत्रैव देहम्; हितानर्थिषु सुहृज्जनानुरोधस्तु भवति विफल एव। शस्त्रप्रहारमूर्च्छितांश्च कुलीनान् हन्तुमुत्सुकं स्ववर्गं निवारयन्तः केचन वीराः अतिपरिक्षतरक्षणस्य शास्त्रीयतया जीवग्राहं ग्राहयामासुः, तथा हि, योग्येन जनेन कस्य हि जनस्य कीर्त्त्यादिप्रयोजनं न स्यात्? भग्नदण्डतया च भूमावुत्तानपतितानि पूर्णेन्दुप्रभाणि श्वेताऽऽतपत्राणि यमराजभोजनार्थं विहितानि राजतभाजनानीव रेजुः। मृतनरपतीनाञ्च वक्षःस्थलात् पतिताः कुङ्कुमारुणिताः मुक्ताहाराः, सकलराजकक्षयात् सफलमनोरथस्य पीतरक्ताऽऽसवस्य यमस्याट्टहासात् दृश्यानि दशनानीव रेजिरे। प्राक् भार्गवेण एकविंशतिवारान् क्षत्रियास्रैः समन्तपञ्चकाऽऽख्यं ह्रदपञ्चकमेव बहुकालेन कथञ्चित् कृतम्, अधुना तु रक्ताम्भोभिः क्षणमात्रेणैव असंख्याः नद्यः प्रावहन्। पक्षिणश्चाऽऽमिषभक्षणार्थं युद्धमृतानामुपरिष्टात् आकाशे, दारुणशस्त्रप्रहारपरित्यक्तदेहाः पूर्वाभिमानात् पुनः कायप्रवेशापेक्षिणश्च मूर्त्ताः प्राणा इव नूनमारात् बभ्रमुः। गोमायवश्च मृतानां तेजस्विनां तेषां वीराणां तीव्रतरं यदेव तेजः शरीरेण सममभक्षयन्, मुखोल्काच्छलात् तदेव अन्तर्गतं तेजः उद्वमन्तः उच्चैः शब्दमकुर्व्वन्। मांसलोलुपैः कङ्कटश्वादिभिश्च वसाभक्षणलोभात् भ्रान्त्या दारितानि तूर्य्याणां मुखानि, गजतुरगादीन् प्रकाममुपभुञ्जानस्य कृतान्तस्याऽऽननानीव बभुः। प्राणहीनैः

प्राणिनामवयवराशिभिश्च तदानीं तत् युद्धस्थलमतिमात्रमेव समाकीर्णं भवत्, किञ्चिदसमाप्तसृष्टैः, तथा अर्द्धसृष्टैश्चाऽऽकारैराकीर्णा विधातुः सृष्टिकर्म्मान्तशाला इव रराज। इत्थमविच्छिन्नवेगेन समायान्तीनामतिप्रगल्भभाजां राजन्यसेनानामतिमहद्भिः शौरिसैन्यैः समभापगानां पयोधिप्रवाहैरिव कृतगुरुतरध्वानमनियतजयपराजययुद्धं मुहुर्मुहुरभवत्।

इति अष्टादशः सर्गः।

---

## एकोनविंशसर्गे

### द्वन्द्वयुद्धवर्णनम्।

अथैवं तुमुलयुद्धानन्तरं रणाटवीषु रिपुवेणुविनाशकेन वेणुदारिणा राज्ञा नृपपादपसमूहसङ्घर्षात् वह्निरिवोत्तस्थे। विक्रमवान् बलभद्रस्तु दूरादागच्छन्तममुं वेणुदारिणं, सिंहो गजमिव तदानीमालोकयामास। युद्धाभिसरणाय निर्घोषभीषणं रथमारूढश्चासौ बलभद्रः रथगत्या भूकम्पं कुर्व्वन्निव द्रुतमधावत्। परस्परमतिमात्रं युद्धं कुर्व्वतोश्च तयोः सतोः, रामेषुपातात् मोहमुपागतं मन्दप्रतापं वेणुदारिणं सारथिः शीघ्रमपसारितवान्। शिनेः सेना च शाल्वसैन्यं जित्वा उच्चैर्जगर्ज्ज। दिक्षु प्रभावं प्रकिरता उल्मुकाऽऽख्येन भागवतेन राज्ञा द्रुमराजं प्राप्य प्रजज्वले। उद्यताऽऽयुधः रुक्मी प्रथमं यथैव वाचा पृथुं निनिन्द, पश्चात् निरुत्साहया तयैव वाचा "शरणागतोऽस्मि" इत्यभिधाय युद्धादपसरणं प्रार्थयामास।

प्रद्युम्नश्चैक एव समन्ततः युगपदागच्छन्तीश्चैद्यसेनाः प्रत्यवरुरोध। ततोऽसौ भीषणं युद्धमासाद्य, विनम्रे सौहार्दं प्रदर्श्य न विध्यन् प्रतिपक्षान् शरैः प्रहरन् न मुमोच। ततश्चासौ बाणैर्बाणासुरस्य शरच्छेदं विधाय तं भङ्क्त्वा च तत्सेनामपि बभञ्ज। महाबलश्चासौ

प्रद्युम्नः उत्तमौजसं निपीड्य यां यां सेनां जघान, सा सा रणभुवं न पुनरारोढुं समर्था। समरे च तस्मिन् तस्योग्रकर्म्मभिर्मुदिताः सन्तो महर्षयः सुराश्च तदुपरि दिशः सुगन्धाः कुर्वन्ति सुशुभ्राणि कुसुमान्यपातयन्; तस्य विमलं यशश्च दिवमुपाययौ। भयात् सर्व्वथा निवृत्तसिंहनादाः शत्रवस्तस्य युद्धं सोढुं नालमभवन्। साभिनिवेशं संप्रहरन्त्यपि हठात् हीयमानरणानुरागा चैद्यसेना तेन प्रद्युम्नेन अन्येषां तटस्थानां नराणामपि निश्चेष्टताकरं विपुलं भयं नीता। मीनकेतनं तमित्थं जयश्रिया परीतमालोक्य अभिमानवान् चेदिपः क्रुद्धः सन् सद्य एव प्लवमानकलभसमानोच्चतुरङ्गया चतुरङ्गया वाहिन्या शत्रून् प्रति चचाल।

चैद्यसेनावर्णनम्।

ततश्च आकृष्टधनुर्मौर्व्वीविस्फारप्रभूतस्वनैः तूर्य्यैः प्रलयक्षुब्धपयोध्यनुकारिणी चैद्यसेना तूर्य्यतुल्यवाहघोषाऽतिभैरवा अविच्छिन्नरणानुरागिणी च आसीत्। सैनिकाश्च ते अहमहमिकया योद्धुमधावन्, असङ्ख्यातानां युद्धार्थं गतानां करिणां कक्षस्थिता घण्टाश्च दध्वनुः, तत्करशीकरेण च रजसां शान्तिः सम्भूता। बाणाहिपूर्णतूणीरकोटरैः गोधाऽऽश्लिष्टभुजाशाखैः धन्विशाखिभिरतिभीषणं व्यूहविन्यासविषमञ्च तद्रणाचलमहारण्यमतीव दुरवगाहतामुपदधे।

यदुसेनायाः प्रतिबलाभियोगवर्णनम्।

द्राघीयसी जनसङ्कुला च यदुसेना विस्तीर्णं द्विषद्बलं प्रति योद्धुमभ्यपतत्। प्रवृत्ते च युद्धे दन्तिभिर्युद्धं प्राप्य प्रभूतं दानमवृष्यत। वीरेण च केनचित् स्वखड्गेन परमण्डलं खण्डयता विपुलं यशो लेभे। अपरश्च खड्गमुत्कृष्य रिपुविनाशनाय स्वसैन्यान्निर्याय शत्रुमध्ये पपात। अन्येन च वीरेण अपरिमितं रिपुसैन्यं स्वासिना शीघ्रमतिकलुषं चक्रे। सहस्रसेनारक्षी कश्चित् स्वासिना लूनशत्रुमूर्द्धा विजयहर्षात् स्वयमपि कबन्धवन्ननर्त्त। परास्त्रच्छिन्नखड्गाश्च पदातयः गजा इव कोपात् दशननिकरैरेव रिपुकुलमदशन्।

धीरैस्तद्धि समराङ्गणं निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलं पाणिनीयं व्याकरणमिव ददृशे। अथ स्वस्वामिना पूर्वसम्मानितैः भर्त्तुः स्नेहस्यानृणत्वमभिलाषिभिः कतिपयैरेव योधैः यावत् समरभूमौ जीवितानि न खलु तत्यजिरे, तावदेवासत्कृतैः अपरभटैः क्रोधादेव जीवितानि त्यक्तानि। राजानश्च व्यसनेऽपि सेनया नीतिपुरःसरं तथा युयुधिरे, यथा अन्तरिक्षगताः सिद्धादयोऽपि सातिशयमेव विस्मयमवापुः। संप्रहरन्तः हस्तिनश्च यथा विषाणभङ्गादितिकर्त्तव्यतामूढ़त्वमवापुः, न तथा शुण्डादण्डानां छेदात् विह्वलतामधिजग्मुः। निर्दयाभियोगाच्च मिथो निपीड़नादिव गजसमूहानामश्रान्तं दानतोयं तदानीमगलत्। रणे पूर्वोक्तरूपमतिभीषणमासुरभावं भजमानाः हि वीरपुरुषाः "स्वर्गं यान्त्यपराङ्मुखाः" इति स्मरणात् परैरभिमुखमवस्थिता एव हताः सन्तः सुरभूयमुपाययुः। तत्र च विदीर्य्यमाणहस्तिहस्त-(पुष्कर) सङ्कुलाः पतल्ललाटास्थि (शङ्ख) परिकीर्णाः प्लवमान (पलरथ)-वाहनरथाश्च रुधिरतोयजन्याः नद्यः प्रावहन्। अस्त्रप्रहारवान् वीरजनो रक्तमवमत्, मज्जवसयोर्भक्षकं रक्षःपिशाचञ्च जहर्ष। तथा इह सुहृदि मृते च तदन्तिके बहुभिरेव बन्धुभिरशोचि, न च दध्वने गजे विनष्टे तत्कण्ठवर्त्तिनीभिरपि घण्टाभिः। अभिमानवानसौ चैद्यः युद्धं प्राप्तः सन् इत्थमभिभूतापरमानवान् निर्भीकान् रिपून् पराजिग्ये।

अथ श्यामलेन पीतवस्त्रशोभिना वपुषा विराजमानः परः पुमान् श्रीकृष्णः तदानीं परैरदृश्यत। यद्यपि रमया समालिङ्गितं तं हरिं दृष्ट्वा शत्रवः द्विषन्ति स्म, तथाऽपि ते निष्पापा आसन्; तथा हि, अरुच्यमप्यौषधं रोगघ्नं भवति हि। हरिरसौ कस्यापि समीपे विनतो न भवति, न खलु सन्ति स्वर्गेऽपि विदितं विगदम् अनेकाऽऽजिविजयिनोऽपि तं प्रति योद्धारः; किमुत पृथिव्याम्? तेन च युद्धार्थं कार्मुके सुपर्वाणः अतिरम्याः बाणाः निहिताः, आकृष्टस्य तस्य कार्मुकस्य रवश्च रिपुकुलानामतिकर्कशः समजनि। यश्चासौ हरिः पुरा

मत्स्यकूर्म्माद्यनेकरूपवान् भक्तजनवरप्रदः परमपुरुषश्च परैः प्राप्तः, अधुना सः अन्यैः शत्रुभिः कर्त्तृभिः असङ्ख्यैः शरैरग्रे उपरि च पूरितः। स च सममेव निशितानिषून् क्रूरानहितांश्च निरास। जनैस्तस्य लघुसन्धायिनः धनुरेव केवलं मण्डलीकृतं नैक्षि, अपि तु रिपूणां बलञ्च भयात् मण्डलीकृतमदर्शि। त्रैलोक्यदर्शी मधुरभाषी अदम्भसंस्पृष्टश्च अलिकुलनीलमूर्द्धजोऽसौ हरिः वर्म्मधारिणः शत्रून् नैककनीनिकासु प्रहृत्य अन्यांश्च जघान। छिन्नबहुबाणां तस्य च धनुर्भूयसां द्विषां प्राणानहरत्; तथा हि, तत्तु परस्य सजीवतामन्यस्य धनुषः सज्याकत्वञ्च न हि सेहे।

तस्य शराश्च पानार्थे "पा पाने" इति धातौ द्विषतामुद्धतानां रुधिरमपिबन्; रक्षार्थे च तस्मिन् धातौ भुवनमरक्षंश्च, इत्थञ्च द्वितयं ययुः। कमलमुकुलरमणीयपाणिरसौ क्रूरारिविनाशकः मुरारिः भूमिभारावतरणार्थमवतीर्णः सन् बह्वनामरीणां संघातमकरोत्। बहुदारवान् निर्भीकः दुष्टघातुकः वीरः उदारः सौम्यमूर्त्तिरसौ भगवान् हरिः एकेनैव शरेण सङ्घीभूतानरीन् सप्ततालानिव विनाशयन्, जन्मान्तरे दाशरथेरात्मनः सदृशं चक्रे। दुष्टघातुकः लक्ष्मीप्राणनाथः वीरश्चासौ शौरिः दिगन्तव्यापकैः बाणैः राशिशः शत्रुशिरांसि शीघ्रमेव चिच्छेद। तदा एषामरीणां शत्रुता मुहुर्व्यक्ता आसीत्, यस्मात् तदीया हि शराः द्विषतां मनोहृतोऽपि हृदये न लेगुः, यतः तेषां हृदयं निर्भिद्य अदृश्यताञ्च जग्मुः। भीमास्त्रराजिनः कृतघोराऽऽजिनः तस्य बलस्य रणभूमयश्च सरुधिराः समभवन्। शत्रवश्च तमेकमेव हरिं द्वित्वेन त्रित्वेन चतुष्ट्वेन च भयात् पश्यन्तः मत्सरेण सद्यः स्वयं पञ्चत्वं प्राप्नुवन्। ततश्च नित्यपरिपूर्णमूर्त्तिर्निरस्तरिपुतेजा निर्भीकः पयोधिपारगामि विस्तीर्णं तेजो धारयन् नित्याभ्युदयवांश्चासौ हरिः पूर्वं रणरागात् अहङ्कारविशिष्टं बलमास्थाय सोत्साहं सिंहनादं कृत्वा एकप्रहारैरिषुभिः गगनन्तदा आच्छादयामास।

इत्येकोनविंशः सर्गः।

---

## विंशसर्गः

### हरिशिशुपालयोर्युद्धवर्णनम्।

अथ तस्मिन् युद्धे मुरारिपराक्रममसहमानः शिशुपालः क्रोधोल्लसितत्रिरेखं भिदुरभ्रूयुगभीषणमुन्नतमाननं दधानः निर्भीकश्च सन् "अयमहं, क्वासि? मामभ्यपेहि" इति स्पर्द्धया हरिमाकारयामास। ततश्चासौ सारथिरूपया नियत्या नोदिताश्वः सन् शौरेरभिमुखं प्रतस्थे। ततः शौरेरपि रथः गुरूणां चक्रधाराणां नोदनेनावदीर्णेभ्यः विगतप्राणानां देहेभ्यः सुतैरसृग्भिः अवनीं विलिम्पन् चैद्याभिमुखमगात्। दीर्घतरध्वजपटाञ्चलः शिशुपालवधप्रतिज्ञामुखरश्च मुरारिरथः "नाहमेनमहत्वा शिखाबन्धं करिष्यामि" इत्युद्घोषयन् साक्षादन्तक इव विरराज। शिशुपालश्च रुक्मिणीकुचकुङ्कुमचिह्नितमच्युतवक्षःस्थलमवलोक्य रुक्मिणीहरणात् प्रभृति सम्भृतयाऽपि रुषा तदानीमिव सहसा सम्बन्धमध्यगच्छत्, अध्वनच्चोच्चैस्तरां कल्पान्तवह्निशिखोपममौर्वीयुक्तं कार्मुकम्। अथ बलवान् स चैद्यः दृष्ट्यग्रहणसंयोजनाऽऽकर्षणापवर्गैः शरैः सानुचरं हरिमाच्छादयितुमभ्यवर्षत्; प्रससुश्च तस्य कार्मुकात् अविरलपातिनः लक्ष्यभेदपाटवधारिणः शराः; पिदधे च तैः शरैः गगनमण्डलम्; अत एव भौमलोकस्य दृष्टिपथात् क्षणमवरुरुधे द्यौः, नभःसदां दृष्टिपथात् धरित्री च। इत्थं चेदिपेन दानवान्तकस्य मुरारेः सैन्यस्य निवारितभानुतापमेकं शरजालमयं सद्म युगपत् विरचितम्। ततो महाशूरो हरिश्च वादिना प्रयुक्तमनुमानं प्रत्यनुमानैः प्रतिवादीव, शत्रुगलितमपरिमितमिषुवर्षं बाणैः निराकरोत्। अम्भोधरादम्बुधारा इवाचिरप्रभाऽऽकारचलद्गुणात् ध्वनतः शार्ङ्गात् अपरिमिताः इषवः सशब्दं न्यपतन्। विपक्षात् समागतः सपक्षोऽपि सुखकरः न भवति, तेन हि कारणेन शिशुपालसैन्यानि क्षणमुक्तः सपक्षः शरस्तोमः नितरां ददाह। विशङ्कं शिशुपालच्छिप्ताश्च शतशः निष्ठुरा अपि शराः शतसङ्ख्यकाः अपराधा

इव हरेर्दुःखं नैव वितेनुः। अथ नृपतिश्चैद्यः मोहात् कृताङ्गुतलोकसृष्टि-मायं प्रलयाभ्यस्तयोगनिद्रं जगत्पतिं हरिं मायया जेतुमिच्छन् स्वापनास्त्रं प्रयुज्य तत्सैन्यानि निद्रितप्रायाण्यकार्षुः; ततश्च तेषां हस्तात् धनूंषि निद्रापारवश्यादगलन्। महान्तः महीपतयः यद्यपि धनुषि निषद्य सुषुपुः, तथाऽपि जागरेऽपि धनुरेकसहायानां तेषां निद्रावस्थायां तदाश्रयणं न दोषावहम्। पयोधौ परिचितनिद्रोऽपि सर्वनिद्रावसरे तस्मिन् स्वसेनासागरमध्यगः मुरारिः केवलं त्रैलोक्यरक्षाविधौ जागरूक आसीत्। अथ तस्य च हरेः चक्षुषि कौस्तुभदर्पणं प्रविष्टे सति, तस्मात् सर्वान्धकारद्रावणसमर्थं तेजः उदगात्, न चैतदद्भुतं, यतोऽसौ इन्द्वर्कविलोचन एव, ततश्च तस्य कौस्तुभस्य मणेः अंशुचयानां विकासात् हरेः सैन्यानामनाविलं दर्शनं सञ्जातम्। अथ पुनरपि जवेन यादवबलैः रिपवः जिहिंसिरे। न्यायवादे मिथ्याऽभियोगमिव, कौस्तुभतेजसि प्रस्वापनान्धकारे निरस्तवति सति, चैद्यः पुनः उल्बणभीमभोगभाक् भुजगास्त्रमाजहार; ततश्च महाफणाधारिणः अविरतविषोद्गारिणश्च महासर्पा लोलजिह्वाऽवलीढोभयसृक्कभागं यथा तथा आविरभवन्। ते च मयूरपिच्छरचितध्वजचूडेभ्यः जीवन्मयूरभ्रमात् क्षणं सभयाः, अत एव व्यावृत्तदेहाः सन्तः आशु वृष्णिसमूहेषु बन्धनाय यमपाशवदपतन्। ततश्च शिरसि कृतवलयीभावं यथा तथा दीप्यमानैः प्रत्युरसं विशेषेण लम्बमानैश्च सर्पकायैः परिवेष्टिता मनुजाः विकसितनीलोत्पलमालभारिणीव व्यद्योतिषत। केचन च पादात् प्रभृति शिरःपर्यन्तं सरत्नपुष्पैरुरगैः परिवेष्टितमूर्त्तयः सन्तः आयतलतावेष्टितपादपसाम्यमवापुः। नागपाशबन्धनानन्तरञ्च माधवेन सावज्ञस्मितं विलोकितात् निजध्वजाग्रावस्थितात् सुपर्णात् पक्षिराजानामयुतसङ्ख्याः समुत्पेतुः। पतगेन्द्रपक्षपवनोत्पाटितशैलैः दत्तविवराश्च ते भुजगाः विवशाः सन्तः पातालमेव भयादाशु प्रविविशुः। असङ्ख्ये च सर्पसङ्घे वैनतेयैर्विनाशं गमिते सति, क्रोधप्रज्वलितः शिशुपालः पुनराग्नेयास्त्रं ज्वालामालासङ्कुलं प्रयुक्तवान्; प्रचलितश्च

तदुद्भूतः कनकद्रवरमणीयः वह्निः तरुमिव विश्वं दग्धुमुपचक्रमे। ततश्च मुरारिरग्निप्रशमनक्षमं मेघजननं वारुणास्त्रं प्रयुज्य निखिलमेव वह्निमुपशमयामास। इत्थञ्च प्रकुपितः विकारकारी रोग इव प्रक्षुभितः शोषप्रयोक्ता चेदिपोऽसौ यद्यदस्त्रं विकारप्रायं प्रायुङ्क्त, प्रयोगवित् मुरारिरपि दोषनिवर्त्तकोपायेन महौषधप्रयोगेण भिषगिव प्रत्यस्त्र-प्रयोगेण तत्तदस्त्रं शीघ्रमेव प्रतिजघान। तदा पुनरसौ तं हरिं विशुद्धैरप्यस्त्रैर्जेतुमशक्यं विदित्वा मर्म्मभेदिभिर्नितरामशुद्धैर्वाक्सायकै-र्व्यथयामास। पुरा येन चक्रेण सहसा सुदृढ़ाऽऽलिङ्गनविनोद-दुर्ललितराहुस्त्रीस्तनकार्कश्यलक्ष्मीः वृथाऽकारि, मुरजिदसौ तत्कालेऽपि शपमानस्यैव तस्य शिशुपालस्य शिरस्तेनैव चक्रेण लोलज्वालापल्लवितेन चिच्छेद। शिरश्छेदानन्तरञ्च प्रकाशेनाकाशे दिनकरकिरणान् विक्षि-पत्, शिशुपालशरीरात् निर्गत्य हरेः शरीरं प्रविशत्, दिव्यैः सपटहरवैः पुष्पवर्षैरन्वितं, ऋषिगणैः क्षणकालं स्तूयमानं, शोभासेवितं, सूर्य्यसह-स्राभिभावि तेजः विस्फारितलोचनैः राजन्यैरतितरां ददृशे।

इति विंशः सर्गः।

इति श्रीमज्जीवानन्दविद्यासागरपौत्त्रः
एम ए, इत्युपाधिकः
श्रीपञ्चानन शर्म्मणा कृतः।

---

# टीकाकृतो मङ्गलाचरणम् ।

—*—

**इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।**
**वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥ १ ॥**

अथेदानीं वरिष्ठविद्वद्गणाग्रणीः काश्यराजिराजीवमिहिरः शास्त्रसागरसुतरतरणिः कोलाचलनिलयः महोपाध्यायोपाधिविभूषितः सुधीः तत्रभवान् मल्लिनाथसूरी काव्यरसास्वादलालसया दुर्गमकाव्यकान्तारसञ्चरणेच्छूनां सुकोमलधियां सुखसञ्चरणार्थं दीनानामनिसदासुपरि कृपापरवशः नवया रुचिरया च सद्व्याख्यानशैल्या दुर्व्याख्याकण्टकसमाकीर्णं प्राक्तनीक्तिजालं विशदीकर्त्तुकामः, एतां कृतिनः तत्रभवतः कविकुलललामभूतस्य महाकवेर्माघस्य कृतिं शिशुपालवधाख्यं महाकाव्यं व्याख्यातुमनाः आदौ अविगीतशिष्टाचारपरम्पराप्राप्तां प्रारिप्सितपरिसमाप्तिप्रत्यूहव्यूहविनाशपटीयसीं व्याचिख्यासितकाव्यनायकभूततया अभीष्टस्य भगवतो नारायणस्यैव स्तुतिं शिष्यशिक्षार्थं निबध्नाति, इन्दीति ।—इन्दीवरं—नीलोत्पलं, तस्य दलमिव—पत्रवत्, श्यामं—कृष्णवर्णं, श्यामायमानविग्रहमित्यर्थः, नवनीलनीरजरुचिमिति यावत्, तथा इन्दिरायाः,—श्रियाः, स्वपत्न्या इति यावत्, आनन्दस्य—हर्षभरस्य, कन्दलम्—अङ्कुरस्वरूपम् ; यथा हि अभिनवोत्पन्नः अङ्कुरः अन्ते बहुशाखाप्रशाखोपशोभिनाम् अनोकहानामपि प्रसूतिहेतुः, तथैव इन्दिरायाः असीमानामविरलप्रवाहाणामपि सुखानां यो हि एक एव उत्पादहेतुर्भवतीति भावः ; तथा वन्दारूणां—वन्दनापरायणानां [ वन्दते इत्यस्य कर्त्तरि आरुः ] जनानां—लोकानां, तद्भक्तानामित्यर्थः, मन्दारः,—जनासप्रसिद्ध-महेन्द्रकाननस्थित-प्रसूनतरुविशेषस्वरूपः, तं, नन्दनकाननसुशोभी मन्दाराख्यः देवतरुर्यथा निर्म्मलं घ्राणतर्पणं सौरभं परितः प्रकीर्य्य स्वकीयमनवद्यं गन्धं जिघ्रतः जनान् सन्तर्पयति, तथैवानिशमेवासौ स्वसेवानिरतानां जनानां वाञ्छितं स्वस्वाभिलाषानुरूपं प्रपूरयन् तान् प्रीणयतीति भावः ; एवम्भूतं, यदूनां—यदुवंशीयानां, नन्दनम्—आनन्ददायकं भगवन्तं वासुदेवं, वन्दे—समभ्यर्च्चये, तत्सामुख्यसम्पत्तये इति शेषः, आशंसितविघ्नसमूहविध्वंसार्थमचिरादेव स्वाभीष्टपरिसमाप्त्यर्थञ्चेति भावः । अत्र यदुनन्दनस्य इन्दीवरदलेनावैधर्म्म्यसाम्य-

दन्ताञ्चलेन धरणीतलमुन्नमय्य
पातालकेलिषु धृतादिवराहलीलम् ।
उल्लोचनोत्फणफणाधरगीयमान-
क्रीड़ावदानमिभराजमुखं नमामः ॥ २ ॥

---

प्रतिपादनात् उपमाऽलङ्कारः, तथा तत्रैव निरपह्नवविषये उपमेये आनन्दकन्दलस्य, तथा मन्दारस्य च तादात्म्यारोपात् निरङ्गं रूपकद्वयमित्यनयोः परस्परनिरपेक्षतया संस्थितेः संसृष्टिः । पथ्यावक्त्रं वृत्तम् ॥ १ ॥

स्वस्य बलवत्तरं विघ्नं, विघ्नप्राचुर्य्यं वा आशङ्क्य भूयसा विघ्नविध्वंसपटीयसः विघ्नराजस्य साम्मुख्यमाधत्ते, दन्ताञ्चलेनेति ।—दन्तस्य—एकदशनस्य, अञ्चलेन—प्रान्तभागेन, धरणीतलं,—प्रलयवारिषु निमग्नां पृथिवीमित्यर्थः, [ करतलादिशब्दवत् अत्रापि तलशब्दः स्वरूपार्थको बोध्यः ] उन्नमय्य—उद्धृत्य, अगाधसलिलाभ्यन्तरात् निर्जलदेशं नीत्वेति यावत्, [ उत्पूर्वकात् नमतेः णिचि ल्यपि रूपम् ] पातालकेलिषु—पाताले—अधोभुवने, याः केलयः,—क्रीड़ाः, यथास्थानादधोगतायाः भुवः उत्तोलनावसरे विविधानि नर्म्माणि इत्यर्थः, तेषु, तत्क्रीड़ाकरणसमये इत्यर्थः, धृता —स्वीकृता, आदिवराहस्य—सृष्टिप्रारम्भकाले वराहरूपधारिणो भगवतः विष्णोरित्यर्थः, लीला—क्रीड़ा, विलास इति यावत्, येन तथाभूतं, प्रलयपयोधिजलनिमग्नां भुवं रक्षितुं परिगृहीतकोलकलेवरमित्यर्थः, [ एतेन भगवतो नारायणस्यैव वराहरूपपरिग्रहस्य पुराणादिषु सिद्धत्वेऽपि विष्णुरूपिणः गणपतेः सृष्टिसंरक्षणक्षयकारित्वं मन्यमानानां गाणपत्यानां मते स्वर्गं स्थितिं लयञ्च कर्त्तुमीशानस्य गजाननस्य विष्णोरभिन्नतया कल्पादौ वराहरूपधृक्त्वं न विरुध्यते इति विभाव्यम् ; अथवा,—गणपतेः विष्णोरवतारत्वं ब्रह्मवैवर्त्तपुराणे षष्ठाध्याये दृश्यते ; तथा हि,—"स्वयं गोलोकनाथश्च पुण्यकस्य प्रभावतः । पार्व्वतीगर्भजातश्च तव पुत्रो भविष्यति ॥ स्वयं देवगणानाञ्च यस्मादीशः कृपानिधिः । गणेश इति विख्यातो भविष्यति जगत्त्रये ॥" इति । तथा च,—विष्णुरूपित्वात् भगवतो गणपतेः सृष्टेः प्राक् वराहलीलास्वीकारोऽपि सङ्गच्छते इति सूक्ष्मधीभिरवधातव्यमिति ] एवम्, उल्लोचनैः,—उत्फुल्लनयनैः, उत्फणैः,—हर्षातिरेकात् संवर्द्धनार्थमुद्धृतभोगैः, ( तेषां कराभावात् संवर्द्धनाकार्य्यं तैः फणाभिरेव सम्पादितमिति वेदितव्यम्) फणाधरैः,—विषधरैः, गीयमानं—संस्तूयमानं, धरोत्तोलनसमये लोकातिशायि कर्म्म समालोक्य हर्षातिरेकात् जयशब्दोच्चारणपूर्व्वकं प्रशस्यमानमित्यर्थः, क्रीड़ाऽवदानं, क्रीड़ारूपम्, अवदानं—कृतं कर्म्म ( "अवदानं कर्म्म

**शारदा शारदाम्भोजवदना वदनाम्बुजे।**
**सर्वदा सर्वदास्माकं सन्निधिं सन्निधिं क्रियात्॥ २॥**

---

वृत्तम्'' इत्यमरः) भुवः उद्धरणसमये प्रकटीकृतः पराक्रमो वा, यस्य तथाविधम्, भुजगपरिकराः सर्वे अलौकिकं तत् कर्म्म समालोक्य हर्षोदयात् निरन्तरमुच्चैः वराहरूपिणं तं भगवन्तमस्तुवन्निति भावः। [‘उल्लोचन’ इत्यत्र “उल्लाघन” इति पाठे—उल्लाघः,—रोगान्मुक्तः, (उत्पूर्वकस्य भौवादिकस्य लाघते इत्यस्य निष्ठायां निपातः, ततः उल्लाघशब्दात् नीरोगार्थात् कृत्यर्थे णिचि ल्युटि रूपमेतत्) तस्य करणम् उल्लाघनं, भारभूतायाः पृथिव्याः दशनाञ्चलेनोत्तोलनात् चर्णं यत् पीड़ाऽपनयनं तस्मात्, भारापगमे अहं सुखी इत्यादि-प्रतीतिवत् वा कियत्कालं व्याप्य भाररूप-रोगापसारणजनितं यत् शेषाहेः सुखप्रत्यायनं तस्माद्धेतोः इत्यर्थः, शिष्टं पूर्ववत्] इभराजमुखं—इभानां—दन्तिनां, राजा—श्रेष्ठः, [“राजाहःसखिभ्यष्टच्” (५।४।९१ पा०) इति टच्प्रत्ययः] गजेन्द्रः इत्यर्थः, तस्य मुखमिव मुखं यस्य तथोक्तं, गजेन्द्रवदनम् इत्यर्थः, गणेशमिति यावत्, [गणपतेः शनैश्चरदृष्ट्या शिरसः पाते सति, भगवान् नारायणः पुष्पभद्रानदीतीरं गत्वा, तत्र उत्तरस्यां दिशि शिरः कृत्वा शयानस्य निद्रितस्य रतिश्रान्तस्य गजेन्द्रस्य शिरः सुदर्शनचक्रेण छित्त्वा ब्रह्मज्ञानेन लीलया तत् तस्य बालकन्धरायां योजयामासेति पौराणिकी वार्त्ता] नमामः,—वन्दामहे, स्वाभीष्टपरिसमाप्तिप्रतिबन्धककूटोपशान्तये इति भावः। वसन्ततिलकं वृत्तम्॥ १॥

सरसवागात्मकस्य काव्यस्य व्याख्यानावसरे तदनुकूलशक्तिसम्पत्तये वागधिष्ठातृदेव्या एव गुणानुकीर्त्तनं कर्तुमुचितमिति पूर्वाभ्यामप्यपरितुष्यन् पुनः वाङ्मयाधिकृतां वाग्देवीमेव स्तुवन्नाह, शारदेति।—शारदं—शरत्कालीनं, यत् अम्भोजं—पद्मं, तदिव वदनं—मुखमण्डलं यस्याः सा, शरत्सरोरुहवदतिरुचिराननेत्यर्थः, सर्वदा—सर्वम् अभीष्टजातं ददाति—याचकेभ्यः अर्पयति या सा, तदेकशरणानां निखिलाभिलाषप्रपूरयित्रीत्यर्थः, शारदा—श्वेतकमलनिलया सरस्वती इत्यर्थः, [शारदं—श्वेतकमलम् अस्या अस्तीति “अर्श-आदिभ्योऽच्” (५।२।१२७ पा०) इति मत्वर्थीयः अच्], सर्वदा—सर्वस्मिन् काले, निरन्तरमिति यावत्, अस्माकं—नः, तदुपासकानामिति भावः, वदनाम्बुजे—वदनं—मुखमेव, अम्बुजं—कमलं तस्मिन्, सम्मुखे इति यावत्, (कमलालयाया वाग्देवताया अधिष्ठानयोग्यताज्ञापनार्थं मुखे अम्बुजत्वारोपणं बोध्यम्) सन्निधिं—सतां—प्रशस्तानां वाचामित्यर्थः, क्षेमाणां वा (“सन् साधौ धीरशस्तयोः। मान्ये सत्ये विद्यमाने त्रिषु साध्व्यामयोः स्त्रियाम्॥” इति मेदिनी) निधिम्—

**वाणीं काणभुजीमजीगणदवासासीच्च वैयासकी-**
**मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत्।**

---

आधारं, [ निधिरिति निधीयते अस्मिन्निति व्युत्पत्त्या निपूर्वकात् दधातेः अधिकरणे किः ] निखिलमङ्गलैकभूस्वरूपम्, उत्कृष्टरत्नभूतं वा इत्यर्थः, सन्निधिं—सामीप्यम्, अधिष्ठानमिति यावत्, क्रियात्—विदधातु, मन्मुखे समीचीनवाचां स्फुरणार्थं तत्र निरन्तरं सन्निधत्तामिति यावत्, [ करोतेराशिषि लिङ्, इष्टार्थस्य आशंसनं हि आशीः, तस्याश्च गम्यमानायां लिङ् विधीयते, आशीर्हि भव्ये एव सम्भवति, अतः स्वस्यापि शुभाशंसनं न दूषणावहमिति विभाव्यम् ] भक्तेषु करुणापरवती भारती तच्चरणशरणागतानामस्माकं मुखकमलं तन्निलयकुवलयवत् मा कदाऽपि विजह्यात्विति निष्कृष्टार्थः। अत्र चतुर्षु पादेषु यमकचतुष्टयं, तथा प्रथमस्य वदनस्य अम्भोजेनावैधर्म्य-साम्यप्रतीतेरुपमाऽलङ्कारः, द्वितीये च वदने अम्बुजतादात्म्याध्यासात् निरङ्गं रूपकं, सन्निधौ च सन्निधिरभेदारोपात् निरङ्गं व्यस्तं रूपकमलङ्कारः, तथाच एतेषामन्यो-ऽन्यनैरपेक्ष्येण संस्थितिः संसृष्टिः। पथ्यावक्त्रं वृत्तम्॥ ३॥

अथेदानीं टीकाकृत् वक्ष्यमाणकृतौ प्रेक्षावतामन्तेवासिनां समधिकश्रद्धासम्पत्तये स्वोक्तेरान्वीक्षिक्यादिविद्याऽनुशीलनविशोधिततया अभ्रान्तत्वं समूलकत्वञ्च विज्ञापयितुं तत्तच्छास्त्रेषु स्वकीयां सम्यगभिज्ञतां प्रदर्शयन्नाह, वाणीमिति।—यः,—टीकाकारः मल्लिनाथ इत्यर्थः, ( यः इति तृतीयपादस्थितं कर्तृपदं सर्वत्रान्वीयते ) काणभुजीं—कणान्—तण्डुलादीनां सूक्ष्मांशान्, भुङ्क्ते यः सः, कणभुक् कणादः, तस्य इयमिति काणभुजी, तां,—काणादीमित्यर्थः, वाणीं वाचं, वैशेषिकदर्शनसम्मतान् द्रव्यादि सप्त पदार्थानिति यावत्, अजीगणत्—सङ्ख्यातवानित्यर्थः, पुङ्खानुपुङ्खरूपेण स्वेतरभेदानुमानपुरःसरं निर्णीतवानिति यावत्, च—तथा, यो हि वैयासकीं—व्यासेन—श्रीकृष्णद्वैपायनेन प्रोक्तामित्यर्थ, वाणीम्—उत्तरमीमांसारूपां भारतीमित्यर्थः, महाभारतादिरूपामिति यावत्, अवासासीत्—परिसमाप्तिमनैषीत्, अन्तं यावत् व्यासप्रणीतान् सर्वानेव ग्रन्थानपाठीदिति यावत्, [ "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते" इत्यनुशासनात् नाशार्थकस्यापि दैवादिकस्य षोधातोरव-उपसर्गयोगात् समाप्तपरपर्य्यायावसानार्थकत्वं सर्वसम्मतम्; अवाप्यस्मिन्नेवार्थे अवपूर्वात् षोधातोः लुङि अवासासीदिति पदं निष्पन्नमिति बोध्यम्। क्वचित्तु "अवाशासीत्" इत्यपि पाठो दृश्यते, तत्र बधार्थकभौवादिकशस्धातुं विना अन्येन केनापि धातुना लुङि ईदृशपदस्य साधनाशक्यतया बधार्थस्य चात्र सर्वथा

वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ ४ ॥

---

अयोग्यतया उपसर्गयोगबलात् धातोः प्रकृतार्थानुकूलार्थकल्पनेन कथमपि सङ्गतिः विधेयेति ] एतेनास्य व्यासप्रणीतायाम् उत्तरमीमांसायां, तथा तत्प्रणीते महाभारते अष्टादशसु पुराणेषु उपपुराणेषु च सम्यगभिज्ञता आसीदिति प्रतीयते, यश्च अन्तस्तन्त्रं —तन्त्राणां—शास्त्राणाम, अन्तः,—अभ्यन्तरे, इतरेषु सर्वेषु वेदादिशास्त्रेष्विति यावत्, (एतेन महर्षिणा जैमिनिना प्रोक्ताया वेदार्थमीमांसात्मिकायाः पूर्वमीमांसायाः, तथा वेदार्थोपनिबन्धॄणां मन्वादिधर्म्मशास्त्राणां परिग्रहो बोध्यः) अरंस्त—चिक्रीड, तत्तच्छास्त्रपरिशीलनेन तेष्वपि सविशेषव्युत्पत्तिशालीति भावः, एवं पन्नगस्य—सर्पस्य, शेषाहेरित्यर्थः, गवीनां—वाचां, गुम्फेषु—ग्रन्थनेषु, फणिभाषितभाष्यफक्किकासु इति यावत्, अजागरीत्—सर्व्वदैव सावधानतया जागरित आसीत् इत्यर्थः, विषमेषु अतिदुर्बोधतया पूर्वाचार्य्यैरप्यबुद्धेषु स्थलेषु यो हि तस्य महायोगिनः पतञ्जलेः उक्तिजालागर्भं सयुक्तिक [illegible] तत्र तत्र निःशङ्कं व्यचरदित्याशयः, अथवा,—योगयुक्तस्य तस्यैव पतञ्जलेः पातञ्जलदर्शने, नागविरचितपिङ्गलाख्यच्छन्दःशास्त्रे वा निर्भयमक्रमीति भावः, एवं यो हि अक्षम्—इन्द्रियं, चक्षुरित्यर्थः, ("अक्षो ज्ञातार्थशकटव्यवहारेषु पाशके। रुद्राचेन्द्राचयोः सर्पे विभीतकतरावपि ॥" इति मेदिनी) पादयोः यस्य सः, अक्षपादः,—न्यायदर्शनप्रणेता गोतमः, तस्मात् स्फुः,—स्फुरणम्, आद्युत्पत्तिः यासां तासां, [ स्फुरतेः भावे क्विप् ] गोतमवक्तृकाणामित्यर्थः, वाचां—वाक्यानाम्, आन्वीक्षिक्यभिधेयानां तर्कविद्यानामित्यर्थः, अखिलं रहस्यं—गोप्यविषयं, गूढतत्त्वमित्यर्थः, आचकलत्—अवालुलोचत्, सर्वमेव न्यायदर्शनमर्म्म अधिजगे इत्यर्थः, न्यायकान्तारसञ्चारकुञ्जरः आसीदिति भावः, [ "कलि हलि कामधेनौ" इति गणपाठात् कलयतेः यथेप्सितार्थकत्वादत्र आलोचनार्थकत्वं बोध्यम्। महर्षेः न्यायाचार्य्यस्य गोतमस्य अक्षपादसंज्ञाऽभिधा किम्वदन्ती प्रचरति; तथा हि,—महर्षिः कृष्णद्वैपायनो हि न्यायसूत्रप्रणेतुः गोतमात् सम्पूर्णामान्वीक्षिकीं विद्यामध्यगीष्ट, स च ततः स्वप्रतिभया गुरोर्गोतमस्य मतं दूषयितुमुपचक्रमे; कियता कालेन शिष्यस्य व्यासस्य एतस्मिन्नदम्यः अध्यवसायः गुरोः श्रुतिपथमुपागतः तेन चासौ गोतमः तस्मै भृशम् अकुप्यत्, "नाहं शिष्यापसदस्य अस्य व्यासस्य मुखं द्रक्ष्यामि" इति प्रत्यजानीत च। एवं गते बहुतिथे काले गुरोरप्रतिविधेयां तां प्रतिज्ञामुपश्रुत्य

**मल्लिनाथः सुधीः सोऽयं महोपाध्यायशब्दभाक् ।**
**विधत्ते माघकाव्यस्य व्याख्यां सर्वङ्कषाऽभिधाम् ॥ ५ ॥**

---

अतीव खिन्नमनाः महर्षिः द्वैपायनः कुपितं गुरुं प्रसादयितुं सुदीर्घं कालं तपः अन्वतप्त, तेन च तपसा परं प्रसादितः ऋषिः गौतमः स्वतपोमहिम्ना पादयोः चक्षुषी उत्पाद्य ताभ्यामेव शिष्यमुखं पश्यन् स्वां प्रतिज्ञां शिष्यप्रार्थनाञ्च युगपत् प्रत्यपालयत, प्रसन्नश्चाखिलं तर्कविद्यारहस्यं तस्मै अददिति ] अपि च, लोके—इह जगति, विदुषां—पण्डितानां, सुधियामित्यर्थः, सौजन्यजन्यं—सौजन्यं—सुजनता, तज्जन्यं—तन्निमित्तं, तत्प्रभवमित्यर्थः, पाण्डित्यख्यापनसमुत्थमिति यावत्, यशः,—कीर्त्तिः, यदुपज्ञं—यस्य—टीकाकृतः मल्लिनाथस्य एव, उपज्ञा—आद्यं ज्ञानं, येनैव टीकाकृता प्रथमतो ज्ञातं, नान्येन केनापि प्राक् विदितमासीदिति भावः, [ "उपज्ञा ज्ञानमाद्यं स्यात्" इत्यमरः उपज्ञानम् उपज्ञा इति उपपूर्वाज्जानातेः भावे अङ्, स्त्रियां टाप् च । यस्य उपज्ञा इति षष्ठीसमासः, "उपज्ञोपक्रमम्" ( २।४।२१ पा० ) इति उपज्ञान्तस्य उपक्रमान्तस्य च तत्पुरुषे नपुंसकत्वविधानादत्र नपुंसकत्वं बोध्यम् ]। अत्रायमाशयः,—यस्योदयात् पूर्वं केऽपि विद्वांसः तादृगखिलशास्त्रानुशीलनप्रभवं सुजनतासमुत्थञ्च यशः नाधिजग्मुः, सोऽयं मल्लिनाथः सुधीः माघकाव्यस्य व्याख्यां विधत्ते इति वक्ष्यमाणश्लोकेनान्वयः । अत्र अनुप्रासो नाम शब्दालङ्कारः ; एवमिह "यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्त्तितुं वा" इत्यादिवत् भग्नप्रक्रमता नाम दोषोऽनुसन्धेयः ; "अजीगणत्" "अवासासीत्" "अजागरीत्" इत्यादिपरस्मैपदीयविभक्त्युपक्रमे "अरंस्त" इति आत्मनेपदीयविभक्तिप्रयोगस्य रसप्रकर्षविघातकत्वादिति ध्येयम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४ ॥

पूर्व्वं स्वस्य सर्व्वशास्त्राऽभिज्ञत्वमुत्कीर्त्त्य इदानीं स्वनामोत्कीर्त्तनपुरःसरं ग्रन्थनामस्य सर्व्वङ्कषाख्यां व्याख्यां कर्त्तुं प्रतिजानीते, मल्लिनाथ इति ।—पूर्व्वोपात्तयच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये अत्र तच्छब्दः प्रयुक्तः ; सः,—यो हि सर्वशास्त्रमहोदधिपारङ्गमः, तादृश इत्यर्थः, अयम्—अस्य ग्रन्थस्य टीकाकृदित्यर्थः, महोपाध्यायशब्दभाक्—महोपाध्यायोपाधिलाञ्छितः, [ महोपाध्यायशब्दं भजते यः सः इत्यर्थे, भजतेः कर्त्तरि विण् । पुरा हि मिथिलादिजनपदेषु प्रचलिता एषा पद्धतिरासीत् यत्, यो हि गुरोः पाठं समाप्य स्वगृहे प्रथमतश्छात्रानध्यापयति स्म, स उपाध्याय इत्योच्यत, अथ तदीयछात्रेषु पाठसमापनानन्तरमध्यापनानिरतेषु तदध्यापकेन महोपाध्यायोपाधिः अध्यक्रियत, ततश्च तच्छात्रच्छात्रेषु पुनरध्यापनानिरतेषु तदध्यापकस्याध्यापकः महामहोपाध्यायो-

**ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालङ्क्रिया-**
**शिक्षाकौतुकिनो विहर्त्तुमनसो ये च ध्वनेरध्वनि।**

---

पाधिविमण्डितः अजायत इति। तेन चेतदनुमीयते यत्, मल्लिनाथः नव्यावस्थायामेव एवं ग्रन्थान् व्याख्यातुमुपचक्रमे, तेन चास्य टीकाकृतः शिष्या एव तदानीम् अध्यापनानिरताः आसन्, न तु तच्छिष्यशिष्या इति; तत एवासौ तदानीं केवलं महोपाध्यायोपाधिभूषितोऽजनीति] मल्लिनाथः,—मल्लिनाथ इति नाम्ना लोके प्रसिद्धः, सुधीः,—सुपण्डितः, [धीरिति।—ध्यायति अनयेति व्युत्पत्त्या ध्यायतेः करणे क्विप्, सु—शोभना, धीः,—बुद्धिर्यस्य सः इति बहुव्रीहिः] सर्व्वङ्कषाऽभिधा—सर्व्वङ्कषेति अभिधा—आख्या यस्याः तां, सर्व्वङ्कषानाम्नीमित्यर्थः, [सर्व्वङ्कषेति।—सर्वं—निखिलं दुर्व्याख्यानमित्यर्थः, कषति—सयुक्तिकसारगर्भव्याख्यानेन नाशयति या सेति व्युत्पत्त्या सर्व्वोपपदात् कषतेः कर्त्तरि "सर्व्वकूलाभ्रकरीषेषु कषः" (३।२।४२ पा०) इति खच् मुम् च] या हि अन्येषाम् असमीचीनां व्याख्यां दूरीकृत्य कवेरभिप्रायानुरूपं सद्व्याख्यानं प्रकाशयितुमेव विरचिततया सर्व्वातिरेकिणी जाता इति भावः, माघकाव्यस्य—माघाख्यस्य कवेः कृतेः शिशुपालवधाख्यमहाकाव्यस्येत्यर्थः, व्याख्यां—सुविशदतात्पर्य्यप्रकाशिकां विवृतिमित्यर्थः, विधत्ते—करोति। पथ्यावक्त्रं वृत्तम्॥३॥

इदानीं व्याचिख्यासिते वस्तुनि, वाचकादिशब्दविचाररसिकानां, तथा सद्भाववत्-काव्यरससागरे निमज्जूणां विदुषाम् अभिलषितार्थपूरणमेव स्वकृतेरुद्देश्यं कथयन्नाह, ये इति।—ये—जना इत्यर्थः, शब्दार्थपरीक्षणप्रणयिनः,—शब्दानां—वाचकादि-पदानां, तथा अर्थानां—वाच्यलक्ष्यव्यङ्ग्यात्मकानामित्यर्थः, परीक्षणे—विचारे, याथार्थ्यनिरूपणे इत्यर्थः, कस्तावद्वाचकः? को लाक्षणिकः? को वा व्यञ्जकः? इति तत्त्वतो निर्द्धारणे इति यावत्, प्रणयिनः,—रसिकाः, भवन्ति इति शेषः, ये वा—ये च, गुणालङ्क्रियाशिक्षाकौतुकिनः,—गुणाः,—काव्यव्यवहारस्यौपयिकानुकूल्यभाजः माधुर्य्यादय इत्यर्थः, [ते च त्रिधा, माधुर्य्यमोजः प्रसादश्चेति, वाग्भटादयस्तु—अदोषयोरपि शब्दार्थयोः काव्यगतयोः यैर्विना न प्रशस्यत्वम्, अदोषशब्दार्थवत्काव्योत्कर्षाधायकाः त एव गुणपदवाच्याः; ते च दश, तथा हि,—"औदार्य्यं समता कान्तिरर्थव्यक्तिः प्रसन्नता। समाधिः श्लेष ओजोऽथ माधुर्य्यं सुकुमारता॥" इत्याहुः] अलङ्क्रियाः,—अनुप्रासादयः शब्दालङ्काराः, उपमादयोऽर्थालङ्काराश्चेत्यर्थः, तासां या शिक्षा—सम्यक् ज्ञानं, तत्र कौतुकिनः,—कुतूहलिनः, तत्तद्विषयमालोचयितुं नियतमत्याकाङ्क्षिणः इत्यर्थः, तत्तदनुशीलनेन चेतसि निरुपमां शान्तिमानिनीषवः इति यावत्,

क्षुभ्यद्भावतरङ्गिते रससुधापूरे निमङ्क्तुं ये
तेषामेव कृते करोमि विवृतिं माघस्य सर्वङ्कषाम् ॥ ६ ॥
नेताऽस्मिन् यदुनन्दनः स भगवान् वीरप्रधानो रसः
शृङ्गारादिभिरङ्गवान् विजयते पूर्णा पुनर्वर्णना ।

---

[ "गुणालङ्कृतिशिक्षाकौतुकिनीविहर्तुंमनसः" इति समस्तपाठे—गुणादीनां शिक्षा एव कौतुकिनी—कौतुकवती नायिका इत्यर्थः, तया सह तस्यां वा विहर्तुं मनांसि येषां ते इत्यर्थः ] ये च ध्वनेः,—वाच्यातिशायिव्यङ्ग्यार्थवदुत्तमकाव्यस्य, अभिधालक्षणामूलकस्येत्यर्थः, "वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत् काव्यमुत्तमम्" इति दर्शनात्, अध्वनि—पथि, ध्वन्यात्मके काव्ये इत्यर्थः, विहर्तुंमनसः,—सञ्चरितुकामाः, वाच्यार्थादप्यधिकचमत्कारिणः व्यङ्ग्यार्थस्य अनुशीलनेच्छवः इति यावत्, ये च क्षुभ्यद्भिः,—सञ्चलद्भिः, आलम्बनोद्दीपनविभावैः सर्वतः प्रसरद्भिरित्यर्थः, भावैः,—सञ्चार्य्यादिभिरित्यर्थः, तरङ्गिते—सर्वतः उच्छलिततया सञ्जाततरङ्गे इत्यर्थः, उद्वेलतामुपगते इति यावत्, रससुधापूरे—रत्यादिस्थायिभावकरसपीयूषप्रवाहे इत्यर्थः, निमङ्क्तुं—मंक्तुमिच्छन्ति, तत्रैव चिरं मग्नतया स्थातुमिच्छन्तीत्यर्थः, तेषामेव—तादृशानामेव, कृते—निमित्तं, तादृशानां सचेतसाम् आकाङ्क्षितार्थसाधनेन प्रीतिमुत्पादयितुमेवेत्यर्थः, न तु प्राकृतानामल्पधियां निमित्तमिति भावः, [ अत्रान्ययोगव्यवच्छेदकः एवकारः, तेन च अनीदृशां प्राकृतानां व्यवच्छेदः ] माघस्य—तन्नामकः माघनामककवेः काव्यस्य, सर्वङ्कषां—सर्वङ्कषाऽभिधां, नवभावविष्कारणेन सर्वेषामुपरि समवतिष्ठमानतया सर्वातिरेकिणीमिति भावः, विवृतिं—विशेषेण गूढार्थप्रकाशिकां व्याख्यां, करोमि—विदधामि । अत्र हि व्याख्याने शब्दार्थानां यथायथं सामर्थ्यनिरूपणं, गुणानामलङ्काराणाञ्च सम्यक् विवेचनं, ध्वनेराविष्करणं, रसानां व्यवस्थापनञ्च विशदभावेन कृतमस्तीति समुदितार्थः । अत्र निरपह्नवविषये उपमेये रसे उपमानभूतायाः सुधायास्तादात्म्यारोपात् रूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

इदानीं ग्रन्थेऽस्मिन् प्रतिपादिते विषये नायक-रसादीन् निर्णीय दर्शयति, नेतेत्यादि ।—अस्मिन्—व्याख्यायमाने महाकाव्ये, शिशुपालवधे इत्यर्थः, भगवान्—अणिमाद्यैश्वर्य्यशाली, जगत्पतिरित्यर्थः, सः,—प्रसिद्धः यदुनन्दनः,—यादवः, श्रीकृष्णः इत्यर्थः, नेता—नायकः, आलम्बनविभाव इत्यर्थः, वीरः,—क्रोधस्थायिभावकः तदाख्यो रस इत्यर्थः, प्रधानम्—अङ्गी यत्र तादृशः, रसः,—सामाजिकैरास्वाद्यमानं वस्तु इत्यर्थः, शृङ्गारादिभिः,—शृङ्गारप्रभृतिभिः अन्यैश्च रसैरित्यर्थः, अङ्गवान्—साङ्गः सन्,

इन्द्रप्रस्थगमाद्युपायविषयश्चैद्यावसादः फलं
धन्यो माघकविर्वयन्तु कृतिनस्तत्सूक्तिसंसेवनात् ॥ ७ ॥
इहान्वयमुखेनैव सर्वं व्याख्यायते मया।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ८ ॥

---

शृङ्गारकरुणादयश्चात्राङ्गभूताः अन्ये रसाः सन्तीति भावः, विजयते—सर्व्वोत्कर्षेण वर्त्तते, पुनः,—तथा, वर्णना—सन्ध्यासूर्य्येन्दुरजनीप्रदोषादीनां योग्यस्थलेषु यथायथमुपन्यासः इत्यर्थः, पूर्णा—सम्पूर्णतयैव कृतेत्यर्थः, न तु कुत्रचित् अङ्गहानिरस्तीत्याशयः, तथा च महाकाव्यलक्षणप्रस्तावे साहित्यदर्पणे,—"सन्ध्यासूर्य्येन्दुरजनी······। वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ॥" इति। इन्द्रप्रस्थगमाद्युपायविषयः,—इन्द्रप्रस्थे—तदाख्ये इदानीं दिल्लीति प्रख्याते पुरे, गमाद्युपायः,—प्रयाणप्रभृतिसमारम्भः, एव विषयः,—वर्णनीयव्यापारः, इतिहासभारतादिप्रसिद्धानि इतिवृत्तानि उपवर्णितानि इत्यर्थः, तथा च दर्पणे,—"इतिहासोद्भवं वृत्तम्" इति महाकाव्यलक्षणम्; चैद्यावसादः,—चैद्यस्य—शिशुपालस्य, अवसादः,—बध एव, फलं—परिणामप्रतिपाद्यं वस्तु इत्यर्थः, तथा च,—"तेष्वेकञ्च फलं भवेत्" इति महाकाव्यलक्षणम्; माघकविः,—स हि माघेति प्रख्यातनामा महाकाव्यरचयितेत्यर्थः, धन्यः,—एतादृशसम्पूर्णलक्षणोपेतस्य भगवच्चरितादिविषयकस्य महाकाव्यस्य विरचनात् सर्व्वदैव श्लाघ्यः इत्यर्थः, वयन्तु—तादृशकाव्यस्य टीकाकृतः इत्यर्थः, तत्सूक्तिसंसेवनात्—तस्य—माघकवेः, सूक्तीनां—भगवत्प्रशंसाऽऽश्रिततया ध्वनिगुणालङ्कारविभूषिततया च साधुतराणां वाचामित्यर्थः, संसेवनात्—समुपासनात्, अर्थादिपर्य्यालोचनात्मकपरिचर्य्यातः इत्यर्थः, पीयूषसमरसानां माघकविसमीरितानां वचसां व्याख्यानादित्यभिप्रायः, कृतिनः,—कृतकृत्याः, पूर्णमनोरथतया सार्थकजन्मानः इत्यर्थः, अभूमेति शेषः। एतत्सारभूतविषयसंसेवनात् न केवलं कविरेक एव कृतार्थः अभूत, अपि तु तदुक्तेः व्याख्यातॄनस्मानपि कृतकृत्यान् अकरोदित्याशयः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ७ ॥

अथेदानीमनन्यसाधारणीमभिनवां रीतिमाश्रित्य काव्यमिदं व्याख्यातुं प्रतिजानीते, इहेति।—इह—शिशुपालबधाख्ये महाकाव्ये, अन्वयस्य—साकाङ्क्षाणां शब्दानां परस्परासक्तिवशात्, तत्तत्पदोपस्थाप्यानामर्थानाम् अव्यभिचारिसम्बन्धवशाच्च विप्रकृष्टानामपि पदानामव्यवधानेनोपस्थापनम् अन्वयः, [शाब्दिकास्तु अन्वयः,—पदानां परस्पराकाङ्क्षा योग्यता चेति आहुः, अपरे तु,—पदोपस्थाप्यपदार्थानां परस्परसम्बन्धरूपः अन्वयः इति वदन्ति] तस्य मुखं—समारम्भः तेन, साकाङ्क्षाणां

पदानां शृङ्खलिततया सुसन्निवेशेनेत्यर्थः, सर्व्वं—सकलं, ग्रन्थनिहितं वस्तु इत्यर्थः, मया—टीकाकृता मल्लिनाथेनेत्यर्थः, व्याख्यायते—विव्रियते, तात्पर्य्यार्थादि-प्रकाशपुरःसर विशदीक्रियते इत्यर्थः, अमूलं—मूलरहितं, ग्रन्थकृता अनुक्तमित्यर्थः, किञ्चित्—किमपि, न लिख्यते—न व्याख्यायते, यदि कुत्रचित् मूलकृता सङ्क्षेपार्थमेव त्यक्तं सम्बद्धं वस्तु भवता नोच्येत, तदा भवद्व्याख्यायां न्यूनत्वमापद्येत, इत्याशङ्कायामाह, नेति ।—अनपेक्षितम्—अनाकाङ्क्षितं, ग्रन्थसम्बन्धरहितमित्यर्थः, न च उच्यते—निष्प्रयोजनं न व्याख्यायते, ग्रन्थनिहितपदार्थसुखबोधार्थं ग्रन्थकृता सङ्क्षेपार्थमनुक्तमपि साकाङ्क्षं वस्तु मया यथायथं शिष्याणां सुखबोधाय तत्तत्स्थलेषु अभिधास्यते इति टीकाकृदाशयः । पथ्यावक्त्रं वृत्तम् ॥ ८ ॥

समाप्तं टीकाकृन्मङ्गलाचरणव्याख्यानम् ।

---

# शिशुपालवधम् ।

## प्रथमः सर्गः ।

श्रियः पतिः श्रीमति शासितुं जग-
ज्जगन्निवासो वसुदेवसद्मनि ।

अथ तत्रभवान् माघकविः "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥" इत्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनतां, "काव्यालापांश्च वर्जयेत्" इति निषेधस्यासत्काव्यविषयतां च पश्यन् शिशुपालवधाख्यं काव्यं चिकीर्षुः चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इत्याशोराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च काव्यफलशिशुपालवधबीजभूतं भगवतः श्रीकृष्णस्य नारददर्शनरूपं वस्तु आदौ श्रीशब्दप्रयोगपूर्वकं निर्दिशन् कथामुपक्षिपति, श्रिय इति।—तत्रादौ श्रीशब्दप्रयोगात् वर्णगणादिशुद्धेरभ्युदयः ; तदुक्तम् ;—"देवतावाचकाः शब्दा ये च भद्रादिवाचकाः। ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥" इति। [श्रियः] लक्ष्म्याः [पतिः] अनेन रुक्मिणीरूपया श्रिया समेत इति सूचितम्। "राघवत्वे भवेत् सीता रुक्मिणी कृष्णजन्मनि" इति विष्णुपुराणात्। [जगन्निवासः] जगतामाधारभूतः, कुक्षिस्थाखिलभुवन इति यावत्। तथापि [जगत्] लोकं [शासितुं] दुष्टनिग्रहशिष्टानुग्रहाभ्यां नियन्तुं [श्रीमति] लक्ष्मीयुक्ते [वसुदेवसद्मनि]

**वसन् ददर्शावतरन्तमम्बरा-**
**द्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ १ ॥**
**गतं तिरश्चीनमनूरुसारथेः**
**प्रसिद्धमूर्द्ध्वज्वलनं हविर्भुजः ।**

---

वसुदेवरूपिणः कश्यपस्य वेश्मनि [ वसन् ] कृष्णरूपेण तिष्ठन् [ हरिः ] विष्णुः [ अम्बरात्, अवतरन्तम् ] आयान्तम् । इन्द्रसन्देशकथनार्थमिति भावः । [ हिरण्यगर्भाङ्गभुवम् ] हिरण्यं यः गर्भो हिरण्यगर्भो ब्रह्मा, ब्रह्माण्डप्रभवत्वात् । तस्याङ्गभुवं तनूजम् । अथवा तस्याङ्गादवयवा-दुत्सङ्गाख्याद्भवतीति हिरण्यगर्भाङ्गभूस्तं [ मुनिं ] नारदमित्यर्थः । "उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात् स्वयम्भुवः" इति भागवतात् । [ ददर्श ] कदाचिदिति शेषः । अत्रात्मीयस्मिन् वसुदेवसद्मनि सकल-जगदाश्रयतया महीयसो हरेराधेयत्वकथनादधिकप्रभेदोऽर्थालङ्कारः । तदुक्तम् ;—"आधाराधेययोरानुरूप्याभावोऽधिको मतः" इति । जगन्निवासस्य जगदेकदेशनिवासित्वमिति विरोधश्च । तथा तकार-सकारादेः केवलस्यासकृदावृत्त्या जगज्जगदिति सकृद्व्यञ्जनद्वयसादृश्याच्च वृत्त्यनुप्रासभेदो * शब्दालङ्कारो । एषां चान्योन्यनैरपेक्ष्येणैकत्र समावेशात् तिलतण्डुलवत् संसृष्टिः । सर्गेऽस्मिन् वंशस्थं वृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ १ ॥

तदानीं जनैर्विस्मयादौचित्तं प्रवृत्तमित्याह, गतमिति ।—अविद्य-मानावूरू यस्य सोऽनूरुः, स सारथिर्यस्य तस्य [ अनूरुसारथेः ] † सूर्य्यस्य

---

* वृत्तिच्छेकानुप्रासौ इति पाठः युक्तः ।

† पुरा किल सपत्न्या अदितेः पुत्रम् इन्द्रं देवराजपदे प्रतिष्ठितम् अवलोक्य असूयापरवशया विनतया इन्द्रादधिकपराक्रमवन्तं पुत्रं याचमानात् स्वपतेः कश्यपात् वरं लब्ध्वा यथाकालम् अण्डद्वयम् असावि । अथ बहुतिथे काले गतेऽपि यदा तदण्डद्वयम् उद्भिद्य पुत्रद्वयं न निरक्राम, तदा अचिरादपत्यसुखसन्दर्शनकौतूहला-क्रान्तया अतीवाधीरया विनतया तयोः एकम् अण्डम् अभेदि । अकाले अण्डस्य भग्नतया अनुत्पन्नाधःशरीरार्द्धं पुत्रम् अवलोक्य, हा हतास्मीति रुदतीं विनतां

पतत्यधो धाम विसारि सर्वतः
किमेतदित्याकुलमीक्षितं जनैः ॥ २ ॥
चयस्त्विषामित्यवधारितं पुरा
ततः शरीरीति विभाविताकृतिम् ।

[ गतं ] गतिः । भावे क्तः । [ तिरश्चीनं ] तिर्य्यग्भूतम् "विभाषा-ऽञ्चेरदिक्स्त्रियाम्" ( ५।४।८ पा० ) इति तिर्य्यक्शब्दादञ्चत्यन्तात् प्रातिपदिकात् स्वार्थे खप्रत्ययः । [ हविर्भुजः ] अग्नेः [ ऊर्द्धज्वलनं ] ऊर्द्धस्फुरणं [ प्रसिद्धम् ] इदं तु [ सर्वतो विसारि धाम अधः पतति । किमेतदिति ] सूर्य्याग्निविलक्षणमदृष्टपूर्वमिदं धाम किमात्मकं स्यादिति [आकुलं ] विस्मयात् सम्भ्रान्तं यथा तथा [ जनैरीक्षितम्] ईक्षणं कृतम् । सकर्मकादप्यविवक्षिते कर्मणि भावे क्तः "प्रसिद्धेरविवक्षातः कर्मणो-ऽकर्मिका क्रिया" ( भा० का० ) इति वचनात् । केचित् कर्मणि क्तान्तं कृत्वा ईक्षितं मुनिं ददर्शेति पूर्वेण योजयन्ति । अत्रोपमेयस्य मुनिधाम्नः सूर्य्याग्निभ्यामुपमानाभ्यामधःप्रसरणधर्मेणाधिक्यवर्णनात् व्यतिरेकः । तदुक्तं काव्यप्रकाशे,—'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति । 'धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः' इति हेमचन्द्रः । दिवाकरस्तु वृत्तरत्नाकरटीकायां प्रथमपठितेन 'द्विधाकृतात्मा किमयं दिवाकरो विधूमरोचिः किमयं हुताशनः' इति चरणद्वयेन सहैममेव श्लोकं षट्पदच्छन्दस उदाहरणमाह— तत्राद्यचरणद्वयेन सन्देहाकारो गतमिति तन्निरासश्च बोध्य इत्यु-परिष्टात् ॥ २ ॥

अथ भगवान्निरणैषीदित्याह, चय इति ।—[ विभुः ] वस्तुतत्त्वाव-धारणसमर्थः [ सः ] हरिः [ पुरा ] प्रथमं [ त्विषां चय इत्यवधारितं ] तेजःपुञ्जमात्रत्वेन विनिश्चितं [ ततः ] प्रत्यासन्ने [ विभाविताकृतिम् ]

समाश्वास्य समागताः देवाः शीतार्त्तं तं प्लवम् "अनूरुः" इति नामधेयं विधाय, तं सन्तापयितुं सूर्य्यरथेऽवस्थाप्य सूर्य्यसारथिं चक्रुः इति पौराणिकी कथा-ऽत्रानुसन्धेया ।

विभुर्विभक्तावयवं पुमानिति
क्रमादमुं नारद इत्यबोधि सः ॥ ३ ॥
नवानधोऽधो बृहतः पयोधरान्
समूढकर्पूरपरागपाण्डुरम् ।

---

विभाविता विस्पष्टा आकृतिः संस्थानं यस्य तं तथोक्तम्, अत एव [शरीरी] चेतनः [इति] अवधारितम् । ततो [विभक्तावयवं] विभक्ताः विविच्य गृहीताः अवयवा मुखादयो यस्य तं तथोक्तम् । अत एव [पुमान् इति] अवधारितम् [अमुम्] आगच्छन्तं व्यक्तिविशेषं नारदं वास्तवाभिप्रायेणेति पुंलिङ्गनिर्वाहः । [क्रमात्] पूर्वोक्तसामान्यविशेषज्ञानक्रमेण । लोकदृष्ट्येदमुक्तं, हरिस्तु सर्वं वेदैवेति तत्त्वम् । [नारद इत्यबोधि] नारदं बुद्धवानित्यर्थः । नारदस्य कर्मत्वेऽपि निपातशब्देनाभिहितत्वान्न द्वितीया । तिङ्कृत्तद्धितसमासानां परिसंख्यानस्योपलक्षणत्वात् । यथाह वामनः,—"निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः, परिगणनस्य प्रायिकत्वात्" इति । बुध्यतेः कर्त्तरि लुङ् ( ५ अधि २ नं २२ सू० ) "दीपजन" ( ३।१।६१ पा० ) इत्यादिना चिण्, "चिणो लुक्" ( ६।४।१०४ पा० ) इति तस्य लुक् । अत्र विभाविताकृतिं विभक्तावयवमित्यादिना आकृतिविभावनावयवविभावनयोः पदार्थयोर्विशेषणगत्या शरीरित्वपुंस्त्वावधारणहेतुत्वेनोपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः,—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति लक्षणात् ॥ ३ ॥

अथ सप्तभिर्मुनिं विशिनष्टि, नवानित्यादिभिः ।—कीदृशममुम् ? [नवान्] सद्यःसम्भृतसलिलान्, अतिनीलानिति यावत् । [बृहतः] विपुलान् [पयोधरान्] मेघान् [अधोऽधः] मेघानां समीपाधःप्रदेशे स्थितमिति शेषः । "उपर्य्यध्यधसः सामीप्ये" ( ८।१।७ पा० ) इति द्विर्भावः, तद्योगे द्वितीया । "उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु" ( भा० का० ) इत्यादिवचनात् । [समूढकर्पूरपरागपाण्डुरं]

घनां घनोत्क्षिप्तगजेन्द्रकृत्तिना
स्फुटोपमं भूतिसितेन शम्भुना ॥ ४ ॥
दधानमम्भोरुहकेसरद्युती-
र्जटाः शरच्चन्द्रमरीचिरोचिषम् ।
विपाकपिङ्गास्तुहिनस्थलीरुहो
धराधरेन्द्रं व्रततीततीरिव ॥ ५ ॥

---

समूढः पुञ्जीकृतः 'समूढः पुञ्जिते भुग्ने' इति विश्वः। कर्पूरस्य परागश्चूर्णं तद्वत्पाण्डुरम्, अत एव [ घनां ] मेघसमीपावस्थानघनां। अत्यन्तसंयोगे द्वितीया *। [ घनोत्क्षिप्तगजेन्द्रकृत्तिना ] घनेषु ताण्डवोत्सवेषु। 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः घनाः' इत्युभयत्राप्यमरः। उत्क्षिप्ता उपरि धारिता गजेन्द्रस्य कृत्तिश्चर्म येन तेन। 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः [ भूतिसितेन ] भूत्या भस्मना सितेन। 'भूतिर्भस्मनि सम्पदि' इत्यमरः। [ शम्भुना ] स्फुटा उपमा सादृश्यं यस्य तं, [ स्फुटोपमं ] स्फुटशम्भूपममित्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। सदृशपर्य्यायर्योस्तुलोपमाशब्दयोः "अतुलोपमाभ्याम्" † इति निषेधात् सादृश्यवाचित्वे तृतीयेत्याहुः। केचिदिमं श्लोकं चयस्त्विषामित्यतः प्राक् लिखित्वा व्याचक्षते, तेषां पुंस्त्वावधारणात् प्राक् तेजःपिण्डमात्रस्य शम्भूपमौचित्यं चिन्त्यम् ॥ ४ ॥ ‡

दधानमिति।—पुनश्च [ अम्भोरुहकेसरद्युतीः ] पद्मकिञ्जल्कप्रभापिशङ्गीरित्यर्थः। [ जटाः दधानं ] स्वयं तु [ शरच्चन्द्रमरीचिरोचिषम् ] शरच्चन्द्रमरीचिरिव रोचिर्यस्य तं, धवलमित्यर्थः। अत एव

---

* "कालाध्वनोरत्यन्तसंयोगे" ( २।३।५ पा० )।

† "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" ( २।३।७२ पा० )।

‡ अत्र नवजलधराधोवर्त्तिनः कर्पूरचूर्णधवलस्य नारदस्य उत्क्षिप्तगजकृत्तिनिमदेशवर्त्तिना भस्मपाण्डुरविग्रहेण शम्भुना सह अवैधर्म्यसाम्यकथनात् उपमाऽलङ्कारः।

पिशङ्गमौञ्जीयुजमर्जुनच्छविं
वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां
विडम्बयन्तं शितिवाससस्तनुम् ॥ ६ ॥
विहङ्गराजाङ्गरुहैरिवायतै-
र्हिरण्मयोर्वीरुहवल्लितन्तुभिः ।

---

[ विपाकपिङ्गः ] विपाकेन परिणामेन पिङ्गाः पिङ्गलाः तुहिनस्थल्यां तुषारभूमौ रोहन्तीति [ तुहिनस्थलीरुहः, व्रततीततीः ] लताव्यूहान् 'वल्ली तु व्रतती लता' इत्यमरः, [ दधानं धराधरेन्द्रमिव ] धराधरेन्द्रो हिमवान् तुहिनस्थलीति लिङ्गात् नारदोपमानत्वाच्च तमिव स्थितम् ॥ ५ ॥ *

पिशङ्गेति ।—पुनः कीदृशम् ? [पिशङ्गमौञ्जीयुजम्] मुञ्जस्तृणविशेषः तन्मयी मेखला मौञ्जी पिशङ्गया मौञ्ज्या युज्यत इति पिशङ्गमौञ्जीयुक्, तम् । "सत्सूद्विषद्रुह" (३।२।६१ पा०) इत्यादिना क्विप्, "स्त्रियाः पुंवत्" ( ६।३।३४ पा० ) इत्यादिना पिशङ्गशब्दस्य पुंवद्भावः । [ अर्जुनच्छविं ] धवलकान्तिम् । 'वलक्षो धवलोऽर्जुनः' इत्यमरः । [ अञ्जनद्युति ] अञ्जनवर्णम् [ एणाजिनं ] कृष्णमृगचर्म [ वसानम् ] आच्छादयन्तम् । 'वस आच्छादने' इति धातोः शानच् । [ सुवर्णसूत्राकलिताधराम्बरां ] सुवर्णसूत्रेण कनकमेखलया आकलितं बद्धम् अधराम्बरं अन्तरीयकं यस्यास्तां [ शितिवाससः ] नीलाम्बरस्य रामस्य [ तनुं विडम्बयन्तम् ] अनुकुर्वाणमित्यर्थः आर्थीयमुपमा अनुप्रासश्च ॥ ६ ॥

विहङ्गेति ।—पुनः [ विहङ्गराजाङ्गरुहैरिव ] गरुत्मल्लोमतुल्यैः

---

* अत्र पद्मकिञ्जल्कद्युतिमज्जटानां परिणतिपिङ्गललताव्यूहैः, शरदिन्दुशुभ्रकिरणेन धराधरेन्द्रवर्त्तितुहिनस्य कान्तेः, तथा विपुलायतशुभ्रविग्रहस्य नारदस्य हिमवता सार्द्धमवैधर्म्यसाम्यकथनात्, औपम्यवाचकस्य इवशब्दस्य उपमानोपमेयसामान्यधर्म्माणाञ्च वाच्यत्वात् पूर्णा उपमाऽनुप्रासश्चालङ्कारः ।

कृतोपवीतं हिमशुभ्रमुच्चकै-
र्घनं घनान्ते तड़ितां गुणैरिव ॥ ७ ॥
निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा
लसद्बिसच्छेदसिताङ्गसङ्गिना।
चकासतं चारुचमूरुचर्मणा
कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ ८ ॥

---

[ आयतैः ] दीर्घैः [ हिरण्मयोर्वीरुहवल्लितन्तुभिः ] हिरण्यस्य विकारो हिरण्मयी। "दाण्डिनायन हास्तिनायन" ( ६।४।२७४ पा० ) इत्यादिना मयटि यलोपनिपातः। तस्यामुर्व्यां रुहा रूढ़ाः। इगुपधलक्षणः * कप्रत्ययः। तासां वल्लीनां तन्तुभिस्तत्तुल्यैः सूक्ष्मावयवैः, उपादानगुणात् हिरण्मयैरित्यर्थः [कृतोपवीतं] शोभार्थं कल्पितयज्ञसूत्रं, स्वयं [ हिमशुभ्रम् ] अत एव [ घनान्ते ] शरदि [ तड़ितां गुणैः ] † उपलक्षितम्। 'तड़ित् सौदामनी विद्युत्' इत्यमरः। उच्चैरेव [ उच्चकैः ] उन्नतं [ घनं ] मेघम् [ इव ] स्थितम् ‡ ॥ ७ ॥

निसर्गेति।—पुनः [ निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा ] निसर्गात् स्वभावादेव चित्राणि शबलानि उज्ज्वलानि भास्वराणि सूक्ष्माणि पक्ष्माणि लोमानि यस्य तेन, [ लसद्बिसच्छेदसिताङ्गसङ्गिना ] लसन् यो बिसच्छेदो मृणालखण्डः, 'छेदः खण्डोऽस्त्रियाम्' इति त्रिकाण्डशेषः, तद्वत् सिते अङ्गे वपुषि सङ्गिना सक्तेन [ चारुचमूरुचर्मणा ] चारुणा मनोहरेण चमूरुचर्मणा मृगत्वचा [ कुथेन ] पृष्ठास्तरणेन। 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः' इत्यमरः। [ इन्द्रवाहनं, नागेन्द्रम् ] ऐरावतम् [ इव, चकासतं ] शोभमानम्। इन्द्रस्य वाहन-

---

* "इगुपधज्ञाप्रीकिरः कः" ( ३।१।१३५ पा० )।

† "गुणैः" इत्यत्र "गणैः" इति पाठान्तरम्।

‡ उपमानां संसृष्टिः।

अजस्रमास्फालितवल्लकीगुण-
क्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।
पुरः प्रवालैरिव पूरिताऽर्द्धया
विभान्तमच्छस्फटिकाक्षमालया ॥ ९ ॥

---

मिति स्वस्वामिभावमात्रस्य * विवक्षितत्वात् "वाहनमाहितात्" (८।४।८ पा०) इति न णत्वम् । यथाह वामनः,—'नैन्द्रवाहनशब्दे णत्व-माहितत्वस्याविवक्षितत्वात्' इति । ( ५अधि० २अ० ९२सू०) चकासतेः शतरि "नाभ्यस्ताच्छतुः" ( ७।१।७८ पा० ) इति नुमभावः । 'जक्षित्या-दयः षट्' ( ६।१।६ पा० ) इत्यभ्यस्तसंज्ञा ॥ ८ ॥ †

अजस्रमिति ।—पुनः [ अजस्रं ] प्राचुर्य्येण [ आस्फालितवल्लकी-गुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ] आस्फालितास्ताडिताः । सौष्ठव-परीक्षार्थं न्युब्जाङ्गुष्ठेन तन्त्रीताड़नं प्रसिद्धम् । तेषां वल्लकीगुणानां वीणातन्त्रीणां क्षतेन सङ्घर्षणेन उज्ज्वलैरङ्गुष्ठनखांशुभिः भिन्नया मिश्रया, तद्रागरक्तयेत्यर्थः । अत एव [ पुरः ] पुरोभागे [ प्रवालैः विद्रुमैः । 'अथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम्' इत्यमरः । [ पूरिता-र्द्धयेव ] स्थितया [ अच्छस्फटिकाक्षमालया ] स्वच्छस्फटिकानां मालया, जपमालयेत्यर्थः । 'अक्षो भल्लूके स्फटिकेऽमलेऽच्छाभिमुखेऽव्ययम्' इति हेमचन्द्रः । तथा प्रसिद्धस्फटिकग्रहणात् ऋषेर्मोक्षार्थित्वं व्यज्यते । 'स्फटिको मोक्षदः परम्' इति मोक्षार्थिनां स्फटिकाक्षमालाभिधानात् । [ विभान्तं ] भासमानम् । भातेः शतृप्रत्ययः । अत्र नखांशुभिन्न-येति स्वगुणत्यागेनान्यगुणस्वीकारलक्षणस्तद्गुणालङ्कार उक्तः । 'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः' इति, स च प्रवालैः पूरितार्द्धयेव इत्युत्-प्रेक्षया सङ्कीर्य्यते ॥ ९ ॥

---

* मात्रपदेनात्र आहितत्वमविवक्षितत्वमिति गम्यते ।

† अत्र स्वतः शवलोज्ज्वलेन मृगचर्म्मणा विभूषितस्य नारदस्य नानामणि-खचितपृष्ठास्तरणवता ऐरावतेन सह सवैधर्म्यसाम्यकथनात् उपमाऽलङ्कारः ।

रणद्भिराघट्टनया नभस्वतः
पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छना-
मवेक्षमाणं महतीं मुहुर्मुहुः ॥ १० ॥

रणद्भिरिति ।—पुनः [ नभस्वतः ] वायोः [ आघट्टनया ] आघातेन [ पृथक् ] असङ्कीर्णं [ रणद्भिः ] ध्वनद्भिः, अनुरणनोत्पद्यमानैरित्यर्थः । 'श्रुत्यारब्धमनुरणनं स्वरः' इति लक्षणात् । तदुक्तं रत्नाकरे,—'श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः । स्वतो रञ्जयति श्रोतुश्चित्तं स स्वर उच्यते' ॥ इति । श्रुतिर्नाम स्वरारम्भकावयवः शब्दविशेषः । तदुक्तं,—'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा' ॥ इति । विभिन्नानि प्रतिनियतसंख्यया व्यवस्थितानि श्रुतीनां मण्डलानि समूहा येषां तैः, [विभिन्नश्रुतिमण्डलैः] श्रुतिसङ्ख्यानियमश्च दर्शितः । 'चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः । द्वे द्वे निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतौ' ॥ इति । स्वराः षड्जादयः सप्तोक्तलक्षणाः । तदुक्तं,—'श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धार-मध्यमाः । पञ्चमो धैवतश्चाथ निषाद इति सप्त ते ॥ तेषां संज्ञाः सरिगमपधनीत्यपरा मताः' ॥ इति । तैः [ स्वरैः, स्फुटीभवद्ग्रामविशेष-मूर्च्छनां ] स्फुटीभवन्त्यो ग्रामविशेषाणां षड्जाद्यपरनामकानां स्वर-सङ्घातभेदानां त्रयाणां मूर्च्छनाः स्वरारोहावरोहक्रमभेदा यस्यां तां, [ महतीं ] निजवीणाम् । 'विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी' ॥ इति वैजयन्ती । [ मुहु-र्मुहुरवेक्षमाणम् ] तन्त्रीयोजनाभेदलक्षणमहिम्ना पुरुषप्रयत्नमन्तरे-णैवाविसंवादं ध्वनतीति कौतुकादनुसन्दधानमित्यर्थः । अथ ग्राम-लक्षणं,—'यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि । तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते । षड्जग्रामो भवेदादौ मध्यमग्राम एव च । गान्धारग्राम इत्येतद्ग्रामत्रयमुदाहृतम्' ॥ इति । तथाच,—

निवर्त्त्य सोऽनुव्रजतः कृतानती-
नतीन्द्रियज्ञाननिधिर्नभःसदः ।
समासदत् सादितदैत्यसम्पदः
पदं महेन्द्रालयचारु चक्रिणः ॥ ११ ॥

---

'नन्द्यावर्त्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः । षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः' ॥ इति । मूर्च्छनालक्षणञ्च,—'क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम् । सा मूर्च्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च ॥' इति । ग्रामत्रयेऽपि प्रत्येकं सप्त सप्त मूर्च्छना इत्येकविंशतिर्मूर्च्छना भवन्ति । तत्रेह नामानि तु "नानपेक्षितमुच्यते" इति प्रतिज्ञाभङ्गभयान्न लिख्यन्ते इति सर्वमवदातम् । अत्र पुंव्यापारमन्तरेण स्वराद्याविर्भावोक्त्या कोऽपि लोकातिक्रान्तोऽयं शिल्पसौष्ठवातिशयी वीणायाः प्रतीयते । तेन सह स्वतःप्रसिद्धातिशयस्याभेदेनाध्यवसितत्वात् तन्मूलातिशयोक्तिरलङ्कारः । सा च महत्याः पुंव्यापारं विना मूर्च्छाद्यसम्बन्धेऽपि सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपतया पुंव्यापाराख्यरूपकारणं विनाऽपि मूर्च्छनादिकार्योत्पत्तिद्योतनाद्विभावना व्यज्यते, इत्यलङ्कारेणालङ्कारध्वनिरिति संक्षेपः ॥ १० ॥

निवर्त्त्येति ।—[ अतीन्द्रियज्ञाननिधिः ] अतीन्द्रिया इन्द्रियमतिक्रान्ताः, देशकालस्वरूपादिविप्रकृष्टार्थाः । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया (वा०)" * इति समासः । "द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः (वा०)" † इति विशेष्यलिङ्गत्वम् । तेषां ज्ञानं तस्य निधिः, सर्वार्थद्रष्टेत्यर्थः । [ कृतानतीन् ] कृतप्रणामान् [ अनुव्रजतः ] अनुगच्छतः, नभसि आकाशे सीदन्ति गच्छन्तीति [ नभःसदः ] सुरान् । "सत्सूद्विषद्रुह" (३।२।६१ पा०) इत्यादिना क्विप् । [ निवर्त्त्य ] प्रतिषिध्य [ सः ] मुनिः [ सादितदैत्यसम्पदः ] सादिताः विध्वस्तीकृताः

---

* "जीविकोपनिषदावौपम्ये" (१।४।७९ पा०) ।

† "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" (२।४।२६ पा०) ।

पतत्पतङ्गप्रतिमस्तपोनिधिः-
पुरोऽस्य यावन्न भुवि व्यलीयत।
गिरेस्तड़िित्वानिव तावदुच्चकै-
र्जवेन पीठादुदतिष्ठदच्युतः ॥ १२ ॥

---

दैत्यानां सम्पदो येन तस्य, [ चक्रिणः ] कृष्णस्य [ पदं ] स्थानं, [ महेन्द्रालयचारु ] इन्द्रभवनमिव भासमानं [ समासदत् ] समाङ्पूर्वात् षद्लृधातोर्लुङ्। "पुषादि" ( ३।१।५५ पा० ) इत्यङ्। अत्र "नतोनतौ" "पदःपदम्" इति च द्वयोर्व्यञ्जनयुग्मयोः सकृदावृत्त्या छेकानुप्रासः, अन्यत्र वृत्त्यनुप्रासः, महेन्द्रालयचारु इत्युपमा च, इत्येषां संसृष्टिः ॥ ११ ॥

पतदिति।—[ पतत्पतङ्गप्रतिमः ] पतन् यः पतङ्गः सूर्य्यः स प्रतिमा उपमानं यस्य सः। 'पतङ्गौ पक्षिसूर्य्यौ च' इत्यमरः। [ तपोनिधिः ] मुनिः [ अस्य ] हरेः [ पुरो भुवि ] पुरःप्रदेशे [ यावन्न व्यलीयत ] नातिष्ठत्, "लीङ् गतौ" इति धातोर्दैवादिकात् कर्त्तरि लङ्। [ तावदच्युतः ] हरिः [ गिरेः ] शैलात्, तड़ितोऽस्य सन्तीति [ तड़ित्वान् ] मेघः [ इव ] "माड़ुपधायाश्च मतोर्वोऽयवादिभ्यः" ( ८।२।९ पा० ) इति मतुपो मकारस्य वकारः। "तसौ मत्वर्थे" ( १।४।१९ पा० ) इति भसंज्ञायामेकसंज्ञाधिकारेणापदत्वान्न जश्त्वम्। [ उच्चकैः ] उन्नतात् [ पीठात् ] आसनात् [ जवेनोदतिष्ठत् ]। मुनिचरणस्य भूस्पर्शात् प्रागेव स्वयमुत्थितवान्। 'ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति। प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥' इति शास्त्रमनुस्मरन्निति भावः। "उदोऽनूर्द्ध्वकर्मणि" ( १।३।२४ पा० ) इति नियमादिहोर्द्ध्वकर्म्मणि नात्मनेपदम्। "पतत्पतङ्ग" इत्यत्र पतङ्गस्य पतनासम्भवादियमभूतोपमा इत्याचार्य्यदण्डिप्रभृतयो बभणुः। अत एवाप्रसिद्धस्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकालङ्कारिकाः सर्वे वर्णयन्ति, गिरेस्तड़ित्वानिव इत्युपमा च ॥ १२ ॥

अथ प्रयत्नोन्नमितानमत्फणै-
र्धृते कथञ्चित् फणिनां गणैरधः ।
न्यधायिषातामभिदेवकीसुतं
सुतेन धातुश्चरणौ भुवस्तले ॥ १३ ॥

तमर्घ्यमर्घ्यादिकयाऽऽदिपूरुषः
सपर्य्यया साधु स पर्य्यपूपुजत् ।
गृहानुपैतुं प्रणयादभीप्सवो
भवन्ति नापुण्यकृतां मनीषिणः ॥ १४ ॥

---

अथेति ।—[ अथ ] अच्युताभ्युत्थानानन्तरं [ धातुः सुतेन ] नारदेन [ प्रयत्नोन्नमितानमत्फणैः ] प्रयत्नोन्नमितास्तथाऽपि मुनिपादन्यासभारादानमन्त्यः फणा येषां तैः, [ फणिनां गणैः, अधः ] अधःप्रदेशे [ कथञ्चिद्धृते ] स्थापिते [ भुवस्तले ] भूपृष्ठे । [ अभिदेवकीसुतं ] देवकीसुतम् अभि लक्ष्यीकृत्येत्यर्थः । "लक्षणेनाभिप्रती आभिमुख्ये" ( २।१।१४ पा० ) इत्यव्ययीभावः । [ चरणौ ] पादौ । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । [ न्यधायिषातां ] निहितौ । दधातेः कर्मणि लुङ् । "स्यसिच्सीयुट" ( ६।४।६२ पा० ) इत्यादिना चिण्वदिटि "आतो युक् चिण्कृतोः" ( ७।३।३३ पा० ) इति युक् । अत्र फणानां नमनोन्नमनासम्बन्धेऽपि मुनिगौरवाय तत्सम्बन्धाभिधानादतिशयोक्तिभेदः ॥ १३ ॥

तमिति ।—[ आदिपूरुषः ] पुराणपुरुषः । "अन्येषामपि दृश्यते" ( ६।३।१३ पा० ) इति वा दीर्घः । [ सः ] कृष्णः, [ अर्घ्यम् ] अर्घं पूजामर्हतीति अर्घ्यः । "दण्डादिभ्यो यः" ( ५।१।६६ पा० ) इति यः । [ तं ] नारदम् । अर्घार्थं द्रव्यमर्घ्यम् । "पादार्घाभ्याञ्च" ( ५।४।२५ पा० ) इति यत् प्रत्ययः । 'मूल्ये पूजाविधावर्घः', 'षट् तु त्रिष्वर्घ्यमर्घार्थे' इति चामरः । अर्घ्यमादिर्यस्यास्तया [ अर्घ्यादिकया ] "शेषाद्वि-

न यावदेतावुदपश्यदुत्थितौ
जनस्तुषाराञ्जनपर्वताविव।
स्वहस्तदत्ते मुनिमासने मुनि-
श्चिरन्तनस्तावदभिन्यवीविशत्॥ १५॥

---

मात्रा" (५।४।१५४ पा०) इति विकल्पेन कप्प्रत्ययः। [सपर्य्यया] पूजया। 'पूजा नमस्यापचितिः सपर्य्यार्चार्हणाः समाः' इत्यमरः। [साधु] यथा तथा [पर्य्यपूपुजत्] परिपूजितवान्। णौ चङ्न्तं कर्त्तव्यम्। युक्तं चैतदित्यर्थान्तरं न्यस्यति, गृहानिति।—मनस ईषिणो [मनीषिणः] सन्तः, पृषोदरादित्वात् * साधुः। [अपुण्यकृतां] पुण्यमकृतवताम्। "सुकर्म्मपापमन्त्रपुण्येषु कृञः" (३।२।८९ पा०) इति भूते क्विप्। [गृहान् प्रणयादुपेतुम्, अभीप्सवः] प्राप्तमिच्छवः। आप्नोतेः सन्नन्तादुप्रत्ययः "आप्ज्ञप्यृधामीत्" (७।४।५५ पा०) इतीकारः। [न भवन्ति] किन्तु पुण्यकृतामेव। अतः कृच्छ्रलभ्याः सन्तः सविशेषं पूज्या इत्यर्थः †॥ १४॥

न यावदिति।—[उत्थितावेतौ] मुनिकृष्णौ [जनः, तुषाराञ्जनपर्वताविव] तुषाराञ्जनयोः पर्वताविव [यावन्नोदपश्यत्] नोत्प्रेक्षितवान्, [तावच्चिरन्तनः] पुराणः [मुनिः] कृष्णः। पुरा किल भगवान् बदरिकाऽरण्ये नारायणावतारेण तपसि स्थितवानिति पुराणात्। "सायं चिरम्" (४।३।२३ पा०) इत्यादिना ट्युप्रत्ययः तुडागमश्च। [स्वहस्तदत्ते] स्वहस्तेन दत्ते [आसने मुनिं] नारदं [अभिन्यवीविशत्] स्वाभिमुखेनोपवेशितवान्। अभिनिपूर्वात् विशतेर्ण्यन्ताल्लुङि "णिश्रि" (३।१।४८ पा०) इति चङ् ‡॥ १५॥

---

* "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०९ पा०)।

† अत्र अभीप्सव इत्यनेनैवेष्टसिद्धौ उपेतुमित्यधिकपदत्वम्।

‡ पापे अभिनिवेश इतिवत् आसने इत्यत्र न पाचिकं कर्म्मत्वम्। उत्प्रेक्षाऽलङ्कारः।

**महामहानीलशिलारुचः पुरो**
**निषेदिवान् कंसकृषः स विष्टरे ।**
**श्रितोदयाद्रेरभिसायमुच्चकै-**
**रचूचुरच्चन्द्रमसोऽभिरामताम् ॥ १६ ॥**
**विधाय तस्यापचितिं प्रसेदुषः**
**प्रकाममप्रीयत यज्वनां प्रियः ।**

---

महामहेति ।—[ महामहानीलशिलारुचः ] महत्या महानीलशिलायाः सिंहलद्वीपसम्भवेन्द्रनीलोपलस्य रुगिव रुग् यस्य तस्येत्युपमाऽलङ्कारः । 'सिंहलस्थाकरोद्भूता महानीलास्तु ते स्मृताः' इति भगवानगस्त्यः । [ कंसकृषः ] हरिः [ पुरः ] अग्रे [ उच्चकैः ] उन्नते [ विष्टरे ] आसने । "वृक्षासनयोर्विष्टरः" (८।३।९३ पा०) इति षत्वम् । [ निषेदिवान् ] उपविष्टवान् । "भाषायां सदवसश्रुवः" ( ३।२।१०८ पा० ) इति क्वसुः । [ सः ] मुनिः [ अभिसायं ] सायंकालाभिमुखम् । अव्ययीभावसमासः । सायंकालस्य कार्ष्ण्यात् कृष्णोपमानत्वम् । [ श्रितोदयाद्रेः ] श्रित आश्रित उदयाद्रिरुदयाचलो येन तस्य, [चन्द्रमसोऽभिरामतां] शोभाम् [अचूचुरत्] चोरितवान्, प्राप्तवानित्यर्थः । "चुर स्तेये" "णिश्रि" ( ३।१।४८ पा० ) इति चङ् । अन्यस्यान्यधर्मसम्बन्धासम्भवात् चन्द्रमसोऽभिरामतामिवाभिरामतामित्यौपम्यपर्य्यवसानादसम्भवद्वस्तुसम्बन्धरूपो निदर्शनाभेदः, स चोक्तोपमया अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ १६ ॥

विधायेति ।—[ यज्वनां ] यज्वानो विधिनेष्टवन्तः । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । "सुयजोर्ङ्वनिप्" ( ३।२।१०३ पा० ) इति यजिधातोर्ङ्वनिप् । तेषां [ प्रियः ] हरिः [ प्रसेदुषः ] प्रसन्नस्य । "सदेः क्वसुः" इत्युक्तम् । [ तस्य ] मुनेः [ अपचितिं ] पूजाम् । 'पूजा नमस्यापचितिः' इत्यमरः । [ विधाय ] विशेषेण मनोवाक्कायकर्मभिस्तत्परतया कृत्वा । [ प्रकामम् ] अत्यर्थम् [ अप्रीयत ] प्रीतोऽभूत् ।

ग्रहीतुमार्य्यान् परिचर्य्यया मुहु-
र्महानुभावा हि नितान्तमर्थिनः ॥ १७ ॥

अशेषतीर्थोपहृताः कमण्डलो-
र्निधाय पाणावृषिणाभ्युदीरिताः ।
अघौघविध्वंसविधौ पटीयसी-
र्नतेन मूर्ध्ना हरिरग्रहीदपः ॥ १८ ॥

स काञ्चने यत्र मुनेरनुज्ञया
नवाम्बुदश्यामतनुर्न्यविक्षत । *

---

प्रीयतेर्दैवादिकात्कर्त्तरि लङ्। मुनिपूजायाः प्रीतिहेतुत्वेऽर्थान्तरं न्यस्यति,—[ महानुभावाः ] महात्मानः [ आर्य्यान् ] पूज्यान् [ परिचर्य्यया मुहुः, ग्रहीतुं ] वशीकर्त्तुम् । "ग्रहोऽलिटि दीर्घः" (७।२।३७ पा० ) इतीटो दीर्घत्वम् । [ नितान्तमर्थिनः ] अभिलाषवन्तः [ हि ] भवन्ति । अर्थनमर्थोऽभिलाषः स एषामस्तीति मत्वर्थ इनिः, न तु णिनिः, "कृद्वृत्तेस्तद्धितवृत्तिर्बलीयसी" इति भाष्यात् ॥ १७ ॥

अशेषेति ।—[ अशेषतीर्थोपहृताः ] अशेषेभ्यस्तीर्थेभ्य उपहृता आहृतास्तथा [ कमण्डलोः ] उदकपात्रादुद्धृत्येत्यर्थः ; क्रियान्तराक्षिप्त-क्रियापेक्षया कमण्डलोः अपादानत्वम् । "अस्त्री कमण्डलुः कुण्डी" इत्यमरः । [ पाणौ निधाय ऋषिणा, अभ्युदीरिताः ] आक्षिप्ताः अत एव [ अघौघविध्वंसविधौ ] अघौघानां पापसमूहानां विध्वंसविधौ विनाशकरणे [ पटीयसीः ] समर्थतराः । पटुशब्दात् ईयसुनि "उगितश्च" ( ४।१।६ पा० ) इति ङीप् । [ अपः ] जलानि [ हरिर्नतेन मूर्ध्ना, अग्रहीत् ] स्वीकृतवान् । ग्रहेर्लुङ् ॥ १८ ॥

स काञ्चने इति ।—[ नवाम्बुदश्यामतनुः, सः ] हरिः [ मुनेरनुज्ञया,

---

* नवाम्बुदश्यामवपुः" इति पाठान्तरम् ।

जिगाय जम्बूजनितश्रियः श्रियं
सुमेरुशृङ्गस्य तदा तदासनम् ॥ १९ ॥
स तप्तकार्त्तस्वरभास्वराम्बरः
कठोरताराऽधिपलाञ्छनच्छविः ।
विदिद्युते वाडवजातवेदसः
शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥ २० ॥

---

काञ्चने ] काञ्चनविकारे वैकारिकोऽण्प्रत्ययः। [ यत्र ] आसने [ न्यविक्षत ] उपविष्टवान्। निपूर्वविशो लुङि "नेर्विशः" ( १।३।१७ पा० ) इत्यात्मनेपदम्, "शल इगुपधादनिटः क्सः" ( ३।१।४५ पा० ) इति क्सः। [ तदासनं, तदा ] हर्युपवेशनसमये [ जम्बूजनितश्रियः ] जम्बूर्नीलफलविशेषः। 'जम्बूः सुरभिपत्रा च राजजम्बूर्महाफला' इत्यभिधानरत्नमालायाम्। तया जनिता श्रीर्यस्य तत्तथोक्तस्य। भाषितपुंस्कत्वात् पक्षे पुंवद्भावान्नुमभाव। * [ सुमेरुशृङ्गस्य श्रियं, जिगाय ] † अभिभूतवत् इत्यर्थः। "सन्लिटोर्जेः" ( ७।३।५७ पा० ) इति कुत्वम्। उपमाऽनुप्रासयोः संसृष्टिः ॥ १९ ॥

स तप्तेति।—[ तप्तकार्त्तस्वरभास्वराम्बरः ] तप्तं पुटपाकशोधितं कार्त्तस्वरं सुवर्णम्। 'रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमरः। तद्वद्भास्वरं दीप्यमानमम्बरं यस्य सः, पीताम्बर इत्यर्थः। [कठोरताराऽधिपलाञ्छनच्छविः] कठोरताराऽधिपस्य पूर्णेन्दोर्लाञ्छनस्य छविरिव छविर्यस्य सः, इत्युपमानपूर्वपदो बहुव्रीहिः, उत्तरपदलोपश्च।

---

* "तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य" ( ७।१।७४ पा० ) इति सूत्रेण पुंवद्भावात् "इकोऽचि विभक्तौ" (७।१।७३ पा०) इति नुमभावः। वस्तुतस्तु श्रीशब्दस्य नपुंसकलिङ्गशृङ्गशब्दस्य विशेषणत्वात् "जम्बूजनितश्रिणः" इति पाठं साधीयांसं मन्यामहे।

† जिगायेति क्रियापदस्य अनुचकार इत्यर्थः समीचीनः, अभिभवार्थत्वे स्वस्योत्कर्षप्रतीतेः व्यतिरेकालङ्कारप्रसङ्गात्।

रथाङ्गपाणेः पटलेन रोचिषा-
मृषित्विषः संवलिता विरेजिरे ।
चलत्पलाशान्तरगोचरास्तरो-
स्तुषारमूर्त्तेरिव नक्तमंशवः ॥ २१ ॥

प्रफुल्लतापिञ्छनिभैरभीषुभिः
शुभैश्च सप्तच्छदपांशुपाण्डुभिः ।

---

[ सः ] हरिः [ बाडवजातवेदसः ] बाडवाग्नेः [ शिखाभिः ] ज्वालाभिः [ आश्लिष्टः ] व्याप्तः [ अम्भसां, निधिरिव ] समुद्र इव [ विदिद्युते ] बभौ ॥ २० ॥ *

रथाङ्गपाणेरिति ।—रथाङ्गं चक्रं पाणौ यस्य तस्य [ रथाङ्गपाणेः ] हरेः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" † इति पाणेः परनिपातः । [ रोचिषां ] रुचीनां [ पटलेन ] समूहेन [ संवलिताः ] मिलिताः [ ऋषित्विषो, नक्तं ] रात्रौ । सप्तम्यर्थेऽव्ययम् । [ तरोः, चलत्पलाशान्तरगोचराः ] चलतां पलाशानां पत्राणामन्तराणि विवराणि गोचर आश्रयो येषां ते, तुषारा मूर्त्तिर्यस्य तस्य [ तुषारमूर्त्तेः ] इन्दोः [ अंशव इव, विरेजिरे ] चकाशिरे ‡ ॥ २१ ॥

प्रफुल्लेति ।—प्रफुल्लतीति प्रफुल्लं विकसितम् । 'फुल्लविकसने' इति धातोः पचाद्यजन्तम् । फलेर्निष्ठायाम् § "अनुपसर्गात् फुल्लक्षीवकृशो-ल्लाघाः" ( ८।२।५५ पा० ) इति निपातनात् प्रफुल्लमित्येवेति क्षीर-स्वामी । तापिञ्छस्य तमालस्य पुष्पं तापिञ्छम् । "फले लुक्" ( ४।३।

---

* पूर्णोपमा अलङ्कारः ।

† "वाहिताग्न्यादिषु" ( २।२।३७ पा० ) अत्र वार्त्तिकं सूत्रम् ।

‡ उपमाऽलङ्कारः ।

§ ञिफला विशरणे इति गणपाठः ।

परस्परेण च्छुरितामलच्छवी
तदैकवर्णाविव तौ बभूवतुः ॥ २२ ॥
युगान्तकालप्रतिसंहृतात्मनो-
जगन्ति यस्यां सविकाशमासत ।

---

१६३ पा० ) इति तद्धितलुक् । 'द्विहीनं प्रसवे सर्वम्' * इति नपुंसकत्वम् । 'कालस्कन्धस्तमालः स्यात्तापिञ्छोऽपि' इत्यमरः । तेन सदृशैः [ प्रफुल्लतापिञ्छनिभैः ] नित्यसमासत्वादस्वपदविग्रहः । अत एव 'स्युरुत्तरपदे त्वमी' इति 'निभसङ्काशनीकाशप्रतीकाशोपमादय' इत्यमरः । [ शुभैः ] मङ्गलैरनुद्वेजकैरित्यर्थः, [ सप्तच्छदपांशुपाण्डुभिः ] सप्त सप्त छदाः पर्णानि पर्वसु यस्येति सप्तच्छदो वृक्षभेदः । 'सप्तपर्णो विशालत्वक् शारदो विषमच्छदः' इत्यमरः । "सङ्ख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत्" इत्युक्तं भाष्ये; शेषं तापिञ्छवत् । तस्य पुष्पाणि सप्तच्छदानि तेषां पांशुवत्पाण्डुभिः शुभ्रैः [अभीषुभिः] अन्योऽन्यरश्मिभिः । 'अभीषुः प्रग्रहे रश्मौ' इति शाश्वतः । [ परस्परेण ] छुरिते रूषिते अमले छवी अन्योऽन्यकान्ती ययोस्तौ । [ छुरितामलच्छवी ] छव्योरभीषूणामवयवावयविभावाद्भेदनिर्देशः । [ तौ ] हरिनारदौ [ तदा एकवर्णाविव बभूवतुः ] उभयप्रभामेलनादुभयोरपि सर्वाङ्गीणो गङ्गायमुनासङ्गम इव स्फटिकेन्द्रनीलमणिप्रभामेलनप्रायः कश्चिदेको वर्णः प्रादुर्बभूव तन्निमित्ता चेयमनयोरेकवर्णत्वोत्प्रेक्षा, तया च अन्योऽन्यमेकक्रियाकरणादन्योऽन्यालङ्कारो व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ २२ ॥

युगान्तेति ।—[ युगान्तकालप्रतिसंहारात्मनः ] युगान्तकाले प्रतिसंहृता आत्मन्युपसंहृताः आत्मानो जीवा येन तस्य [ कैटभद्विषः ] हरेः [ यस्यां तनौ जगन्ति, सविकाशं ] सविस्तरम् [ आसत ] अतिष्ठन् ।

---

* अमरोक्तिः इयम् ।

तनौ ममुस्तत्र न कैटभद्विषः
स्तपोधनाभ्यागमसम्भवा मुदः ॥ २३ ॥
निदाघधामानमिवाधिदीधितिं
मुदा विकाशं मुनिमभ्युपेयुषी ।
विलोचने बिभ्रदधिश्रितश्रियी
स पुण्डरीकाक्ष इति स्फुटोऽभवत् ॥२४॥

---

'आस उपवेशने' लङ्। [ तत्र ] तनौ देहे [ तपोधनाभ्यागमसम्भवाः ] तपोधनाभ्यागमेन सम्भवन्तीति सम्भवाः सम्भूताः । पचाद्यच् । [ मुदः ] सन्तोषाः [ न ममुः ] अतिरिच्यन्ते स्मेत्यर्थः । चतुर्दशभुवनभरणपर्याप्ते वपुषि अन्तर्न मान्तीति कविप्रौढोक्तिसिद्धातिशयेन स्वतःसिद्धातिशयस्याभेदेनाध्यवसितत्वादतिशयोक्तिः, सा च मुदामन्तःसम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धासम्बन्धरूपा इति तयोः संसृष्टिः ॥२३॥ *

निदाघेति ।—[ निदाघधामानं ] निदाघमुष्णं धाम किरणो यस्य तथोक्तम्; 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' इति विश्वः । अर्कम् [इव, अधिदीधितिम्] अधिकतेजसं [मुनिम्, अभि] अभिलक्ष्य । "अभिरभागे" ( १।४।९१ पा० ) इति लक्षणे कर्मप्रवचनीयसंज्ञा, "कर्मप्रवचनीययुक्ते द्वितीया" ( २।३।८ पा० ) इति द्वितीया । [ मुदा विकाशमुपेयुषी] उपगते । क्वसुप्रत्ययान्तो निपातः । अत एव [अधिश्रितश्रियी ] अधिश्रिता प्राप्ता श्रीर्याभ्यां ते तथोक्ते। "इकोऽचि विभक्तौ" ( ७।१।७३ पा० ) इति नुमागमः । [ विलोचने बिभ्रत् ] "नाभ्य-

---

* दर्पणकारस्तु इममेव श्लोकम् "अधिक"नामालङ्कारस्य उदाहरणत्वेन प्रदर्शितवान् । "आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते" इति तदलङ्कारस्य लक्षणं दर्पणकारकृतम् । वस्तुतस्तु कविप्रौढोक्तिसिद्धातिशयेनाध्यवसितत्वेन आमोदरूपस्याश्रेयस्य आधिक्यसिद्धिरिति अतिशयोक्तिमूलोऽयमधिकालङ्कारः इति सर्वं सामञ्जसम् ।

सितं सितिम्ना सुतरां मुनेर्वपु-
र्विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः
शुचिस्मितां वाचमवोचदच्युतः ॥ २५ ॥

---

स्याच्छतुः" (७।१।७८ पा०) इति नुमभावः । [सः] हरिः [पुण्डरीकाक्षः इति] एवं [स्फुटोऽभवत्] । सूर्यसन्निधाने श्रीविकाशभावादक्ष्णां पुण्डरीकसाधर्म्यात् । पुण्डरीके इवाक्षिणी यस्येत्यवयवार्थलाभे पुण्डरीकाक्ष इति व्यक्तम् । अन्वर्थसंज्ञोऽभूदित्यर्थः । बिभ्रत् स्फुटोऽभवदिति पदार्थहेतुकस्य काव्यलिङ्गस्य निदाघधामानमिवेत्युपमा-सापेक्षत्वादनयोरङ्गाङ्गिभावेन सङ्करः ॥ २४ ॥

सितमिति ।—[अथ] उभयोरुपवेशनानन्तरम् [अच्युतः] हेतुकर्त्ता [विसारिभिः] अभीक्ष्णं प्रसरद्भिः "बहुलमाभीक्ष्ण्ये" (३।२।८१ पा०) इति णिनिः । [द्विजावलिव्याजनिशाकरांशुभिः] द्विजावलिर्दन्तपङ्क्तिः । "दन्तविप्राण्डजा द्विजाः" इत्यमरः । सैव व्याजः कपटं यस्य सः, तद्रूप इत्यर्थः । स चासौ निशाकरश्च तस्यांशुभिः किरणैः [सितं] स्वभावशुभ्रं [मुनेर्वपुः, सौधं] प्रासादम् [इव, सुतराम्] अत्यन्तम् । "अव्ययादामुप्रत्ययः" * । [सितिम्ना] धावल्येन, प्रयोज्यकर्त्ता [लम्भयन्] व्यापारयन्, अतिधवलयन्नित्यर्थः । लभेरत्र गत्युपसर्जनप्राप्त्यर्थत्वेनागत्यर्थत्वात् "गतिबुद्धि—" (१।४।५२ पा०) इत्यादिना अणिकर्त्तुर्न कर्मत्वम् । तथाऽऽह वामनः,—"लभेर्गत्यर्थत्वात् णिच्यणौ कर्त्तुः कर्मत्वाकर्मत्वे" इति । प्राप्त्युपसर्जनगत्यर्थत्वे तु कर्मत्वमेवेति रहस्यम् । "लभेश्च" (७।१।६४ पा०) इति नुमागमः । [शुचिस्मितां वाचम्, अवोचत्] उक्तवान् । ब्रुवो वचादेशः † लुङ् । "वच उम्"

---

* "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" (५।४।११ पा०) इति आमुः ।

† "ब्रुवो वचिः" (२।४।५३ पा०) ।

हरत्यघं सम्प्रति हेतुरेष्यतः
शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥२६॥
जगत्यपर्य्याप्तसहस्रभानुना
न यन्नियन्तुं समभावि भानुना ।
प्रसह्य तेजोभिरसङ्ख्यतां गतै-
रदस्त्वया नुन्नमनुत्तमं तमः ॥ २७ ॥

---

( ७।४।२० पा० ) इत्युसागमे गुणः । अत्र सौधमिवेत्युपमायाः सितिम्ना लम्भयन्नित्यसम्बन्धे सम्बन्धरूपातिशयोक्तेः द्विजावलिव्याजनिशाकरैरिति छलादिशब्दैरसत्यत्वप्रतिपादनरूपापह्नवस्य च मिथो नैरपेक्ष्यात् संसृष्टिः ॥ २५ ॥

हरतीति ।—[ भवदीयदर्शनं, शरीरभाजां ] द्रष्टॄणामित्यर्थः । "भजो ण्विः" ( ३।२।६२ पा० ) । [ कालत्रितये ] भूतादिकालत्रितये [ अपि, योग्यतां ] पवित्रतां [ व्यनक्ति ] गमयति । कुतः ? [ सम्प्रति ] दर्शनकाले [ अघं ] पापं [ हरति, ऐष्यतः ] भाविनः [ शुभस्य ] श्रेयसः [ हेतुः ] तथा [ पूर्वाचरितैः ] प्रागनुष्ठितैः [ शुभैः ] सुकृतैः [ कृतम् ] । एवं त्रैकाल्येऽपि कार्य्यत्वेन कारणत्वेन च पुंसि सुकृत-समवायमवगमयते, अत एतादृशं दर्शनं कस्य न प्रार्थ्यमिति भावः । अत्र हरतीत्यादिवाक्यत्रयस्यार्थस्य शरीरेत्यादिवाक्यं प्रति हेतुत्वोक्त्या वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २६ ॥

जगतीति ।—[ जगति, अपर्य्याप्तसहस्रभानुना ] अपर्य्याप्ता अपरि-च्छिन्नाः सहस्रं भानवः अंशवो यस्य तेन [भानुना] अर्केण 'भानवी-ऽर्कहरांशवः' इति वैजयन्ती । [यत्] तमः, [ नियन्तुं ] निवारयितुं [ न समभावि ] न शेके । भावे लुङ् । अविद्यमानमुत्तमं यस्मात् तत्

कृतः प्रजाक्षेमकृता प्रजासृजा
सुपात्रनिक्षेपनिराकुलात्मना ।
सदोपयोगेऽपि गुरुस्त्वमक्षयो
निधिः श्रुतीनां धनसम्पदामिव ॥ २८ ॥
विलोकनेनैव तवामुना मुने !
कृतः कृतार्थोऽस्मि निवर्हितांहसा ।

---

[ अनुत्तमं ] सर्वाधिकम् [ अदः, तमः ] मोहात्मकमिति भावः, [ असङ्गतां गतैस्तेजोभिः, प्रसह्य ] बलात् [ त्वया, नुन्नं ] छिन्नम् । अतः श्लाघ्यदर्शनो भवानिति भावः। "नुदविद—" ( ८।२।५६ पा० ) इत्यादिना विकल्पान्निष्ठानत्वभावः । अत्रोपमानाज्ज्ञानोर्मुनेराधिक्य-प्रतिपादनाद्व्यतिरेकालङ्कारः ॥ २७ ॥

कृत इति ।—[ प्रजाक्षेमकृता ] प्रजानां जनानाम् अपत्यानाञ्च क्षेमकृता कुशलकारिणा । 'प्रजा स्यात्सन्ततौ जने' इत्यमरः । [ सुपात्र-निक्षेपनिराकुलात्मना ] सुपात्रे योग्यपुरुषे, कटाहादिदृढभाजने च, निक्षेपेण निधानेन च निराकुलात्मना स्वस्थचित्तेन । 'योग्यभाज-नयोः पात्रम्' इत्यमरः । [ प्रजासृजा ] ब्रह्मणा पुत्रिणा च [ त्वं, धनसम्पदामिव, श्रुतीनां ] वेदानां [ सदोपयोगे ] दानभोगाभ्यां व्यये [ अपि अक्षयः ] एकत्राम्नानादन्यत्रानन्त्याच्चेति भावः । [ गुरुः ] उप-देष्टा, सम्प्रदायप्रवर्त्तक इति यावत्, अन्यत्र,—महान् । निधीयत इति [ निधिः ] निक्षेपः [ कृतः ] । "उपसर्गे घोः किः" ( ३।३।९२ पा० ) इति किः । श्रुतिसम्प्रदायद्वारा धर्म्माधर्म्मव्यवस्थापकतया जगत्प्रतिष्ठा-हेतूनां भवादृशां दर्शनं कस्य न श्लाघ्यम् ? इति भावः । अत्र शब्द-मात्रसाधर्म्यात् श्लेषोऽयं प्रकृतविषय इत्याहुः, उपमा त्वयमित्यनयोः सङ्करः ॥ २८ ॥

विलोकनेनेति ।—हे [ मुने ! निवर्हितांहसा ] अपहृतपाप्मना अत एव [ अमुना तव विलोकनेनैव कृतार्थः कृतोऽस्मि ; तथाप्यहं,

तथाऽपि शुश्रूषुरहं गरीयसी-
गिरोऽथवा श्रेयसि केन तृप्यते ? ॥ २९ ॥
गतस्पृहोऽप्यागमनप्रयोजनं
वदेति वक्तुं व्यवसीयते यया ।
तनोति नस्तामुदितात्मगौरवो
गुरुस्तवैवागम एष धृष्टताम् ॥ ३० ॥

---

गरीयसी ] अर्थवत्तराः । "द्विवचनविभज्योपपदे तरबीयसुनौ" ( ५।३।५७ पा० ) इति ईयसुन्प्रत्ययः, "उगितश्च" (४ १।६ पा०) इति ङीप्, "प्रियस्थिर" (६ ४ १५७ पा०) इत्यादिना गुरोर्गरादेशः । [गिरः] * तव वाचोऽपि [ शुश्रूषुः ] श्रोतुमिच्छुरस्मि । "श्रृणोतेः सनन्तादुप्रत्ययः" । † न चैतद् यथा इत्याह ।—[ अथवा ] तथा हीत्यर्थः । 'अथवेति पक्षान्तर-प्रसिद्धोः' इति गणव्याख्यानात् । [ श्रेयसि ] विषये [ केन तृप्यते ? ] न केपापीत्यर्थः । कृतार्थताया इयत्ताभावादिति भावः । भावे लट् ‡ ॥ २९ ॥

एवं प्रियमुक्त्वा सम्प्रत्यागमनप्रयोजनं विनयेन पृच्छति, गतस्पृहो-ऽपीति ।—[ गतस्पृहः ] विरक्त [ अपि ] त्वम् [ आगमनप्रयोजनं वदेति वक्तुं, यया ] धृष्टतया [ व्यवसीयते ] उद्यम्यते । स्यतेर्भावे लट् । [ उदितात्मगौरवः ] उदितमुत्पन्नम् उक्तं वा, आत्मनो मम गौरवं यस्मात् येन वा सः, [गुरुः] श्लाघ्यः [एष तव, आगमः] आगमनम् [ एव, नः ] अस्माकं [ तां धृष्टतां, तनोति ] विस्तारयति । "तनु विस्तारे" लट् । भवतो निस्पृहत्वेऽपि प्रेक्षावत्प्रवृत्तेः प्रयोजनव्याप्त्या सावकाशः प्रश्न इति भावः ॥ ३० ॥

---

* "न लोकाव्यय—" ( २।३।६९ पा० ) इत्यादिना षष्ठीप्रतिषेधः ।

† "सनाशंसभिक्ष उः" ( ३।२।१६८ पा० ) ।

‡ सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ।

इति ब्रुवन्तं तमुवाच स व्रती
न वाच्यमित्थं पुरुषोत्तम ! त्वया ।
त्वमेव साक्षात्करणीय इत्यतः
किमस्ति कार्य्यं गुरु योगिनामपि ॥ ३१ ॥

उदीर्णरागप्रतिरोधकं जनै-
रभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम् ।
उपेयुषो मोक्षपथं मनस्विन-
स्त्वमग्रभूमिर्निरपायसंश्रया ॥ ३२ ॥

---

इति ब्रुवन्तमिति ।—[ इति ब्रुवन्तं, तं ] हरिं [ स, व्रती ] मुनिः [ उवाच ]। किमिति ?—हे [ पुरुषोत्तम ! ] पुरुषेषु श्रेष्ठ ! "न निर्द्धारणे" ( २।२।१० पा० ) इति षष्ठीसमासप्रतिषेधः । [ त्वया इत्थं ] "गतस्पृहोऽपि" इत्यादि [ न वाच्यम् ] निस्पृहस्याप्यत्र प्रयोजनसम्भवादिति भावः। तदेवाह,—[ योगिनामपि त्वमेव, साक्षात्करणीयः ] प्रत्यक्षीकर्त्तव्यः [ इत्यतः ] अस्मादन्यद् [ गुरु कार्य्यं किमस्ति ? ] न किञ्चिदित्यर्थः। तस्मान्न प्रयोजनान्तरप्रश्नावकाश इति भावः * ॥ ३१ ॥

यदुक्तं योगिनामपि त्वमेव साक्षात्करणीय इति तदेव द्रढ़यति, उदीर्णरागेति ।—[ उदीर्णरागप्रतिरोधकम् ] उदीर्ण उद्रिक्तो रागो विषयाभिलाषः स एव, तद्युक्तश्च, प्रतिरोधकः प्रतिबन्धकः पाटच्चरश्च यस्मिन् । 'प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः' इत्यमरः । [ अभीक्ष्णमक्षुण्णतया ] अनभ्यस्तत्वेनाप्रतिहतत्वेन च। [ जनैरतिदुर्गमं मोक्षपथम् ] अपवर्गमार्गं कान्तारञ्च [उपेयुषः] प्राप्तवतः। "उपेयिवान्—" ( ३।२।१०९ पा० ) इत्यादिना क्वस्वन्तो निपातः। [ मनस्विनः ] सुमनसः धीरस्य च। प्रशंसायां विन्। [ त्वम् ] एव [ निरपायसंश्रया ]

---

* द्वितीयार्द्धवाक्यार्थस्य द्वितीयपादवाक्यार्थं प्रति हेतुत्वात् काव्यलिङ्गमलङ्कारः।

**उदासितारं निगृहीतमानसै-**
**र्गृहीतमध्यात्मदृशा कथञ्चन ।**
**बहिर्विकारं प्रकृतेः पृथग्विदुः**
**पुरातनं त्वां पुरुषं पुराविदः ॥ ३३ ॥**

निरपायः पुनरावृत्तिरहितः संश्रयः प्राप्तिर्यस्याः सा तथोक्ता। 'न स पुनरावर्त्तते' इति श्रुतेः। [अग्रभूमिः] प्राप्यस्थानम्। 'अग्रमालम्बने प्राप्ये' इति विश्वः। 'सोऽहम्' * इत्यादि श्रुतेस्तत्प्राप्तेरेव मोक्षत्वादिति भावः। तस्मान्मुमुक्षूणामपि त्वमेव साक्षात्करणीय इति सिद्धम्। 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाय' [श्वेता० उप० ३ अध्या० ८ मन्त्रः] इति श्रुतेः। यथा कस्यचित् कुतश्चित्सङ्कटात् निर्गतस्य केनचित् कान्तारेण गतस्य किञ्चिन्निर्बाधस्थानप्राप्तिरभयाय कल्पते, तथा त्वमपि मुमुक्षोरिति ध्वनिः ॥ ३२ ॥

ननु प्रकृतिविविक्तपुरुषसाक्षात्कारान्मोक्षो नास्मत्साक्षात्कारादित्याशङ्क्य सोऽपि त्वमेवेत्याह, उदासितारमिति।—[पुराविदः] पूर्वज्ञाः कपिलादयः [त्वां, निगृहीतमानसैः] अन्तर्निबद्धचित्तैर्योगिभिः आत्मनि अधि इत्यध्यात्मम्; विभक्त्यर्थेऽव्ययीभावः † "अनश्च" (५।४।१०८ पा०) इति समासान्तष्टच्। अध्यात्मं या दृग् ज्ञानं तया [अध्यात्मदृशा] प्रत्यग्दृष्ट्या [कथञ्चन, गृहीतं] साक्षात्कृतम्। केन रूपेण गृहीतमित्यत आह,—[उदासितारं] उदासीनम्। प्रकृतौ स्वार्थप्रवृत्तायामपि स्वयमप्राकृतत्वादस्पृष्टमित्यर्थः। आसेस्तृच्। विकारेभ्यो बहिः [बहिर्विकारं] महदादिभ्यः पृथग्भूतमित्यर्थः। "अपपरिबहिरञ्चवः पञ्चम्या" (२।१।१२ पा०) इत्यव्ययीभावः। किञ्च [प्रकृतेः] त्रैगुण्यात्मनो मूलकारणात् [पृथग्] भिन्नम्। 'प्रकृतिः पञ्चभूतेषु प्रधाने

* [छान्दो० उप० ७ अध्या० ३ मन्त्रः]।

† "अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथाऽऽनुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु" (२।१।६ पा०)।

निवेशयामासिथ हेलयोद्धृतं
फणाभृतां छादनमेकमोकसः ।
जगत्त्रयैकस्थपतिस्त्वमुच्चकै-
रहीश्वरस्तम्भशिरःसु भूतलम् ॥ ३४ ॥

---

मूलकारणे' इति यादवः। पुरा भवं [ पुरातनम् ] अनादिम्। "सायञ्चिरम्" (४।३।२३ पा०) इत्यादिना ट्युप्रत्ययः। [ पुरुषं ] पुरुषपदवाच्यं विज्ञानघनं * [ विदुः ] विदन्ति। "विदो लटो वा" (३।४।८३ पा०) इति झेरुसादेशः। यथाहुः,—'मूलप्रकृतिरविकृति-र्महदाद्याः प्रकृतिविकृतयः सप्त। षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥' (सांख्य० त० कौ० ३ का०) इति। 'अजामेकां लोहितशुक्लकृष्णाम्' [ श्वेता० उप० ४अध्या० ५मन्त्रः ] इत्यादि श्रुतिश्च। सोऽपि त्वमेव 'तत्त्वमसि' [ छान्दो० उप० ६अध्या० ८खण्ड ७मन्त्रः ] इत्यादिवाक्यैरैक्यश्रवणात्। तस्मात् त्वमेव साक्षात्करणीय इति सुष्ठूक्तमिति भावः॥ ३३॥

एवं भगवतो निर्गुणस्वरूपमुक्त्वा सम्प्रति प्रस्तुतोपयोगितया सगुण-माश्रित्य षड्भिः स्तौति, निवेशयामासिथेति।—[ जगत्त्रयैकस्थपतिः ] जगत्त्रयस्य एकस्थपतिरेकाधिपतिः एकशिल्पी च। 'स्थपतिरधिपतौ तक्ष्णि वृहस्पतिसचिवयोः' इति वैजयन्ती। [ त्वं हेलयोद्धृतं ] वराहा-वतारे इति भावः। [फणाभृताम्, ओकसः] आश्रयस्य सद्मनश्च। 'ओकः सद्मनि चाश्रये' इति विश्वः। [ एकं, छादनम् ] आवरणं [ भूतलम्, उच्चकैः ] उन्नतेषु च [ अहीश्वरस्तम्भशिरःसु ] अहीश्वरः शेष एव स्तम्भः तस्य शिरःसु मूर्द्धसु अग्रेषु च, फणासहस्रेष्विति भावः। [ निवेशया-मासिथ ] निवेशितवानसि। विशतेर्ण्यन्तात् लिटि थल्। "कृञ्चानु-प्रयुज्यते लिटि" (३।१।४० पा) इत्यस्तेरनुप्रयोगः। अत्र श्लिष्टाश्लिष्ट-रूपकयोर्हेतुहेतुमद्भावाच्छ्लिष्टं परम्परितरूपकम्॥ ३४॥

---

* "विज्ञानघन एव" [ वृह० उप० २अध्या० ४ब्रा० १२ मन्त्रः ]।

अनन्यगुर्वास्तव * केन केवलः
पुराणमूर्त्तेर्महिमाऽवगम्यते ?।
मनुष्यजन्माऽपि सुरासुरान् गुणै-
र्भवान् भवच्छेदकरैः † करोत्यधः॥ ३५॥
लघूकरिष्यन्नतिभारभङ्गुरा-
ममूं किल त्वं त्रिदिवादवातरः।

---

अनन्येति।—न विद्यतेऽन्यो गुरुर्यस्यास्तस्या [ अनन्यगुर्वाः ] इत्यनीकारान्तः पाठः। समासात्प्राङ् ङीपि "नद्यृतश्च" ( ५।४।१५३ पा० ) इति कप्प्रसङ्गः स्यात्, पश्चात्त्वनुपसर्ज्जनाधिकारात् "वोतो गुणवचनात् ( ।१।४४ पा० ) इति न प्राप्नोति, "ङिति ह्रस्वश्च" (१।४।६ पा०) इति वा नदीसंज्ञात्वात् "आण्नद्याः" ( ७।३।११२ पा० ) इत्याड़ागमः। केचित्तु "समासान्तविधिरनित्यः" इति कपं वारयन्ति। तस्याः सर्वोत्तमायाः [ तव, पुराणमूर्त्तेः ] अमानुषस्वरूपस्य [ केवलः ] कृत्स्नः। 'केवलः कृत्स्न एकः स्यात् केवलश्चावधारणे' इति विश्वः। [ महिमा केनावगम्यते ? ] न केनापीत्यर्थः। कुतः ?—मनुष्याज्जन्म यस्य सः [ मनुष्यजन्मा अपि भवान् ] "अवर्ज्यो हि बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः" इति वामनः। [ भवच्छेदकरैः ] संसारनिवर्त्तकैः [ गुणैः ] ज्ञानादिभिः [ सुरासुरान् ] सुरासुरविरोधस्य कार्योपाधिकत्वेनाशाश्वतिकत्वात् "येषाञ्च विरोधः शाश्वतिकः" (२।४।९ पा०) इति न द्वन्द्वैकवद्भाव इत्याहुः। [ अधः करोति ]। "शेषे प्रथमः" ( १।४।१०८ पा० ) इति प्रथमपुरुषः। भवच्छब्दस्य युष्मदस्मदन्यत्वेन शेषत्वादिति। मानुष एव ते महिमा दुरवगाहः, अमानुषस्तु किम् ? इति तात्पर्य्यार्थः। द्वितीयार्द्धेऽसकृद्वाञ्जनावृत्त्या छेकानुप्रासः॥ ३५॥

लघूकरिष्यन्निति।—[ त्वम्, अतिभारभङ्गुराम् ] अतिभारेण ऊर्जेन

---

* "अनन्यगुर्व्याः" इति पाठान्तरम्। † "भवोच्छेदकरैः" इति पाठान्तरम्।

**उदूढलोकत्रितयेन साम्प्रतं**
**गुरुर्धरित्री क्रियतेतरां त्वया ॥ ३६ ॥**
**निजौजसोज्जासयितुं जगद्‌द्रुहा-**
**मुपाजिहीथा न महीतलं यदि ।**
**समाहितैरप्यनिरूपितस्ततः**
**पदं दृशः स्याः कथमीश ! मादृशाम् ? ॥ ३७॥**

---

स्वरूपेण भङ्गुरां स्वयं भज्यमानाम्। "भञ्जभासमिदो घुरच्" (३।२।१६१ पा०) इति घुरच्प्रत्ययः। "भङ्गुरः कर्मकर्त्तरि" इति वामनः। [अमूं] भुवमित्यर्थः। [लघूकरिष्यन्] निर्भारां करिष्यन् [किल]। "कृभ्वस्तियोगे" (५।४।५० पा०) इत्यादिना अभूततद्भावे च्विः, "च्वौ च" (७।४।२६ पा०) इति दीर्घः। [त्रिदिवात्] तृतीया द्यौस्त्रिदिवः स्वर्गस्तस्मात्। वृत्तिविषये सङ्ख्याशब्दस्य पूरणार्थत्वं त्रिभागादिवत्। * [अवातरः] अवतीर्णोऽसि। [साम्प्रतं] सम्प्रति। [उदूढलोकत्रितयेन] कुक्षाविति शेषः। [त्वया धरित्री, गुरुः] पूज्या भारवती च [क्रियतेतराम्] अतिशयेन क्रियते। "तिङश्च" (५।३।५६ पा०) इति तरप्। "किमेत्तिङव्ययघात्—" (५।४।११ पा०) इत्यादिना आमुप्रत्ययः। लघुकर्त्ता गुरुकर्त्तेति विरोधाभासोऽलङ्कारः। 'आभासत्वे विरोधस्य विरोधाभास उच्यते' इति लक्षणात् ॥ ३६ ॥

निजेति।—[निजौजसा] स्वतेजसा [जगद्‌द्रुहां] जगन्ती द्रुह्यन्तीति जगद्‌द्रुहः कंसादयः। "सत्सूद्विष—" (३।२।६१ पा०) इत्यादिना क्विप्। तेषां [उज्जासयितुं] तान् हिंसितुमित्यर्थः, "जासिनिप्रहण—" (२।३।५६ पा०) इत्यादिना कर्मणि शेषे षष्ठी। "जसु हिंसायाम्" इति चुरादिः। [महीतलं नोपाजिहीथाः यदि] नाव-

---

* यद्वा,—त्रयी ब्रह्मविष्णुरुद्राः दीव्यन्ति अत्र इति घञर्थे कविधानम्।

उपप्लुतं पातुमदो मदोद्धतै-
स्त्वमेव विश्वम्भर ! विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः
क्षपातमस्काण्डमलीमसं नभः ? ॥ ३८ ॥

---

तरेश्चेत्। "ओहाङ् गतौ" लङि थासि रूपम्। * [ततः] तर्हि [समाहितैः अपि] समाधिनिष्ठैरपि। सकर्मकादप्याश्रितादिवदविवक्षिते कर्मणि कर्त्तरि क्तः; अथवा समाहितैः समाहितचित्तैरित्यर्थः। विभक्तधनेषु 'विभक्ता भ्रातरः' इतिवदुत्तरपदलोपो द्रष्टव्यः। "गम्यमानार्थस्याप्रयोग एव लोपः" इति कैयटः। [अनिरूपितः] अगृहीतस्त्वम् [ईश ! मादृशां] चर्मचक्षुषामिति भावः। विनयोक्तिरियम्। [दृशः] दृष्टेः [पदं] गोचरः [कथं स्याः ?] न कथञ्चिदित्यर्थः। तस्मात्त्वत्साक्षात्कार एवागमनप्रयोजनमिति भावः॥ ३७ ॥

ननु कोऽयं नियमो यन्ममैवायं दुष्टनिग्रहाधिकार इत्याशङ्क्य अनन्यसाध्यत्वमेवाह, उपप्लुतमिति।—विश्वं बिभर्त्तीति विश्वम्भरः तत्सम्बुद्धौ, हे [विश्वम्भर !] विश्वत्रातः ! "संज्ञायां भृतॄवृजि—" (३।२।४६ पा०) इत्यादिना खच्प्रत्यये, "अरुर्द्विषत्—" (६।३।६७ पा०) इत्यादिना मुमागमः। [मदोद्धतैः] कंसादिभिः [उपप्लुतं] पीड़ितम् [अदः विश्वं पातुं त्वमेव, ईशिषे] शक्तोऽसि, विश्वम्भरत्वादिति भावः। "ईश ऐश्वर्य्ये" लटि थासि रूपम्। † अत्र वैधर्म्येण

---

* "उपाजिहीथाः" इति क्रियापदस्य लङि थासि रूपमपेक्ष्य आङ्पूर्वकस्य हाङ् धातोः लिङि थासि रूपमेव साधुतया प्रतिभाति, यदिशब्दयोगेन लिङ एव औचित्यात्।

† अत्र "लिटि थासि रूपम्" इति तु क्वचित् प्रामादिकः पाठः; लिटि तु तादृशविभक्तिस्वरूपाभावात्, तत्र "थास्" इति विभक्तिः दृश्यते, तस्याः से आदेशे तु ईशाञ्चकृषे इत्येवं पदं भवति।

करोति कंसादिमहीभृतां वधा-
ज्जनो मृगाणामिव यत्तव * स्तवम् ।
हरे ! † हिरण्याक्षपुरःसरासुर-
द्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥ ३९ ॥

---

दृष्टान्तमाह,—[ क्षपातमस्काण्डमलीमसं ] क्षपायास्तमस्काण्डैस्तमोवर्गैः। 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः। "कस्कादिषु च" ( ८।३।४८ पा० ) इति विसर्जनीयस्य सत्वम्। मलीमसं मलिनम्। 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः। "ज्योत्स्ना-तमिस्रा—" ( ५।२।११४ पा० ) इत्यादिना मत्वर्थीयो निपातः। [ नभः क्षालयितुं, रवेः ऋते ] रविं विना। "अन्यारादितरर्त्ते—" ( २।३।२९ पा० ) इति पञ्चमी। [ कः क्षमेत ] शक्नुयात्? न कोऽपीत्यर्थः। अत्र वाक्यद्वये समानधर्मस्यैकस्यैवोक्ते क्षमेतेति शब्दद्वयेन वस्तुभावेन निर्देशात् तत्रापि व्यतिरेकमुखत्वाद्वैधर्म्येण प्रतिवस्तूपमाऽलङ्कारः। तदुक्तमलङ्कारसर्वस्वे,—"वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्-निर्देशे प्रतिवस्तूपमा" इति ॥ ३८ ॥

करोतीति।—किञ्च, [जनो मृगाणामिव कंसादिमहीभृतां वधात्] हेतोः [ स्तवं ] स्तोत्रम्। 'स्तवः स्तोत्रं नुतिर्नुतिः' इत्यमरः। [ करोति ] इति [ यत् ]। हे [ हरे ! ] हे कृष्ण ! हे सिंहेति च गम्यते। [ सा ] स्तुतिक्रिया [ हिरण्याक्षपुरःसरासुरद्विपद्विषः ] हिरण्याक्षपुरःसराः हिरण्याक्षप्रभृतयो ये असुरास्त एव द्विपास्तेषां द्विषः, हन्तुरित्यर्थः। तस्य [ तव, प्रत्युत ] वैपरीत्येन, 'प्रत्युतेत्युक्तवैपरीत्ये' इति गणव्याख्या-नात्। [ तिरस्क्रिया ] अवमानः। यदिति सामान्ये नपुंसकम्। सेति विधेयलिङ्गम्। गजघातिनः सिंहस्य मृगवधवर्णनमिव महासुरहन्तुस्तव कंसादिक्षुद्रनृपवधवर्णनं तिरस्कार एव इत्यर्थः। अत्र असुरद्विपानामिति हरिरेव हरिरिति श्लिष्टपरम्परितरूपकं मृगाणामिवेत्युपमयाऽङ्गाङ्गि-भावेन सङ्कीर्यते ॥ ३९ ॥

---

* "यस्तव" इति वा पाठः।		† "हरेः" इति वा पाठः।

प्रवृत्त एव स्वयमुज्झितश्रमः
क्रमेण पेष्टुं भुवनद्विषामसि ।
तथाऽपि वाचालतया युनक्ति मां
मिथस्त्वदाभाषणलोलुपं मनः ॥ ४० ॥

तदिन्द्रसन्दिष्टमुपेन्द्र ! यद्वचः
क्षणं मया विश्वजनीनमुच्यते ।
समस्तकार्य्येषु गतेन धुर्य्यता-
महिद्विषस्तद्भवता निशम्यताम् ॥ ४१ ॥

---

एवं स्तुत्या देवमभिमुखीकृत्यागमनप्रयोजनं वक्तुमुपोद्घातयति, प्रवृत्त इति ।—त्वम्, [उज्झितश्रमः] त्यक्तश्रमः सन् [क्रमेण, भुवनद्विषां] भुवनानि द्विषन्तीति भुवनद्विषः दुष्टास्तेषां [पेष्टुं] तान् हिंसितु-मित्यर्थः । "जासिनिप्रहण—" (२।३।५६ पा०) इत्यादिना कर्मणि शेषे षष्ठी । [स्वयम्] अपरप्रेरित [एव प्रवृत्तोऽसि] । एवं तर्हि पिष्टपेषणं किमिति चेत् तत्राह,—[तथाऽपि] स्वतः प्रवृत्तत्वेऽपि [मिथः] रहसि [त्वदाभाषणलोलुपं] त्वदाभाषणे त्वया सह संलापे लोलुपं लुब्धम् 'लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ' इत्यमरः । [मनो मां वाचालतया] सह [युनक्ति] वाचालं करोतीत्यर्थः । कुत्सिताः वाचो बह्वोऽस्य सन्तीति वाचालः । "आलजाटचौ बहुभाषिणि" (५।२।१२५ पा०) इत्यालच् । 'स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्' इत्यमरः ॥ ४० ॥

अथ स्ववाक्यश्रवणं सहेतुकं प्रार्थयते, तदिति ।—[तत्] तस्मादि-न्द्रमुपगतः उपेन्द्रः इन्द्रावरजः तत्सम्बोधने, हे [उपेन्द्र !] अत एव [इन्द्रसन्दिष्टं] श्रोतव्यमिति भावः । किञ्च, विश्वस्मै जनाय हितं [विश्वजनीनम्] । "आत्मन्विश्वजनभोगोत्तरपदात् खः" (५।१।९

अभूदभूमिः प्रतिपक्षजन्मनां
भियां तनूजस्तपनद्युतिर्दितेः ।
यमिन्द्रशब्दार्थनिसूदनं हरे-
र्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥ ४२ ॥

पा० ) इति खः । [ यद्वचः, क्षणं ] न तु चिरं, [ मयोच्यते, तद् ] वचः [ अहिद्विषः ] वृत्रघ्नः । 'सर्पे वृत्रासुरेऽप्यहिः' इति वैजयन्ती । [ समस्तकार्य्येषु, धुर्य्यतां ] धुरन्धरत्वं [गतेन] अतोऽपि [ भवता निशम्यताम् ] । प्रार्थनायां लोट् । धुरं वहतीति धुर्य्यः । "धुरो यड्ढकौ" (४।४।७७पा०) इति यत्प्रत्ययः । स्फुटमत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४१ ॥

अथ शिशुपालो हन्तव्य इति वक्तुं तस्यावश्यवध्यत्वेऽनन्यवध्यत्वज्ञापनोपयिकतया औद्धत्यप्रकटनार्थं जन्मान्तरवृत्तान्तं तावदुद्घाटयति, अभूदिति ।—[ प्रतिपक्षजन्मनां ] प्रतिपक्षाच्छत्रोः जन्म यासां तासां [ भियाम्, अभूमिः ] अविषयः, निर्भीक इत्यर्थः । [ तपनद्युतिः ] सूर्य्यप्रतापः [दितेस्तनूजः] दैत्यः [अभूत्] । कोऽसावत आह,—[हरेः] इन्द्रस्य [इन्द्रशब्दार्थनिसूदनम्] इन्दतीति इन्द्रः । "इदि परमैश्वर्य्ये, ऋज्रेन्द्र—" ( उ० पा० २।२८ सू० ) इत्यादिना रन्प्रत्ययान्तः औणादिकनिपातः । तस्य इन्द्र इति शब्दस्येन्द्र इति संज्ञापदस्य योऽर्थः परमैश्वर्य्यलक्षणः तस्य निसूदनं निवर्त्तकम् । कर्त्तरि ल्युट् । हरेरैश्वर्य्यनिहन्तारमित्यर्थः । [ यं ] दैत्यं [ हिरण्यपूर्वं कशिपुं ] कशिपुशब्दं [ प्रचक्षते ] हिरण्यकशिपुमाहुरित्यर्थः । अत्र हिरण्यशब्दपूर्वकत्वं कशिपुशब्दस्यैव, न तु संज्ञिनस्तदर्थस्येति, शब्दपरस्य कशिपुशब्दस्यार्थगतत्वेनाप्रयोज्यस्य प्रयोगादवाच्यवचनाख्यार्थदोषमाहुः । "यदेवावाच्यवचनमवाच्यवचनं हि तत्" इति समाधानम् । एवंविधविषये शब्दपरेणार्थलक्षणेति कथञ्चित् सम्पाद्यमित्युक्तमस्माभिः, "देवपूर्वं गिरिं ते" * इति । 'धनुरूपपदमस्मै

* मेघदूते पूर्वमेघे ४२ श्लोकः ।

**समत्सरेणासुर इत्युपेयुषा**
**चिराय नाम्नः प्रथमाभिधेयताम् ।**
**भयस्य पूर्वावतरस्तरस्विना**
**मनस्सु येन द्युसदां न्यधीयत ॥ ४३ ॥**

---

वेदमभ्यादिदेश' * इत्येतद्व्याख्यानावसरे सञ्जीवन्यां घण्टापथे च, विशेषश्चात,—यं दैत्यमुद्दिश्य हिरण्यपूर्वं कशिपुं प्रचक्षते संज्ञात्वेन प्रयुञ्जते † ॥ ४२ ॥

समत्सरेणेति ।—[ समत्सरेण ] अन्यशुभद्वेषसहितेन । 'मत्सरोऽन्य-शुभद्वेषे' इत्यमरः । अस्यतीत्यसुरः "असेरुरन्" ( उ० पा० १।४२ सू० ) [ असुर इति नाम्नः, चिराय ] चिरकालेन । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः । [प्रथमाभिधेयतामुपेयुषा] अन्वर्थतया मुख्यार्थतां गतेन [ तरस्विना ] बलवता । 'तरसी बलरंहसी' इति विश्वः । [ येन ] हिरण्यकशिपुना, दिवि सीदन्तीति तेषां [ द्युसदां ] देवानां, [ मनस्सु भयस्य, पूर्वावतरः ] प्रथमप्रवेशः । "ऋदोरप्" ( ३।३।५७ पा० ) इत्यप् । [ न्यधीयत ] निहितः । धाञः कर्मणि लङ् । अस्मादेव देवानां प्रथमं भयस्योत्पत्तिरभूदित्यर्थः ॥ ४३ ॥

---

* किरातार्ज्जुनीये अष्टादशसर्गे ४१ श्लोकः ।

† अत्रेदमाकूतम् ; तथा हि,—हिरण्योपपदपूर्वकत्वं हि कशिपुशब्दस्य न तु तत्पदोपस्थाप्यासुरविशेषरूपार्थस्य हिरण्यपूर्वकत्वस्य शब्दगतत्वात् न तस्य विवक्षितार्थप्रत्यायकत्वं, तथा च एतेन हिरण्यपूर्वककशिपुशब्देन न प्रत्येतव्यार्थलाभः सम्भवति ; अत एव तथाविधशब्दस्य अभीप्सितार्थबोधाक्षमत्वेन नव्यमते अवाचकत्व-दोषावसरः इत्याक्षेपः ; तदुद्धारस्तु लक्षणामाश्रित्यैव करणीय इति ; तथा हि, हिरण्य-शब्दविशेषितेन कशिपुशब्देन हरेः परमैश्वर्य्यनिवर्त्तनयोग्यः हिरण्यकशिपुः दितिसुत एवात्र लक्ष्यार्थः अध्यवसितः, परन्तु रूढिप्रयोजनाद्यभावादेवैतस्य सम्पाद्यतया टीकाकृता कथञ्चित् इत्युक्त्या अस्वरसः सूचित इति बोध्यम् ।

दिशामधीशांश्चतुरो यतः सुरा-
नपास्य तं रागहृताः सिषेविरे।
अवापुरारभ्य ततश्चला इति
प्रवादमुच्चैरयशस्करं श्रियः ॥ ४४ ॥

पुराणि दुर्गाणि निशातमायुधं
बलानि शूराणि घनाश्च कञ्चुकाः।
स्वरूपशोभैकफलानि * नाकिनां
गणैर्यमाशङ्क्य तदादि चक्रिरे ॥ ४५ ॥

---

दिशामिति।—[ श्रियः ] सम्पदः [ यतः ] यदेत्यर्थः [ दिशामधीशान् ] दिक्पतीनपि [ चतुरः, सुरान् ] इन्द्रवरुणयमकुवेरान् [ अपास्य ] त्यक्त्वा [ तं ] हिरण्यकशिपुं [ रागहृताः ] अनुरागाकृष्टाः सत्यः, न तु बलादिति भावः। [ सिषेविरे ]। यतो वीरप्रियाः श्रियः इति भावः। [ ततः आरभ्य ] तदाप्रभृति अयशः करोतीति [ अयशस्करं ] दुष्कीर्त्तिहेतुमित्यर्थः। "कृञो हेतुताच्छील्यानुलोम्येषु" ( ३।२।२० पा० ) इति टप्रत्ययः। "अतः कृकमि—" ( ८।३।४६ पा० ) इत्यादिना विसर्जनीयस्य सत्वम्। [ उच्चैः ] प्रचुरं [ चलाः ] अस्थिराः [ इति, प्रवादं ] जनापवादम् [ अवापुः ]। दिगीशानामपि सर्वस्वहारित्वात् तदौद्धत्यस्य प्राकाम्यमिति भावः ॥ ४४ ॥ †

पुराणीति।—[ च ] किञ्च, [नाकिनां] सुराणां [गणैः, यं] हिरण्यकशिपुम् [ आशङ्क्य ] बाधकत्वेनोत्प्रेक्ष्य स कालः आदिर्यस्मिंस्तत् [ तदादि ] तदाप्रभृति [ स्वरूपशोभैकफलानि ] स्वरूपशोभैवैकं

---

* "स्वरूपशोभैकगुणानि" इति पाठान्तरम्।

† असम्बन्धे सम्बन्धरूपा अतिशयोक्तिः।

स सञ्चरिष्णुर्भुवनान्तरेषु यां
यदृच्छयाऽशिश्रियदाश्रयः श्रियः *।
अकारि तस्यै मुकुटोपलस्खलत्-
करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥ ४६ ॥

---

फलं मुख्यं प्रयोजनं येषु, तेषां सुरादीनामित्यर्थः, तानि तथोक्तानि। प्रागीदृगसाध्यशत्रोरभावादिति भावः। "नपुंसकमनपुंसकेन—" (१।२।६९ पा०) इत्यादिना नपुंसकशेषः। [पुराणि, दुर्गाणि] प्राकारपरिखादिना अगम्यानि [चक्रिरे]। "सुदुरोरधिकरणे" (वा०) इति गमेर्डः। [आयुधं, निशातं] निशितं "चक्रे" इति विभक्तिविपरिणामेनान्वयः। 'शो तनूकरणे' इति धातोः क्तः, "शाच्छोरन्यतरस्याम्" (७।४।४१ पा०) इति इत्वविकल्पात् पक्षे आत्त्वम्। [बलानि] सैन्यानि [शूराणि] शौर्य्यवन्ति चक्रिरे सम्पादितानि। [कञ्चुकाः] वारबाणाः, लोहवर्माणीत्यर्थः, 'कञ्चुको वारबाणोऽस्त्री' इत्यमरः। [घनाः] दुर्भेदाः चक्रिरे। इत्थं नित्यसन्नद्धा जाग्रति स्मेत्यर्थः ॥ ४५ ॥ †

स इति।—अन्येषु भुवनेषु [भुवनान्तरेषु] "सुप्सुपा" इति समासः। [सञ्चरिष्णुः] सञ्चरणशीलः। "अलङ्कृञ्—" (३।२।१३६ पा०) इत्यादिना चरेरिष्णुच्। [श्रियः] लक्ष्म्याः [आश्रयः, सः] हिरण्यकशिपुः। [यदृच्छया] स्वैरवृत्त्या। 'यदृच्छा स्वैरवृत्तिः' इत्यमरः। [यां] दिशम्, [अशिश्रियत्] अगमत्। श्रयतेर्लुङ् "णिश्रि—" (३।१।४८ पा०) इत्यादिना चङि द्विर्भावः इयङादेशः। [मुकुटोपलस्खलत्करैः] मुकुटोपलेषु मौलिरत्नेषु स्खलन्तः कराः येषां तैः,

---

* "श्रियाम्" इति वा पाठः।

† अत्र हि "पुराणि दुर्गाणि" इत्यादि वाक्यानां तदादीति हेतोः वाक्यगतत्वात् काव्यलिङ्गमलङ्कारः।

सटाच्छटाभिन्नघनेन बिभ्रता
नृसिंह ! सैंहीमतनुं तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरै-
रुरोविदारं प्रतिचस्करे नखैः ॥ ४७ ॥

---

शिरसि बद्धाञ्जलिभिरित्यर्थः । 'उपलः प्रस्तरे रत्ने' इति विश्वः । तिस्रो दशा बाल्यकौमारयौवनानि, जन्मसत्ताध्वंसयो वा येषां तैः [ त्रिदशैः ] देवैः ; यद्वा,—त्रिर्दश परिमाणमेषाम् इति "बहुव्रीहौ संख्येये डजबहुगणात्" ( ५।४।७३ पा० ) इति समासान्तः डच् । तिस्रः सन्ध्याः समाहृताः [ त्रिसन्ध्यम् ] । "तद्धितार्थोत्तरपद—" ( २।१।५१ पा० ) इत्यादिना समाहारे द्विगुः । 'द्विगुरेकवचनम्' ( २।४।१ पा० ) वा टाबन्त इति पक्षे नपुंसकत्वम्, "अत्यन्तसंयोगे च" ( २।१।२९ पा० ) इति द्वितीया । [ तस्यै दिशे ] । "नमःस्वस्ति—" ( २।३।१६ पा० ) इत्यादिना चतुर्थी । [ नमः ] नमस्कारः [ अकारि ] कृतम् । कृञः कर्मणि लुङ् । "चिण् भावकर्मणोः" ( ३।१।६६ पा० ) इति चिण् । सन्ध्यावन्दनेऽपि दिङ्नियमं परित्यज्य तदागमनभयात् तस्यै दिशे नमस्कारः कृत इति भावः ॥ ४६ ॥ *

अथ सोऽपि त्वयैव हत इत्याह, सटाच्छटेति ।—हे [ नृसिंह ! ] ना सिंह इव इति उपमितसमासः । ना चासौ सिंहश्चेत्यपि प्रस्तावात् । सिंहस्येमां [ सैंहीं, तनुं ] कायं [ बिभ्रता ] नृसिंहावतारभाजेत्यर्थः । किम्भूताम् ?—[ अतनुं ] विस्तीर्णाम् । अत एव [ सटाच्छटाभिन्नघनेन ] सटाच्छटाभिः केशरसमूहैः, भिन्ना घना मेघा येन । अभ्रङ्कषविग्रहत्वादिति भावः । "सटा जटाकेशरयोः" इति, "तनुः काये कृशेऽल्पे च" इति च विश्वः । [ त्वया, सः ] दैत्यः [ मुग्धकान्तास्तनसङ्गभङ्गुरैः ] मुग्धौ नवौ, 'मुग्धः सौम्ये नवे मूढे' इति वैजयन्ती । यौ कान्ता-

---

* अत्र "श्रयः श्रियः" इति, "दशैर्दिशे" इति च छेकानुप्रासयोः संसृष्टिः ।

विनोदमिच्छन्नथ दर्पजन्मनो
रणेन कण्ड्वास्त्रिदशैः समं पुनः।
स रावणो नाम निकामभीषणो *
बभूव रक्षः क्षतरक्षणं दिवः॥ ४८॥

---

स्तनौ तयोः सङ्गेनापि भङ्गुरैः कुटिलैः [ नखैः, उरोविदारम् ] उरो विदार्य्य। "परिक्लिश्यमाने च" ( ३।४।५५ पा० ) इति णमुल्प्रत्ययः। [ प्रतिचस्करे ] हतः। किरतेः कर्मणि लिट् "ऋच्छत्यॄताम्" ( ७।४।११ पा० ) इति गुणः, "हिंसायां प्रतेश्च" ( ६।१।१४१ पा० ) इति सुड़ागमः। वज्रकठिनोऽपि नखैर्विदारित इति वाङ्मनसयोरगोचर-महिम्नस्ते किमसाध्यमिति भावः॥ ४७॥ †

अथास्य जन्मान्तरचेष्टितान्याचष्टे, विनोदमिति।—[ अथ, सः ] हिरण्यकशिपुः [ पुनः ] भूयोऽपि [ त्रिदशैः, समं ] सह। 'साकं सार्द्धं समं सह' इत्यमरः। [ रणेन, दर्पजन्मनः ] दर्पादन्तःसाराज्जन्म यस्या-स्तस्याः [ कण्ड्वाः ] भुजकण्डूतेः [ विनोदम् ] अपनोदम् [ इच्छन् ]। प्रागभवनक्षत्तेस्तदपनोदाभावादित्यर्थः। [ दिवः ] स्वर्गस्य। [ क्षत-रक्षणं ] क्षतं नष्टं, नाशितं वा, रक्षणं रक्षा यस्मात् येन वा तत्। क्षतयुरक्षणमित्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। अनेन देव-

---

* अत्र "निकामभीषणम्" इति पाठस्तु प्रामादिकः, बिभेतेः णिचि कर्त्तरि ल्युप्रत्यये कृते तस्य नियतपुंलिङ्गता आपद्येत ; तथा हि अमरः लिङ्गादिसङ्ग्रहवर्गे पुंलिङ्गाधिकारे,—"ल्युः कर्त्तरीमनिज्भावे" इति, अत एवास्माभिः पुंलिङ्गान्तत्वेन व्याख्यातम ; तथा च, "निकामभीषणः" इति तु "रावणः" इत्यस्यैव विशेषणमिति ज्ञेयम।

† अत्र स्तनसङ्गभङ्गुराणां नखानामतीव कोमलत्वेन, तैः शिलाकल्पोरःस्थलस्य विदारणस्य कर्त्तुमशक्यत्वात्, आपाततः विरोधात्, विरोधाभासः अलङ्कारः ; पर्य्यव-साने तु, भगवतः अनन्तमहिमयोगात्, कठिनेषु काठिन्यस्य कोमलेषु च कोमलतायाः स्वतःसिद्धत्वात् तत्परिहार इति।

प्रभुर्बुभूषुर्भुवनत्रयस्य यः
शिरोऽतिरागाद्दशमं चिकर्त्तिषुः ।
अतर्कयद्विघ्नमिवेष्टसाहसः
प्रसादमिच्छासदृशं पिनाकिनः ॥ ४९ ॥

---

सर्वस्वापहारित्वमुक्तम् । [ निकामभीषणः ] भीषयत इति भीषणः । नन्द्यादित्वात् ल्युः । "भियो हेतुभये षुक्" ( ७।३।४० पा० ) इति षुक् । निकामं भीषणः । "सुप्सुपा" ( २।१।४ पा० ) इति समासः । [ रावणो नाम ] रावण इति प्रसिद्धं [ रक्षो बभूव ] राक्षसयोनौ जात इत्यर्थः । विश्रवसोऽपत्यं पुमान् रावण इति विग्रहः । "तस्यापत्यम्" ( ४।१।९२ पा० ) इत्यणि कृते "विश्रवसो विश्रवणरवणौ" इति प्रकृतेः रवणादेशः । पौराणिकास्तु रावयतीति व्युत्पादयन्ति ; तदुक्त-मुत्तरकाण्डे,—"यस्माल्लोकत्रयं चैतद् रावितं भयमागतम् । तस्मात् त्वं रावणो नाम नाम्ना वीरो भविष्यसि ॥' इति । रौतेर्ण्यन्तात् कर्त्तरि ल्युट् । रावणरक्षसोर्नियतलिङ्गत्वाद्विशेषणविशेष्यभावेऽपि स्वलिङ्गता ॥ ४८ ॥

अथास्यौद्धत्यमष्टादशश्लोकैराचष्टे, प्रभुरिति ।—[ यः ] रावणः [ भुवनत्रयस्य, प्रभुः ] स्वामी [ बुभूषुः ] भवितुमिच्छुः । भुवः सनन्ता-दुप्रत्ययः । [ अतिरागात् ] उत्साहात्, न तु फलविलम्बननिर्वेदा-दिति भावः । [ दशमं शिरः, चिकर्त्तिषुः ] कर्त्तितुं छेत्तुमिच्छुः । "कृती छेदने" इति धातोः सनन्तादुप्रत्ययः । [ इष्टसाहसः ] प्रियसाहसः अत एव [ इच्छासदृशम् ] इच्छाऽनुरूपं [ पिनाकिनः, प्रसादं ] वरं [ विघ्न-मिव, अतर्कयत् ] उत्प्रेक्षितवान्, इति परमसाहसिकत्वोक्तिः । इत आरभ्य श्लोकषट्केऽपि यच्छब्दस्य "स रावणो नाम रक्षो बभूव" इति पूर्वेणान्वयः । रङ्गराजस्तु 'न चक्रमस्याक्रमताधिकन्धरम्' इति उपरिष्टादन्वय इत्याह ; तदसत्,—"गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" * इति न्यायादारुण्यादिवत् प्रत्येकं प्रधानान्वयिनां

---

* मीमांसादर्शने ३अध्या० १पा० २२सू० ।

समुत्क्षिपन् यः पृथिवीभृतां वरं
वरप्रदानस्य चकार शूलिनः ।
त्रसत्तुषाराद्रिसुतासस्सम्भ्रम-
स्वयङ्ग्रहाश्लेषसुखेन निष्क्रयम् ॥ ५० ॥
पुरीमवस्कन्द लुनीहि नन्दनं
मुषाण रत्नानि हरामराङ्गनाः ।

---

मिथः सम्बन्धायोगादित्यलं शाखाचङ्क्रमणेन। "पुरा किल रावणः काम्ये कर्मणि पशुपतिप्रीणनाय नव शिरांसि अग्नौ हुत्वा दशमारम्भे सन्तुष्टात् तस्मात् त्रैलोक्याधिपत्यं वव्रे" इति पौराणिकी कथाऽत्रानुसन्धेया ॥ ४९ ॥

अथ कैलासोत्क्षेपणवृत्तान्तमाह, समुत्क्षिपन्निति।—[ यः ] रावणः [ पृथिवीभृतां ] पर्वतानां [ वरं ] श्रेष्ठं कैलासं [ समुत्क्षिपन् [ दर्पादिति शेषः। [ शूलिनो वरप्रदानस्य ] पूर्वोक्तस्य। [ त्रसत्तुषाराद्रिसुतासस्सम्भ्रमस्वयङ्ग्रहाश्लेषसुखेन ] त्रसन्त्याः शैलचलनेन बिभ्यत्याः तुषाराद्रिसुतायाः पार्वत्याः ससम्भ्रमो यः स्वयङ्ग्रहः प्रियप्रार्थनां विना कण्ठग्रहणम्, सुप्सुपा * इति समासः। तेन आश्लेषः सम्मेलनं तेन यत् सुखं तेन। त्रैलोक्याधिपत्यसुखादुत्कृष्टेनेति भावः। [ निष्क्रयं ] प्रत्युपकारनिर्गतिं [ चकार ]। 'निष्क्रयो बुद्धियोगे स्यात् सामर्थ्ये निर्गतावपि' इति वैजयन्ती ; यद्वा,—निष्क्रयं चकार क्रयेण व्यवहारेण याच्ञादोषदैन्यं ममार्जेत्यर्थः। अत्र सुखवरदानयोर्विनिमयात् परिवृत्तिरलङ्कारः ॥ ५० ॥

पुरीमिति।—[ यः, बली ] बलवान् रावणः [नमुचिद्विषा] इन्द्रेण सहेत्यर्थः, [ विगृह्य ] विरुध्य [ पुरीम् ] अमरावतीम् [ अवस्कन्द ] अवरुरोध। [ नन्दनम् ] इन्द्रवनम्। 'नन्दनं वनम्' इत्यमरः। [ लुनीहि ] चिच्छेद। "ई हल्यघोः" ( ६।४।११३ पा० ) इतीकारः।

---

* "सह सुपा" ( २।१।४ पा० ) इति सूत्रम्।

विगृह्य चक्रे नमुचिद्विषा बली
य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥ ५१ ॥
सलीलयातानि न भर्त्तुरभ्रमो-
र्न चित्रमुच्चैःश्रवसः पदक्रमम् ।
अनुद्रुतः संयति येन केवलं
बलस्य शत्रुः प्रशशंस शीघ्रताम् ॥ ५२ ॥

---

[ रत्नानि ] श्रेष्ठवस्तूनि मणीन् वा, 'रत्नं श्रेष्ठे मणावपि' इति विश्वः । [ मुषाण ] मुमोष । मुष स्तेये "हलः श्नः शानज्झौ" ( ३।१।८३ पा० ) इति श्नः शानजादेशः । [ अमराङ्गनाः, हर ] जहार । सर्वत्र पौनः-पुन्येनेत्यर्थः । [ इत्थम् ] अनेन प्रकारेण अहनि च दिवा च [ अह-र्दिवम् ] अहन्यहनीत्यर्थः । "अचतुर—" ( ५।४।७७ पा० ) इत्यादिना सप्तम्यर्थवृत्तौ द्वन्द्वे समासान्तो निपातः । [ दिवः ] स्वर्गस्य [ अस्वा-स्थ्यम् ] उपद्रवं [ चक्रे ] । अत्रावस्कन्देत्यादौ "क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः" ( ३।४।२ पा० ) इत्यनुवृत्तौ, "समुच्चये-ऽन्यतरस्याम्" ( ३।४।३ पा० ) इति विकल्पेन कालसामान्ये लोट् । तस्य यथोपग्रहं सर्वतिङादेशो हिस्वौ च, प्रकरणादिना त्वर्थविशेषा-वसानम् । "अतो हेः" ( ६।४।१०५ पा० ) इति यथायोग्यं हिलुक् । पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः । अवस्कन्दनादिक्रिया-विशेषाणां समुच्चयः क्रियासमभिहारः, तत्सामान्यस्य करोतिः । "समु-च्चये सामान्यवचनस्य" ( ३।४।५ पा० ) इत्यनुप्रयोगश्चक्रे इति, अत्र तिङ्वैचित्र्यात्सौशब्दाख्यो गुणः । 'सुपां तिङां परावृत्तिः सौशब्दमिति कीर्त्यते' इति लक्षणात् । समुच्चयश्चालङ्कारः * ॥ ५१ ॥

सलीलेति ।—[ संयति ] युद्धे । 'समुदायः स्त्रियां संयत्समित्या-जिसमिद्युधः' इत्यमरः । [ येन ] रावणेन [ अनुद्रुतः ] अनुधावितः

---

* अनेकक्रियाकर्त्रैक्याद्दीपकञ्च ।

अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम् ।
प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय बिभ्यद्दिवसानि कौशिकः ॥ ५३ ॥
बृहच्छिलानिष्ठुरकण्ठघट्टना-
द्विकीर्णलोलाग्निकणं सुरद्विषः ।

[ बलस्य शत्रुः ] इन्द्रः [ अभ्रमोर्भर्त्तुः ] ऐरावतस्य [ सलीलयातानि ] सभङ्गीकगमनानि [ न प्रशशंस ] तथा [ उच्चैःश्रवसः ] स्वाश्वस्य [ चित्रं ] नानाविधं [ पदक्रमं ] पादविक्षेपम् । अर्द्धपुलायितादिगति-विशेषमित्यर्थः । [ न ] प्रशशंस किन्तु [ केवलं, शीघ्रतां ] शीघ्रगामि-त्वमेव प्रशशंस । अन्यथा शीघ्रं मामाक्रम्य ग्रहीष्यतीति भयादिति भावः * ॥ ५२ ॥

अशक्नुवन्निति ।—[ अधीरलोचनः ] अस्थिरदृष्टिः [ कौशिकः ] महेन्द्रः उलूकश्च । 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः' इत्यमरः । [ सहस्ररश्मेः ] सूर्य्यस्य [ इव, यस्य ] रावणस्य विक्रमकर्मणः [ दर्शनं सोढुमशक्नुवन् हेमाद्रिगुहागृहान्तरं ] हेमाद्रेर्गुहैव गृहं तस्यान्तरं [ प्रविश्य, बिभ्यत् ] तत्रापि वेपमान एव । बिभेतेः शतरि "नाभ्यस्ताच्छतुः ( ७।१।७८ पा० ) इति नुमभावः । [ दिवसानि ] वासराणि [ निनाय ] 'वा तु क्लीवे दिवसवासरौ' इत्यमरः । यथा पेचकः सूर्य्योदये भीतः सन् तिष्ठति, तथा तदुदये सोऽपीति भावः । कौशिक इत्यभिधायाः प्रस्तुतैकगोचरत्वेनोभयश्लेषेऽपि विशेष्यश्लेषासम्भ-वात् उलूकविषयशब्दशक्तिमूलो ध्वनिः । सहस्ररश्मेरिवेत्युपमाननिर्वा-हकत्वात् वाच्यसिद्धाङ्गम् † ॥ ५३ ॥

बृहच्छिलेति ।—[बृहच्छिलानिष्ठुरकण्ठघट्टनात्] बृहति शिलायामिव

* अत्रापि अनेकक्रियाकर्त्रैक्याद्दीपकमलङ्कारः ।
† अत्र भयानकरसस्य उत्तमपात्रगतत्वेनाभासत्वम् ।

जगत्प्रभोरप्रसहिष्णु वैष्णवं
न चक्रमस्याक्रमताधिकन्धरम् ॥ ५४ ॥
विभिन्नशङ्खः कलुषीभवन्मुहु-
र्मदेन दन्तीव मनुष्यधर्मणः ।
निरस्तगाम्भीर्य्यमपास्तपुष्पकं
प्रकम्पयामास न मानसं न सः ॥ ५५ ॥

---

निष्ठुरे कण्ठे घट्टनादभिघाताद् [ विकीर्णलोलाग्निकणं ] विकीर्णाः विच्छिन्नाः लोलाश्चाग्निकणाः स्फुलिङ्गाः यस्य तत्, अत एव [अप्रसहिष्णु] अनभिभावकम्। "प्रसहनमभिभवः" इति वृत्तिकारः। "अलङ्कृञ्" ( ३।२।१३६ पा० ) इत्यादिना इष्णुच्। [ वैष्णवं, चक्रं ] सुदर्शनं [ जगत्प्रभोः ] सकललोकैकस्वामिनः [ अस्य सुरद्विषः ] रावणस्य, कन्धरायामधि [ अधिकन्धरम् ] अधिग्रीवम्। विभक्त्यर्थेऽव्ययीभावः, "अव्ययीभावश्च" ( २।४।१८ पा० ) इति नपुंसकत्वात् "ह्रस्वो नपुंसके प्रातिपदिकस्य" ( १।२।४७ पा० ) इति ह्रस्वत्वम्। 'कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः। [ नाक्रमत ] अप्रतिहतं न क्रमते स्म, न प्रवर्त्तते स्म, किन्तु प्रतिहतमेवेत्यर्थः। "वृत्तिसर्गतायनेषु क्रमः" (१।३।३८ पा०) इति वृत्तावात्मनेपदम्। "वृत्तिरप्रतिबन्धः" ॥५४॥

विभिन्नेति।—[ सः ] रावणः [ मदेन ] दर्पेण, इभदानेन च। 'मदो दर्पेभदानयोः' इति विश्वः। [ दन्तीव ] गज इव [ विभिन्नशङ्खः ] विभिन्नो विघट्टितः शङ्खो निधिभेदः, कम्बुश्च येन सः सन्। 'शङ्खो निध्यन्तरे कम्बुललाटास्थिनखेषु च' इति विश्वः। अकलुषं कलुषं क्षुब्धम्, आविलञ्च भवत् [ कलुषीभवत्, निरस्तगाम्भीर्य्यम् ] निरस्तं गाम्भीर्य्यमविकारित्वम्, अगाधत्वञ्च यस्य तत्। [ अपास्तपुष्पकम् ] अपास्तानि पुष्पाणि, पुष्पकं विमानञ्च यस्मात् तत्। पुष्पपक्षे वैभाषिकः कप्प्रत्ययः। मनुष्यस्येव धर्मः श्मश्रुलत्वादिर्यस्येति स्वामी। तस्य [ मनुष्यधर्मणः ] "धर्मादनिच् केवलात्" ( ५।४।१२४ पा० ) इत्य-

रणेषु तस्य प्रहिताः प्रचेतसा
सरोषहुङ्कारपराङ्मुखीकृताः ।
प्रहर्त्तुरेवोरगराजरज्जवो
जवेन कण्ठं सभयाः प्रपेदिरे ॥ ५६ ॥

परेतभर्त्तुर्महिषोऽमुना धनु-
र्विधातुमुत्खातविषाणमण्डलः ।
हृतेऽपि भारे महतस्त्रपाभरा-
दुवाह दुःखेन भृशानतं शिरः ॥ ५७ ॥

---

नित्। [ मानसं ] चित्तं, तदीयं सरश्च। 'मानसं सरसि स्वान्ते' इति विश्वः। [ मुहुः, न प्रकम्पयामास ] न चोभयामास, इति [ न ], किन्तु प्रकम्पयामासैवेत्यर्थः। कुवेरस्य महामहिमतया सम्भाविताप्रकम्पित्व-निवारणाय नञ्द्वयम् "सम्भाव्यनिषेधनिवर्त्तने नञ्द्वयम्" इति वामनः। अत्र दन्तिरावणयोः प्रकृताप्रकृतयोः श्लेषः, उपमा त्वङ्गम् ॥ ५५ ॥

रणेष्विति।—किञ्च, [ रणेषु, प्रचेतसा ] वरुणेन [प्रहिताः] प्रयुक्ताः उरगराजा महासर्पास्ते रज्जव इव [ उरगराजरज्जवः ] नागपाशा इत्यर्थः [ तस्य ] रावणस्य [ सरोषहुङ्कारपराङ्मुखीकृताः ] सरोष-हुङ्कारेण पराङ्मुखीकृताः व्यावर्त्तिताः। अत एव [ सभयाः ] सन्तः [जवेन] वेगेन [ प्रहर्त्तुः ] प्रयोक्तुः प्रचेतसः [ एव कण्ठं, प्रपेदिरे ] प्राप्ताः। अत्र परहिंसाप्रयुक्तस्य आयुधस्य वैपरीत्येन स्वकण्ठग्रहणादनर्थोत्पत्ति-रूपो विषमालङ्कारः, "विरुद्धकार्य्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत्" इति लक्षणात्; उपमा च ॥ ५६ ॥

परेतभर्त्तुरिति।—[ अमुना ] रावणेन [ धनुः ] शार्ङ्गं [ विधातुं ] निर्मातुं [ उत्खातविषाणमण्डलः ] उत्खातमुत्पाटितं विषाणयोः शृङ्गयोर्मण्डलं वलयं यस्य सः [ परेतभर्त्तुः ] यमस्य [ महिषः ] वाहन-

स्पृशन् सशङ्कः समये शुचावपि
स्थितः कराग्रैरसमग्रपातिभिः ।
अघर्मघर्मोदकबिन्दुमौक्तिकै-
रलञ्चकारास्य वधूरहस्करः ॥ ५८ ॥

भूत इति भावः। [भारे] विषयरूपे, भृशो यस्[हृतेऽपि महतः, त्रपाभरात्] त्रपैव भरस्तस्मात्। ततोऽपि दुर्भरादिति भावः। भृञः क्रैयादिकात् "ऋदोरप्" (३।३।५७ पा०) इति अप्प्रत्ययः। [भृशानतं] भृशमत्यर्थमानतं नम्रं [शिरः दुःखेन, उवाह] वहति स्म। "असंयोगाल्लिट् कित्" (१।२।५ पा०) इति कित्त्वात् "वचिस्वपि" (६।१।१५ पा०] इत्यादिना सम्प्रसारणम्। हृतेऽपि भारे नतमिति विरोधः, तदनुप्राणिता चेयम् अवनतिहेतुत्वसाधर्म्यात् त्रपाभारत्वोत्प्रेक्षा ॥ ५७ ॥

स्पृशन्निति —अह: करोतीति [अहस्करः] सूर्य्यः। "दिवाविभानिशा" (३।२।२१ पा०) इत्यादिना टप्रत्ययः। कस्कादित्वात् सत्वम्। [शुचौ समये] ग्रीष्मकाले, अनुपहते आचारे च [स्थितोऽपि] 'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोरपि। ग्रीष्मे हुतवहेऽपि स्यात्' इति विश्वः। 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः। [असमग्रपातिभिः] सङ्कुचितवृत्तिभिरित्यर्थः। [कराग्रैः] कराणामंशूनां हस्तानाञ्चाग्रैः। 'बलिहस्तांशवः कराः' इत्यमरः। [सशङ्कः स्पृशन्] अविश्वासभयादिति भावः। [अघर्मघर्मोदकबिन्दुमौक्तिकैः] अघर्माः अनुष्णाः * घर्मोदकबिन्दवः स्वेदोदबिन्दवः। "मन्थौदन" (६।३।६० पा०) इत्यादिना विकल्पादुदकशब्दस्योदादेशाभावः। तैरेव मौक्तिकैः [अस्य वधूरलञ्चकार]। ग्रीष्मे तन्नयानासह्यं ततापेत्यर्थः। अत्र प्रस्तुतसूर्य्यविशेषणमात्रसाम्यादप्रस्तुतप्रसाधकप्रतीतेः समासोक्तिरलङ्कारः, घर्मोदकबिन्दुमौक्तिकैरिति रूपकेण सङ्कीर्य्यते ॥ ५८ ॥

* स्वल्पातपजन्या इति भावः।

कलासमग्रेण गृहानमुञ्चता
मनस्विनीरुत्कयितुं पटीयसा ।
विलासिनस्तस्य वितन्वता रतिं
न नर्मसाचिव्यमकारि नेन्दुना ॥ ५८ ॥

विदग्धलीलोचितदन्तपत्त्रिका-
विधित्सया नूनमनेन मानिना ।

कलासमग्रेणेति ।—[ कलासमग्रेण ] कलाभिः षोड़शांशैः * शिल्पविद्याभिश्च समग्रेण सम्पूर्णेन । 'कालि शिल्पे वित्तवृद्धौ चन्द्रांशे कलने कला' इति वैजयन्ती । [ गृहानमुञ्चता ] सदा तद्गृहेष्वेव वसता, दण्डभयात् सेवाधर्मत्वाच्चेति भावः । [ मनस्विनीः ] मानिनीरुत्का उत्सुकाः कर्त्तुम् [ उत्कयितुम् ] 'उत्क उन्मनाः' ( ५।२।८० पा० ) इति निपातनादुत्कशब्दात् "तत्करोति" (ग०) इति ण्यन्तात् तुमुन् । [ पटीयसा ] मानभेदचतुरेणेत्यर्थः । कुतः ? [ रतिं वितन्वता ] चन्द्रिकाभिश्चतुरोक्तिभिश्च रागं वर्द्धयता [ इन्दुना, विलासिनः ] विलसनशीलस्य । "वौ कषलस" ( ३।२।१४३ पा० ) इत्यादिना घिनुण् प्रत्ययः । [ तस्य ] रावणस्य [ नर्मसाचिव्यं ] क्रीड़ासम्बन्ध्यधिकारित्वे सचेष्टत्वम् । 'लीला क्रीड़ा च नर्म च' इत्यमरः । [ नाकारि ] इति [ न ] किन्तु कार्य्येवेत्यर्थः । अनौचित्यात् प्राप्तनर्मसाचिव्यनिषेधनिवारणार्थं नञ्द्वयम् । 'सम्भाव्यनिषेधनिवर्त्तने नञ्द्वयम्' इति वामनः । अत्रेन्दोः प्रकृतस्याप्रकृतेन नर्मसचिवेन श्लेषः ॥ ५८ ॥

विदग्धेति ।—[ मानिना ] अहङ्कारिणा [ अनेन ] रावणेन [ विदग्धलीलोचितदन्तपत्त्रिकाविधित्सया ] विदग्धलीलाश्चतुरविलासिन्य इत्यर्थः । तासामुचिताश्च ता दन्तपत्त्रिकाश्च कर्णभूषणानि "विलासिनीविभ्रमदन्तपत्त्रिका" इति साधीयान् पाठः ; अन्यथा विप्रकृष्टार्थ-

* षोड़शभिर्भागैरित्यर्थः ।

न जातु वैनायकमेकमुद्धृतं
विषाणमद्यापि पुनः प्ररोहति ॥ ६० ॥
निशान्तनारीपरिधानधूनन-
स्फुटागसाप्यूरुषु लोलचक्षुषः ।
प्रियेण तस्यानपराधबाधिताः
प्रकम्पनेनानुचकम्पिरे सुराः ॥ ६१ ॥

---

प्रतीतिकत्वेन क्लिष्टाख्यार्थदोषापत्तेः। 'क्लिष्टं तदर्थावगमो दूरायत्तो भवेद्‌ यदि' इति लक्षणात्। विलासिनीनां या विभ्रमदन्तपत्रिका विभ्रमार्थानि यानि दन्तमयपत्राणि। विभ्रमदन्तशब्दयोः षष्ठीसमास-पर्य्यवसानात् तादर्थ्यलाभः। तासां विधित्सया विधातुमिच्छया। विपूर्वाद्धधातेः "सनि मीमा" (७।४।५४ पा०) इत्यादिना अच इस्। "सः स्यार्द्ध" (७।४।४९ पा०) इत्यादिना तकारः, "अत्र लोपोऽभ्यासस्य" (७।४।५८ पा०) इत्यभ्यासलोपः, ततः "स्त्रियाम्" इत्यनुवृत्तौ "अ प्रत्य-यात्" (३।३।१०२ पा०) इत्यकारप्रत्यये टाप्। [नूनं] निश्चितं [जातु] कदाचिदपि। 'कदाचिज्जातु' इत्यमरः। [उद्धृतम्] उत्पाटितं विना-यकस्य गणेशस्येदं [वैनायकम् एकं, विषाणं] दन्तः। "विषाणं पशु-शृङ्गे स्यात् क्रोडाद्विरददन्तयोः" इति विश्वः। [अद्यापि पुनः, न प्ररो-हति] न प्रादुर्भवति। प्रपूर्वात् "रुह प्रादुर्भावे" इत्यस्मात् लट्। किमन्यदकार्य्यमस्येति भावः। एतदन्यथा कथं गजाननस्यैकदन्त-त्वमुत्प्रेक्ष्यते नूनमिति ॥ ६० ॥

निशान्तेति।—[निशान्तनारीपरिधानधूननस्फुटागसापि] निशान्तं गृहम्। 'निशान्तं गृहशान्तयोः' इति विश्वः। तत्र याः नार्य्यः शुद्धान्तस्त्रिय इत्यर्थः, तासां परिधानानि अन्तरीयाणि। 'अन्त-रीयोपसंव्यानपरिधानान्यधोऽंशुके' इत्यमरः। तेषां धूननं चालनम्। धूञो ण्यन्तात् ल्युट्, "धूञ्प्रीञोर्नुग्वक्तव्यः" (वा०) * इति नुक्। तेन

---

* 'नाग्लोपिशास्वृदिताम्' (७।४।२ पा०) इति सूत्राधिकारे।

तिरस्कृतस्तस्य जनाभिभाविना
मुहुर्महिम्ना महसां महीयसाम्।
बभार वाष्पैर्द्विगुणीकृतं तनु-
स्तनूनपाद्धूमवितानमाधिजैः ॥ ६२ ॥

---

स्फुटागसा व्यक्तापराधेनापि अन्तःपुरद्रोहस्य महाऽपराधत्वादिति भावः। [ ऊरुषु ] तासां सक्थिषु [ लोलचक्षुषः ] सतृष्णदृष्टेः। 'सक्थि क्लीवे पुमानूरुः' इति 'लोलश्चलसतृष्णयोः' इति चामरः। अत एव [ तस्य ] रावणस्य [ प्रियेण ] प्रमोदास्पदभूतेन "अङ्गीकृता ग्लानिर्न दोषाय" इति न्यायादिति भावः। [ प्रकम्पनेन ] वायुना [ अनपराध-बाधिताः ] अनपराधे अपराधाभावेऽपि बाधिताः, राजपुरुषैरिति शेषः। [ सुराः, अनुचकम्पिरे ] स्वयमुपायेनान्तः प्रविश्यानपराधबाधा-निवेदनेन मोचयता वायुना अनुकम्पिता इत्यर्थः। एकस्य वैदग्ध्याद् बहवो जीवन्तीति भावः ॥ ६१ ॥ †

तिरस्कृत इति।—किञ्च, [ तस्य ] रावणस्य [ जनाभिभाविना ] लोकतिरस्कारिणा [ महीयसाम् ] अतिमहतां [ महसां ] तेजसां [ महिम्ना ] महत्त्वेन। "पृथ्वादिभ्य इमनिज् वा" ( ५।१।१२२ पा० ) इति इमनिच्। [ मुहुस्तिरस्कृतः ] अत एव [तनुः] कृशः, [ तनूनपात् ] तनुं न पातयति जाठररूपेण शरीरं धारयतीति तनूनपादग्निरिति स्वामी। "न भ्राट्" ( ६।३ ७५ पा० ) इत्यादिसूत्रेण निपातनान्नञो लोपाभावः। [ आधिजैः ] दुःखोत्थैः [ वाष्पैः ] निश्वासोष्मभिः। 'वाष्पो नेत्रजलोष्मणोः', 'पुंस्याधिर्मानसी व्यथा' इति विश्वामरौ। [ द्विगुणीकृतं ] द्वौ गुणावावृत्ती यस्य स द्विगुणः, ततः च्विः, द्विगुणी-कृतं द्विरावृत्तम्। 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती। [ धूमवितानं ] धूममण्डलं [ बभार ] अग्निरपि तत्सन्निधौ

---

* "कम्पकम्पि" इत्यसकृद्व्यञ्जनाऽऽवृत्त्या वृत्त्यनुप्रासः।

**परस्य मर्माविधमुज्झतां निजं**
**द्विजिह्वतादोषमजिह्मगामिभिः ।**
**तमिद्धमाराधयितुं सकर्णकैः**
**कुलैर्न भेजे फणिनां भुजङ्गता ॥ ६३ ॥**

---

निस्तेजस्को धूमायमान आस्त इत्यर्थः । धूमहैगुण्यासम्बन्धे सम्बन्धाभिधानादतिशयोक्तिः ॥ ६२ ॥

परस्येति ।—किञ्च, [ इद्धं ] दीप्तम्, उग्रमित्यर्थः । "इन्धी दीप्तौ" कर्त्तरि क्तः । [ तं ] रावणम् [ आराधयितुं ] सेवितुं [ परस्य ] स्वेतरस्य मर्माणि हृदयादिजीवस्थानानि, कुलाचारव्रतानि च विध्यति भिनत्तीति मर्मावित् । विध्यतेः क्विप्, "ग्रहिज्या" ( ६।१।१६ पा० ) इति सम्प्रसारणं, "नहिवृति" ( ६।३।११६ पा० ) इत्यादिना पूर्वस्य दीर्घः, तं [ मर्माविधं, निजं ] स्वीयं [द्विजिह्वतादोषं] द्विजिह्वतायां सर्पत्वे यो दोषो दृष्टिविषत्वादिः तम् । अन्यत्र द्विजिह्वता पिशुनता । 'द्विजिह्वौ सर्पसूचकौ' इत्यमरः । सैव दोषस्तम् [ उज्झतां ] त्यजतां [ फणिनां ] सम्बन्धिभिः [ अजिह्मगामिभिः ] करचरणादिमद्विग्रहधारित्वात् ऋजुगतिभिः, अकपटचारिभिश्च, तथा [ सकर्णकैः ] कर्णाभ्यां सह वर्त्तन्त इति सकर्णकाः तैश्चक्षुःश्रवस्त्वं विहायाविष्कृतकर्णैरित्यर्थः । "तेन सहेति तुल्ययोगे" (२।२।२८ पा०) इति बहुव्रीहिः, "शेषाद्विभाषा" (५।४।१५४ पा० ) इति कप् । अन्यत्र कर्णयति सर्वं शृणोतीति कर्णको नियन्ता कर्णयतेर्ण्वुल् ततः पूर्ववत्समासे सकर्णकैः सनियामकैरित्यर्थः । फणिनां सर्पाणां [ कुलैः ] वर्गैः [ भुजङ्गता ] सर्पता, विटत्वञ्च । 'भुजङ्गो विटसर्पयोः' इति हलायुधः । [ न भेजे ] त्यक्ता । भुजैर्गच्छन्तीति भुजङ्गाः । गमेः सुपि "खच्च डिद्वा वाच्यः" * तस्मिन् नियन्तरि खलैः खलत्वमपि, सर्पैः, सर्पत्वमपि विहाय वैषभावक्रियाभिः

---

* "प्रियवशे वदः खच्" ( ३।२।३८ पा० ) अस्य वार्त्तिकम् ।

तदीयमातङ्गघटाविघट्टितैः
कटस्थलप्रोषितदानवारिभिः।
गृहीतदिक्कैरपुनर्निवर्त्तिभि-
श्चिराय याथार्थ्यमलम्भि दिग्गजैः ॥ ६४ ॥

अभीक्ष्णमुष्णैरपि तस्य सोष्मणः
सुरेन्द्रवन्दीश्वसितानिलैर्यथा।
सचन्दनाम्भःकणकोमलैस्तथा
वपुर्जलार्द्रापवनैर्न निर्ववौ ॥ ६५ ॥

---

सौम्यत्वं श्रितमित्यर्थः। अत्र प्रस्तुतसर्पश्लिष्टविशेषणसाम्यादप्रस्तुतखल-व्यवहारप्रतीतिः समासोक्तिः ॥ ६३ ॥

तदीयेति।—[तदीयमातङ्गघटाविघट्टितैः] तदीयमातङ्गानां घटाभि-र्व्यूहैः विघट्टितैरभिहतैः। 'गजानां घटना घटा' इत्यमरः। अत एव [ कटस्थलप्रोषितदानवारिभिः ] कटस्थलेभ्यः प्रोषितान्यपगतानि दान-वारीणि येषां तैः, गृहीताः पलाय्य संश्रिता दिशो यैस्तैः [ गृहीत-दिक्कैः ] "शेषाद्विभाषा" ( ५।४।१५४ पा० ) इति कप्। [ अपुन-र्निवर्त्तिभिः ] भयात् तत्रैव स्थितैः [ दिग्गजैः चिराय याथार्थ्यं ] दिक्षु स्थिता गजाः दिग्गजाः इत्यनुगतार्थनामकत्वम् [ अलम्भि ] लब्धम्। लभेर्ण्यन्तात् कर्मणि लुङ्, "विभाषा चिण्णमुलोः" ( ७।१।६९ पा० ) इति विकल्पान्नुमागमः ॥ ६४ ॥

अभीक्ष्णमिति।—ऊष्मणा स्मरज्वरेण सहितः सोष्मा, तस्य [सोष्मणः, तस्य] रावणस्य [वपुः, अभीक्ष्णं] भृशम् [उष्णैरपि] शोकादिति भावः। [ सुरेन्द्रवन्दीश्वसितानिलैः ] सुरेन्द्रस्य वन्द्यः वन्दीकृताः स्त्रियः तासां श्वसितानिलैः निश्वासमारुतैः [यथा, निर्ववौ] निर्वृतम्। 'निर्वाणं निर्वृतौ मोक्षे' इति वैजयन्ती। [ तथा सचन्दनाम्भःकणकोमलैः ] सचन्दनाम्भःकणाः चन्दनोदकबिन्दुसहिताः ते च ते कोमला मृदुलाश्च तैः

तपेन वर्षाः शरदा हिमागमो
वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनक्लृप्तिं दधतः सदर्त्तवः
पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥ ६६ ॥
अमानवं जातमजं कुले मनोः
प्रभाविनं भाविनमन्तमात्मनः ।

---

[जलार्द्रापवनैः] जलार्द्राणां जलोक्षिततालवृन्तानां पवनैः [न] निर्ववौ । "धुवित्रं तालवृन्तं स्यादुत्क्षेपव्यजनञ्च तत्" "जलेनार्द्रं जलार्द्रा स्यात्" इति च वैजयन्ती । अत्र सन्तप्तस्योष्णोपचारान्निर्वृतिरिति कारणविरुद्धकार्य्योत्पत्तिरूपो विषमालङ्कारः ॥ ६५ ॥

तपेनेति ।—[सदा] नित्यं, न तु यथाकालं [प्रसूनक्लृप्तिं] कुसुमसम्पत्तिम् । 'प्रसूनं कुसुमं समम्' इत्यमरः । [दधतः] धारयन्तः [ऋतवः, वर्षाः] प्रावृट् [तपेन] ग्रीष्मेण । 'उष्ण उष्मागमस्तपः' इति, 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत् स्त्रियाम्' इति चामरः । तथा [हिमागमः] हेमन्तः [शरदा] तथा [शिशिरो वसन्तलक्ष्म्या च, समेत्य] मिथुनीभावेन मिलित्वा [अस्य] रावणस्य [पुरे, वास्तव्यकुटुम्बितां] वसन्तीति वास्तव्याः वस्तारः । "वसेस्तव्यत्कर्त्तरि णिच्च" * इति तव्यत्प्रत्ययः । ते च कुटुम्बिनश्च तेषां भावः तत्तां, प्रतिवासित्वमित्यर्थः । [ययुः] समेत्य ययुरिति समुदायसमुदायिनोरभेदविवक्षया समानकर्त्तृत्वम् । अत्र पुरे युगपत् सर्वर्त्तुसम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपातिशयोक्तिः † ॥ ६६ ॥

स चायमासन्नविनाशः तुभ्यमपि द्रुग्ध्वा पुनस्त्वयैव हत इति युग्मे-

---

* "तव्यत्तव्यानीयरः" (३।१।९६ पा०) इति सूत्रस्य वार्त्तिकम् ।

† "शरदा" इत्यत्र "वसन्तलक्ष्म्या" इत्यत्र च स्त्रियामेव तृतीयानिर्देशात् "वर्षा" इत्यत्र तदनिर्देशाच्च भग्नप्रक्रमता ।

मुमोच जानन्नपि जानकीं न यः
सदाऽभिमानैकधना हि मानिनः ॥ ६७ ॥

स्मरत्यदो दाशरथिर्भवन् भवान्
अमुं वनान्ताद्वनिताऽपहारिणम् ।
पयोधिमाबद्धचलज्जलाविलं
विलङ्घ्य लङ्कां निकषा हनिष्यति ? ॥६८॥

---

नाह, अमानवमिति।—मनोरयं मानवः। "तस्येदम्" (४।३।१२० पा०) इत्यण्प्रत्यये पर्य्यवसानाज्जातावेकवचनम्,* अन्यथा मनोर्जातमित्येव स्यात्। [ अमानवम् ] अमानुषं, न जायत इति [ [अजम् ] "अन्येष्वपि दृश्यते" ( ३।२।१०१ पा० ) इति डप्रत्ययः। तथाऽपि [ मनोः कुले जातं ] रामस्वरूपेणोत्पन्नमिति विरोधः। स चाभासत्वादलङ्कार इत्याह,—[ प्रभाविनम् ] इति। महाऽनुभावे तस्मिन् न कश्चिद्विरोध इति भावः। आभीक्ष्ण्ये णिनिः * इनिर्वा मत्वर्थीयः, भवन्तमिति शेषः। [ आत्मनः ] स्वस्यान्तं करोतीति [ अन्तम् ] अन्तशब्दात् "तत्करोति" (ग०) इति ण्यन्तात् पचाद्यच्। [ भाविनं ] भविष्यन्तम्। "भविष्यति गम्यादयः" ( ३।३।३ पा० ) इति णिन्यन्तनिपातः। [ जानन्नपि, यः ] रावणः जानकीं ] जनकस्यापत्यं स्त्री जानकी सीता तां, [ न मुमोच ] नामुञ्चदित्यन्वयः। जानतोऽपि अमोचने कारणमाह, -[ मानिनः सदा ] प्राणात्ययेऽपि [अभिमानैकधना हि] अभिमान एवैकं मुख्यं धनं येषां ते, प्राणात्ययेऽपि न मानं मुञ्चन्तीत्यर्थः। कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६७ ॥

स्मरतीति।—भातीति [ भवान् ] "भातेर्डवतुप्" ( उ० पा० १।६४ सू० )। दशरथस्यापत्यं पुमान् [ दाशरथिः ] "अत इञ्" ( ४।१।९५ पा० ) इतीञ्प्रत्ययः। [ भवन् ] रामः सन्नित्यर्थः। भवते-

---

* "बहुलमाभीक्ष्ण्ये" ( ३।२।८१ पा० ) इति सूत्रम्।

**अथोपपत्तिं छलनापरोऽपरा-**
**मवाप्य शैलूष इवैष भूमिकाम् ।**
**तिरोहितात्मा शिशुपालसंज्ञया**
**प्रतीयते सम्प्रति सोऽप्यसः परैः ॥ ६९ ॥**

---

लृटः स्थलादेशः । [ वनान्ताद् ] दण्डकारण्यात् [ वनिताऽपहारिणं ] सीताऽपहर्त्तारम् [ अमुं ] रावणम् । आबद्धः पश्चिमाद्रिभिर्बद्धसेतुः ; अत एव चलन्ति जलानि यस्य स च, अत एव आविलश्च तम् [ आबद्ध-चलज्जलाविलं पयोधिं विलङ्घ्य, लङ्कां निकषा ] लङ्कासमीपे । 'समया-निकषाशब्दौ सामीप्ये त्वव्यये मतौ' इति हलायुधः । "अभितः परितः समयानिकषाहाप्रतियोगेष्वपि" * इति द्वितीया । [ हनिष्यति ] अवधीत् । "अभिज्ञावचने लृट्" ( ३।२।११२ पा० ) इति भूते लृट् । [ अदः ] हननं भवान् [ स्मरति ? ] इति काकुः, प्रत्यभिजानाति किम् ? इत्यर्थः । "शेषे प्रथमः" (१।४।१०८ पा०) † ॥ ६८ ॥

अथेति ।—[ अथ ] राक्षसदेहत्यागानन्तरं [ सम्प्रति, छलनापरः ] परप्रतारणापरः [ एषः ] रावणः [ शैलूषः ] नटः [ भूमिकां ] रूपान्तरम् [ इव ] । 'शैलूषो नटभिल्लयोः' 'भूमिका रचनायां स्यान्मूर्त्यन्तरपरि-ग्रहे' इति च विश्वः । [ अपरामुपपत्तिं ] जन्मान्तरमित्यर्थः । [ अवाप्य शिशुपालसंज्ञया, तिरोहितात्मा ] तिरोहितस्वरूपः सन्, [ सोऽपि ] रावण एव सन्नपि, [ परैः ] इतरैः, स न भवतीति [ असः ] तस्मादन्य एव । "नञ्" ( २।२।६ पा० ) इति नञ्समासः, अत एव "एतत्तदोः सुलोपो—" (६।१।१३२ पा०) इत्यादिना न सुलोपः । [प्रतीयते] ज्ञायते इति प्रतिपूर्वादिणः कर्मणि लट् । यथैक एव शैलूषः रूपान्तरमास्थाय तद्वेशभाषादिभिरन्य एव प्रतीयते, तद्वदयमपि मानुषदेहपरिग्रहादन्य इव भाति ; दौर्जन्यं तु तदेवेत्यवश्यं संहार्य्य इति भावः ‡ ॥ ६९ ॥

---

* "उपान्वध्याङ्वसः" ( १।४।४८ पा० ) इतिसूत्रे द्रष्टव्यम् ।

† छेकवृत्त्यनुप्रासौ ।

‡ उपमाऽलङ्कारः ।

स बाल आसीद्वपुषा चतुर्भुजो
मुखेन पूर्णेन्दुनिभस्त्रिलोचनः ।
युवा कराक्रान्तमहीभृदुच्चकै-
रसंशयं सम्प्रति तेजसा रविः ॥ ७० ॥

स्वयं विधाता सुरदैत्यरक्षसा-
मनुग्रहावग्रहयोर्यदृच्छया ।
दशाननादीनभिराद्धदेवता-
वितीर्णवीर्य्यातिशयान् हसत्यसौ ॥ ७१ ॥

अथैतद्दौर्जन्यं त्रिभिराविष्करोति, स बाल इति ।—[सः] शिशुपालः [ बालः ] सन् [वपुषा, चतुर्भुजः] भुजचतुष्टयवान् [ आसीत् ]। विष्णुरिति ध्वनिः। [ मुखेन, पूर्णेन्दुनिभः ] तत्तुल्यः। [ त्रिलोचनः ] लोचनत्रयवान् आसीत्। त्र्यम्बक इति ध्वनिः। बालविशेषणात् सम्प्रति तत् सर्वमन्तर्हितमिति भावः। [ सम्प्रति ] तु [ युवा ] सन् [ कराक्रान्तमहीभृत्] करेण बलिना आक्रान्तमहीभृदधिष्ठितराजकः सन्, अन्यत्रांशुव्याप्तशैलः। 'बलिहस्तांशवः कराः' इत्यमरः। [ उच्चकैस्तेजसा रविरसंशयं ] संशयो नास्तीत्यर्थः। अर्थाभावेऽव्ययीभावः। * वपुषा मुखेनेति। "येनाङ्गविकारः" (२।३।२० पा० ) इति तृतीया। हानिवदाधिक्यस्यापि विकारत्वात्। तथा च वामनः,—"हानिवदाधिक्यमप्यङ्गविकारः" इति। तेजसेति "प्रकृत्यादिभ्य उपसङ्ख्यानम्" † इति तृतीया। कराक्रान्तेत्यादिना श्लेषानुप्राणितेयमुत्प्रेक्षा रविरसंशयमिति; तस्याः पूर्णेन्दुनिभ इत्युपमया संसृष्टिः। हरिहरादितुल्यमहिमत्वादतिदुर्द्धर्षः स इति भावः ॥ ७० ॥

स्वयमिति ।—[ यदृच्छया ] स्वेच्छया। [ स्वयं ] सामर्थ्येन, न तु

* "अव्ययं विभक्ति" ( २।१।६ पा० ) इत्यादिसूत्रम्।

† "कर्त्तृकरणयोस्तृतीया" ( २।३।१८ पा० ) इत्यस्य वार्त्तिकम्।

बलावलेपादधुनाऽपि पूर्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा ।
सतीव * योषित् प्रकृतिः सुनिश्चला
पुमांसमभ्येति भवान्तरेष्वपि ॥ ७२ ॥
तदेनमुल्लङ्घितशासनं विधे-
र्विधेहि कीनाशनिकेतनातिथिम् ।

---

देवताप्रसादबलादिति भावः । [ सुरदैत्यरक्षसां ] देवदानवयातुधाना-नाम् [ अनुग्रहावग्रहयोः ] प्रसादनिग्रहयोः [ विधाता ] कर्त्ता [ असौ ] शिशुपालः [ अभिराद्धदेवतावितीर्णवीर्य्यातिशयान् ] अभिराद्धाभिरा-राधिताभिर्देवताभिरीश्वरादिभिर्वितीर्णो दत्तो वीर्य्यातिशयः प्रभावा-तिशयो येभ्यः तान् [ दशाननादीन् हसति ]। अनन्यप्रसादलब्धैश्वर्य्यं मयि कथं याचकैस्तुल्यतेति गर्वात् हसतीत्यर्थः † ॥ ७१ ॥

बलेति।—[ जिगीषुणा ] नित्योत्साहवतेत्यर्थः [ तेन ] शिशु-पालेन [ बलावलेपात् ] बलगर्वात् [ अधुनाऽपि, पूर्ववत् ] पूर्वजन्मनीव [ जगत् प्रबाध्यते ] ‡ तथा हि, [ सती ] पतिव्रता [ योषित् इव, सुनिश्चला ] अतिस्थिरा [ प्रकृतिः ] स्वभावः [ भवान्तरेष्वपि ] जन्मान्तरेष्वपि [ पुमांसमभ्येति ]। 'पतिं या नाभिचरति मनोवाक्काय-संयता। सा भर्त्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥' इति मनुः। उपमानोपमेयपुरस्कृतोऽर्थान्तरन्यासः ॥ ७२ ॥

तदेनमिति।—[ तत् ] तस्मात् [विधेः] विधातुरपि [ उल्लङ्घितशास-नम्] स्वयं विधातेत्याद्युक्तरीत्याऽतिक्रान्तदैवशासनमित्यर्थः। सापेक्षत्वे-ऽपि गमकत्वात् समासः। [ एनं ] शिशुपालं [ कीनाशनिकेतनातिथिं ] कीनाशो यमः, तस्य निकेतनं गृहं, तत्र अतिथिं प्राघुणिकं, [ विधेहि ]

---

* अत्र "सती च" इति पाठम् अवलम्ब्य श्लोकोऽयं साहित्यदर्पणकृता दीपकालङ्कारोदाहरणत्वेन प्रदर्शितः।

† अत्र व्यतिरेकोऽलङ्कारः। ‡ पीड्यते इत्यर्थः।

शुभेतराचारविपक्तिमापदो
निपातनीया हि सतामसाधवः ॥ ७३ ॥
हृदयमरिवधोदयादुदूढ-
द्रढिम दधातु पुनः पुरन्दरस्य ।
घनपुलकपुलोमजाकुचाग्र-
द्रुतपरिरम्भनिपीड़नक्षमत्वम् ॥ ७४ ॥

---

कुरु, यमग्टहं प्रेषयेत्यर्थः । 'कीनाशः कर्षके चुद्रे कृतान्तोपांशुघातिनोः' इति विश्वः । न चैतत् प्राघुणिकहस्तेन सर्पमारणं भवादृशामवश्य-कर्त्तव्यत्वादित्याह,—[ शुभेतराचारविपक्तिमापदः ] शुभेतराचारेण दुराचारेण, विपक्तिमाः परिपाकेण निर्वृत्ताः, कालपरिपाकेण प्राप्ता आपदो येषां ते तथोक्ताः । "ड्वितः क्त्रिः" ( ३।३।८८ पा० ) इति पचेः क्त्रिप्रत्ययः, "क्त्रेर्मम्नित्यम्" ( ४।४।२० पा० ) इति तद्धितो मप्प्रत्ययः । [ असाधवः ] दुष्टाः [ सतां ] भवादृशां जगन्नियन्तॄणां [ निपातनीयाः ] बध्याः [ हि ] । न च नैर्घृण्यदोषः । स्वदोषेणैव तेषां विनाशे निमित्त-मात्रत्वादस्माकमित्याशयेन शुभेतराचारेत्यादिविशेषणोक्तिः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७३ ॥

किञ्चैवं दुष्टनिग्रहे शिष्टानुग्रहः स्यादित्याह, हृदयमिति ।—[ अरिवधोदयात् ] रिपुनाशलाभात् [ उदूढद्रढिम ] नैश्चिन्त्यात् धृत-दार्ढ्यं, स्वस्थमिति यावत् । पृथ्वादित्वात् दृढशब्दात् "पृथ्वादिभ्य इमनिज् वा" ( ५।१।१२२ पा० ) इति इमनिच् प्रत्ययः । "र ऋतो हलादेर्लघोः" (६।४।१६१ पा०) इति ऋकारस्य रेफादेशः । [ पुरन्दरस्य ] पुरः शत्रुपुराणि दारयतीति पुरन्दरः इन्द्रः । "पूःसर्वयोर्दारि-सहोः" ( ३।२।४१ पा० ) इति खच् प्रत्ययः, "खचि ह्रस्वः" (६।४।९४ पा० ) इति उपधाह्रस्वः, "वाचंयमपुरन्दरौ च" (६।३।६९ पा०) इति निपातनाददन्तत्वं मुमागमश्च । तस्य [ हृदयं, पुनः ] भूयोऽपि, पूर्व-

**ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभ-
स्तस्मिन्नुत्पतिते पुरः सुरमुनाविन्दोः श्रियं बिभ्रति।**

---

वदेवेति भावः। [ घनपुलकपुलोमजाकुचाग्रद्रुतपरिरम्भनिपीडनक्षम-त्वम् ] घनपुलकयोः सान्द्ररोमाञ्चयोः, पुलोम्नो जाता पुलोमजा शची, तस्याः कुचाग्रयोः, द्रुतपरिरम्भः औत्सुक्यात् शीघ्रालिङ्गनं तत्र यत्पीडनं तस्य क्षमत्वं सहत्वं [ दधातु ] प्राक् चित्तविक्षेपात् त्यक्तभोगेन शक्रेण सम्प्रति त्वत्प्रसादान्निष्कण्टकं स्वकीयं राज्यं भुज्यतामित्यर्थः। अत्र दार्ढ्यंपदार्थस्योद्गूढदृढिमेति विशेषणगत्या निपीडनक्षमत्वं प्रति हेतु-त्वोक्त्या पदार्थहेतुकं काव्यलिङ्गम्। हृदयनिपीडनक्षमत्वसम्बन्धेऽप्य-सम्बन्धोक्त्या सम्बन्धेऽसम्बन्धरूपातिशयोक्तिरित्यर्थालङ्कारो वृत्त्यनुप्रासश्च तैरन्योऽन्यं संसृज्यते। पुष्पिताग्रा वृत्तम्,—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात्॥ ७४॥

ओमिति।—[ तस्मिन्, सुरमुनौ ] नारदे [ इति ] इत्थम्भूतां [ वाचं व्याहृत्य ] उक्त्वा [ नभ उत्पतिते ] खमुद्गते [ पुरः ] अग्रे [ इन्दोः श्रियं बिभ्रति ] सति, [ अथ ] मुनिवाक्यानन्तरम् [ओमित्युक्तवतः] तथास्त्वि-त्यङ्गीकृतवतः। 'ओम् प्रश्नेऽङ्गीकृतौ रोषे' इति विश्वः। [ चैद्यं ] चेदीनां जनपदानामयं चैद्यः शिशुपालः "वृद्धेत्कोसलाजादाञ्ञ्यङ्" ( ४।१।१७१ पा० ) इति ञ्यङ् प्रत्ययः। तं [ प्रति क्रुद्धस्य, शार्ङ्गिणः ] माधवस्य [वदने व्योम्नीव, अनिशं] सर्वदा, अव्यभिचारेणेत्यर्थः।[शत्रूणां, विनाशपिशुनः] विनाशस्य पिशुनः सूचकः। 'चन्द्रमभ्युत्थितः केतुः क्षितीशानां विनाशकृत्,' इति शास्त्रादिति भावः। [ केतुः ] उत्पात-विशेषः। 'केतुर्द्युतौ पताकायां ग्रहोत्पातारिलक्ष्मसु' इत्यमरः। [ भ्रुकुटिच्छलेन ] भ्रूभङ्गव्याजेन [ आस्पदं ] प्रतिष्ठां, स्थितिं [ चकार ] "आस्पदं प्रतिष्ठायाम्" ( ६।१।१४६ पा० ) इति निपातनात् सुडागमः। अनेन वाक्यार्थभूतस्य वीररससहकारिणो रौद्रस्य स्थायी क्रोधः स्वानु-भावेन भ्रुकुट्या कारणभूतोऽनुमेय इत्युक्तम्; तथा तदविनाभूत-स्याङ्गिनो वीरस्य स्थायी प्रयत्नोपनेय उत्साहोऽप्युत्पन्न एवेत्यनुसन्धेयम्।

शत्रूणामनिशं विनाशपिशुनः क्रुद्धस्य चैद्यं प्रति
व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम्॥७५॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
कृष्णनारदसम्भाषणं नाम प्रथमः सर्गः॥१॥

---

'इन्दोः श्रियं बिभ्रति' इत्यत्र मुनेरिन्दुश्रियोऽयोगात्तत्सदृशीमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धरूपो निदर्शनाऽलङ्कारः, वदने व्योम्नीवेत्युपमा, भ्रुकुटिच्छलेन केतुरिति छलादिशब्देनासत्यत्वप्रतिपादनरूपोऽपह्नवः, तत्र शत्रुविनाशसूचके त्वपेक्षितेन्दुसान्निध्यव्योमावस्थानसम्पादकत्वे निदर्शनोपमयोरपह्नवोपकारकत्वादङ्गाङ्गिभावेन सङ्करः। चमत्कारकारितया मङ्गलाचरणरूपतया च सर्गान्त्यश्लोकेषु श्रीशब्दप्रयोगः। यथाह भगवान् भाष्यकारः,—"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते, वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्ति, अध्येतारश्च प्रवक्तारो भवन्ति" इति। शार्दूलविक्रीडितं वृत्तम्। 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात्। सर्गान्तत्वाद्वृत्तभेदः। यथाह दण्डी,—'सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः। सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम्॥' इति॥ ७५॥

अथ कविः काव्यवर्णनीयाख्यानपूर्वकसर्गसमाप्तिं कथयति, इतीति।—इतिशब्दः समाप्तौ, माघकृताविति कविनामकथनं, महाकाव्ये इति महच्छब्देन लक्षणसम्पत्तिः सूचिता, शिशुपालवध इति काव्यनामकथनं, प्रथमः सर्ग इति, समाप्त इति शेषः। एवमुत्तरत्रापि द्रष्टव्यम्॥ ७५॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
शिशुपालवधकाव्यव्याख्यायां सर्वङ्कषाऽऽख्यायां
प्रथमः सर्गः॥ १॥

---

# द्वितीयः सर्गः ।

यियक्षमाणेनाहूतः पार्थेनाथ द्विषन् मुरम् ।
अभिचैद्यं प्रतिष्ठासुरासीत्कार्य्यद्वयाकुलः ॥ १ ॥
सार्द्धमुद्धवसौरिभ्यामथासावासदत्सदः ।

---

अस्मिन् सर्गे मन्त्रवर्णनाय वीजं वपति, यियक्षमाणेनेति ।—[अथ] इन्द्रसन्देशश्रवणानन्तरं [ यियक्षमाणेन ] यष्टुमिच्छता । यजतेः सन्नन्ताल्लटः शानच् । [ पार्थेन ] पृथापुत्रेण युधिष्ठिरेण । "तस्येदम्" ( ४।३।१२० पा० ) इत्यण् । अन्यथा "स्त्रीभ्यो ढक्" ( ४।१।१२० पा० ) स्यात्, ततः पार्थेयः इति स्यात् । [ आहूतः ] आकारितः । ह्वयतेः कर्मणि क्ते सम्प्रसारणदीर्घौ । तथा [ अभिचैद्यं ] शिशुपालं प्रति । "लक्षणेनाभिप्रती आभिमुख्ये" ( २।१।१४ पा० ) इत्यव्ययीभावः । "अभिरभागे" (१।४।९१ पा०) इति कर्मप्रवचनीयत्वे तद्योगे द्वितीया वा । * [ प्रतिष्ठासुः ] प्रस्थातुमिच्छुः । तिष्ठतेः सन्नन्तादुप्रत्ययः । [ मुरं द्विषन् ] मुरारिः । "द्विषोऽमित्रे" ( ३।२।१३१ पा० ) इति शतृप्रत्यये "द्विषः शतुर्वा" † इति वैकल्पिकः षष्ठीप्रतिषेधः । [ कार्य्यद्वयाकुलः ] कार्य्यद्वयेन सुरकार्य्य-सुहृत्कार्य्यरूपेणाकुलो विप्रतिषेधात् ‡ आवश्यकत्वाच्च द्वयोः कार्य्ययोर्विषये सन्दिहानः [आसीत्] अतो मन्त्रस्यायमवसर इति भावः ॥ १ ॥

एवं मन्त्रवीजसन्देहमुपन्यस्य मन्त्रोचितं देशमाह, सार्द्धमिति ।—

---

* "कर्मप्रवचनीययुक्ते द्वितीया" ( २।३।८ पा० ) इति सूत्रम् ।

† "न लोकाव्यय" (२।३।६९ पा०) इतिसूत्रस्य वार्त्तिकम् ।

‡ तुल्यबलविरोधी विप्रतिषेधः ।

गुरुकाव्यानुगां बिभ्रच्चान्द्रीमभिनभः श्रियम् ॥२॥

जाज्वल्यमाना जगतः शान्तये समुपेयुषी ।
व्यद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी ॥ ३ ॥

रत्नस्तम्भेषु सङ्क्रान्तप्रतिमास्ते चकाशिरे ।

---

[ अथ ] सन्देहानन्तरम् [ असौ ] हरिः [ अभि-नभः ] * पूर्ववदव्ययीभावः, कर्मप्रवचनीयत्वे वा द्वितीया । [ गुरुकाव्यानुगां ] गुरुकाव्यौ वृहस्पतिशुक्रावनुगावनुयायिनौ यस्यां ताम् । 'गीष्पतिर्धिषणो गुरुः' इति 'शुक्रो दैत्यगुरुः काव्यः' इति चामरः । चन्द्रस्येमां [ चान्द्रीं श्रियं बिभ्रत् ] । अत्र श्रीतुल्यां श्रियमिति निदर्शनाभेदः । [ उद्धवसौरिभ्यां सार्द्धम् ] उद्धवरामाभ्यां सह [ सदः ] सभाम् [ आसदत् ] अगमत् । राजसदसः प्रासादत्वादिति भावः । सदेर्लुङि पुषादित्वात् च्लेरङादेशः † । अत्र मनुः,—"गिरिपृष्ठं समारुह्य प्रासादं वा रहो गतः । अरण्ये निःशलाके वा मन्त्रयेदविभावितः ॥" इति ॥ २ ॥

जाज्वल्यमानेति ।—[ जगतः, शान्तये ] अनुपद्रवाय [ समुपेयुषी ] मिलिता [ जाज्वल्यमाना ] भृशं ज्वलन्ती । "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" ( ३।१।२२ पा० ) इति यङ्, ततः लटः शानजादेशे टाप् । [ असौ, नरशिखित्रयी ] नराः पुरुषा एव शिखिनोऽग्नयस्तेषां त्रयी । "द्वित्रिभ्याम्" ( ५।२।४३ पा० ) इत्यादिना तयस्यायजादेशे कृते ‡ "टिड्ढाणञ्" ( ४।१।१५ पा० ) इत्यादिना ङीप् । [सभावेद्यां] सभा आस्थानी सैव वेदिः । 'वेदिः परिष्कृता भूमिः' इत्यमरः । तस्यां [ व्यद्योतिष्ट ] दीप्यते स्म । "द्युद्भ्यो लुङि" ( १।३।९१ पा० ) इति वा तङ् । रूपकालङ्कारः ॥ ३ ॥

रत्नेति ।—[ रत्नस्तम्भेषु ] रत्नानां स्तम्भाः । इति षष्ठीसमासविशेषे

---

* अभि नभः आकाशं प्रति, आकाशे इत्यर्थः ।

† "पुषादिद्युताद्यॢदितः परस्मैपदेषु" ( ३।१।५५ पा० ) इति सूत्रम् ।

‡ "सङ्ख्याया अवयवे तयप्" (५।२।४२ पा०) इतिविहितस्य तयपोऽयजादेशः ।

एकाकिनोऽपि परितः पौरुषेयवृता इव ॥ ४ ॥
अध्यासामासुरुत्तुङ्गहेमपीठानि यान्यमी ।
तैरूहे केशरिक्रान्तत्रिकूटशिखरोपमा ॥ ५ ॥

---

पर्य्यवसानाद् विकारार्थत्वम् । तेषु [ सङ्क्रान्तप्रतिमाः ] सङ्क्रान्तप्रतिबिम्बाः । 'प्रतिमानं प्रतिबिम्बं प्रतिमा' इत्यमरः । [ते] त्रयः [ एकाकिनः] असहायाः [ अपि ] । "एकादाकिनिच्चासहाये" ( ५।३।५२ पा० ) इत्याकिनिच्प्रत्ययः । [परितः] अभितः, सर्वतः, "पर्य्यभिभ्याञ्च" ( ५।३।९ पा० ) इति तसिल्प्रत्ययः । स च सर्वोभयार्थाभ्यामिष्यते । [ पौरुषेयवृता इव ] पौरुषेयेण प्रतिबिम्बभूयस्त्वात् पुरुषसमूहेनावृता इवेत्युत्प्रेक्षा । [ चकाशिरे ] । "सर्वपुरुषाभ्यां णढञौ" (५।१।१० पा०) । "पुरुषाद् वधविकारसमूहतेनकृतेष्विति वक्तव्यम्" ( भाष्य० ) इति समूहे ढञ्प्रत्ययः । एतेन विजनत्वमुक्तम् । यद्यपि 'निस्तम्भे निर्गवाक्षे च निर्भित्त्यन्तरसंश्रये । प्रासादाग्रे त्वरण्ये वा मन्त्रयेदविभावितः ॥" इति कामन्दकीये मन्त्रभूमेः स्तम्भप्राचुर्य्यनिषेधो गम्यते, तथाऽपि तस्यापि विजनोपलक्षणत्वाददोष इति भावः ॥ ४ ॥

अध्यासामासुरिति ।—[ अमी ] त्रयः रामकृष्णोद्धवाः [ यानि, उत्तुङ्गहेमपीठानि ] उन्नतसुवर्णासनानि [ अध्यासामासुः ] अधितस्थुः, येषूपविष्टा इत्यर्थः । "अधिशीङ्स्थासां कर्म" ( १।४।४६ पा० ) इति कर्मत्वम् । "आस उपवेशने" लिट्, "दयायासश्च" ( ३।१।३७ पा० ) इत्याम्प्रत्ययः, "कृञ्चानु प्रयुज्यते लिटि" (३।१।४० पा०) इति अस्तेरनुप्रयोगः, "आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य" ( १।३।६३ पा० ) इति कृञ एवेति नियमादस्तेर्नात्मनेपदम् । [तैः] पीठैः [केशरिक्रान्तत्रिकूटशिखरोपमा] केशरिभिः सिंहैः क्रान्तानां त्रिकूटस्य त्रिकूटाद्रेः शिखराणामुपमा सादृश्यम् [ ऊहे ] ऊढा । वहेः कर्मणि लिट् सम्प्रसारणम् । त्रीणि कूटान्यस्येत्यन्वर्थसंज्ञा । 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः । उपमाऽलङ्कारः ॥ ५ ॥

**गुरुद्वयाय गुरुणोरुभयोरथ कार्य्ययोः ।**
**हरिर्विप्रतिषेधं तमाचचक्षे विचक्षणः ॥ ६ ॥**
**द्योतितान्तःसभैः कुन्दकुड्मलाग्रदतः स्मितैः ।**
**स्नपितेवाभवत्तस्य शुद्धवर्णा सरस्वती ॥ ७ ॥**
**भवद्भिरामवसरप्रदानाय वचांसि नः ।**

---

गुर्विति ।—[ अथ ] उपवेशनानन्तरं विचष्टे इति [ विचक्षणः ] वक्ता, कर्त्तरि ल्युड़िति न्यासकारः । "असनयोश्च प्रतिषेधो वक्तव्यः" ( वा० ) * इति चक्षिङः ख्याञादेशाभावः । [ हरिः, गुरुद्वयाय ] गुर्वीः उद्धवरामयोः पितृव्यज्येष्ठभ्रात्रोर्द्वयाय, द्वाभ्यामित्यर्थः । [ गुरुणोः ] महतोः [ उभयोः कार्य्ययोः ] पूर्वोक्तयोः [ तं विप्रतिषेधं ] विरोधम् [ आचचक्षे ] आख्यातवान् । तुल्यबलविरोधो विप्रतिषेधः † ॥ ६ ॥

द्योतितेति ।—कुन्दं माघभवः पुष्पविशेषः । 'माध्यं कुन्दम्' इत्यमरः । कुन्दकुड्मलाग्राणीव दन्ता यस्य तस्य [कुन्दकुड्मलाग्रदतः] । "अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च" ( ५।४।१४५ पा० ) इत्यग्रान्तपूर्वपद-बहुव्रीहिः समासान्तो वैभाषिको दतादेशः । [ तस्य ] हरेः [ सरस्वती, द्योतितान्तःसभैः] अन्तःप्रधाना सभा अन्तःसभा, सभाभ्यन्तरमित्यर्थः । सा द्योतिता प्रकाशिता यैस्तैः [स्मितैः, स्नपितेव] चालितेव । स्नातेर्ण्य-न्तात् क्तः, "अर्त्तिह्रीव्ली" (७।३।३६ पा०) इत्यादिना पुगागमः, "मितां ह्रस्वः" ( ६।४।९२ पा० ) इति ह्रस्वः । [ शुद्धवर्णा ] स्फुटाक्षरत्वात् स्वच्छकान्तिः [ अभवत् ] । अत्र स्वाभाविकवर्णशुद्धेः स्नानहेतुकत्व-मुत्प्रेक्ष्यते ‡ । स्मितपूर्वाभिभाषी हरिरिति भावः ॥ ७ ॥

कार्य्यविप्रतिषेधं निवेद्य तत्र स्वमतमावेदयिष्यन् पण्डितमानित्वं

---

* "चक्षिङः ख्याञ्" (२।४।५४ पा०) सूत्राधिकारे, "असयति" (३।१।५२ पा०) इत्यादिसूत्रे ।

† छेकानुप्रासो ।

‡ अन्यापि स्नपिता सती शुद्धवर्णा भवति इति युक्तमुत्प्रेक्षितम् ।

**पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः ॥ ८ ॥**

**करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम् ।**
**विनाप्यस्मदलं भूष्णुरिज्यायै तपसः सुतः ॥ ९ ॥**

---

तावत् परिहरति, भवद्गिरामिति ।—[ भवद्गिरां ] युष्मद्वाचाम् [ अवसर-प्रदानाय ] प्रसञ्जनायेत्यर्थः । [ नः ] अस्माकं [ वचांसि ]। सिद्धान्तो-न्नयनार्थमुच्यन्ते न तु सिद्धान्तत्वेनेत्यर्थः । तथा हि,—पूर्वं रज्यतेऽस्मिन्निति [ पूर्वरङ्गः ] नाट्यशाला, तत्स्थं कर्मापि पूर्वरङ्गः इति दशरूपके । अतः पूर्वरङ्गो नाम रङ्गप्रधानाख्यो रङ्गविघ्नशान्तिकारी नान्दीपाठगीतवादि-त्राद्यनेकाङ्गविशेषो नाट्यादौ कर्त्तव्यः कर्मविशेषः । तदुक्तं वसन्त-राजीये,—'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः प्रकीर्त्तितः ॥' इति स पूर्वरङ्गः । [ नाटकीयस्य ] नाटके भवं नाटकीयं, तत्र वर्ण्यमित्यर्थः । "वृद्धाच्छः" ( ४।२।११४ पा० ) तस्य 'आयनेयीनीयि—' ( ७।१।२ पा० ) इत्यादिनेयादेशः । तस्य [ वस्तुनः ] प्रसिद्धस्य [ प्रसङ्गाय ] प्रसञ्जनाय, प्रवर्त्तनायेति यावत् । अतः प्रथम-वादो न दोषायेति भावः । पूर्वरङ्गः प्रस्तावनेति रङ्गराजः, तच्चिन्त्यम् ;—'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमा-स्थापयेन्नटः ॥ प्रथमं पूर्वरङ्गश्च ततः प्रस्तावनेति च । आरम्भे सर्व-नाट्यानामेतत्सामान्यमिष्यते ॥' इति दशरूपकाद्युक्तभेदविरोधादिति । अत्र हरिवाक्यपूर्वरङ्गयोः प्रसञ्जकत्वस्वरूपसामान्यस्य वाक्यद्वये शब्दान्त-रेण पृथङ्निर्देशात्प्रतिवस्तूपमाऽलङ्कारः । तल्लक्षणं तूक्तम् ॥ ८ ॥

सम्प्रति स्वमतमाह, करदीकृतेति ।—[दिशां, जित्वरैः] जयनशीलैः । "इण्नशजिसर्त्तिभ्यः क्वरप्" (३।२।१६३ पा०) इति क्वरप् । कृद्योगात् कर्मणि षष्ठी । [ भ्रातृभिः ] भीमादिभिर्हेतुभिः [ करदीकृतभूपालः ] करदाः षष्ठभागप्रदाः । 'भागधेयो बलिः करः' इत्यमरः । ततः च्विः, "ऊर्यादिच्विडाचश्च" ( १।४।६१ पा० ) इति गतिसंज्ञायां "कुगति-प्रादयः" ( २।२।१८ पा० ) इति नित्यसमासः । अकरदाः करदाः सम्पद्यमानाः कृताः करदीकृताः भूपालाः यस्य सः वशीकृतराजमण्डलः

**उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।**
**समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च॥१०॥**
**न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति।**

---

[ तपसः सुतः ] धर्मपुत्रः। 'तपश्चान्द्रायणादौ स्याद्धर्मे लोकान्तरेऽपि च' इति विश्वः। [ अस्मद्विनाऽपि ] अस्माभिर्विनाऽपीत्यर्थः। "पृथग्विना-नाना—" ( २।३।३२ पा० ) इत्यादिना तृतीयाविकल्पात् पञ्चमी। [ इज्यायै ] यागाय। यजेर्भावे क्यप्, "वचिस्वपि—" ( ६।१।१५ पा० ) इत्यादिना सम्प्रसारणम्, "नमःस्वस्ति" ( २।३।१६ पा० ) इत्यादिना चतुर्थी। [ अलं ] समर्थः [ भूष्णुः ] भवनशीलः। 'भूष्णुर्भविष्णुर्भविता' इत्यमरः। "ग्लाजिस्थश्च ग्स्नुः" ( ३।२।१३९ पा० ) इति ग्स्नुप्रत्ययः, "क्ङिति च" ( १।१।५ पा० ) इत्यत्र गकारप्रश्लेषाद्गुणाभावः। तथा च जयादित्यः तत्रैव, "गकारोऽप्यत्र चर्त्वभूतो निर्दिश्यते" इति। अतो जैत्रयात्रैव कार्य्या न यज्ञयात्रेति भावः॥ ९॥

ननु यज्ञतो जैत्रयात्रायामुभयानुसरणं स्यात् तत्राह, उत्तिष्ठमान इति।—[ उत्तिष्ठमानः ] वर्द्धमानः। "उदोऽनूर्द्ध्वकर्मणि" ( १।३।२४ पा० ) इत्यात्मनेपदम्। [ तु, परः ] शत्रुः, पथोऽनपेतं [ पथ्यं ] * हित-मारोग्यञ्च [ इच्छता ] पुंसेति शेषः। [ नोपेक्ष्यः ] नौदासीन्येन द्रष्टव्यः। कुतः ?—[ हि ] यस्माद् [ वर्त्स्यन्तौ ] वर्द्धिष्यमाणौ। "लृटः सद्वा" ( ३।३।१४ पा० ) इति सदादेशे, "वृद्भ्यः स्यसनोः" ( १।३।९२ पा० ) इति विभाषया परस्मैपदं, "न वृद्भ्यश्चतुर्भ्यः" ( ७।२।५९ पा० ) इतीड-भावः। [ आमयः ] व्याधिः। 'रोगव्याधिगदामयाः' इत्यमरः। [ सः ] शत्रुश्च [ शिष्टैः ] नीतिज्ञैः [ समौ ] तुल्यवृत्ती [ आम्नातौ ] आख्यातौ। 'अल्पीयसोऽप्यरेर्वृद्धिर्महाऽनर्थाय रोगवत्। अतस्तस्यानु-पेक्ष्यत्वादुभयानुसृतिः कुतः ?॥' इति भावः। उपमाऽलङ्कारः॥ १०॥

नन्वेवं स्वार्थपरत्वदोषः स्यादिति चेन्न, लोकानुग्रहार्थत्वादस्याः

---

* "धर्मपथ्यर्थन्यायादनपेते" ( ४।४।९२ पा० ) इति यत्।

**यत्तु दन्दह्यते लोकमदो दुःखाकरोति माम् ॥११॥**
**मम तावन्मतमिदं श्रूयतामङ्ग ! वामपि ।**
**ज्ञातसारोऽपि खल्वेकः सन्दिग्धे कार्य्यवस्तुनि ॥१२॥**

---

प्रवृत्तेरित्याशयेनाह, नेति ।—[ सात्वतीसूनुः ] सत्वतोऽपत्यं स्त्री, सात्वती नाम हरेः पितृष्वसा । "उत्सादिभ्योऽञ्" ( ४।१।८६ पा० ) इत्यञ् । तस्याः सूनुश्चैद्यः । बन्धुरपि खलो न मृष्यत इति भावः । [यन्मह्यम्, अपराध्यति] द्रुह्यतीति यावत् । "क्रुधद्रुहेर्ष्या—"(१।४।३७ पा०) इत्यादिना चतुर्थी । तत इति शेषः, यत्तदोर्नित्यसम्बन्धात् । [ न दूये ] न परितप्ये । दूङो दैवादिकात् कर्त्तरि लट्, उत्तमपुरुषैकवचनम् । [ तु ] किन्तु [ लोकं, दन्दह्यते ] गर्हितं यथा स्यादेवं दहतीति [ यत् ] । "लुपसदचरजप—" ( ३।१।२४ पा० ) इत्यादिना गर्हायां यङ् । "जपजभदहदशभञ्जपशाञ्च" ( ७।४।८६ पा० ) इत्यभ्यासस्य नुमागमः । [ अदः ] लोकदहनं [ मां, दुःखाकरोति ] दुःखमनुभावयतीत्यर्थः । "दुःखात् प्रातिलोम्ये" ( ५।४।६४ पा० ) इति डाच्-प्रत्ययः । अतश्चैद्य एवाभियातव्यः । पार्थस्तु प्रार्थनयाऽपि पश्चात् समाधेय इत्यर्थः ॥ ११ ॥

स्वमतं निगमयन् परमतं शुश्रूषुः पृच्छति, ममेति ।—[ तावत् ] भवन्मतश्रवणपर्य्यन्तमित्यर्थः, [ मम मत मिदम्, अङ्ग ! ] इत्यामन्त्रणेऽव्ययम् । 'अथ सम्बोधनार्थकाः स्युः प्याट् पाडङ्ग हे है भोः' इत्यमरः । [ वां ] युवयोः । "युष्मदस्मदोः षष्ठीचतुर्थी" ( ८।१।२० पा० ) इत्यादिना वामादेशः । मतं [अपि, श्रूयताम्] विधौ लोट् । तदिदं मया श्रोतव्यम्, अन्यथा सन्देहानिवृत्तेरिति भावः । विदुषस्ते कुतः सन्देहस्तत्राह,—[ज्ञातसारः] ज्ञाततत्त्वार्थः [ अपि, एकः ] एकाकी [ कार्य्यवस्तुनि ] कर्त्तव्यार्थे [ सन्दिग्धे ] संशीते [खलु] निश्चये । अतो मयाऽपि सन्दिह्यत इत्यर्थः । 'दिह उपचये' कर्त्तरि लट्, घत्वधत्वे । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

**यावदर्थपदां वाचमेवमादाय माधवः ।**
**विरराम महीयांसः प्रकृत्या मितभाषिणः ॥१३॥**
**ततः सपत्नापनयस्मरणानुशयस्फुरा ।**
**ओष्ठेन रामो रामौष्ठविम्बचुम्बनचुञ्चुना ॥१४॥**
**विवक्षितामर्थविदस्तत्क्षणप्रतिसंहृताम् ।**

---

यावदिति ।—[ माधवः ] हरिः [ यावदर्थपदां ] यावानर्थो यावदर्थम् । "यावदवधारणे" ( २।१।८ पा० ) इत्यव्ययीभावः । यावदर्थं पदानि यस्यास्ताम् अभिधेयसम्मिताक्षरामित्यर्थः । [एवम् ] उक्तप्रकारेण [वाचम्, आदाय] गृहीत्वा, उक्त्वेत्यर्थः । [ विरराम ] तूष्णीमास । "व्याङ्परिभ्यो रमः" ( १।३।८३ पा० ) इति परस्मैपदम् । तथा हि, [ महीयांसः ] उत्तमाः [ प्रकृत्या ] स्वभावेन [ मितभाषिणः ] भवन्तीति शेषः । वृथाऽऽलापनिषेधादिति भावः । पूर्ववदलङ्कारः ॥१३॥

अथाष्टभिः कुलकेन रामं वर्णयंस्तद्वाक्यमवतारयति, तत इति ।—[ ततो रामः ] जगाद इत्युत्तरेणान्वयः । सपत्नो रिपुः । 'रिपुर्वैरिसपत्नारि—' इत्यमरः । तस्यापनयोऽपकारः तस्य स्मरणेन योऽनुशयः पश्चात्तापः । 'भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः' इति विश्वः, तेन स्फुरतीति अनुशयस्फूः, तेन, [ सपत्नापनयस्मरणानुशयस्फुरा, रामौष्ठविम्बचुम्बनचुञ्चुना ] ओष्ठो विम्बमिवेत्युपमितसमासः । रामायाः ओष्ठविम्बस्य चुम्बनेन वित्तो, रामौष्ठविम्बचुम्बनचुञ्चुः "तेन वित्तश्चुञ्चुप्चणपौ" ( ५।२।२६ पा० ) इति चुञ्चुप्प्रत्ययः । "ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्" * इति विकल्पेन पररूपम् । तेन [ ओष्ठेन ] उपलक्षितः । समरसुरतयोः समरस इति भावः । उपमाऽनुप्रासयोः संसृष्टिः ॥ १४ ॥

विवक्षितामिति ।—[ विवक्षितां ] वक्तृत्वाभिमानादग्रे वक्तुमिष्टाम् ।

---

* "अचोऽन्त्यादि टि" ( १।१।६४ ) इत्यस्य वार्त्तिकम् ।

प्रापयन् पवनव्याधेर्गिरमुत्तरपक्षताम् ॥१५॥
घूर्णयन् मदिरास्वादमदपाटलितद्युती ।
रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ ॥१६॥

---

वचेर्ब्रूञो वा समन्तात् कर्मणि क्तः। [तत्क्षणप्रतिसंहृतां] तत्क्षणे विवक्षाक्षण एव, इत्यविलम्बोक्तिः। प्रतिसंहृतां रामानुरोधादनुक्ताम् [अर्थविदः] कार्य्यज्ञस्य अत एव [पवनव्याधेः] उद्धवस्य [गिरम्, उत्तरपक्षतां] सिद्धान्तपक्षतां [प्रापयन्] स्वयमसत्पक्षावलम्बित्वादिति भावः। अनेन रामस्य व्यग्रता उक्ता ॥ १५ ॥

घूर्णयन्निति।—पुनः [मदिराऽऽस्वादमदपाटलितद्युती] मदिराऽऽस्वादेन मद्यपानेन यो मदस्तेन पाटलिता ईषद्रक्तीकृता द्युतिर्ययोस्ते [रेवतीवदनोच्छिष्टपरिपूतपुटे] रेवत्याः * देव्याः वदने यदुच्छिष्टं मद्यलेपताम्बूलादि, अक्षिचुम्बनसङ्क्रान्तमिति भावः; तेन परिपूते शुद्धे पुटे ययोस्ते [दृशौ, घूर्णयन्] भ्रामयन्निति मद्यविकारोक्तिः। उच्छिष्टपरिपूतेत्यत्र,—'रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनाम्' इति स्मरणात्। उच्छिष्टस्य पावित्र्यजनकत्वविरोधस्य आभासत्वाद्विरोधाभासोऽलङ्कारः,—'आभासत्वे विरोधस्य विरोधाभास उच्यते' इति लक्षणात् ॥ १६ ॥

---

* पुरा किल सत्ययुगे रेवतो नाम राजा स्वपुत्रीं रेवतीं यौवनवतीमवलोक्य "इयं कस्मै प्रदेया" इति जिज्ञासुः तया सह ब्रह्मलोकं गत्वा सन्ध्योपासनारतं ब्रह्माणं दृष्ट्वा कन्यकया सह तत्रैव स्थितवान्। अथ सन्ध्यामुपास्य तदभिप्रायमवगत्य ब्रह्मोवाच "वत्स! ब्रह्मलोकेऽयं मुहूर्त्तोऽपगतः, मर्त्त्यलोकेऽधुना कलियुगं सञ्जातं, लोकाश्च क्षुद्रावयवाः जाताः। अतः शेषनागराजावताराय रामाय दीयतामियम्" तच्छ्रुत्वा राजा रेवतस्तु मर्त्त्यलोकमागत्य तदवस्थां दृष्ट्वा विस्मयमवाप। कलियुगीया लोका अपि, तौ एकविंशतिहस्तोच्छ्रितौ दृष्ट्वा परं विसिस्मियिरे। अथ राजा बलरामसमीपं गत्वा ब्रह्मणोऽनुशासनं व्यजिज्ञपत्। रामोऽपि सत्ययुगीयाम् एकविंशतिहस्तोच्छ्रितां तां रेवतीं लाङ्गलेन आकृष्य सार्द्धत्रिहस्ताकारां कृत्वा स्वीचकार" इति पौराणिकी वार्त्ता।

आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् ।
म्लापयन्नभिमानोष्णैर्वनमालां मुखानिलैः ॥१७॥
दधत्सन्ध्याऽरुणव्योमस्फुरत्ताराऽनुकारिणीः ।
द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीः स्वेदविप्रुषः ॥१८॥
प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा ।
कृष्णोत्तरासङ्गरुचं विदधच्चौतपल्लवीम् ॥१९॥

---

आश्लेषेति ।—पुनः [ आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् ] आश्लेषे लोलुपाया आलिङ्गनलुब्धायाः बध्वाः स्तनयोः कार्कश्यस्य काठिन्यस्य साक्षिणीम् उपद्रष्ट्रीं नित्यं पीड्यमानामपि अम्लानामिति भावः। "साक्षाद्द्रष्टरि संज्ञायाम्" (५।२।९१ पा०) इति साक्षाच्छब्दादिनिप्रत्ययः। [वनमालाम्, अभिमानोष्णैः] अहङ्कारतप्तैः [मुखानिलैः] निश्वासमारुतैः [म्लापयन्] ग्लापयन्। म्लायतेर्ण्यन्ताल्लटः शत्रादेशः "आदेच" ( ६।१।४५ पा० ) इत्यादिना आत्वे पुगागमः *। अम्लाने म्लानसम्बन्धादतिशयोक्तिः॥ १७ ॥

दधदिति।—पुनः[सन्ध्याऽरुणव्योमस्फुरत्ताराऽनुकारिणीः] सन्ध्यायामरुणे व्योम्नि स्फुरन्तीस्तारा अनुकुर्वन्तीति तथोक्ताः। कुतः?—[ द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीः ] द्विषतः शत्रोर्द्वेषेण क्रोधेनोपरक्ते अङ्गे वपुषि सङ्गिनीः सक्ताः [ स्वेदविप्रुषः ] स्वेदविन्दून्। 'पृषन्तिविन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्' इत्यमरः। [ दधत् ] दधानः। "नाभ्यस्ताच्छतुः" ( ७।१।७८ पा० ) इति नुमभावः। उपमाऽलङ्कारः॥ १८ ॥

प्रोल्लसदिति।—पुनः [ प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा ] प्रकर्षेणोल्लसतां कुण्डलयोः प्रोतानां स्यूतानां पद्मरागदलानां माणिक्यशकलानां त्विषा कान्त्या। प्रोतेति प्रपूर्वाद्वेञः कर्मणि क्तः, यजादित्वात्

---

* "अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ( ७।३।३६ पा० ) इति सूत्रात्।

ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया।
मुखामोदं मदिरया कृतानुव्याधमुद्वमन्॥२०॥
जगाद वदनच्छद्मपद्मपर्यन्तपातिनः।
नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभिः॥२१॥

[कुलकम्]।

---

सम्प्रसारणम्। [कृष्णोत्तरासङ्गरुचं] कृष्णोत्तरासङ्गो नीलोत्तरीयम्। 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा। संव्यानमुत्तरीयञ्च' इत्यमरः। तस्य रुचं चूतपल्लवस्येमां [चौतपल्लवीं विदधत्] कृष्णलोहितमिश्रवर्णचूतपल्लववद्धूम्रां कुर्वन्नित्यर्थः; 'धूम्रधूमलौ कृष्णलोहिते' इत्यमरवचनात्। अत्रान्यरुचोऽन्यदीयत्वायोगात् सादृश्याक्षेपान्निदर्शनाऽलङ्कारः॥ १९॥

ककुद्मीति।—पुनः [ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया] ककुद्मिकन्यायाः रेवत्याः वक्त्रस्यान्तः अभ्यन्तरे वासेन स्थित्या लब्धोऽधिवासो वासना यया तया, तन्मुखसौरभवासितयेत्यर्थः। 'संस्कारो गन्धमाल्याद्यैरधिवासनमुच्यते'। [मदिरया, कृतानुव्याधं] कृतसंसर्गं, प्रियागण्डूषगन्धिनमित्यर्थः। "व्यधजपोरनुपसर्गे" (३।३।६१ पा०) इत्यनुपसृष्टादप्प्रत्ययविधानादुपसृष्टाद् व्यधेर्घञ् प्रत्ययः। [मुखामोदं] स्वमुखगन्धविशेषम्। 'आमोदः सोऽतिनिर्हारी' इत्यमरः। [उद्वमन्] उद्गिरन्। अत्र मदिरा-रामसुखगन्धयोः स्वगन्धतिरोधानेन रामामुखतद्गण्डूषमद्यगन्धस्वीकारात् तद्गुणयोस्तत्रोत्तरस्यात्मविशेषकत्वेन पूर्वसापेक्षत्वादङ्गाङ्गिभावेन सङ्करः;—'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृतिः' इति लक्षणात्॥ २०॥

जगादेति।—[वदनच्छद्मपद्मपर्यन्तपातिनः] वदनमेव छद्म कपटं यस्य तत् पद्मं, वदनमेव पद्ममित्यर्थः। छद्मशब्देनासत्यत्वप्रतिपादनरूपोऽपह्नवः। तस्य पर्यन्तपातिनः प्रान्तसञ्चारिणः। [मधुलिहः] मधु लिहन्तीति मधुलिहस्तान् मधुपान्। क्विप्। [उदग्रदशनांशुभिः]

यद्वासुदेवेनादीनमनादीनवमीरितम् ।
वचसस्तस्य सपदि क्रिया केवलमुत्तरम् ॥२२॥
नैतल्लघ्वपि भूयस्या वचो वाचाऽतिशय्यते ।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥२३॥

उदग्रैः उच्छ्रितैः दशनांशुभिः [ श्वैत्यं ] धावल्यं [नयन्] प्रापयन् [जगाद]। तद्गुणालङ्कारः। तस्य मधुपसन्निधापकवदनापङ्कजसापेक्षत्वात् तेन सङ्करः ॥ २१ ॥

रामो जगादेत्युक्तं, किं तदित्याकाङ्क्षायामाह, यदिति।—[ वासुदेवेन ] न दीनमिति [अदीनम्] अकातरं, न आदीनवोऽस्येति [ अनादीनवं ] निर्दोषम्। 'दोष आदीनवो मतः' इत्यमरः। [ यद् ] वचः [ ईरितं ] 'उत्तिष्ठमानस्तु परः' इत्यादिपक्षमाश्रित्य यदुक्तमित्यर्थः। [ तस्य वचसः, सपदि क्रिया केवलं ] सद्योऽनुष्ठानमेव [ उत्तरं ] सिद्धान्तस्यैवोक्तत्वादिति भावः * ॥ २२ ॥

अथ तदेव प्रतिपादयिष्यन् अनन्यातिशयतयोपस्करोति, नैतदिति।—[ लघु ] सङ्क्षिप्तम् [ अप्येतद्वचः, भूयस्या ] बहुतरया, विस्तृतयाऽपीत्यर्थः। "द्विवचनविभज्य—" (५।३।५७ पा०) इत्यादिना ईयसुनि, "बहोर्लोपो भू च बहोः" ( ६।४।१५८ पा० ) इतीकारलोपो बहोश्च भूरादेशः। [ वाचा, नातिशय्यते ] नातिरिच्यते, गुर्वर्थत्वादिति भावः। शीङः कर्मणि लटि यक्, "अयङ् यि क्ङिति" ( ७।४।२२ पा० ) इति अयङादेशः। तथा हि, इन्धनौघान् दहतीति [ इन्धनौघधक् ] काष्ठराशिदाहकः, भूयान् [ अपि ] इत्यर्थः। क्विपि घत्वधत्वभष्भावाः। [ अग्निः, त्विषा ] प्रभया [ पूषणं ] सूर्य्यम्, अल्पीयांसमपीति भावः। [ न अत्येति ] नातिक्रामति। तेजसः प्रभावत्त्वमिव वचसोऽर्थवत्त्वमलङ्घ्यत्वहेतुरित्यर्थः। अत्र समानधर्मविम्बितया दृष्टान्तालङ्कारः † ॥२३॥

* "अदीनमनादीनवम्" इत्यसकृद्व्यञ्जनावृत्त्या वृत्त्यनुप्रासालङ्कारः।

† नवीनमते तु,—अत्र एकस्यैव धर्मस्य अतिक्रमरूपस्य गम्यसाम्ययोः वाक्ययोः पर्य्यायान्तरेण पृथक्तया निर्देशात् प्रतिवस्तूपमाऽलङ्कारः।

सङ्क्षिप्तस्याप्यतोऽस्यैव वाक्यस्यार्थगरीयसः ।
सुविस्तरतरा वाचो भाष्यभूता भवन्तु मे ॥२४॥
विरोधिवचसो मूकान् वागीशानपि कुर्वते ।
जडानप्यनुलोमार्थान् प्रवाचः कृतिनां गिरः ॥२५॥

---

यदि हरिवचो नातिशय्यते, अलं तर्हि तवापि वागारम्भैः ? अत आह, सङ्क्षिप्तस्येति ।—[ अतः ] हरिवचसोऽनतिशयनीयत्वादेव [सुविस्तरतराः] प्रपञ्चतराः । "प्रथने वावशब्दे" ( ३।३।३३ पा० ) इति घञः प्रतिषेधे "ऋदोरप्" ( ३।३।५७ पा० ) इत्यप् । [ मे वाचः, सङ्क्षिप्तस्य अपि ] अल्पाक्षरस्यापि [ अर्थगरीयसः ] अर्थेन गरीयसः सूत्रकल्पस्येत्यर्थः । 'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः' ॥ इति लक्षणात् । [अस्यैव वाक्यस्य] नान्यस्य [भाष्यभूताः] भाष्यैः समाः । नित्यसमासः । 'क्ष्मादौ जन्तौ भूतं क्लीबं समेऽतीते चिरे त्रिषु' इति वैजयन्ती । व्याख्यानरूपाः [ भवन्तु ] इत्यर्थः । सूत्रव्याख्यानविशेषो भाष्यम् । "सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥" इति भाष्यलक्षणात् । मया तु तदेव विशेषप्रकाशनाय व्याख्यायते ; न त्वतिशयाय प्रत्याख्यायते इत्यदोष इत्यर्थः । उपमाऽलङ्कारः ॥ २४ ॥

इत्थं यानं सिद्धान्तयित्वा तत्रोद्धवप्रतिरोधं हृदि निधाय त्रिभिः प्रत्याचष्टे, विरोधीति ।—[ कृतिनां ] कुशलानां [ गिरः ] । कर्त्र्यः । [ विरोधिवचसः ] प्रतिकूलवादिनः [ वागीशान् ] वाक्पतीन् [ अपि ] । 'वागीशो वाक्पतिः समौ' इत्यमरः । [ मूकान् ] निर्वाचः [ कुर्वते ] जडयन्तीत्यर्थः । [ अनुलोमार्थान् ] अनुलोमोऽनुकूलोऽर्थोऽभिधेयं येषां तेऽनुलोमार्थाः अनुकूलवादिनः तान् [जडान्] मन्दान् [अपि, प्रवाचः] प्रगल्भवाचः कुर्वते, अतोऽस्मद्गिरः प्रवाच्या इति भावः । अत्र वागीशानां मूकीकरणाज्जडानां प्रवाक्करणाच्च अशक्यवस्तुकरणरूपो विशेषोऽलङ्कारः, असम्बन्धे सम्बन्धातिशयोक्तिप्रतिभोत्थापित इति सङ्करः ॥ २५ ॥

**षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः।**
**ग्रन्थानधीत्य व्याकर्त्तुमिति दुर्मेधसोऽप्यलम् ॥२६॥**

---

नन्वात्मनीनेन स्वामिना 'बुद्धेः फलमनाग्रहः' इति न्यायेन शास्त्रज्ञवचनं प्रतिकूलमपि ग्राह्यमेवेत्याशङ्क्याह,—षड़िति।—दुष्टा मेधा येषां ते [ दुर्मेधसः ] मन्दबुद्धयः [अपि]। "नित्यमसिच् प्रजामेधयोः" ( ५।४।१२२ पा० ) इति समासान्तोऽसिच्प्रत्ययः। [ ग्रन्थान् ] औशनसादीन् [ अधीत्य ] पठित्वा [ गुणाः ] सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्याः [ षट्। शक्तयः ] प्रभुत्वमन्त्रोत्साहाख्याः [ तिस्रः। सिद्धयः ] पूर्वोक्तशक्तित्रयसाध्याः पुरुषार्थलाभात्मिकाः, ताः [ च ] तिस्रः प्रभुसिद्धिर्मन्त्रसिद्धिरुत्साहसिद्धिश्चेति। [ उदयाः ] वृद्धिक्षयावस्थानानि छत्रिन्यायेन उदया उच्यन्ते, तत्र वृद्धिक्षयौ स्वशक्तिसिद्धोः पूर्वावस्थानादुपचयापचयौ अवस्थानं साम्यं ते च [ त्रयः इति, व्याकर्त्तुं ] व्याख्यातुं [ अलं ] समर्थाः। "पर्य्याप्तिवचनेष्वलमर्थेषु" ( ३।४।६६ पा० ) इति तुमुन्। पञ्चाङ्गनिर्णयशक्तिविकलानां सन्ध्यादिरूपसङ्ख्यामात्रपाठकानाम् अशास्त्रज्ञत्वादुद्धवादयो न ग्राह्यवचना इत्यभिसन्धिः। अत्रामरः,—'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः, शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः। क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥' इति। तत्रारिविजिगीष्वोर्व्यवस्थाकरणमैक्यं सन्धिः, विरोधो विग्रहः, विजिगीषोररिं प्रति यात्रा यानं, तयोर्मिथः प्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानमासनम्। दुर्बलप्रबलयोर्वाचिकमात्मसमर्पणं द्वैधीभावः। अरिणा पीड्यमानस्य बलवदाश्रयणं संश्रयः, कोषदण्डोत्थं तेजः प्रभावः, कर्त्तव्यार्थेषु स्थेयान् प्रयत्न उत्साहः, षड्गुणचिन्तनं मन्त्रः, गतमन्यदिति सङ्क्षेपः * ॥ २६ ॥

---

* अत्र षड्गुणा इत्यत्र षड़िति विशेषणस्य पूर्वं निर्देशात् तिस्र इत्यादेश्च विशेष्यात् परं निर्देशाद् भग्नप्रक्रमताख्यो दोषः।

**अनिर्लोडितकार्य्यस्य वाग्जालं वाग्मिनो वृथा ।**
**निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥२७॥**
**सर्वकार्य्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।**
**सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम्**
**॥२८॥**

---

ननु शास्त्रोक्तार्थव्याख्यातैव शास्त्रज्ञः, स एव ग्राह्यवचनश्चेत्याशङ्क्याह,—अनिर्लोडितेति ।—[ अनिर्लोडितकार्य्यस्य ] अनिर्लोडितं नालोकितं कार्य्यं येन तस्य, कार्य्याकार्य्यमजानत इत्यर्थः । [वाग्मिनः] वाचोऽस्य सन्तीति वाग्मी, वावदूकः । 'वाचो युक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि' इत्यमरः । "वाचो ग्मिनिः" ( ५।२।१२४ पा० ) इति ग्मिनिप्रत्ययः । तस्य [ वाग्जालं ] वागाडम्बरः [ निमित्तात् ] लक्ष्यात् । 'वेध्यं लक्ष्यं निमित्तञ्च शरव्यञ्च समं विदुः' इति वैजयन्ती । [अपराद्धेषोः ] स्खलितबाणस्य [ धानुष्कस्य ] धनुः प्रहरणमस्येति धानुष्को धन्वी । "प्रहरणम्" ( ४।४।५७ पा० ) इति ठक्, "इसुसुक्तान्तात् कः" (७।३।५१ पा०) इति ठस्य कः । 'अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः । धन्वी धनुष्मान् धानुष्कः' इत्यमरः । तस्य [ वल्गितमिव, वृथा ] निष्फलम् । कार्य्यज्ञस्य वचो ग्राह्यं, न तु वाचालस्येति भावः * ॥ २७ ॥

इत्थं षाड्गुण्यादिपाठमात्रं न मन्त्र इति सिद्धे सम्प्रति स्वयं मन्त्रस्वरूपमाह, सर्वेति ।—सर्वाणि कार्य्याणि सन्ध्यादीनि तानि शरीराणीव इत्युपमितसमासः । व्यासे सौगतानामिवेति लिङ्गान्तेषु [ सर्वकार्य्यशरीरेषु ] सर्वेषु शरीरेष्विव सर्वकार्य्येष्वित्यर्थः । [ अङ्गस्कन्धपञ्चकम् ] अङ्गानि स्कन्धा इवेत्युपमितसमासः, तेषां पञ्चकं [ मुक्त्वा ] स्कन्धपञ्चकमिवाङ्गपञ्चकं हित्वेत्यर्थः । पञ्च परिमाण-

---

* उपमाऽलङ्कारः, अपराद्धेषोरित्यनेनैव गतार्थत्वे निमित्तादिति अधिकपदत्वं दोषः ।

**मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि।**
**चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥२९॥**

---

मस्येति पञ्चकम्। "सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" (५।१।५८ पा०) इति कप्रत्ययः। [सौगतानां] सुगतो भक्तिर्भजनीय एषां सौगताः बौद्धाः। "भक्तिः" (४।३।९५ पा०) इत्यण् प्रत्ययः। तेषाम् [अन्यः आत्मेव महीभृताम्] अन्यः [मन्त्रः नास्ति]। कर्मणामारम्भोपायः, पुरुष-द्रव्यसम्पत्, देशकालविभागः, विपत्तिप्रतीकारः, कार्य्यसिद्धिश्चेति पञ्चाङ्गानि ; यथाह कामन्दकः,—'सहायाः साधनोपाया विभागो देश-कालयोः। विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥' इति। रूप-वेदनाविज्ञानसंज्ञासंस्काराः पञ्च स्कन्धाः ; तत्र,—विषयप्रपञ्चो रूप-स्कन्धः, तज्ज्ञानप्रपञ्चो वेदनास्कन्धः, आलयविज्ञानसन्तानो विज्ञान-स्कन्धः, नामप्रपञ्चः संज्ञास्कन्धः, वासनाप्रपञ्चः संस्कारस्कन्धः ; एवं पञ्चधा परिवर्त्तमानो ज्ञानसन्तान एवात्मा इति बौद्धाः। एवं यथा बौद्धानां सर्वेषु शरीरेषु स्कन्धपञ्चकातिरिक्त आत्मा नास्ति, तथा राज्ञामङ्गपञ्चकातिरिक्तो मन्त्रो नास्तीत्युपमाऽलङ्कारः, तच्चास्माकं समग्रमेवेत्ययमेव यात्राकाल इति भावः ॥ २८ ॥

अथ मन्त्रितार्थक्रियाविलम्बे दोषमाह, मन्त्र इति।—[संवृतैः] गुप्तैः [सर्वाङ्गैः] पूर्वोक्तैरुपायादिभिरुरःस्थलादिभिश्च उपलक्षितः [अपि] सर्वाङ्गसंवृतोऽपीत्यर्थः। [मन्त्रः] विचारः [अधीरः] भीरुः, युध्यत इति [योधः] भटः [इव] पचाद्यच्। [परेभ्यः] अन्येभ्योऽरिभ्यश्च। 'परं दूरान्यमुख्येषु परोऽरिपरमात्मनोः' इति वैजयन्ती। [भेदशङ्कया] भेदो विदारणं तृतीयगामित्वञ्च, तस्य शङ्कया [चिरं स्थातुं] विलम्बितु-मित्यर्थः, [न सहते] न क्षमः। "शकधृष—" (३।४।६५ पा०) इत्यादिना तुमुन्प्रत्ययः। अतो न विलम्बितव्यम्, अन्यथा मन्त्रभेदे कार्य्यहानिः स्यादिति भावः * ॥ २९ ॥

---

* अत्र श्लेषसङ्कीर्णोपमाऽलङ्कृतिः।

**आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती ।**
**तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते ॥३०॥**
**तृप्तियोगः परेणापि महिम्ना न महात्मनाम् ।**
**पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥३१॥**

---

किञ्च, नीतिसर्वस्वपर्य्यालोचनयाऽपि न विलम्बः कार्य्य इत्यभिप्रेत्याह, आत्मोदय इति ।—[ आत्मोदयः ] आत्मन उदयो वृद्धिः [परज्यानिः] * परस्य शत्रोर्ज्यानिर्हानिः । "वीज्याज्वरिभ्यो निः" (उ० ४ पा० ४८ सू० ) इत्यौणादिको निप्रत्ययः [ इति द्वयम् ] इदं परिमाणमस्या इति [ इयती ] एतावती । "किमिदंभ्यां वो घः" ( ५।२।४० पा० ) इति वतुपो वस्य घश्च, "उगितश्च" ( ४।१।६ पा० ) इति ङीप् । [ नीतिः ] नीतिसङ्ग्रहः, एतद्द्वयातिरिक्तो न कश्चिन्नीतिपदार्थोऽस्तीत्यर्थः । यदन्यत् षाड्गुण्यादिवर्णनं तत्सर्वमस्यैव प्रपञ्च इत्याह, तदिति ।—[ तद् ] द्वयम् [ऊरीकृत्य] अङ्गीकृत्य । 'ऊरीकृतमुररीकृतमङ्गीकृतम्' इत्यमरः । "ऊर्य्यादिच्विडाचश्च" ( १।४।६१ पा० ) इति गतिसंज्ञायाम्, "कुगतिप्रादयः" ( २।२।१८ पा० ) इति समासे क्त्वो ल्यप् । [ कृतिभिः ] कुशलैः [ वाचस्पत्यं ] वाग्मित्वम् । कस्कादित्वादलुक्सत्वे "षष्ठ्याः पतिपुत्र" ( ८।३।५३ पा० ) इत्यादिना सत्वमिति स्वामी, तन्न; तस्य छन्दोविषयत्वात् । ब्राह्मणादित्वात् भावे ष्यञ्प्रत्ययः । [ प्रतायते ] विस्तार्य्यते । कर्मणि लट्, "तनोतेर्यकि" ( ६।४।४४ पा० ) इत्यात्वम् । तस्मादात्मोदयार्थिभिः अविलम्बाच्छत्रुरुच्छेत्तव्यः, तन्नान्तरीयत्वात् तस्येति भावः ॥ ३० ॥

ननु लब्धोदयस्य किं परोच्छित्त्येत्यत्राह, तृप्तियोग इति ।—[ महात्मनां ] महीयसां [ परेणापि ] प्रभूतेनापि [ महिम्ना ] ऐश्वर्य्येण [ तृप्तियोगः ] सन्तोषलाभः [ न ] । [ अत्र ] तृप्त्यभावे [ पूर्णः ] सन्

---

* अत्र "ग्लानिः" इति पाठे,—"वह्निश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्" ( उणा० ४ पा० ५१ सू० ) इति नित्प्रत्ययेन रूपसिद्धिः ।

सम्पदा सुस्थिरम्मन्यो भवति स्वल्पयाऽपि यः।
कृतकृत्यो विधिर्मन्ये न वर्द्धयति तस्य ताम् ॥३२॥
समूलघातमघ्नन्तः परान् नोद्यन्ति मानिनः।
प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥३३॥

---

[ चन्द्रोदयाकाङ्क्षी ] वृद्ध्यर्थमिति भावः। [ महार्णवः, दृष्टान्तः ] दृष्टः अन्तो निश्चयो यस्मिन् स दृष्टान्तः, निदर्शनमुपमानमिति यावत्। राज्ञा वृद्धावलंबुद्धिर्न कार्य्या,—"असन्तुष्टा द्विजा नष्टाः सन्तुष्टाश्च महीभुजः। सलज्जा गणिका नष्टा निर्लज्जाश्च कुलाङ्गनाः॥" इति न्यायादिति भावः। नायं दृष्टान्तालङ्कारः, विम्बप्रतिविम्बभावेनौपम्यस्य गम्यत्वे तस्योत्थानात्। किन्तु दृष्टान्तशब्देन तस्याभिधानादुपमाऽलङ्कारः। अत एव "दृष्टान्तोदाहरणनिदर्शनरूपाः शब्दा न प्रयोक्तव्याः पौनरुक्त्यापत्तेः" इत्येकावल्यलङ्कारकारः॥ ३१॥

तथाऽपि सन्तोषे दोषमाह, सम्पदेति।—[ यः स्वल्पयाऽपि सम्पदा ] सुस्थिरमात्मानं मन्यत इति [ सुस्थिरम्मन्यः ] स्वस्थमानी [ भवति ]। "आत्ममाने खश्च" ( ३।२।८३ पा० ) इति खश्प्रत्यये मुमागमः। [तस्य] अल्पसन्तुष्टस्य [ तां ] स्वल्पसम्पदं [ कृतकृत्यः ] तावतैव कृतार्थः [ विधिः ] दैवमपि [ न वर्द्धयति ] अहमिति [ मन्ये ]। पौरुषहीनाद्दैवमपि जुगुप्सते, तत्प्रवृत्तेः पारार्थ्यादिति भावः॥ ३२॥

किञ्च, पराक्रमलब्ध एवोदयो नान्यलब्ध इत्याह, समूलेति।—[ मानिनः ] अभिमानिनः [ परान् ] शत्रून् समूलं हत्वा [ समूलघातम् अघ्नन्तः ] अनुन्मूलयन्त इत्यर्थः। "समूलाकृतजीवेषु हन्कृञ्ग्रहः" ( ३।४।३६ पा० ) इति णमुल्प्रत्ययः, "कषादिषु यथाविध्यनुप्रयोगः" ( ३।४।४६ पा० ) इति हन्तेरनुप्रयोगः। [ नोद्यन्ति ] किन्तु हत्वैवोद्यन्तीत्यर्थः। [तत्र] हत्वैवोदये [ प्रध्वंसितान्धतमसः ] अन्धयतीत्यन्धं गाढं तमो अन्धतमसम्। 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः। "अवसमन्धेभ्यस्तमसः" ( ५।४।७९ पा० ) इत्यच्प्रत्ययः। प्रध्वंसितमन्ध-

**विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।**
**अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥३४॥**
**म्रियते यावदेकोऽपि रिपुस्तावत् कुतः सुखम् ? ।**
**पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम् ॥३५॥**

---

तमसं येन सः, उदयात्प्रागिति भावः। [ रविः, उदाहरणं ] दृष्टान्तः। अत्रापि "दृष्टान्तोऽत्र महार्णवः" इतिवदुपमाऽलङ्कारः, न तु दृष्टान्त इति द्रष्टव्यम् ॥ ३३ ॥

किञ्चानुच्छिन्नशत्रोः प्रतिष्ठैव दुर्घटेत्याह, विपक्षमिति।—[ विपक्षं ] शत्रुम् [ अखिलीकृत्य ]। खिलमुत्सन्नमकृत्वा अनुन्मूल्येत्यर्थः। [प्रतिष्ठा दुर्लभा खलु]। तथा हि,—[ उदकम् ] कर्त्तृ। [ धूलिं ] स्वपरिभाविनीमिति भावः। [ पङ्कतामनीत्वा ] नाधःकृत्येत्यर्थः, [ नावतिष्ठते ] किन्तु नीत्वैव तिष्ठतीत्यर्थः, "समवप्रविभ्यः स्थः" (१।३।२२ पा० ) इत्यात्मनेपदम्। वाक्यभेदेन प्रतिविम्बनापेक्षो दृष्टान्तालङ्कारः ॥ ३४ ॥

नन्वयं शिशुपाल एकाकी नः किं करिष्यति इत्याशङ्क्याह, म्रियत इति।—[ एकोऽपि रिपुर्यावत्, म्रियते ] अवतिष्ठते। धृङ् अवस्थाने इति धातोस्तौदादिकात् कर्त्तरि लट्, "रिङ् शयग्लिङ्क्षु" ( ७।४।२८ पा० ) इति रिङादेशः। [ तावत् ] तदवधि [ सुखं कुतः ? ] 'यावत् तावच्च साकल्येऽवधौ' इत्यमरः। [हि] तथा हि, सिंहिकाया अपत्यं पुमान् [ सैंहिकेयः ] राहुः। 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः। "स्त्रीभ्यो ढक्" (४।१।१२० पा० ) [ असुरद्रुहां ] देवानां [ पुरः ] अग्रे [सोमं, क्लिश्नाति] बाधते। प्राचुर्य्यात् सोमग्रहणं सूर्य्यञ्चेति भावः। तस्मादेकोऽपि शत्रुरुच्छेत्तव्य इति भावः। 'अग्नेः शेषमृणाच्छेषं शत्रोः शेषं न शेषयेत्'। इति तात्पर्य्यम् * विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३५ ॥

---

* बन्धुवर्गे निवसन्तौ सूर्य्याचन्द्रमसौ अपि एकेनैव शत्रुणा इदानीञ्चापि क्लिश्येते इति शेषवर्षेषु शत्रुशेषो महाऽनर्थाकरः इत्यमेकोऽपि विपक्षः यातव्य एवेति ध्वन्यते।

**सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्य्यतः ।**
**स्याताममित्रौ मित्रे च सहजप्राकृतावपि ॥ ३६ ॥**
**उपकर्त्त्राऽरिणा सन्धिर्न मित्रेणापकारिणा ।**
**उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ ३७ ॥**

---

ननु क्षुद्रोऽयं चैद्यः किं नः करिष्यतीत्याशङ्क्य, तस्य बलवत्तां वक्तुं मित्रामित्रबलाबलविवेकं तावद्दर्शयति, सखेति ।—क्रियया उपकारापकारान्यतररूपया निर्वृत्तः [ कृत्रिमः ]। "ड्वितः क्त्रिः" (३।३।८८ पा० ) "क्त्रेर्मम्नित्यम्" ( ४।४।२० पा० ) [ सखा ] सुहृत् [ शत्रुश्च ] कृत्रिमः [ गरीयान् ] कुतः ?—[ हि ] यस्मात् [ तौ ] कृत्रिममित्रशत्रू [ कार्य्यतः ] उपकारापकाररूपकार्य्यवशात्, निर्वृत्ताविति शेषः । उक्तकार्य्योपाधेर्यावज्जीवमनपायात् अनयोर्मित्रामित्रभावोऽपि अनपायीति गरीयस्त्वमिति भावः । सहजप्राकृतौ तु नैवमित्याह, स्यातामिति ।—सहजातः सहजः एकशरीरावयवत्वात् ; तत्र सहजं मित्रं मातृष्वसेयपैतृष्वसेयादि, सहजशत्रुस्तु पितृव्यतत्पुत्रादिः, प्रकृत्या सिद्धः प्राकृतः । पूर्वोक्तसहजकृत्रिमलक्षणरहित इत्यर्थः । तत्र विषयान्तरः प्राकृतः शत्रुः तदनन्तरः प्राकृतं मित्रम् । अपि त्वर्थे । तौ [ सहजप्राकृतौ अपि, अमित्रौ मित्रे ] शत्रुमित्रे [ च स्यातां ] तावात्मकार्य्यवशादनियमेनोभयरूपतामापद्येते न कृत्रिमशत्रुमित्रे । कृत्रिमः शत्रुः शत्रुरेव मित्रञ्च मित्रमेवेति कृत्रिमावेव मित्रामित्रौ गरीयांसौ, न तु सहजौ, नापि प्राकृतावित्यर्थः । अनेन कृत्रिमत्वं सर्वापवादीति सिद्धम् ॥ ३६ ॥

एवं चेदस्माकं पैतृष्वसेयः शिशुपालः सहजमित्रत्वात् सन्धातव्यः, न तु यातव्य इत्यत आह, उपकर्त्रेति ।—[ उपकर्त्रा ] उपकारकारिणा [ अरिणा ] अपि । सहजेन प्राकृतेन चेति शेषः । [सन्धिः] कार्य्यः । अरित्वापवादेन कृत्रिममित्रताया बलीयस्या यावज्जीवभाविन्यास्तत्रोत्पन्नत्वादिति भावः । एवम् [ अपकारिणा मित्रेण ]

त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे ! ।
बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥ ३८ ॥
त्वयि भौमं गते जेतुमरौत्सीत्स पुरीमिमाम् ।
प्रोषितार्य्यमणं मेरोरन्धकारस्तटीमिव ॥ ३९ ॥

---

अपि। सहजेन प्राकृतेन चेति शेषः। सन्धिः [ न ] कार्य्यः। मित्त्रत्वापवादेन कृत्रिमशत्रुताया बलीयस्या यावज्जीवभाविन्यास्तत्रोत्पन्नत्वादिति भावः। ननु साक्षादरिणा सन्दध्यात्, मित्त्रेण कथं विरुन्ध्यात् ? इत्याशङ्क्य क्रियया तयोर्वैपरीत्याददोष इत्याह,—[ हि ] यस्मात् [ उपकारापकारौ ] एव [ एतयोः ] मित्त्रामित्त्रयोः [ लक्षणं ] स्वरूपं [ लक्ष्यं ] द्रष्टव्यम्। उपकर्त्तैव मित्त्रम् अपकर्त्तैव शत्रुरित्यर्थः। तस्मात् सहजमित्त्रत्वेऽपि चैद्यः क्रियया शत्रुत्वात् यातव्य एवेति भावः ॥ ३७ ॥

अथ चैद्यस्य कृत्रिमशत्रुत्वं चतुर्भिराह, त्वयेति।—हे [ हरे ! रुक्मिणीं * हरता ] बन्धुभिस्तस्मै प्रदत्तां राक्षसधर्मेणोद्वहतेत्यर्थः। 'राक्षसो युद्धहरणात्' इति याज्ञवल्क्यः। 'गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्त्रस्य तौ स्मृतौ' इति मनुः। [ त्वया चैद्यः, विप्रकृतः ] विप्रियं प्रापितः। तथा हि,—[बद्धमूलस्य] रूढ़मूलस्य [वैरतरोः स्त्रियः, महत्] प्रधानं [ मूलम्, हि ] निश्चये। रूपकसंसृष्टोऽयं सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३८ ॥

अथ तेनापि त्वं विप्रकृत इत्याह, त्वयीति।—[ त्वयि ] भूमेरपत्यं पुमांसं [ भौमं ] नरकासुरं [ जेतुं गते ] सति [ सः ] चैद्यः [ इमां पुरीं ] द्वारकां [ प्रोषितार्य्यमणं ] प्रोषितोऽर्य्यमा सूर्य्यो यस्यास्तां [ मेरोस्तटीं]

---

* पुरा किल श्रीकृष्णं प्रति पतित्वेन अर्पितमानसां शिशुपालाय प्रदातुमनसो विदर्भराजस्य भीष्मकस्य कन्यां रुक्मिणीं अपहृत्य श्रीकृष्णः परिणीतवान् इति भारतीया कथा।

आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत् ।
कथाऽपि खलु पापानामलमश्रेयसे यतः ॥ ४० ॥
विराद्ध एवं भवता विराद्धा बहुधा च नः ।
निर्वर्त्त्यतेऽरिः क्रियया स श्रुतश्रवसः सुतः ॥४१॥

---

सानुम् [ अन्धकार इव, अरौत्सीत् ] रुरोध । रुधेरनिटो लुङि रूपम् । उपमाऽलङ्कारः * ॥ ३९ ॥

अपकारान्तरमाह, आलप्येति ।—[ सः ] चैद्यः [ बभ्रोः ] यादव-भेदस्य [ दारान् ] भार्य्याम् । 'भार्य्या जायाऽथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी' इत्यमरः । [ अपाहरत् ] इति यत् [ इदं ] दाराऽपहरणं [ आलप्य ] उच्चार्य्य [ अलं ] नालपनीयमित्यर्थः । "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" ( ३।४।१८ पा० ) इति क्त्वाप्रत्यये समासे ल्यबादेशः † । [यतः पापानां] पाप्मनां [कथाऽपि] उच्चारणमपि । "चिन्तिपूजिकथिकुम्बि—" (३।३।१०५ पा०) इत्यादिना अङ्प्रत्ययः । [अश्रेयसे] अनर्थाय [ अलं ] समर्था । [खलु] । "नमःस्वस्ति—" ( २।३।१६ पा० ) इत्यादिना चतुर्थी । अत्र निषिध्यमानालपननिषेधनसमर्थनात् कार्य्येण कारणसमर्थकोऽर्थान्तरन्यासः ॥ ४० ॥

फलितमाह,—विराद्ध इति ।—[ एवं भवता विराद्धः ] विप्रकृतः । राधेरनिटः कर्म्मणि क्तः । [ बहुधा, नः ] अस्माकं [च, विराद्धा] विप्रकर्त्ता [ श्रुतश्रवसः ] श्रुतश्रवा नाम हरेः पितृष्वसा तस्याः [ सुतः ] । पैतृष्वसेयत्वात् सहजमित्रमपीति भावः । [ सः ] चैद्यः [ क्रियया ]

---

* उपमाऽलङ्कारेणैतेन च सूर्य्यापगमेऽपि अन्धकारो रवसानुत्वात् यथा सुमेरुसानुं सम्यक् रोद्धुं न शक्नोति, तथा सोऽपीमां रोद्धुं नाशकदिति व्यज्यते । यदा किल भगवान् नारायणः वराहमूर्त्त्या जलधिजलतलगतां धरित्रीमुज्जहार, तदैव वसुधा वरवर्णिनीरूपिणी भूत्वा तं कामयामास । तदुत्पन्नोऽसुरकुलपरिपालितो बालकः नरकनाम्ना ख्यातिमवाप इति पुराणम् ।

† "समासेऽनञ्पूर्वे क्त्वो ल्यप्" ( ७।१।३७ पा० ) इति सूत्रम् ।

**विधाय वैरं सामर्षे नरोऽरौ य उदासते।**
**प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥४२॥**
**मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी।**
**क्रियासमभिहारेण विराध्यन्तं क्षमेत कः? ॥४३॥**

---

पूर्वोक्तान्योऽन्यापक्रियया [ अरिर्निर्वर्त्यते ] कृत्रिमः शत्रुः क्रियते। अतो बलीयस्त्वादनुपेक्ष्य इति भावः ॥ ४१ ॥

अत्राप्युपेक्षायां दोषमाह, विधायेति।—[ ये नरः ] पुमांसः। 'नृः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः। [ सामर्षे ] प्रागेव सरोषे [ अरौ वैरं विधाय ] स्वयं चापकृत्येत्यर्थः। [ उदासते ] उपेक्षन्ते। [ ते ] नरः [ कक्षे ] गुल्मे। 'कक्षस्तु गुल्मे दोर्मूले पापे जीर्णवने तृणे' इति वैजयन्ती। [ उदर्चिषम् ] अग्निं [ प्रक्षिप्य, अभिमारुतम् ] आभिमुख्येऽव्ययीभावः *। [ शेरते ] स्वपन्ति, तद्वन्नाशहेतुरित्यर्थः। "शीङो रुट्" ( ७।१।६ पा० ) इति रुडागमः। अत्र 'ये उदासते ते शेरते' इति विशिष्टौदासीन्यशयनयोर्वाक्यार्थयोर्निर्दिष्टैकत्वासम्भवात् सादृश्यलक्षणायामसम्भवद्वस्तुसम्बन्धो वाक्यार्थनिर्वृत्तिरिति निदर्शनाभेदः। न चायं दृष्टान्तः, वाक्यभेदेन प्रतिबिम्बकरणाक्षेपे तस्योत्थानात्। अत्र तु वाक्यार्थे वाक्यार्थसमारोपाद्वाक्यैकवाक्यतायां तदभाव इत्यलङ्कारसर्वस्वकारः ॥ ४२ ॥

तथाऽपि बान्धवत्वात् सोढव्य इत्याशङ्क्याह, मनागिति।—[ यः, क्षमी ] सहनः। "शमित्यष्टाभ्यो घिनुण्" ( ३।२।१४१ पा० ) इति घिनुण् प्रत्ययः। स सोढा [ मनाग् ] अल्पम्। अभ्यावृत्तावपीति भावः। [ अनभ्यावृत्त्या ] सकृद् [ वा ] अनल्पत्वेऽपीति भावः। [ विराध्यन्तम् ] अपकुर्वाणं [ कामं ] भृशं [ क्षाम्यतु ] क्षमताम्। सम्भावनायां लोट्। "शमामष्टानां दीर्घः श्यनि" (७।३।७४ पा०) इति दीर्घः। [ क्रियासमभिहारेण ] भृशं पौनःपुन्येन चेत्यर्थः। न च पुंवाक्येष्वनि-

---

* "लक्षणेनाभिप्रती आभिमुख्ये" ( २।१।१४ पा० ) इति सूत्रम्।

**अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः।**
**पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ ४४ ॥**
**मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति।**
**तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ ४५ ॥**
**पादाहतं यदुत्थाय मूर्द्धानमधिरोहति।**

---

कार्थत्वं दोषाय। विराध्यन्तं [ कः क्षमेत ? ] सहेत, सोढुं शक्नुयात् ? न कोऽपीत्यर्थः। "शकि लिङ् च" ( ३।३।१७२ पा० ) इति शक्यार्थे लिङ्, 'क्षमूष् सहने' दैवादिको भौवादिकश्च ॥ ४३ ॥

ननु सर्वदा क्षमैव पुंसो भूषणं, अतोऽपराधेऽपि क्षन्तव्यम्, अत आह, अन्यदेति।—[ अन्यदा ] सुरतव्यतिरिक्ते काले [ योषितो लज्जेव पुंसः ] अन्यदा अपरिभवे [ क्षमा ] शमः [ भूषणम्। परिभवे ] तु योषितः [ सुरतेषु, वैयात्यं ] धाष्टर्यम् [ इव ]। 'धृष्टे धृष्णुर्वियातश्च' इत्यमरः। [ पराक्रमः ] पौरुषं, भूष्यतेऽनेनेति भूषणम् आभरणम्। एवञ्चाक्रिया-वचनत्वान्नियतलिङ्गत्वात् विरोध इति वल्लभोक्तं प्रत्युक्तम् * ॥ ४४ ॥

अथ परिभवेऽप्यपराक्रमे त्रिभिर्निन्दामाह, मा जीवन्निति।—[ यः परावज्ञादुःखदग्धोऽपि ] परस्यापकर्तुरवज्ञया अपमानेन यद्दुःखं तेन दग्धस्तप्तोऽत एव [मा जीवन्] गर्हितजीवी सन्। "माङ्याक्रोशे" † इति लटः शत्रादेशः। [ जीवति ] प्राणान् धारयति। [ जननीक्लेश-कारिणः ] जनन्याः क्लेशकारिणः गर्भधारणप्रसवादिवेदनाकारिणः, तद्व्यतिरिक्तार्थक्रियाहीनस्येत्यर्थः। [ तस्य ] अजननम् [ अजननिः ] अनुत्पत्तिः [ एवास्तु ]। जननीक्लेशनिवृत्त्यर्थमिति भावः। "आक्रोशे नञ्यनिः" (३।३।११२ पा०) इति नञ्पूर्वाज्जनिधातोरनिप्रत्ययः ॥ ४५ ॥

पादेति।—[ यद्रजः ] धूलिः [पादाहतं] पादेनाहतं सत् [ उत्थाय ]

---

* अत्रोपमयोः संसृष्टिः।

† "आने मुक्" ( ७।२।८२ पा० ) इत्यस्य वार्त्तिकम्।

स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥ ४६ ॥
असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः ।
यदृच्छाशब्दवत् पुंसः संज्ञायै जन्म केवलम् ॥४७॥
तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधता ।
अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥ ४८ ॥

---

उड्डीय [ मूर्द्धानम् ] आहन्तुरेव शिरः [ अधिरोहति ] आक्रामति, [ तद् ] रजः अचेतनमपीति भावः । [अपमाने] सति [ अपि, स्वस्थात् ] सन्तुष्टाद् [ देहिनः ] चेतनाद् [ वरं ] श्रेष्ठम् [ एव ]। व्यतिरेकालङ्कारः * ॥ ४६ ॥

असम्पादयत इति ।—किञ्च, [ जातिक्रियागुणैः ] जातिः ब्राह्मणत्वादिः, क्रिया इज्याध्ययनादिः, गुणः शौर्य्यादिः, तैः साधनैः । करणे तृतीया । [ कञ्चिदर्थं ] सुकृतकीर्त्यादिपौरुषार्थम्, अन्यत्र गोत्वपाचकत्वशौक्ल्यादिभिः स्वाभिधेयभूतैः कारणैः कञ्चिदर्थं व्यवहाररूपं प्रयोजनम् [ असम्पादयतः ] उभयत्र तादृग्जात्याद्यसम्भवादिति भावः । [ पुंसः, जन्म ] सत्तालाभः [ यदृच्छाशब्दवत् ] इच्छाप्रकल्पितस्य जात्यादिप्रवृत्तिनिमित्तशून्यस्य डित्थादिशब्दस्येव । "तत्र तस्येव" ( ५।१।११६ पा० ) इति वतिप्रत्ययः । 'स्वेच्छा यदृच्छा स्वच्छन्दः स्वैरता चेति ते समाः' इति केशवः । [संज्ञायै केवलं] संज्ञार्थमेव ; एकत्र पारिभाषिकं किञ्चिन्नाममात्रम् अनुभवितुम्, अन्यत्र तादृक्तामनुभवितुमित्यर्थः † ॥४७ ॥

एवमपौरुषं दूषयित्वा पौरुषं भूषयति, तुङ्गत्वमिति ।—[ अद्रौ ] पर्वते [ तुङ्गत्वम् ] औन्नत्यमस्तीति शेषः, "अस्तिर्भवन्तीपरोऽप्रयुज्यमानो-

---

* अस्मन्मते तु अत्र अप्रस्तुतप्रशंसैव, तदपेक्षया रजोऽपि वरमिति विशेषे प्रस्तुते सामान्यरूपेण तथाऽभिधानात्, तथैव साहित्यदर्पणकाराद्यालङ्कारिकसिद्धान्तस्वारस्याच्चेति बोध्यम् ।

† उपमाऽलङ्कारः ।

तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत्।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम्॥४९॥
स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि।
निदर्शनमसाराणां लघुर्बहुतृणं नरः॥५०॥

---

ऽप्यस्ति" इत्यादिभाष्यात् भवन्ती पूर्वाचार्य्याणां लटः संज्ञा। [इतरा] अगाधता [न] अस्ति, [सिन्धौ] समुद्रे [अगाधता] गम्भीरताऽस्ति। [इदं] तुङ्गत्वं [न] अस्ति, [मनस्विनि] वीरे तु [अलङ्घनीयताहेतुः] अलङ्घात्वकारणं [तदुभयं] तुङ्गत्वमगाधता च *। तस्मादद्रिसिन्धुभ्यामधिको मनस्वीति व्यतिरेकालङ्कारः॥४८॥

सम्प्रति शत्रौ मार्दवमनर्थायेत्याह, तुल्य इति।—[स्वर्भानुः] राहुः [अपराधे तुल्ये] अपि, [भानुमन्तं] सूर्य्यं [चिरेण ग्रसते। हिमांशुं] चन्द्रम् [आशु] शीघ्रं ग्रसते गिलतीति [यत्] 'ग्रसितं गिलितं गीर्णम्' इत्यभिधानात्। [तत्, म्रदिम्नः] मार्दवस्य [फलं स्फुटम्]। "पृथ्वादिभ्य इमनिच्—" (५।१।१२२ पा०) इतीमनिच्प्रत्ययः। तस्माद्विपक्षे तीव्रेण भवितव्यम्। अन्यथा "मृदुः सर्वत्र बाध्यते" इति भावः। † एतच्च प्रस्तुतमप्रस्तुतार्केन्दुकथनेन सारूप्यात् प्रतीयते इत्यप्रस्तुतप्रशंसाभेदोऽयम्;—'अप्रस्तुतस्य कथनात् प्रस्तुतं यत्र गम्यते। अप्रस्तुतप्रशंसेयं सारूप्यादिनियन्त्रिता॥' इति लक्षणात्॥४९॥

एतदेव भङ्गान्तरेणाह, स्वयमिति।—[असाराणां] दुर्बलानां [निदर्शनं] दृष्टान्तः अत एव ईषदसमाप्तं तृणं [बहुतृणम्] तृणकल्पम् इत्यर्थः। "विभाषा सुपो बहुच् पुरस्तात्तु" (५।३।६८ पा०) इति

---

* अस्ति इति योजना।

† यदा तु भगवान् नारायणः मोहिनीमूर्त्तिमवलम्ब्य असुरान् वञ्चयित्वा देवान् अमृतं भोजयितुमारेभे, तदा असुरः सिंहिकातनयः राहुः देवसङ्घमध्ये गुप्तभावेन प्रविवेश। सूर्य्याचन्द्रमसौ देवौ तथाविधं तं निवेदयामासतुः। ततः नारायणः तम् अमृतं भुञ्जानं चक्रेण चिच्छेद इति तुल्यापराधता सूर्य्याचन्द्रमसयोः इति भारते।

तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते।
पञ्चमः पञ्चतपसस्तपनो जातवेदसाम्॥ ५१॥
अकृत्वा हेलया पादमुच्चैर्मूर्द्धसु विद्विषाम्।

---

बहुच्प्रत्ययः प्रकृतेः पूर्वञ्च भवति। 'स्यादीषदसमाप्तौ तु बहुच् प्रकृतिलिङ्गकः' इति वचनात् प्रकृतिलिङ्गता। [लघुः] निष्पौरुषः [नरोऽल्पेऽपि, परवायौ] परो वायुरिवेत्युपमितसमासः। बहुतृणमिति "स्पष्टोपमासाहचर्य्यात् कल्पब्देश्यदेशीयदेश्यादि" इति दण्डिना कल्पबादीनामौपम्यवाचकेष्वभिधानात्। तस्मिन् [उपेयुषि] प्राप्ते सति [स्वयं प्रणमते] स्वयमेव प्रह्वीभवति। "कर्मवत्कर्मणा तुल्यक्रियः" (३।१।८७ पा०) इति कर्मवद्भावात् "भावकर्मणोः" (१।३।१३ पा०) इत्यात्मनेपदम्। "न दुहस्नुनमां यक्चिणौ" (३।१।८९ पा०) इति यक्प्रतिषेधः। वायुना तृणमिवाल्पीयसापि रिपुणा लघुरक्लेशेन परिभूयत इत्यर्थः। उपमाऽलङ्कारः॥ ५०॥

पुनः पौरुषे गुणमाह,—तेजस्वीति।—[दवीयानपि] दूरस्थोऽपि। "स्थूलदूर" (६।४।१५६ पा०) इत्यादिना पूर्वगुणयणादिपरलोपौ। [तेजस्वी, तेजस्विमध्ये] तेजस्विनां मध्ये [गण्यते] सङ्ख्यायते। तथा हि, पञ्चाग्निसाध्यं तपो यस्य स तथा तस्य [पञ्चतपसः] पञ्चाग्निमध्ये तपस्यतः [तपनः] अर्कः [जातवेदसाम्] अग्नीनां [पञ्चमः] पञ्चानां पूरणः, * पञ्चमो जातवेदा भवतीत्यर्थः। अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ५१॥

गुणान्तरञ्च व्यतिरेकेणाह,—अकृत्वेति।—[उच्चैः] उन्नतेषु [विद्विषां मूर्द्धसु हेलया पादम्, अकृत्वा] अनिधाय। "अनञ्पूर्वे" † इति निषेधात् समासेऽपि न ल्यबादेशः। [कीर्त्तिः, कथङ्कारं] कथ-

---

* "तस्य पूरणे डट्" (५।२।४८ पा०) "नान्तादसंख्यादेर्मट्" (५।२।४९ पा०) इति सूत्राभ्यां सिद्धेः।

† "समासेऽनञ्पूर्वे क्त्वो ल्यप्" (७।१।३७ पा०) इति सूत्रोदाहरणे "अनञ् किम्? अकृत्वा" इति दीक्षिताः।

**कथङ्कारमनालम्बा कीर्त्तिर्द्यामधिरोहति ? ॥५२॥**
**अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ।**
**केशरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥ ५३ ॥**
**चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ।**
**स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ?॥५४॥**

---

मित्यर्थः। "अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्" (३।४।२७ पा०) इत्यनर्थकादेव करोतेः कथम्पूर्वात् णमुल्। [ अनालम्बा ] निराधारा कीर्त्तिः [ द्यां ] दिवम् [ अधिरोहति ? ] न कथञ्चिदित्यर्थः। किञ्चिन्निःश्रेण्यादिकमनाक्रम्योच्चसौधस्य दुरारोहत्वादिति भावः। तस्मात् कीर्त्तिमिच्छता पौरुषमेवाश्रयणीयम् इति श्लोकतात्पर्य्यम्। कीर्त्तितद्वतोरभेदोपचारात् समानकर्त्तृतानिर्वाहः। अत्र प्रस्तुतायाः कीर्त्तेर्विषयमहिम्ना अप्रस्तुतप्रासादारोहणस्त्रीव्यवहारप्रतीतेः समासोक्तिः ॥ ५२ ॥

पौरुषमेवाश्रयणीयमित्यत्रान्वयव्यतिरेकदृष्टान्तावाचष्टे,—अङ्केति।—[ अङ्काधिरोपितमृगः ] अङ्कमुत्सङ्गमधिरोपितो मृगो येन सः [चन्द्रमाः, मृगलाञ्छनः ] मृगाङ्कः, तथा [ निष्ठुरक्षिप्तमृगयूथो ] निष्ठुरं यथा तथा क्षिप्तो हतो मृगयूथो मृगसमूहो येन सः [ केशरी ] सिंहः [ मृगाधिपः ] उभयत्रापि ख्यात इति शेषः। तस्माच्छत्रौ मार्दवं दुष्कीर्त्तये पौरुषं तु कीर्त्तये इति भावः। अत्राप्रस्तुतकथनात् प्रस्तुतार्थप्रतीतेरप्रस्तुतप्रशंसा ॥ ५३ ॥

ननु सामादिसुकरोपायमुपेक्ष्य किं पाक्षिकसिद्धिना दण्डेन ? यथाह मनुः,—'साम्ना भेदेन दानेन समस्तैरुत वा पृथक्। विजेतुं प्रयतेतारीन् न युद्धेन कदाचन॥' इति; तस्मात् सान्त्वमेव युक्तमित्याशङ्क्य द्वाभ्यां निराचष्टे, चतुर्थोपायेति।—[ चतुर्थोपायसाध्ये ] दण्डसाध्ये [ रिपौ तु, सान्त्वं ] साम, 'साम सान्त्वमुभे समे' इत्यमरः। [ अपक्रिया ] अपकारः। तथा हि, [ स्वेद्यं ] स्वेदार्हं, स्वेदनकार्य्यमित्यर्थः। 'स्वेदस्तु स्वेदने घर्मे" इति विश्वः। [ आमज्वरम् ] अपक्वज्वरं प्राप्य। 'आमो

**सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः ।**
**प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ ५५ ॥**
**गुणानामायथातथ्यादर्थं विप्लावयन्ति ये ।**
**अमात्यव्यञ्जना राज्ञां दूष्यास्ते शत्रुसंज्ञिताः ॥५६॥**

---

रोगे रोगभेदे आमोऽपक्वे तु वाच्यवत्' इति विश्वः। [कः, प्राज्ञः] पण्डितः [अम्भसा] जलेन [परिषिञ्चति ?] न कोऽपीत्यर्थः। ज्वरितस्याम्भःसेकवत् क्रुद्धस्य सान्त्वमुद्दीपकं स्यात्। अतो दण्ड एवेति भावः। वाक्यभेदेन प्रतिबिम्बकरणापेक्षो दृष्टान्तालङ्कारः ॥ ५४ ॥

सामेति।—[सकोपस्य] रूढवैरस्य [तस्य] चैद्यस्य [सामवादाः] प्रियोक्तयः [सहसा, प्रतप्तस्य] क्वथितस्य [सर्पिषः] घृतस्य [तोयबिन्दव इव, प्रत्युत] वैपरीत्येन [दीपकाः] प्रज्वलनकारिणः, न तु शान्तिकरा इत्यर्थः, तस्माद्दण्ड एव सः। मनुवचनं त्वप्ररूढवैरविषयमिति भावः * ॥ ५५ ॥

एवं स्थिते यदि केचिदुद्धवादयः प्रत्याचक्षीरन् तान् प्रत्याह, गुणानामिति।—सन्ध्यादीनां [गुणानामायथातथ्यात्] तथात्वमनतिक्रम्य यथातथं, यथायोग्यम् इति यावत्। 'यथार्थे तु यथातथम्' इत्यमरः। यथार्थेऽव्ययीभावः, † "स नपुंसकम्" (२।४।१७ पा०) इति नपुंसकत्वं, "ह्रस्वो नपुंसके" (१।२।४७ पा०) इति ह्रस्वत्वम्। ततो नञ्समासे अयथातथं, तस्य भावः आयथातथ्यम्। ब्राह्मणादित्वात् ‡ ष्यञ्प्रत्ययः, "यथातथयथापुरयोः पर्य्यायेण" (७।३।३१ पा०) इति विकल्पान्नञ्पूर्वपदवृद्धिः। तस्मादायथातथ्यादयथायोग्यत्वादन्यकालेऽन्यप्रयोगादित्यर्थः। [अर्थं] प्रयोजनं [ये, विप्लावयन्ति] निघ्नन्ति कार्य्यहानिं कुर्वन्तीत्यर्थः, [अमात्यव्यञ्जना] अमात्यानां व्यञ्जनं

---

* उपमाऽलङ्कारः।

† "अव्ययं विभक्ति"—(२।१।६ पा०) इत्यादिना।

‡ "गुणवचनब्राह्मणादिभ्यः कर्म्मणि च" (५।१।१२४ पा०) इति सूत्रम्।

**स्वशक्त्युपचये केचित्परस्य व्यसनेऽपरे।**
**यानमाहुस्तदासीनं त्वामुत्थापयति द्वयम् ॥५७॥**
**लिलङ्घयिषतो लोकानलङ्घ्यानलघीयसः।**
**यादवाम्भोनिधीन् रुन्धे वेलेव भवतः क्षमा ॥५८॥**

---

चिह्नं येषां ते तथोक्तास्तद्वेशधारिण इत्यर्थः। "अवर्ज्यो बहुव्रीहि-र्व्यधिकरणो जन्माद्युत्तरपदः" इति वामनः। वस्तुतस्तु शत्रुरिति संज्ञा एषां सञ्जाता [ शत्रुसंज्ञिताः ] शत्रव एव [ ते ] कूटमन्त्रिणः [ राज्ञां ] दूषयितुमर्हाः [ दूष्याः ] गर्ह्याः त्याज्या इति यावत्। "कृत्यानां कर्त्तरि वा" ( २।३।७१ पा० ) इति कर्त्तरि षष्ठी। अतः स्वोक्तं न प्रतिरोद्धव्यमिति भावः ॥ ५६ ॥

ननु यातव्योऽपि काले यातव्य इत्याशङ्क्यायमेव काल इत्याह, स्वेति।—[ केचिद् ] वृद्धाः [ स्वशक्त्युपचये ] स्वस्य शक्त्युपचये सामर्थ्याति-रेके [ यानं ] यात्राम् [ आहुः ]। यथाह कामन्दकः,—प्रायेण सन्तो व्यसने रिपूणां यातव्यमित्येव समादिशन्ति। तथा विपक्षे व्यसनान-पेक्षी क्षमो द्विषन्तं मुदितः प्रतीयात् * ॥' इति। [ अपरे ] वृद्धाः [ परस्य ] शत्रोः [ व्यसने ] विपदि, 'व्यसनं विपदि भ्रंशे' इत्यमरः। यानमाहुः। अत्र मनुः,—'तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः' इति। [ तद्द्वयम् ] उक्तपक्षद्वयं कर्तृ। [ आसीनम् ] अनुद्युञ्जानम्। "ईदासः" ( ७।२।८३ पा० ) इति शानजाकारस्येकारादेशः। [ त्वाम्, उत्थापयति ] प्रेरयति। तदुभयलाभादीदृक् कालो न कदाऽपि लभ्यत इत्यर्थः ॥ ५७ ॥

तत्र स्वशक्त्युपचयं तावल्लक्षयति, लिलङ्घयिषत इति।—[ लोकान् ] लङ्घयितुमिच्छतः [ लिलङ्घयिषतः ] लङ्घयतेः सन्नन्ताल्लटः शतरि शस्। [ अलङ्घ्यान् ] स्वयं दुर्लङ्घ्यान्। कुतः?—[ अलघीयसः ] अतिगुरून् अत एव यादवा अम्भोनिधय इवेत्युपमितसमासः। वेलेवेति लिङ्गात्

---

* "तन्नैव पक्षी व्यसनं ह्यनिष्टं क्षमस्तु सन्नभ्युदितः प्रतीयात्" इति च पाठः।

विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम्।
फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनि ॥५९॥
हृते हिडिम्बरिपुणा राज्ञि द्वैमातुरे युधि।
चिरस्य मित्रव्यसनी सुदमो दमघोषजः ॥ ६० ॥

---

तान् [ यादवाम्भोनिधीन् भवतः, क्षमा ] तितिक्षा [ वेलेव ] कूलमिव। 'वेला कूलेऽपि वारिधेः' इति विश्वः। [ रुन्धे ] प्रतिबध्नाति। अन्यथा प्रागेव सर्वं संहरेयुरिति भावः * ॥ ५८ ॥

अभ्युच्चयश्चायमपरः यदक्लेशेनैव ते विजयलाभ इत्याह, विजय इति।—[ सेनायाः ] कर्त्र्याः [ विजयः, साक्षिमात्रे ] उदासीने एव [ फलभाजि त्वयि, समीक्ष्योक्ते ] साङ्ख्योक्ते। 'साङ्ख्यं समीक्ष्यम्' इति त्रिकाण्डः। [ आत्मनि, बुद्धेः ] महत्तत्त्वस्य मूलप्रकृतेः प्रथमविकारस्य कर्त्र्याः [ भोगः ] सुखदुःखानुभवः [ इव, अपदिश्यतां ] व्यवह्रियताम्। भृत्यजयपराजययोः स्वामिगम्यत्वादिति भावः। साङ्ख्या अप्याहुः,— 'कर्त्तेव भवत्युदासीनः' इति "सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिः" इति च † ॥ ५९ ॥

अथ परस्य व्यसनमाह, हृत इति।—[ हिडिम्बरिपुणा ] भीमेन [ द्वैमातुरे ] द्वयोर्मात्रोरपत्यं पुमान् द्वैमातुरः। "मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः" (४।१।११५ पा०) इत्यण्प्रत्ययः, उकारश्चान्तादेशो रेफपरः। तस्मिन् [ राज्ञि ] जरासन्धे। सहिताभ्यां पत्नीभ्याम् अर्द्धशः प्रसूतो जरया नाम पिशाच्या सन्धितश्चेति कथयन्ति ‡। [ युधि हृते ] सति [ चिरस्य ] चिरकालेन। 'चिराय-चिररात्राय-चिरस्याद्याश्चिरार्थकाः' इत्यमरः। [ मित्रव्यसनी ] मित्रव्यसनवान्, मित्रभ्रंशवानिति यावत्। 'व्यसनं विपदि भ्रंशे' इत्यमरः। दमघोषाज्जातः [ दमघोषजः ] चैद्यः, सुखेन दम्यत इति [सुदमः] एकाकित्वात् सुसाध्य इत्यर्थः ॥ ६० ॥

---

* उपमाऽलङ्कारः। † उपमाऽलङ्कारः।

‡ मातृभ्याम् अर्द्धशः प्रसूतत्वात् जरया सन्धितत्वात् "सन्धिविपाटनान्मृत्युः"

**नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये ।**
**विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः ॥ ६१ ॥**
**अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।**
**सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ? ॥६२॥**

---

कष्टश्चायं पक्षोऽभ्युपेत्यवादेनोक्तः । वस्तुतस्तु शूराणाम् अग्रिमपक्ष एव इष्टः शास्त्रसंवादी ; यथाह कामन्दकः,—'यदा समस्तं प्रसभं निहन्तुं पराक्रमादूर्जितमप्यमित्रम् । तदाऽभियायादहितानि कुर्वन्नुपान्ततः कर्षणपीड़नानि' ॥ इतीत्यभिप्रेत्याह, नीतिरिति ।—[ परः ] शत्रुः [ आपदि, गम्यः ] गमनार्हः [ नीतिः ] इति [ यत् तत् ] आपदि गमनं [ मानिनः ] शौर्य्याभिमानिनः [ ह्रियै ] लज्जाकरमित्यर्थः । किन्तु [ पूर्णः ] उपचितगात्रः [ सः ] शत्रुः [ तस्य ] मानिनः । [ विधुः ] चन्द्रः [ विधुन्तुदस्य इव ] विधुं तुदति छिनत्तीति विधुन्तुदो राहुः । "विध्वरुषोस्तुदः" ( ३।२।३५ पा० ) इति खश्प्रत्यये मुमागमः । तस्येव [ उत्सवाय ] । अत एव बलिना बलवानेव यातव्यः, बलिनश्च वयमिति भावः * ॥ ६१ ॥

तर्हि पूर्वोदाहृतमन्वादिशास्त्रविरोधः स्यादित्याशङ्क्याह, अन्यदिति ।—[अन्यत्, उच्छृङ्खलम्] अनर्गलम् । प्रसह्य पीडनक्षममिति भावः । [ सत्त्वं ] बलम् अन्यत् [ शास्त्रनियन्त्रितम् ] शास्त्रेण ] मन्वादिशास्त्रेण नियन्त्रितम् उदाहृतं परव्यसनकाले निर्मितं सत्त्वम् [ अन्यत् ] । उत्कटानुत्कटलक्षणवैलक्षण्यमन्यशब्दार्थः । तयोः सापेक्षत्वनिरपेक्षत्वाभ्यां मिथो विरोधान्नैकशास्त्रत्वं सम्भवतीत्यर्थः । अत्र दृष्टान्तमाह,— [ तेजस्तिमिरयोः हि ] समानमधिकरणं ययोस्तयोर्भावः, [ सामानाधिकरण्यम् ] एकाश्रयत्वं [ कुतः ] ? न कुतश्चित् । तयोः सहावस्थान-

---

इति दैवात्नश्वरी दुराधर्षः जरासन्धः पृथातनयेन भीमेन तत्सन्धिं विपाट्य द्विधा कृत्वा विनाशितः इति भारतीया कथा । काव्यलिङ्गमलङ्कारः ।

* अत्र 'ह्रियै' 'उत्सवाय' इत्युभयत्र "तादर्थ्ये चतुर्थी वाच्या" ( वा० ) इति चतुर्थी । उपमाऽलङ्कारः ।

इन्द्रप्रस्थगमस्तावत् कारि मा सन्तु चेदयः ।
आस्माकदन्तिसान्निध्याद्वामनीभूतभूरुहः ॥६३॥
निरुद्धवीवधासारप्रसारा गा इव व्रजम् ।
उपरुन्धन्तु दाशार्हाः पुरीं माहिष्मतीं द्विषः ॥६४॥

---

विरोधादिति भावः । तस्मादुभयोरुदितानुदितहोमवद्भिन्नविषयत्वादि-तरेतर-शास्त्रविरोधो न बाधक इति भावः * ॥ ६२ ॥

तर्हि नः किमिदानीं कार्य्यमत आह, इन्द्रप्रस्थेति।—[इन्द्रप्रस्थगमः] इन्द्रप्रस्थस्य पार्थनगरस्य गमो गमनम् । "ग्रहवृदृनिश्चिगमश्च" (३।३।५८ पा०) इत्यप्प्रत्ययः । [मा कारि तावत्] न क्रियतामेवेत्यर्थः । 'यावत्तावत्परिच्छेदे कार्त्स्न्ये मानावधारणे' इति विश्वः । कृञः कर्मणि लुङ्, "माङि लुङ्" (३।३।१७५ पा०) इत्याशीरर्थे । "न माङ्योगे" (६।४।७४ पा०) इत्यट्प्रतिषेधः । किन्तु [चेदयः] चेदिदेशाः [आस्माकदन्तिसान्निध्यात्] अस्माकमिमे आस्माकाः । "युष्मदस्मदोरन्यतरस्यां खञ् च" (४।३।१ पा०) इति विकल्पादण्प्रत्ययः । "तस्मिन्नणि च युष्माकास्माकौ" (४।३।२ पा०) इत्यस्माकादेशः । सन्निधिरेव सान्निध्यम्, स्वार्थे ष्यञ्प्रत्ययः । आस्माकानां दन्तिनां सान्निध्यात् [वामनीभूतभूरुहः] वामनीभूताः शाखाभङ्गात् खर्वीभूता भूरुहो वृक्षा येषां ते तथोक्ताः [सन्तु] चेदियात्रैव क्रियतामित्यर्थः । सा च प्रस्तुता प्रस्तुतेनैव स्वकार्य्येण गम्यत इति पर्य्यायोक्तालङ्कारः,—'कारणं गम्यते यत्र प्रस्तुतात् कार्य्यवर्णनात् । प्रस्तुतत्वेन सम्बन्धात् पर्य्यायोक्तः स उच्यते ॥' इति लक्षणात् † ॥६३॥

निरुद्धेति ।—किञ्च, [दाशार्हाः] * यादवाः [निरुद्धवीवधासार-प्रसाराः] वीवधो धान्यादिप्राप्तिः, आसारः सुहृद्बलं, प्रसारस्तृणकाष्ठादेः प्रवेशः । 'धान्यादेर्वीवधः प्राप्तिरासारस्तु सुहृद्बलम् । प्रसारस्तृणकाष्ठादेः

---

* अत्र दृष्टान्तालङ्कारः ।

† दशार्हो नाम पूर्वपुरुषः, तस्य इमे इति बोध्यम् ।

यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः।
वयं हनाम द्विषतः सर्वः स्वार्थं समीहते ॥ ६५ ॥
प्राप्यतां विद्युतां सम्पत्सम्पर्कादर्करोचिषाम्।
शस्त्रैर्द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितैः ॥६६॥

---

प्रवेशः’ इति वैजयन्ती। ते निरुद्धा यैस्ते तथोक्ताः ; अन्यत्र,—निरुद्धौ वीवधानां पर्य्याहारापरनाम्नां स्कन्धवाह्यचौराद्याहरणसाधनभारविशेषाणाम् आसारप्रसारौ प्रवेशनिर्गमौ यैस्ते तथोक्ताः। “विवधो वीवधो भारे पर्य्याहाराध्वनोरपि’ इति हेमचन्द्रः। [ व्रजं ] गोष्ठम्। ‘व्रजः स्याद्गोकुलं गोष्ठम्’ इति वैजयन्ती। [ गा इव माहिष्मतीं पुरीं, द्विषः ] अरीन् [ उपरुन्धन्तु ] व्रजे गा इव माहिष्मत्यामरीन् आवृणवन्त्वित्यर्थः। “दुह्याच्पच्दण्डरुधि” * इति द्विकर्मकत्वम्। तत्र पुरीव्रजावकथितं कर्म अन्यदीप्सितं कर्म † ॥ ६४ ॥

तर्हि पार्थप्रार्थनायाः का गतिरित्याशङ्क्य उपेक्षैव गतिरित्याह, यजतामिति।—[ पाण्डवः ] युधिष्ठिरः [ यजतां ] यागं करोतु। [ इन्द्रः स्वर्गम्, अवतु ] रक्षतु। [ इनः ] अर्कः। ‘इनः पत्यौ नृपार्कयोः’ इति मेदिनी। [ तपतु ] प्रकाशताम्। [ वयं, द्विषतः ] अरीन् [ हनाम ] मारयाम। “आडुत्तमस्य पिच्च” ( ३।४।९२ पा० ) इत्याडागमः। सर्वत्र प्राप्तकाले लोट्। तथा हि, [ सर्वः ] जनः [ स्वार्थं ] स्वप्रयोजनं [ समीहते ]। अनुसन्धत्ते। इन्द्रादिसमानयोगक्षेमो नः पार्थ इत्यर्थः। अर्थान्तरन्यासः ॥ ६५ ॥

प्राप्यतामिति।—किञ्च, [ द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितैः ]

---

* “अकथितञ्च” ( १।४।५१ पा० ) इति सूत्रस्य कारिका। दुह्याजित्यादिकन्तु प्राचामनुरोधेन एष्वनेकेषां द्विव्यापारार्थबोधकतयेप्सिततमत्वेनैव द्विकर्मत्वसिद्धेरेकव्यापारार्थका एव भाष्ये गृहीताः ; यथा,—“दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ। ब्रुविशासिगुणेन च यत् सचते तदकीर्त्तितमाचरितं कविना ॥”

† अत्र श्लेषानुप्राणिता उपमा।

इति संरम्भिणो वाणीर्बलस्यालेख्यदेवताः ।
सभाभित्तिप्रतिध्वानैर्भयादन्ववदन्निव ॥ ६७ ॥
निशम्य ताः शेषगवीरभिधातुमधोक्षजः ।
शिष्याय बृहतां पत्युः प्रस्तावमदिशद्दृशा ॥ ६८ ॥
भारतीमाहितभरामथानुद्धतमुद्धवः ।

---

द्विषतां * शिरश्छेदेन प्रोच्छलता उच्छलता शोणितेनोच्चितैः सिक्तैः [ शस्त्रैरर्करोचिषां सम्पर्काद्विद्युतां, सम्पत् ] लक्ष्मीः [ प्राप्यताम् ]। इति निदर्शनालङ्कारः, छेकानुप्रासश्च ॥ ६६ ॥

इतीति ।—[ इति ] इत्थं [ संरम्भिणः ] क्षुभितस्य [ बलस्य ] बलभद्रस्य [ वाणीः, आलेख्यदेवताः ] चित्रलिखितदेवताः, [सभाभित्तिप्रतिध्वानैः ] सभायाः सदोगृहस्य, भित्तीनां प्रतिध्वानैः प्रतिध्वनिव्याजैरित्यर्थः । [ भयादन्ववदन् ] अन्वमोदयन् [ इव ] इत्युत्प्रेक्षा प्रतिध्वानैरित्यपह्नुत्या सङ्कीर्य्यते ॥ ६७ ॥

निशम्येति ।—अधः अधःकृतमक्षजमिन्द्रियजं ज्ञानं येन सः [ अधोक्षजः ] हरिः [ ताः, शेषगवीः ] शेषस्य शेषावतारस्य बलभद्रस्य गाः वाचः शेषगवीः । "गोरतद्धितलुकि" ( ५।४।९२ पा० ) इति टच्, टित्वान्ङीप् † । [ निशम्य ] श्रुत्वा,—"निशाम्यतीति श्रवणे तथा निशमयत्यपि" इति भट्टमल्लः, तत्र शाम्यतेरिदं रूपम्, अन्यथा निशमय्येति स्यात् । अत एव वामनः,—"निशम्य-निशमय्यशब्दौ प्रकृतिभेदात्" इति [ बृहतां ] वाचां [ पत्युः ] बृहस्पतेस्तस्य [ शिष्याय ] उद्धवाय [ अभिधातुं ] वक्तुं [ दृशा ] दृक्संज्ञया [ प्रस्तावम् ] अवसरम् [ अदिशत् ] अतिसृष्टवान्, 'प्रस्तावः स्यादवसरः' इत्यमरः ॥ ६८ ॥

भारतीमिति ।—[अथ] कृष्णानुज्ञानन्तरम् [ उद्धवः, आहितभराम् ]

---

* "द्विषोऽमित्रे" ( ३।२।१३१ पा० ) इति शतृः ।

† "टिड्ढाणञ्—" ( ४।१।१५ पा० ) इत्यादिना ।

तथ्यामुतथ्यानुजवज्जगादाग्रे गदाग्रजम् ॥ ६९ ॥
सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुसलपाणिना।
निर्द्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ॥७०॥

---

आहितो भरोऽर्थगौरवं यस्यां सा तां [ तथ्यां ] यथार्थां [ भारतीं ] वाचम् [ अनुद्धतम् ] अगर्वितं यथा तथा [ गदाग्रजं ] गदस्याग्रजं कृष्णम् [ अग्रे ] पुरत इति प्रागल्भ्योक्तिः। [ उतथ्यानुजवत् ] उतथ्यस्य महर्षेरनुजो बृहस्पतिः। 'उतथ्यावरजो जीवः' इति विश्वः। तद्वत् तेन तुल्यं [ जगाद ]। "तेन तुल्यं क्रिया चेद्वतिः" ( ५।१।११५ पा० ) इति वतिः। तद्धितगेयमुपमा * ॥ ६९ ॥

किं जगादेत्याह, सम्प्रतीति।—[ सम्प्रति, मुसलपाणिना ] बलभद्रेण। केवलं शूरेणेति ध्वनिः। [ उक्ते ] सति [ वक्तुमसाम्प्रतम् ] अयुक्तम्। साधूक्तत्वादभ्याससमानयोगक्षेमप्रसङ्गादिति ध्वनिः। साम्प्रतंशब्दस्यार्हार्थत्वात् तद्योगे "शकधृष—" ( ३।४।६५ पा० ) इत्यादिना तुमुन्। तथा हि, [ लेखेन ] पत्रेण [ अर्थे ] वाच्ये [ निर्द्धारिते ] निर्णीते सति [ वाचिकं ] व्याहृतार्थां वाचं, सन्देशवचनमित्यर्थः। 'सन्देशवाग्वाचिकं स्यात्' इत्यमरः। "वाचो व्याहृतार्थायाम्" ( ५।४।३५ पा० ) इति ठक्। [ खलु उक्त्वा खलु ] न वाच्यं खल्वित्यर्थः। खलुराद्यः प्रतिषेधे, अन्यो वाक्यालङ्कारे। 'निषेधवाक्यालङ्कारे जिज्ञासाऽनुनये खलु' इत्यमरः। "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" ( ३।४।१८ पा० ) इति क्त्वाप्रत्ययः। इह 'न पादादौ खल्वादयः' इति निषेधस्योद्वेजकाभिप्रायत्वात्। नञर्थखलुशब्दस्यानुद्वेजकत्वात् नञ्वदेव पादादौ प्रयोगो न दुष्यतीत्यनुसन्धेयम्। लिखितार्थे वाचिकमिव बलोक्ते मदुक्तिरनवकाशेति वाक्यार्थप्रतिबिम्बकरणात् स्पष्टस्तावद्दृष्टान्तः, स्तुतिव्याजेन निन्दाऽवगमात् व्याजस्तुतिश्च। लक्षणं चाग्रे वक्ष्यते ॥ ७० ॥

---

* व्यञ्जनानामसकृत्साम्यात् वृत्त्यनुप्रासश्चाप्यत्र।

तथाऽपि यन्मय्यपि ते गुरुरित्यस्ति गौरवम् ।
तत्प्रयोजककर्त्तृत्वमुपैति मम जल्पतः ॥ ७१ ॥
वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव ।
अनन्ता वाङ्मयस्याहो ! गेयस्येव विचित्रता ॥७२॥

---

तर्हि किं तूष्णीम्भूतेन भाव्यम् ? नेत्याह, तथाऽपीति ।—[तथाऽपि] बलेन निर्णीतेऽपि [ ते ] तव [ मय्यपि ] बलभद्र इवेत्यपिशब्दार्थः । [ गुरुरिति ] एव [ यद्गौरवम् ] आदरः [ अस्ति, तद् ] गौरवं [ जल्पतः ] जल्पने प्रयोज्यकर्मणः [ मम ] मे [ प्रयोजककर्त्तृत्वं ] प्रेरकत्वम् [ उपैति ] अतो वक्ष्यामीत्यर्थः । नहि पण्डितैः सादरं पृष्टस्य विशेषज्ञस्य अज्ञवत् तूष्णीम्भावो युक्त इति भावः ॥ ७१ ॥

ननु रामेणैव सर्वं प्रपञ्चेनोक्तं, सम्प्रति किं ते वाच्यमस्तीत्याशङ्क्य वचाप्रपञ्चोऽयमिति हृदि निधाय स्तुवन्नाह, वर्णैरित्यादित्रयेण ।— [ कतिपयैः ] परिमितैः [ वर्णैः ] पञ्चाशता [ एव ] * मातृकाक्षरैः, कतिपयैः सप्तभिः एव [ स्वरैः ] निषादादिभिः [ ग्रथितस्य ] गुम्फितस्य [ इव, वाङ्मयस्य ] शब्दजालस्य । "एकाचोऽपि नित्यं मयटमिच्छन्ति" † इति स्वार्थे मयट् । गीयत इति गेयं तस्य [ गेयस्य ] गानस्य [ इव, विचित्रता ] रचनाभेदात् [ अनन्ता ] अपरिमिता भवतीत्यर्थः । [ अहो ! ] अतस्तेन साधूक्तेऽपि विशेषानन्त्यात् ममापि वक्तव्यमस्तीत्येको भावः । तस्य दुरुक्तत्वान्ममैवास्तीत्यन्यः । प्रत्यवयवमिवोपादानादनेकेवेयमुपमा ॥ ७२ ॥

---

* तन्त्रशास्त्रमतेन वर्णात्मिका मातृकासरस्वती । "पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षःस्थलाम्" इति तद्ध्यानम् । अनुस्वारः विसर्गमिलिताः षोड़श स्वराः, वर्ग्याः पञ्चविंशतिः, यकारादिक्षकारान्ता नव ; एवं मिलिताः पञ्चाशद् वर्णाः तन्त्रशास्त्रोक्ताः ।

† "नित्यं वृद्धशरादिभ्यः" ( ४।३।१४४ पा० ) इति सूत्रस्य काशिकायां द्रष्टव्यमेतत् ।

**बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ।**
**अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः ॥ ७३ ॥**
**म्रदीयसीमपि घनामनल्पगुणकल्पिताम् ।**
**प्रसारयन्ति कुशलाश्चित्रां वाचं पटीमिव ॥७४॥**
**विशेषविदुषः शास्त्रं यत्तवोद्ग्राह्यते पुरः ।**
**हेतुः परिचयस्थैर्य्ये वक्तुर्गुणनिकैव सा ॥ ७५ ॥**

---

बह्वपीति ।—[ स्वेच्छया ] स्वप्रतिभाऽनुसारेण [ प्रकीर्णम् ] असङ्गतं [ बह्वपि, कामं ] यथेष्टम् [ अभिधीयते ], किन्तु [अनुज्झितार्थसम्बन्धः] अनुज्झितोऽर्थसम्बन्धः पदार्थसङ्गतिर्यस्मिन् सः [ प्रबन्धः ] सन्दर्भः [दुरुदाहरः ] दुर्वचः । हरतेः खल्प्रत्ययः । * रामेण तु सङ्गतमेवोक्तमिति स्तुतिः, असङ्गतमेवोक्तमिति निन्दा च गम्यते † ॥ ७३ ॥

म्रदीयसीमिति ।—[कुशलाः] वक्तारः [म्रदीयसीम्] अतिसुकुमाराक्षरां श्लक्ष्णतराञ्च, [अपि] तथाऽपि [ घनाम् ] अर्थगुर्वीम्, अन्यत्र,—सान्द्राम्, कदलीदलकल्पामित्यर्थः । [ अनल्पगुणकल्पिताम् ] अनल्पैर्बहुभिर्गुणैः श्लेषादिभिस्तन्तुभिश्च कल्पितां रचितां निर्मिताञ्च, [ चित्रां ] शब्दादिविचित्रां विचित्ररूपाञ्च, [ वाचं, पटीं ] शाटीम् [ इव प्रसारयन्ति ] रामवागप्येवंविधेति स्तुतिः । रामवाक् तु नैवंविधेति निन्दा च गम्यते । अत्र श्लेषस्य शुद्धविषयासम्भवेन सर्वालङ्कारबाधकत्वादुपमाप्रतिभोत्थापितः प्रकृताप्रकृतश्लेषोऽयमित्यलङ्कारसर्वस्वकारः । एवञ्च पूर्णोपमाया निर्विषयत्वप्रसङ्गात् श्लेषप्रतिभोत्थापितेयमुपमैवेत्यन्ये ; व्याजस्तुतिश्च ॥ ७४ ॥

अथोद्धवः स्वसिद्धान्तं वर्णयिष्यन् स्तुत्या गर्वं परिहरन् हरिमभिमुखीकरोति, विशेषेति ।—विशेषानवान्तरभेदान् वेत्ति इति विशेषविद्वान् तस्य

---

* "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" ( ३।३।१२६ पा० ) इति सूत्रम् ।

† अत्र व्याजस्तुतिरलङ्कारः ।

प्रज्ञोत्साहावतः स्वामी यतेताधातुमात्मनि।
तौ हि मूलमुदेष्यन्त्या जिगीषोरात्मसम्पदः॥७६॥
सोपधानां धियं धीराः स्थेयसीं खट्वयन्ति ये।

[ विशेषविदुषः ] विशेषज्ञस्य। गमिगाम्यादिपाठात् द्वितीयासमासः *। [ तव, पुरः ] अग्रे [ शास्त्रं ] नीतिशास्त्रम् [ उद्ग्राह्यते ] उपन्यस्यत इति [ यत् ]। 'उद्ग्राहितमुपन्यस्तम्' इति वैजयन्ती। [ सा ] तदुद्ग्रहणमित्यर्थः। विधेयप्राधान्यात् स्त्रीलिङ्गत्वम्। [ वक्तुः ] उद्ग्राहयितुः [ परिचयस्थैर्य्यं ] अभ्यासदार्ढ्यं [हेतुः, गुणनिका एव] आम्रेडितमेवेति यावत्, न तु वैदुष्यप्रकटनमिति भावः। "गुण आम्रेडने" चौरादिकात्, "ण्यासश्रन्थो युच्" ( ३।३।१०७ पा० ) इति युच्, ततः संज्ञायां कन्, कात्पूर्वस्येकारः †॥ ७५॥

सम्प्रति स्वमतमुपन्यस्यति, प्रज्ञेति।—[ अतः ] अस्मात्कारणात्, स्वमस्यास्तीति [ स्वामी ] प्रभुः। "स्वामिन्नैश्वर्य्ये" ‡ ( ५।२।१२६ पा० ) इति निपातः। [ प्रज्ञोत्साहौ ] मन्त्रोत्साहशक्ती [ आत्मनि ] स्वस्मिन् [ आधातुं ] सम्पादयितुं [ यतेत ] स्वयमुभयशक्तिमान् भवेदित्यर्थः। कुतः?—[ हि ] यस्मात् [ तौ ] प्रज्ञोत्साहौ [ उदेष्यन्त्याः ] वर्त्स्यन्त्याः [ जिगीषोः, आत्मसम्पदः ] आत्मनः सम्पदः प्रभुशक्तेः [ मूलं ] निदानम्। अत्रोत्साहग्रहणं दृष्टान्तार्थम्। यथोत्साहस्तथा मन्त्रोऽपि ग्राह्यः, न तु केवलोत्साह इति बलभद्रापवादः॥ ७६॥

उत्साहवत् प्रज्ञाऽपि ग्राह्या इत्युक्तं, तस्याः प्रयोजनमाह, सोपधानामिति।—[ ये, धीराः ] धीमन्तः [सोपधानां] सविशेषां युक्तियुक्ता-

* "द्वितीयाश्रित—" ( २।१।२४ पा० ) इति सूत्रे "श्रितादिषु गमिगाम्यादीनामुपसङ्ख्यानम्" ( वा० ) काशिकायाम्।

† "प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः" ( ७।३।४४ पा० ) इति सूत्रम्।

‡ "ऐश्वर्य्यवाचकात् स्वशब्दात् मत्वर्थे आमिनच् इति वृत्तिः दृश्यते सिद्धान्तकौमुद्याम्; तन्मते निपाताभावः आमिनच्प्रत्ययात्; तत्तु भाष्यविरुद्धम्। "स्वामिन्नैश्वर्य्ये निपात्यते इति" भाष्यवचनात्; काशिकायामप्येवमेव।

**तत्रानिशं निषस्मास्ते जानते जातु न श्रमम् ॥७७॥**
**स्पृशन्ति शरवत्तीक्ष्णा: * स्तोकमन्तर्विशन्ति च ।**
**बहुस्पृशाऽपि स्थूलेन स्थीयते बहिरश्मवत् ॥७८॥**

---

मित्यर्थ:, अन्यत्र,—सगेन्दुकां सोपबर्हामित्यर्थ:,—'उपधानं विशेषे स्याद् गेन्दुके प्रणयेऽपि च' इति विश्व: । [ स्थेयसीं ] स्थिरतराम्, अचपलां दृढीयसीञ्च । स्थिरशब्दादीयसुनि, "प्रियस्थिर—" ( ६।४।१५७ पा० ) इत्यादिना स्थादेश: । [ धियं, खट्वयन्ति ] खट्वां पर्य्यङ्कं कुर्वन्ति, आश्र-यन्तीत्यर्थ: । 'शयनं मञ्चपर्य्यङ्कपल्यङ्का: खट्वया समा:' इत्यमर: । "तत्करोति तदाचष्टे" ( ग० ) इति णिच् । [ ते ] धीरा: [ तत्र ] धीखट्वायाम् [ अनिशम् ] अश्रान्तं [ निषस्मा: ] विश्रान्ता: सन्त: [जातु] कदाचिदपि [ श्रमं ] खेदं [ न जानते ] न विदन्ति । "श्रम: खेदोऽध्व-रत्यादे:" इति लक्षणम् । धीपूर्वक एवोत्साह: सेव्यो न केवल इति सर्वथा धीराश्रयणीयेत्यर्थ: । अत्र धिय आरोप्यमाणाया: प्रकृतश्रमा-पनोदरूपोपकारपर्य्यन्ततया परिणामालङ्कार:,—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम:' इति लक्षणात् ॥ ७७ ॥

अथ प्रज्ञाप्रज्ञयोर्द्वाभ्यां वैषम्यमाह, स्पृशन्तीति ।—[ तीक्ष्णा: ] निशितप्रज्ञा: [ शरवत् ] शरेण तुल्यं [ स्तोकम् ] अल्पमेव [ स्पृशन्ति ] [ अन्त: ] कार्य्यस्य अन्तरं, [ विशन्ति च ] अल्पायासेन बहु कार्य्यं साधयन्तीत्यर्थ: । [ बहुस्पृशा ] व्यापिना [ अपि, स्थूलेन ] मन्देन बृहता अश्मना उपलेन तुल्यम् [ अश्मवत् ] । "तेन तुल्यं क्रिया चेद्वति:" ( ५।१।११५ पा० ) [ बहि: ] एव कार्य्यस्याकार्य्यस्य चेति भाव: । [ स्थीयते ] स्थिति: क्रियते । मूढो हि अल्पस्य हेतोर्बहु प्रयासं करोति । मूषकग्रहणाय शिखरिखननं परिहासास्पदं भवतीति भाव: । तद्धित-गतेयमुपमा ॥ ७८ ॥

---

* "खर्परे शरि वा विसर्गलोपो वक्तव्य:" इति वार्त्तिकात् "तीक्ष्णा: स्तोकम्" इत्यत्र सविसर्गो निर्विसर्गो वा पाठो दृश्यते ; एवम् उत्तरत्र ।

आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥७९॥
उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः ।
हन्ति नोपशयस्थोऽपि शयालुर्मृगयुर्मृगान् ॥८०॥
उदेतुमत्यजन्नीहां राजसु द्वादशस्वपि ।

---

आरभन्त इति ।—किञ्च, [ अज्ञाः, अल्पं ] तुच्छम् [ एव, आरभन्ते ] प्रक्रमन्ते, [ कामम् ] अत्यन्तं [ व्यग्राः ] त्वरिताः [ च भवन्ति ], न च पारं गच्छन्तीति भावः । [ कृतधियः ] शिक्षितबुद्धयस्तु [ महारम्भाः ] महोद्योगा भवन्ति [ निराकुलाः ] अव्यग्राः [ च तिष्ठन्ति ] पारं गच्छन्तीति भावः ॥ ७९ ॥

अथ प्रज्ञावानपि न प्रमाद्येदित्याह, उपायमिति ।—[ उपायम्, आस्थितस्य ] प्राप्तस्य [ अपि ] उपायेनैव कार्य्यं साधयतोऽपीत्यर्थः, किमुत व्यग्रतयेति भावः । [ प्रमाद्यतः ] अनवधानस्य । 'प्रमादोऽनवधानता' इत्यमरः । [ अर्थाः ] प्रयोजनानि [ नश्यन्ति ] । तथा हि [ शयालुः ] निद्रालुः, आलुचि शीङो वक्तव्यत्वादालुच् । * मृगान् यातीति [ मृगयुः ] व्याधः । "मृगय्वादयश्च" (उणा० १ पा० ३८ सू०) इत्यौणादिकः कुप्रत्ययान्तो निपातः । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः' इत्यमरः । उपशेरतेऽस्मिन्नित्युपशयो मृगमार्गस्थायिनो व्याधस्यात्मगुप्तिस्थानं गर्त्तविशेषः । "एरच्" ( ३।३ ५६ पा० ) इत्यच् प्रत्ययः । तत्र तिष्ठतीति [ उपशयस्थोऽपि मृगान् न हन्ति ] । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८० ॥

एवं प्रज्ञाया आवश्यकत्वमुक्तं, तथोत्साहस्याप्याह, उदेतुमिति ।—जेतुमिच्छुः [ जिगीषुरेकः ] एव [ द्वादशस्वपि राजसु ] मध्ये द्वादशसु [ आदित्येषु, दिनकृद् ] यो दिनकरणे व्याप्रियमाणः आदित्यः सः

---

* "स्पृहिगृहिपति" ( ३।२।१५८ पा० ) इत्यादिसूत्रे आलुचि शीङो ग्रहणं कर्त्तव्यम् ( वा० ) इति काशिका, "शीङो वाच्यः" (वा०) इति कौमुदी ।

जिगीषुरेको दिनकृदादित्येष्विव कल्पते ॥ ८१ ॥
बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ ८२॥

[ इव, ईहाम् ] उत्साहम् [ अत्यजन् ] प्रयुञ्जान एव, न तु निरुद्योग इति भावः । [ उदेतुं कल्पते ] उदयाय प्रभवति ; उत्साहशक्तिरेव प्रभुशक्तेरपि मूलमित्यर्थः,—"नानालिङ्गत्वादृतूनां नानासूर्य्यत्वम्" इति श्रुतिः । प्रतिमासमादित्यभेदात् द्वादशत्वं, तच्चैकस्यैव द्वादशात्मकत्वं 'द्वादशात्मा दिवाकरः' इत्यभिधानात् । ते चार्य्यमादयः पुराणोक्ता द्रष्टव्याः । * राजानस्तु "अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । तथाऽरिमित्रमित्रञ्च विजिगीषोः पुरःसराः ॥" पञ्चेति शेषः । "पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । असारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥" पार्ष्णिग्राहासार आक्रन्दासारश्चेत्यर्थः । अत्र चत्वार इति शेषः । एवं नव भवन्ति । विजिगीषुर्दशमः,—'अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे । मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः ॥' इति मध्यमोदासीनाभ्यां सह द्वादश वेदितव्याः । पूर्णोपमा ॥ ८१ ॥

"उपायमास्थितस्य" इत्यत्र राजा न प्रमाद्येदित्युक्तम्, अप्रमादप्रकारमाह, बुद्धिशस्त्र इति ।—बुद्धिरेव शस्त्रं यस्य सः [ बुद्धिशस्त्रः ] अमोघपातित्वात्तस्या इति भावः । [ प्रकृत्यङ्गः ] प्रकृतयः स्वाम्यादिराज्याङ्गानि ; 'राज्याङ्गानि प्रकृतयः' इत्यमरः । ता एवाङ्गानि यस्य सः ; तद्वैकल्ये राज्ञो वैकल्यं स्यादिति भावः । [ घनसंवृतिकञ्चुकः ] घना दुर्भेदा संवृतिर्मन्त्रगुप्तिरेव कञ्चुकः कवचो यस्य स तथोक्तः ; मन्त्रभेदे राज्यभेदादिति भावः । चरतीति चरः । पचाद्यच् । स एव

* "धाता मित्रोऽर्य्यमा रुद्रो वरुणः सूर्य्य एव च ।
भगो विवस्वान् पूषा च सविता दशमः स्मृतः ।
एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ॥" इति विष्णुधर्मोत्तरे ।

**तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः ।**
**नैकमोजः प्रसादो वा रसभावविदः कवेः ॥८३॥**
**कृताऽपचारोऽपि परैरनाविष्कृतविक्रियः ।**

---

चारो गूढपुरुषः। प्रज्ञादित्वात् स्वार्थिकोऽण्प्रत्ययः। * 'चारश्च गूढपुरुषः' इत्यमरः। स एवेक्षणं चक्षुर्यस्य सः [ चारेक्षणः ] अन्यथा स्वपरमण्डलवृत्तान्तादर्शनात्; "अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे" इति भावः। दूतः सन्देशहरः। 'स्यात्सन्देशहरो दूतः' इत्यमरः। स एव मुखं वाग् यस्यासौ [ दूतमुखः ] अन्यथा मूकस्येव वाग्व्यवहारासिद्धौ तत्साध्यासाध्यकार्य्यप्रतिबन्धः स्यादिति भावः। एवम्भूतः [ पार्थिवः, कोऽपि पुरुषः ]। अन्य एवायं लोकविलक्षणः पुमानित्यर्थः; अतो राज्ञा बुद्ध्यादिसम्पन्नेन भवितव्यम्। एतदेवाप्रमत्तत्वम्, अन्यथा स्वरूपहानिः स्यादिति भावः। अत्र कोऽपीति राज्ञो लोकसम्बन्धेऽपि तदसम्बन्धोक्त्या तद्रूपातिशयोक्तिः, सा च बुद्धिशस्त्र इत्यादिरूपकनिर्व्यूढेति, तेन सहाङ्गाङ्गिभावेन सङ्करः॥ ८२॥

"चतुर्थोपायसाध्ये" इत्यादिना यत् क्षात्रमेव कर्त्तव्यमुक्तं, तत्रोत्तरमाह, तेज इति।—[ कालज्ञस्य ] कालं जानातीति कालज्ञः तस्य, अयं काल इति विदुष इत्यर्थः। "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) न तु "इगुपध—" (३।१।१३५ पा०) इत्यादिना कविधिः, समासे कर्म्मोपपदस्यैव बलवत्त्वभाषणात्। तस्य [ महीपतेस्तेजः ] क्षात्रमेवेति [ वा, क्षमा ] एव वा [ एकान्तं ] नियमः [ न ] नास्ति, किन्तु यथाकालमुभयमप्याश्रयणीयमित्यर्थः। तथा हि, रसान् शृङ्गारादीन्, भावान् निर्वेदादींश्च वेत्ति यस्तस्य [ रसभावविदः ]। भावग्रहणं सम्पातायातम्। [ कवेः ] कवितुः [ एकं ] केवलम् [ ओजः ] प्रौढप्रबन्धत्वं [ वा ) एकः [ प्रसादः ] सुकुमारप्रबन्धत्वं वा [ न ], किन्तु तत्र हि रसानुगुण्येन यथायोग्यमुभयमप्युपादेयम्। दृष्टान्तालङ्कारः॥ ८३॥

यदुक्तं 'क्रियासमभिहारेण विराध्यन्तं क्षमेत कः' इति तत्रोत्तर-

---

* "प्रज्ञादिभ्यश्च" ( ५।४।३८ पा० ) इति सूत्रम्।

असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा ॥८४॥
मृदुव्यवहितं तेजो भोक्तुमर्थान् प्रकल्पते।
प्रदीपः स्नेहमादत्ते दशयाऽभ्यन्तरस्थया ॥८५॥
नालम्बते दैष्टिकतां न निषीदति पौरुषे।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥८६॥

---

माह, कृतापचार इति।—[ परैः ] शत्रुभिः [ कृतापचारोऽपि ] कृतः अपचारोऽपकारः, अपथ्यञ्च यस्य सः तथाऽपि [ अनाविष्कृतविक्रियः ] अन्तर्गूढविकारः, अत एव [असाध्यः] अप्रतिसमाधेयः सन् [गदो यथा] रोग इव। 'इववद्वा यथाशब्दाः' इति दण्डी। [ काले ] बलक्षयावसरे [ प्राप्ते ] सति [ कोपं कुरुते ] प्रकुप्यतीत्यर्थः। तदुक्तं,—'वहेदमित्रं स्कन्धेन यावत्कालविपर्य्ययः। तमेव चागते काले भिन्द्याद्धटमिवाश्मना ॥' इति * ॥ ८४ ॥

इतश्च क्षन्तव्यमिदानीमित्याह, मृद्विति।—[ मृदुव्यवहितं ] मृदुना मृदुवस्तुना व्यवहितमन्तर्हितं [ तेजः अर्थान् भोक्तुं, प्रकल्पते ] प्रभवति। तथा हि, [ प्रदीपः अभ्यन्तरस्थया ] मध्यस्थया [ दशया ] वर्त्त्या। 'दशा वर्त्ताववस्थायां' 'स्नेहस्तैलादिके रसे' इत्युभयत्रापि विश्वः। [ स्नेहं ] तैलादिकम् अर्थम् [ आदत्ते ] अन्यथा स्वयमेव निर्वायादिति †। ततः क्षान्तिपूर्वमेव क्षात्त्रं फलतीति सर्वथा प्रथमं क्षन्तव्यमिति भावः। विशेषेण सामान्यसमर्थनादर्थान्तरन्यासः ॥८५॥

तर्हि पौरुषं मा भूदित्यं, क्षममाणस्य दैवमेव श्रेयो विधास्यतीत्याशङ्क्याह, नालम्बत इति।—[ विद्वान् ] अभिज्ञः, दिष्टे मतिर्यस्येति दैष्टिकः, दैवप्रमाणक इत्यर्थः। 'दैवं दिष्टं भागधेयम्' इत्यमरः। "अस्ति नास्ति दिष्टं मतिः" ( ४।४।६० पा० ) इति ठक्। तद्भावं [ दैष्टिक-

---

* उपमाऽलङ्कारः।

† निर्वायात्—निर्वाणताम् इयात्। अत्र निर्वाहादिति पाठोऽपि दृश्यते।

**स्थायिनोऽर्थे प्रवर्त्तन्ते भावाः सञ्चारिणो यथा ।**
**रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः ॥८७॥**

---

ताम् ] एव [ नालम्बते, ] सर्वथा यत्नविषयस्य विनाशादिति भावः। तथा [ पौरुषे ] केवलपुरुषकारेऽपि। युवादित्वादण्प्रत्ययः *। [ न निषीदति ] न तिष्ठति। दैवप्रातिकूल्ये तस्य वैफल्यादिति भावः; किन्तु [ सत्कविः ] सत्कविता [ शब्दार्थाविव ] तयोः काव्यशरीरत्वादिति भावः। यथाऽऽह वामनः,—'अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्' इति। [ द्वयं ] पौरुषं दैवञ्च [ अपेक्षते ]। अतः पौरुषमप्यावश्यकं, किन्तु काले कर्त्तव्यमिति विशेषः; पौरुषादृष्टयोः परस्परसापेक्षत्वादिति भावः † ॥ ८६ ॥

अथ क्षान्तेः फलमाह, स्थायिन इति।—रस्यते स्वाद्यते इति रसः शृङ्गारादिः,—'रसतेः स्वादनार्थत्वाद्रस्यन्त इति ते रसाः' इति निर्वचनात्। तस्य [ रसस्य ] रसीभवतः [ स्थायिनः ] स्थायिभावस्य रत्यादेः,—'रतिर्हासश्च शोकश्च क्रोधोत्साहभयानि च। जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्त्तिताः" ॥ इत्युक्तत्वात् [ एकस्य ] एव [ अर्थे ] स्वादुभावरूपे प्रयोजने [ भूयांसः, सञ्चारिणः ] व्यभिचारिणः [ भावाः ] निर्वेदादयः। विभावादीनामुपलक्षणमेतत्। [ यथा प्रवर्त्तन्ते ] तदुक्तं,—'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। आनीयमानः स्वादुत्वं स्थायिभावो रसः स्मृतः ॥' इति। [ तथा ] स्थायिनः स्थिरस्य क्षान्त्या कालं प्रतीक्षमाणस्येत्यर्थः। एकस्य एव [ नेतुः ] विजिगीषोर्नायकस्य अर्थे प्रयोजने भूयांसः [ महीभृतः ] राजानः प्रवर्त्तन्ते। स्वयमेवास्य कार्य्यं साधयन्तीत्यर्थः। ततः क्षन्तव्यमिति भावः। केचित्तु,—भावपदस्यापि रसपरत्वमाश्रित्य, यथा सञ्चारिणः प्रसङ्गादागन्तुकाः अन्ये रसाः स्थायिनः स्थिरस्यैकस्य मुख्यस्यार्थे प्रवर्त्तन्ते, तथाऽस्मिन्नेव काव्ये वीरस्य शृङ्गारादय इति व्याचक्षते। उपमाऽलङ्कारः ॥ ८७ ॥

---

* "हायनान्तयुवादिभ्योऽण्" ( ५।१।१३० पा० ) इति सूत्रम्।

† उपमाऽलङ्कारः।

तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता।
सुनिग्रहा नरेन्द्रेण फणीन्द्रा इव शत्रवः ॥८८॥
करप्रचेयामुत्तुङ्गः प्रभुशक्तिं प्रथीयसीम्।
प्रज्ञाबलबृहन्मूलः फलत्युत्साहपादपः ॥८९॥
अनल्पत्वात् प्रधानत्वाद् वंशस्येवेतरे स्वराः।

---

क्षान्तिपक्ष एव गुणान्तरमाह, तन्त्रेति।—तन्त्रावापौ स्वपरराष्ट्रचिन्तनम्, अन्यत्र,—तन्त्रावापं शास्त्रौषधप्रयोगञ्च वेत्ति यस्तेन [तन्त्रावापविदा]। 'तन्त्रः स्वराष्ट्रचिन्तायामावापः परचिन्तने। शास्त्रौषधान्तमुख्येषु तन्त्रम्' इति वैजयन्ती। [योगैः] सामाद्युपायैः, अन्यत्र,—दैवताध्यानैश्च। 'योगः संहननोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। [मण्डलानि] स्वपरराष्ट्राणि माहेन्द्रादिदैवतायतनानि च। [अधितिष्ठता] अतिक्रमता [नरेन्द्रेण] राज्ञा विषवैद्येन च;—'नरेन्द्रो वार्त्तिके राज्ञि विषवैद्ये च कथ्यते' इति विश्वः। [शत्रवः फणीन्द्रा इव, सुनिग्रहाः] सुखेन निग्राह्याः। एवञ्च प्रकृताप्रकृतविषयः श्लेषः। उपमेति केचित् ॥ ८८ ॥

"प्रज्ञोत्साहावतः स्वामी" इत्यत्रैव ताविव प्रभुशक्तेर्मूलमित्युक्तं, तदेव व्यनक्ति, करेति।—[उत्तुङ्गः] महोन्नतः [प्रज्ञाबलबृहन्मूलः] प्रज्ञाबलं मन्त्रशक्तिरेव बृहत् प्रधानं मूलं यस्य सः, [उत्साहपादपः] उत्साह एव पादपः [करप्रचेयाम्] करेण बलिना प्रचेयां वर्द्धनीयां हस्तग्राह्याञ्च। 'बलिहस्तांशवः कराः' इत्यमरः। [प्रथीयसीं] पृथुतराम्। "र ऋतो हलादेर्लघोः" (६।४।१६१ पा०) इति रेफादेशः। [प्रभुशक्तिं] तेजोविशेषम्। 'स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्' इत्यमरः। [फलति] प्रसूते इत्यर्थः। "फल निष्पत्तौ"। मन्त्रपूर्वक एवोत्साहः फलति, विपरीतस्तु छिन्नमूलो वृक्ष इव शुष्यतीति भावः। रूपकालङ्कारः श्लेषश्च ॥ ८९ ॥

विमृष्यकारिणस्तु विश्वमपि विधेयं स्यादिति वर्णयन्नाह, अनल्पत्वा-

विजिगीषोर्नृपतयः प्रयान्ति परिवारताम् ॥९०॥

अप्यनारभमाणस्य विभोरुत्पादिताः परैः ।
व्रजन्ति गुणतामर्थाः शब्दा इव विहायसः ॥९१॥

यातव्यपार्ष्णिग्राहादिमालायामधिकद्युतिः ।
एकार्थतन्तुप्रोतायां नायको नायकायते ॥९२॥

---

दिति ।—[ अनल्पत्वात् ] प्रज्ञोत्साहाधिकत्वादत एव [ प्रधानत्वात् ] मण्डलाभिन्नत्वात्, अन्यत्र,—अनल्पत्वात् उच्चैस्तरत्वात् प्रधानत्वात् नायकस्वरत्वाच्च [वंशस्य] वंशवाद्यस्वरस्य [इतरे स्वराः] वीणागानादि-शब्दाः [इव] ; अथवा,—आश्रयत्वाद्वंश इव वंशस्तत्कालविहितः स्वर उच्यते तस्य स्वरस्येतरे * षड्जादयः [ विजिगीषोः, नृपतयः ] अन्ये मण्डलपरिवर्त्तिनो राजानः [ परिवारतां ] पोष्यतां [ प्रयान्ति ] तत्कार्य्यमेव साधयन्तीत्यर्थः ; तस्माद्विमृष्य कर्त्तव्यमित्यर्थः † ॥ ९० ॥

अपीति ।—किञ्च, [अनारभमाणस्य] स्वयमकिञ्चित्कुर्वाणस्य [ अपि, विभोः ] प्रभोः व्यापकस्य च [ परैः ] अन्यैर्नृपतिभिः शङ्खभेर्य्यादिभिश्च [ उत्पादिताः ] सम्पादिताः जनिताश्च [अर्थाः] प्रयोजनानि [विहायसः] आकाशस्य [ शब्दा इव, गुणतां ] विशेषणतां कारणत्वाद् गुणत्वं [ व्रजन्ति ]। शक्तो हि राजा स्वयम् उदासीन एवाकाशवत् स्वमहिम्नैव कार्य्यदेशं व्याप्नुवन् शब्दानिव सर्वार्थानपि स्वकीयतां नयतीत्यर्थः। 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती ‡ ॥ ९१ ॥

यातव्येति ।—किञ्च, [ एकार्थतन्तुप्रोतायां ] एकार्थ एकप्रयोजनं स एव तन्तुः सूत्रं तत्र प्रोतायां, एकाभीष्टाभिलाषिण्यामित्यर्थः । प्रपूर्वाद्वेञः कर्मणि क्तः, "वचिस्वपि—" (६।१।१५ पा० ) इत्यादिना सम्प्रसारणम् । [ यातव्यपार्ष्णिग्राहादिमालायां ] यातव्योऽभिषेणयितव्यः अरिः, पार्ष्णिं

---

* स्वरसङ्घ इति योजनीयम् ।

† उपमाऽलङ्कारः ।

‡ उपमाऽलङ्कारः ।

**षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षो रसायनम्।**
**भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति च ॥९३॥**

गृह्णातीति पार्ष्णिग्राहः पृष्ठानुधावी। "कर्मण्यण्" (३।२।१ पा०) तावादी येषां ते पूर्वोक्ताः पङ्क्तिशः स्थिताः त एव माला रत्नमालिका तस्याम् [अधिकद्युतिः] महातेजाः [नायकः] शक्तिसम्पन्नो जिगीषुः [नायकायते] मध्यमणिरिवाचरति, स्वयमेव सर्वोत्कर्षेण वर्त्तते इत्यर्थः; तस्माद्विमृश्य कर्त्तव्यमिति भावः;—'नायको नेतरि श्रेष्ठे हारमध्यमणावपि" इति विश्वः। "उपमानादाचारे" इति क्यङ्*। "अकृत्सार्वधातुकयोर्दीर्घः" (७।४।२५ पा०) इति दीर्घः। नायकायते इत्युपमा, अन्यथाऽनुशासनविरोधात्। एकार्थतन्त्वित्यत्र तु रूपकमधिष्ठानतिरोधानेन आरोप्यमाणतन्तुत्वस्यैवोद्भटत्वात् प्रोतत्वसिद्धेस्तदेव युक्तम्। तद्बलात्पार्ष्णिग्राहादिमालायामित्यत्रापि रूपकमेव। तदनुप्राणिता चेयमुपमेत्यङ्गाङ्गिभावेन तयोः सङ्करः ॥९२॥

अथ विमृश्यकरणप्रकारमाह, षाड्गुण्यमिति।—शक्तिं प्रभावादित्रयं बलं चापेक्षते इति [शक्त्यपेक्षः] सन्। पचाद्यच्। 'शक्तिर्बले प्रभावादौ' इति विश्वः। षड्गुणा एव [षाड्गुण्यं] सन्धिविग्रहादिषट्कम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः। तदेव [रसायनम्] औषधविशेषम् [उपयुञ्जीत] सेवेत। 'रसायनं विहङ्गेऽपि जराव्याधिभिदौषधे' इति विश्वः। [एवं] सति [अस्य] प्रयोक्तुः [अङ्गानि] स्वाम्यादीनि,—"स्वामी जनपदोऽमात्यः कोषो दुर्गं बलं सुहृत्। राज्यं सप्तप्रकृत्यङ्गं नीतिज्ञाः सम्प्रचक्षते ॥" इति। गात्राणि च [स्थास्नूनि] स्थिराणि, कालान्तरक्षमाणीत्यर्थः। "ग्लाजिस्थश्च ग्स्नुः" (३।२।१३९

---

* उपमानादाचारे इति क्यङ् इति उपमानादाचारेऽर्थे इति ज्ञेयम्, अतः "कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इति सूत्रात् क्यङ् तदर्थे एव। भाष्ये तु "प्रधानशिष्टः क्यङ् अन्वाचयशिष्टः सलोपः" इति दृश्यते। तेन सकारलोपप्राप्तौ एव क्यङ् भवति न वा इति प्रश्ने उत्तरयति काशिका,—"अन्वाचयशिष्टः सलोपः, तदभावेऽपि क्यङ् भवत्येव" इति।

**स्थाने शमवतां शक्त्या व्यायामे वृद्धिरङ्गिनाम् ।**
**अयथाबलमारम्भो निदानं क्षयसम्पदः ॥९४॥**
**तदीशितारं चेदीनां भवांस्तमवमंस्त मा ।**
**निहन्त्यरीनेकपदे य उदात्तः स्वरानिव ॥९५॥**
**मा वेदि यदसावेको जेतव्यश्चेदिराडिति ।**

---

पा० ) इति ल्युः । [ बलवन्ति च ] परपीड़ाक्षमाणि च [ भवन्ति ]। श्लिष्टपरम्परितरूपकम् ॥ ९३ ॥

स्थाने इति ।—किञ्च, [ स्थाने ] शक्यविषये [ शमवतां ] क्षमावताम् [ अङ्गिनां ] सप्ताङ्गिनां राज्ञां, शरीरिणाञ्च [शक्त्या] प्रभावाद्यनुसारिणा बलेन च [ व्यायामे ] व्यापारे, षाड्गुण्यप्रयोगे गमनादौ च सतीत्यर्थः । [ वृद्धिः ] उपचयः, राज्यस्य शरीरस्य चेति भावः । विपक्षे बाधकमाह,—[ अयथाबलं ] शक्त्यतिक्रमेण । "यथा सादृश्ये" ( २।१।७ पा० ) इत्यव्ययीभावे नञ्समासः । [ आरम्भः ] व्यायामः [ क्षयसम्पदः ] अत्यन्तहानेः [ निदानम् ] आदिकारणम्, अङ्गानामिति भावः । तस्मादस्माकमकस्माच्चैद्यास्कन्दनमश्रेयस्करमिति भावः । अत्र विशेष्यस्यापि श्लिष्टत्वात् शब्दशक्तिमूलो वस्तुना वस्तुध्वनिः ; अतो द्वयानामङ्गिनामौपम्यञ्च गम्यते इति सङ्क्षेपः ॥ ९४ ॥

फलितमाह, तदिति ।—[ तत् ] तस्मादशक्यार्थस्याकार्य्यत्वात् [ तं चेदीनामीशितारं ] शिशुपालं [ भवान्, माऽवमंस्त ] नावमन्यताम् । मन्यतेः "माङि लुङ्" ( ३।३।१७५ पा० ) अनुदात्तत्वान्नेडागमः । कुतः ?—[यः] चैद्यः [उदात्तः, स्वरान्] अनुदात्तान् [ इव अरीन्, एकपदे ] एकस्मिन् पदन्यासे सुप्तिङन्तलक्षणे च [ निहन्ति ] हिनस्ति, नीचैः करोति च, अतिशूरत्वात् । "अनुदात्तं पदमेकवर्जम्" ( ६।१।१५८ पा० ) इति परिभाषाबलाच्चेति भावः * ॥ ९५ ॥

**न चायमेकाकी किं नः करिष्यतीति मन्तव्यमित्याह, मा**

---

* उपमाऽलङ्कारः ।

**राजयक्ष्मेव रोगाणां समूहः स महीभृताम् ॥९६॥**

**सम्पादितफलस्तेन सपक्षः परभेदनः।**

**कार्मुकेणेव गुणिना बाणः सन्धानमेष्यति ॥९७॥**

**ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयः।**

**तमःस्वभावास्तेऽप्येनं प्रदोषमनुयायिनः ॥९८॥**

---

वेदीति।—[ असौ चेदिराट्, एकः ] एकाकी, अतः [ जेतव्यः ] सुजयः [ इति, मा वेदि ] मा ज्ञायि। वेत्तेः कर्मणि "माङि लुङ्" ( ३।३।१७५ पा० )। [ यत् ] यस्मात् [ सः ] चेदिराट् राज्ञश्चन्द्रस्य यक्ष्मा, राजा चासौ यक्ष्मेति वा [ राजयक्ष्मा ] क्षयरोगः [ रोगाणामिव महीभृतां, समूहः ] समष्टिरूपः। यथाऽऽह वाग्भटः,—'अनेकरोगानुगतो बहुरोग-पुरःसरः। राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः॥ नक्षत्राणां द्विजानाञ्च राज्ञोऽभूद्यदयं पुरा। यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः॥' इति। अतो दुर्जेय इति भावः। एतेन 'चिरस्य मित्रव्यसनी सुदमो दमघोषजः' इति निरस्तम् * ॥ ९६ ॥

अथास्य सर्वराजसमष्टितामेव द्वाभ्यां व्याचष्टे, सम्पादितेति।—[ सम्पादितफलः ] सम्पादितं फलं लाभः, बाणाग्रञ्च यस्य सः। 'फलं लाभशराग्रयोः' इति शाश्वतः। [ सपक्षः ] ससुहृत्, कङ्कादिपत्रयुतश्च [ परभेदनः ] परेषां भेदनः शत्रुविदारणः [ बाणः ] बाणासुरः, शरश्च। [ गुणिना ] शौर्य्यादिगुणवता, अधिज्येन च [ तेन ] चैद्येन [ कार्मुकेण ] कर्मणे प्रभवतीति कार्मुकम् † "कर्मण उकञ्"। ( ५।१।१०३ पा० ) तेन [ एव, सन्धानं ] सन्धिम् [ एष्यति ]। अतो नैकाकीति भावः। अत्राप्युपमा श्लेषो वा मतभेदात् ॥ ९७ ॥

ये चेति।—[ ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयः ] राजानः [ तमःस्वभावाः ] तमोगुणात्मकाः, अत एव [ तेऽपि, प्रदोषं ] प्रकृष्ट-

---

* उपमाऽलङ्कारः। † धनुः।

उपजापः कृतस्तेन तानाकोपवतस्त्वयि ।
आशु दीपयिताऽल्पोऽपि साग्नीनेधानिवानिलः ९९

बृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति ।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥ १०० ॥

---

दोषम् । 'प्रदोषो दुष्टरात्रांशौ' इति वैजयन्ती । तामसमेव [ एनं ] चैद्यम् [ अनुयायिनः ] अनुयास्यन्ति, सादृश्यादिति भावः "भविष्यति गम्यादयः" ( ३।३।३ पा० ) इति णिनिर्भविष्यदर्थे; "अकेनोर्भविष्यदाधमर्ण्ययोः" ( २।३।७० पा० ) इति षष्ठीप्रतिषेधात् द्वितीया। यथा ध्वान्तं रजनीमुखमनुयाति तद्वत् इति वस्तुना अलङ्कारध्वनिः ॥ ९८ ॥

ननु बाणादयोऽस्माभिः कृतसन्धानाः, इदानीं न विराध्यन्तीत्यत आह, उपेति ।—[ तेन ] चैद्येन [ कृतोऽल्पोऽपि, उपजापः ] भेदः। 'भेदोपजापौ' इत्यमरः । [ त्वय्याकोपवतः, तान् ] बाणादीन् [ अनिलः साग्नीन्, एधान् ] इन्धनानि [ इव ]। 'काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियाम्' इत्यमरः। [ आशु दीपयिता ] सद्यः प्रज्वलयिष्यति। दीपेर्ण्यन्ताल्लुट्। अन्तर्वैराः संहिताः, आपदि सति रन्ध्रे सद्यो विश्लिष्यन्तीति भावः * ॥ ९९ ॥

ततः किम् ? अत आह, बृहदिति ।—[बृहत्सहायः] महासहायवान् [ क्षोदीयान् ] क्षुद्रतरः [ अपि ]। "स्थूलदूर—" ( ६।४।१५६ पा० ) इत्यादिना यणादिपरलोपः पूर्वगुणश्च। [ कार्य्यान्तं ] कार्य्यस्यान्तं पारं [ गच्छति ]। तथा हि,—अपां समूह आपम्। "तस्य समूहः" ( ४।२।३७ पा० ) इत्यण्। तेन गच्छतीत्यापगा [ नगापगा ] गिरिनदी [ महानद्या ] गङ्गादिकया [ सम्भूय ] मिलित्वा [ अम्भोधिमभ्येति ]। क्षुद्रोऽप्येवं, तादृक् महावीरश्चैद्यस्त किमु वक्तव्य इत्यपिशब्दार्थः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १० ० ॥

---

* उपमाऽलङ्कारः।

तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपाः।
अभियुक्तं त्वयैनं ते गन्तारस्त्वामतः परे ॥१०१॥
मखविघ्नाय सकलमित्थमुत्थाप्य राजकम्।
हन्त! जातमजातारेः प्रथमेन त्वयाऽरिणा॥१०२॥
सम्भाव्य त्वामतिभरक्षमस्कन्धं स बान्धवः।
सहायमध्वरधुरां धर्मराजो विवक्षते ॥१०३॥

---

किञ्च, न केवलं शत्रोरसाध्यत्वं मित्रविरोधश्चाधिकोऽनर्थकर इत्याह, तस्येत्यादि द्वयेन।—[ ये च, तस्य ] चैद्यस्य [ मित्राणि नृपाः, ये च ते ] तव [ अमित्राः ] नृपाः [ ते उभये त्वया, अभियुक्तम् ] अभियातम् [ एनं ] चैद्यं [ गन्तारः ] गमिष्यन्ति। गमेः कर्त्तरि लुट्। [ अतः, परे ] उक्तोभयव्यतिरिक्तास्तव मित्राणि तस्यामित्राश्चेत्यर्थः। [ त्वां ] गन्तारः इति मध्यमणिन्यायेनोभयत्राप्यभिसन्धिः ॥ १०१ ॥

ततः किम्? अत आह, मखेति।—[ इत्थम् ] अनेन प्रकारेण। "इदमस्थमुः" ( ५।३।२४ पा० ) इति थमुप्रत्ययः। [ मखविघ्नाय ] मखविघाताय [ सकलं राजकं ] राजसमूहम्। "गोत्रोक्ष—" ( ४।२।३९ पा० ) इत्यादिना वुञ्। [ उत्थाप्य ] क्षोभयित्वा, [ हन्त ] इति खेदे। [ अजातारेः ] अजातशत्रोर्युधिष्ठिरस्य [ त्वया प्रथमेनारिणा, जातम् ] अजनि *। नपुंसके भावे क्तः ॥ १०२ ॥

अस्तु सोऽपि शत्रुः, को दोषः? तत्राह, सम्भाव्येति।—बन्धुरेव [ बान्धवः स धर्मराजः, अतिभरक्षमस्कन्धं ] अतिभरस्य क्षमः स्कन्धो यस्य स तं, [ त्वां सहायं, सम्भाव्य ] अभिसन्धाय, अध्वरस्य धुरम् [ अध्वरधुराम् ] "ऋक्पूर—" ( ५।४।७४ पा० ) इत्यादिना समासान्तोऽप्रत्ययः। समासान्तानां प्रकृतिलिङ्गत्वात् तत्पुरुषे परवल्लिङ्गत्वे

---

* जनिष्यते "आशंसायां भूतवच्च" (३।३।१३२ पा०) इति भविष्यति क्तप्रत्ययः भूतेलर्थासङ्गतेः।

**महात्मानोऽनुगृह्णन्ति भजमानान् रिपूनपि ।**
**सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥ १०४ ॥**
**चिरादपि बलात्कारो बलिनः सिद्धयेऽरिषु ।**
**छन्दानुवृत्तिदुःसाध्याः सुहृदो विमनीकृताः ॥ १०५ ॥**

---

टाप्। [ विवक्षते ] वोढुमिच्छति। वहतेः स्वरितेतः सन्नन्ताल्लट्। तथा हि,—विरोधे विश्वासघातो बन्धुद्रोहश्च स्यातामिति भावः। विशेषणसाम्यात् प्रस्तुतयार्गधर्म्मप्रतीतेः समासोक्तिः ॥ १०३ ॥

ननु प्रतिश्रुत्याकरणे दोषः प्रागेव, परिहारे तु को दोषः ? इत्यत आह, महात्मान इति।—[ महात्मानः ] निग्रहानुग्रहसमर्थाः [ भजमानान् ] शरणागतान् [ रिपूनप्यनुगृह्णन्ति ] किमुत बन्धूनिति भावः। अर्थान्तरं न्यस्यति,—[ सिन्धवः ] महानद्यः, समान एकः पतिर्यासां ताः [ सपत्नीः ]। "नित्यं सपत्न्यादिषु" ( ४।१।३५ पा० ) इति ङीप्, नकारश्च। [ नगनिम्नगाः ] गिरिनिर्झरिणीः [ अब्धिं प्रापयन्ति ] स्वसौभाग्यं ताभ्यः प्रयच्छन्तीति भावः। अतः परिहारोऽप्यनर्थ इति भावः ॥ १०४ ॥

तर्हि सम्प्रत्युपेक्षायामपि पश्चात्प्रार्थनया पार्थमार्जवयेयमित्यत आह, चिरादिति।—[ बलिनः ] स्वयं बलवतः [ अप्यरिषु ] विषये [ बलात्कारः ] दण्डः [ चिरात् ] चिरकालेन अपि, सद्यो मा भूदिति भावः [ सिद्धये ] वशंवदत्वसिद्धये भवतीति शेषः। अविमनसो विमनसः सम्पद्यमानाः कृता [ विमनीकृताः ] वैमनस्यं प्रापिताः इत्यर्थः। "अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च" ( ५।४।५१ पा० ) इति च्विप्रत्ययसलोपौ "अस्य च्वौ" ( ७।४।३२ पा० ) इतीकारः। शोभनं हृदयं येषां ते [ सुहृदः ] मित्राणि तु। "सुहृद्दुर्हृदौ मित्रामित्रयोः" ( ५।४।१५० पा० ) इति निपातः। [ छन्दानुवृत्तिदुःसाध्याः ] छन्दस्याभिप्रायस्यानुवृत्त्या चित्तानुरोधेनापि दुःसाध्याः, आर्जवयितुमशक्या इत्यर्थः। 'अभिप्रायश्छन्द आशयः' इत्यमरः। शनैः शत्रुर्दण्डेनापि वशीभवति, मित्रं वैमनस्ये न साम्नापि इति भावः ॥ १०५ ॥

मन्यसेऽरिवधः श्रेयान् प्रीतये नाकिनामिति।
पुरोडाशभुजामिष्टमिष्टं कर्त्तुमलन्तराम् ॥१०६॥
अमृतं नाम यत्सन्तो मन्त्रजिह्वेषु जुह्वति।
शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना ॥१०७॥

ननु सुहृत्कार्य्यात् सुरकार्य्यं बलीय इत्यत आह, मन्यसे इति।—[नाकिनां] * देवानां [प्रीतयेऽरिवधः, श्रेयान्] प्रशस्यतरः, "प्रशस्यस्य श्रः" (५।३।६० पा०) इति श्रादेशः, [इति मन्यसे] चेत्, तर्हि [पुरोडाशभुजां] हविर्भोजिनाम्, अत एव नाकिनाम् [इष्टम्] अभीप्सितं [कर्त्तुम्]। इषेः कर्मणि क्तः। [इष्टम्] इष्टिः, याग इति यावत्। यजेर्भावे क्तः। "वचिस्वपि—" (६।१।१५ पा०) इत्यादिना सम्प्रसारणम्। [अलन्तराम्] अतिपर्य्याप्तम्। अव्ययात् तरबन्तात् आमुप्रत्ययः †। शत्रुवधादतिप्रियङ्करो याग एव, नाकिनां भुक्त्वाऽपि शत्रुवधस्य सुकरत्वादिति भावः ॥ १०६ ॥

तथाऽपि अमृताशिनां तेषां देवानां किमेभिः पिष्टभक्षणप्रलोभनैः ? अत आह, अमृतमिति।—[सन्तः] विद्वांसः, मन्त्रा एव जिह्वा येषां तेषु [मन्त्रजिह्वेषु] अग्निषु। 'मन्त्रजिह्वः सप्तजिह्वः सुजिह्वो हव्यवाहनः' इति वैजयन्ती। [यत्] पुरोडाशादिकं [जुह्वति] तदेवेति शेषः, [अमृतं नाम] यत्तदोर्नित्यसम्बन्धात्। [मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना] मन्दर एव क्षुब्धो मन्थनदण्डः। "क्षुब्धस्वान्त—" (७।२।१८ पा०) इत्यादिनाऽस्मिन्नर्थे निपातनात् सिद्धम्। तेन क्षुभितस्य मथितस्य अम्भोधेर्वर्णना [शोभैव] अलङ्कार एव। अब्धिमन्थनेनामृतमुत्पादितमिति यतः कीर्त्तिमात्रम्, अतो हुतमेवामृतमिति भावः। वाक्यार्थयोर्हेतुहेतुमद्भावाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १०७ ॥

* कं—सुखं, न कम्—अकम्; नास्ति अकं यत्र सः, नाकः,—स्वर्गः, ["न भ्राण्—" (६।३।७५ पा०) इत्यादिना नञः प्रकृतिभावः]।

† आदौ "तरप्तमपौ घः" (१।१।२२ पा०) इति सूत्रेण तरबन्तात् "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" (५।४।११ पा०) इति आमुः।

सहिष्ये शतमागांसि सूनोस्त इति यत्त्वया ।
प्रतीच्यं तत्प्रतीच्यायै पितृष्वस्रे प्रतिश्रुतम् ॥१०८॥
तीक्ष्णा नारुन्तुदा बुद्धिः कर्म शान्तं प्रतापवत् ।
नोपतापि मनः सोष्म वागेका वाग्मिनः सतः॥१०९॥
स्वयङ्कृतप्रसादस्य तस्याह्नो भानुमानिव ।

---

यात्रायाः प्रतिबन्धः कश्चिद्दुस्तरस्तवास्तीत्याह, सहिष्य इति ।—[प्रतीच्यायै] पूज्यायै । 'पूज्यः प्रतीच्यः' इत्यमरः । [पितृष्वस्रे] पितृभगिन्यै । "विभाषा स्वसृपत्योः" (६।३।२४ पा०) इति विकल्पादलुगभावः । "मातृपितृभ्यां स्वसा" (८।३।८४ पा०) इति षत्वम् । [ते] तव [सूनोः शतम्, आगांसि] अपराधान् । 'आगोऽपराधो मन्तुश्च' इत्यमरः । [सहिष्ये] सोढाहे [इति यत्त्वया, प्रतिश्रुतं] प्रतिज्ञातं [तत्, प्रतीच्यं] प्रतिपालनीयम् ; अन्यथा महादोषस्मरणादिति भावः ॥१०८॥

सत्यमस्ति प्रतिश्रुतं, किन्त्वस्योन्मत्तत्वादौद्धत्यात् तदपि जिहासितम्, अत आह, तीक्ष्णेति ।—[सतः] सत्पुरुषस्य [बुद्धिः, तीक्ष्णा] निशिता, स्यात् इति विद्धीत्यध्याहारः ; एवमुत्तरत्रापि । तथाप्यरुन्तुदतीति [अरुन्तुदा] शस्त्रवन्मर्मच्छेदिनी [न] भवेत्, अहिंसयैव परं पीडयेदित्यर्थः । [कर्म] व्यापारः [प्रतापवत्] तेजस्वि भयदं स्यात्, तथाऽपि [शान्तं] स्यात्, न तु सिंहादिवत् हिंस्रं भवेदित्यर्थः । [मनः] चित्तं [सोष्म] अभिमानोष्णं स्यात्, तथाऽपि उपतापयतीति [उपतापि] अग्न्यादिवत् परसन्तापि [न] स्यात् । [वाग्मिनः] वक्तुः [वाक्, एका] एकरूपा स्यात्, वाग्मी सत्यमेव वदेदित्यर्थः ; अतः सत्यसन्धस्य प्रतिश्रुतार्थहानिरनर्हेति भावः । अत्र प्रकृताया वाचोऽप्रकृतानां बुद्धिकर्ममनसाञ्च तुल्यधर्मादौपम्यावगमाद्दीपकालङ्कारः,—'प्रकृताप्रकृतानाञ्च साम्ये तु तुल्यधर्मतः । औपम्यं गम्यते यत्र दीपकं तन्निगद्यते ॥' इति लक्षणात् । तेन च बुद्ध्यादीनां शस्त्रादिव्यतिरेको व्यज्यते ॥१०९॥

अथाक्षमाकाले चैद्यवध इत्याह, स्वयमिति ।—किञ्च, [अह्नो

समयावधिमप्राप्य नान्तायालं भवानपि ॥११०॥
कृत्वा कृत्यविदस्तीर्थेष्वन्तः प्रणिधयः पदम्।
विदाङ्कुर्वन्तु महतस्तलं विद्विषदम्भसः ॥१११॥
अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।

---

भानुमानिव, स्वयङ्कृतप्रसादस्य] स्वयं कृतः प्रसादोऽनुग्रहः, प्रकाशश्च यस्य [तस्य] चैद्यस्य [अन्ताय, * समयावधिं] नियतकालावसानम् [अप्राप्य भवानपि, नालं] शक्तो न, तथा च वृथाऽपकीर्त्तिरेव, अन्यन्न किञ्चित् फलं स्यादिति भावः † ॥ ११० ॥

तर्हि किमयमुपेक्ष्य एव? नेत्याह, कृत्वेति।—किन्तु [कृत्यविदः] कार्य्यज्ञाः, विधिज्ञाश्च प्रणिधीयन्त इति [प्रणिधयः] गूढ़चारिणः। 'प्रणिधिर्गूढ़पुरुषः' इति हलायुधः। [तीर्थेषु] तरन्त्येभिरिति तीर्थानि मन्त्राद्यष्टादशस्थानानि जलावताराश्च,—'योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि। पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यात्—' इति हलायुधः। तेषु [अन्तः, पदं] स्थानं, पादप्रक्षेपञ्च [कृत्वा, महतः] दुरवगाहस्य, पूज्यस्य च [विद्विषदम्भसः] विद्विषन् शत्रुरेवाम्भः तस्य [तलं] स्वरूपं, प्रमाणमिति यावत्। "अधःस्वरूपयोरस्त्री तलम्" इत्यमरः। [विदाङ्कुर्वन्तु] विदन्तु। "विद ज्ञाने" लोट्। "विदाङ्कुर्वन्त्वित्यन्यतरस्याम्" (३।१।४१ पा०) इति विकल्पादाम्प्रत्ययनिपातः। अम्भस इव शत्रोः कृततीर्थस्य सुप्रवेशत्वात् प्रागन्तः प्रविश्य परीक्ष्य इत्यर्थः। श्लिष्टपरम्परितरूपकम् ॥ १११ ॥

आवश्यकं चैतदित्याह, अनुदिति।—उत्सूत्र उच्छास्त्रो नीतिशास्त्रविरुद्धः पदन्यासः एकपदप्रक्षेपोऽपि स्वल्पव्यवहारोऽपीति यावत्। स नास्ति यस्यां सा [अनुत्सूत्रपदन्यासा] नीतिपूर्वकसर्वव्यवहारेत्यर्थः। अन्यत्र अनुत्सूत्रपदः अनुत्सृष्टसूत्राक्षरः इष्ट्युपसङ्ख्यानैरपेक्ष्येण

---

* विनाशाय।

† उपमाऽलङ्कारः।

शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥ ११२॥
अज्ञातदोषैर्दोषज्ञैरुद्दूष्योभयवेतनैः ।
भेद्याः शत्रोरभिव्यक्तशासनैः सामवायिकाः ॥ ११३॥

---

मूलाक्षरैरेव सर्वार्थप्रतिपादको न्यासो वृत्तिव्याख्यानग्रन्थविशेषो यस्यां सा तथोक्ता। तथा, सती यथार्थं कल्पनया शोभना वृत्तिर्भृत्यामात्यादीनामाजीविका यस्यां सा [ सद्वृत्तिः ], अन्यत्र,—सती वृत्तिः काशिकाख्यसूत्रव्याख्यानग्रन्थविशेषो यस्यां सा। 'वृत्तिर्ग्रन्थजीवनयोः' इति वैजयन्ती। [ सनिबन्धना ] सन्ति निबन्धनानि अनुजीव्यादीनां क्रियाऽवसानेषु दत्तानि गोहिरण्यादिशाश्वतपारितोषिकदानानि यस्यां सा। एतच्च "दत्त्वा भूमिनिबन्धनञ्च" इत्येतद्वचनव्याख्याने मिताक्षरायां द्रष्टव्यम्। अन्यत्र,—सनिबन्धनं भाष्यग्रन्थो यस्यां सा। एवम्भूताऽपि [ राजनीतिः ] राजवृत्तिः, अपगतः स्पशः चारो यस्याः सा [ अपस्पशा ] चेत्। 'यथार्थवर्णो मन्त्रज्ञः स्पशो हरक उच्यते' इति हलायुधः। अन्यत्र,—अविद्यमानः पस्पशः शास्त्रारम्भसमर्थक उपोद्घातसन्दर्भग्रन्थो * यस्याः सा अपस्पशा [ शब्दविद्या ] व्याकरणविद्या [ इव, नो भाति ] न शोभते ; तस्माच्चारप्रेषणमावश्यकं, तद्रहितस्य राज्ञोऽन्धप्रायत्वादिति भावः। अत्रापस्पशेत्यत्र जतुकाष्ठवच्छब्दयोरेव श्लिष्टत्वाच्छब्दश्लेषः। सद्वृत्तिः सनिबन्धनेत्यत्रैकवृन्तावलम्बिफलद्वयवदर्थश्लेषः। अनुत्सूत्रपदन्यासेत्यत्र तूभयसम्भवादुभयश्लेषः। शब्दविद्येवेति पूर्णोपमा व्यक्तैव, तयोः सापेक्षत्वात् सङ्करः ॥ ११२ ॥

न केवलं चारमुखेण वृत्तान्तज्ञानम्, अपि तु उपजापश्च कर्त्तव्य इत्याह, अज्ञातेति।—किञ्च, [अज्ञातदोषैः] परैरज्ञातस्वकर्मभिः [दोषज्ञैः] स्वयं परमर्मज्ञैः [अभिव्यक्तशासनैः] अभिव्यक्तानि भेद्यस्याग्रे प्रकटितानि शासनानि तदमात्याद्यविश्वासकराणि कूटलिखितानि येषां † तैः

---

* "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः"।

† येषामित्यत्र यैरित्युचितम्, अभिव्यक्तेः अस्य कर्तृत्वात्।

उपेयिवांसि कर्त्तारः पुरीमाजातशात्रवीम्।
राजन्यकान्युपायज्ञैरेकार्थानि चरैस्तव ॥११४॥
सविशेषं सुते पाण्डोर्भक्तिं भवति तन्वति।
वैरायितारस्तरलाः स्वयं मत्सरिणः परे ॥११५॥

---

[उभयवेतनैः] उभयत्र भेद्ये स्वामिनि च वेतनं भृतिर्येषां तैः, उभयजीविकाग्राहिभिः, भेद्यनगरवास्तव्यैश्चरैरित्यर्थः। 'भृतयो भर्म वेतनम्' इत्यमरः। [शत्रोः] सम्बन्धिनः, समवायं समवयन्ति इति [सामवायिकाः] सङ्घमुख्याः सचिवादयः। "समवायान् समवैति" (४।४।४३ पा०) इति ठक्। [उद्धृत्य] द्विषामेते दत्तहस्ताः अस्माभिरेषां लिखितान्येव गृहीतानि इत्युच्चैर्दूषयित्वा [भेद्याः] विघट्टनीयाः ॥ ११३ ॥

उपेयिवांसीति।—किञ्च, [उपायज्ञैः] कार्य्यसाधनकुशलैः [तव] चरन्तीति [चरैः] गूढ़चारिभिः। पचाद्यच्। [एकार्थानि] त्वया सहैकप्रयोजनानि। राजन्यानां समूहाः [राजन्यकानि]। "गोत्रोक्ष—" (४।२।३९ पा०) इत्यादिना वुञ्। अजातशत्रोरिमाम् [आजातशात्रवीं, पुरीम्] इन्द्रप्रस्थम् [उपेयिवांसि] प्राप्नुवन्ति। "उपेयिवान्—" (३।२।१०९ पा०) इत्यादिना क्वसुप्रत्ययान्तो निपातः। [कर्त्तारः] करिष्यन्ते। कृञः कर्मणि लुट्। इन्द्रप्रस्थेऽस्माकं महत्कार्य्यं भविष्यति, तदध्वरयात्राव्याजेन सन्नद्धैरागन्तव्यमिति गूढ़ं सन्दिश्य तत्र सर्वे मेलयितव्या इत्यर्थः ॥ ११४ ॥

ननु तत्राध्वरकर्मणि को युद्धावकाशः? इत्याशङ्क्य तत्रैव महत्कलहबीजं सम्पादयति, सविशेषमिति।—[पाण्डोः सुते] युधिष्ठिरे [भवति] पूज्ये त्वयि, [सविशेषं] यथा तथा [भक्तिं तन्वति] सति [तरलाः] चपलाः [मत्सरिणः] द्वेषवन्तः [परे] शत्रवः [स्वयम्] एव [वैरायितारः] वैरं कर्त्तारः। "शब्दवैरकलह—" (३।१।१७ पा०) इत्यादिना क्यङ्, ततः कर्त्तरि लुट् ॥ ॥ ११५ ॥

य इहात्मविदो विपक्षमध्ये
सह संवृद्धियुजोऽपि भूभुजः स्युः ।
बलिपुष्टकुलादिवान्यपुष्टैः
पृथगस्मादचिरेण भाविता तैः ॥११६॥

सहजचापलदोषसमुद्धत-
स्खलितदुर्बलपक्षपरिग्रहः ।
तव दुरासदवीर्य्यविभावसो
शलभतां लभताममुहृद्गणः ॥११७॥

---

किं तेऽपि सर्वे वैरायिष्यन्ते ? नेत्याह, य इति ।—[ ये इह, विपक्ष-मध्ये ] शत्रुमध्ये [ सह संवृद्धियुजोऽपि ] चैद्येन सहैश्वर्य्यं गता अपि । "सत्सूद्विष—" (३।२।६१ पा०) इत्यादिना क्विप् । ये [ भूभुजः ] राजानः [ आत्मविदः ] स्वाभिजनवेदिनः [ स्युः ] यद्वा स्वात्मरूपवेदिनः स्युः [तैः] भूभुग्भिः [ बलिपुष्टकुलात् ] काककुलात् । 'काके तु करटारिष्टबलि-पुष्टसकृत्प्रजाः' इत्यमरः । [ अन्यपुष्टैः ] परभृतैः [ इव, अचिरेण ] सद्यः [ अस्मात् ] विपक्षमध्यात्, "अन्यारात्—" ( २।३।२९ पा० ) इत्य-त्रान्यशब्दस्यार्थपरत्वात् पृथगादिप्रयोगेऽपि पञ्चमी । [ पृथग्भाविता ] पृथग्भविष्यते, भावे ल्युट् ; "चिण्वदिटि वृद्धिः" * तेष्वपि केचिद-स्माभिः सङ्गच्छन्ते इत्यर्थः । † औपच्छन्दसिकं वृत्तम् ‡ ॥ ११६ ॥

अथ फलितं निगमयन्नाशिषं प्रयुङ्क्ते, सहजेति ।—[ सहजचापल-दोषसमुद्धतः ] सहजं स्वाभाविकं चापलं दुर्विनीतत्वम् अनवस्थितत्वञ्च । 'चपलः पारदे शीघ्रे दुर्विनीतेऽनवस्थिते' इति वैजयन्ती । तेनैव दोषेण

---

* "स्यसिच्सीयुट्तासिषु" ( ६।४।६२ पा० ) इति सूत्रेण ।

† उपमाऽलङ्कारः ।

‡ "पर्य्यन्ते यौ तथैव शेषम् औपच्छन्दसिकं कवीन्द्रहृद्यम्" इति लक्षणम् ।

इति विशकलितार्थामौद्धवीं वाचमेना-
मनुगतनयमार्गामर्गलां दुर्नयस्य।
जनितमुदमुदस्थादुच्चकैरुच्छ्रितोरः-
स्थलनियतनिषण्णश्रीश्रुतां शुश्रुवान् सः॥११८॥

इति श्रीमाघकृतौ शिशुपालबधे महाकाव्ये
मन्त्रवर्णनं नाम द्वितीयः सर्गः॥ २ ॥

---

समुद्धतो दृप्तः। [चलितदुर्बलपक्षपरिग्रहः] पक्षः सहायो गरुच्च। 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती। चलितोऽस्थिरो दुर्बलपक्षपरिग्रहो यस्य सः। [असुहृद्गणः] शत्रुवर्गः [तव, दुरासदवीर्य्यविभावसौ] दुःसहतेजोवह्नौ। 'वीर्य्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपि' 'सूर्य्यवह्नी विभावसू' इति विश्वामरौ। [शलभतां] पतङ्गत्वम्। 'समौ पतङ्गशलभौ' इत्यमरः। भावे तल्। [लभतां] गच्छतु। रूपकालङ्कारः श्लेषश्च। द्रुतविलम्बितं वृत्तम् *॥११७॥

इतीति।—[सः] हरिः [इति] इत्थं [विशकलितार्थां] विवेचितार्थाम् [अनुगतनयमार्गां] नीतिमार्गानुसारिणीं [दुर्नयस्य] बलभद्रोक्तस्येत्यर्थः। [अर्गलां] निवारयित्रीम्। इति वैधर्म्यरूपकालङ्कारः। 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः। अत एव [जनितमुदं] हरेः कृतानन्दाम्। [उच्छ्रितोरःस्थलनियतनिषण्णश्रीश्रुतां] उच्छ्रिते उन्नते उरःस्थले नियतं निषण्णया अविश्रान्तमाश्रितया श्रिया श्रुताम्; नान्ययेति मन्त्रगुप्तिः। उद्धवस्येमाम् [औद्धवीम्, एनां] पूर्वोक्तां [वाचं, शुश्रुवान्] श्रुतवान्। "भाषायां सदवसश्रुवः" (३।२।१०८ पा०) इति क्वसुः। उच्चैरेव [उच्चकैः] उन्नतः सन्। "अव्ययसर्वनाम्नामकच् प्राक् टेः" (५।३।७१ पा०) इत्यकच्प्रत्ययः। [उदस्थात्]

---

* "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात्।

## तृतीयः सर्गः ।

कौवेरदिग्भागमपास्य मार्ग-
मागस्त्यमुष्णांशुरिवावतीर्णः ।
अपेतयुद्धाभिनिवेशसौम्यो
हरिर्हरिप्रस्थमथ प्रतस्थे ॥ १ ॥

---

आसनादुत्थितवान् । "उदोऽनूर्द्ध्वकर्मणि" (१।३।२४ पा०) इत्यस्य प्रत्युदाहरणमेतत् । रूपकानुप्रासालङ्कारौ । मालिनी वृत्तम् * ॥११८॥

इति श्रीमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने
सर्वङ्कषाख्ये द्वितीयः सर्गः ॥ २ ॥

---

कौबेरेति ।—[अथ] उद्धववाक्यश्रवणानन्तरम् । [अपेतयुद्धाभिनिवेशसौम्यः] अपेतो युद्धे अभिनिवेश आग्रहो यस्य सः, शान्तक्रोध इत्यर्थः, अत एव सौम्यः प्रसन्नः, अत एव [कौबेरदिग्भागम्] कौबेर्य्या † दिशो भागम्, उत्तरायणमित्यर्थः । "स्त्रियाः पुंवत्—" (६।३।२४ पा०) इत्यादिना पुंवद्भावः ; तम् [अपास्य] त्यक्त्वा, अगस्त्यस्येमम् [आगस्त्यं, ‡

---

* "नयुगमथ यकारौ यो गणोऽथो मकारौ वसुशिखरिविरामा मालिनी चित्रकामा" इति लक्षणात् ।

† कुबेरस्य इयम् कौबेरी—उत्तरा दिक्, तदधिपतित्वात् ।

‡ यदा तु अभ्रंलिहैः शृङ्गैः रविमार्गप्रतिरोधाय उत्तिष्ठन्तं विन्ध्यपर्वतमवलोक्य इन्द्रादयो देवाः परं विषीदन्तः अगस्त्यं शरणं जग्मुः, तदा विन्ध्यपर्वतस्य गुरुः महामुनिः तेषां वाक्यात् तदन्तिकमाजगाम । अथ शृङ्गाणि अवनत्य प्रणमन्तं विन्ध्यम् उवाचागस्त्यः,—"वत्स ! यावदहं न प्रत्यावर्त्तिष्ये, तावत् त्वम् एवंविध एव अवतिष्ठस्व ; अन्यथा शप्स्ये" इत्युक्त्वा सः दक्षिणां दिशं गतवान्, अद्यापि न ततः प्रत्यावर्त्तते इति

जगत्पवित्रैरपि तं न पादैः
स्प्रष्टुं जगत्पूज्यमयुज्यतार्कः ।
यतो वृहत् पार्वणचन्द्रचारु
तस्यातपत्रं विभराम्बभूवे ॥ २ ॥

---

मार्गमवतीर्णः ] दक्षिणायनं गत इत्यर्थः । [ उष्णांशुरिव ] स्थितः । अनेन हरेः क्रोधः कार्य्यवशादाकालमन्तःस्तम्भितः, न त्वेकान्ततो निवृत्त इति सूचितम् । [ हरिः ] कृष्णः [ हरिप्रस्थम् ] इन्द्रप्रस्थं [ प्रतस्थे ] प्रचचाल । 'इन्द्रो दुश्च्यवनो हरिः' इति हलायुधः । "समवप्रविभ्यः स्थः" ( १।३।२२ पा० ) इत्यात्मनेपदम् । 'देशकालाध्वगन्तव्याः कर्म-संज्ञा ह्यकर्मणाम्' इति गन्तव्यस्य कर्मत्वम् । उपमाऽलङ्कारः । सर्गे-ऽस्मिन्निन्द्रोपेन्द्रवज्राभिश्रणादुपजातिवृत्तम्,—'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणात् ॥ १ ॥

अथास्य प्रस्थानसन्नाहं वर्णयन्नादौ छत्रधारणमाह, जगदिति ।—[ अर्को जगत्पूज्यं तं ] हरिम्, अत एव [जगत्पवित्रैरपि, पादैः] चरणैः, किरणैश्च [ स्प्रष्टुं, नायुज्यत ] नार्हत । "युजेर्दैवादिकात् कर्त्तरि लङ्" । कुतः ?—[ यतः, तस्य ] हरेः [ वृहत् ] विपुलं [ पार्वणचन्द्रचारु ] पूर्णेन्दुसुन्दरम् इत्युपमाऽलङ्कारः । आतपात् त्रायत इति [ आतपत्रं ] छत्रम् । "सुपि—" (३।२।४ पा०) इति योगविभागात् कः । [ विभराम्बभूवे ] दध्रे । भृञः कर्मणि लिट्, "भीह्रीभृहुवां—" ( ३।१।३९ पा० ) इति विकल्पादाम्प्रत्ययः । आतपत्रान्तर्हितस्य हर्य्यैरपि पादैः

---

पौराणिकी कथा । अगस्त्यो हि नक्षत्रविशेषः । स हि खगोले क्रान्तिविभाग-स्थानात् दक्षिणस्यां दिशि अशीत्यंशैः ध्रुवकैः मिथुनान्तभागे अवतिष्ठते इति सूर्य्यसिद्धान्तः । अतश्च दक्षिणा दिक् अगस्त्यमार्गः इति कथ्यते । अधुना च अस्मद्देशे सौरभाद्रशेषे तदुदयदर्शनात् अर्घ्यदानं प्रसिद्धम् । ततः शरदारम्भश्च,—"प्रससादोदयादम्भः कुम्भयोनेर्महौजसः" इति रघौ ।

मृणालसूत्रामलमन्तरेण
स्थितश्चलच्चामरयोर्द्वयं सः ।
भेजेऽभितःपातुकसिद्धसिन्धो-
रभूतपूर्वां रुचमम्बुराशेः ॥ ३ ॥
चित्राभिरस्योपरि मौलिभाजां
भाभिर्मणीनामणीयसीभिः ।

---

स्पृष्टुमशक्यत्वादित्यर्थः । जगत्पूज्यस्य हरेः पादेन स्पर्शनिषेधादिति भावः * ॥ २ ॥

अथ चामरधारणमाह, मृणालेति ।—[ मृणालसूत्रामलं ] बिस-तन्तुविशदम् इत्युपमा । [ चलच्चामरयोः ] चलन्ती च ते चामरे च चलच्चामरे, वीजनादिति भावः । तयोः [ द्वयमन्तरेण स्थितः ] द्वयस्य मध्ये स्थित इत्यर्थः । "अन्तरान्तरेण युक्ते" (२।३।४ पा०) इति द्वितीया । [सः] हरिः [अभितःपातुकसिद्धसिन्धोः] अभितःपातुका उभयतःपातिनी सिद्धसिन्धुराकाशगङ्गा यस्य स तथोक्तः । "पर्य्यभिभ्याञ्च" ( ५।३।९ पा०) इति तसिल्प्रत्ययः । "सर्वोभयार्थे वर्त्तमानाभ्यां प्रत्यय इष्यते" ( काशिका ) इत्युभयार्थत्वं सुप्सुपा इति समासः । पातुकेति ।— "लषपत—" ( ३।२।१५४ पा० ) इत्यादिना उकञ्प्रत्ययः । तस्य [ अम्बुराशेः ] समुद्रस्य [ अभूतपूर्वां ] पूर्वमभूताम् । सुप्सुपा इति समासः । [ रुचं ] कान्तिं [ भेजे ] अत एव निदर्शना ; सा चाम्बु-राशेः सम्भावनामात्रोक्त्या अभितःपातुकसिद्धसिन्धुसम्बन्धमूलया असम्बन्धे सम्बन्धरूपातिशयोक्त्या स्वोपजीवकसंयोगेन सङ्कीर्य्यत इति सङ्क्षेपः ॥ ३ ॥

अथाष्टभिरस्य प्रसाधनविधिं वर्णयन्, आदौ मुकुटधारणमाह,

---

* अत्र "अयुज्यत" सम्भावनार्थत्वात् लिङर्थे लङ्, "भाव्यर्थो भूतवदङ्गी-क्रियते" इति न्यायाद्वा । अस्मिन् श्लोके आतपत्रकल्पनस्य हेतोः वाक्यगतत्वात् काव्यलिङ्गमलङ्कारः ।

अनेकधातुच्छुरिताश्मराशे-
र्गोवर्द्धनस्याकृतिरन्वकारि ॥ ४ ॥
तस्योल्लसत्काञ्चनकुण्डलाग्र-
प्रत्युप्तगारुत्मतरत्नभासा ।
अवाप बाल्योचितनीलकण्ठ-
पिच्छावचूड़ाकलनामिवोरः ॥ ५ ॥

---

चित्राभिरिति।—[ अस्य ] हरेः [ उपरि ] ऊर्द्ध्वदेशे [ मौलिभाजां ] मुकुटगतानां [मणीनाम्, अनणीयसीभिः] महतीभिः [चित्राभिः] अनेकवर्णाभिः [ भाभिः ] प्रभाभिः कलाभिः । 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः । सान्तपक्षे "भोभगो—" (८।३।१७ पा०) इत्यादिना रोर्यकारे तस्य "हलि सर्वेषाम्" ( ८।३।२२ पा० ) इति लोपः । [ अनेकधातुच्छुरिताश्मराशेः ] अनेकैर्धातुभिर्गैरिकादिभिश्छुरितानां रूषितानाम् अश्मनां मणीनां राशिः समूहो यस्य तस्य [ गोवर्द्धनस्य ] गोवर्द्धनाख्यपर्वतस्य [ आकृतिः, अन्वकारि ] अनुकृता, तत्सादृश्यमभाजीत्यर्थः । पूर्णोपमेयम् ॥ ४ ॥

कुण्डले च धृते इत्याह, तस्येति।—[ तस्य ] हरेः [ उरः ] उरःस्थलम् [ उल्लसत्काञ्चनकुण्डलाग्रप्रत्युप्तगारुत्मतरत्नभासा ] उल्लसन्त्या काञ्चनकुण्डलाग्रयोः प्रत्युप्तानां खचितानां गारुत्मतरत्नानां मरकतमणीनां भासा दीप्त्या, उरसि प्रसरन्त्येति भावः । [ बाल्योचितनीलकण्ठपिच्छावचूड़ाकलनां ] बाल्यं शैशवम् । "ब्राह्मणादित्वात् ष्यञ्" । तत्रोचितमभ्यस्तं यन्नीलकण्ठपिच्छं मयूरबर्हम् । 'अभ्यस्तेऽप्युचितं न्याय्ये' इति यादवः । 'पिच्छबर्हे नपुंसके' इत्यमरः । तेन निर्मितावचूड़ा मालिका तस्याः कलनामामोचनमवमोचनं वा [ अवाप इव ] इत्युत्प्रेक्षा । 'यत्रान्यधर्मसम्बन्धादन्यदेवोपतर्कितम् । प्रकृते हि भवेत् प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते ॥" इति लक्षणात् ॥ ५ ॥

तमङ्गदे मन्दरकूटकोटि-
व्याघट्टनोत्तेजनया मणीनाम् ।
बंहीयसा दीप्तिवितानकेन
चकासयामासतुरुल्लसन्ती ॥ ६ ॥

निसर्गरक्तैर्वलयावनद्ध-
ताम्राश्मरश्मिच्छुरितैर्नखाग्रैः ।
व्यद्योतताद्यापि सुरारिवक्षो-
विक्षोभजासृक्स्नपितैरिवासौ ॥ ७ ॥

---

तमङ्गदे इति ।—[ तं ] हरिं [ मन्दरकूटकोटिव्याघट्टनोत्तेजनया ] मन्दरकूटकोटिव्याघट्टनं मन्दराचलशिखराग्रसङ्घर्षणं तदेवोत्तेजना शाणोल्लेखना तया [बंहीयसा] बहुतरेण । “प्रियस्थिर—” ( ६।४।१५७ पा०) इत्यादिना बहुलशब्दस्येयसुनि बंहादेशः । [मणीनां, दीप्तिवितानकेन] प्रभापटलेन [उल्लसन्ती] दीप्यमाने । “आच्छीनद्योर्नुम्” (७।१।८० पा० ) इति नुमागमः । [ अङ्गदे ] केयूरे । ‘केयूरमङ्गदं तुल्ये’ इत्यमरः । [ चकासयामासतुः ] शोभयाञ्चक्रतुः । अङ्गदे धृतवानित्यर्थः । चकास्तेर्ण्यन्ताल्लिटि आम्प्रत्ययेऽस्तेरनुप्रयोगः । अलाङ्गदयोः प्राग्भवीयाङ्गदभेदेऽप्यभेदोक्त्या तयोर्मन्दरकूटकोट्यसम्बन्धेऽपि सम्बन्धोक्त्या द्वयोरतिशयोक्त्योः * सङ्करः ॥ ६ ॥

निसर्गेति ।—[ असौ ] हरिः [ निसर्गरक्तैः ] स्वभावलोहितैः । किञ्च, [ वलयावनद्धताम्राश्मरश्मिच्छुरितैः ] वलये कटके ‘कटकं वलयोऽस्त्रियाम्’ इत्यमरः । तयोरवनद्धानां प्रत्युप्तानां ताम्राश्मनां पद्मरागाणां रश्मिभिः छुरितैः, अत एव [अद्यापि, सुरारिवक्षोविक्षोभजासृक्स्नपितैः] सुरारेर्हिरण्यकशिपोः वक्षसी विक्षोभेण विदारणेन जातं यत् असृक् तेन स्नपितैः सिक्तैः [ इव ] स्थितैः इत्युत्प्रेक्षा । स्नातेर्ण्यन्तात् क्तः ।

---

* भेदे अभेदरूपायाः असम्बन्धे सम्बन्धरूपायाश्चेत्यर्थः ।

उभौ यदि व्योम्नि पृथक् प्रवाहा-
वाकाशगङ्गापयसः पतेताम्।
तेनोपमीयेत तमालनील-
मामुक्तमुक्तालतमस्य वक्षः ॥ ८ ॥
तेनाम्भसां सारमयः पयोधे-
र्दध्रे मणिर्दीधितिदीपिताशः।
अन्तर्वसन् विम्बगतस्तदङ्गे
साक्षादिवालक्ष्यत यत्र लोकः ॥ ९ ॥

"अर्तिह्री—"(७।३।३६ पा०) इत्यादिना पुगागमः। "मितां ह्रस्वः" (६।४।९२ पा०)। [नखाग्रैर्व्यद्योतत] कटके च धृतवानित्यर्थः * ॥७॥

उभाविति।—[तमालनीलं] तमालवन्नीलम् [आमुक्तमुक्तालतम्] आमुक्ते आसञ्जिते † मुक्तालते दीर्घत्वसाम्येन लतासदृशौ मौक्तिकहारौ यस्मिन् तत् [अस्य] हरेः [वक्षः, आकाशगङ्गापयसः] आकाशगङ्गायाः पयसः [उभौ प्रवाहौ व्योम्नि यदि पृथक्, पतेतां] प्रवहेतां चेत्। सम्भावनायां लिङ्। [तेन] व्योम्ना [उपमीयेत] समीक्रियेत। नास्योपमानं किञ्चित्यश्याम इति भावः। मुक्ताहारं धृतवानित्यर्थः। अत्र व्योम्नो गङ्गाप्रवाहद्वयासम्बन्धेऽपि सम्भावनया सम्बन्धकथनादतिशयोक्तिः। तदेतत् "पुष्पं प्रवालोपहितं यदि स्यात्" इत्याद्युदाहृत्यालङ्कारसर्वस्वकारः स्पष्टीचकार ॥ ८ ॥

तेनेति।—[तेन] हरिणा [दीधितिदीपिताशः] दीधितिभि-

* उत्प्रेक्षा; सा च पूर्वकालकृतासुरवक्षोविदारणजनितासृजः बहुकालानन्तरं वर्त्तमानताया असम्भवात् तत्सम्बन्धकथनरूपातिशयोक्त्या अनुप्राणिता। किञ्च, बहुकालपूर्वं नखसंलग्नस्य असुरवक्षोरक्तस्य प्रत्यक्षायमाणत्वप्रकटनात् भाविकालङ्कारेण ग्रथितमूला वा।

† आसञ्जिते—परिहिते, विन्यस्ते इत्यर्थः। आ+सञ्ज+णिच्—क्तः।

मुक्तामयं सारसनावलम्बि
भाति स्म दामाप्रपदीनमस्य ।
अङ्गुष्ठनिष्ठ्यूतमिवोर्ध्वमुच्चै-
स्त्रिस्रोतसः सन्ततधारमम्भः ॥ १० ॥
स इन्द्रनीलस्थलनीलमूर्त्ती
रराज कर्चूरपिशङ्गवासाः ।

---

दीपिताः आशाः येन सः । दिगन्तविश्रान्ततेजा इत्यर्थः । [ पयोधि-रम्भसां ] सारस्य विकारः [ सारमयः मणिः ] समुद्रमन्थनोत्थः, कौस्तुभाख्य इत्यर्थः । [ दध्रे ] धृतः । धृञ् धारणे कर्मणि लिट् । [ यत्र ] मणौ [ विम्बगतः ] प्रतिविम्बगतः [ लोकः ] बाह्यप्रपञ्चः [ तदङ्गे ] तस्य हरेः शरीरे [ साक्षात् ] बहिः, प्रत्यक्षेण लक्ष्यमाण इत्यर्थः । [ अन्तर्वसन् ] अन्तर्गतो लोकः [ इवालक्ष्यत ] । यत्र मणौ प्रतिविम्बितो बाह्यलोकः तदङ्ग एव नैर्मल्याद्बहिः प्रतिफलितः कुक्षिस्थलोक इवालक्ष्यत इत्युत्प्रेक्षा ॥ ९ ॥

मुक्तेति ।—[अस्य ] हरेः [ मुक्तामयं ] मुक्ताप्रचुरम् । "तत्प्रकृतवचने मयट्" ( ५।४।२१ पा० ) सारसने कटिसूत्रेऽवलम्बते इति [ सारसनावलम्बि ] 'क्लीवे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु' इत्यमरः । [ आप्रपदीनम् ] आ समन्तात् प्रपदं प्राप्नोतीति खञ्प्रत्ययः । 'पादाग्रं प्रपदं पादः' इत्यमरः [ दाम ] मुक्तासरः [ अङ्गुष्ठनिष्ठ्यूतम् ] अङ्गुष्ठेन निष्ठ्यूतं विसृष्टमित्यर्थः । गौणार्थत्वादग्राम्यत्वं, यथाह दण्डी,—'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते' इति । [ ऊर्ध्वम् ] ऊर्ध्वप्रवाहम् [ उच्चैः ] उन्नतं [त्रिस्रोतसः] मन्दाकिन्याः [ सन्ततधारम् ] अविच्छिन्नसम्पातम् [अम्भ इव भाति स्म] इत्युत्प्रेक्षा ॥ १० ॥

स इति ।—[ इन्द्रनीलस्थलनीलमूर्त्तिः ] इन्द्रनीलस्थलमिव नीलमूर्त्तिः श्यामाङ्गः । संहितायां "रो रि" ( ८।३।१४ पा० ) इति रेफ-

विसृत्वरैरम्बुरुहां रजोभि-
र्यमस्वसुश्चित्र इवोदभारः ॥ ११ ॥
प्रसाधितस्यास्य मधुद्विषोऽभू-
दन्यैव लक्ष्मीरिति युक्तमेतत्।
वपुष्यशेषेऽखिललोककान्ता
साऽनन्यकान्ता ह्युरसीतरा तु ॥ १२ ॥

---

लोपः "ढ्रलोपे पूर्वस्य—" (६।३।१११ पा०) इति दीर्घः। [कर्चूरपिशङ्ग-वासाः] कर्चूरं हरितालमिव पिशङ्गं वासो यस्य सः पीताम्बरो हरिः। 'हरितालन्तु कर्चूरम्' इति वैजयन्ती। [सः] हरिः [विसृत्वरैः] विसृमरैः। "इण्नशजिसर्त्तिभ्यः क्वरप्" (३।२।१६३ पा०) इति क्वरप्। [अम्बुरुहाम्] अम्बुजानाम्। रुहेः क्विप्। [रजोभिः] परागैः [चित्रः] चित्रवर्णः [यमस्वसुः] यमुनायाः, उदकस्य भारः पूरः [उदभारः] सः [इव रराज]। "मन्थौदन—" (६।३।६० पा०) इत्यादिना उदकस्यो-दादेशः *॥ ११ ॥

प्रसाधितस्येति।—[प्रसाधितस्य] अलङ्कृतस्य [अस्य, मधुद्विषः] हरेः [अन्यैव] असदृशी विभिन्ना च। 'अन्यौ विभिन्नासदृशौ' इति वैजयन्ती। [लक्ष्मीः] शोभा पद्मा च। 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि गद्यते' इति विश्वः। [अभूदित्येतद् युक्तम्] कुतः?—[हि] यस्मात् [सा] प्रसाधनरूपा लक्ष्मीः [अशेषे वपुषि] वसतीति शेषः। किञ्च, [अखिललोककान्ता] अखिललोकस्य कान्ता प्रिया, [इतरा] नित्या [तु] अन्यस्य कान्ता प्रिया न भवतीति [अनन्यकान्ता] किन्तु तस्यैवेत्यर्थः। [उरसि]। उरस्येव वसतीत्यर्थः। अत्र हरेः प्रसाधनादसाधारणी शोभा जातेति पारमार्थिकवाक्यार्थः। अत्र लक्ष्मीशब्देन श्लेषमहिम्ना वाच्यायाः शोभायाः प्रतीयमानया श्रीदेव्या

---

* पूर्णोपमेयम्।

कपाटविस्तीर्णमनोरमोरः-
स्थलस्थितश्रीललनस्य तस्य ।
आनन्दिताशेषजना बभूव
सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥ १३ ॥
प्राणच्छिदां दैत्यपतेर्नखाना-
मुपेयुषां भूषणतां क्षतेन ।
प्रकाशकार्कश्यगुणौ दधानाः
स्तनौ तरुण्यः परिवव्रुरेनम् ॥ १४ ॥

---

सहाभेदाध्यवसायादियमन्यैव लक्ष्मीरित्यभेदे भेदाध्यवसायाच्च अति-शयोक्त्योः संसृष्टिः ॥ १२ ॥

अथैनमेवार्थं भङ्ग्यन्तरेणाह, कपाटेति ।—[ कपाटविस्तीर्णमनोर-मोरःस्थलस्थितश्रीललनस्य ] कपाटवद्विस्तीर्णे मनोरमे चोरःस्थले स्थिता श्रीरिति ललना कान्ता यस्य [तस्य] हरेः [ आनन्दिताशेषजना, सर्वाङ्ग-सङ्गिनी ] सकलदेहव्यापिनी, अत एव [अपरैव] असाधारण्येव श्रीर्दिव्या अन्यैव [ लक्ष्मीः ] शोभा रमा च [ बभूव ]। स एवालङ्कारः। प्रायेणैकार्थमप्यनेकं श्लोकमुक्तिविशेषलाभाल्लिखन्ति कवयः। यथाह नैषधे आदावेव 'निपीय' इत्यादि श्लोकद्वयं तथा 'स्वकेलिलेश' इत्यादि श्लोकद्वयं चेति ॥ १३ ॥

अथ देवीसहचरस्यैवास्य यालेति सूचयन् प्रसाधनविधेः फलमाह, प्राणेति ।—[ भूषणतामुपेयुषां ] न तु प्रहरणतामिति भावः। [दैत्य-पतेः] हिरण्यकशिपोः [प्राणच्छिदां] प्राणमुषां, प्राणापहारिणामित्यर्थः, वज्रादपि कठोराणामिति भावः। [ नखानां, क्षतेन ] व्रणेन [ प्रकाश-कार्कश्यगुणौ ] प्रकाशो व्यक्तः कार्कश्यमेव गुणो ययोस्तौ [ स्तनौ ] स्तनानित्यर्थः। जातावेकवचने प्राप्ते जातिभूयस्सु स्तनादिषु जाति-द्वित्वविशिष्टत्वात् द्विवचनम्। यथाह वामनः,—"स्तनादीनां द्वित्वा-

आकर्षतेवोर्ध्वमतिक्रशीया-
नत्युन्नतत्वात् कुचमण्डलेन ।
ननाम मध्योऽतिगुरुत्वभाजा
नितान्तमाक्रान्त इवाङ्गनानाम् ॥ १५ ॥

यां यां प्रियः प्रैक्षत कातराक्षी
सा सा ह्रिया नम्रमुखी बभूव ।
निःशङ्कमन्याः सममाहितेर्ष्या-
स्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥ १६ ॥

---

ऽऽविष्टा जातिः प्रायेण" (वामनसू० ५ अधि० २ अध्या० १७ सू०) इति। [दधानाः, तरुण्यः] युवतयः। "वयसि प्रथमे" (४।१।२० पा०) इति ङीप्। [एनं] हरिं [परिवव्रुः]। अत्र हरिनखानां नरहरिनखभेदेऽप्यभेदोक्त्या स्तनयोश्च तादृक्काठिन्यासम्बन्धेऽपि तत्सम्बन्धोक्त्यातिशयोक्ती, तयोश्च सापेक्षत्वात्सङ्करः ॥ १४ ॥

आकर्षतेति।—[अत्युन्नतत्वात्] हेतोः [ऊर्ध्वमाकर्षतेव] नमन्तं मध्यमुन्नमयतेव स्थितेनेत्युत्प्रेक्षा। [अतिगुरुत्वभाजा] अतिगुरुत्वम् अतिभारत्वम् अतिप्रवृद्धत्वञ्च भजतीति भाक् "भजो ण्विः" (३।२।६२ पा०) इति ण्विः। तेन [अङ्गनानां कुचमण्डलेन, अतिक्रशीयान्] अत्यन्तकृशतरः। तनीयान् क्षीणश्च "रऋतो हलादेर्लघोः" (६।४।१६१ पा०) इति रेफादेशः। [मध्यो नितान्तम्, आक्रान्तः] पीड़ित [इव, ननाम] नतः प्रणतश्च। अत्र मध्यकुचमण्डलयोर्विशेषणसाम्यादरिविजिगीषुराजप्रतीतिः समासोक्तिः, तथा वाच्ययोः प्रतीयमानाभेदेनाक्रमणक्रियाकर्मकर्तृभावसम्भावितेयं नमनस्याक्रमणहेतुकत्वोत्प्रेक्षा इत्यनयोः सङ्करः। उत्प्रेक्षयोस्तु नैरपेक्ष्यात् संसृष्टिरेवेति विवेकः ॥१५॥

यां यामिति।—[प्रियः] हरिः [यां याम्] अङ्गनाम्। "नित्यवीप्सयोः" (८।१।४ पा०) इति वीप्सायां द्विर्भावः एकपदम्। [प्रैक्षत]

तस्यातसीसूनसमानभासो
भ्राम्यन्मयूखावलिमण्डलेन ।
चक्रेण रेजे यमुनाजलौघः
स्फुरन्महावर्त्त इवैकबाहुः ॥ १७ ॥

आलोकयत [ सा सा ] पूर्ववत् द्विर्भावः। [ कातराक्षी ] साध्वसाच्च-कितलोचना सती [ ह्रिया नम्रमुखी बभूव ]। एतेन कार्य्यद्वारा लज्जासाध्वसभावोदय उक्तः। अन्यासामीर्ष्याभावोदयमाह,—[ अन्याः ] अपेक्षिताः अङ्गनाः [ आहितेर्ष्याः ] कृतासूयाः सत्यः। 'परोत्कर्षाक्ष-मेर्ष्या स्यात्' इति लक्षणात्। [ तत्रान्तरे ] तस्मिन्ननीक्षणावसरे। 'क्लीबेऽन्तरं चावकाशे तादर्थ्येऽवसरेऽवधौ' इति वैजयन्ती। [ निःशङ्कं ] तदनीक्षणादेव विस्रब्धं यथा तथा [ समं ] युगपत् [कटाक्षैः, अमुं] हरिं [ जघ्नुः ] प्रजह्रुः सरोषमद्राक्षुः * ॥ १६ ॥

अथास्य पञ्चभिर्दिव्यास्त्रसन्निधानमाह, तस्येत्यादि।—[ अतसी-सूनसमानभासः ] अतसीसूनेन क्षुमाकुसुमेन समानभासः तुल्यकान्तेः। स्निग्धश्यामस्येत्यर्थः। 'अतसी स्यादुमा क्षुमा' इत्यमरः। [ तस्य ] हरेः [ एकबाहुः, भ्राम्यन्मयूखावलिमण्डलेन ] भ्राम्यदावर्त्तमानं मयूखावलीनां मण्डलं चक्रवालं यस्य तेन [ चक्रेण ] सुदर्शनेन [ स्फुरन्महावर्त्तः ] स्फुरन् महानावर्त्तो भ्रमो यस्य सः। 'स्यादावर्त्तोऽम्भसां भ्रमः' इत्यमरः। [ यमुनाजलौघः ] यमुनाजलानामोघः पूरः [ इव रेजे ] चक्रं दधावित्यर्थः * ॥ १७ ॥

* अत्र भावोदयावलङ्कारौ।

* पूर्णोपमेयम्। जकार-यकारयोरेकत्र स्थाने उच्चार्य्यत्वात् श्रुत्यनुप्रासश्च। पुरा किल दैत्यदानवासुरपरिपीड़ितान् स्वान् त्रातुं प्रतिजानानस्य भगवतो नाराय-णस्य साहाय्यं कर्त्तुकामानां देवानां शरीरेभ्यः प्रादुरासीत् किमपि अपूर्वं तेजः। अथ भगवान् महादेवः तत्तेजोराशिना चक्रं नाम महास्त्रं विनिर्माय तस्मै प्रादात्। सौन्दर्याच्च तदपि सुदर्शनसंज्ञामवाप इति पाद्मोत्तरखण्डे १४५ अध्याये द्रष्टव्यम्।

विरोधिनां विग्रहभेददक्षा
मूर्त्तेव शक्तिः क्वचिदस्खलन्ती।
नित्यं हरेः सन्निहिता निकामं
कौमोदकी मोदयति स्म चेतः॥ १८॥

न केवलं यः स्वतया मुरारे-
रनन्यसाधारणतां दधानः।
अत्यर्थमुद्वेजयिता परेषां
नाम्नाऽपि तस्यैव स नन्दकोऽभूत्॥ १९॥

---

विरोधिनामिति।—[ विरोधिनां ] वैरिणां [ विग्रहभेददक्षा ] विग्रहभेदे शरीरविदारणे दक्षा, 'शरीरं वर्ष्म विग्रहः' इत्यमरः। [ क्वचित् ] क्वापि [ अस्खलन्ती ] सर्वत्राप्रतिहतवृत्तिरित्यर्थः। [ नित्यं सन्निहिता ] अनपायिनी, अत एव [ मूर्त्ता ] मूर्त्तिमती [ शक्तिः ] सामर्थ्यं [ इव ] स्थितेत्युत्प्रेक्षा। [ कौमोदकी ] गदा [ हरेश्चेतो निकामं मोदयति स्म ] स्वसन्निधानेनेति भावः॥ १८॥

न केवलमिति।—अन्यस्य साधारणो न भवतीत्यनन्यसाधारणस्तस्य भावस्तत्ता तां [ अनन्यसाधारणतां दधानः ] तथाऽपि [ यः नन्दकः, स्वतया केवलं ] गजाश्वादिवत् स्वत्वेनैव [ मुरारेः ] नन्दकः [ न ] किन्तु [ परेषां ] शत्रूणाम् [ अत्यर्थमुद्वेजयिता ] भीषयिता सन्, अत एव [ नाम्नाऽपि ] चन्द्रादिवन्नन्दयतीति नन्दकः इत्यन्वर्थसंज्ञाबलेनापि नन्दयितृत्वेनापीति यावत्। [ तस्यैव ] तदीय एव योऽनन्यसाधारण-त्वात्परोद्वेजकत्वाच्च तस्यैव नन्दको नन्दयिता चेत्यर्थः। [ स ] नन्दकः नन्दकाख्यखड्गः [ अभूत् ] सन्निहितोऽभूदित्यर्थः। सम्बन्धानुवादेन सन्निधानमेवात्र विधेयं * प्रकरणात्। अत्रानन्यसाधारणत्व-परोद्वेज-

---

* न तु स्वल्पप्रदर्शनेन आनन्दजनकत्वं खड्गस्य इति भावः,—"खड्गो नन्दकः" इत्यमरः।

न नीतमन्येन नतिं कदाचित्
कर्णान्तिकप्राप्तगुणं क्रियासु ।
विधेयमस्याभवदन्तिकस्थं
शार्ङ्गं धनुर्मित्रमिव द्रढीयः ॥ २० ॥

प्रवृद्धमन्द्राम्बुदधीरनादः
कृष्णार्णवाभ्यर्णचरैकहंसः ।
मन्दानिलापूरकृतं दधानो
निध्वानमश्रूयत पाञ्चजन्यः ॥ २१ ॥

---

त्वपदार्थाभ्यां विशेषणगत्या नन्दकस्य तदीयतासमर्थनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १९ ॥

न नीतमिति ।—[ अन्येन ] पुरुषान्तरेण [ नतिम् ] आकर्षणं, भेदेन स्वानुकूल्यं च [ न नीतं ] न प्रापितम् । [कदाचित्, क्रियासु] रणकर्मसु, हिताहितकृत्येषु च, [ कर्णान्तिकप्राप्तगुणं ] कर्णान्तिकं कर्णगोचरं प्राप्तो गुणो मौर्वी, आप्ततावधर्मश्च यस्य तत्, [ विधेयं ] क्रियासु वश्यं [ द्रढीयः ] दृढतरं पीडासहतरमिति यावत् । शृङ्गस्य विकारः [शार्ङ्गं] नाम [ धनुः मित्रमिव, अस्य ] हरेः [ अन्तिकस्थं ] सन्निहितम् [ अभवत् ] * ॥ २० ॥

प्रवृद्धेति ।—धियं रातीति धीरो मनोहरः । मन्द्रो गम्भीरोऽम्बुदस्य मेघस्येव धीरस्य नादः प्रवृद्धो यस्य सः [ प्रवृद्धमन्द्राम्बुदधीरनादः ] इत्युपमा । [ कृष्णार्णवाभ्यर्णचरैकहंसः ] कृष्ण एवार्णवः समुद्रस्तस्याभ्यर्णचरोऽन्तिकचरः । 'उपकण्ठान्तिकाभ्यर्ण' इत्यमरः । स चासावेकहंसश्चेति श्लिष्टपरम्परितरूपकम् । [ मन्दानिलापूरकृतं ] मन्दानिलस्यापूरः आपूरणं तेन कृतं जनितं [ निध्वानं दधानः ] अनाधाती-

---

* अत्रापि पूर्ववत् काव्यलिङ्गम् ; तच्च श्लेषेण उपमया च सङ्कीर्य्यते ।

**रराज सम्पादकमिष्टसिद्धेः**
**सर्वासु दिक्ष्वप्रतिषिद्धमार्गम्।**
**महारथः पुष्यरथं रथाङ्गी**
**क्षिप्रं क्षपानाथ इवाधिरूढः॥ २२॥**

---

ऽपि मन्दमारुतप्रवेशादेव ध्वनतीति पाटवातिशयोक्त्या, ध्वन्यसम्बधेऽपि सम्बन्धकथनादतिशयोक्तिः। पञ्चजनो नाम कश्चिदसुरस्तत्र भवः [पाञ्चजन्यः] अस्य शङ्खः। "बहिर्देवपञ्चजनेभ्यश्च वक्तव्यम्" इति ञ्यप्रत्ययः। [अश्रूयत] श्रूयते स्म। पाञ्चजन्योऽपि सन्निहितः अभूदित्यर्थः। वीणा श्रूयते पुष्पाख्याप्रायन्ते इत्यादिवद्धर्मधर्मिणोरभेदोपचारात् पाञ्चजन्यस्य श्रवणोक्तिः *॥ २१॥

ररजेति।—महान् रथो यस्य सः [महारथः] रथिकविशेषः। 'आत्मानं सारथिं चाश्वान् रक्षन् युध्येत यो नरः। स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः॥' इति। रथाङ्गं चक्रमस्यास्तीति [रथाङ्गी] हरिः [इष्टसिद्धेः सम्पादकं] लक्षणवत्त्वात्, 'पुष्यः सर्वार्थसाधकः' इति शास्त्राच्चेति भावः। [सर्वासु दिक्षु, अप्रतिषिद्धमार्गम्] अनिषिद्धगमनमित्यर्थः। अधिष्ठानशक्तेर्निरङ्कुशत्वात्, 'पुष्यो हस्तो मैत्रमप्याश्विनञ्च चत्वार्य्याहुः सर्वदिग्द्वारकाणि' इति शास्त्रादिति भावः। [क्षिप्रं] क्षिप्रगामिनम्, अन्यत्र,—क्षिप्रनामकम्। 'क्षिप्रं चाश्विदिनेशपुष्यम्' इति शास्त्रात्। [पुष्यरथं] क्रीड़ारथम्,—'असौ पुष्यरथश्चक्रयानं न समराय यत्' इत्यमरः। [अधिरूढः] सन् पुष्यो रथ इव तं पुष्यरथमधिरूढः पुष्यनक्षत्रगतः [क्षपानाथः] चन्द्रः [इव ररज] †॥ २२॥

---

* पारावारपयोराशौ पञ्चत्वमुपागतं गुरुपुत्रम् उद्धर्त्तुकामेन भगवता श्रीकृष्णेन वाणावरुद्धसमुद्रवाक्यात् तिमिरूपधारिणं पञ्चजनाख्यमसुरं निहत्य, पाञ्चजन्यः नाम शङ्खो लेभे; इति हरिवंशे ९० अध्याये अनुसन्धेयम्।

† अत्रानुप्रासितेयमुपमा।

ध्वजाग्रधामा ददृशेऽथ शौरेः
सङ्क्रान्तमूर्त्तिर्मणिमेदिनीषु ।
फणावतस्त्रासयितुं रसाया-
स्तलं विविक्षन्निव पन्नगारिः ॥ २३ ॥

यियासतस्तस्य महीध्ररन्ध्र-
भिदापटीयान् पटहप्रणादः ।
जलान्तराणीव महार्णवौघः
शब्दान्तराण्यन्तरयाञ्चकार ॥ २४ ॥

---

ध्वजेति ।—[ अथ ] रथारोहणानन्तरं [ शौरेः ] * कृष्णस्य [ ध्वजाग्रधामा ] ध्वजाग्रं धाम स्थानं यस्य सः † [ मणिमेदिनीषु ] मणिमयकुट्टिमेषु [ सङ्क्रान्तमूर्त्तिः ] प्रतिबिम्बिताङ्गः सन् [ पन्नगारिः ] गरुत्मान् [ फणावतः ] सर्पान् [ त्रासयितुं ] द्रावयितुं [ रसायास्तलं ] पातालं [विविक्षन्निव] प्रवेष्टुमिच्छन्निवेत्युत्प्रेक्षा । विशतेः सन्नन्ताल्लटः शत्रादेशः । [ ददृशे ] दृष्टः, सोऽपि सन्निहितोऽभूदित्यर्थः ॥ २३ ॥

यियासत इति ।—यातुमिच्छतः [ यियासतः ] । यातेः सन्नन्ताल्लटः शत्रादेशः । [ तस्य ] हरेः सम्बन्धी [ महीध्ररन्ध्रभिदापटीयान् ] महीं धरन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात् कप्रत्ययः, तथा च वामनः,—"महीध्रादयो मूलविभुजादिदर्शनात्" इति । ‡ तेषां रन्ध्राणि विलानि तेषां भिदा भेदनम् । "षिद्भिदादिभ्योऽङ्" (३।३।१०४ पा० ) । तस्यां पटीयान् समर्थतरः [ पटहप्रणादः ] आनकघोषः,

---

* शूरः नाम कश्चिच्चन्द्रवंशीयो राजाऽऽसीत् ; तद्वंशजत्वात् "शौरिः" इति तालव्यशकारवती संज्ञा ।

† ध्वजाग्रारूढ इत्यर्थः ।

‡ "कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्" इति ( ३।२।५ पा० वा० ) भाष्यम् । तत्र "महीध्र-कुध्र-गिलतीति गिल" इति दीक्षिताः ।

यतः स भर्त्ता जगतां जगाम
धर्त्त्रा धरित्र्याः फणिना ततोऽधः ।
महाभराभुग्नशिरःसहस्र-
साहायकव्यग्रभुजं प्रसस्रे ॥ २५ ॥
अथोच्चकैस्तोरणसङ्गभङ्ग-
भयावनम्रीकृतकेतनानि ।

---

[ महार्णवौघः ] महार्णवस्यौघः, समुद्रस्य प्रवाहः, अन्यानि जलानि [ जलान्तराणीव ] सुप्सुपा इति समासः । अन्यान् शब्दान् [ शब्दान्तराणि ] पूर्ववत् समासः । [ अन्तरयाञ्चकार ] अन्तर्हितानि चकार, छादयामासेत्यर्थः । अन्तरशब्दादन्तर्द्धानार्थात् "तत्करोति" (ग०) इति ण्यन्ताल्लिट् । 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये' इत्युभयत्राप्यमरः ॥ २४ ॥

यत इति ।—[ जगतां, भर्त्ता ] धारयिता, कुक्षिस्थाखिललोक इत्यर्थः । "कर्त्तृकर्म्मणोः कृति" ( २।३।६५ पा० ) इति कर्मणि षष्ठी । [ सः ] हरिः [ यतः ] येन भूमार्गेण [ जगाम, ततः ] तस्मिन् भूभागे [ अधः ] पाताले [ धरित्र्याः ] धरण्याः [ धर्त्त्रा ] धारयित्रा । पूर्ववत् षष्ठी । [ फणिना ] शेषेण [ महाभराभुग्नशिरःसहस्रसाहायकव्यग्रभुजं ] महता भरेण आ समन्ताद्भुग्नस्य कुब्जीभूतस्य शिरःसहस्रस्य साहायके सहायकर्मणि । "योपधाद्गुरूपोत्तमाद्वुञ्" ( ५।१।१३२ पा० )। व्यग्राः त्वरमाणाः भुजा यस्मिन् तद्यथा तथा [ प्रसस्रे ] प्रसृतम् । भावे लिट् । हरिश्चचालेत्यर्थः । अत्र शेषस्य विशिष्टप्रसरणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ २५ ॥

अथेति ।—[ अथ ] हरिचलनानन्तरम् [ उच्चकैस्तोरणसङ्गभङ्गभयावनम्रीकृतकेतनानि ] उच्चकैरुन्नते तोरणे द्वारदारुणि सङ्गेन भङ्ग-

क्रियाफलानीव सुनीतिभाजं
सैन्यानि सोमान्वयमन्वयुस्तम् ॥ २६ ॥
श्यामारुणैर्वारणदानतोयै-
रालोड़िताः काञ्चनभूपरागाः ।
आनेमिमग्नैः शितिकण्ठपत्त्र-
चोदद्युतश्चुक्षुदिरे रथौघैः ॥ २७ ॥

---

तस्माद्भयेनावनम्रीकृतानि केतनानि यैस्तानि [ सैन्यानि ] सोमस्यान्वयः सन्तानः तं [ सोमान्वयं, तं ] हरिं [ सुनीतिभाजं ] सुष्ठु नीतिमन्तं [ क्रियाफलानि ] क्रियाः सामाद्युपायप्रयोगास्तासां फलानि हिरण्य-भूमिलादिलाभाः [ इव, अन्वयुः ] अन्वगच्छन् । यातेर्लङ् । "लङः शाक-टायनस्यैव" ( ३।४।१११ पा० ) इति झेर्जुस् * ॥ २६ ॥

श्यामेति ।—श्यामानि च अरुणानि च तैः [श्यामारुणैः] कृष्णलो-हितैः । "वर्णो वर्णेन" ( २।१।६९ पा० ) इति समासः । [ वारण-दानतोयैः ] गजमदोदकैः [ आलोड़िताः ] सम्मिलिता अत एव [ शितिकण्ठपत्त्रचोदद्युतः ] शितिकण्ठपत्त्रचोदाः मयूरबर्हचूर्णा इव द्योतन्त इति तथोक्ताः । क्विप् । उपमाऽलङ्कारः । [काञ्चनभूपरागाः] काञ्चनस्य भूः काञ्चनभूस्तस्याः परागाः पांशवः [ आनेमिमग्नैः ] आनेमि नेमिमभिव्याप्य । 'तस्यान्ते † नेमिः स्त्री' इत्यमरः । "आङ् मर्य्या-दाभिविध्योः" ( २।१।१३ पा० ) इत्यभिविधावव्ययीभावः । मग्नै [ रथौघैः, चुक्षुदिरे ] पिष्टा इत्यर्थः । परागाणां विशिष्टपेषणासम्बन्धे-ऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, तया च महती गजरथसम्पत्तिर्व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ २७ ॥

---

* उपमाऽलङ्कारः ।

† "तस्यान्ते" इत्यस्य प्राक् "चक्रं रथाङ्गं" इत्यंशो विद्यते ।

न लङ्घयामास महाजनानां
शिरांसि नैवोद्गतिमाजगाम ।
अचेष्टताष्टापदभूमिरेणुः
पदाहतो यत्सदृशं गरिम्णः ॥ २८ ॥

निरुध्यमाना यदुभिः कथञ्चि-
न्मुहुर्यदुच्चिक्षिपुरग्रपादान् ।
ध्रुवं गुरून्मार्गरुधः करीन्द्रा-
नुल्लङ्घ्य गन्तुं तुरगास्तदीषुः ॥ २९ ॥

नेति ।—[ अष्टापदभूमिरेणुः ] अष्टसु धातुषु पदं प्रतिष्ठा अस्येति अष्टापदं सुवर्णम्। 'रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इति सुवर्णपर्य्यायेष्वमरः। तस्य भूमिस्तस्या रेणुः, काञ्चनभूरजः [ पदाहतः ] रथाश्वादिचरणताड़ितोऽपि सन्नित्यर्थः। [महाजनानां] बहुजनानां पूज्यानाञ्च [ शिरांसि, न लङ्घयामास ] नाक्रामति स्म। किं बहुना,—[ उद्गतिम् ] उत्पतनं दर्पञ्च [ नैवाजगाम ] कुतः ?— [ यत् ] यस्मात् [ गरिम्णः ] गुरुत्वगुणस्य माहात्म्यस्य च। "प्रिय-स्थिर—" ( ६।४।१५७ पा० ) इत्यादिना गुरोर्गरादेशः। [ सदृशम् ] अनुरूपं यथा तथा [ अचेष्टत ]। अलङ्घनव्यवहारे गुरुत्वस्यौद्धत्य-प्रतिबन्धकत्वादिति भावः। अत्रानौद्धत्यादिप्रस्तुतसुवर्णपराग-विशेषण-साम्यादप्रस्तुतसुजनप्रतीतिः समासोक्तिरलङ्कारः॥ २८ ॥

निरुध्यमाना इति ।—[ तुरगाः यदुभिः ] आरूढैरिति भावः। [ कथञ्चित् ] अतिप्रयत्नेन [ निरुध्यमानाः ] वल्गाकर्षणेन वार्य्यमाणा अपि [ यत् ] यस्मात् अग्राश्च ते पादाश्च तान् [ अग्रपादान् ]। 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात्' इति वामनः (५ अधि० २ अध्या० २० सू० )। * सामानाधिकरण्येन समासः। [ मुहुः, उच्चिक्षिपुः ]

* "हस्ताग्रम् अग्रहस्तः, पुष्पाग्रम् अग्रपुष्पम् इत्यादयः प्रयोगाः कथम् ?—

अवेक्षितानायतवल्गमग्रे
तुरङ्गिभिर्यत्ननिरुद्धवाहैः ।
प्रक्रीडितान् रेणुभिरेत्य तूर्णं
निन्युर्जनन्यः पृथुकान् पथिभ्यः ॥ ३० ॥

दिदृक्षमाणाः प्रतिरथ्यमीयु-
र्मुरारिमारादनघं जनौघाः ।

---

उत्क्षिप्तवन्तः [ तत् ] तस्मान्मार्गं रुन्धन्तीति [ मार्गरुधः ] मन्दगमनेन मार्गरोधिनः । क्विप् । [ गुरून् ] महतः पूज्यांश्च । अलङ्घ्यानपीति भावः । [ करीन्द्रान् उल्लङ्घ्य गन्तुम्, ईषुः ] इच्छन्ति स्म [ ध्रुवम् ] । ध्रुवमित्युत्प्रेक्षायाम् । गुरवोऽपि सन्मार्गरोधकाः परैरुल्लङ्घ्यन्त इति अलङ्कारेण वस्तुध्वनिः ॥ २९ ॥

अवेक्षितानिति ।—[ आयतवल्गम् ] आयता आकृष्टा वल्गा मुखरज्जुर्यस्मिन् कर्मणि तद् यथा तथा [ यत्ननिरुद्धवाहैः ] यत्नेन दुर्वारवेगत्वात् अतिप्रयत्नेन निरुद्धा वाहा वाजिनो यैस्तैः । 'वाजि-वाहार्वगन्धर्व' इत्यमरः । [ तुरङ्गिभिः ] अश्वसादिभिः [ अग्रे ] पुरोदेशे [ अवेक्षितान् ] आलोकितान् [ रेणुभिः ] प्रक्रीडन्तीति [ प्रक्री-डितान् ] पांशुक्रीड़ाकरान् । कर्त्तरि क्तः । [ पृथुकान् ] शिशून् । 'पृथुकः शावकः शिशुः' इत्यमरः । [ जनन्यस्तूर्णमेत्य पथिभ्यः, निन्युः ] अपसारयाञ्चक्रुरिति स्वभावोक्तिः ॥ ३० ॥

दिदृक्षमाणा इति ।—[ अनघम् ] अकलङ्कं [ मुरारिं, दिदृक्षमाणाः ] द्रष्टुमिच्छन्तः, दृशेः सन्नन्ताल्लटः शानजादेशः "ज्ञाश्रुस्मृदृशां सनः" (१।३।५७ पा०) इत्यात्मनेपदम् । [ जनौघाः ] रथ्यायां रथ्यायां [ प्रति-रथ्यं ] । वीप्सार्थेऽव्ययीभावः । [ आरात् ] समीपं 'आराद्दूरसमीपयोः'

---

आहिताग्न्यादिष्वपाठात्, पाठे वा तदनियमः स्यात् ; अत आह,—गुणगुणिनोर्भेदा-भेदात् इति ; तत्र भेदात् हस्ताग्रादयः, अभेदादग्रहस्तादयः" इति वामनसूत्रवृत्तिः ।

अनेकशः संस्तुतमप्यनल्पा
नवं नवं प्रीतिरहो करोति ॥ ३१ ॥
उपेयुषो वर्त्म निरन्तराभि-
रसौ निरुच्छ्वासमनीकिनीभिः।
रथस्य तस्यां पुरि दत्तचक्षु-
र्विद्वान्विदामास शनैर्न यातम् ॥ ३२ ॥

---

इत्यमरः। [ईयुः] जग्मुः। इणो लिट् "दीर्घ इणः किति" (७।४।६९ पा०) इत्यभ्यासदीर्घः। ननु नित्यपरिचिते का दिदृक्षा? इत्यत्राह, अनेकश इति।—[अनेकशः] बहुवारमित्यर्थः। "बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्" (५।४।४२ पा०) इति शस्प्रत्ययः। [संस्तुतं] परिचितम् [अपि] वस्तु। जनेनेति शेषः। 'संस्तवः स्यात्परिचयः' इत्यमरः। [अनल्पा] अधिका [प्रीतिः] प्रेम, कर्त्री [नवं नवम्], आभीक्ष्ण्येन नवं [करोति, अहो!]। "नित्यवीप्सयोः" (८।१।४ पा०) इति द्विर्भावः। अहोशब्दः पुराणस्यापि नूतनत्वमित्याश्चर्ये। यथा परप्रेमास्पदं वस्तु नित्यदृष्टमपि अदृष्टचरमिव प्रतिक्षणं दिदृक्ष्यते, भगवानपि तथैवेति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३१ ॥

उपेयुष इति।—[विद्वान्] अभिज्ञः, अत एव [तस्यां, पुरि] नगर्यां [दत्तचक्षुः] निसृष्टदृष्टिः [असौ] हरिः [निरन्तराभिः] नीरन्ध्राभिः [अनीकिनीभिः] सेनाभिः [निरुच्छ्वासम्] अतिसङ्कटं [वर्त्म, उपेयुषः] प्राप्तस्य [रथस्य, शनैर्यातं] सम्बन्धनिबन्धनं मन्दगमनं [न विदामास] न विवेद। "उषविदजागृभ्योऽन्यतरस्याम्" (३।१।३८ पा०) इति पाक्षिक आम्प्रत्ययः। व्यासङ्गादसंवेदनं, न तु तत्त्वाज्ञानादिति भावः। व्यासङ्गस्य पदार्थत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ३२ ॥

मध्येसमुद्रं ककुभः पिशङ्गी-
र्या कुर्वती काञ्चनवप्रभासा ।
तुरङ्गकान्तामुखहव्यवाह-
ज्वालेव भित्त्वा जलमुल्ललास ॥ ३३ ॥

कृतास्पदा भूमिभृतां सहस्रै-
रुदन्वदम्भःपरिवीतमूर्त्तिः ।
अनिर्विदा या विदधे विधात्रा
पृथ्वी पृथिव्याः प्रतियातनेव ॥ ३४ ॥

अथैकत्रिंशच्छ्लोकैर्द्वारकां वर्णयति, मध्य इति ।—समुद्रस्य मध्ये [ मध्येसमुद्रं ]। "पारे मध्ये षष्ठ्या वा" (२।१।१८ पा०) इति विकल्पादव्ययीभावः। मध्यशब्दस्य तत्सन्नियोगादेकारान्तत्वम्। [ काञ्चनवप्रभासा ] हेमप्राकारप्रभया [ककुभः] दिशः [पिशङ्गीः] पिङ्गलवर्णाः। गौरादित्वात् ङीष्। [ कुर्वती, या ] पूः [ जलं ] समुद्रोदकं [ भित्त्वा ] उत्थितेति शेषः। [ तुरङ्गकान्तामुखहव्यवाहज्वालेव ] तुरङ्गकान्तायाः बड़वाया मुखे, हव्यं वहतीति हव्यवाहोऽग्निः। कर्मण्यण् प्रत्ययः। तस्य बाड़वाग्नेः ज्वाला इव, [ उल्ललास ] उद्बभासे। अत्र समुद्रान्तर्लीनायां बड़वानलज्वालायां कदाचित्सम्भाव्यमानस्य मध्योल्लसनस्य पुरि दर्शनाभेदाध्यवसायेनास्या ज्वालात्वमुत्प्रेक्ष्यते, इवशब्दोऽयमुत्प्रेक्षाया एव व्यञ्जको नोपमायाः, ईदृग्ज्वालाया अप्रसिद्धत्वेनोपमानत्वायोगात्। 'मन्ये शङ्के ध्रुवं नूनं प्राय इत्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥' इत्याचार्य्यदण्डी ॥३३॥

कृतास्पदेति ।—[भूमिभृतां] राज्ञां गिरीणाञ्च [सहस्रैः, कृतास्पदा] कृताधिष्ठाना। "आस्पदं प्रतिष्ठायाम्" (६।१।१४६ पा०) इति निपातः। उदकमस्यास्तीत्युदन्वानुदधिः। 'उदन्वानुदधिः सिन्धुः' इत्यमरः। "उदन्वानुदधौ च" (८।२।१३ पा०) इति निपातनात्साधुः।

त्वष्टुः सदाऽभ्यासगृहीतशिल्प-
विज्ञानसम्पत्प्रसरस्य सीमा ।
अदृश्यतादर्शतलामलेषु
छायेव या स्वर्जलधेर्जलेषु ॥ ३५ ॥
रथाङ्गभर्त्रेऽभिनवं वराय
यस्याः पितेव प्रतिपादितायाः ।

---

तस्याम्भोभिः परिवीता परिवेष्टिता मूर्त्तिः स्वरूपं यस्याः सा । [ उदन्वदम्भःपरिवीतमूर्त्तिः, पृथ्वी ] पृथुः । "वोतो गुणवचनात्" ( ४।१।४४ पा० ) इति ङीष् । एवम्भूता [ या ] पूः न निर्विद्यते न खिद्यते इत्यनिर्वित् । विदेर्ज्ञानार्थत्वान्निःपूर्वात् "सत्सूद्विष—" (३।२।६१ पा०) इत्यादिना क्विप् । तेन [ अनिर्विदा ] अखिन्नेन, अन्यथा शिल्पसौष्ठवासिद्धेरिति भावः । [ विधात्रा ] प्रथत इति पृथिवी, भूः । प्रथेरौणादिकः षिवन्, सम्प्रसारणञ्च, * "षिद्गौरादिभ्यश्च" ( ४।१।४१ पा० ) इति ङीष् । तस्याः [ पृथिव्याः, प्रतियातनेव ] प्रतिकृतिः इव, [ विदधे ] विहिता । 'प्रतियातना प्रतिच्छाया । प्रतिकृतिः' इत्यमरः । भूप्रतिनिधित्वोत्प्रेक्षया पुरो वैचित्र्यविस्तारादि वस्तु व्यज्यते ॥ ३४ ॥

त्वष्टुरिति ।—[त्वष्टुः] विश्वकर्मणः [ सदाऽभ्यासगृहीतशिल्पविज्ञानसम्पत्प्रसरस्य ] सदाभ्यासेन गृहीतो लब्धो यः शिल्पविज्ञानसम्पदः प्रसरः प्रकर्षः तस्य [ सीमा ] अवधिरप्रतिमेति यावत् । [ या ] पूः [ आदर्शतलामलेषु ] दर्पणपृष्ठस्वच्छेषु । 'दर्पणे मुकुरादर्शौ' इत्यमरः । [ जलधेर्जलेषु, स्वः ] स्वर्गस्य । 'स्वरव्ययं स्वर्गनाक' इत्यमरः । [ छायेव ] प्रतिबिम्बमिव [ अदृश्यत ] इत्युत्प्रेक्षा । 'छाया त्वनातपे कान्तौ प्रतिबिम्बार्कजाययोः' इति वैजयन्ती ॥ ३५ ॥

रथाङ्गेति ।—[ अम्बुधिः पितेव, वराय ] श्रेष्ठाय, जामात्रे च ।

---

* "प्रथेः षिवन् सम्प्रसारणञ्च" इति ( उ० १ पा० १५० सू० ) ।

प्रेम्णोपकण्ठं मुहुरङ्कभाजो
रत्नावलीरम्बुधिराबबन्ध ॥ ३६ ॥
यस्याश्चलद्वारिधिवारिवीचि-
च्छटोच्छलच्छङ्खकुलाकुलेन ।
वप्रेण पर्य्यन्तचरोडुचक्रः
सुमेरुवप्रोऽन्वहमन्वकारि ॥ ३७ ॥

---

'वरो जामातरि श्रेष्ठे' इति विश्वः। [ रथाङ्गभर्त्रे ] चक्रधराय हरये [ अभिनवं ] यथा तथा [ प्रतिपादितायाः ] अङ्कः समीपम् उत्सङ्गश्च तद्भाजः [ अङ्कभाजः ]। 'अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः' इति केशवः। [ यस्याः ] पुरः [ उपकण्ठम् ] अन्तिके। अत्यन्तसंयोगे द्वितीया। अन्यत्र,—कण्ठे। विभक्त्यर्थेऽव्ययीभावः। [ मुहुः प्रेम्णा रत्नावलीः, आबबन्ध ] आ समन्ताद्बबन्ध। श्लेषानुप्राणितेयमुपमेति सङ्करः॥ ३६ ॥

यस्या इति।—[ चलद्वारिधिवारिवीचिच्छटोच्छलच्छङ्खकुलाकुलेन ] चलन्तीनां वारिधिवारिवीचीनां छटासु परम्परासु उच्छलद्भिरुत्पतद्भिः शङ्खानां कुलैराकुलेन सङ्कीर्णेन, [ यस्याः ] पुरः [ वप्रेण ] प्राकारेण [ पर्य्यन्तचरोडुचक्रः ] पर्य्यन्ते चरतीति तत् तादृशम् उडुचक्रं नक्षत्रमण्डलं यस्य सः [ सुमेरुवप्रः ] सुमेरोर्वप्रः सानुः। 'सानुप्राकारयोर्वप्रः' इत्युभयत्रापि सज्जनः। अहन्यहनीति [अन्वहम्] "अव्ययं विभक्ति—" ( २।१।६ पा० ) इत्यादिना याथार्थ्येऽव्ययीभावः, "अनश्च" ( ५।४।१०८ पा० ) "नपुंसकादन्यतरस्याम्" ( ५।४।१०९ पा० ) इति समासान्तोऽच्। [ अन्वकारि ] अनुकृतः, तत्साम्यं प्रापित इत्यर्थः। मेरूपमानाद्वप्रस्य तत्तुल्यमौन्नत्यं व्यज्यते * ॥ ३७ ॥

---

* इत्यलङ्कारेण वस्तुध्वनिः।

वणिक्पथे पूगकृतानि यत्र
भ्रमागतैरम्बुभिरम्बुराशिः ।
लोलैरलोलद्युतिभाञ्जि मुष्णन्
रत्नानि रत्नाकरतामवाप ॥ ३८ ॥

अम्भश्चरतः कोमलरत्नराशी-
नपांनिधिः फेनपिनद्धभासः ।
यत्रातपे दातुमिवाधितल्पं
विस्तारयामास तरङ्गहस्तैः ॥ ३९ ॥

---

वणिक्पथ इति ।—[ यत्र ] यस्यां पुरि [ वणिक्पथे ] वणिजां पथि वणिक्पथे आपणे, अपूगाः पूगाः सम्पद्यमानानि कृतानि [ पूगकृतानि ] पुञ्जीकृतानि । "श्रेण्यादयः कृतादिभिः" ( २।१।५९ पा० ) इति समासः । "श्रेण्यादिषु च्व्यर्थवचनम्" * इति च्व्यर्थता । [अलोलद्युतिभाञ्जि] स्थिरप्रभावन्ति [रत्नानि, लोलैः] चलैः अत एव [भ्रमागतैः] जलनिर्गममार्गादागतैः । 'भ्रमाश्च जलनिर्गमाः' इत्यमरः । [ अम्बुभिः, मुष्णन् ] अपहरन् [ अम्बुराशिः ] अर्णवः । जलमात्रसारोऽपीति भावः । [ रत्नाकरताम्, अवाप ] प्राप, न तु प्रागिति भावः । अम्बुराशेः प्रागरत्नसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः । तया च पुर्य्याः समुद्रातिशायिनी रत्नसमृद्धिर्वस्तु व्यज्यते ॥ ३८ ॥

अम्भ इति —[ यत्र ] पुरि [ अपांनिधिः ] समुद्रः अम्भश्चीतन्ति चरन्तीति [ अम्भश्चरतः ] जलस्राविणः, अत एव [ फेनपिनद्धभासः ]

---

* "श्रेण्यादिषु च्व्यर्थग्रहणं कर्त्तव्यम् । अश्रेणयः श्रेणयः कृताः श्रेणिकृताः । यदा हि श्रेणय एव किञ्चित् क्रियन्ते, तदा मा भूदिति । अन्यत्रायं च्व्यर्थग्रहणेषु च्व्यन्तस्य प्रतिषेधं शास्ति, तदिह न तथा । किं कारणम्?—अन्यत्र पूर्वं च्व्यन्तकार्य्यम् परं च्व्यर्थकार्य्यम् । इह पुनः पूर्वं च्व्यर्थकार्य्यं परं च्व्यन्तकार्य्यम्" इति महाभाष्यम् ।

यच्छालमुत्तुङ्गतया विजेतुं
दूरादुदस्थीयत सागरस्य ।
महोर्मिभिर्व्याहतवाञ्छितार्थै-
र्व्रीडादिवाभ्यासगतैर्विलिल्ये ॥ ४० ॥

कुतूहलेनेव जवादुपेत्य
प्राकारभित्त्या सहसा निषिद्धः ।
रसन्नरोदीद्भृशमम्बुवर्ष-
व्याजेन यस्या बहिरम्बुवाहः ॥ ४१ ॥

---

फेनैः पिनद्धभासः पिहितकान्तीन् । अपिपूर्वान्नह्यतेः कर्मणि क्तः । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यपेरकारलोपः । [ कोमलरत्नराशीन् ] कोमलानुत्कृष्टान् रत्नराशीन् [ आतपे दातुं ] शोषणार्थं निधातुम् [इव] इति फलोत्प्रेक्षा । तल्पेष्वट्टेषु [ अधितल्पं ] । 'तल्पं शय्याऽट्टदारेषु' इत्यमरः । विभक्त्यर्थेऽव्ययीभावः । [ तरङ्गहस्तैः ] तरङ्गैरेव हस्तैः [ विस्तारयामास ] प्रसारितवान् । अत्रातपदानस्य तरङ्गहस्तसाध्यत्वेनोत्प्रेक्षारूपकयोः सङ्करः ॥ ३९ ॥

यच्छालमिति ।—[ सागरस्य महोर्मिभिः ] कर्तृभिः [ यच्छालं ] यस्याः प्राकारम् । 'प्राकारो वरणः शालः' इत्यमरः । [ उत्तुङ्गतया ] औन्नत्यगुणेन [ विजेतुं ] जेतुमिवेत्यर्थः । फलोत्प्रेक्षेयम्, व्यञ्जकाप्रयोगाद्गम्या । [ दूरात्, उदस्थीयत ] उत्थितम् । भावे लङ् । [ अभ्यासगतैः ] समीपगतैः, 'समीपे निकटाभ्याससन्निकृष्टसनीडवत्' इत्यमरः । [ व्याहतवाञ्छितार्थैः, व्याहतो वाञ्छितार्थः शालविजयरूपो येषां तैः, विजयाक्षमैरित्यर्थः, अत एव [ व्रीडादिव ] इति हेतूत्प्रेक्षा । ऊर्मिभिः [ विलिल्ये ] विलीनम् । लीयतेर्भावे लिट् । अत्र शक्तस्यापि अविजिगीषोर्व्रीडाऽनुदयात्तापेक्षत्वेनोत्प्रेक्षयोः सङ्करः ॥ ४० ॥

कुतूहलेनेति ।—अम्बु वहतीति [ अम्बुवाहः ] मेघः । कर्मण्यण् ।

यदङ्गनारूपसरूपतायाः
कञ्चिद्गुणं भेदकमिच्छतीभिः।
आराधितोऽद्धा मनुरप्सरोभि-
श्चक्रे प्रजाः स्वाः सनिमेषचिह्नाः ॥ ४२ ॥

स्फुरत्तुषारांशुमरीचिजालै-
र्विनिह्नुताः स्फाटिकसौधपङ्क्तीः।

---

[ कुतूहलेन ] अन्तःप्रवेशकौतुकेन [ इव ] इति हेतूत्प्रेक्षा। [ जवात् उपेत्य, यस्याः प्राकारभित्त्या सहसा, निषिद्धः ] निवारितः, अत एव [ बहिः ] एव [ रसन् ] गर्जन्। दुःखात् क्रन्दंश्चेति श्लेषः। [ अम्बु-वर्षव्याजेन भृशम्, अरोदीत् ] अश्रूणि मुक्तवान्। "रुदिर् अश्रुविमोचने" लङ्, "रुदश्च पञ्चभ्यः" (७।३।९८ पा० ) इतीडागमः। अत्राम्बुवर्ष-व्याजेनोत्पादकस्यापह्नुत्यलङ्कारस्योक्तश्लेषोत्प्रेक्षासापेक्षत्वात् सङ्करः॥४१॥

यदङ्गनेति।—[ यदङ्गनारूपसरूपतायाः ] यस्यां पुर्यामङ्गनानां रूपं सौन्दर्यमाकारो वा 'रूपं स्वभावे सौन्दर्य्ये आकारश्लेषयोरपि' इति विश्वः। तस्य सरूपतायाः सारूप्याद्[ भेदकं ] व्यावर्त्तकं [ कञ्चित्, गुणं ] धर्मम् [ इच्छतीभिः ] अपेक्षमाणाभिः। "आच्छीनद्योर्नुम्" ( ७।१।८० पा० ) इति विकल्पान्नुमभावः। [ अप्सरोभिः, आराधितः ] प्रार्थितः [ मनुः ] मानुषसृष्टिकर्त्ता [ स्वाः ] स्वकीयाः [ प्रजाः ]। निमेषः पक्ष्मपात एव चिह्नं व्यावर्त्तकं, तेन सह वर्त्तन्त इति [ सनिमेषचिह्नाः ]। "तेन सहेति तुल्ययोगे" ( २।२।२८ पा० ) बहुव्रीहिः। [ चक्रे, अद्धा ] तत्त्वमित्युत्प्रेक्षा। 'तत्त्वे त्वद्धाञ्जसा द्वयोः' इत्यमरः। अत्र स्वाभा-विकनिमेषस्याप्सरसः प्रार्थनाहेतुकत्वोत्प्रेक्षया द्वारकाङ्गनानां निमेष-मात्रभिन्नममानुषं सौन्दर्य्यं वस्तु व्यज्यते ॥ ४२ ॥

स्फुरदिति।—[ यस्यां ] पुरि [ क्षणदासु ] रात्रिषु [ नार्य्यः, स्फुर-त्तुषारांशुमरीचिजालैः ] स्फुरद्भिस्तुषारांशोश्चन्द्रस्य मरीचिजालैश्चन्द्रि-काभिः, [ विनिह्नुताः ] अपह्नुताः, तदेकरूपतापत्तेरलक्ष्यमाणा

आरुह्य नार्यः क्षणदासु यस्यां
नभोगता देव्य इव व्यराजन् ॥ ४३ ॥

कान्तेन्दुकान्तोपलकुट्टिमेषु
प्रतिक्षपं हर्म्यतलेषु यत्र ।
उच्चैरधःपातिपयोमुचोऽपि
समूहमूहुः पयसां प्रणाल्यः ॥ ४४ ॥

---

इत्यर्थः, अत एव सामान्यालङ्कारः;—'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । [ स्फाटिकसौधपङ्क्तीः ] स्फाटिकानां स्फटिकविकाराणां सौधानां पङ्क्तीः [ आरुह्य, नभोगताः, देव्यः ] देवाङ्गनाः [इव]। देवशब्दस्य पचादिषु देवडिति पाठात् 'टिड्ढाणञ्—" ( ४।१।१५ पा० ) इत्यादिना ङीप्। [ व्यराजन् ] ; सौधानामग्रहणाद-भ्रङ्कषत्वाच्च तत्र लक्ष्यमाणाः स्त्रियः खेचर्य्य इव रेजुरित्यर्थः। अत्र नभोगतत्वोत्प्रेक्षायाः पूर्वोक्तसामान्यसापेक्षत्वात् सङ्करः ॥ ४३ ॥

कान्तेति।—[ यत्र ] पुरि क्षपासु रात्रिषु [ प्रतिक्षपम् ]। विभक्त्यर्थेऽव्ययीभावः। [ कान्तेन्दुकान्तोपलकुट्टिमेषु ] कान्तानि रम्याणि इन्दुकान्तोपलानां चन्द्रकान्तमणीनां कुट्टिमानि बद्धभूमयो येषु तेषु। 'कुट्टिमं बद्धभूमिः स्यात्' इति हलायुधः। [ हर्म्यतलेषु, उच्चैः] उन्नताः [ प्रणाल्यः ] जलमार्गाः। "द्वयोः प्रणाली पयसः पदव्याम्' इत्यमरः। [अधःपातिपयोमुचोऽपि] अधःपातिनः अधश्चराः पयोमुचो मेघाः यासां ताः, अधःकृतमेघमण्डलत्वात् अजातवृष्टिपाता अपीत्यर्थः। विरोधालङ्कारः। [ पयसां समूहं ] पयःपूरम् [ ऊहुः ] वहन्ति स्म ; चन्द्रकान्तनिष्यन्दैरिति भावः। वहेर्लिट् "वचिस्वपि—" ( ६।१।१५ पा० ) इत्यादिना सम्प्रसारणम्। अत्र सौधानां प्रणालीनाञ्च तादृगौन्नत्य-पयःपूरासम्बन्धेऽपि तत्सम्बन्धोक्त्यातिशयोक्तिः ॥ ४४ ॥

रतौ ह्रिया यत्र निशाम्य दीपान्
जालागताभ्योऽधिगृहं गृहिण्यः ।
बिभ्युर्विड़ालेक्षणभीषणाभ्यो
वैदूर्य्यकुड्येषु शशिद्युतिभ्यः ॥ ४५ ॥

यस्यामतिश्लक्ष्णतया गृहेषु
विधातुमालेख्यमशक्नुवन्तः ।

---

रताविति ।—[ यत्र ] पुरि गृहेषु [ अधिगृहम् ] । विभक्त्यर्थेऽव्ययीभावः । [ गृहिण्यः ] कुलाङ्गनाः, अत एव [ रतौ ] रतिकाले [ ह्रिया दीपान्, निशाम्य ] निर्वाप्य । शमेर्भित्त्वाद्ध्रस्वादेशाभावश्चिन्त्यः । [ जालागताभ्यः ] गवाक्षमार्गप्रविष्टाभ्यः । 'जालं गवाक्ष आनायः' इति विश्वः । विदूरात्प्रभवन्तीति वैदूर्य्याणि बालवायजानि मणयः । 'वैदूर्य्यं बालवायजम्' इति विश्वः । "विदूराज् ञ्यः" ( ४।३।८४ पा० ) इति ञ्यप्रत्ययः । अत्र विदूरशब्दो बालवायस्यादेशः पर्य्यायो वा, तत्रोपचरितो वा, तेन बालवायाद्रिरसौ प्रभवति, न विदूरान्नगरात् ; तत्र तु संस्क्रियत इत्याक्षेपः प्रत्युक्तः । यदुक्तम् ;—'बालवायो विदूरञ्च प्रकृत्यन्तरमेव वा । न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत् ॥' इति । तेषां कुड्येषु [ वैदूर्य्यकुड्येषु ] भित्तिषु सङ्क्रान्ताभ्य इति शेषः । अत एव तच्छायापत्त्या पैङ्गल्यात् [ विड़ालेक्षणभीषणाभ्यः ] विड़ालेक्षणवत् भीषयन्त इति भीषणाभ्यो भयङ्कराभ्यः । नन्द्यादित्वात्कर्त्तरि ल्युप्रत्यये टाप् । [ शशिद्युतिभ्यः, बिभ्युः ] भीताः, मौग्ध्यादिति भावः । बिभेतेर्लिट् । अत्र लज्जावारणाय दीपनिर्वापणे न केवलं तदसिद्धिः, प्रत्युत भयं चोत्पन्नमित्यनर्थोत्पत्तिरूपो विषमभेदः ;—'विरुद्धकार्य्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत् । विरूपघटना या स्याद्विषमालङ्कृतिर्मता ॥' इति लक्षणात् ॥ ४५ ॥

यस्यामिति ।—[ यस्यां ] पुरि [ गृहेष्वतिश्लक्ष्णतया ] रत्नभित्ती-

**चक्रुर्युवानः प्रतिबिम्बिताङ्गाः**
**सजीवचित्रा इव रत्नभित्तीः ॥ ४६ ॥**

**सावर्ण्यभाजां प्रतिमागतानां**
**लक्ष्यैः स्मरापाण्डुतयाङ्गनानाम् ।**
**यस्यां कपोलैः कलधौतधाम-**
**स्तम्भेषु भेजे मणिदर्पणश्रीः ॥ ४७ ॥**

**शुकाङ्गनीलोपलनिर्मितानां**
**लिप्तेषु भासा गृहदेहलीनाम् ।**
**यस्यामलिन्देषु न चक्रुरेव**
**मुग्धाङ्गना गोमयगोमुखानि ॥ ४८ ॥**

---

नामतिस्निग्धतया [ आलेख्यं ] चित्रं [ विधातुं ] निर्मातुम् [ अशक्नुवन्तः युवानः, प्रतिबिम्बिताङ्गाः ] स्वयं तासु सङ्क्रान्तमूर्त्तयः सन्तः [ रत्नभित्तीः, सजीवचित्राः ] सचेतनचित्रवतीः [ इव चक्रुः ] इत्युत्प्रेक्षा ॥ ४६ ॥

सावर्ण्येति ।—[ यस्यां ] पुरि [ कलधौतधामस्तम्भेषु ] हेमागारस्तम्भेषु । 'कलधौतं रौप्यहेम्नोः' इति विश्वः । [ प्रतिमागतानां ] प्रतिबिम्बगतानां [ सावर्ण्यभाजाम् ] तत्सावर्ण्यादगृहीतभेदानामित्यर्थः, अत एव समान्यालङ्कारः,—'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । [ अङ्गनानां स्मरापाण्डुतया लक्ष्यैः ] विभिन्नवर्णत्वाद्भेदेन गृह्यमाणैरित्यर्थः, [ कपोलैः, मणिदर्पणश्रीः ] मणिदर्पणानां स्फटिकमुकुराणां श्रीरिव श्रीः [ भेजे ] प्राप्ता, इति निदर्शना, सा चोक्तसामान्यप्रसादलब्धेति तेनास्याः सङ्करः ॥ ४७ ॥

शुकाङ्गेति ।—[ यस्यां ] पुरि [ मुग्धाङ्गनाः शुकाङ्गनीलोपलनिर्मितानां ] शुकाङ्गवन्नीलोपला नीलमणयः, मरकतानीत्यर्थः, 'उपलः

**गोपानसीषु च्चणमास्थितानामालम्बिभिश्चन्द्रकिणां कलापैः ।
हरिन्मणिश्यामतृणाभिरामैर्गृहाणि नीध्रैरिव यत्र रेजुः ॥ ४९ ॥**

---

प्रस्तरे मणौ' इति विश्वः। तैर्निर्मितानां [ गृहदेहलीनां ] गृहाणां देहल्यो गृहद्वारशाखाधारदारूणि, 'गृहावग्रहणी देहली' इत्यमरः। तासां [ भासा, लिप्तेषु, अलिन्देषु ] द्वारबहिर्भागेषु। 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः। [ गोमयगोमुखानि ] गोः पुरीषं गोमयम्। "गोश्च पुरीषे" ( ४।३।१४५ पा० ) इति मयट्। तस्य गोमुखानि विलेपनानि। 'गोमुखं कुटिलाकारे वाद्यभाण्डे विलेपने' इति विश्वः। [ न चक्रुरेव ], मरकतप्रभायां विलेपनभ्रान्त्येति भावः, अत एव भ्रान्तिमदलङ्कारः,—'कविसम्मतसादृश्याद्वस्त्वन्तरमतिर्हि यत्। स भ्रान्तिमान्' इत्यलङ्कारसर्वस्वकारलक्षणात् * ॥४८॥

गोपानसीष्विति ।—[ यत्र ] पुरि [गृहाणि, गोपानसीषु] वलभीषु, छादनाधारेषु वंशपञ्जरेष्वित्यर्थः ; अत एव "गोपानसी तु वलभी छादने वक्रदारुणि' इत्यत्र पटलाधारवंशपञ्जरे इत्याह स्वामी। [ च्चणम् ] ईषत्कालम्। अत्यन्तसंयोगे द्वितीया। [ आस्थितानाम् ] आसीनानाम्। चन्द्रकाः मेचकाः। 'समौ चन्द्रकमेचकौ' इत्यमरः। तद्वतां [ चन्द्रकिणां ] मयूराणाम् [ आलम्बिभिः ] लम्बमानैः [ कलापैः ] बर्हैः। 'कलापो भूषणे बर्हे' इत्यमरः। [ हरिन्मणिश्यामतृणाभिरामैः ] हरिन्मणयो मरकतानि। "गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः" इत्यमरः। तद्वत् श्यामैस्तृणैरभिरामाणि, हरिततृणमयानीत्यर्थः। तैः [ नीध्रैः ] † पटलप्रान्तैः [ इव रेजुः ]।

---

* नेदमलङ्कारसर्वस्वकारलक्षणम् ; तत्कृतलक्षणन्तु,—"सादृश्याद् वस्त्वन्तरप्रतीतिर्भ्रान्तिमान्" इति।

† मूलविभुजादिराकृतिगणत्वात् कः, दीर्घश्च।

बृहत्तुलैरप्यतुलैर्वितान-
मालापिनद्धैरपि चावितानैः ।
रेजे विचित्रैरपि या सचित्रै-
र्गृहैर्विशालैरपि भूरिशालैः ॥ ५० ॥
चिक्रंसया कृत्रिमपत्त्रिपङ्क्तेः
कपोतपालीषु निकेतनानाम् ।

'वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः' इत्यमरः। छादनपर्य्यायौ पटलच्छदी। छद्यन्तवाचिनी वलीकनीध्रे। छदेराधारो वंशपञ्जरो गोपानसीति विवेकः। अत एव हरितत्वालम्बनादिगुणक्रियानिमित्तत्वान्नीध्रैरिवेति जातिस्वरूपोत्प्रेक्षा ॥ ४९ ॥

बृहदिति।—[ या ] पूः बृहत्यस्तुला उपरिस्थाप्यदार्वाधारभूतानि स्तम्भाग्रपीठानि येषु तैः [ बृहत्तुलैः ] तथा [अपि, अतुलैः] तद्रहितैरिति विरोधः, अनुपमैरित्यविरोधः,—"तुला माने पलशते सादृश्ये राशिभाण्डयोः। गृहाणां दारुबन्धाय पीठ्यास्" इति हैमः। [ वितानमालापिनद्धैः ] वितानानामुल्लोचानां मालाभिः पङ्क्तिभिः पिनद्धैराच्छादितैः,तथा [अपि च अवितानैः] तद्रहितैरिति विरोधः ; अशून्यैरित्यविरोधः। समस्तवस्तुसम्पन्नैरित्यर्थः। 'अस्त्री वितानमुल्लोचः' 'वितानं त्रिषु तुच्छकम्' इत्युभयत्राप्यमरः। [ विचित्रैः ] आलेख्यरहितैः [ अपि, सचित्रैः ] तत्सहितैरिति विरोधः। विचित्रैरद्भुतैरिति परिहारः। 'आलेख्याश्चर्य्ययोश्चित्रम्' इत्यमरः। विगताः शाला गृहैकदेशा येषां तानि। 'शाला गृहे तरुस्कन्धे शाखागारैकदेशयोः' इति विश्वः। तैः [ विशालैरपि, भूरिशालैः ] प्रचुरगृहैकदेशविशिष्टैः इति विरोधः। विशालैः पृथुलैरित्यविरोधः। 'विशालं पृथुलं महत्' इत्यमरः। "वेः शालच्छङ्कटचौ" (५।२।२८ पा०) इति शालच्प्रत्ययः। [ गृहैः रेजे ]। अपिरयं सर्वत्र विरोधे, विरुद्धवदाभासाद्विरोधालङ्कारः,—'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति काव्यप्रकाशलक्षणात् ॥ ५० ॥

मार्जारमप्यायतनिश्चलाङ्गं
यस्यां जनः कृत्रिममेव मेने ॥ ५१ ॥
क्षितिप्रतिष्ठोऽपि मुखारविन्दै-
र्वधूजनश्चन्द्रमधश्चकार।
अतीतनक्षत्रपथानि यत्र
प्रासादशृङ्गाणि वृथाऽध्यरुक्षत् ॥ ५२ ॥

---

चिक्रंसयेति।—[ यस्यां ] पुरि [ निकेतनानां ] वेश्मनाम्। 'वेश्म सद्म निकेतनम्' इत्यमरः। [ कपोतपालीषु ] कपोतान् पक्षिणः पालयन्तीति कपोतपाल्यो विटङ्कापरनामानः स्तम्भाग्रप्रसारिताः दारुविशेषाः। 'कपोतपालिकायान्तु विटङ्कं पुन्नपुंसकम्' इत्यमरः। कर्मण्यणि ङीप्। तासु [ कृत्रिमपक्षिपङ्क्तेः ] कृत्रिमपक्षिणां दारुमयपक्षिणां पङ्क्तेः। कर्मणि षष्ठी। [ चिक्रंसया ] क्रमितुमिच्छया, जिघत्सयेत्यर्थः। क्रमेः सन्नन्तात् "अप्रत्ययात्" (३।३।१०२ पा०) इत्यकारप्रत्यये टाप् 'स्नुक्रमोरनात्मनेपदनिमित्ते" (७।२।३६ पा०) इतीडागमो न भवति। अत्र क्रमेर्वृत्त्यादिव्यतिरिक्तार्थेऽपि "अनुपसर्गाद्वा" (१।३।४३ पा०) इति वैकल्पिकस्यात्मनेपदनिमित्तस्यानुपसर्गत्वस्य वैवक्षिकस्य सम्भवात्। [ आयतनिश्चलाङ्गम् ] आयतम् आनतं वा निश्चलमङ्गं यस्य तं [ मार्जारं ] विड़ालम् [ अपि ]। 'ओतुर्विड़ालो मार्जारः, इत्यमरः। [ जनः, कृत्रिममेव ] क्रियानिर्वृत्तमेव [ मेने ] न तु वास्तवमित्यर्थः। "ड्वितः क्त्रिः" (३।३।८८ पा०) "क्त्रेर्मम्नित्यम्" (४।४।२० पा०) इति मप्प्रत्ययः। अनेन कृत्रिमाकृत्रिमभेदो दुर्ग्रह इति शिल्पज्ञानातिशयोक्तिः। अत्र कविकल्पितसादृश्यान्मार्जारजनयोः कृत्रिमाकृत्रिमेषु विपरीतमतिवर्णनाद्भ्रान्तिमदलङ्कारः ॥ ५१ ॥

क्षितीति।—[ यत्र ] यस्यां पुरि [ वधूजनः, क्षितिप्रतिष्ठोऽपि ] क्षितौ प्रतिष्ठा यस्य सः, भूमिस्थितोऽपि [ चन्द्रं ] दिवि स्थितमिति भावः। तत्रापि [ मुखारविन्दैः ] मुखैरेवारविन्दैः [ अधश्चकार ] इति विरोधः।

रम्या इति प्राप्तवतीः पताका-
रागं विविक्ता इति वर्द्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः
समं वधूभिर्वलभीर्युवानः ॥ ५३ ॥

स्वलावण्यमहिम्ना अधरीचकारेति परिहाराद्विरोधालङ्कारः । अतीतानि नक्षत्रपथम् [ अतीतनक्षत्रपथानि ] । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" ( १।४।७९ पा० वा० ) इति समासः "द्विगुप्राप्तापन्न—" ( २।४।२६ पा० वा० ) इत्यादिना परवल्लिङ्गताप्रतिषेधः । [ प्रासादशृङ्गाणि तथा, अध्यरुक्षत् ] अधिरोहति स्म । अनधिरुह्यैवाधःकरणादिति भावः । रोहतेर्लुङ् "शल इगुपधादनिटः क्सः" ( ३।१।४५ पा० ) इति च्लेः क्सादेशः । अत्राधःकरणवाक्यार्थस्य श्लेषविरोधोपजीव्यवैयर्थ्यहेतुत्वात्त-त्सङ्कीर्णः काव्यलिङ्गभेदः ॥ ५२ ॥

रम्या इति ।—[ यस्यां ] पुरि [ युवानो, रम्याः ] रमणीयाः [ इति ] हेतोः [ पताकाः प्राप्तवतीः ] उच्छ्रितध्वजा इत्यर्थः । अन्यत्र,— रम्या इति एवं पताकाः प्राप्तवतीः प्रसिद्धिं गता इत्यर्थः । 'पताका वैजयन्त्यां स्यात् सौभाग्येऽङ्कध्वजेऽपि च' । 'इति हेतौ प्रकरणे प्रकारादि-समाप्तिषु' इत्युभयत्रापि विश्वः । [ विविक्ताः ] विजना विमलाश्च [ इति ] हेतोः [ रागं वर्द्धयन्तीः ] । 'विविक्तौ पूतविजनौ' इत्यमरः । [ नमद्वलीकाः ] नम्रनीध्राः "वलीकनीध्रे पटलप्रान्ते" इत्यमरः । अन्यत्र,—नमन्त्यो वल्यस्त्रिवल्याख्या मध्यरेखा यासां ता नमद्वलीकाः । "नद्यृतश्च" ( ५।४।१५३ पा० ) इति कप्प्रत्ययः । 'वली मध्यमरेखोर्मि-जीर्णत्वग्गृहदारुषु' इति वैजयन्ती । [ वलभीः ] कूटागाराणि । 'कूटा-गारन्तु वलभी' इत्यमरः । [ वधूभिः सममसेवन्त ] वधूसहिता असेवन्तेत्यर्थः । अत्र वधूनां वलभीनाञ्च प्रकृतानामेव धर्मसाधर्म्यौ-पम्यावगमात्केवलप्रकृतगोचरा तुल्ययोगिता, न श्लेषः, तत्र विशेष्यस्यापि श्लिष्टत्वनियमात् । यथाहुः,—'प्रस्तुतानां तथाऽन्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥' इति ॥ ५३ ॥

सुगन्धितामप्रतियत्नपूर्वां
बिभ्रन्ति यत्र प्रमदाय पुंसाम् ।
मधूनि वक्त्राणि च कामिनीना-
मामोदकर्मव्यतिहारमीयुः ॥ ५४ ॥

रतान्तरे यत्र गृहान्तरेषु
वितर्दिनिर्यूहविटङ्कनीड़ः ।
रुतानि शृण्वन् वयसां गणोऽन्ते-
वासित्वमाप स्फुटमङ्गनानाम् ॥ ५५ ॥

---

सुगन्धितामिति ।—[ यत्र ] पुरि, न प्रतियत्नः संस्कारः पूर्वो यस्या-स्ताम् [ अप्रतियत्नपूर्वाम् ] अकृत्रिमां स्वाभाविकीमित्यर्थः । 'प्रतियत्नस्तु संस्कारः' इति वैजयन्ती । शोभनो गन्धो येषां तेषां भावस्तत्ता तां [ सुगन्धितां ] सौरभ्यं "गन्धस्येत्—" ( ५।४।१३५ पा० ) इतीकारः । [ बिभ्रन्ति ] बिभ्राणानि । "वा नपुंसकस्य" ( ७।१।७९ पा० ) इति नुमागमः । [ मधूनि ] मद्यानि [ कामिनीनां वक्त्राणि च, पुंसां ] यूनां [प्रमदाय] प्रीत्यै [ आमोदकर्म्मव्यतिहारम् ] आमोदकर्मणो वासनाधानस्य व्यतिहारं परस्परकरणम् [ ईयुः ] अन्योऽन्यगन्धेन अन्योऽन्यं वासयामासु-रित्यर्थः । इणो लिट् । अत्रापि मधूनां वक्त्राणाञ्च प्रकृतत्वात्तत्पूर्वक एव तुल्ययोगिताभेदः, तेन यूनां मधुवासितवधूवदनपानं वदनवासित-मधुगण्डूषपानञ्च वस्तु व्यज्यते, तेन च निरातङ्कभोगाः पौरा इति गम्यते ॥ ५४ ॥

रतान्तर इति ।—[यत्र] पुरि [गृहान्तरेषु, वितर्दिनिर्यूहविटङ्कनीड़ः] वितर्दयो विहारवेदिकाः । 'स्याद्वितर्दिस्तु वेदिका' इत्यमरः । तासां निर्यूहाः मत्तवारणाख्या अपाश्रयाः । 'निर्य्यूहो मत्तवारणः' इति वैजयन्ती । तेषां विटङ्काः उपरितन्यः कपोतपालिकाः त एव नीडाः कुलायाः यस्य सः । 'कुलायो नीडमस्त्रियाम्' इत्यमरः । [ वयसां ]

छन्नेष्वपि स्पष्टतरेषु यत्र
स्वच्छानि नारीकुचमण्डलेषु ।
आकाशसाम्यं दधुरम्बराणि
न नामतः केवलमर्थतोऽपि ॥ ५६ ॥

यस्यामजिह्मा महतीमपङ्काः
सीमानमत्यायतयोऽत्यजन्त ।

---

शुकसारिकादिपक्षिणां [ गणः ]। 'वयः पक्षिणि बाल्यादौ" इति विश्वः। [ अङ्गनानाम् ]। वितर्दिषु रममाणानामिति भावः। [ रतान्तरे रुतानि ] रतिकूजितानि [ शृण्वन् ] अन्ते समीपे वसन्ति इत्यन्तेवासिनः शिष्याः। 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः। "शय-वासवासिष्वकालात्" ( ६।३।१८ पा० ) इत्यलुक्। तेषां भावस्तत्त्वम् [ अन्तेवासित्वमाप स्फुटम् ]। समीपे प्रतिशब्दं यथाश्रुतमुच्चारणादेव-मुत्प्रेक्ष्यते, अत एव स्फुटमिति व्यञ्जकप्रयोगः ॥ ५५ ॥

छन्नेष्विति।—[ यत्र ] पुरि [ छन्नेषु ] आच्छादितेषु। "वा दान्त—" ( ७।२।२७ पा० ) इत्यादिना वैकल्पिको निपातः। [ स्पष्ट-तरेषु ] स्फुटतरं लक्ष्यमाणेष्वित्यर्थः। [ नारीकुचमण्डलेषु, स्वच्छानि ] स्फटिकादिवदतिरोधायकानि [अम्बराणि] वस्त्राणि [केवलं नामतोऽपि] अम्बरमिति नाम्नैव [ आकाशसाम्यं न दधुः ]। 'अम्बरं व्योम्नि वाससि' इति विश्वः। किन्तु [ अर्थतोऽपि ] अर्थक्रिययाऽपि तत्साम्यं दधुः, स्वयमतिसूक्ष्मत्वादव्यवधायकत्वं दृष्ट्यादेर्मूर्त्तान्तरङ्गत्वविघातित्वं चेत्या-दिनापि साम्यं दधुरित्यर्थः। उपमाऽलङ्कारः ॥ ५६ ॥

यस्यामिति।—[ यस्यां ] पुरि [अजिह्माः] अवक्राः, अन्यत्र,—अक-पटाः, दम्भादिरहिता इत्यर्थः। 'आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा' इति स्मरणादिति भावः। 'जिह्मः कपटवक्रयोः' इति विश्वः। [ अपङ्काः ] कर्दमरहिताः, निष्पापाश्च। 'पङ्कोऽघे कर्दमे' इति हैमः। [ महतीं सीमानं ] राजकल्पितच्चैत्रमानमर्यादां, कुला-

जनैरजातस्खलनैर्न जातु
द्वयेऽप्यमुच्यन्त विनीतमार्गाः ॥ ५७ ॥
परस्परस्पर्द्धिपरार्द्ध्यरूपाः
पौरस्त्रियो यत्र विधाय वेधाः ।
श्रीनिर्मितिप्राप्तघुणक्षतैक-
वर्णोपमावाच्यमलं ममार्ज ॥ ५८ ॥

---

गतानुष्ठानस्थितिश्च [ अत्यजन्तः ] अत्यक्तमहामर्य्यादा इत्यर्थः । अतिमात्रा आयतिरायामः उत्तरकालश्च येषां ते [ अत्यायतयः ] । 'आयतिस्तूत्तरे काले संयमायामयोरपि' इति विश्वः । [ द्वये ] द्विरूपा [ अपि ] । "प्रथमचरमतय—" ( १।१।३३ पा० ) इत्यादिना जसि विभाषया सर्वनामसंज्ञा । [ विनीतमार्गाः ] सुरचितपुरवीथयः, सुशिक्षिताचारपद्धतयश्च [ अजातस्खलनैः ] न जातं स्खलनं पाषाणादिप्रतिघातो, विरुद्धाचरणञ्च येषां तैः [ जनैः, जातु ] कदाचिदपि [ नामुच्यन्त ] न त्यक्ताः, न कदाचित् खिलीकृता इत्यर्थः । अत्र मार्गशब्दस्य साधर्म्यादिकवृन्तावलम्बिफलद्वयवदेकशब्देनार्थद्वयप्रतीतेः, द्वयानामपि मार्गाणां प्रकृतत्वाच्च केवलप्रकृतविषयोऽर्थश्लेषः, विशेष्यस्यापि श्लिष्टत्वान्न तुल्ययोगिता ॥ ५७ ॥

परस्परेति ।—[ यत्र ] पुरि [ परस्परस्पर्द्धिपरार्द्ध्यरूपाः ] परस्परस्पर्द्धीनि अहमहमिकया अन्योऽन्यसामर्षाणि परार्द्ध्यानि श्रेष्ठानि रूपाणि सौन्दर्य्याणि यासां ताः । 'रूपं स्वरूपे सौन्दर्य्ये' इति विश्वः । पुरे भवाः पौराः ताः स्त्रियः [ पौरस्त्रियः ] । "स्त्रियाः पुंवत्—" (६।३।३४ पा० ) इत्यादिना पुंवद्भावः । [ विधाय ] निर्माय [ वेधाः ] स्रष्टा [श्रीनिर्म्मितिप्राप्तघुणक्षतैकवर्णोपमावाच्यं] श्रियो लक्ष्मीदेव्याः निर्मित्या निर्माणेन प्राप्तं यत् घुणेन वज्रकीटेन क्षतस्योत्कीर्णस्यैकवर्णस्य उपमया साम्येन वाच्यमपवादः तत् [ अलम् ] अत्यन्तम् । तदेव

क्षुण्णं यदन्तःकरणेन वृक्षाः
फलन्ति कल्पोपपदास्तदेव ।
अध्यूषुषो यामभवन् जनस्य
याः सम्पदस्ता मनसोऽप्यगम्याः ॥ ५८ ॥
कला दधानः सकलाः स्वभाभि-
रुद्भासयन्सौधसिताभिराशाः ।

---

सलमिति केचित् । [ममार्ज] घुणाक्षरवत् याटच्छिकमिदं श्रीदेवता-सौन्दर्य्यशिल्पं न कौशलमित्यपयशः चालितवानित्यर्थः । अनया चातिशयोक्त्या पौरस्त्रीणां रमासमानसौन्दर्य्यं वस्तु व्यज्यते * ॥ ५८ ॥

क्षुण्णमिति ।—[यदन्तःकरणेन क्षुण्णम्] अभ्यस्तं, ममेदं भूयादिति भूयो भूयः सङ्कल्पितमित्यर्थः । कल्पयन्ति सङ्कल्पितार्थानिति कल्पाः, कल्पा इत्युपपदं व्यावर्त्तकं येषां ते [कल्पोपपदाः वृक्षाः] कल्पवृक्षाः [तदेव फलन्ति] निष्पादयन्ति । 'फल निष्पत्तौ' इति धातोर्लट् । कुतः ? [यां] पुरम् [अध्यूषुषः] यस्यामुषितवतः । "उपान्वध्याङ्वसः" (१।४।४८ पा०) इति कर्मत्वम्, "भाषायां सदवसश्रुवः" (३।२।१०८ पा०) इति क्वसुप्रत्ययः । [जनस्य याः सम्पदोऽभवन् ताः, मनसोऽप्यगम्याः] वाचामभूमय इति किमु वक्तव्यमिति भावः । गृहे गृहे कल्प-वृक्षसम्बन्धातिशयोक्त्या पौराणां देवेन्द्रभोगो व्यज्यते । इह कल्प इत्युप-पदं स्वसंज्ञैकदेशो येषामिति व्याख्याने, हिरण्यपूर्वं कशिपुमित्यादि-वदवाच्यवचनदोषावकाशः ॥ ५८ ॥

कला इति ।—[सकलाः] समग्राः [कलाः] चतुःषष्टिविद्याः षोडश-भागांश्च [दधानः] । 'कला शिल्पे कालभेदे' इति 'कला तु षोडशो भागः' इति चामरः । [सौधसिताभिः] सुधया अवलिप्तं सौधं तद्वत्सिताभिः [स्वभाभिः, आशाः] दिशः [उद्भासयन्] रैवतो ककुद्मिकन्या

---

* इत्यलङ्कारेण वस्तुध्वनिः ।

यां रेवतीजानिरियेष हातुं
न रौहिणेयो न च रोहिणीशः ॥ ६० ॥
बाणाहवव्याहतशम्भुशक्ते-
रासत्तिमासाद्य जनार्दनस्य।
शरीरिणा जैत्रशरेण यत्र
निःशङ्कमूषे मकरध्वजेन ॥ ६१ ॥

---

पूषकं भञ्च जाया यस्य सः [ रेवतीजानिः ]। "जायाया निङ्" (५।४।१३४ पा०) इति समासान्तो निङादेशः, "लोपो व्योर्वलि" (६।१।६६ पा०) इति यलोपः। रोहिण्या अपत्यं पुमान् [ रौहिणेयः ] बलभद्रः। "स्त्रीभ्यो ढक्" (४।१।१२० पा०)। [ यां ] पुरीं [ हातुं ] त्यक्तुं [ न इयेष ] नेच्छति स्म। लिट्। [ रोहिणीशश्च ] चन्द्रश्च हातुं [न] इयेष। अत्र रौहिणेयरोहिणीशयोः परोत्कर्षावहत्वेन द्वयोः प्रकृतत्वाद्विशेष्यस्याश्लिष्टत्वाच्च केवलप्रकृतविषया तुल्ययोगिता। गतमन्यत् * ॥ ६० ॥

बाणेति।—[ यत्र ] पुरि [ बाणाहवव्याहतशम्भुशक्तेः ] बाणाहवे बाणासुरयुद्धे व्याहता क्षयं नीता शम्भुशक्तिर्येन तस्य हरविजयिनः [ जनार्दनस्य ] कृष्णस्य [ आसत्तिं ] प्रत्यासत्तिम् [ आसाद्य ] पुत्रत्वं प्राप्येत्यर्थः। [ शरीरिणा ] विग्रहवता, न त्वनङ्गेनेति भावः। [ जैत्रशरेण ] जेतार एव जैत्राः जयशीलाः। तृन्नन्तात्प्रज्ञादित्वादण्-

* अत्र केचित् एवमपि समासोक्त्यलङ्कारध्वनिमूलं व्याख्यानयन्ति,—"रेवतीजानिः रोहिणीशः इति पदद्वयेन चन्द्रमसः रेवती-रोहिणीप्रियत्वं, तथाऽपि "यां" स्त्रीलिङ्गोद्दात् कामिनीं हातुम् अनिच्छा वर्त्तते, ततोऽपि प्रियत्वम् इति सूच्यते। रौहिणेयो बुधः, सोऽपि यां त्यक्तुं नेच्छति। एतेन यथा एकस्यामेव नायिकायां पुरुषद्वयस्य आसक्तौ परस्परं वैरिता जायते नाम तस्या इति किमपि अलौकिकं सौन्दर्य्यमस्याः पुर्य्याः इति ध्वन्यते ; किञ्च, पितापुत्रयोः एकस्यामासक्तिश्च श्लेषविषया एव।

निषेव्यमाणेन शिवैर्मरुद्भि-
रध्यास्यमाना हरिणा चिराय ।
उद्रश्मिरत्नाङ्कुरधाम्नि सिन्धा-
वाह्वास्त मेरावमरावतीं या ॥ ६२ ॥

---

प्रत्ययः । ते शरा यस्य तेन [ मकरध्वजेन ] कामेन, प्रद्युम्नरूपेणेति भावः [ निःशङ्कं ] निर्भीकम् [ ऊषे ] उषितम् । 'वस निवासे' इति धातोर्भावे लिट् "वचिस्वपि—" (६।१।१५ पा०) इत्यादिना सम्प्रसारणम् । 'शङ्का वितर्कभययोः' इति विश्वः । अत्र शम्भुशक्तिव्याघातपदार्थस्य विशेषणगत्या निःशङ्कनिवासहेतुत्वोक्तेः काव्यलिङ्गभेदः । पुरा किल भगवान् भक्तवत्सलो धूर्जटिर्बाणप्रेम्णा बाणाभियोधिनं हरिमभियुज्य निर्जित इति पौराणिकाः कथयन्ति ॥ ६१ ॥

निषेव्यमाणेनेति :—[ शिवैर्मरुद्भिः ] मन्दमारुतैः, अन्यत्र,—शिवैः रुद्रैर्मरुद्भिर्मरुद्गणैश्च [ चिराय निषेव्यमाणेन, हरिणा ] श्रीकृष्णेन शक्रेण च [ अध्यास्यमाना ] अधिष्ठीयमाना [ उद्रश्मिरत्नाङ्कुरधाम्नि ] उद्रश्मीनां रत्नाङ्कुराणां धाम्नि स्थाने ; एकत्र रत्नाकरत्वात् अन्यत्र,—रत्नसानुत्वाच्चेति भावः । [सिन्धौ] स्थितेति शेषः [ या ] पूः [ मेरौ ] स्थिताम् अमरा यस्यां सन्तीति [ अमरावतीम् ] इन्द्रनगरीम् । 'मतौ बह्वचोऽनजिरा—" ( ६।३।११९ पा० ) इति दीर्घः । संज्ञायां "मादुपधायाश्च—" ( ८।२।९ पा० ) इति वत्वम् । [ आह्वास्त ] स्पर्द्धया आहूतवती, अमरावतीमनुचकारेत्यर्थः । ह्वयतेर्लुङ् "स्पर्द्धायामाङः" ( १।३।३१ पा० ) इत्यात्मनेपदम्, "लिपि सिचि ह्वश्च" (३।१।५३ पा०) इति, "आत्मनेपदेष्वन्यतरस्याम्" ( ३।१।५४ पा० ) इति च्लेरङभावपक्षे सिजादेशः । अत्र प्रथमार्द्धे श्लेषेऽपि सिन्धौ मेरौ स्थितेति प्रतिबिम्बभावेन साधर्म्योक्तेः श्लेषानुप्राणितेयमुपमेति सङ्क्षेपः । आह्वास्तेति सादृश्यप्रतिपादकः शब्दः । 'स्पर्द्धते ह्वयते द्वेष्टि' इत्यनुशासनात् ॥ ६२ ॥

स्निग्धाञ्जनश्यामरुचिः सुवृत्तो
वध्वा इवाध्वंसितवर्णकान्तेः।
विशेषको वा विशिशेष यस्याः
श्रियं त्रिलोकीतिलकः स एव ॥ ६३ ॥
तामीक्षमाणः स पुरं पुरस्तात्
प्रापत्प्रतोलीमतुलप्रतापः।

---

स्निग्धेति।—[ स्निग्धाञ्जनश्यामरुचिः ] स्निग्धं यदञ्जनं तद्वत्तेन च श्यामरुचिः [ सुवृत्तः ] सद्वृत्तिः सुष्ठु वर्त्तुलश्च, [ त्रिलोकीतिलकः ] त्रयाणां लोकानां समाहारस्त्रिलोकी, "तद्धितार्थ—" ( २।१।५१ पा० ) इत्यादिना समासः, "सङ्ख्यापूर्वो द्विगुः" (२।१।५२ पा०) इति द्विगुसंज्ञा, 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यते' (वा०) इति स्त्रीत्वे, "द्विगोः" ( ४।१।२१ पा० ) इति ङीप्। तस्यास्तिलको भूषणभूतः [ सः एव ] हरिः एव, [ विशेषको वा ] तिलक इवेत्यर्थः। "इववद्वा यथाशब्दाः" इत्यनुशासनात्। 'तमालपत्रतिलकचित्रकाणि विशेषकम्। द्वितीयञ्च तुरीयञ्च न स्त्रियाम्' इत्यमरः। [ अध्वंसितवर्णकान्तेः ] अध्वंसिता वर्णानां ब्राह्मणादीनां कान्तिरौज्ज्वल्यं यस्याः तस्याः, [ यस्याः ] पुरः, अन्यत्राध्वंसितौ वर्णौ गौरादिः कान्तिर्लावण्यञ्च यस्यास्तस्याः। 'वर्णौ द्विजादौ शुक्लादौ' इत्युभयत्राप्यमरः। [वध्वा इव श्रियं, विशिशेष] विशेषितवान्। अनेकशब्देयमुपमेत्येके, शब्दमात्रसादृश्यात् श्लेष इत्यन्ये। श्लेषोपमेत्याह दण्डी ॥ ६३ ॥

तामिति।—[ अतुलप्रतापः * सः ] हरिः [ तां ] पूर्वोक्तां [ पुरम्, ईक्षमाणः, † पुरस्तात् ] पूर्वस्यां दिशि। सप्तम्यर्थे तसिल् प्रत्ययः।

---

* अनुपमप्रभावः।

† पश्यन्।

वज्रप्रभोद्भासिसुरायुधश्री-
र्या देवसेनेव परैरलङ्घ्या ॥ ६४ ॥
प्रजा इवाङ्गादरविन्दनाभेः
शम्भोर्जटाजूटतटादिवापः ।
मुखादिवाथ श्रुतयो विधातुः
पुरान्निरीयुर्मुरजिद्ध्वजिन्यः ॥ ६५ ॥
श्लिष्यद्भिरन्योऽन्यमुखाग्रसङ्ग-
स्खलत्खलीनं हरिभिर्विलोलैः ।

---

[ प्रतोलीं ] रथ्याम् । 'रथ्या प्रतोली विशिखा' इत्यमरः । [ प्रापत् ] प्राप्तवान् । लुङि "पुषादि—" ( ३।१।५५ पा० ) इत्यादिना च्लेरङा-देशः । [ वज्रप्रभोद्भासिसुरायुधश्रीः ] वज्राणां तोरणप्रासादादिगत-हीरकादिमणीनां प्रभाभिरुद्भासिनी सुरायुधश्रीरिन्द्रचापलक्ष्मीर्यस्यां सा । इह वज्रग्रहणं मणिमालोपलक्षणम्, अन्यथेन्द्रायुधासाम्यादिति भावः । अन्यत्र,—वज्रस्य कुलिशस्य प्रभाभिरुद्भासिनी सुरायुधानामित-रदेवतायुधानां श्रीर्यस्याः सा । 'वज्रोऽस्त्री हीरके पवौ' इत्यमरः । [ या ] प्रतोली [ देवसेनेव ] सुरचमूरिव [ परैः ] शत्रुभिः [ अलङ्घ्या ] दुष्प्रधर्षा * ॥ ६४ ॥

प्रजा इति ।—[ अथ, अरविन्दनाभेः ] विष्णोः [अङ्गात् प्रजा इव] । 'यतो वा इमानि भूतानि जायन्ते' ( तैत्ति० उप० ३वल्ली० १अनु० )इति श्रुतेरिति भावः । [ शम्भोर्जटाजूटतटात्, आप इव ] गङ्गाजलानीव [ विधातुर्मुखात् श्रुतय इव, मुरजिद्ध्वजिन्यः ] मुरजितो हरेः ध्वजिन्यः सेनाः [ पुरात्, निरीयुः ] निर्गताः । मालोपमेयम् ॥ ६५ ॥

श्लिष्यद्भिरिति ।—[ अन्योऽन्यमुखाग्रसङ्गस्खलत्खलीनं ] अन्योऽन्येषां

---

* श्लेषोपमयोः सङ्करः ।

परस्परोत्पीड़ितजानुभागा
दुःखेन निश्चक्रमुरश्ववाराः ॥ ६६ ॥
निरन्तरालेऽपि विमुच्यमाने
दूरं पथि प्राणभृतां गणेन ।
तेजोमहद्भिस्तमसेव दीपै
र्द्विपैरसम्बाधमयाम्बभूवे ॥ ६७ ॥

---

मुखाग्रेषु सङ्गेन स्खलन्तः खलीनाः कविका यस्मिन् कर्मणि तद्यथा तथा। 'कविका तु खलीनोऽस्त्री' इत्यमरः। [ श्लिष्यद्भिः ] संघृष्यद्भिः [ विलोलैः ] मुहुरुच्चलद्भिः [ हरिभिः ] तुरङ्गैः करणैः। अश्वान् वारयन्ति ये ते [ अश्ववाराः ] अश्वारोहाः [ परस्परोत्पीड़ितजानुभागाः ] परस्परेणोत्पीड़ितजानुभागाः सन्तः [ दुःखेन, निश्चक्रमुः ] निर्जग्मुः। अत्र स्वभावोक्त्याऽतिशयोक्तिः सङ्करः ॥ ६६ ॥

निरन्तराल इति।—[ तमसेव ] तिमिरेणेव, [ प्राणभृतां गणेन ] प्राणिवर्गेण कर्त्रा। [ निरन्तरालेऽपि ] पूर्वं स्वेनैवातिसङ्कटेऽपि [पथि] सम्प्रति [ दूरं ] दूरत एव [ विमुच्यमाने ] सति। एकत्र,—दीपभयात्, अन्यत्र,—द्विपभयाच्चेत्यर्थः। [ तेजोमहद्भिः ] बलाधिकैः प्रभासम्पन्नैश्च। 'तेजो बलं प्रभा तेजः' इति विश्वः। [ द्विपैर्दीपैः ] इव [असम्बाधम्] असङ्कीर्णम् [ अयाम्बभूवे ] जग्मे, न त्वश्वैरिव कृच्छ्रादिति भावः। 'अय गतौ' भावे लिट् "दयायासश्च" ( ३।१।३७ पा० ) इत्याम्प्रत्ययः। स्वतेजसेव दूरोत्सारिततमस्के दीपा इव तथोत्सारितप्राणिके पथि निरर्गलं द्विपाः प्रययुरित्यर्थः। तमसीति सप्तम्यन्तपाठे तु,—तमसः पथ्युपमानत्वे द्विपागमनात्पथ इव तमसो दीपागमनात् प्राक्तनप्राणिवर्गेण निरन्तरालत्वं पश्चात् मुच्यमानत्वञ्च न सम्भवतीत्युपमानोपमेययोर्वैरूप्यं स्यात्। तृतीयान्तपाठे,—तमसः प्राणिवर्गोपमानत्वे तत्सारूप्यसाकल्यात् स एव साधीयानित्यालङ्कारिकाणां पन्थाः ॥ ६७ ॥

शनैरनीयन्त रयात्पतन्तो
रथाः क्षितिं हस्तिनखादखेदैः ।
सयत्नसूतायतरश्मिभुग्न-
ग्रीवाऽग्रसंसक्तयुगैस्तुरङ्गैः ॥ ६८ ॥

बलोर्मिभिस्तत्क्षणहीयमान-
रथ्याभुजाया वलयैरिवास्याः ।
प्रायेण निष्क्रामति चक्रपाणौ
नेष्टं पुरो द्वारवतीत्वमासीत् ॥ ६९ ॥

---

शनैरिति ।—[ रयात्पतन्तः ] धावन्तः [ रथाः, सयत्नसूतायतरश्मिभुग्नग्रीवाऽग्रसंसक्तयुगैः ] सयत्नैः सूतैः सारथिभिः । 'सूतः क्षत्ता च सारथिः' इत्यमरः । आयता आकृष्टा ये रश्मयः प्रग्रहाः । 'किरणप्रग्रहौ रश्मी' इत्यमरः । तैर्भुग्नेषु प्रह्वेषु ग्रीवाणामग्रेषु संसक्ताः युगाः युग्याः स्कन्धवाह्याः दारुविशेषाः येषां तैः, अत एव [ अखेदैः ] अश्रमैः [ तुरङ्गैः, हस्तिनखात् ] हस्तिनखः पूर्द्वारि मृत्कूटः । 'कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्' इत्यमरः । तस्मात् [ शनैः क्षितिम्, अनीयन्त ] नीता इति स्वभावोक्तिः, यथावद्वस्तुवर्णनात् ॥ ६८ ॥

बलोर्मिभिरिति ।—बलानि ऊर्मय इव तैः [बलोर्मिभिः, वलयैरिव] कङ्कणैरिव [ तत्क्षणहीयमानरथ्याभुजायाः ] तत्क्षणे हरिनिष्क्रमणक्षण एव हीयमाना अपरिच्छिमाना रथ्या भुजेव यस्याः तस्याः अत एव [ अस्याः पुरः ] द्वारवत्याः [ चक्रपाणौ ] कृष्णे [ निष्क्रामति ] निर्गच्छति सति [ प्रायेण ] भूम्ना [ द्वारवतीत्वं ] द्वारकात्वं, स्वस्वरूपमिति यावत् । [ इष्टं नासीत् ] हरिविरहे तद्वैफल्यादिति भावः । द्वारवतीशब्दस्य संज्ञात्वात् "त्वतलोर्गुणवचनस्य" ( वा० ) * इति न पुंवद्भावः ।

---

* ६।३।३५ सूत्रस्थस्य मतस्य भाष्य कौ व्याख्यापि अयमेव पाठः, काशिकायान्तु "त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्य" इति पाठः ।

पारेजलं नीरनिधेरपश्यत्
मुरारिरानीलपलाशराशीः ।
वनावलीरुत्कलिकासहस्र-
प्रतिक्षणोत्कूलितशैवलाभाः ॥ ७० ॥
लक्ष्मीभृतोऽम्भोधितटाधिवासान्
द्रुमानसौ नीरदनीलभासः ।

---

अन्यत्र,—द्वारवतीत्वं द्वारवत्त्वं नेष्टं, तस्य हरिनिष्क्रमणहेतुत्वात्; इत्युभयथाऽप्युपमितभुजवलयगलनहेतुत्वादुपमासङ्कीर्णेयमनिष्टत्वोत्प्रेक्षा प्रायेणेत्यनेन व्यज्यते ॥ ६९ ॥

अथ आ सर्गसमाप्तेः समुद्रं वर्णयति, पार इति ।—[ मुरारिः, नीरनिधेः ] समुद्रस्य, जलानां पारे परतीरे [ पारेजलम् ]। 'पारावारे परार्वाची तीरे' इत्यमरः । "पारे मध्ये षष्ठ्या वा" ( २।१।१८ पा० ) इत्यव्ययीभावः, तत्संयोगादेकारान्तत्वञ्च पारेशब्दस्य । [ आनीलपलाशराशीः ] आ समन्तान्नीलाः, पलाशानां पत्त्राणां राशयो यासां ताः, हरितपर्णपूर्णा इत्यर्थः । "पत्त्रं पलाशं छदनम्" इत्यमरः । अत एव [ उत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः ] उत्कलिका ऊर्मयः । 'ऊर्मिरुत्कलिकोल्लोलकल्लोला लहरिस्तथा' इति हलायुधः । तासां सहस्रैः, प्रतिक्षणमुत्कूलिताः कूलमुन्नताः कृताः, कूलं प्रापिता इत्यर्थः । उत्कूलशब्दात् "तत्करोति—"(ग०) इति ण्यन्तात्कर्मणि क्तः । तेषां शैवलानाम्, आभेव आभा यासां ताः, तत्सदृशीरित्यर्थः । [ वनावलीरपश्यत् ] । अत्रोत्कूलितशैवलस्य स्वतःसिद्धसन्देहादुपमोत्प्रेक्षयोः सन्देहसङ्करः * ॥ ७० ॥

लक्ष्मीभृत इति ।—[ असौ ] हरिर्लक्ष्मीं शोभां श्रीदेवीञ्च बिभ्र-

---

* उपक्रान्ताभाशब्दस्य उपमावाचकत्वे, तीरे शैवलसम्भावनोत्थानत्वात् उपमोपक्रमोत्प्रेक्षा इयम, इति तु साहित्यदर्पणकृता स्वग्रन्थे उदाहृत्याभिहितम् ।

लतावधूसम्प्रयुजोऽधिवेलं
बहूकृतान् स्वानिव पश्यति स्म ॥ ७१ ॥
आश्लिष्टभूमिं रसितारमुच्चै-
र्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगाना-
मसावपस्मारिणमाशशङ्के ॥ ७२ ॥

तीति [ लक्ष्मीभृतः ] तान् [ अम्भोधितटाधिवासान् ] अम्भोधितटे अधिवासो येषां तान्, [नीरदनीलभासः] नीरदवन्नीलभासः नीलवर्णान् [ लतावधूसम्प्रयुजः ] लता वध्व इवेत्युपमितसमासः ; अन्यत्र,—लता इव वध्व इति शाकपार्थिवादित्वान्मध्यमपदलोपी समासः। ताभिः सम्प्रयुज्यन्त इति सम्प्रयुजः सङ्गतान्। क्विप्। [ अधिवेलं ] वेलायाम्। विभक्त्यर्थेऽव्ययीभावः। [ द्रुमान्, बहूकृतान् ] अनेकीकृतान् [ स्वानिव ] स्वकीयविग्रहानिवेत्यर्थः। एवञ्च पुंलिङ्गतानिर्वाहः। आत्मपरत्वे नपुंसकत्वापातः। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः। [ पश्यति स्म ]। उपमाश्लेषसङ्कीर्णेयमुत्प्रेक्षा ॥७१॥

आश्लिष्टेति।—[ आश्लिष्टभूमिम् ] आलिङ्गितभूतलं [ उच्चैः ] तारं [ रसितारं ] क्रन्दितारं [ लोलद्भुजाकारबृहत्तरङ्गम् ] लोलतां चलताम्, इतस्ततः पततामित्यर्थः, भुजानाम् आकार इव आकारो येषां ते बृहत्तरङ्गाः यस्य तं तथोक्तं, [ फेनायमानं ] फेनमुद्वमन्तम्। "फेनाच्चेति वक्तव्यम्" (वा०) * इति क्यङ्। [आपगानाम्] अपां समूह आपं "तस्य समूहः" (४।२।३७ पा०) इत्यण्, तेन गच्छन्तीति आपगाः तासां [ पतिं ] समुद्रम् [ असौ ] हरिः [ अपस्मारिणम् ] अपस्माररोगि-

* "बाष्पोष्मभ्यामुद्वमने" (३।१।१६) इति सूत्रे—भाष्ये "फेनाच्च"—"फेनाच्चेति वक्तव्यम्" इत्यस्ति। तस्मात् "फेनाच्चेति वक्तव्यम्" इति काशिका। भट्टोजिदीक्षितस्तु "फेनाच्चेति वाच्यम्" इति लिखितवान्।

पीत्वा जलानां निधिनाऽतिगार्द्ध्याद्
वृद्धिङ्गतेऽप्यात्मनि नैव मान्तीः ।
क्षिप्ता इवेन्दोः स रुचोऽधिवेलं
मुक्तावलीराकलयाञ्चकार ॥ ७३ ॥

साटोपमुर्वीमनिशं नदन्तो
यैः प्लावयिष्यन्ति समन्ततोऽमी ।

---

क्षम् [ आप्रपञ्चे ]। तत्कर्मयोगात्तथोत्प्रेक्षाञ्चक्रे इत्यर्थः। यथाहु-र्नैदानिकाः,—"क्रुद्धैर्धातुभिराहतेऽथ मनसि प्राणी मनः सन्दिशन्, दन्तान् खादति फेनमुद्गिरति दोःपादौ क्षिपन्मूढधीः। पश्यन् रूपमसत् क्षितौ निपतति व्यर्थां करोति क्रियां, बिभ्यत् स स्वयमेव शाम्यति गते वेगे त्वपस्माररुक् ॥" इति * ॥ ७२ ॥

पीत्वेति ।—[ जलानां निधिना ] समुद्रेण [ अतिगार्द्ध्यात् ] गर्द्ध एव गार्द्ध्यम्। औपम्यादिवच्चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। तदति-मात्रमतिगार्द्ध्यं तस्मात्, तृष्णाभरादित्यर्थः। गृधेः पुनरौगुणः "वान्तो यि प्रत्यये" ( ६।१।७९ पा० ) इति गार्धव्यमिति स्यात्। [ पीत्वा ]। क्षेपणक्रियाऽपेक्षया पूर्वकालता। अथ [ वृद्धिं गतेऽपि, आत्मनि ] देहे। "चन्द्रोदये समुद्रस्य वृद्धिः" इत्यागमः। [ नैव मान्तीः ] अमान्तीः, अति-रिच्यमाना इत्यर्थः। मातेः शतरि ङीप्। "आच्छीनद्योर्नुम्" ( ७।१।८० पा० ) इति नुम्। [ क्षिप्ताः ] उद्गीर्णाः अतितृष्णयोत्कटं पीत्वा, अन्तर-मानाद्बहिरुद्वान्ता इत्यर्थः। [ इन्दो रुचः इव ] मरीचीरिवेत्युत्प्रेक्षा [ सः ] हरिः [ अधिवेलम् ] अधितीरं, 'वेला कूलविकारयोः' इति विश्वः। [ मुक्तावलीः, आकलयाञ्चकार ] आकलयामास। कलतिः कामधेनुः ॥ ७३ ॥

साटोपमिति ।—[ अमी ] मेघाः, [ साटोपं ] ससम्भ्रमं, 'सम्भ्रमाटोप-

---

* उत्प्रेक्षाऽलङ्कारः। व्यभिचारिणोऽपस्मारस्य स्वशब्दवाच्यत्वाद्रसदोषोऽपि।

तान्येकदेशान्निभृतं पयोधेः
सोऽम्भांसि मेघान् पिबतो ददर्श ॥ ७४ ॥

उद्धृत्य मेघैस्तत एव तोय-
मर्थं मुनीन्द्रैरिव सम्प्रणीताः ।
आलोकयामास हरिः पतन्ती-
र्नदीः स्मृतीर्वेदमिवाम्बुराशिम् ॥ ७५ ॥

विक्रीय दिश्यानि धनान्युरूणि
द्वैप्यानसावुत्तमलाभभाजः ।

---

संरम्भाः' इति यादवः । [ अनिशं, नदन्तः ] गर्जन्तः [ यैः ] अम्भोभिः, तोयैरित्यर्थः, [ उर्वीं समन्ततः प्लावयिष्यन्ति, तानि अम्भांसि पयोधेः, एकदेशात् ] एककोणात् [ निभृतं ] निश्चलं यथा तथा [ पिबतो मेघान्, सः ] हरिः [ ददर्श ] । एतेन समुद्रस्यापरिच्छिन्नरूपत्वं व्यज्यते * ॥७४॥

उद्धृत्येति ।—[ मुनीन्द्रैः, ततः ] वेदात् [ अर्थमिव ] वेदार्थमिव [ मेघैः ] ततः [ एव ] अम्बुराशेरेव [ तोयमुद्धृत्य, सम्प्रणीताः ] कृताः [ अम्बुराशिं, पतन्तीः ] प्रविशन्तीः [ नदीः, वेदं ] पतन्तीः [ स्मृतीरिव ] मन्वादिसंहिता इव [हरिरालोकयामास] । श्रुतिमूलत्वेनैव प्रामाण्यात् स्मृतीनाम् । तत्संवाद एव तत्सम्प्रवेशः । अनेकैवेयमुपमा ॥ ७५ ॥

विक्रीयेति ।—दिक्षु भवानि [ दिश्यानि ] दिगन्तरानीतानीत्यर्थः । "दिगादिभ्यो यत्" ( ४।३।५४ पा० ) इति यत् । [उरूणि] महान्ति [ धनानि ] नानाद्रव्याणि [ विक्रीय ] मूल्येन दत्त्वा, उत्तमलाभं द्वैगुण्यादिकं भजन्तीति तान् [ उत्तमलाभभाजः, तत्रत्यं ] द्वैप्यमित्यर्थः । "अव्ययात्त्यप्" ( ४।२।१०४ पा० ) इति त्यप् । [ अफल्गु-

---

* इति वस्तुना वस्तुध्वनिः ।

तरीषु तत्रत्यमफल्गुभाण्डं
सांयात्रिकानावपतोऽभ्यनन्दत् ॥ ७६ ॥
उत्पित्सवोऽन्तर्नदभर्तुरुच्चै-
र्गरीयसा निश्वसितानिलेन।
पयांसि भक्त्या गरुड़ध्वजस्य
ध्वजानिवोच्चिच्चिपिरे फणीन्द्राः ॥ ७७ ॥
तमागतं वीक्ष्य युगान्तबन्धु-
मुत्सङ्गशय्याशयमम्बुराशिः।

---

भाण्डम् ] अफल्गु सारवत्। 'फल्गु तुच्छमसारञ्च' इति यादवः। भाण्डं मूलधनं पण्यद्रव्यमित्यर्थः। 'वणिङ्मूलधने पात्रे भाण्डं भूषाऽश्वभूषयोः' इति वैजयन्ती। [ तरीषु ] नौषु। 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः। "अवितॄस्तृतन्त्रिभ्य ईः" ( उ० ३ पा० १५८ सू० ) इत्यौणादिक ईकार-प्रत्ययः। [आवपतः] आदधतः। वपतेः शतृप्रत्ययः। [द्वैप्यान्] समुद्रद्वीप-वासिनः। "द्वीपादनुसमुद्रं यञ्" ( ४।३।१० पा० ) इति यञ्प्रत्ययः। संयात्रा सम्भूय यात्रा सा प्रयोजनमेषां तान् [ सांयात्रिकान् ] पोतवणिजः। 'सांयात्रिकः पोतवणिक्' इत्यमरः। "प्रयोजनम्" ( ५।१।१०९ पा० ) इति ठक्। [असौ] हरिः [ अभ्यनन्दत् ] * ॥ ७६ ॥

उत्पित्सव इति।—[ नदभर्तुः ] समुद्रस्य [ अन्तः ] अभ्यन्तरात् [ उत्पित्सवः ] उत्पतितुमिच्छवः। पततेः सनन्तादुप्रत्ययः, "सनि मीमा—"(७।४।५४ पा०) इत्यादिना इसादेशः। "अत्र लोपोऽभ्यासस्य" ( ७।४।५८ पा० ) इति अभ्यासलोपः। [ फणीन्द्राः ] सर्पाः [ भक्त्या, गरुड़ध्वजस्य ] हरेः [ ध्वजानिव, गरीयसा ] अतिमहता [ निश्वसितानिलेन ] मुखमारुतेन [ पयांस्युच्चैः, उच्चिक्षिपिरे ] उत्क्षिप्तवन्तः। उत्प्रेक्षा। स्वरितेत्त्वादात्मनेपदम् ॥ ७७ ॥

---

* प्रीत्या प्राशंसत्।

प्रत्युज्जगामेव गुरुप्रमोद-
प्रसारितोत्तुङ्गतरङ्गबाहुः ॥ ७८ ॥

उत्सङ्गिताम्भःकणको नभस्वा-
नुदन्वतः स्वेदलवान् ममार्ज ।
तस्यानुवेलं व्रजतोऽधिवेल-
मेलालतास्फालनलब्धगन्धः ॥ ७९ ॥

उत्तालतालीवनसम्प्रवृत्त-
समीरसीमन्तितकेतकीकाः ।

---

तमिति।—[अम्बराशिः, युगान्तबन्धुम्] आपद्बन्धुमित्यर्थः। [उत्सङ्गशय्याशयम्] उत्सङ्ग एव शय्या तस्यां शेते, इति तथोक्तम्, "अधिकरणे शेतेः" (३।२।१५ पा०) इत्यच्प्रत्ययः। [आगतम्] अभ्यागतं [तं] हरिं [वीक्ष्य, गुरुप्रमोदप्रसारितोत्तुङ्गतरङ्गबाहुः] गुरुणा प्रमोदेन प्रसारिता उत्तुङ्गास्तरङ्गा एव बाहवो येन सः सन् [प्रत्युज्जगामेव] सम्मेलनार्थमागतवानिवेति क्रियास्वरूपोत्प्रेक्षा, रूपकञ्च ॥ ७८ ॥

उत्सङ्गेति।—[उत्सङ्गिताम्भःकणकः] उत्सङ्गिनः संसर्गिणः कृताः उत्सङ्गिताः। "तत्करोति—"(ग०) इति ण्यन्तात् कर्मणि क्तः। उत्सङ्गिताः अम्भःकणा येनेति "शेषाद्विभाषा" (५।४।१५४ पा०) इति कप्। [एलालतास्फालनलब्धगन्धः] एलालतानाम् आस्फालनेन सङ्घर्षेण लब्धगन्धः एवं शिशिरसुरभिः [उदन्वतो नभस्वान्] समुद्रस्य वायुः अधिवेलं] वेलायाम्। विभक्त्यर्थेऽव्ययीभावः। [व्रजतः, तस्य] हरेः [स्वेदलवान्, अनुवेलं] प्रतिक्षणम्। यथार्थेऽव्ययीभावः। [ममार्ज] जहार। 'वेला कूले च जलधेर्वेला तीरविकारयोः' इति विश्वः। काव्यलिङ्गमलङ्कारः ॥ ७९ ॥

उत्तालेति —[चमूचरैः] चमूषु चरन्तीति चमूचराः सैनिकाः "चरेष्टः" (३।२।१६ पा०) इति टप्रत्ययः, तैः, [उत्तालतालीवन-

आसेदिरे लावणसैन्धवीनां
चमूचरैः कच्छभुवां प्रदेशाः ॥ ८० ॥
लवङ्गमालाकलितावतंसा-
स्ते नारिकेलान्तरपः पिबन्तः।
आस्वादितार्द्रक्रमुकाः समुद्रा-
दभ्यागतस्य प्रतिपत्तिमीयुः ॥ ८१ ॥

---

सम्प्रवृत्तसमीरसीमन्तितकैतकीकाः] उत्तालेषु उन्नतेषु तालीवनेषु सम्प्रवृत्तेन समीरणेन मारुतेन सीमन्तिताः सीमन्तवत्यः कृताः। सीमन्तशब्दान्मत्वन्तात् "तत्करोति—"(ग०) इति ण्यन्तात्कर्म्मणि क्तः, णाविष्ठवद्भावे "विन्मतोर्लुक्" (५।३।६५ पा०)। ताः कैतक्यो येषु ते तथोक्ताः। "नद्यृतश्च" (५।४।१५३ पा०) इति कप्। [लावणसैन्धवीनां] लवणसिन्धोरिमाः लावणसैन्धव्यः। "तस्येदम्" (४।३।१२० पा०) इत्यण्, "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" (७।३।१९ पा०) इत्युभयपदवृद्धिः। तासां [कच्छभुवाम्] अनूपभूमीनाम्। 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः' इत्यमरः। [प्रदेशाः] देशाः [आसेदिरे] प्राप्ताः। सीदतेः कर्म्मणि लिट्। अत्र स्वभावोक्तिरनुप्रासश्चालङ्कारौ। ओजःश्लेषसौशब्दसौकुमार्य्याद्यनेकगुणसम्पत्तिः स्पष्टा ॥ ८० ॥

लवङ्गेति।—[लवङ्गमालाकलितावतंसाः] लवङ्गमालाभिः लवङ्गकुसुममाल्यैः कलितावतंसाः कृतभूषणाः। [नारिकेलान्तः] नारिकेलान्तरित्यव्ययम्। नारिकेलाभ्यन्तर इत्यर्थः। [अपः] इति पृथक्पदम्। समासे "ऋक्पूरप्—" (५।४।७४ पा०) इत्यादिना समासान्तप्रसङ्गात्। [पिबन्तः, आस्वादितार्द्रक्रमुकाः] आस्वादिताः भक्षिताः आर्द्रक्रमुका आर्द्रपूगीफलानि यैस्ते। 'घोण्टा तु पूगः क्रमुकः' इत्यमरः। [ते] चमूचराः [समुद्रात्, अभ्यागतस्य] अतिथेः [प्रतिपत्तिं] गौरवं, सत्कारमित्यर्थः, [ईयुः]। 'प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च' इति विश्वः। अत्राभ्यागतप्रतिपत्तिप्राप्तेर्विशेषणगत्या अवतंसकलनादि-

तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता ।
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-
श्चिरविगतश्रियो जलनिधेश्च तदाऽभवदन्तरं महत्
॥ ८२ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
पुरीप्रस्थानवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥

---

पदार्थहेतुत्वात्काव्यलिङ्गमलङ्कारः। तेन समुद्रचमूचराणां ग्रहस्था-
भ्यागतौपम्यप्रतीतेरलङ्कारेणालङ्कारध्वनिः ॥ ८१ ॥

तुरगेति।—[परितः, तुरगशताकुलस्य] तुरगशतैराकुलस्य, अपरि-
मिताश्वस्येत्यर्थः। [प्रतिपथं] प्रतिमार्गम्। यथार्थेऽव्ययीभावे
समासान्तः। [प्रमथितभूभृतः] प्रमथिताः क्षुण्णाः भूभृतो राजानो
गिरयश्च येन तस्य, न तु स्वयं केनापि मथितस्येति भावः। [सततं]
धृता श्रीः शोभा रमा च येन तस्य [धृतश्रियः, पुरः] अग्रे नगराद्वा
[परिचलतः] परिगच्छतः [बलानुजबलस्य] बलो रामस्तदनुजस्य
हरेर्बलस्य सैन्यस्य। 'बलं सैन्ये बलो रामे' इत्युभयत्रापि शाश्वतः।
[परं] केवलम्; एकस्यैव तुरङ्गस्य जन्म जन्ममात्रं यस्मात् तस्य [एकतुरङ्ग-
जन्मनः]। एकोऽपि जात एव न तु अस्तीति भावः। [महीभृता]
मन्दराद्रिणा राज्ञा च [मथितस्य] न तु स्वयं कस्यापि मथिता
[भृशं] सततं [चिरविगतश्रियः]। उत्पत्त्यनन्तरमेवास्याः हरिस्वीकरणा-
दिति भावः। [जलनिधेश्च, तदा] प्रस्थानसमये महदन्तरं] दूरगमनादिना
व्यवधानं उक्तरीत्या महत्तारतम्यञ्च [अभवत्]। अत्रोपमेयस्य हरि-
बलस्य उपमानाज्जलधेराधिक्यवर्णनात् व्यतिरेकालङ्कारः। पञ्चकावली
वृत्तम्। 'नजभजजा जरौ नरपते कथिता भुवि पञ्चकावली' इति
लक्षणात्; धृतश्रीवृत्तमिति कश्चित्,—"नभजपुरस्कृता जजजरा
रचिता भुवि रुद्रदिक्पतिः" इति लक्षणात् ॥ ८२ ॥

इति श्रीमद्महोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ।

—*—

निश्वासधूमं सह रत्नभाभि-
र्भित्त्वोत्थितं भूमिमिवोरगाणाम् ।
नीलोपलस्यूतविचित्रधातु-
मसौ गिरिं रैवतकं ददर्श ॥ १ ॥
गुर्वीरजस्रं दृषदः समन्ता-
दुपर्युपर्यम्बुमुचां वितानैः ।

---

निश्वासेति ।—[ नीलोपलस्यूतविचित्रधातुं ] नीलोपलैरिन्द्रनीलमणिभिः स्यूताः प्रोताः विचित्रा नानावर्णाः धातवो गैरिकादयो यस्य तम्, अत एव [ रत्नभाभिः ] मणिप्रभाभिः [ सह, भूमिं भित्त्वा उत्थितम् ] ऊर्ध्वं निर्गतम् [ उरगाणां निश्वासधूममिव ] फूत्कारवाष्पमिव स्थितं [ रैवतकं ] रैवतकाख्यं [ गिरिम्, असौ ] हरिः [ ददर्श ]। स्यूतेति ।—सीव्यतेः कर्मणि क्तः। "च्छ्वोः शूडनुनासिके च" ( ६।४।१९ पा० ) इत्यूडादेशे यणादेशः। अत्र गिरेर्विशिष्टवर्णनीयत्वेन विशिष्टधूमत्वोत्प्रेक्षणाद्गुणनिमित्तजातिस्वरूपोत्प्रेक्षा। सर्गेऽस्मिन्नानावृत्तानि, तत्रादावष्टादशोपजातयः, तल्लक्षणं तूक्तम् अतीतानन्तरसर्गादौ। अत्र आ सर्गसमाप्तेर्गिरिवर्णनमेव ॥ १ ॥

गिरिं ददर्शेत्युक्तम्; कीदृगसौ गिरिः ?—इत्याकाङ्क्षायामेकान्वयेनाष्टाभिर्विशिनष्टि, गुर्वीरिति ।—[गुर्वीः] महतीः [दृषदः] शिलातटीरित्यर्थः। 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः। [ उपर्युपरि ] दृषदां समीपे, उपरिप्रदेशे इत्यर्थः। "उपर्यध्यधसः सामीप्ये" ( ८।१।७ पा० ) इति द्विर्भावे तद्योगात् द्वितीयेति। यथाह

विन्ध्यायमानं दिवसस्य भर्त्तु-
र्मार्गं पुनारोद्धुमिवोन्नमद्भिः ॥ २ ॥
क्रान्तं रुचा काञ्चनवप्रभाजा
नवप्रभाजालभृतां मणीनाम् ।
श्रितं शिलाश्यामलताऽभिरामं
लताभिरामन्त्रितषट्पदाभिः ॥ ३ ॥

वामनः,—"उपर्य्यादिषु सामीप्ये द्विरुक्तेषु द्वितीया" इति ( २ अध्या० ५ अधि० ८६ सू० )। [ समन्तादजस्रमुन्नमद्भिः ] देशकालाविच्छेदेनोत्पतद्भिरित्यर्थः ; अत एव तैः [ अम्बुमुचां वितानैः ] मेघवृन्दैर्निमित्तैः [ दिवसस्य भर्त्तुः ] सूर्य्यस्य [ मार्गं, पुनारोद्धुम् ]। संहितायां "रो रि" ( ८।३।१४ पा० ) इति रलोपः। "ढ्रलोपे—" (६।३।१११ पा०) इति दीर्घः। [ विन्ध्यायमानमिव ] विन्ध्यवदाचरन्तं, तद्वद्वर्द्धमानमिव स्थितमित्यर्थः। आचारे क्यङन्ताल्लटः शानजादेशः। अत्राविच्छिन्नमेघोन्नमनेन विन्ध्यायमानत्वोत्प्रेक्षणात् क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा ॥ २ ॥

क्रान्तमिति।—पुनः [ नवप्रभाजालभृतां ] नवानि प्रभाजालानि बिभ्रतीति नवप्रभाजालभृतः तेषां [ मणीनां ] सम्बन्धिन्या [ काञ्चनवप्रभाजा ] स्वर्णसानुप्रसृतया [ रुचा ] दीप्त्या [ क्रान्तं ] व्याप्तं। पुनः, [ शिलाश्यामलताऽभिरामं ] शिलानां मेचकोपलानाम् इन्द्रनीलानां वा श्यामलतया श्यामलिम्ना अभिरामं, तथा [ आमन्त्रितषट्पदाभिः ] मकरन्दपूरितत्वादाहूतभृङ्गाभिः [ लताभिः, श्रितं ] व्याप्तम्। इतः परं द्वान्तरमेकं यमकं वक्ष्यति। तत्र तदेवालङ्कारः। अर्थालङ्कारस्त्वत्युच्चेय इति यथासम्भवमूह्यम्। यमकलक्षणन्त्वाचार्य्यदण्डिनोक्तम्,—"अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः। यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥ एकद्वित्रिचतुष्पाद-यमकानां प्रकल्पना *। आदिमध्यान्तमध्यान्त-

* "प्रकल्पना" इत्यत्र "विकल्पना:" इति क्वचित् पाठः।

सहस्रसङ्ख्यैर्गगनं शिरोभिः
पादैर्भुवं व्याप्य वितिष्ठमानम्।
विलोचनस्थानगतोष्णरश्मि-
निशाकरं साधु हिरण्यगर्भम्॥ ४॥

क्वचिज्जलापायविपाण्डुराणि
धौतोत्तरीयप्रतिमच्छवीनि।
अभ्राणि बिभ्राणमुमाऽङ्गसङ्ग-
विभक्तभस्मानमिव स्मरारिम्॥ ५॥

---

मध्याद्याद्यन्तसर्वतः॥ अत्यन्तबहवस्तेषां भेदाः सम्भेदयोनयः। सुकरा दुष्कराश्चैव दृश्यन्ते तेऽत्र केचन॥" * इति॥ ३॥

सहस्रेति।—सहस्रमिति संख्या येषां तैः [ सहस्रसङ्ख्यैः, शिरोभिः ] शिखरैः, शीर्षैश्च, [ गगनं ] तथा तत्सङ्ख्यैः [ पादैः ] प्रत्यन्तपर्वतैश्चरणैश्च [ भुवं व्याप्य, वितिष्ठमानम् ] अवतिष्ठमानम्, "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम्। [ विलोचनस्थानगतोष्णरश्मिनिशाकरं ] विलोचनयोर्यत् स्थानं योग्यदेशः तद्गतावुष्णरश्मिनिशाकरौ यस्य तम्, अन्यत्र,—नेत्रीकृतार्केन्दुमित्यर्थः। अतः [ साधु ] सत्यं [ हिरण्यगर्भं ] ब्रह्माणमिवेत्युत्प्रेक्षा, 'सहस्रशीर्षा' ( शुक्ल० यजु० ३१ अध्या० १ क० १ मन्त्रः ) इत्यादिश्रुतेरिति भावः। हिरण्यगर्भौ निधिगर्भश्च॥ ४॥

क्वचिदिति।—पुनः [ क्वचित् ] एकदेशे [ जलापायविपाण्डुराणि ] जलानामपायेनापगमेन विपाण्डुराणि शुभ्राणि, अत एव [धौतोत्तरीय-प्रतिमच्छवीनि] धौतं क्षालितं यदुत्तरीयं तत्प्रतिमा तत्समा छविर्येषां

---

* "मध्याद्याद्यन्तसर्वतः" इत्यत्र "मध्याद्याश्चैव सर्वतः" इति पाठान्तरम्। "अत्यन्तं बहवस्तेषां भेदाः सम्भेदयोनयः। सुकरा दुष्कराश्चैव दृश्यन्ते तत्र केचन॥" इति च पाठान्तरम्; "अत्यन्तबहवः" इत्यत्र "अनन्ता बहवः" इत्यपि च पाठान्तरं दृश्यते।

छायां निजस्त्रीचटुलालसानां
मदेन किञ्चिच्चटुलाऽलसानाम् ।
कुर्वाणमुत्पिञ्जलजातपत्रै-
र्विहङ्गमानां जलजातपत्रैः ॥ ६ ॥

स्कन्धाधिरूढोज्ज्वलनीलकण्ठा-
नुर्वीरुहः श्लिष्टतनूनहीन्द्रैः ।
प्रनर्त्तितानेकलताभुजाग्रान्
रुद्राननन्तानिव धारयन्तम् ॥ ७ ॥

---

तानि, [ अभ्राणि ] मेघान् [ बिभ्राणं ] दधानम् । भृञः कर्त्तरि शानच् । अत एव [ उमाऽङ्गसङ्गविभक्तभस्मानम् ] उमायाः पार्वत्याः अङ्गसङ्गेनार्द्धभागेन विभक्तम् एकभागस्थापितं भस्म यस्य तं [ स्मरारिं ] हरम् [ इव ] स्थितमित्युपमाऽलङ्कारः ॥ ५ ॥

छायामिति ।—पुनः निजस्त्रीणां चटुषु प्रियवचनेषु लालसाः लोलुपाः । "लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि च' इति यादवः । तेषां [ निजस्त्रीचटुलालसानां मदेन, किञ्चित् ] ईषत्, चटुलाश्चपलास्ते अलसाश्च । विशेषणयोरपि मिथो विशेषण-विशेष्यभावविवक्षया विशेषणसमासः । तेषां [ चटुलाऽलसानां, विहङ्ग-मानां ] हंसादीनाम् ; उत्पिञ्जलानि जातानि उत्पिञ्जलजातानि, पूर्ववत् समासः, तानि पत्राणि येषां तैः [ उत्पिञ्जलजातपत्रैः ] उत्पिञ्जरीभूतदलैरित्यर्थः । रलयोरभेदः । [ जलजातपत्रैः ] जलजै-रेवातपत्रैः [ छायां कुर्वाणम् ] । एतेन महती कमलाकरसमृद्धि-र्व्यज्यते । यमकरूपकयोः सङ्करः ॥ ६ ॥

स्कन्धेति ।—पुनः [ स्कन्धाधिरूढोज्ज्वलनीलकण्ठान् ] स्कन्धं प्रका-ण्डमधिरूढाः उज्ज्वला नीलकण्ठा मयूरा येषां तान् ; अन्यत्र,—स्कन्धा-धिरूढाः अंसस्थिताः नीलाः कण्ठा येषां तान् । 'अंसप्रकाण्डयोः

विलम्बिनीलोत्पलकर्णपूराः
कपोलभित्तीरिव लोध्रगौरीः ।
नवोलपालङ्कृतसैकताभाः
शुचीरपः शैवलिनीर्दधानम् ॥ ८ ॥

राजीवराजीवशलोलभृङ्गं
मुष्णान्तमुष्णान्ततिभिस्तरूणाम् ।

---

स्कन्धः' इति विश्वः । [ अहीन्द्रैः, श्लिष्टतनून् ] व्याप्तदेहान् ; एकत्र,—तदावासत्वात्, अन्यत्र,—तद्भूषणत्वाच्चेति भावः । [ प्रनर्त्तितानेकलताभुजाग्रान् ] प्रनर्त्तितानि अनेकलतानामिव भुजानां, लतानामिव च भुजानाम् अग्राणि येषां तान्, अत एव [ अनन्तान् ] असङ्ख्यान् [ रुद्रानिव ] स्थितानित्युत्प्रेक्षा । [ उर्वीरुहः ] वृक्षान् [ धारयन्तम् ] उद्वहन्तम् * ॥७॥

विलम्बीति ।—[ विलम्बिनीलोत्पलकर्णपूराः ] विलम्बिनो नीलोत्पलान्येव कर्णपूराः कर्णावतंसा यासां ताः, [ लोध्रगौरीः ] लोध्रेण लोध्ररजसा गौरीरवदाताः । "षिद्गौरादिभ्यश्च" ( ४।१।४१ पा० ) इति ङीष् । [ कपोलभित्तीः ] स्त्रीणां गण्डस्थलीः [ इव ] स्थिताः । उपमाऽन्तरमाह,—[ नवोलपालङ्कृतसैकताभाः ] नवा उलपा वल्वजतृणानि । 'उलपा वल्वजाः प्रोक्ताः' इति विश्वः । तैरलङ्कृतानां सैकतानाम् आभेव आभा यासां ताः । कुतः ?—[ शुचीः ] शुभ्राः [ शैवलिनीः ] शैवलवतीः [ अपो दधानम् ] । शुचित्वशैवलित्वाभ्यां विम्बप्रतिविम्बभावेनोपमाद्वयम् ॥ ८ ॥

राजीवेति ।—पुनः राजीवराजीनां पद्मपङ्क्तीनां वशा अधीनाः लोलाश्चला भृङ्गा यस्मिन् तं [ राजीवराजीवशलोलभृङ्गं तरूणां,

---

* श्लेषोपमे च ।

कान्तालकान्ता ललनाः सुराणां
रक्षोभिरक्षोभितमुद्वहन्तम् ॥ ९ ॥
मुदे मुरारेरमरैः सुमेरो-
रानीय यस्योपचितस्य शृङ्गैः ।
भवन्ति नोद्दामगिरां कवीना-
मुच्छ्रायसौन्दर्य्यगुणा मृषोद्याः ॥ १० ॥

---

ततिभिः ] सङ्घैः [ उष्णम् ] आतपं [ मुष्णन्तं ] हरन्तं, कान्ताः रम्या अलकान्ताश्चूर्णकुन्तलाग्राणि यासान्ताः [ कान्तालकान्ताः ]। 'अलकाश्चूर्णकुन्तलाः' इत्यमरः। [सुराणां, ललनाः] स्त्रियोऽप्सरसः [रक्षोभिः] राक्षसैः [ अक्षोभितम् ] अनभिभूतं यथा तथा [ उद्वहन्तम् ] * ॥९॥

नन्वल्पीयानयं कश्चिद्रैवतको नाम शिलोच्चयः कथमियद्वर्ण्यते ? इति शङ्कां निरस्यति, मुद इति।—[ मुरारेः, मुदे ] सन्तोषाय [ अमरैः ] कर्तृभिः [सुमेरोः शृङ्गैः] करणैः [आनीय, उपचितस्य] वर्द्धितस्य, आनीतैः शृङ्गैरुपचितस्येत्यर्थः। उपचये करणानां शृङ्गाणामर्थादानयनकर्मत्वम्। [ यस्य ] शैलस्य [ उच्छ्रायसौन्दर्य्यगुणाः ] उच्छ्रायः औन्नत्यं, सौन्दर्य्यञ्च, तयोः गुणा उत्कर्षाः [ उद्दामगिरां ] प्रगल्भवाचां [कवीनां] मृषा उद्यन्त इति [ मृषोद्याः ] मिथ्यावाच्याः [ न भवन्ति ] मेरुशृङ्गेषु सर्वगुणसम्भवादिति भावः। "राजसूयसूर्य्यमृषोद्य—" (३।१।११४ पा०) इत्यादिना वदेः क्यबन्तो निपातः। उत्कृष्टः श्रायः उच्छ्राय इति घञन्तेनोपसर्गस्य समासः, नतूपसृष्टात् घञ्प्रत्ययः, "श्रिणीभुवोऽनुपसर्गे" (३।३।२४ पा०) इति नियमात्। मुद इत्यादि श्लोकसप्तके यच्छब्दस्य "दृष्टोऽपि शैलः सः" इत्यनेनान्वयः। मेरुशृङ्गासम्बन्धेऽपि सम्बन्धवर्णनादतिशयोक्तिः ॥ १० ॥

---

* यमकमलङ्कारः।

यतः परार्ध्यानि भृतान्यनूनैः
प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि।
आढ्यादिव प्रापणिकादजस्रं
जग्राह रत्नान्यमितानि लोकः॥ ११ ॥

अखिद्यतासन्नमुदग्रतापं
रविन्दधानेऽप्यरविन्दधाने।
भृङ्गावलिर्यस्य तटे निपीत-
रसा नमत्तामरसा न मत्ता॥ १२ ॥

---

यत इति।—[लोकः, परार्ध्यानि] श्रेष्ठानि [अनूनैः] महद्भिः [भूरिभिः] प्रभूतैः। 'प्रभूतं प्रचुरं प्राज्यं भूरि' इत्यमरः। [प्रस्थैः] सानुभिर्मानविशेषैश्च। 'प्रस्थोऽस्त्री सानुमानयोः' इत्यमरः। [भृतानि] सम्भृतानि मितानि च [उच्छिखानि] उद्रश्मीनि [अमितानि] अपरिमितानि [रत्नानि, यतः] शैलात् [आढ्यात्] धनिकात्। 'इभ्य आढ्यो धनी' इत्यमरः। [प्रापणिकात्] प्रपणो व्यवहारः प्रयोजनमस्य प्रापणिको वणिक्, तदस्य "प्रयोजनम्" (५।१।१०९ पा०) इति ठञ्। 'पण्याजीवाः प्रापणिका वैदेहा नैगमाश्च ते। वणिजः' इति वैजयन्ती। तस्मात् [इव, अजस्रं मुहुः जग्राह]। उपमाऽलङ्कारः श्लेषश्च॥११॥

अखिद्यतेति।—[आसन्नम्] औन्नत्यात्सन्निहितम् अत एव [उदग्रतापं] दुःसहतापं [रविं दधानेऽपि अरविन्दधाने] इति विरोधः। अरविन्दानां धाने निधाने इति परिहारः। धीयतेऽस्मिन्निति धानम्। अधिकरणे ल्युट्। शब्दश्लेषमूलो विरोधालङ्कारः। [यस्य] गिरेः [तटे, निपीतरसा] नितरां पीतमकरन्दा, नमन्ति तामरसानि पङ्केरुहाणि भारभृतया यया सा [नमत्तामरसा]। 'पङ्केरुहं तामरसम्' इत्यमरः। अत एव [मत्ता भृङ्गावलिः, नाखिद्यत] न खिन्ना। खिदेर्दैवादिकात्

**यत्राधिरूढेन महीरुहोच्चै-**
**रुन्निद्रपुष्पाक्षिसहस्रभाजा ।**
**सुराधिपाधिष्ठितहस्तिमल्ल-**
**लीलां दधौ राजतगण्डशैलः ॥ १३ ॥**

**विभिन्नवर्णा गरुडाग्रजेन**
**सूर्य्यस्य रथ्याः परितः स्फुरन्त्या ।**
**रत्नैः पुनर्यत्र रुचा रुचं स्वा-**
**मानिन्यिरे वंशकरीरनीलैः ॥ १४ ॥**

---

कर्त्तरि लङ्। अत्यन्तसूर्य्यसन्निधानेऽप्यरविन्दाकरविहारात् मधुकरास्तापं नापुरित्यर्थः * ॥ १२ ॥

यत्रेति।—[ यत्र ] शैले [ राजतगण्डशैलः ] रजतस्य विकारो राजतः। "प्राणिरजतादिभ्योऽञ्" ( ४।३।१५४ पा० ) इत्यञ्प्रत्ययः। स चासौ गण्डशैलश्च। 'गण्डशैलास्तु च्युताः स्थूलोपला गिरेः' इत्यमरः। [ उन्निद्रपुष्पाक्षिसहस्रभाजा ] उन्निद्राणि विकसितानि पुष्पाणि अक्षीणीवेत्युपमितसमासः। तेषां सहस्रं भजतीति तद्भाजा [ अधिरूढेनोच्चैः, महीरुहा ] वृक्षेण [सुराधिपाधिष्ठितहस्तिमल्ललीलां] सुराधिपेन देवेन्द्रेण अधिष्ठितो यो हस्ती मल्ल इव तस्यैरावतस्य लीलां शोभां [ दधौ ]। ऐरावतस्य धावल्यादिति भावः। 'हस्तिमल्लोऽभ्रमातङ्गे हस्तिमल्लो विनायके' इति विश्वः। अत्र लीलामिव लीलामिति सादृश्याक्षेपान्निदर्शनाऽलङ्कारः † ॥ १३ ॥

विभिन्नेति।—[ गरुडाग्रजेन ] अरुणेन [ विभिन्नवर्णाः ] अन्यथाकृतवर्णाः, अरुणिमानमापादिता इत्यर्थः। [ सूर्य्यस्य ] सम्बन्धिनो रथं वहन्तीति [ रथ्याः ] रथाश्वाः "तद्वहति रथयुगप्रासङ्गम्" ( ४।४।७६

---

* यमकं काव्यलिङ्गञ्चालङ्कारः।

† पुष्पाक्षीत्यत्र उपमारूपकयोः सन्देहसङ्करश्च।

यत्रोज्झिताभिर्मुहुरम्बुवाहैः
समुन्नमद्भिर्न समुन्नमद्भिः ।
वनं बबाधे विषपावकोत्था
विपन्नगानामविपन्नगानाम् ॥ १५ ॥

---

पा० ) इति यत्प्रत्ययः । [ यत्र ] शैले [ वंशकरीरनीलैः ] वंशाङ्कुरश्यामैः [ रत्नैः ] मरकतैरित्यर्थः । 'वंशाङ्कुरे करीरोऽस्त्री' इत्यमरः । वंशशब्दस्याम्लानताहेतोरलूनतायाः प्रतिपत्त्यर्थत्वादपौनरुक्त्यम् । अत एवैकार्थपदमप्रयोज्यमित्युक्त्वा करिकलभकर्णावतंसादिषु प्रतिपत्तिविशेषकरेषु न दोष इत्याह वामनः,—"न विशेषश्चेत्" इति ( २अधि० २अध्या० १२ सू० ) । [ परितः स्फुरन्त्या, रुचा ] स्वप्रभया करणेन [ पुनः, स्वां रुचं ] निजहरितवर्णमेव [ आनिन्यिरे ] आनीताः । नयतेर्द्विकर्म्मकात् प्रधाने कर्म्मणि लिट् । 'प्रधानकर्म्मण्याख्येये लादीनाहुर्द्विकर्म्मणाम्' इति वचनात् । अत्र विभिन्नवर्णा इत्येकस्तद्गुणः । रथ्यानां स्वगुणत्यागेन गरुड़ाग्रजगुणग्रहणात्, पुनस्तत्त्यागेन मरकतगुणग्रहणादपरस्तद्गुणस्तदुपजीवीति सजातीययोः सङ्करः ; तेन गिरेः सूर्य्यमण्डलपर्य्यन्तमौन्नत्यं वस्तु व्यज्यते ;—'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः' ॥ १४ ॥

यत्रेति ।—[ यत्र ] शैले [ समुन्नमद्भिः ] समुत्पतद्भिः [ अम्बुवाहैः, उज्झिताभिः ] त्यक्ताभिः [ अद्भिर्मुहुः, समुन्नं ] सम्यक् उन्नं क्लिन्नं, सिक्तमित्यर्थः । 'उन्दी क्लेदने' इति धातोः कर्म्मणि क्तः "नुदविद—" (८।२।५६ पा०) इत्यादिना निष्ठानत्वम् । विपन्नगा विगतसर्पा न भवन्तीत्यविपन्नगाः, सपन्नगा इत्यर्थः । तेषाम् [ अविपन्नगानां, नगानां ] वृक्षाणां [ वनं, विषपावकोत्था ] विषाग्निसमुत्था [ विपद् ] आपत् [ न बबाधे ] नित्यं वर्षाऽनुषङ्गाद्विषाग्निक्षोभो वृक्षाणामकिञ्चित्कर इति भावः * ॥ १५ ॥

---

* यमकरूपकयोः संसृष्टिः ।

फलङ्गिरुष्णांशुकराभिमर्षात्
कार्शानवं धाम पतङ्गकान्तैः।
शशंस यः पात्रगुणाद्गुणानां
सङ्क्रान्तिमाक्रान्तगुणातिरेकाम् ॥ १६ ॥

दृष्टोऽपि शैलः स मुहुर्मुरारे-
रपूर्ववद्विस्मयमाततान।
क्षणे क्षणे यन्नवतामुपैति
तदेव रूपं रमणीयतायाः ॥ १७ ॥

---

फलङ्गिरिति।—[ यः ] शैलः [ उष्णांशुकराभिमर्षात् ] अर्ककरसम्पर्कात्, कृशानोरिदं [ कार्शानवम् ] आग्नेयं [धाम] तेजः [फलङ्गिः] उद्गिरद्भिः अग्निकरसामर्थ्याभिव्यञ्जकैरिति भावः। [ पतङ्गकान्तैः ] सूर्य्यकान्तैः दृष्टान्तभूतैरिति भावः। [ गुणानां, सङ्क्रान्तिम् ] अन्यत्र,—सङ्क्रमणं सङ्क्रान्तगुणानित्यर्थः। [ पात्रगुणात् ] आधारगुणसहकारात् [ आक्रान्तगुणातिरेकाम् ] आक्रान्तः प्राप्तो गुणातिरेकः कार्य्यविशेषाधानरूपो गुणोत्कर्षो यया तां [ शशंस ] प्रतिपादयामास। अर्कत्विषां सर्वत्र सङ्क्रमणाविशेषेऽपि सूर्य्यकान्तेष्वेव ज्वलनजननदर्शनात् सर्वत्रापि सङ्क्रमकारिणां गुणानामाधारगुणसहकारात् कार्य्यविशेषाधायकत्वमिति निश्चयोऽत्रैव जायत इत्यर्थः। ततश्च सहकारशक्तिविरहिणी सहजशक्तिरनुपकारिणीति भावः। वृत्त्यनुप्रासोऽलङ्कारः* ॥ १६ ॥

दृष्टोऽपीति।—[ मुहुर्दृष्टोऽपि स शैलो मुरारेः ] अपूर्वेणादृष्टपूर्वेण तुल्यम् [ अपूर्ववत् ] "तेन तुल्यं क्रिया चेद्वतिः" (५।१।११५ पा०) इति वतिः। [ विस्मयमाततान ] अतिरमणीयत्वादिति भावः। तथा

---

* एतदनुरूपं पद्यार्द्धं यथा किरातार्ज्जुनीये तृतीयसर्गे १८ श्लोके,—"वीर्य्यावधृतः स्म तदा विवेद प्रकर्षमाधारवशं गुणानाम्" इति।

उच्चारणज्ञोऽथ गिरां दधान-
मुच्चा रणत्पक्षिगणास्तटीस्तम्।
उत्कन्धरं द्रष्टुमवेक्ष्य शौरि-
मुत्कन्धरं दारुक इत्युवाच ॥ १८ ॥

आच्छादितायतदिगम्बरमुच्चकैर्गा-
माक्रम्य संस्थितमुदग्रविशालशृङ्गम्।

---

हि,—[ क्षणे क्षणे ] प्रतिक्षणम्। वीप्सायां द्विर्भावः। [ नवताम् ] अपूर्ववद्भावम् [ उपैति ] इति [ यत्, तत् ] नवत्वोपगमनम् [ एव रमणीयतायाः, रूपं ] स्वरूपं, लक्षणमित्यर्थः। अत्र रमणीयत्वलक्षणस्य वाक्यार्थस्य विस्मये हेतुत्वसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १७ ॥

उच्चारणज्ञ इति।—[ अथ ] हरिविस्मयानन्तरं [ गिरां ] वाक्यानामुच्चारणं जानातीति [ उच्चारणज्ञः ] उक्तिकुशलः। "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) इति कप्रत्ययः, न "इगुपध—" ( ३।१।१३५ पा० ) इत्यादिना "आकारादनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन" इति वचनात्। [ दारुकः ] कृष्णसारथिः [ उच्चाः ] उन्नताः, रणन्तः शब्दायमानाः पक्षिगणाः यासु ताः [ रणत्पक्षिगणास्तटीर्दधानं, तं ] पूर्वोक्तं धरतीति [ धरं ] पर्वतम्। पचाद्यच्। 'अहार्य्यधरपर्वताः' इत्यमरः। [ द्रष्टुम्, उत्कम् ] उत्सुकम्। "उत्क उन्मनाः" ( ५।२।८० पा० ) इति निपातः। [ उत्कन्धरम् ] औत्सुक्यादुन्नमितकन्धरं [ शौरिमवेक्ष्य, इति ] वक्ष्यमाणक्रमेण [ उवाच ]। "न हीङ्गितज्ञोऽवसरेऽवसीदति" * इति भावः ॥ १८ ॥

इतः प्रभृति यमकानन्तरश्लोकेषु वसन्ततिलकावृत्तं नियमेनाह, आच्छादितेति।—[ आच्छादितायतदिगम्बरम् ] आच्छादितान्यावृतानि आयतानि दीर्घाणि दिशोऽम्बरं खञ्च दिगम्बराणि येन तम्, अन्यत्र,—

---

* किरातार्जुनीये चतुर्थसर्गे २० श्लोकांशः।

मूर्ध्नि स्फुरत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ? ॥ १९ ॥
उदयति विततोर्ध्वरश्मिरज्जा-
वहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥ २० ॥

---

आच्छादितं वसितमायतं दिगेवाम्बरं वासो येन तं तथोक्तम् । [उच्चकैः] उन्नतां, तथा [ गां ] भुवम् [ आक्रम्य ] व्याप्य [ संस्थितम् ] ; तथा [ उदग्रविशालशृङ्गम् ] उदग्राणि उन्नतानि विशालानि च शृङ्गाणि शिखराणि यस्य तम्, अन्यत्र,—उदग्रे विशाले शृङ्गे विषाणे यस्य तम् उच्चकैः उन्नतं गां वृषभम् आक्रम्य, अधिष्ठाय संस्थितमित्यर्थः, 'शृङ्गं विषाणे शिखरे' इति 'गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः। अर्जुनीनेत्र-दिग्बाणभूवाग्वारिषु गौर्मता ॥' इति च विश्वः । [ मूर्ध्नि ] शिखरे, अन्यत्र,—शिरसि, [ स्फुरत्तुहिनदीधितिकोटिं ] स्फुरन्ती तुहिनदीधिते-रिन्दोः कोटिः रश्मिः, कला च यस्य तम्, [ एनं, नगेशं ] नगश्रेष्ठं रैवतकं कैलासनायकमीश्वरञ्च [ उद्वीक्ष्य, भुवि को न विस्मयते ? ] सर्वोऽपि विस्मयत इत्यर्थः । नेयं तुल्ययोगिता, प्रकृताप्रकृतविषये तदनुत्थानात् । नापि समासोक्तिः,तस्या विशेषणसाम्यजीवित्वात् । नापि श्लेषः, उभयश्लेषे विशेष्यश्लेषयोगात् ; तस्मात् प्राकरणिकार्थमात्रपर्य्यवसिताभिधा-व्यापारेणापि शब्देनार्थान्तरधीकृद्ध्वनिरित्याहुः । तदुक्तं काव्यप्रकाशे,— 'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते। संयोगाद्यैरवाच्यार्थधीकृ-द्व्यापृतिरञ्जनम् ॥' इति । वृत्तलक्षणन्तु—'उक्ता वसन्ततिलका तभजा जगौ गः' इति ॥ १९ ॥

उदयतीति ।—वितता ऊर्ध्वाश्च रश्मिरज्जवो रश्मयो रज्जव इव यस्य तस्मिन् [ विततोर्ध्वरश्मिरज्जौ, अहिमरुचौ ] सूर्य्ये [ उदयति ] उदय-

वहति यः परितः कनकस्थलीः
सहरिता लसमाननवांशुकः।
अचल एष भवानिव राजते
स हरितालसमाननवांशुकः ॥ २१ ॥
पाश्चात्त्यभागमिह सानुषु सन्निषण्णाः
पश्यन्ति शान्तमलसान्द्रतरांशुजालम्।

---

माने *। "अय गतौ" इति स्वरितेतं केचिदिच्छन्ति, ततः शतरि सप्तमी। तथा विततोर्द्ध्वरश्मिरज्जौ [ हिमधाम्नि ] चन्द्रे [ च, अस्तं याति ] अस्तमयमाने। यातेः शतरि सप्तमी। [ अयं गिरिः, विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलां ] विलम्बिना विशेषं लम्बमानेन घण्टाद्वयेन परिवारितस्य वेष्टितस्य वारणेन्द्रस्य लीलां शोभां [ वहति ]। अत्र लीलामिव लीलामिति सादृश्याक्षेपान्निदर्शना। तया सूर्य्याचन्द्रमसावस्य कुक्षिसमानकक्षां बिभ्रत इति महदौन्नत्यं व्यज्यते। पुष्पिताग्रा वृत्तम्;—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ २० ॥

वहतीति।—लसमाना दीप्यमाना नवांशवो यस्य सः [ लसमाननवांशुकः ]। शैषिकः कप्प्रत्ययः। [ यः ] अचलः [ सहरिताः ] सदूर्वाः। 'हरितेति च दूर्वायां हरिद्वर्णयुतेऽन्यवत्' इति विश्वः। [ कनकस्थलीः ] कनकस्य स्थलीः स्वर्णभूमीः "जानपद—" ( ४।१।४२ पा० ) इत्यादिना अकृत्रिमार्थे ङीष्। [ परितो वहति, स एषोऽचलः ] हरितालेन कर्चूरेण समानं नवमंशुकं वासो यस्य सः [ हरितालसमाननवांशुकः ] पीताम्बरः [ भवानिव राजते ]। द्रुतविलम्बितं वृत्तम्;—'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् † ॥ २१ ॥

---

* केचित् तु 'इ गतौ' इति भौवादिकस्य धातोः शतरि सप्तम्यां रूपमेतदिति वदन्ति।

† यमकस्य उपमयोश्च संसृष्टिः।

सम्पूर्णलब्धललनालपनोपमान-
मुत्सङ्गसङ्गिहरिणस्य मृगाङ्कमूर्त्तेः ॥ २२ ॥
कृत्वा पुंवत्पातमुच्चैर्भृगुभ्यो-
मूर्ध्नि ग्राव्णां जर्जरा निर्झरौघाः ।
कुर्वन्ति द्यामुत्पतन्तः स्मरार्त्त-
स्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥ २३ ॥

---

पाश्चात्येति ।—[ इह ] अद्रौ [ सानुषु, सन्निपन्नाः ] स्थिताः जनाः [ शान्तमलसान्द्रतरांशुजालम् ] शान्तमलं कलङ्कस्य पुरोवर्त्तित्वान्निष्कलङ्कम्, अत एव सान्द्रतरमंशुजालं यस्य तं, [सम्पूर्णलब्धललनालपनोपमानं] सम्पूर्णं परिपूर्णं लब्धं प्राप्तं ललनालपनोपमानं स्त्रीमुखसादृश्यं येन तम् । 'आननं लपनं मुखम्' इत्यमरः । कुतः ?—[ उत्सङ्गसङ्गिहरिणस्य ] अङ्कस्थमृगस्य मृगाङ्का मृगचिह्ना मूर्त्तिर्यस्य तस्य [ मृगाङ्कमूर्त्तेः ] चन्द्रस्य ; पश्चाद्भवः पाश्चात्यः । "दक्षिणापश्चात्पुरसस्त्यक्" ( ४।२।९८ पा० ) इति त्यक् । स चासौ भागश्च तं [पाश्चात्यभागं] पृष्ठभागं [ पश्यन्ति ] । पाश्चात्यभागदर्शनातिशयोक्त्या तादृगौन्नत्यध्वनिः । * वसन्ततिलका वृत्तम् ॥ २२ ॥

कृत्वेति ।—[ अत्र ] अद्रौ [ निर्झरौघाः ] गिरिनदप्रवाहाः । 'प्रवाहो निर्झरो झरः' इत्यमरः । चूतवृक्ष इत्यादिवत् सामान्यविशेषभावादपुनरुक्तिः । [ पुंवत् ] पुम्भिस्तुल्यम् । 'तेन तुल्यं क्रिया चेत्—'( ५।१।११५ पा० ) इति वतिः । [ उच्चैः, भृगुभ्यः ] अतटेभ्यः । 'प्रपातस्त्वतटो भृगुः' इत्यमरः । [ ग्राव्णां ] शिलानां [ मूर्ध्नि, पातं कृत्वा ] पतित्वा [ जर्जराः ] शकलीभूताः [ द्याम् ] आकाशम्प्रति [ उत्पतन्तः, स्मरार्त्तस्वर्लोकस्त्रीगात्रनिर्वाणम्] स्मरार्त्तानां स्वर्लोकस्त्रीणां खेचरीणामप्सरसां गात्रनिर्वाणमङ्गनिर्वृतिं [ कुर्वन्ति ] । 'अनुष्ठानासमर्थस्य वानप्रस्थस्य

---

* काव्यलिङ्गोपमयोः सङ्करः ।

स्थगयन्त्यमूः शमितचातकार्त्तस्वरा
जलदास्तड़ित्तुलितकान्तकार्त्तस्वराः।
जगतीरिह स्फुरितचारुचामीकराः
सवितुः क्वचित् कपिशयन्ति चामी कराः॥२४॥
उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बै-
रुत्तम्भितोडुभिरतीवतरां शिरोभिः।

जीर्य्यतः। भृग्वग्निजलसम्पातैर्मरणं प्रविधीयते॥' इति विहितभृगुपातानां पसां स्वर्लोकगामिनामिहोपमानता। * शालिनी वृत्तम्;—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात्॥ २३॥

स्थगयन्तीति।—[ इह ] अद्रौ [क्वचिदमूः, जगतीः] भूमीः। 'जगती भुवने भूमौ' इति विश्वः। शमिताश्चातकानामार्त्तस्वराः यैस्ते [ शमितचातकार्त्तस्वराः ]। 'सर्वंसहापतितमम्बु न चातकानाम्' इति भूमिगतस्य तेषां विपाभत्वादभौमाम्बुदानेनोज्जीवयन्त इत्यर्थः। किञ्च, तड़िद्भिस्तुलितानि उपमितानि कान्तानि कार्त्तस्वराणि सुवर्णानि यैस्ते [ तड़ित्तुलितकान्तकार्त्तस्वराः ]; तड़ित्स्फुरणे तेषामपि तद्वत् स्फुरणादिति भावः। ते [ जलदाः, स्थगयन्ति ] आच्छादयन्ति। स्थग आच्छादने, इति चौरादिकः। क्वचित् तु स्फुरितानि उल्लसितानि चारूणि चामीकराणि सुवर्णानि यैस्ते [ स्फुरितचारुचामीकराः, अमी सवितुः कराश्च ] आतपाश्च [ कपिशयन्ति ] कपिशिताः कुर्वते। † क्वचिद्वृष्टिः क्वचिदातपश्चेति महदाश्चर्य्यमिति भावः। ‡ पथ्या वृत्तम्;—'सजसा यलौ च सह गेन पथ्या मता' इति लक्षणात्॥ २४॥

उत्क्षिप्तमिति।—[उच्छ्रितसितांशुकरावलम्बैः] उच्छ्रिताः उत्क्षिप्ताः सितांशोश्चन्द्रस्य कराः अंशवो हस्ताश्चावलम्बो येषां तैः [ उत्तम्भितो-

* अत्र उपमा आर्थी। † जगतीरिति शेषः।

‡ अत्र यमकयोरुपमायाश्च संसृष्टिः।

अज्ञेयनिर्झरजलव्यपदेशमस्य
विष्वक् तटेषु पतति स्फुटमन्तरीक्षम् ॥२५॥

एकत्र स्फटिकतटांशुभिन्ननीराः
नीलाश्मद्युतिभिदुराम्भसोऽपरत्र ।
कालिन्दीजलजनितश्रियः श्रयन्ते
वैदग्धीमिह सरितः सुरापगायाः ॥२६॥

---

डुभिः ] उत्तम्भितान्युडूनि यैस्तैः, उडूनि चावष्टभ्येत्यर्थः । [ शिरोभिः ] शिखरैर्मस्तकैश्च [ अतीवतरां ] भृशतरम् । अतीवशब्दादव्ययादामुप्रत्ययः * । [ उत्क्षिप्तम् ] उद्यम्य धृतम् [ अन्तरीक्षं, अज्ञेयनिर्झरजलव्यपदेशं ] अज्ञेयः सादृश्याद्विश्वसनीयः निर्झरजलमिति व्यपदेशो व्यवहारो यस्य तत्, दृढतरां निर्झरजलधियं कुर्वदित्यर्थः । [ अस्य ] अद्रेः [ तटेषु, विष्वक् ] समन्तात् [ पतति, स्फुटं ] सत्यम् । इन्दुकरानुडूनि चावष्टभ्य शिरोभिर्ध्रियमाणमपि दुरुद्धरत्वात् भ्रश्यदन्तरीक्षमेवेदं, न तु जलम् ; सादृश्यात् तु व्यपदेशो दुर्वार इति सर्वतःपातिता, निर्झरजलं चोत्प्रेक्ष्यते, तेनोत्सेधविस्तारावस्य व्यज्येते † ॥२५॥

एकत्रेति ।—[ एकत्र ] एकस्मिन् भागे [ स्फटिकतटांशुभिन्ननीराः ] स्फटिकस्य यत्तटं तस्यांशुभिर्भिन्ननीराः मिश्रोदकाः, शुभ्रजला इत्यर्थः । [ अपरत्र ] अपरस्मिन् भागे [ नीलाश्मद्युतिभिदुराम्भसः ] नीलाश्मनामिन्द्रनीलानां द्युतिभिः भिदुराणि मिश्राण्यम्भांसि यासां ताः, नीलसलिला इत्यर्थः । [ इह ] अद्रौ [ सरितः, कालिन्दीजलजनितश्रियः ] कलिन्दस्याद्रेरपत्यं स्त्री कालिन्दी यमुना । 'कालिन्दी सूर्य्यतनया यमुना शमनस्वसा' इत्यमरः । तस्या जलैः जनिता श्रीः शोभा यस्यास्तस्याः, तत्सङ्गताया इत्यर्थः । [ सुरापगायाः ] गङ्गायाः [ वैदग्धीं ]

---

* "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" ( ५।४।११ पा० ) इति सूत्रम् ।

† वसन्ततिलका वृत्तम् ।

इतस्ततोऽस्मिन् विलसन्ति मेरोः
समानवप्रे मणिसानुरागाः ।
स्त्रियश्च पत्यौ सुरसुन्दरीभिः
समा नवप्रेमणि सानुरागाः ॥ २७ ॥

उच्चैर्महारजतराजिविराजिताऽसौ
दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा ।
अभ्येति भस्मपरिपाण्डुरितस्मरारे-
रुद्वह्निलोचनललामललाटलीलाम् ॥ २८ ॥

---

शोभां [ श्रयन्ते ] भजन्ति । विदग्धस्य भावः वैदग्धी । ब्राह्मणादित्वात् "गुणवचन—" (५।१।१२४ पा०) इत्यादिना ष्यञ्प्रत्ययः "षिद्गौरादिभ्यश्च" ( ४।१।४१ पा० ) इति ङीष् । सोऽपि ईत्वस्य बाहुलकत्वादिह वैकल्पिकः ; अत एव "ष्यञः षित्करणादीकारो बहुलम्" ( ५अधि० २अध्या० ५६सू० ) इति वामनः । अत्र सितासितमणिगुणग्रहणात् सरितां यमुनासङ्गतगङ्गाशोभासादृश्याक्षेपात् तद्गुणोत्थापिता निदर्शना । प्रहर्षिणी वृत्तम् ;—'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' ॥ २६ ॥

इत इति ।—[ मेरोः, समानवप्रे ] तुल्यप्रस्थे, अत एव [ अस्मिन् ] अद्रौ [ इतस्ततः, मणिसानुरागाः ] रत्नतटकान्तयः [ विलसन्ति ] प्रसरन्ति । किञ्च, नवं प्रेम यस्य तस्मिन् [ नवप्रेमणि पत्यौ ] अनुरागेण सह वर्त्तन्त इति [ सानुरागाः सुरसुन्दरीभिः, समाः ] सरूपाः [स्त्रियश्च] इतस्ततो विलसन्ति क्रीड़न्ति । अन्योऽन्यमनुरागिणोऽनुरूपाश्चेह विलासिनस्तदनुरूपाणि च विहारस्थलानि;सन्तीति भावः * ॥ २७ ॥

उच्चैरिति ।—[ इह ] अद्रौ [ सान्द्रसुधासवर्णा ] सान्द्रया सुधया लेपविशेषेणामृतेन वा सवर्णा समानवर्णा । "ज्योतिर्जनपद—" (६।३।

---

* अत्र यमकोपमानां संसृष्टिः ।

अयमतिजरठाः प्रकामगुर्वी-
रलघुविलम्बिपयोधरोपरुद्धाः ।
सततमसुमतामगम्यरूपाः
परिणतदिक्करिकास्तटीर्बिभर्त्ति ॥ २९ ॥

८५ पा० ) इत्यादिना समानस्य सादेशः। 'लेपभेदेऽमृते सुधा' इति वैजयन्ती। [ महारजतराजिविराजिता ] काञ्चनरेखाशोभिता [ असौ ] पुरीवर्तिनी [ उच्चैः ] उन्नता [ दुर्वर्णभित्तिः ] रजतभित्तिः। 'महारजतकाञ्चने' इति 'दुर्वर्णं रजतं रूप्यम्' इति चामरः। [ भस्मपरिपाण्डुरितस्मरारेः ] भस्मना परिपाण्डुरितस्य स्मरारेः [ उदग्निलोचनललामललाटलीलाम् ] उदग्नि उद्गतानलार्च्चिर्लोचनमेव ललामं भूषणं यस्य तस्य ललाटस्य लीलां शोभाम् [अभ्येति] भजतीति। 'ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु' इत्यमरः। निदर्शनाऽलङ्कारः उपमा च * ॥ २८ ॥

अयमिति।—[ अयं ] गिरिः [ अतिजरठाः ] अतिकठिनाः अतिजरतीश्च। 'जरठः कठिने जीर्णे' इति वैजयन्ती। प्रकामं गुर्वीः श्रेष्ठाः स्थौल्याद्दुर्भराश्च [ प्रकामगुर्वीः ]। 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे' इति शब्दार्णवः। विस्पष्टपटुवत् "मयूरव्यंसकादयश्च" ( २।१।७२ पा० ) इति समासः। [ अलघुविलम्बिपयोधरोपरुद्धाः ] अलघुभिर्विलम्बिभिर्लम्बमानैः पयोधरैर्मेघैः स्तनैश्च। 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः। उपरुद्धाः आवृताः, निबद्धाः इत्यर्थः। [सततं] सर्वदा [ असुमतां ] प्राणभृताम् [अगम्यरूपाः] अत्युन्नतत्वात् दुरारोहस्वरूपाः, अन्यत्र,—वृद्धत्वाद्गमनानर्हविग्रहाः। 'त्यजेदन्यकुलोत्पन्नां वृद्धां स्त्रीं कन्यकां तथा' इति गमननिषेधादिति भावः। परिणतास्तिर्य्यग्दन्तप्रहारिणो दिक्करिणो दिग्गजाः यासु ताः [परिणतदिक्करिकाः] 'तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः। "इनः स्त्रियाम्"

* वसन्ततिलका वृत्तम्।

धूमाकारं दधति पुरः सौवर्णे
वर्णेनाग्नेः सदृशि तटे पश्यामी।
श्यामीभूताः कुसुमसमूहेऽलीनां
लीनामालीमिह तरवो बिभ्राणाः॥ ३०॥

व्योमस्पृशः प्रथयता कलधौतभित्ती-
रुन्निद्रपुष्पचणचम्पकपिङ्गभासः।
सौमेरवीमधिगतेन नितम्बशोभा-
मेतेन भारतमिलावृतवद्विभाति॥ ३१॥

---

(५।४।१५२ पा०) इति समासान्तः कप्प्रत्ययः। अन्यत्र,—परिणताः क्षिणीभूताः दिशो दन्तचतविशेषाः करिका नखव्रणाश्च यासां ताः। 'दिग्दष्टे वर्तुलाकारे करिका नखरेखिका' इति वैजयन्ती। [तटी-र्बिभर्त्ति]। अत्र प्रकृततटीविशेषणमहिम्ना अप्रकृतवृद्धाङ्गनाप्रतीतेः समासोक्तिः। पुष्पिताग्रा वृत्तम्॥ २९॥

धूमेति।—[इह] अद्रौ [पुरः] अग्रे [वर्णेनाग्नेः, सदृशि] समाने, अग्निसमानवर्णे इत्यर्थः। [सौवर्णे] सुवर्णविकारे [तटे कुसुमसमूहे, लीनां] स्थितां "ल्वादिभ्यः" (८।२।४४ पा०) इति निष्ठानत्वम्। [अलीनां] भृङ्गाणाम् [आलीम्] आवलीं [बिभ्राणाः] अत एव [श्यामीभूताः अमी तरवः, धूमाकारं] धूमसाम्यं [दधति] त्वं [पश्य]। स्वर्णतटम् अग्निवद्भाति, श्यामास्तरवो धूमवद्भान्तीत्युपमा। जलधरमाला वृत्तम्;— 'अब्ध्यङ्गैः स्याज्जलधरमाला म्भौ स्मौ' इति लक्षणात्॥ ३०॥

व्योमेति।—[व्योमस्पृशः] अभ्रंकषाः [उन्निद्रपुष्पचणचम्पकपिङ्ग-भासः] उन्निद्रैर्विकसितैः पुष्पैर्वित्ता उन्निद्रपुष्पचणाः। "तेन वित्त—" (५।२।२६ पा०) इति चणप्प्रत्ययः। ते च ते चम्पकाश्च तद्वत्पिङ्गभासः पिङ्गवर्णाः, [कलधौतभित्तीः] कनकतटीः। 'कलधौतं रौप्यहेम्नोः' इति विश्वः। [प्रथयता] प्रकटयता, अत एव [सौमेरवीं] सुमेरुसम्ब-

रुचिरचित्रतनूरुहशालिभिः
प्रचलितैः परितः प्रियकव्रजैः ।
विविधरत्नमयैरभिभात्यसा-
ववयवैरिव जङ्गमताङ्गतैः ॥ ३२ ॥
कुशेशयैरत्र जलाशयोषिता
मुदा रमन्ते कलभा विकस्वरैः ।

---

म्बिनीं [ नितम्बशोभां ] कटकलक्ष्मीम् [ अधिगतेन ] प्राप्तवता । "गत्यर्थाकर्मक—" (३।४।७२ पा०) इत्यादिना गमेः कर्त्तरि क्तः । [एतेन] रैवतकाद्रिणा [ भारतं ] भरतस्य राज्ञ इदं भारताख्यं वर्षं भूखण्डम् । 'स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम्' इत्यमरः । [ इलावृत-वत् ] इलावृतवर्षमिव [ विभाति ] इत्युपमा । नवखण्डस्य जम्बूद्वीपस्य हिमाद्रेर्दक्षिणभूखण्डं हैमवतापरनामकं भारतवर्षं सुमेरुयोगात्सौमेर-वापराख्यं मध्यमखण्डमिलावृतवर्षम्, अत एव 'नाम्नेदं भारतं वर्षं हिमाद्रेस्तच्च दक्षिणे । तेन हैमवतं नाम परेष्वप्येवमुन्नयेत् । इला-वृतं सौमेरवं सुमेरोः परितो हि तत् ॥' इति वैजयन्ती ॥ ३१ ॥

रुचिरेति ।—[ असौ ] गिरिः [रुचिरचित्रतनूरुहशालिभिः] रुचिरैः उज्ज्वलैः चित्रैर्नानावर्णैस्तनूरुहैः लोमभिः शालन्त इति तथोक्तैः, [ परितः, प्रचलितैः ] प्रसरद्भिः [ प्रियकव्रजैः ] प्रियकाः कम्बलप्रकृतयो मृगविशेषाः, 'प्रियको रोमभिर्युक्तो मृदूच्चमसृणैर्घनैः' इति वैजयन्ती । तेषां व्रजैः समूहैः [ जङ्गमतां ] चरिष्णुतां [ गतैः विविधरत्नमयैरवयवै-रिव ] स्वाङ्गैरिव [ अभिभाति ] प्रतिभाति, इत्युत्प्रेक्षा । द्रुतविलम्बितं वृत्तम् ॥३२॥

कुशेशयैरिति ।—[ अत्र ] अद्रौ [ जलाशयोषिताः ] । जलाशयेषु ह्रदेषु उषिताः वसन्तः "गत्यर्थाकर्मक—" (३।४।७२ पा०) इत्यादिना वसतेः कर्त्तरि क्तः, सम्प्रसारणम्, "मतिबुद्धिपूजार्थेभ्यश्च" ( ३।२।१८८

प्रगीयते सिद्धगणैश्च योषिता-
मुदारमन्ते कलभाविकस्वरैः ॥ ३३ ॥
आसादितस्य तमसा नियतेर्नियोगा-
दाकाङ्क्षतः पुनरपक्रमणेन कालम्।
पत्युस्त्विषामिह महौषधयः कलत्र-
स्थानं परैरनभिभूतममूर्वहन्ति ॥ ३४ ॥

---

पा०) इति चकाराद्वर्त्तमानार्थता। [कलभाः] त्रिंशद्वर्षकरिणः। 'त्रिंशद्वर्षस्तु कलभः' इति वैजयन्ती। [विकस्वरैः] विकसनशीलैः "स्थेशभासपिसकसो वरच्" (३।२।१७५ पा०) इति वरच्। [कुशे-शयैः] शतपत्रैः "शतपत्रं कुशेशयम्" इत्यमरः। [मुदा] प्रीत्या [रमन्ते] क्रीड़न्ति; करिविहाराणां कमलाकराणामयमाकर इति भावः। किञ्च, कला अव्यक्तमधुराः विकारो मानसो भावः स प्रयो-जनमेषां भाविका उद्दीपका इत्यर्थः, कला भाविकाश्च स्वराः षड्जादयो येषां तैः [कलभाविकस्वरैः, सिद्धगणैः] सुरसङ्घैः [योषितां] स्वस्त्रीणाम् [अन्ते] समीपे [उदारम्] उच्चैः [प्रगीयते च]। भूस्वर्गोऽयमिति भावः * ॥ ३३ ॥

आसादितस्येति।—[इह] अद्रौ [अमूर्महौषधयः, नियतेर्नियोगात्] अस्मिन् काले इदं भावीति दैवशासनात्। [तमसा] अन्धकारेण तत्प्रायेण व्यसनेन वा [आसादितस्य] आक्रान्तस्य [पुनरपक्रमणेन] पुनरावृत्त्या [कालं] समागमकालम् [आकाङ्क्षतः] पुनरागत्य सङ्गन्तु-मिच्छत इत्यर्थः [त्विषां पत्युः] सूर्य्यस्य सम्बन्धि [परैः] तेजोऽन्तरैः, पुरुषान्तरैश्च [अनभिभूतम्] अतिरस्कृतमनुपहतञ्च [कलत्रस्थानं] कलत्रभूतानां त्विषां स्थानं स्थितिं [वहन्ति] निर्वहन्तीत्यर्थः; स्त्रीणां स्त्रीष्वेव रक्षणं कार्य्यमिति भावः। यथा केनचिदापदि न्यासी-

---

* अत्र यमकालङ्कारः।

वनस्पतिस्कन्धनिषण्णबाल-
प्रवालहस्ताः प्रमदा इवात्र ।
पुष्पेक्षणैर्लम्भितलोचकैर्वा
मधुव्रतव्रातवृतैर्व्रतत्यः ॥ ३५ ॥
विहगाः कदम्बसुरभाविह गाः
कलयन्त्यनुक्षणमनेकलयम् ।

---

कृतानि कललाणि संरक्ष्य कालान्तरे साधवस्तस्मै प्रयच्छन्ति, तद्वदोषक्षयोऽपि त्विषः त्विषां पत्युरर्पयन्तीत्यर्थः। एतच्च तासां सूर्य्यास्तसमये प्रज्वलनादुदये विपर्य्ययाच्चोपचर्यते। अत्र विशेषणसाम्यादर्कादीनामापन्नादिसाम्यप्रतीतेः समासोक्तिरलङ्कारः ॥ ३४ ॥

वनस्पतीति।—[ अत्र ] अद्रौ [ वनस्पतिस्कन्धनिषण्णबालप्रवालहस्ताः ] वनस्पतयो वृक्षाः। 'वनस्पतिर्वृक्षमात्रे विनापुष्पफलद्रुमे' इति विश्वः। तेषां स्कन्धेषु प्रकाण्डेषु अंसेषु च, निषण्णाः सक्ताः बालप्रवाला बालपल्लवा हस्ता इव यासां तास्तथोक्ताः [ मधुव्रतव्रातवृतैः ] मधूनि व्रतयन्ति भुञ्जते इति मधुव्रता मधुपाः, तेषां व्रातेन वृन्देन वृतैः छन्नैः, अत एव [ लम्भितलोचकैः ] लम्भिताः प्रापिताः लोचकास्तारकाणि कज्जलानि च यैस्तैः [वा] तैरिव स्थितैरित्युत्प्रेक्षा। इवार्थे वाशब्दः तद्वदुत्प्रेक्षायाश्च व्यञ्जकः। 'लोचको मांसपिण्डे स्यादक्षितारे च कज्जले' इति विश्वः। पुष्पैरीक्षणैरिव [ पुष्पेक्षणैः ] उपलक्षिताः [ व्रतत्यः ] लताः [ प्रमदा इव ] लक्ष्यन्त इति शेषः। न प्रसिद्धे क्रियाऽध्याहारदोषः इत्याह वामनः ; यथा,—"लिङ्गाध्याहारौ" (५ अधि० १ अध्या० १४सू० ) इति * ॥ ३५ ॥

विहगा इति।—कदम्बैः सुरभिः सुगन्धिस्तस्मिन् [ कदम्बसुरभौ, इह ] अद्रौ [ विहगाः ] पक्षिणः [ अनुक्षणं ] प्रतिक्षणम् [ अनेकलयम् ]

---

* अत्र श्लेषोपमोत्प्रेक्षाणां सङ्करः।

अभ्रमयन्नुपैति मुहुरभ्रमयं
पवनश्च धूतनवनीपवनः ॥ ३६ ॥

विद्वद्भिरागमपरैर्विवृतं कथञ्चि-
च्छ्रुत्वाऽपि दुर्ग्रहमनिश्चितधीभिरन्यैः।
श्रेयान् द्विजातिरिव हन्तुमघानि दक्षं
गूढार्थमेष निधिमन्त्रगणं बिभर्त्ति ॥ ३७ ॥

---

अनेके बहुविधा लया विच्छेदा यस्मिन् कर्मणि तद्यथा तथा। [ गाः ] वाचः, शब्दानित्यर्थः। [ कलयन्ति ] उच्चारयन्ति। 'अर्जुनीनेत्रदिग्-बाणभूवाग्वारिषु गौर्मता' इति विश्वः। किञ्च धूतानि कम्पितानि नवानि नीपवनानि कदम्बकाननानि येन सः [ धूतनवनीपवनः ]। 'नीपप्रियककदम्बास्तु हलिप्रिये' इत्यमरः। [ अयं पवनश्च मुहुः, अभ्रं ] मेघं [अभ्रमयन्नुपैति]। प्रमिताक्षरा वृत्तम्,—'प्रमिताक्षरा सजससैरुदिता' इति लक्षणात् ॥ ३६ ॥

विद्वद्भिरिति।—[ एषः ] अद्रिः [ श्रेयान् ] श्रेष्ठः [ द्विजातिरिव ] ब्राह्मण इव ; आगमो निधिकल्पो मन्त्रशास्त्रञ्च स एव परं प्रधानं येषां तैः [आगमपरैः, विद्वद्भिः] निधीनां मन्त्राणाञ्च साधनविधानज्ञैः [ कथञ्चित्, विवृतं ] स्वरूपतः प्रकाशितम् ; नास्ति निश्चिता इदमित्थमिति निश्चयात्मिका धीर्येषां तैः [ अनिश्चितधीभिरन्यैः ] अशास्त्रज्ञैः [श्रुत्वाऽपि] इह निधिरस्ति, ईदृङ्महिमा असौ मन्त्र इति चाप्तमुखादाकर्ण्यापि [ दुर्ग्रहं ] दुःसाधनम् [ अघानि ] दुःखान्येनांसि च [ हन्तुं, दक्षं ] समर्थम्। 'दुःखैनोव्यसनेष्वघम्' इति वैजयन्ती। गूढः संवृतोऽर्थो धनमभिधेयञ्च यस्मिन् तं [ गूढार्थं, निधिमन्त्रगणं ] निधयो मन्त्रा इव, अन्यत्र,—निधय इव मन्त्रास्तेषां गणं [ बिभर्त्ति ] द्विजातिर्मन्त्रगणमिव निधिगणमेष बिभर्त्तीत्युपमाऽर्थः * ॥ ३७ ॥

---

* श्लेषः उपमा चालङ्कारौ।

**विम्बोष्ठं बहु मनुते तुरङ्गवक्त्र-**
**श्चुम्बन्तं मुखमिह किन्नरं प्रियायाः ।**
**श्लिष्यन्तं मुहुरितरोऽपि तं निजस्त्री**
**मुत्तुङ्गस्तनभरभङ्गभीरुमध्याम् ॥ ३८ ॥**

**यदेतदस्यानुतटं विभाति**
**वनं ततानेकतमालतालम् ।**
**न पुष्पिताऽत्र स्थगिताऽर्करश्मा-**
**वनन्तताने कतमा लताऽलम् ॥ ३९ ॥**

---

विम्बोष्ठमिति ।—[ इह ] अद्रौ, तुरङ्गस्य वक्त्रमिव वक्त्रं यस्य सः [ तुरङ्गवक्त्रः ] देवयोनिविशेषः । सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्चेत्युष्ट्रमुखवत्समासः । विम्बकल्प ओष्ठौ यस्य तं [ विम्बोष्ठम् ] इत्युपमाऽलङ्कारः । "ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्" * (वा०) इत्योकारः । [ प्रियायाः मुखं चुम्बन्तं, किन्नरं ] मानुषमुखमश्वाङ्गं देवयोनिविशेषं [ बहु ] गुरु यथा तथा [ मनुते ] अवबुध्यते ; तुरङ्गवक्त्रस्य चुम्बनासम्भवादिति भावः । [ इतरोऽपि ] किन्नरोऽपि [ उत्तुङ्गस्तनभरभङ्गभीरुमध्याम् ] उत्तुङ्गस्तनभरेण यो भङ्गस्तस्माद्भीरुर्मध्यो यस्यास्तां [ निजस्त्रीं ] स्वस्त्रियम् । "वाम्शसोः" ( ६।४।८० पा० ) इति विकल्पादियङादेशाभावः । [ मुहुः श्लिष्यन्तं ] मानुषाङ्गत्वादालिङ्गन्तं [तं] तुरङ्गवक्त्रं, बहु यथा तथा मनुते । तुरङ्गवपुषः किन्नरस्याश्लेषासम्भवादिति भावः । दुर्लभं प्रियं भवतीति रहस्यम् । मध्यस्याभङ्गेऽपि भङ्गोक्तेरतिशयोक्तिः उपमया संसृज्यते । प्रहर्षिणी वृत्तम् ॥ ३८ ॥

यदिति ।—[ अस्य ] अद्रेः [ अनुतटं ] तटेषु । विभक्त्यर्थेऽव्ययीभावः । तता विस्तृता अनेके बहवस्तमालास्तालाश्च यस्मिन् तत्

---

* "एङि पररूपम्" ( ६।१।९४ पा० ) इत्यत्र काशिकोक्तमेतत् वार्त्तिकम् ।

दन्तोज्ज्वलासु विमलोपलमेखलान्ताः
सद्रत्नचित्रकटकासु वृहन्नितम्बाः ।
अस्मिन् भजन्ति घनकोमलगण्डशैला
नार्य्योऽनुरूपमधिवासमधित्यकासु ॥ ४० ॥
अनतिचिरोज्झितस्य जलदेन चिर-
स्थितबहुबुद्बुदस्य पयसोऽनुकृतिम् ।

[ ततानेकतमालतालं यत्, एतत् ] पुरोवर्त्ति [ वनं विभाति, स्थगिताऽर्करश्मौ ] तिरोहितातपे [ अनन्ततानि ] अपारविस्तारे [ अत्र ] वने [कतमा लता ] का वा लता [ अलम् ] अत्यन्तं [ न पुष्पिता ] सञ्जातपुष्पा न भवतीति शेषः ; सर्वापि पुष्पितेत्यर्थः * ॥ ३९ ॥

दन्तोज्ज्वलास्विति ।—[ अस्मिन् ] अद्रौ [ दन्तोज्ज्वलासु ] दन्ता निकुञ्जा दशनाश्च, 'दन्तो निकुञ्जे दशने' इति विश्वः । तैरुज्ज्वलासु रुचिरासु [ सद्रत्नचित्रकटकासु ] सद्रत्नैश्चित्राणि कटकानि सानूनि वलयानि च यासां तासु । 'कटकं वलये सानौ' इति विश्वः । [ अधित्यकासु ] ऊर्द्ध्वभूमिषु । 'भूमिरूर्द्ध्वमधित्यका' इत्यमरः । "उपाधिभ्यां त्यकन्नासन्नारूढ़योः" (५।२।३४ पा०) इत्यधिशब्दात्त्यकन्प्रत्ययः । [ विमलोपलमेखलान्ताः ] विमलोपलाः उज्ज्वलशिला उज्ज्वलमणयो वा मेखलाः काञ्च्यो नितम्बभूमयश्च । 'मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः' इति विश्वः । ताभिरन्ता रम्याः । 'मृताववसिते रम्ये समाप्तावन्त इष्यते' इति शब्दार्णवे । [ वृहन्नितम्बाः ] वृहन्तो नितम्बाः कटिपश्चाद्भागाः शिखराणि च यासां ताः । 'नितम्बो रोधसि स्कन्धे शिखरेऽपि कटेरधः' इति विश्वः । [ घनकोमलगण्डशैलाः ] घना विपुलाः कोमलाः श्लक्ष्णाः गण्डशैलाः गण्डस्थलानि स्थूलोपलाश्च यासां ताः [ नार्य्योऽनुरूपम् ] इच्छासदृशम् आत्मसदृशं वा, [ अधिवासं भजन्ति ] । अत्र नारीणामधित्यकानाञ्च प्रकृतत्वात् केवलप्रकृतगोचरा

* अत्र यमकमलङ्कारः ।

विरलविकीर्णवज्रशकला सकला-
मिह विदधाति धौतकलधौतमही ॥ ४१ ॥

वर्जयन्त्या जनैः सङ्गमेकान्तत-
स्तर्कयन्त्या सुखं सङ्गमे कान्ततः ।
योषयैष स्मरासन्नतापाङ्गया
सेव्यतेऽनेकया सन्नतापाङ्गया ॥ ४२ ॥

---

श्लेषोपस्थापिता तुल्ययोगिता ; अत एवोभयविशेषणानि उभयत्र विभक्तिविपरिणामेन योज्यानि ॥ ४० ॥

अनतिचिरेति ।—[ इह ] अद्रौ [ विरलविकीर्णवज्रशकला ] विरलं यथा तथा विकीर्णाः प्रसरणशीलाः वज्रशकला * यस्यां सा [ धौत-कलधौतमही ] धौता शुभ्रा कलधौतमही रजतभूमिः 'कलधौतं रूप्य-हेम्नोः' इति विश्वः । [ जलदेन अनतिचिरोज्झितस्य ] तत्कालमुक्तस्य शुभ्रस्येति भावः । [ चिरस्थितबहुबुद्बुदस्य ] चिरस्थिताश्चिरस्थायिनो बहवश्च बुद्बुदा जलस्फोटा यस्मिन् तस्य [ पयसः ] अम्भसः [ सकला-मनुकृतिं ] समग्रसादृश्यं [ विदधाति ] † । अत्र मेघोज्झितजलस्य स्थिर-बुद्बुदासम्बन्धेऽपि सम्भावनया सम्बन्धोक्तेरतिशयोक्तिः । कुररीरुता वृत्तम्,—'कुररीरुता नजभजैर्लगयुक्' इति लक्षणात् ॥ ४१ ॥

वर्जयन्त्येति ।—[ एकान्ततः ] एकान्ते, रहसीत्यर्थः । [ कान्ततः ] कान्तेन, प्रियेणेत्यर्थः । उभयत्रापि सार्वविभक्तिकस्तसिः । [ सङ्गमे ] सति [ सुखं तर्कयन्त्या ] उत्प्रेक्षमाणया विस्रब्धं विहारमाकाङ्क्षन्त्ये-त्यर्थः ; अत एव [ जनैः सङ्गं वर्जयन्त्या ], कुतः ?—स्मरेणासन्नतापानि प्राप्तज्वराणि अङ्गानि यस्यास्तया [ स्मरासन्नतापाङ्गया ]। "अङ्ग-गात्रकण्ठेभ्यश्चेति वक्तव्यम्" ‡ इति विकल्पादिह पक्षे टाप् । सन्नतो

---

* श्वेतहीरकखण्डानि ।

† इत्युपमा ।

‡ "नासिकोदरौष्ठ—" ( ४।१।५५ पा० ) इत्यस्य वार्त्तिकम् ।

सङ्कीर्णकीचकवनस्खलितैकबाल-
विच्छेदकातरधियश्चलितुं चमर्यः।
अस्मिन् मृदुश्वसनगर्भतदीयरन्ध्र-
निर्यत्स्वनश्रुतिसुखादिव नोत्सहन्ते ॥४३॥
मुक्तं मुक्तागौरमिह क्षीरमिवाभ्रै-
र्वापीष्वन्तर्लीनमहानीलदलासु।

---

नम्रावपाङ्गौ यस्यास्तया [सन्नतापाङ्गया] स्मरतापात् कूणितनेत्रया [अनेकया योषया] अनेकाभिर्योषाभिरित्यर्थः। जातावेकवचनम्। 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः। [एषः] अद्रिः [सेव्यते]; इच्छाविहारस्थानानि इह सन्तीति भावः। * स्रग्विणी वृत्तम्;—'रैश्चतुर्भिर्युता स्रग्विणी सम्मता' इति लक्षणात् ॥ ४२ ॥

सङ्कीर्णेति।—[अस्मिन्] अद्रौ [सङ्कीर्णकीचकवनस्खलितैकबालविच्छेदकातरधियः] सङ्कीर्णाः मिथः सन्दष्टाः कीचकाः वेणुविशेषाः। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। तेषां वने स्खलितस्यैकबालस्यैकरोम्णो विच्छेदात् कातरा त्रस्ता धीर्यासां ताः [चमर्यः, मृदुश्वसनगर्भतदीयरन्ध्रनिर्यत्स्वनश्रुतिसुखादिव] मृदुश्वसनो मन्दमारुतो गर्भे येषां तेभ्यस्तदीयरन्ध्रेभ्यः कीचकविवरेभ्यो निर्यतो निर्गच्छतः स्वनस्य श्रुत्या श्रवणेन यत् सुखं तस्मादिवेति हेतूत्प्रेक्षा। [चलितुं नोत्सहन्ते] वस्तुतस्तु बालप्रियत्वादिति भावः। "शकधृष—" (३।४।६५ पा०) इत्यादिना तुमुन् प्रत्ययः † ॥ ४३ ॥

मुक्तमिति।—[इह] अद्रौ [अन्तर्लीनमहानीलदलासु] अन्तर्लीनानि महानीलदलानि इन्द्रनीलविशेषखण्डानि यासु तासु। 'सिंहलस्थाकरोद्भूता महानीलास्तु ते मताः' इति भगवानगस्त्यः।

---

* अत्र यमकयोः संसृष्टिः।

† वसन्ततिलका वृत्तम्।

शस्त्रीश्यामैरंशुभिराशु द्रुतमम्भ-
श्छायामच्छामृच्छति नीलीसलिलस्य ॥४४॥
या न ययौ प्रियमन्यवधूभ्यः
सारतरागमना यतमानम्।
तेन सहेह बिभर्त्ति रहः स्त्री
सा रतरागमनायतमानम् ॥ ४५ ॥

[ वापीषु ] दीर्घिकासु [ अभ्रैः ] मेघैः [ मुक्तं ] वृष्टं [मुक्तागौरं] मौक्तिकशुभ्रम्, अत एव [क्षीरमिव] स्थितम् [अम्भः, शस्त्रीश्यामैः] शस्त्री छुरिका 'स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका' इत्यमरः। "बह्वादिभ्यश्च" ( ४।१।४५ पा० ) इति ङीष्। शस्त्रीवत् श्यामैः [ अंशुभिः ] अन्तर्गतेन्द्रनीलमरीचिभिः [ आशु ] तत्क्षणमेव [ द्रुतं ] लोलितं सत्, छुरितमित्यर्थः। [ नीलीसलिलस्य ] नीलाख्यौषधिपत्ररसस्य। 'नीली काला क्लीतकिका' इत्यमरः। [ अच्छां, छायां ] कान्तिम् [ ऋच्छति ] तत्सदृशीं छायां गच्छतीत्यर्थः ; अतो निदर्शनाऽलङ्कारः। स च मुक्तागौरं क्षीरमिव शस्त्रीश्यामैरिति चोपमात्रयेण, अन्तर्लीनमहानीलदलासु वापीष्विति पदार्थहेतुकं काव्यलिङ्गम् ; तेनोत्थापितेनांशुभिर्द्रुतमिति तद्गुणेन उत्थापितः इत्यङ्गाङ्गिभावेन सङ्करः। * क्षीरमिवेत्यनेनेन्द्रनीलानां सौष्ठवं सूचितम्। 'क्षीरमध्ये क्षिपेन्नीलं क्षीरश्चेन्नीलतां व्रजेत्। इन्द्रनीलमिति ख्यातम्' इति लक्षणसम्भवात्। तेनात्र नीलीरसोपमानेन तद्वर्णा एवेति सूचितम्। 'नीलीरसनिभाः केचिच्छम्भुकण्ठनिभाः परे' इत्यादिना अगस्त्येन रत्नशास्त्र एषामेकादशविधच्छायाऽभिधानादिति। मत्तमयूरं वृत्तम् ;—'वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम्' इति लक्षणात् ॥ ४४ ॥

या नेति।—[ इह ] अद्रौ [ अन्यवधूभ्यः ] स्त्र्यन्तरेभ्यः। "पञ्चमी

* अत्र पदार्थहेतुककाव्यलिङ्गोत्थापितेन अंशुभिर्द्रुतमिति तद्गुणेनोत्थापितः इत्येषामङ्गाङ्गिभावेन सङ्करः।

भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दो-
रुच्चावचैरुपगतेषु सहस्रसङ्ख्याम्।
दोषाऽपि नूनमहिमांशुरसौ किलेति-
व्याकोशकोकनदतां दधते नलिन्यः ॥४६॥

---

विभक्ते" (२।३।४२ पा०) इति पञ्चमी। सारतरं श्रेष्ठमागमनं यस्याः सा [सारतरागमना] श्लाघ्यसङ्गमेत्यर्थः। [या स्त्री, यतमानं] स्वप्राप्त्यै प्रयतमानं, प्रार्थयमानमित्यर्थः। 'यती प्रयत्ने' शानच्। [प्रियं न ययौ, सा] तथा प्रतिकूलाऽपि स्त्री [रहः, तेन] प्रियेण [सह, अनायतमानम्] अदीर्घरोषं यथा तथा [रतरागं] सुरताभिलाषं [बिभर्त्ति]। अयमतिमानवतीरपि सद्य एवोद्दीपयतीति भावः। दोधकवृत्तम्;—'दोधकवृत्तमिदं भभभा गौ' इति लक्षणात् * ॥ ४५ ॥

भिन्नेष्विति।—[इह] अद्रौ [इन्दोः किरणेषु] उदञ्चश्चावाञ्चश्च तैः [उच्चावचैः] अनेकविधैरित्यर्थः 'उच्चावचं नैकभेदम्' इत्यमरः। (२।१।७२ पा०) मयूरव्यंसकादिषु उच्चावचोच्चनीचाचितोपचितावचित-पराचितनिश्चप्रचाकिञ्चनानीति तत्पुरुषे निपातनात् साधुः। [रत्नकिरणैः, भिन्नेषु] मिश्रेषु, अत एव [सहस्रसङ्ख्यामुपगतेषु] सत्सु [नलिन्यः] पद्मिन्यः। 'नलं पद्मे नलं तृणम्' इति शाश्वतः। [असौ] प्रकाशमानः [अहिमांशुः किलेति] सहस्रकिरणत्वात् सूर्य्य एवेति सम्भावनाबुद्ध्येत्यर्थः। 'वार्त्तासम्भाव्ययोः किल' इत्यमरः। [दोषाऽपि] रात्रावपि। सप्तम्यर्थेऽव्ययम्। 'दिवाह्नीत्यथ दोषा च नक्तञ्च रजनौ' इत्यमरः। [व्याकोशकोकनदतां] विकचपद्मतां [दधते] स्वीकुर्व्वन्ति। [नूनम्] इत्युत्प्रेक्षायाम्। 'अथ रक्तसरोरुहम्। रक्तोत्पलं कोकनदम्' इति, 'व्याकोशविकचस्फुटाः' इति चामरः। इह दैवभूमित्वान्नित्य-पद्मा नलिन्य इति भावः। इह नलिनीनां दोषातनविकासासम्बन्धेऽपि तत्सम्बन्धरूपयातिशयोक्त्या तस्येन्दावर्कभ्रान्तिनिमित्तोत्प्रेक्षया भ्रान्ति-मदलङ्कारो व्यज्यते ॥ ४६ ॥

---

* अत्र यमकमलङ्कारः।

अपशङ्कमङ्कपरिवर्त्तनोचिता-
श्चलिताः पुरः पतिमुपैतुमात्मजाः ।
अनुरोदितीव करुणेन पत्रिणां
विरुतेन वत्सलतयैष निम्नगाः ॥ ४७ ॥

मधुकरविटपानमिता-
स्तरुपङ्क्तीर्बिभ्रतोऽस्य विटपानमिताः ।
परिपाकपिशङ्गलता-
रजसा रोधश्चकास्ति कपिशं गलता ॥ ४८ ॥

---

अपशङ्कमिति ।—[ अपशङ्कं ] निःशङ्कम् [ अङ्कपरिवर्त्तनोचिताः ] अङ्कपरिवर्त्तनेषु उत्सङ्गलुण्ठनेषु, उचिताः परिचिताः [ पतिं ] भर्त्तारम् [उपैतुं, पुरः] अग्रे [चलिताः] प्रयाताः [ आत्मजाः ] स्वसम्भवा दुहितृश्च [ निम्नगाः ] नदीः [ करुणेन ] दीनेन [ पत्रिणां ] पक्षिणां [ विरुतेन ] क्रोशनेन निमित्तेन [ एषः ] अद्रिः [वत्सलतया] वात्सल्येन स्नेहेनेत्यर्थः । 'प्रेमान् स्निग्धस्तु वत्सलः' इत्यमरः "वत्सांसाभ्यां कामबले" ( ५।२।९८ पा० ) इति लच् प्रत्ययः । [ अनुरोदितीव ] अनुक्रोशतीवेत्युत्प्रेक्षा, आत्मजा इति श्लेषेण सङ्कीर्य्यते । "रुदश्च पञ्चभ्यः" ( ७।३।९८ पा० ) इति गुणः, 'रुदादिभ्यः सार्वधातुके" ( ७।२।७६ पा० ) इतीट् ॥४७॥

मधुकरेति ।—[ मधुकरविटपानमिताः ] मधुकरा एव विटास्तेषां पानं चुम्बनम्, इताः प्राप्ताः । इणः कर्त्तरि क्तः । विटपैः शाखा-विस्तारैरानमिताः [ विटपानमिताः ] । 'विस्तारो विटपोऽस्त्रियाम्' इत्यमरः । [ तरुपङ्क्तीर्बिभ्रतः, अस्य ] अद्रेः [ रोधः ] नितम्बः [ गलता ] पतता ; परिपाकेण पिशङ्गीनां लतानां रजः पुष्परेणुः तेन [ परिपाकपिशङ्गलतारजसा, कपिशं ] पिशङ्गं [ चकास्ति ] * । माला-

---

* अत्र तद्गुणस्य रूपकस्य यमकयोश्च संसृष्टिः ।

प्राग्भागतः पतदिहेदमुपत्यकासु
शृङ्गारितायतमहेभकराभमम्भः ।
संलक्ष्यते विविधरत्नकरानुविद्ध-
मूर्द्ध्वप्रसारितसुराधिपचापचारु ॥ ४९ ॥
दधति च विकसद्विचित्रकल्प-
द्रुमकुसुमैरभिगुम्फितानिवैताः ।

---

वृत्तेष्वियमार्य्यागीतिरष्टगणा । 'अर्द्धे वसुगणा आर्य्यागीतिः' इति पिङ्गलनागः * ॥ ४८ ॥

प्राग्भागत इति ।—[ इह ] अद्रौ [ प्राग्भागतः ] ऊर्द्ध्वप्रदेशात् [ उपत्यकासु ] अधःप्रदेशेषु । 'उपत्यकाद्रेरासन्ना' इत्यमरः । उपा-धिभ्याम्—" ( ५।२।३४ पा० ) इत्यादिनोपशब्दात् त्यकन्प्रत्ययः । [ पतत्, शृङ्गारितायतमहेभकराभम् ] शृङ्गारः सिन्दूरादिमण्डनमस्य सञ्जातः शृङ्गारितः † । 'शृङ्गारः सुरते नाट्ये रसे दिग्गजमण्डने' इति विश्वः । आयतो दीर्घः तस्य महेभकरस्याभेवाभा यस्य तत्, [ विविधरत्नकरानुविद्धं ] विविधरत्नानां करैरंशुभिरनुविद्धमनुरञ्जितम् [इदमम्भः, ऊर्द्ध्वप्रसारितसुराधिपचापचारु] ऊर्द्ध्वं प्रसारितं यत् सुराधिप-चापमिन्द्रधनुस्तद्वच्चारु [ संलक्ष्यते ]। अत्रेन्द्रचापस्योर्द्ध्वत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । अभूतोपमेति मतान्तरम् । तिरोहितविव-क्षायां तूपमानस्य प्रसिद्धत्वादुपमैवेयम् ॥ ४९ ॥

दधतीति ।—किञ्चेति चार्थः । [ अमुष्य ] अद्रेः [ एताः, शिखर-शिखाः ] शिखराणि शृङ्गाण्येव शिखाः केशपाशयः । 'शिखा चूड़ा

---

* अत्रेदं ज्ञातव्यम् ;—सार्द्धसप्तगणम् आर्य्यापूर्व्वार्द्धम् ; तदन्ते एको गुरुः, द्वात्रिंशन्मात्राः इत्यर्थः । तेन अर्द्धं भवति, एवमेव अपरार्द्धं चेत् आर्य्यागीतिरिति । प्राकृतपिङ्गले तु स्कन्धकाख्यया प्रसिद्धिरस्य ; तथा च,—"चौमत्ता अट्ठगणाः पूव्वद्धे उत्तद्धे वि होंत्ति समरुआ । सो कन्धहा वि आणउ" इति ।

† तारकादित्वादितच् ।

चणामलघुविलम्बिपिच्छदाम्नः
शिखरशिखाः शिखिशेखरानमुष्य ॥ ५० ॥

सवधूकाः सुखिनोऽस्मि-
न्ननवरतममन्दरागतामरसदृशः ।
नासेवन्ते रसव-
न्न नवरतममन्दरागतामरसदृशः ॥ ५१ ॥

---

केशपाशौ' इत्यमरः। [विकसद्विचित्रकल्पद्रुमकुसुमैः] विकसद्भि-र्विचित्रैः नानावर्णैः कल्पद्रुमकुसुमैः [अभिगुम्फितान् इव] ग्रथितानिव स्थितानित्युत्प्रेक्षा। [अलघुविलम्बिपिच्छदाम्नः] अलघूनि विलम्बीनि लम्बमानानि च पिच्छान्येव दामानि स्रजो येषु तान् [शिखिशेखरान्] शिखिनः केकिन एव शेखरान् आपीडान् [चणं दधति] इव। 'शिखा-बलः शिखी केकी' इति 'शिखास्वापीड़शेखरौ' इति चामरः। अत्र कुसुमगुम्फेनोत्प्रेक्षालिङ्गेन पिच्छादीनां दामादिरूपकसिद्धिस्तदुत्थापिता चोत्प्रेक्षेति सङ्करः। पुष्पिताग्रा वृत्तम् ॥ ५० ॥

सवधूका इति।—[अस्मिन्] अद्रौ, अवरे न भवन्तीत्यनवराः श्रेष्ठाः, अनवरतमाः श्रेष्ठतमाश्च मन्दरागतैरमरैः सदृशाः सरूपाश्च [अनवरत-ममन्दरागतामरसदृशः] अमन्दरागाण्यतिरक्तानि तामरसानि पङ्के-रुहाणीव दृशो येषां ते [अमन्दरागतामरसदृशः] रक्तनेत्राः। 'पङ्के-रुहं तामरसम्' इत्यमरः। [सुखिनः] भोगिनः सह वधूभिः [सव-धूकाः] सन्तः। "तेन सहेति तुल्ययोगे" (२।२।२८ पा०) इति बहु-व्रीहिः, "नद्यृतश्च" (५।४।१५३ पा०) इति कप्। [रसवत्] सानुरागम्। 'गुणे रागे द्रवे रसः' इत्यमरः। [नवरतं] नूतनसुरतं [नासेवन्ते] इति [न] किन्त्वासेवन्त एवेत्यर्थः। "सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ" [५म अधि० १म अध्या० ९ सू०] इति वामनः। विशिष्ट-सुरतानां सेवनस्य सामान्यतः प्रसक्तेः। उपमाऽलङ्कारः, यमकञ्च। गतेयमार्य्यागीतिः ॥ ५१ ॥

आच्छाद्य पुष्पपटमेष महान्तमन्त-
रावर्त्तिभिर्गृहकपोतशिरोधराभैः
स्वाङ्गानि धूमरुचिमागुरवीं दधानै-
र्धूपायतीव पटलैर्नवनीरदानाम् ॥ ५२ ॥

अन्योऽन्यव्यतिकरचारुभिर्विचित्रै-
रत्रस्यन्नवमणिजन्मभिर्मयूखैः।
विस्मेरान् गगनसदः करोत्यमुष्मि-
न्नाकाशे रचितमभित्ति चित्रकर्म ॥ ५३ ॥

---

आच्छाद्येति।—[ एषः ] अद्रिः [ महान्तं, पुष्पपटं ] पुष्पाण्येव पट इति रूपकम्। तम् [ आच्छाद्य, अन्तः ] पटाभ्यन्तरे [ आवर्त्तिभिः ] अभीक्ष्णं भ्रमद्भिः। "बहुलमाभीक्ष्ण्ये" ( ३।२।८१ पा० ) इति णिनिः। [ गृहकपोतशिरोधराभैः ] गृहकपोतशिरोधराया गृहपारावतकण्ठस्याभेवाभा येषां तैरित्युपमा। 'पारावते कपोतः स्यात्' इति विश्वः। अगुरोः कालागुरोरिमाम् [ आगुरवीम् ]। 'कालागुर्वगुरुः स्यात्' इत्यमरः। [ धूमरुचिं ] धूमकान्तिं तत्सदृशीमित्यर्थः। अत एव निदर्शना। [ दधानैर्नवनीरदानां पटलैः स्वाङ्गानि, धूपायतीव ] धूपैरधिवासयतीवेत्युत्प्रेक्षा, रूपकोपमानिदर्शनाभिरङ्गैः सङ्कीर्य्यते। "धूप सन्तापे" इति धातोः "गुपूधूपविच्छिपणिपनिभ्य आयः" ( ३।१। २८ पा० ) इत्यायप्रत्ययः ॥ ५२ ॥

अन्योऽन्येति।—[अमुष्मिन्] अद्रौ [अन्योऽन्यव्यतिकरचारुभिः] अन्योऽन्येषां व्यतिकरेण मिश्रणेन चारुभिः, अत एव [ विचित्रैः ] नानावर्णैः [ अत्रस्यन्नवमणिजन्मभिः ] अत्रस्यन्तः त्रासदोषेणादुष्यन्तः। 'त्रासो भीमणिदोषयोः' इति विश्वः। "वा भ्राश—" ( ३।१।७० पा० ) इत्यादिना वैकल्पिकः श्यन्प्रत्ययः। तेभ्यो नवमणिभ्यो जन्म येषां तैः [ मयूखैराकाशे रचितम्, अभित्ति ] अकुड्यं अनाधारमित्यर्थः। [ चित्र-

समीरशिशिरः शिरःसु वसतां
सतां जवनिका निकामसुखिनाम् ।
बिभर्त्ति जनयन्नयं मुदमपा-
मपायधवला बलाहकततीः ॥ ५४ ॥
मैत्र्यादिचित्तपरिकर्म्मविदो विधाय ।
क्लेशप्रहाणमिह लब्धसबीजयोगाः ।

---

कर्म्म ] कर्त्तृ । [ गगनसदः ] खेचरान् [ विस्मेरान् ] विस्मयशीलान् [ करोति ]। "नमिकम्पि—" ( ३।२।१६७ पा० ) इत्यादिना रप्रत्ययः । अत्र मणिमयूखेषु खे चित्रकर्म्मभ्रान्तिमतामेवाभित्तिचित्रकर्मेति अकारणकार्य्योत्पत्तिवर्णनात् भ्रान्तिमदलङ्कारोत्थापिता विभावनेति सङ्करः,— 'कारणेन विना कार्य्यस्योत्पत्तिः स्याद्विभावना' इति लक्षणात् । प्रहर्षिणी वृत्तम् ॥ ५३ ॥

समीरेति ।—[ समीरशिशिरः ] समीरेण मारुतेन शिशिरः शीतलः [ शिरःसु ] शिखरेषु [ वसतां, निकामसुखिनाम् ] अत्यन्तसुखिनां [ सतां ] पुण्यवतां [ मुदं जनयन्, अयम् ] अद्रिः [ अपाम् ] अम्भसाम् [ अपायधवला ] अपायेनापगमेन धवला [ बलाहकततीः ] मेघपङ्क्तीरेव [ जवनिकाः ] तिरस्करिणीः [ बिभर्त्ति ]। अनावृतेष्वपि शिखरेषु क्रीड़ने मेघैरेवावरणतां सम्पाद्य मुदं जनयतीत्यर्थः । अत्र बलाहकततिष्वारोप्यमाणानां जवनिकानां मुदं जनयन्निति प्रकृतोपयोगित्ववर्णनात् परिणामालङ्कारः,—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति लक्षणात् । रूपके तूपरञ्जनमात्रमिति भेदः । जलोद्धतगतिर्वृत्तम् ;—'रसैर्जसजसा जलोद्धतगतिः' इति लक्षणात् ॥ ५४ ॥

मैत्रीति ।—[ इह ] अद्रौ, समाधिं योगं बिभ्रतीति [ समाधिभृतः ] योगिनः । मैत्री करुणा मुदिता उपेक्षेति चतस्रश्चित्तवृत्तयः । तत्र,—पुण्यकृत्सु मैत्री, दुःखिषु करुणा, सुखिषु मुदिता अनुमोदनं, पापिषु उपेक्षा । मैत्री आदिर्येषां तानि चित्तस्य परिकर्म्माणि प्रसाधकानि,

ख्यातिञ्च सत्त्वपुरुषान्यतयाऽधिगम्य
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम्॥५५॥
मरकतमयमेदिनीषु भानो-
स्तरुविटपान्तरपातिनो मयूखाः।
अवनतशितिकण्ठकण्ठलक्ष्मी-
मिह दधति स्फुरिताणुरेणुजालाः॥५६॥

---

शोधकानीत्यर्थः; तानि विन्दन्ति लभन्ते इति तद्विदः तद्भाजः [मैत्र्यादि-चित्तपरिकर्म्मविदः] तैः क्षीणान्तःकरणमला इत्यर्थः; अत एव [क्लेशप्रहाणं विधाय]। अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः। तत्रानित्येषु नित्यत्वाभिमानः, अनात्मनि च देहेन्द्रियादावात्मधीरित्यादिविभ्रमोऽविद्या। अस्मिता अहङ्कारः। रागोऽभिमतविषयाभिलाषः। द्वेषोऽनभिमतेषु रोषः। अभिनिवेशः कार्य्याकार्य्येष्वाग्रहः। ते हि पुरुषं क्लिश्यन्तीति क्लेशाः, क्लेशहेतवः। पचाद्यच्। तेषां प्रहाणं क्षयः। "कृत्यचः" (८।४।२९ पा०) इति णत्वम्। तद्विधाय क्लेशान् हित्वेत्यर्थः। अतो लब्धः सबीजः सावलम्बनो योगो यैस्ते [लब्धसबीजयोगाः] सन्तः। आलम्बनमेव व्यनक्ति, सत्त्वेति।—[सत्त्वपुरुषान्यतया] सत्त्वपुरुषयोः प्रकृतिपुरुषयोरन्यतया अन्यत्वेन,* मिथो भिन्नत्वेन [ख्यातिं] ज्ञानं [चाधिगम्य] प्रकृतिपुरुषौ भिन्नाविति ज्ञात्वेत्यर्थः। प्रकृतिपुरुषयोर्विवेकाग्रहणात् संसारः। विवेकग्रहणान्मुक्तिरिति साङ्ख्याः। अथ [तां] ख्यातिम् [अपि, निरोद्धुं] निवर्त्तयितुं [वाञ्छन्ति]। वृत्तिरूपां तां निवर्त्य स्वयम्प्रकाशतयैव स्थातुमिच्छन्तीत्यर्थः। "प्रकृतावुपरतायां पुरुषस्वरूपेणावस्थानं मुक्तिः" इति साङ्ख्यसिद्धान्तः। न केवलं भोगभूरियं, किन्तु मोक्षक्षेत्रमपीति भावः॥५५॥

मरकतेति।—[इह] अद्रौ [मरकतमयमेदिनीषु] मरकतानां

---

* अत्र करणत्वात् तृतीया।

या बिभर्त्ति कलवल्लकीगुण-
स्वानमानमतिकालिमाऽलया ।
नात्र कान्तमुपगीतया तया
स्वानमा नमति काऽलिमालया ॥ ५७ ॥

---

विकारा मरकतमय्यस्तासु मेदिनीषु । "स्त्रियाः पुंवत्—" (६।३।३४ पा०) इत्यादिना पुंवद्भावः। [तरुविटपान्तरपातिनः] तरूणां विटपाः पल्लवाः तेषामन्तरैरवकाशैः पतन्तीति तथोक्ताः । 'विटपः पल्लवे षिड्गे विस्तारे स्तम्भशाखयोः' इति विश्वः । स्फुरितान्यगुरेणूनां सूक्ष्मरजसां जालानि येषु ते [स्फुरितागुरेणुजालाः भानोर्मयूखाः, अवनतशितिकण्ठकण्ठलक्ष्मीं] अवनतस्य शितिकण्ठकण्ठस्य मयूरकन्धरायाः लक्ष्मीं [दधति], इति निदर्शनाऽलङ्कारः । पुष्पिताग्रा वृत्तम् ॥ ५६ ॥

येति ।—[अत्र] अद्रौ, अति अत्यन्तः कालिमा कार्ष्ण्यं यस्याः सा [अतिकालिमा] अतिश्यामेत्यर्थः ; न विद्यते लयो लयनं क्वचिदवस्थानं यस्याः सा [अलया]। भ्रमन्तीत्यर्थः । अत एव सस्वनेति भावः [या] अलिमाला [कलवल्लकीगुणस्वानमानं] कलोऽव्यक्तमधुरः वल्लकीगुणस्वानः वीणातन्त्रीशब्दस्तस्य मानमुपमानं [बिभर्त्ति] तन्त्रीवद् ध्वनतीत्यर्थः, उपमाऽलङ्कारः ; [उपगीतया] समीपे गातुं प्रवृत्तयैव, न तु पूर्वं गायन्त्यैवेति भावः । "आदिकर्म्मणि क्तः कर्त्तरि च" (३।४।७१ पा०) इति क्तः । [तया अलिमालया] भृङ्गावल्या [स्वानमा] सुखेनानमयितुमाकष्टुं शक्या, "ईषद्दुः—" (३।३।१२६ पा०) इत्यादिना खल्प्रत्ययः । [का] वा स्त्री [कान्तं] प्रियं [न नमति] सर्वाऽपि मानं विहाय कान्तं सद्यः प्रणमत्येव, तयोद्दीपकत्वान्मानस्येत्यर्थः । * रथोद्धता वृत्तम् ;—'रो नराविति रथोद्धता लगौ' इति लक्षणात् ॥ ५७ ॥

---

* अत्र यमकमलङ्कारः ।

सायं शशाङ्ककिरणाहतचन्द्रकान्त-
निस्यन्दिनीरनिकरेण कृताभिषेकाः ।
अर्कोपलोल्लसितवह्निभिरह्नि तप्ता:
तीव्रं महाव्रतमिवेह चरन्ति वप्राः ॥ ५८ ॥

एतस्मिन्नधिकपयःश्रियं वहन्त्य:
सङ्क्षोभं पवनभुवा जवेन नीताः ।
वाल्मीकेररहितरामलक्ष्मणानां
साधर्म्यं दधति गिरां महासरस्य: ॥ ५९ ॥

---

सायमिति ।—[ इह ] अद्रौ [ वप्राः ] सानवः । 'वप्रोऽस्त्री सानुमानयोः' इत्यमरः । [ सायं ] रात्रौ [ शशाङ्ककिरणाहतचन्द्रकान्तनिस्यन्दिनीरनिकरेण ] शशाङ्ककिरणैराहतेभ्यश्चन्द्रकान्तेभ्यो निस्यन्दिना प्रस्राविणा नीरनिकरेण जलपूरेण [कृताभिषेकाः] कृतस्नानाः [ अह्नि, अर्कोपलोल्लसितवह्निभिः ] अर्कोपलेभ्यः सूर्य्यकान्तेभ्यः उल्लसितैरुत्थितैर्वह्निभिः [तप्ताः] सन्तः [ तीव्रं ] उग्रं, दुश्चरमित्यर्थः, [ महाव्रतं ] महत्तपः [ चरन्तीव ] इत्युत्प्रेक्षा ॥ ५८ ॥

एतस्मिन्निति ।—[ एतस्मिन् ] अद्रौ [ अधिकपयःश्रियम् ] अधिकां जलसमृद्धिं [ वहन्त्यः ], अन्यत्र तु,—अधि अधिकाः कपयः सुग्रीवादयो वर्ण्यत्वेन यासु ताः अधिकपयः, श्रियं गुणालङ्कारादिशोभां वहन्त्यः । पवनाद्भवतीति पवनभूस्तेन [ पवनभुवा ] वायुजन्येन [ जवेन ] वेगेन [सङ्क्षोभं] चलनं [नीताः], अन्यत्र तु,—जवेन जविना । 'जवो जविनि वेगे स्यात्' इति विश्वः । पवनभुवा हनुमता सङ्क्षोभम् औद्धत्यं नीता, हनुमद्वेगवर्णनया प्रागल्भ्यं नीता इत्यर्थः । वाक्पक्षे सर्वत्र यथा विपरिणामः कार्य्यः । [महासरस्यः] महासरांसि [ अरहितरामलक्ष्मणानां ] अरहिताववर्जितौ रामलक्ष्मणौ याभिस्तासाम्, अन्यत्र तु,—

इह मुहुर्मुदितैः कलभै रवः
प्रतिदिशं क्रियते कलभैरवः।
स्फुरति चानुवनं चमरीचयः
कनकरत्नभुवाञ्च मरीचयः॥ ६०॥

---

रामो रमणः अरहितरामा अवियुक्तरामाः लक्ष्मणाः सारसयोषितो यासु ताः, केचित्त्वरहितरामाः अवियुक्तश्लोकाः लक्ष्मणाः सारसा इति पुंपक्षिपरत्वेन व्याचक्षते, तेषां मते 'हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा' 'लक्ष्मणोऽपि सारस्योः' इत्याद्यमरविश्वप्रकाशादिवाक्यगत-नियतस्त्रार्थताविरोधः। तासां [वाल्मीकिगिरां, साधर्म्यं] सादृश्यं [दधति]। अत्र पवनभुवा जवेनेत्यत्रैकवृन्तावलम्बिफलद्वयवदभङ्गैक-पादगतत्वेनार्थद्वयप्रतीतेरर्थश्लेषः; अन्यत्र,—पदभङ्गेनार्थद्वयप्रतीतेर्जतु-काष्ठवच्छब्दयोरेव मिथः श्लिष्टत्वाच्छब्दश्लेषः, इत्युभयसाहित्यादुभयश्लेषो-ऽयं प्रकृताप्रकृतगोचरः, उपमा त्वङ्गमिति सङ्करः॥ ५९॥

इहेति।—[इह] अद्रौ [मुदितैः] इच्छाविहारसन्तुष्टैः [कलभैः] करिपोतैः। 'कलभः करिशावकः' इत्यमरः। दिशि दिशि [प्रतिदिशम्]। यथार्थेऽव्ययीभावः, "अव्ययीभावे शरत्प्रभृतिभ्यः" (५।४।१०७ पा०) इति समासान्तोऽच्प्रत्ययः। कलश्चासौ भैरवश्च [कलभैरवः] मधुरभीषणः। विशेषणयोरपि कुपाणिखञ्जवदैच्छिकोपसर्जनत्वविवक्षया विशेषणसमासः। [रवः] बृंहितध्वनिः [मुहुः क्रियते। अनुवनं] वने वने [चमरीचयः] चमरीमृगसङ्घः [स्फुरति]। [च] किञ्च, कनकरत्नानां या भुवस्तासां [कनकरत्नभुवां, मरीचयः] किरणाः [च] स्फुरन्ति। समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारे यमकस्याभ्युच्चयः *॥ ६०॥

---

* चमरीणां मरीचीनाञ्च प्रकृतत्वात् स्फुरत्पदैकधर्माभिसम्बन्धेन तुल्ययोगिताऽपि।

त्वक्साररन्ध्रपरिपूरणलब्धगीति-
रस्मिन्नसौ मृदितपक्ष्मलरल्लकाङ्गः ।
कस्तूरिकामृगविमर्दसुगन्धिरेति
रागीव सक्तिमधिकां विषयेषु वायुः ॥ ६१ ॥

प्रीत्यै यूनां व्यवहिततपना:
प्रौढध्वान्तं दिनमिह जलदाः ।
दोषामन्यं विदधति सुरत-
क्रीडायासश्रमशमपटवः ॥ ६२ ॥

---

त्वगिति ।—[ अस्मिन् ] अद्रौ [ त्वक्साररन्ध्रपरिपूरणलब्धगीतिः ] त्वचि सारो येषां ते त्वक्सारा वंशाः । 'वंशे त्वक्सारकर्मारत्वचिसार-तृणध्वजाः' इत्यमरः । तेषां रन्ध्राणि तेषां परिपूरणेन आपनेन लब्धा गीतिर्गानसुखं येन सः, [ मृदितपक्ष्मलरल्लकाङ्गः ] मृदितानि संमृष्टानि पक्ष्मलानि लोमशानि रल्लकानां कम्बलमृगाणां कम्बलानां वाऽङ्गानि शरीराणि येन सः । 'रल्लकः कम्बलमृगे कम्बले परिकीर्त्तितः' इति वैजयन्ती । एतेन स्पर्शसुखमुक्तम् । [ कस्तूरिकामृगविमर्दसुगन्धिः ] कस्तूरिकामृगाणां विमर्देन सङ्घर्षेण सुगन्धिः शोभनगन्धः । यद्यपि "गन्धस्येत्त्वे तदेकान्तग्रहणम्" ( ५।४।१३५ पा० वा० ) कर्त्तव्यम् इत्युक्तं, तथाऽपि निरङ्कुशाः कवय इत्यपर्य्यनुयोगः । [ असौ ] एवम्भूतः वायुः [रागीव] कामीव [विषयेषु] * प्रदेशेषु च । 'विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च' इति विश्वः । [ अधिकां, सक्तिं ] व्यासक्तिम् [ एति ] गच्छति † ॥ ६१ ॥

प्रीत्या इति ।—[ इह ] अद्रौ, युवतयश्च युवानश्च तेषां [ यूनाम् ]। "पुमान् स्त्रिया" ( १।२।६७ पा० ) इत्येकशेषः । [ प्रीत्यै, व्यवहित-

---

* इन्द्रियार्थेषु ।

† उपमाऽलङ्कारः ।

भग्नो निवासोऽयमिहास्य पुष्पैः
सदाऽऽनतो येन विषाणिनाऽगः ।
तीव्राणि तेनोज्झति कोपितोऽसौ
सदानतोयेन विषाणि नागः ॥ ६३ ॥
प्रालेयशीतमचलेश्वरमीश्वरोऽपि
सान्द्रेभचर्म्मवसनावरणोऽधिशेते ।

---

तपनाः ] तिरोहितार्काः, अत एव [ सुरतक्रीडायासश्रमशमपटवः ] सुरतान्येव क्रीडास्ताभिर्य आयासो व्यायामस्तेन यः श्रमः खेदः । 'श्रमः खेदोऽध्वरत्यादिः" इति लक्षणात् । तस्य शमे वारणे पटवः समर्थाः, [ जलदाः, प्रौढध्वान्तं ] मेघावरणाद्गाढान्धकारं [ दिनं ] दिवसं, दोषा रात्रिमात्मानं मन्यत इति [ दोषामन्यं ] रात्रिमानि [ विदधति ] । मेघावरणमहिम्ना दिवसः स्वयमप्यात्मानं रात्रिं मन्यते, किमुतान्य इत्यर्थः । * दोषेत्यव्ययं, तदुपपदान्मन्यतेर्धातोः, "आत्ममाने खश्च" ( ३।२।८३ पा० ) इति खश्प्रत्ययः । इह यूनां दोषावद्दिवाऽपि विस्रब्धं विहाराः सम्भवन्तीति भावः । भ्रमरविलसितं वृत्तम् । 'म्भौ न्लौ गः स्याद्भ्रमरविलसितम्' इति लक्षणात्॥ ६२ ॥

भग्न इति ।—[ इह ] अद्रौ [ अस्य ] नागस्य [ निवासः ] आश्रयः, [ सदा पुष्पैः, आनतः ] नम्रः [ अयं ] न गच्छतीति [ अगः ] वृक्षः, दानतोयैर्मदोदकैः सह वर्त्तते यस्तेन [ सदानतोयेन ] मत्तेनेत्यर्थः । [ येन विषाणिना ] दन्तिना [ भग्नः, तेन ] विषाणिना [ कोपितः ] कोपं प्रापितः [ असौ नागः ] सर्पः [ तीव्राणि, विषाणि ] गरलानि [उज्झति] वमति । परप्रतीकाराक्षमस्य क्रोधः स्वाश्रयमेव व्याहन्तीति भावः † ॥ ६३ ॥

प्रालेयेति ।—[ ईश्वरः ] शिवः [ अपि ] किमुतान्य इति भावः ।

---

* अत एवात्र अर्थापत्तिर्व्यज्यते ।

† अत्र यमकमलङ्कारः ।

सर्वर्त्तुनिर्वृतिकरे निवसन्नुपैति
न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि ॥ ६४ ॥
नवनगवनलेखाश्याममध्याभिराभिः
स्फटिककटकभूमिर्नाटयत्येष शैलः ।
अहिपरिकरभाजो भास्मनैरङ्गरागै-
रधिगतधवलिम्नः शूलपाणेरभिख्याम् ॥ ६५ ॥

---

[ सान्द्रेभचर्म्मवसनावरणः ] सान्द्रं यदिभचर्म्म तदेव वसनं तदेवावरणं छादनं यस्य सः तथा सन् न त्वनावरणो नापि शिथिलावरण इति भावः । [ प्रालेयशीतम् ] प्रलयादागतं प्रालेयं हिमम् । "तत आगतः" (४।३।७४ पा० ) इत्यण्, "केकयमित्रयुप्रलयानां यादेरियः" ( ७।३।२ पा० ) इति यशब्दस्येयादेशः । तेन शीतं शीतलम् [ अचलेश्वरं ] हिमवन्तम् [ अधिशेते ] तस्मिन् शेते इत्यर्थः । "अधिशीङ्स्थासां कर्म" ( १।४।४६ पा० ) इति कर्म्मत्वम् । [ सर्वर्त्तुनिर्वृतिकरे ] सर्वर्त्तुभिर्निर्वृतिकरे सदासुखकरे [ इह ] अद्रौ [ निवसन् ] पुनर्नास्ति किञ्चनास्येति [ अकिञ्चनः ] निःस्वः [ अपि ] । उच्चावचेत्यादिना मयूरव्यंसकादिषु निपातनात् तत्पुरुषः । [ किञ्चिद् ] अल्पमपि [ द्वन्द्वदुःखं ] शीतोष्णादुःखम् [ नोपैति ] नित्यं सन्निहितानामृतूनामन्योऽन्यदोषनिवारकत्वादिति भावः । 'द्वन्द्वं युग्महिमोष्णादि मिथुनं कलहो रहः' इति वैजयन्ती । अत्रोपमानात् हिमाचलादुपमेयस्याधिक्यवर्णनाद्व्यतिरेकः ॥ ६४ ॥

नवेति ।—[ एष शैलः ] रैवतकः [ नवनगवनलेखाश्याममध्याभिः ] नवया नगवनलेखया तरुवनपङ्क्त्या श्यामो मध्यो मध्यभागो यासां ताभिः [ आभिः, स्फटिककटकभूमिः ] स्फटिकानां कटकभूमिः तटप्रदेशैः करणैः, अहिरेव परिकरो गात्रिकाबन्धस्तं भजतीति तस्य [ अहिपरिकरभाजः ] 'भवेत्परिकरो व्राते पर्य्यङ्कपरिवारयोः । प्रगाढ़े गात्रिकाबन्धे विवेकारम्भयोरपि ॥' इति विश्वः । "भजो ण्विः" ( ३।२।

दधद्भिरभितस्तटौ विकचवारिजाम्बू नदै-
र्विनोदितदिनक्लमाः कृतरुचश्च जाम्बूनदैः ।
निषेव्य मधु माधवाः रसवदत्र कादम्बरं
हरन्ति रतये रहः प्रियतमाऽङ्ककादम्बरम् ॥६६॥

---

६२ पा० )। [ भास्मनैः ] भस्ममयैः । वैकारिकोऽण्प्रत्ययः, "अन्" ( ६।४।१६७ पा० ) इति प्रकृतिभावात् "नस्तद्धिते" ( ६।४।१४४ पा० ) इति टिलोपो न । [ अङ्गरागैः ] अनुलेपनैः [ अधिगतधवलिम्नः ] प्राप्तधावल्यस्य, शूलं पाणौ यस्य तस्य [ शूलपाणेः ] ईश्वरस्य । "प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्" * इति पाणिशब्दस्य परनिपातः । [ अभिख्यां ] शोभाम् । 'अभिख्या नामशोभयोः' इत्यमरः । "आतश्चोपसर्गे" ( ३।३।१०६ पा० ) इत्यङ् प्रत्ययः । [ नाटयति ] अनुकरोति । निदर्शनाऽलङ्कारः । † मालिनी वृत्तम् ॥ ६५ ॥

दधद्भिरिति ।—[ अत्र ] अद्रौ, माधवस्य इमे [ माधवाः ] यादवाः, विकचानि वारिजानि येषु तान्यम्बूनि ययोस्तौ [ विकचवारिजाम्बू, अभितः ] उभयतः [तटौ दधद्भिः, नदैः] अम्बुप्रवाहैः, प्राक्स्रोतसो नद्यः, प्रत्यक्स्रोतसो नदाः, नर्मदां विनेत्याहुः । [ विनोदितदिनक्लमाः ] विनोदितो दिनक्लमो येषां ते, विहारापनीताह्निकसन्तापा इत्यर्थः । [च] किञ्च, जाम्बूनदस्य विकारैः [ जाम्बूनदैः ] कनकभूषणैः [ कृतरुचः ] जनितशोभाः सन्तः [ रसवत् ] स्वादवत् । 'रसो गन्धे रसे स्वादे' इति विश्वः । कादम्ब इक्षुः । 'कादम्बः कलहंसेक्ष्वोः' इति विश्वः । कादम्बं राति रलयोरभेदाल्लाति प्रकृतित्वेनादत्त इति [ कादम्बरम् ] ऐक्षवम् । 'पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्' इति स्मरणात् । "आतोऽनुपसर्गे कः" ( ३।२।३ पा० )। [ मधु ] मद्यम् । एवञ्च मधुकादम्बरशब्दयोः सामान्यविशेषपरत्वादपौनरुक्त्यम् । [ निषेव्य ] पीत्वा ।

---

* "निष्ठा" ( २।२।३६ पा० ) इति सूत्रे काशिकाद्युक्तमेतद्वार्त्तिकम् ।

† अत्र उपमैव साधीयसी ।

दर्पणनिर्म्मलासु पतिते घनतिमिरमुषि
ज्योतिषि रौप्यभित्तिषु पुरः प्रतिफलति मुहुः।
व्रीड़मसम्मुखोऽपि रमणैरपहृतवसनाः
काञ्चनकन्दरासु तरुणीरिह नयति रविः॥६७॥

---

चलियाणां पैक्ष्या एव निषेधादिति भावः। [रतये] सुरतार्थं [रहः, प्रियतमाऽङ्कात्] प्रियतमानां प्रेयसीनामङ्कादेवाङ्कान्नात् [अम्बरं] वस्त्रं [हरन्ति]। यादवाश्चेह मधुपानरतोत्सवैर्विस्रब्धं विहरन्तीति भावः। * पृथ्वी वृत्तम्;—'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात्॥६६॥

दर्पणेति।—[इह] अद्रौ [रविः दर्पणनिर्मलासु, पुरः रौप्यभित्तिषु] काञ्चनकन्दराग्रवर्त्तिरजतसानुषु [पतिते] सङ्क्रान्ते [घनतिमिरमुषि] घनं सान्द्रं यत्तिमिरं तन्मुष्णाति हरतीति तन्मुट्। क्विप्। तस्मिन् [ज्योतिषि] स्वतेजसि [काञ्चनकन्दरासु मुहुः, प्रतिफलति] सम्मूर्च्छति सति, [रमणैरपहृतवसनास्तरुणीः, असम्मुखोऽपि] कन्दरानभिमुखोऽपि [व्रीडं] लपाम्। यद्यपि "गुरोश्च हलः" (३।३।१०३ पा०) इति स्त्रियामप्रत्ययः अत एव 'मन्दाक्षं ह्रीस्त्रपा व्रीड़ा' इत्यमरः, तथाऽपि तत्र स्त्रीत्वाविवक्षायां बाहुलकत्वान्नपुंसकत्वञ्च; अत एव 'अविधौ गुरोः स्त्रियां बहुलं विवक्षा' (५ अधि० २ अध्या० ४२ सू०) इति वामनः। [नयति] प्रापयति। "नीवह्योर्हरतेश्चापि—" † इति द्विकर्म्मकता। यस्मिन् सुवर्णकन्दरासु क्रीड़ार्थं प्रविष्टाः स्त्रियोऽन्धकार इति कृत्वा पुरुषैरपहृतवस्त्राः सत्यः पुरःस्थितरौप्यभित्तितेजसामन्तः-प्रतिविम्बवत् प्रकाशे सति सलज्जा इति भावः। अत्र काञ्चनकन्दराणामसम्मुखार्कज्योतिःप्रतिफलनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः। ‡

---

* अत्र यमकयोः संसृष्टिः।

† "नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च। द्विकर्म्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः॥" इति। "अकथितञ्च" (१।४।५१ पा०) इति सूत्रभाष्योक्ता कारिका।

‡ दर्पणनिर्म्मलासु इति उपमा, असम्मुखोऽपीति विरोधश्च।

अनुकृतशिखरौघश्रीभिरभ्यागतेऽसौ
त्वयि सरभसमभ्युत्तिष्ठतीवाद्रिरुच्चैः ।
द्रुतमरुदुपनुन्नैरुन्नमद्भिः सहेलं
हलधरपरिधानश्यामलैरम्बुवाहैः ॥ ६८ ॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
रैवतकवर्णनं नाम चतुर्थः सर्गः ॥ ४ ॥

---

वंशपत्रपतितं वृत्तम् ;—'दिङ्मुनिवंशपत्रपतितं भरनभनलगैः' इति लक्षणात् ॥ ६७ ॥

अनुकृतेति ।—[ असौ, उच्चैः ] उन्नतः [ अद्रिः ] रैवतकः [ त्वयि अभ्यागते ] सति [ अनुकृतशिखरौघश्रीभिः ] अनुकृता शिखरौघाणां श्रीर्यैस्तैस्तथोक्तैः शिखरौघभ्रमकारिभिरिति भावः ; अत एवात्र श्रीरिव श्रीरिति निदर्शनया भ्रान्तिमदलङ्कारो व्यज्यते । [ द्रुतमरुदुपनुन्नैः ] द्रुतमरुता शीघ्रमारुतेनोपनुन्नैः प्रेरितैः अत एव [ सहेलं ] सलीलम् [ उन्नमद्भिः ] उत्पतद्भिः । धरतीति धरः पचाद्यच्, हलस्य धरो हलधरो बलभद्रः तस्य परिधानानि अम्बराणि तद्वत् श्यामलैः श्यामैः [ हलधरपरिधानश्यामलैः अम्बुवाहैः ] निमित्तेन [ सरभसम्, अभ्युत्तिष्ठतीव] प्रत्युत्थानं करोतीवेति क्रियानिमित्ता क्रियास्वरूपोत्प्रेक्षा, विशिष्टमेघोन्नमनक्रियया प्रत्युत्थानक्रियोत्प्रेक्षणात् ; सा चोक्तनिदर्शनाऽनुप्राणितेति सङ्करः । शाब्दस्तु वृत्त्यनुप्रासः । मालिनी वृत्तम् ॥ ६८ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ।

—— ०० ——

**इत्थं गिरः प्रियतमा इव सोऽव्यलीकाः**
**शुश्राव सूततनयस्य तदा व्यलीकाः ।**
**रन्तुं निरन्तरमियेष ततोऽवसाने**
**तासां गिरौ च वनराजिपटं वसाने ॥ १ ॥**
**तं स द्विपेन्द्रतुलिताऽतुलतुङ्गशृङ्ग-**
**मभ्युल्लसत्कदलिकावनराजिमुच्चैः ।**

---

इत्थमिति ।—[ सः ] हरिः [ इत्थम् ] अनेन प्रकारेण । "इदमस्थमुः" ( ५।३।२४ पा० ) इति थमुप्रत्ययः । [ अव्यलीकाः ] अप्रियरहिताः । 'व्यलीकं त्वप्रियेऽनृते' इत्यमरः । [ प्रियतमाः ] प्रेयसीः [ इव ] स्थिताः, कान्तासम्मिता इत्यर्थः । [ व्यलीकाः ] विगतानृताः, सत्याः [सूततनयस्य] सारथिकुमारस्य दारुकस्य [ गिरः तदा शुश्राव ]। [ ततः ] श्रवणानन्तरं [ तासां ] गिराम् [ अवसाने ] समाप्तौ [ च, निरन्तरं ] नीरन्ध्रं [ वनराजिपटं ] वनराजिरेव पटस्तं [वसाने] आच्छादयति । 'वस आच्छादने' इति धातोः कर्त्तरि लटः शानजादेशः । [ गिरौ ] रैवतकाद्रौ [ रन्तुं ] क्रीड़ितुम् [ इयेष ], तत्र वसतिं कर्त्तुमिच्छति स्मेत्यर्थः । उपमायमकरूपकाणां संसृष्टिः । सर्गेऽस्मिन् वसन्ततिलका वृत्तम् ;—'उक्ता वसन्ततिलका तभजा जगौ गः' इति ॥ १ ॥

तमिति ।—[अभ्युल्लसत्कदलिकावनराजिम् *] कदल्य एव कदलिकाः

---

* अत्र प्रथमा-द्वितीययोः विभक्त्योः विपरिणामेन कर्त्तृकर्म्मणोः विशेषणं करणीयम् ।

विस्ताररुद्धवसुधोऽन्वचलञ्चचाल
लक्ष्मीं दधत्प्रतिगिरेरलघुर्बलौघः ॥ २ ॥
भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः
सापत्रपा इव महाजनदर्शनेन ।
संविव्युरम्बरविकाशि चमूसमुत्थं
पृथ्वीरजः करभकण्ठकडारमाशाः ॥ ३ ॥

---

वैजयन्त्यो रम्भातरवश्च। 'कदली वैजयन्त्याञ्च रम्भायां हरिणान्तरे' इति विश्वः। अभ्युल्लसन्त्यः कदल्यो वैजयन्त्यो वनराजय इव यस्य सः, अन्यत्र,—रम्भावनपङ्क्तयो यस्य तमिति ग्रोज्यम्। * [ उच्चैः ] उन्नतः [ विस्ताररुद्धवसुधः ] विस्तारेण रुद्धवसुधः व्याप्तभूमिः, अत एव [ प्रतिगिरेर्लक्ष्मीं दधत् ] स्वयमप्यन्यो गिरिरिव स्थित इत्यर्थः। [ अलघुः ] महान् [ स बलौघः ] सेनासङ्घः [ द्विपेन्द्रतुलिताऽतुलतुङ्गशृङ्गं ] द्विपेन्द्रैस्तुलितान्यतुलान्यप्रतिमानि द्विपेन्द्रव्यतिरिक्तप्रतिमारहितानि तुङ्गशृङ्गाणि यस्य तथोक्तं, [ तम् अचलं ] रैवतकम् [ अनु, चचाल ] तं प्रति ययावित्यर्थः। "अनुर्लक्षणे" (१।४।८४ पा०) इति कर्मप्रवचनीयत्वात् तद्योगे द्वितीया। अत्र प्रतिगिरेः कस्यचिदप्रसिद्धत्वात् गिरिधर्मयोगी बलौघः प्रतिगिरेर्लक्ष्मीमिव लक्ष्मीं दधातीति निदर्शनामुखेन प्रतियोगित्वेनोत्प्रेक्ष्यते, इत्युत्प्रेक्षैवेयं श्लेषानुप्राणितेति सङ्करः † ॥ २ ॥

भास्वदिति।—[ आशाः ] दिशः [ भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः ] भास्वत्करव्यतिकरेण सूर्यांशुव्याप्त्या उल्लसिताम्बरान्ताः प्रकाशिताकाशप्रदेशाः ; अन्यत्र,—भास्वान् भास्वरः अभिरूपः। 'भास्वान् भास्वरसूर्ययोः' इति विश्वः। तस्य हस्तस्य स्पर्शनेन उल्लसिताम्बरान्ताः

---

* "राजिसुच्चैः" इत्यत्र "राजिरुच्चैः" इति पाठः मल्लिनाथसम्मतः इति तद्व्याख्यया स्पष्टं प्रतीयते।

† द्विपेन्द्रतुलिता इत्युपमा च।

आवर्त्तिनः शुभफलप्रदशुक्तियुक्ताः
सम्पन्नदेवमणयो भृतरन्ध्रभागाः ।
अश्वाः प्रधुर्वसुमतीमतिरोचमाना-
स्तूर्णं पयोधय इवोर्मिभिरापतन्तः ॥ ४ ॥

---

सस्तवस्त्राञ्चलाः, अत एव [ महाजनदर्शनेन सापत्रपा इव ] 'लज्जा सापत्रपान्यतः' इत्यमरः । [ अम्बरविकाशि ] व्योमव्यापि वासःशोभि च । 'अम्बरं व्योमवाससोः' इति विश्वः । [ चमूसमुत्थं ] चमूषु समुत्थं [ करभकण्ठकडारं ] करभः उष्ट्रपोतः । 'उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः' इत्यमरः । तस्य कण्ठ इव कडारं कपिशं, 'कडारः कपिशः पिङ्गः' इत्यमरः । [ पृथ्वीरजः, संविव्युः ] संवव्रुराच्छादयामासु-रित्यर्थः । 'व्येञ् संवरणे', लिट्, कित्त्वात् सम्प्रसारणे द्विर्भावः, "एरने-काच—" (६।४।८२ पा०) इति यणादेशः । स्त्रियो वस्त्रापहारे लज्जया यत्किञ्चिदाच्छादयन्तीति भावः । अत्राचेतनास्वाशासु श्लिष्टविशेषण-महिम्ना स्त्रीप्रतीतौ तदभेदाध्यवसायेन संव्यानव्यवहारसमारोपात् समासोक्तिः, सा च सापत्रपत्वोत्प्रेक्षाऽनुप्राणितेति सङ्करः ॥ ३ ॥

आवर्त्तिन इति ।—[ आवर्त्तिनः ] दशावर्त्तवन्तः । प्रशंसायाम् इति इनिः । ते च 'द्वावुरस्यौ शिरस्यौ द्वौ द्वौ द्वौ रन्ध्रोपरन्ध्रयोः । एको भाले द्वपाने च दशावर्त्ता ध्रुवाः स्मृताः ॥' इत्युक्ता दश ध्रुवाख्या विवक्षिताः । अन्येषामनन्तरमेव पृथगभिधानात् । अन्यत्र तु,—जल-भ्रमवन्तः । 'स्यादावर्त्तोऽम्भसां भ्रमः' इत्यमरः । रोमसंस्थाने तु तत्साम्याद्व्यपदेशः । तदुक्तम्,—'आवर्त्तसाम्यादावर्त्तो रोमसंस्थान-मङ्गिनाम्' इति । [शुभफलप्रदशुक्तियुक्ताः] शुभफलानि राज्यलाभादीनि प्रददतीति शुभफलप्रदाः "प्रे दाज्ञः" ( ३।२।६ पा० ) इति कः । ताभिः शुक्तिभिः संस्थानैरावर्त्तविशेषैर्युक्ताः । तदुक्तं,—'वक्षःस्थाः शुक्तय-स्तिस्र ऊर्ध्वरोमा जयावहाः' इति । अन्यत्र,—शुभफलानि मुक्ताफलानि तत्प्रदाः, शुक्तयो मुक्तास्फोटाः ताभिर्युक्ताः । 'मुक्तास्फोटे हयावर्त्ते

**आरचमग्नमवमत्य सृणिं शिताग्र-**
**मेकः पलायत जवेन कृतार्त्तनादः ।**
**अन्यः पुनर्मुहुरुदप्लवतास्तभार-**
**मन्योऽन्यतः पथि वताबिभितामिभोष्ट्रौ ॥ ५ ॥**

शुक्तिः शङ्खकपालयोः' इति यादवः । [ सम्पन्नदैवमणयः ] सम्पन्नाः समग्राः दैवमणयो निगालावर्त्ताः कौस्तुभादिदिव्यमणयश्च येषां ते, 'आवर्त्तौ रोमजो दैवमणिस्त्वेष निगालजः । 'निगालस्तु गलोद्देशे ऽश्वात्' इति वैजयन्ती । [ भृतरन्ध्रभागाः ] भृताः पूर्णा रन्ध्रभागाः पार्श्वदेशा निम्नप्रदेशाश्च येषां ते । अतिशयिता रोचमानाः कण्ठावर्त्ता येषां ते [ अतिरोचमानाः ] । 'कण्ठजो रोचमानश्च स्वामिसौभाग्यवर्द्धनः' इति वैजयन्ती ; अन्यत्र तु,—अत्यन्तं दीप्यमाना इत्यर्थः । [ ऊर्मिभिः ] गतिविशेषैर्वीचिभिश्च [ आपतन्तः ] आधावन्तः । 'पङ्क्तीकृतानामश्वानां नमनीन्नमनाकृतिः । अतिवेगसमायुक्ता गतिरूर्म्मिरुदाहृता ॥' इति वैजयन्ती । ईदृशाः [ अश्वाः पयोधय इव तूर्णं वसुमतीं, पथुः ] छादयन्ति स्म । 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । अपिपूर्वाद्धधातेर्लुङ् । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" * इत्यकारलोपः । एकनालावलम्बिफलद्वयवदेकशब्देनार्थद्वयप्रतीतिरर्थश्लेषोऽयं प्रकृताप्रकृतगोचरः । उपमा त्वङ्गमिति सङ्करः ॥ ४ ॥

आरचेति ।—[ पथि ] मार्गे [ इभोष्ट्रावन्योऽन्यतः ] अन्योऽन्यस्मात् [ अबिभितां ] भीतवन्तौ । 'ञिभी भये' लङ् । "भियोऽन्यतरस्याम्" ( ६।४।११५ पा० ) इतीत्वम् । [ वत ] वतेत्यनयोरपि भीतिरिति खेदेऽतिविस्मये वा । 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे वत' इत्यमरः । तत्र लिङ्गमाह,—[ एकः ] इभः [ आरचमग्नम् ] आरचः कुम्भयोरधःप्रदेशस्तत्र मग्नं प्रविष्टं [ शिताग्रं ] तीक्ष्णमुखं [ सृणिम् ] अङ्कुशम् । 'अङ्कु-

* इत्यव्ययप्रकरणे दीक्षिताः ।

आयस्तमैच्छत जनश्चटुलाग्रपादं
गच्छन्तमुच्चलितचामरचारुमश्वम् ।
नागं पुनर्मृदु सलीलनिमीलिताक्षं
सर्वः प्रियः खलु भवत्यनुरूपचेष्टः ॥ ६ ॥

---

प्रोऽस्त्री स्त्रियोर्द्वयोः' इत्यमरः । [ अवमत्य ] अवधूय [ कृतार्त्तनादः ] कृत आर्त्तनादो येन सः, अतिकरुणं क्रन्दन्नित्यर्थः । [ जवेन, पलायत ] पलायितवान् । परापूर्वादयतेर्लङ् "उपसर्गस्यायतौ" (८।२।१९ पा०) इति रेफस्य लत्वम् । [ अन्यः पुनः ] उष्ट्रस्तु [ अस्तभारं ] निरस्तभारं यथा तथा [ मुहुः, उदप्लवत ] उत्प्लुतवान् । "प्लु गतौ" इति लङ् । स्वभावोक्तिः ॥ ५ ॥

आयस्तमिति ।—[जनः, चटुलाग्रपादं ] चञ्चलपूर्वचरणं यथा तथा [ गच्छन्तं ] शीघ्रं धावन्तमित्यर्थः । [ उच्चलितचामरचारुम् ] उच्चलितैः उल्लसितैश्चामरैश्चारुम् [अश्वम्, आयस्तं] सयत्नमाहृतं * यथा तथा "यसु प्रयत्ने" कर्त्तरि क्तः । क्तान्तं क्रियाविशेषणम् । [ ऐच्छत ] ईच्छितवान् । ईच्छतेर्लङ् "आडजादीनाम्" ( ६।४।७२ पा० ) "आटश्च" ( ६।१।९० पा० ) इति वृद्धिः । [ नागं पुनः ] गजन्तु [ सलीलनिमीलिताक्षं ] सलीलं निमीलिते अक्षिणी यस्मिन् कर्म्मणि तत्, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" ( ५।४।११३ पा० ) इति षच् । [ मृदु ] मन्दं, गच्छन्तमायस्तमैच्छत । कथं शीघ्रमन्दयोस्तुल्यदृष्टिः ? अत आह,—[ सर्वः ] प्राणी [ अनुरूपचेष्टः ] स्वजात्युचितव्यापारः सन्, प्रीणातीति [ प्रियः ] प्रीतिकरः [ भवति खलु ] । "इगुपधज्ञाप्रीकिरः कः" ( ३।१।१३५ पा० ) इति कः प्रत्ययः । अर्थान्तरन्यासः ॥ ६ ॥

---

* "आहृतम्" इति निरर्थकम्, एतत्तु मसिसम्पातायातमिति मन्यामहे ; "सयत्नम्" इत्येतावन्मात्रेणैव विवक्षितार्थलाभादित्यवधातव्यम् ।

त्रस्तः समस्तजनहासकरः करेणो-
स्तावत् खरः प्रखरमुल्ललयाञ्चकार ।
यावच्चलासनविलोलनितम्बबिम्ब-
विस्रस्तवस्त्रमवरोधवधूः पपात ॥ ७ ॥

शैलोपशल्यनिपतद्रथनेमिधारा-
निष्पिष्टनिष्ठुरशिलातलचूर्णगर्भाः ।
भूरेणवो नभसि नद्धपयोदचक्रा-
श्चक्रीवदङ्गरुहधूम्ररुचो विसस्रुः ॥ ८ ॥

---

त्रस्त इति ।—[ करेणोः ] इभ्याः "करेणुरिभ्यां स्त्री नेभे" इत्यमरः । "भीत्रार्थानां भयहेतुः" ( १।४।२५ पा० ) इत्यपादानत्वम् । [ त्रस्तः ] भीतः [ खरः ] गर्दभः [ समस्तजनहासकरः ] समस्तजनस्य हासं करोतीति तत्करः सन्, "कृञो हेतु—" ( ३।२।२० पा० ) इत्यादिना टप्रत्ययः । [ तावत् ] तदवधि [ प्रखरं , भृशम् [ उल्ललयाञ्चकार ] उत्पपात, [ यावत्, चलासनविलोलनितम्बबिम्बविस्रस्तवस्त्रं ] चलात् स्थानचलितादासनात् पल्ययनात् विलोलोऽपसृतस्तस्मान्नितम्बबिम्बा-द्विस्रस्तं वस्त्रं यस्मिन् कर्मणि तद्यथा तथा [ अवरोधवधूः पपात ]। स्वभावोक्तिः ॥ ७ ॥

शैलेति ।—[ शैलोपशल्यनिपतद्रथनेमिधारानिष्पिष्टनिष्ठुरशिलातल-चूर्णगर्भाः ] शैलस्य रैवतकाद्रेरुपशल्यं प्रान्तम् । यद्यपि 'ग्रामान्त उपशल्यं स्यात्' इत्यमरः, तथाऽपि उपचाराददोषः । तत्र निपततां धावतां रथानां नेमयश्चक्रान्ताः । 'चक्रं रथाङ्गं, तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्' इत्यमरः । तासां धाराभिः निष्पिष्टानां चूर्णितानां निष्ठुरशिलातलानां चूर्णं गर्भे येषां ते तथोक्ताः । [ नभसि, नद्धपयोद-चक्राः ] नद्धानि पयोदचक्राणि पयोदाकारमण्डलानि यैस्ते [ चक्री-वदङ्गरुहधूम्ररुचः ] चक्रवद्भ्रमणमस्यास्तीति चक्रीवान् गर्दभः । 'चक्री-

उद्यत्कृशानुशकलेषु खुराभिघाता-
द्भूमीसमायतशिलाफलकाचितेषु ।
पर्य्यन्तवर्त्मसु विचक्रमिरे महाश्वाः
शैलस्य दर्दुरपुटानिव वादयन्तः ॥ ९ ॥

तेजोनिरोधसमतावहितेन यन्त्रा
सम्यक् कशात्रयविचारवता नियुक्ताः ।

---

वन्तस्तु बालेया रासभा गर्दभाः खराः' इत्यमरः । "आसन्दीवदष्ठीव-चक्रीवत्—" (८।२।१२ पा०) इत्यादिना साधुः । तस्याङ्गरुहाणि रोमाणि तद्वत् धूम्रत्वचः कृष्णलोहितवर्णाः । 'धूम्रधूमलौ कृष्णलोहितौ' इत्यमरः । [भूरेणवः, विससुः] प्रसृताः * ॥ ८ ॥

उद्यदिति ।—[खुराभिघातात्] खुराः शफानि । 'शफं क्लीबे खुरः पुमान्' इत्यमरः । तेषामभिघातात् [उद्यत्कृशानुशकलेषु] उद्यन्तः कृशानुशकलाः † स्फुलिङ्गाः येभ्यस्तेषु । टङ्कप्रायाः ‡ खुरा इति भावः । [भूमीसमायतशिलाफलकाचितेषु] भूम्यां ¶ समानि समतलानि आयतानि च यानि शिलाः फलकानीव शिलाफलकानि तैराचितेषु आस्तृतेषु, [शैलस्य, पर्य्यन्तवर्त्मसु] प्रान्तमार्गेषु [महाश्वाः, दर्दुरपुटान्], दर्दुराणां वाद्यविशेषाणां पुटान् मुखानि [वादयन्त इव, विचक्रमिरे] जग्मुः, पादन्यासैः तादृशं शब्दमकुर्वन्नित्यर्थः । "वेः पादविहरणे" (१।३।४१ पा०) इत्यात्मनेपदम् । 'दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रि-भेदयोः' इत्यमरः । उत्प्रेक्षाऽलङ्कारः ॥ ९ ॥

तेज इति ।—तेजोनाम दर्पापरनामा सत्त्वगुणविकारप्रकाशको अन्तःसारविशेषः । यथाऽऽह भोजराजः,—'तेजो निसर्गजं सत्त्वं वाजिनां

---

* अत्र उपमा लुप्ता ।

† "भित्तं शकलखण्डे वा पुंसि" इत्यमरः ।

‡ "टङ्कः पाषाणदारणः" इत्यभिधानात् ।

¶ "कृदिकारादक्तिनः" इति गणसूत्रेण वा ङीष् । "भूम्याम्" इत्यत्र भूमीषु इति युक्तम् ।

**आरट्टजश्चटुलनिष्ठुरपातमुच्चै-**
**श्चित्रं चकार पदमर्द्धपुलायितेन ॥ १० ॥**

---

स्फुरणं रजः । क्रोधस्तम इति शेयाख्नयोऽपि सहजा: गुणा: ॥' इति । तच्च द्विविधं, सततोत्थितं भयोत्थितञ्चेति । यथाऽऽह स एव,—"धारासु योजितानाञ्च निसर्गात् प्रेरणां विना । अविच्छिन्नमिवाभाति तत्तेजः सततोत्थितम् ॥ कशापादादिघातैर्यत्साध्वसात् स्फुरितन्तु तत् ॥" इति । अत्र तेजःशब्देन तत्कार्य्यं वेगो लच्यते । तथा च [ तेजो-निरोधसमतावहितेन ] तेजसि वेगे निरोधे तन्निवारणे समतायां वेग-साम्ये चावहितेन वल्गाविभागकुशलेनेत्यर्थः । [ कशालयविचारवता ] कशा ताड़नी । 'अश्वादेस्ताड़नी कशा' इत्यमरः । अत्र कशाः कशा-घातास्तासां त्रयमुत्तममध्यमाधमेषु यथासङ्ख्यं मृदुसमनिष्ठुरसक्वद्-द्वित्रिरूपं त्रितयं, तस्य विचारः । एतेषु निमित्तेषु अङ्गेष्वेवं ताड्य इति विमर्शः, तद्वता तज्ज्ञेन । यथाऽऽह भोजः,—'मृदुनैकेन घातेन दण्डकालेषु ताड़येत् । तीक्ष्णं मध्यं पुनर्द्वाभ्यां जघन्यं निष्ठुरैस्त्रिभिः ॥ उपवेशेऽथ निद्रायां स्खलिते दुष्टचेष्टिते । वड़वालोकनौत्सुक्ये बहु-गर्वितह्रेषिते ॥ सन्त्रासे च दुरुत्थाने विमार्गगमने भये । शिक्षा-त्यागस्य समये सञ्जाते चित्तविभ्रमे ॥ दण्डः प्रयोज्यो वाहानां कालेषु द्वादशस्वपि । ग्रीवायां भीतमाहन्यात् त्रस्तस्यैव च वाजिनम् ॥ विभ्रान्तचित्तमधरे त्यक्तशिक्षञ्च ताड़येत् । प्रह्रेषितं स्कन्धबाह्वोर्वड़वा-लोकिनं तथा ॥ उपवेशे च निद्रायां कटिदेशे च ताड़येत् । दुश्चेष्टितं मुखे हन्यादुन्मार्गप्रस्थितं तथा ॥ जघने स्खलितं हन्यात् नेत्रमार्गे दुरुत्थितम् । यः कुण्ठप्रकृतिर्वाजी तं सर्वत्रैव ताड़येत् ॥" इति । एवम्भूतेन [ यन्त्रा ] सादिना [ सम्यक् ] यथाशास्त्रं [ नियुक्तः ] ईरितः [ उच्चैः ] उन्नतः, आरट्टोऽश्वयोनिर्देशविशेषः तज्जोऽश्वः [ आरट्टजः ] । विशेषणमात्रप्रयोगे सागराम्बरादिवत्तावतैव विशेष्यप्रतीतेरित्याह वामनः ;—यथा,—"विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ" ( ५म अधि० १म अध्या० १० सू० ) इति । [ चटुलनिष्ठुरपातं ] चटुलश्चपलो

नीहारजालमलिनः पुनरुक्तसान्द्राः
कुर्वन् वधूजनविलोचनपक्ष्ममालाः ।
क्षुण्णः क्षणं यदुबलैर्दिवमाततांसुः
पांशुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः ॥ ११ ॥

---

निष्ठुरः परुषश्च पातः प्रक्षेपो यस्मिन् कर्मणि तद्यथा तथा । [ अर्द्धपुलायितेन ] मण्डलगतिविशेषेण [ चिलम् ] अद्भुतं [ पदं ] पदक्रमं [ चकार ]। 'प्लुताद्धार्द्धक्रमादूनैर्मण्डलायितवल्गितैः । उन्मुखस्याश्वमुख्यस्य गतिरर्द्धपुलायितम्' इति लक्षणात् । पुला नाम प्लुताद्यनेकापरनामा हयानां गतिविशेषः । तदुक्तं हयलीलावत्याम् ;—'प्लुतां प्लवङ्गितामाहुर्या धारा पुलनाभिधा । पुनरेनां रलोपान्त्यां पुलामित्याह दैश्विकः ॥' तल्लक्षणञ्च तत्रैवोक्तम् ;—'क्षिपति समविशेषानुत्क्षिपत्यग्रपादान् प्रसरति पुरतोऽश्वः साधु धारा पुलाख्या । विलसति समपादोत्क्षेपणाकुञ्चनानां, कलणमिह गतिज्ञाः प्राहुरन्ये पुलाख्याम्' ॥ इति । 'पार्ष्णिप्रधानं प्रविधाय रागाद्वल्गां श्लथीकृत्य वहेत्पुलाख्याम्' इत्यादि । पुलाख्यया अयितं गतिः पुलायितम् । "अय गतौ" भावे क्तः । तच्छताद्धैंत्याद्युक्तरीत्या अनुष्ठितमर्द्धपुलायितमित्यलमतिविस्तरेण ॥ १० ॥

नीहारेति ।—[ नीहारजालमलिनः ] नीहारजालवत् तुहिनव्यूहवन्मलिनः [ वधूजनविलोचनपक्ष्ममालाः ] वधूजनविलोचनानां पक्ष्ममालाः [पुनरुक्तसान्द्राः] द्विगुणसान्द्राः [कुर्वन्] स्वभावतोऽपि सान्द्रत्वादिति भावः। मयूरव्यंसकादित्वाद्विस्पष्टपटुवत् समासः। [क्षणं, यदुबलैः] यदूनां बलैः सैन्यैः [ क्षुण्णः अद्रेरुत्थितः, दिवम् ] आकाशम्, आतनितुमवतनितुमिच्छुः [आततांसुः] । तनोतेः सन्नन्तादुप्रत्ययः, "सनीवन्तर्द्ध—" * ( ७।२।४९ पा० ) इत्यत्र तनिपतिदरिद्राणामुपसङ्ख्यानात्

---

* केचिदत्र "भरज्ञपिसनितनिपतिदरिद्राणाम् इति पठन्ति ।" इति ( ७।२।४९ पा० ) काशिका ।

उच्छिद्य विद्विष इव प्रसभं मृगेन्द्रा-
निन्द्रानुजानुचरभूपतयोऽध्यवात्सुः ।
वन्येभमस्तकनिखातनखाग्रमुक्त-
मुक्ताफलप्रकरभाञ्जि गुहागृहाणि ॥ १२ ॥

बिभ्राणया बहलयावकपङ्कपिङ्ग-
पिच्छावचूडमनुमाधवधाम जग्मुः ।
चञ्च्वग्रदष्टचटुलाहिपताकयाऽन्ये
स्वावासभागमुरगाशनकेतुयष्ट्या ॥ १३ ॥

---

वैकल्पिक इडभावः। "तनोतेर्विभाषा" (६।४।१७ पा०) इति दीर्घः। [पांशुः दिशां मुखम्, अतुत्ययत्] आच्छादयति स्म। "तुत्थ आच्छादने" इति धातोश्चौरादिकाल्लङ् ॥ ११ ॥

उच्छिद्येति।—[इन्द्रानुजानुचरभूपतयः] इन्द्रानुजस्योपेन्द्रस्य हरेरनुचरा अनुजीविनो भूपतयः [मृगेन्द्रान्] सिंहान् [विद्विषः] शत्रून् [इव, प्रसभं] प्रसह्य [उच्छिद्य] हत्वा [वन्येभमस्तकनिखातनखाग्रमुक्तमुक्ताफलप्रकरभाञ्जि] वन्येभानां मस्तकेषु निखातैर्निक्षिप्तैर्नखाग्रैः सिंहनखमुखैर्मुक्तान् विकीर्णान् मुक्ताफलप्रकरान् भजन्तीति तथोक्तानि [गुहागृहाणि] गुहाः गृहाणीवेत्युपमितसमासः, विद्विष इवेति लिङ्गात् [अध्यवात्सुः] अध्युषितवन्तः। "उपान्वध्याङ्वसः" (१।४।४८ पा०) इति कर्मत्वम्। "वस निवासे" लुङि सिचि वृद्धिः "सः स्यार्द्धधातुके" (७।४।४९ पा०) इति तत्वम् ॥ १२ ॥

बिभ्राणयेति।—[अन्ये] भूपतयः [बहलयावकपङ्कपिङ्गपिच्छावचूडं] याव एव यावकोऽलक्तकः। 'राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः' इत्यमरः। "यावादिभ्यः कन्" (५।४।२९ पा०) इति स्वार्थे कन्। बहलेन यावकपङ्केन पिङ्गं पिङ्गलं पिच्छं बर्हमेवावचूडम् अधोलम्बिकलापं [बिभ्राणया]। 'अस्योच्चूडावचूडाख्या-

छायामपास्य महतीमपि वर्त्तमाना-
मागामिनीं जगृहिरे जनतास्तरूणाम्।
सर्वो हि नोपगतमप्यपचीयमानं
वर्द्धिष्णुमाश्रयमनागतमभ्युपैति ॥ १४ ॥

---

वृन्दाधोमुखचूडको' इति ध्वजाङ्गेषु हलायुधः। [ चञ्च्वग्रदष्टचटुलाहि-पताकया ] चञ्चुस्त्रोटिः। 'चञ्चुस्त्रोटिरुभे स्त्रियाम्' इत्यमरः। तस्या अग्रेण दष्टा चटुला चञ्चला अहिरेव पताका यस्यां तया [ उरगाशन-केतुयष्ट्या ] उरगाशनो गरुड़स्तस्य केतुयष्टिस्तदधिष्ठितो ध्वजदण्ड इत्यर्थः, तया अभिज्ञानेनेति भावः। [ अनुमाधवधाम ] हरिशिविरमनु [ स्वावासभागं ] स्वनिवेशदेशं [ जग्मुः ] प्रापुः। दूरादेव गरुड़ध्वजेन माधवधाम ज्ञात्वा तत्सन्निहितान् नियतदिक्कान् स्वावासान्निश्चित्य जग्मुरित्यर्थः ॥ १३ ॥

छायामिति।—जनानां समूहाः [ जनताः ]। * "ग्रामजनबन्धु-सहायेभ्यस्तल्" (४।२।४३ पा०) इति तल्प्रत्ययः। [ तरूणां, वर्त्तमानां ] विद्यमानां [ महतीमपि छायाम्, अपास्य ] त्यक्त्वा [आगामिनीं] छायां [ जगृहिरे ]। वर्द्धिष्णुत्वादिति भावः। न च प्राप्तत्यागो दोषाय, त्यागस्वीकारयोः क्षयवृद्धिप्रयुक्तत्वादिति भावः। सर्व इति।—[ हि ] तथा हि [सर्वः] जनः [उपगतं] प्राप्तम् [अपि, अपचीयमानं] चीयमानम्। कर्म्मकर्त्तरि प्रयोगः। [ आश्रयं, न अभ्युपैति ] न गृह्णाति ; किन्तु [ अनागतम् ] अप्राप्तमपि [ वर्द्धिष्णुं ] वर्द्धनशीलम् आश्रयमभ्युपैति। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १४ ॥

---

* अत्र तल्प्रत्ययेन बहुत्वबोधेऽपि पुनर्बहुवचनम् अर्थपौनरुक्त्यमावहतीत्ययुक्तम् ; "प्रजगृहे जनता तरूणाम्" इति पाठो युक्तः इति आपाततः शङ्कास्पदमारोहति। अत्रेदमवधातव्यम् ;—जनताशब्दस्य जनसमूहार्थबोधकत्वेऽपि जनसमूहानां भूयस्तया सर्वत्र स्थितत्वात् अत्र तस्य बहुत्वे प्रयोगः न दूषणावहः, अन्यथा समूहार्थवाचक-शब्दानां भूम्नि प्रयोगस्य विलयापत्तेः। भाष्येऽन्यथा दृश्यते,, "ग्रामजनबन्धुभ्यस्तल्" इति सूत्रं, वार्त्तिकं "गजसहायाभ्याञ्च" इति।

अग्रे गतेन वसतिं परिगृह्य रम्या-
मापात्यसैनिकनिराकरणाकुलेन ।
यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरा-
दुद्बाहुनाऽऽजुहुविरे मुहुरात्मवर्ग्याः ॥ १५ ॥

सिक्ता इवामृतरसेन मुहुर्जनानां
क्लान्तिच्छिदो वनवनस्पतयस्तदानीम् ।
शाखाऽवसक्तवसनाभरणाभिरामाः
कल्पद्रुमैः सह विचित्रफलैर्विरेजुः ॥ १६ ॥

---

अग्र इति ।—[ अग्रे गतेन ] पुरः प्रयातेन [ रम्यां, वसतिं ] निवासम् । "वहिवस्यर्त्तिभ्यश्चित्" (उ० ४।६० सू०) इति वसेरौणादिकोऽतिप्रत्ययः । [ परिगृह्य, आपात्यसैनिकनिराकरणाकुलेन ] आपतन्तीत्यापात्याः स्वयमाक्रमितुमागच्छन्तः । "भव्यगेय—" ( ३।४।६८ पा० ) इत्यादिना कर्त्तरि ण्यदन्तो निपातः । तेषां सैनिकानां निराकरणे निरसने आकुलेन व्यग्रेण [ उद्बाहुना ] उद्यतहस्तेन । केनचिदिति शेषः । [अन्यतः, यान्तः] गच्छन्तः [आत्मवर्ग्याः] स्वयूथ्याः, [ प्लुतकृतस्वरं ] प्लुतं त्रिमात्रिकं यथा तथा कृतः स्वरो नाद आह्वानं यस्मिन् कर्मणि तद् यथा तथा । "दूराद्धूते च" ( ८।२।८४ पा० ) इति दूरादाह्वाने प्लुतविधानादिति भावः । [ आशु दूरान्मुहुः, आजुहुविरे ] आहूताः । ह्वयतेराङ्पूर्वात्कर्मणि लिट् । "अभ्यस्तस्य च" ( ६।१।३३ पा० ) इति सम्प्रसारणे द्विर्वचनमुवङादेशश्च ॥ १५ ॥

सिक्ता इति । [ अमृतरसेन सिक्ता इव ] इत्युत्प्रेक्षा । [ मुहुर्जनानां, क्लान्तिच्छिदः] श्रमहराः, कल्पद्रुमवदमृतसेकाभावादपि तद्वदाह्लादका इति भावः । [ शाखाऽवसक्तवसनाभरणाभिरामाः ] शाखाखवसक्तैर्लग्नैर्वसनैराभरणैश्चाभिरामाः । एकत्र,—सेनाख्यापितैः,अन्यत्र,—स्वप्रसूतैरिति भावः । [ वनवनस्पतयः ] वनवृक्षाः [ विचित्रफलैः ]

यानाज्जनः परिजनैरवरोप्यमाणा
राज्ञीर्नरापनयनाकुलसौविदल्लाः।
स्रस्तावगुण्ठनपटाः क्षणलक्ष्यमाण-
वक्त्रश्रियः सभयकौतुकमीक्षते स्म ॥ १७ ॥

कण्ठावसक्तमृदुबाहुलतास्तुरङ्गा-
द्राजावरोधनवधूरवतारयन्तः।
आलिङ्गनान्यधिकृताः स्फुटमापुरेव
गण्डस्थलीः शुचितया न चुचुम्बुरासाम् ॥१८॥

---

वस्त्राभरणाद्यनेकफलयुक्तैः [ कल्पद्रुमैः ] तलस्थैरिति शेषः, [ सह तदानीं विरेजुः ] तद्वत् विरेजुरित्यर्थः। सहेति सादृश्ये। 'सह साकल्य-सादृश्ययौगपद्यसमृद्धिषु' इति विश्वः। तथा चोपमाऽलङ्कारः ॥ १६ ॥

यानादिति।—[ परिजनैः, यानात् ] वाहनात् [ अवरोप्यमाणाः ] अवतार्य्यमाणाः। रुहेर्ण्यन्तात् कर्मणि लटः शानजादेशः, "रुहः पोऽन्यतरस्याम्" ( ७।३।४३ पा० ) इति पकारः। [ नरापनयनाकुल-सौविदल्लाः ] नराणामालोकिजनानामपनयनेऽपसारणे आकुलाः * सौविदल्लाः कञ्चुकिनः यासां ताः। 'सौविदल्लाः कञ्चुकिनः' इत्यमरः। [ स्रस्तावगुण्ठनपटाः ] स्रस्ता अवरोपणसंक्षोभादपसृता अवगुण्ठनपटा नीरङ्गीवस्त्राणि यासां ताः, अत एव [ क्षणलक्ष्यमाणवक्त्रश्रियः ] क्षणं लक्ष्यमाणाः वक्त्रश्रियो यासां ताः तथोक्ताः [राज्ञीः] राजस्त्रीः, "पुंयोगादाख्यायाम्" ( ४।१।४८ पा० ) इति ङीष्। [ जनः ] लोक-समूहः † [ सभयकौतुकमीक्षते स्म ]। ताड़नाद्भयं, कामात् कौतु-कम् ॥ १७ ॥

कण्ठेति।—[तुरङ्गाद्राजावरोधनवधूः] राज्ञामवरोधस्त्रीः [ अव-

---

* व्यग्राः।

† जातावेकवचनम्।

**दृष्ट्वेव निर्जितकलापभरामधस्ताद्-**
**व्याकीर्णमाल्यकवरां कवरीं तरुण्याः ।**
**प्राद्रुद्रवत्सपदि चन्द्रकवान् द्रुमाग्रात्**
**सङ्घर्षिणा सह गुणाभ्यधिकैर्दुरासम् ॥ १९ ॥**

तारयन्तः ] अवरोपयन्तः [ अधिकृताः ] अन्तःपुराधिकारिणः [ कण्ठावसक्तमृदुबाहुलताः ] कण्ठेषु स्वकीयेष्ववसक्ता मृदवो बाहुलतास्तदीया येषां ते, तथोक्ताः सन्तः [स्फुटं] व्यक्तम् [आलिङ्गनानि आपुरेव] अन्यथा दुरवरोहत्वाद्राजाज्ञेति भावः। [ आसां ] वधूनां [ गण्डस्थलीः, शुचितया ] स्वयं शुद्धवर्त्तित्वाद्गण्डानां नैर्मल्याच्च [ न चुचुम्बुः ]। यावत् कर्त्तव्यकारिणः शुद्धात्मानो नातिचरन्तीति भावः; अन्यत्र तु,—पापाचाराः पापलिङ्गानि प्रकाशयन्तीति भावः ॥ १८ ॥

दृष्ट्वेति ।—[ अधस्तात् ] तरुतले [ निर्जितकलापभरां ] निर्जितः कलापभरो बर्हभारो यया ताम् । 'कलापो भूषणे बर्हे' इत्यमरः । [ व्याकीर्णमाल्यकवरां ] व्याकीर्णेन विक्षिप्तेन माल्येन कवरां शारम् । 'कवरः कर्बुरः शारः' इति हलायुधः । [ तरुण्याः, कवरीं ] केशपाशम् । 'कवरी केशपाशोऽथ' इत्यमरः । "जानपद—" ( ४।१।४२ पा० ) इत्यादिना ङीष् । [ दृष्ट्वेव ] इत्युत्प्रेक्षा । [ सपदि ] चन्द्रका अस्य सन्तीति [ चन्द्रकवान् ] मयूरः [ द्रुमाग्रात्, प्राद्रुद्रवत् ] प्रद्रुतवान् । "द्रु गतौ" लुङि "णिश्रि—" ( ३।१।४८ पा० ) इत्यादिना चङ्; चङादेशः, "अचि श्नुधातु—" ( ६।४।७७ पा० ) इत्यादिना उवङादेशः । तथा हि,—[ सङ्घर्षिणा ] मत्सरिणा कर्त्रा । [ गुणाभ्यधिकैः ] गुणोत्कृष्टैः [ सह, दुरासम् ] आसितुमशक्यमित्यर्थः । आसेरकर्म्मकात् "ईषद्दुः—" ( ३।३।१२६ पा०) इत्यादिना भावे खल्प्रत्ययः, "तयोरेव कृत्यक्तखलर्थाः" (३।४।७० पा० ) इति नियमात् । अत्र भयहेतुकस्य पलायनस्य कवरीदर्शनहेतुकत्वमुत्प्रेक्ष्य तत्समर्थनासमर्थोऽयम् अर्थान्तरन्यासः कृत इत्यस्यानया अङ्गेन सङ्करः । न हि जितैर्जेतुरग्रे स्थातुमुचितमिति भावः * ॥ १९ ॥

* अत्र "दिवाभीतमिवान्धकारम्" इत्यादाविव उत्प्रेक्षितार्थसमर्थनात् अनु-

रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशा-
वंशध्वजैर्जलदसंहतिमुल्लिखन्त्यः।
भूभर्त्तुरायतनिरन्तरसन्निविष्टाः
पादा इवाभिबभुरावलयो रथानाम्॥ २०॥

छायाविधायिभिरनुज्झितभूतिशोभै-
रुच्छ्रायिभिर्बहलपाटलधातुरागैः।

रोचिष्णिवति।—[रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशाः] रोचिष्णवो रोचनशीलाः। "अलङ्कृञ्—" (३।२।१३६ पा०) इत्यादिना इष्णुच्-प्रत्ययः। तेषां काञ्चनचयानां कनकचयानामंशुभिः पिशङ्गिताः पिशङ्गी-कृताः आशा दिशो याभिस्ताः, [वंशध्वजैः] वंशानां तत्तद्राजकुलानां ध्वजैः प्रतिनियतकुलानामङ्कुशादिचिह्नितकेतुभिः, अन्यत्र,—वंशा वेणवस्तैरेव ध्वजैः [जलदसंहतिं] मेघसङ्घातम् [उल्लिखन्त्यः, * आयत-निरन्तरसन्निविष्टाः] आयतं दीर्घं निरन्तरं नीरन्ध्रञ्च सन्निविष्टाः संस्थिताः [रथानामावलयः, भूभर्त्तुः] रैवतकाद्रेः [पादाः] प्रत्यन्त-पर्वताः [इव, अभिबभुः] भान्ति स्म। आशापिशङ्गीकरणादिक्रिया-निमित्ता जातिस्वरूपोत्प्रेक्षा॥ २०॥

छायेति।—[क्षितिभृतां] राज्ञां, निवसन्त्यत्रेति [निवासाः] निवासदेशाः [छायाविधायिभिः] कान्तिकरैरनातपसम्पादकैश्च। 'छाया त्वनातपे कान्तौ' इति विश्वः। [अनुज्झितभूतिशोभैः] अनुज्झिता भूतीनां भस्मरचनानां सम्पदाञ्च शोभा यैस्तैः। 'भूतिर्भस्मनि सम्पदि'

चितार्थत्वं दोषः। अत्र तु एतावानेव विशेषः, यदुद्भृतकुमारश्लोके अन्धकारस्याचेत-नस्य सर्वथा भयस्यासम्भवादेव उत्प्रेक्षितार्थस्य समर्थनमयुक्तमभूत्; इह तु चन्द्रकवतां मयूराणां सचेतनत्वात् स्त्रीजनसमवायदर्शनकृतं स्वाभाविकं पलायनं माल्यसुशोभित-कवरीदर्शनकृतत्वेनोत्प्रेक्षितं कवरी बर्हादपि अधिकचमत्कारिणी आसीदिति ध्वनि-तञ्च, तथा चेतस्यार्थस्य वस्तुगत्या कविप्रौढोक्तिसिद्ध्यै समर्थनञ्च युक्तमेवेति प्रतिभाति।

* स्पृशन्त्यः।

दूष्यैरिव क्षितिभृतां द्विरदैरुदार-
तारावलीविरचनैर्व्यरुचन्निवासाः ॥ २१ ॥
उत्क्षिप्तकाण्डपटकान्तरलीयमान-
मन्दानिलप्रशमितश्रमघर्मतोयैः ।
दूर्वाप्रतानसहजास्तरणेषु भेजे
निद्रासुखं वसनसद्मसु राजदारैः ॥ २२ ॥

---

इत्यमरः । [ उच्छ्रायिभिः ] उन्नमद्भिः [ बहलपाटलधातुरागैः ] बहलः सान्द्रः पाटल आरक्तः धातुरागो गैरिकादिरञ्जनं येषां तैः, [ उदार-तारावलीविरचनैः ] उदारा तारावलीनां शुद्धमुक्तावलीनां विरचना येषु तैः मुक्तासारभूषितैरित्यर्थः । 'तारा मुक्तादिसंशुद्धौ तरले शुद्ध-मौक्तिके' इति विश्वः । दूष्यपक्षे,—तारावली रज्जुसन्ततिरिति केचित् । [ द्विरदैः, दूष्यैः ] पटमण्डपैः [ इव ] । 'दूष्यं वस्त्रे च तद्गृहे' इति विश्वः । [ व्यरुचन् ] रोचन्ते स्म । "रुच दीप्तौ" "द्युद्भ्यो लुङि" (१।३।९१ पा०) इति परस्मैपदे 'पुषादि—" (३।१।५५ पा०) इत्यादिना च्लेरङादेशः । अत्र द्विरदानां दूष्याणाञ्च प्रकृतत्वान्नोपमा, नापि श्लेषभेदः, विशेष्यस्य विशेषणानाञ्च केषाञ्चिदश्लिष्टत्वात् ; तस्मात् केवलप्रकृतास्पदा तुल्ययोगितेयम् । इवशब्दस्तु साहश्यमात्रानुवादक इति सङ्क्षेपः ॥ २१ ॥

उत्क्षिप्तेति ।—[ उत्क्षिप्तकाण्डपटकान्तरलीयमानमन्दानिलप्रशमित-श्रमघर्म्मतोयैः ] उत्क्षिप्तः उद्धृतो यः काण्डपट एव काण्डपटकः दूष्याधो-लम्बिवायुसञ्चारार्थः पटः । 'अपटः काण्डपटी स्यात्' इति वैजयन्ती । तस्यान्तरेऽवकाशे * लीयमानेन विशता मन्दानिलेन प्रशमितं श्रमेणा-

---

* अन्तरेण अवकाशेन इति भवितुं युक्तम् । एवञ्च काण्डपटस्य मध्यदेशेन प्रवहता मरुता प्रशमितखेदाः दूष्याभ्यन्तरशायिनः राजदाराः सुखं स्वपन्ति स्म इति प्रोक्तार्थप्रत्यायने न काप्यनुपपत्तिः ; काण्डपटान्तरस्य करणत्वात् वायोरनाधारतया सप्तम्यन्तपाठस्तु न सङ्गच्छते इति बोध्यम् ।

प्रस्वेदवारिसविशेषविषक्तमङ्गे
कूर्पासकं क्षतनखक्षतमुत्क्षिपन्ती।
आविर्भवद्घनपयोधरबाहुमूला
शातोदरी युवदृशां क्षणमुत्सवोऽभूत्॥ २३॥
यावत् स एव समयः सममेव ताव-
द्व्याकुलाः पटमयान्यभितो वितत्य।
पर्य्यापतत्क्रयिकलोकमगण्यपण्य-
पूर्णाऽऽपणा विपणिनो विपणीर्विभेजुः॥ २४॥

---

स्वेदेन यत् घर्मतोयं स्वेदाम्बु तद् येषां तैः, [राजदारैः] राजावरोधैः [दूर्वाप्रतानसहजास्तरणेषु] दूर्वाणां प्रतानं प्रचय एव सहजमकृत्रिममास्तरणं तल्पं येषु, तेषु, [वसनसद्मसु] पटमण्डपेषु [निद्रासुखं भेजे] * ॥२२॥

प्रस्वेदेति।—[अङ्गे] गात्रे [प्रस्वेदवारिसविशेषविषक्तं] प्रस्वेदवारिणा सविशेषं सातिशयं यथा तथा विषक्तम् अतिश्लिष्टं [कूर्पासकं] चोलकं, कञ्चुकमित्यर्थः। 'चोलः कूर्पासकोऽस्त्रियाम्' इत्यमरः। [क्षतनखक्षतं] क्षतानि पुनर्विदीर्णानि नखक्षतानि यस्मिन् कर्मणि तद्यथा तथा। [उत्क्षिपन्ती] उन्मोचयन्ती, अत एव [आविर्भवद्घनपयोधरबाहुमूला] आविर्भवत् प्रकाशमानं घनपयोधरबाहुमूलं घनौ पयधरौ बाहुमूले च यस्याः सा, [शातोदरी]। "नासिकोदर—" (४।१।५५ पा०) इत्यादिना ङीष्। [युवदृशां क्षणमुत्सवोऽभूत्]। एतेन यूनां त्वराचिन्तादिकरमिष्टवस्त्ववलोकननिमित्तं कालाक्षमत्वलक्षणमौत्सुक्यं व्यज्यते। नायिकाऽभिसारिणी प्रगल्भा वा †॥ २३॥

यावदिति।—विपणो व्यवहारः स एषामस्तीति [विपणिनः]

---

* रूपककाव्यलिङ्गवृत्त्यनुप्रासानां संसृष्टिः।

† काव्यलिङ्गरूपकयोः सङ्करः।

अल्पप्रयोजनकृतोरुतरप्रयासै-
रुद्गूर्णलोष्टलगुडैः परितोऽनुविद्धम् ।
उद्यातमुद्द्रुतमनोकहजालमध्या-
दन्यः शशं गुणमनल्पमवन्नवाप ॥ २५ ॥

---

वणिजः [ यावत् स एव समयः ] सेनानिवेशलक्षणा एव [ तावदेव ] तत्क्षणा एव, [ समं ] युगपत् [ अव्याकुलाः ] अव्यग्राः सन्तः [ पटमयानि ] पटविकारान्, पटमण्डपानीत्यर्थः, [ अभितो वितत्य ] उभयतः श्रेण्या विस्तीर्य्य ; क्रयेण जीवतीति क्रयिकः, "वस्नक्रयविक्रयात्—" ( ४।४।१३ पा० ) इति ठन् । [ पर्य्यापतत्क्रयिकलोकं ] पर्य्यापतन् परितो धावन् क्रयिकलोकः क्रेतृजनो यस्मिन् कर्मणि तत् [अगण्यपण्यपूर्णाऽऽपणाः] अगण्यैरसङ्ख्येयैः पण्यैः पण्यद्रव्यैः पूर्णा आपणाः पण्यप्रसारणस्थानानि यासु ताः, [ विपणीः ] पण्यवीथीः । 'आपणस्तु निषद्यायां विपणिः पण्यवीथिका' इत्यमरः । [ विमेजुः ] असङ्कीर्णं निर्ममुरित्यर्थः । स्वभावोक्त्यनुप्रासौ ॥ २४ ॥

अल्पेति ।—[ अल्पप्रयोजनकृतोरुतरप्रयासैः ] अल्पप्रयोजनेनाल्पफलेन निमित्तेन कृत उरुतरो भूयान् प्रयासो यैस्तैः ; अल्पस्यैकस्य शशपिण्डस्य भूयसामकिञ्चित्करत्वादिति भावः । [ उद्गूर्णलोष्टलगुडैः ] उद्गूर्णाः उद्यताः लोष्टानि मृत्खण्डाः लगुडाश्च दण्डकाष्ठानि यैस्तैः, पुंभिरिति शेषः । [ परितोऽनुविद्धम् ] अनुबद्धम् [ अनोकहजालमध्यात् ] अनसः शकटस्याकं गतिं घ्नन्तीत्यनोकहा वृक्षाः, तेषां जालमध्यात् [ उद्यातम् ] उत्थितम् । उत्पूर्वाद्यातेः कर्त्तरि क्तः । [ उद्द्रुतं ] पलायितं [ शशं ] मृगविशेषम् [ अन्यः ] परः [ अवन् ] हन्तृनिवार्य्य रक्षन् [ अनल्पं गुणं ] महान्तमुत्कर्षम् [ अवाप ] । दयालोरनामिषलोलुपस्य सुकीर्त्तिः सुलभेति भावः । अत्रार्थान्तरं चाहुः,—अन्यो गुणं पाशम् अवन् प्रयुञ्जानः शशमवाप जग्राह, यो हन्ता तस्यैव मृग इति व्याधसमयादिति भावः ॥ २५ ॥

त्रासाकुलः परिपतन् परितो निकेतान्
पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथाऽपि न मृगः क्वचिदङ्गनाना-
माकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥ २६ ॥
आस्तीर्णतल्परचितावसथः क्षणेन
वेश्याजनः कृतनवप्रतिकर्मकाम्यः ।

---

त्रासेति ।—[ त्रासाकुलः ] जनदर्शनाद्भयविह्वलः, अत एव [ निकेतान् ] निवेशान् [ परितः ] सर्वतः । "अभितः परितः—" * इत्यादिना द्वितीया । [ परिपतन् ] धावन् [ मृगः ] हरिणः [ कैश्चिदपि धन्विभिः ] धनुष्मद्भिः । 'धन्वी धनुष्मान् धानुष्कः' इत्यमरः । व्रीह्यादित्वादिनिरिति स्वामी । [ पुंभिः, नान्वबन्धि ] नानुयातः । बध्नातेः कर्म्मणि लुङ् । [ तथाऽपि अङ्गनानाम्, आकर्णपूर्णनयनेषुहतेक्षणश्रीः ] आकर्णपूर्णा विस्तीर्णा आकृष्टाश्च ये नयनान्येवेषवस्तैर्हता ईक्षणश्रीर्यस्य सः, अतः [ क्वचित् ] क्वचिदपि [ न तस्थौ ], किन्तु वीरविशिखपाताभावेऽप्यङ्गनापाङ्गविशिखपातात् पलायित एवेति भावः । अत्र जनालोकनोत्थभयहेतुकस्य मृगानवस्थानस्याङ्गनाऽपाङ्गेषु हतिहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा ; सा च व्यञ्जकाप्रयोगात् प्रतीयमाना । हेतोश्च हतेक्षणश्रीरिति विशेषणगत्योक्तत्वात् काव्यलिङ्गमितिः सङ्करः, नयनेषुः इति रूपकञ्च ॥ २६ ॥

आस्तीर्णेति ।—[ क्षणेन, आस्तीर्णतल्परचितावसथः ] आस्तीर्णतल्पं वेश्यावृत्तेः शय्याप्रधानत्वात् प्रागेव सज्जितशय्यं यथा तथा रचितावसथः कल्पितनिकेतः । 'स्थानावसथवास्तु च' इति कोषः । [ कृतनव-

---

* "उपान्वध्याङ्वसः" ( १।४।४८ पा० ) इति सूत्रे कौमुद्यां प्रदर्शितमेतत् वार्त्तिकम् ; भाष्यकारस्तु "कर्म्मणि द्वितीया" ( २।३।२ पा० ) इति सूत्रे एव उद्धृतवान्, काशिकायामपि अत्रैव सूत्रे दृश्यते इति ।

खिन्नानखिन्नमतिरापततो मनुष्यान्
प्रत्यग्रहीच्चिरनिविष्ट इवोपचारैः ॥ २७ ॥
सस्नुः पयः पपुरनेनिजुरम्बराणि
जक्षुर्बिसं धृतविकाशिबिसप्रसूनाः ।
सैन्याः श्रियामनुपभोगनिरर्थकत्व-
दोषप्रवादममृजन्नगनिम्नगानाम् ॥ ॥ २८ ॥

प्रतिकर्म्मकाम्यः ] कृतेन नवप्रतिकर्म्मणा नूतनेन प्रसाधनेन काम्यः स्पृहणीयः [ अखिन्नमतिः ] अश्रान्तचित्तः, अगणिताध्वखेद इत्यर्थः । [ वेश्याजनः, खिन्नान् ] अध्वश्रान्तान् [ आपततः ] आगच्छतः [ मनुष्यान् ] पुरुषान् [ चिरनिविष्ट इव ] तत्रैव नित्यवास्तव्य इव इत्युत्प्रेक्षा । [ उपचारैः ] शीताम्बुताम्बूलदानादिसत्कारैः [ प्रत्यग्रहीत् ] वशीचकारेत्यर्थः ॥ २७ ॥

सस्नुरिति ।—सेनायां समवेताः [ सैन्याः ] सैनिकजनाः । "सेनाया वा" ( ४।४।४५ पा० ) इति ण्यप्रत्ययः । [ नगनिम्नगानां श्रियां ] गिरिनिर्झरिणीनां याः श्रियः सम्पदः तासाम् [ अनुपभोगनिरर्थकत्वदोषप्रवादम् ] अनुपभोगः उपभोगाभावः । "क्वचित् प्रसज्यप्रतिषेधेऽपि * नञ्समास इष्यते" यथा,—अदर्शनमश्रवणमनुच्चारणमनुपलब्धिरभाव इत्यादि । तेन यन्निरर्थकत्वं निष्फलत्वं तदेव दोषः तेन यः प्रवादो निन्दा तम् [ अमृजन् ] अमार्ज्जन् । "मृजू † शुद्धौ" अदादित्वात् लङि शपो लुक्, मृजेरजादौ क्ङिति विभाषा वृद्धिर्वक्तव्येति विकल्पाद्वृद्ध्यभावः । ‡ मार्ज्जनप्रकारमाह,—[ सस्नुः ] स्नानं चक्रुः ।

* "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥" इति ।

† अयं न षित्, भिदादिपाठसामर्थ्यात् ।

‡ "इको गुणवृद्धी" ( १।१।३ पा० ) इति सूत्रभाष्ये "वृद्धिप्रतिषेधानुपपत्ति-

नाभिह्रदैः परिगृहीतरयाणि निम्नैः
स्त्रीणां बृहज्जघनसेतुनिवारितानि।

---

[पयः] पानीयं [पपुः]। "ष्णा शौचे, पा पाने" लिट्। [अम्बराणि, अनेनिजुः] अक्षालयन्। "णिजिर् शौचे" जुहोत्यादित्वात् लङि "श्लौ" (६।१।१० पा०) इति द्विर्भावः "सिजभ्यस्तविदिभ्यश्च" (३।४।१०९ पा०) इति झेर्जुसादेशः, "निजां लयाणां गुणः श्लौ" (७।४।७५ पा०) इत्यभ्यासस्य गुणः। [धृतविकाशिविसप्रसूनाः] धृतानि विकाशि-विसप्रसूनानि विकसितपुष्कराणि यैस्ते। "विसप्रसूनराजीवपुष्कराम्भो-रुहाणि च" इत्यमरः। [विसं] मृणालं [जक्षुः] भक्षयाञ्चक्रुः। घसि-र्लिटि "गमहन—" (६।४।९८ पा०) इत्यादिना उपधालोपे चुर्त्वं, "शासिवसिघसीनाञ्च" (८।३।६० पा०) इति षत्वम्। स्नानाद्युपभोगेनो-र्म्मीनैरर्थ्यं निराचक्रुरित्यर्थः। अत्र दोषमार्जनस्य स्नानादिना कृतत्वा द्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः; स्नानादिक्रियासमुच्चयस्वरूपमस्येति सङ्करः * ॥ २८ ॥

नाभीति।—[स्त्रीणां, निम्नैः] गम्भीरैः [नाभिह्रदैः] नाभिभिरेव ह्रदैः [परिगृहीतरयाणि] प्रतिषिद्धवेगानि [बृहज्जघनसेतुनिवारि-तानि] बृहद्भिर्जघनैरेव सेतुभिर्निवारितानि प्रतिहतगतिकानीत्यर्थः।

---

त्विक् प्रकरणात्" (भाष्य वा०) इत्यस्य विमर्शे "वाचि क्ङिति मृजेर्वृद्धिः भवति" इति भाष्यसिद्धान्तः। एतस्यैवार्थो मल्लिनाथेन प्रदत्तः स्वभाषया; एतदर्थानुकूलमेव "क्ङित्यजादौ वेष्यते" (७।२।११४ पा० वा०) इति वार्त्तिकम्।

* केचन पद्यमिदं कथितपदताभग्नप्रक्रमतादोषाघ्रातमिति वदन्ति, तदुद्धारस्तु यथा,—"सस्नुः पयः पपुरनेनिजुरम्बराञ्च जक्षुर्विसं विकसितं नलिनञ्च दध्रुः। सैन्याः श्रियामनुपभोगनिरर्थकत्वदोषं वनेषु सरितां प्रसभं ममार्जुः॥" इति। साहित्यदर्पणे तु विसशब्दस्य पुनरुक्तत्वात् अत्र अधिकपदत्वं दोषः वाक्यमात्रगतः इत्युक्तम्; तथा हि,—"अत्र विसशब्दस्य धृतपरिस्फुटतत्प्रसूना इति सर्वनाम्नैव परामर्शो युक्तः" इति।

जग्मुर्जलानि जलमड्डुकवाद्यवल्गु-
वल्गद्घनस्तनतटस्खलितानि मन्दम् ॥ २९ ॥
आलोलपुष्करमुखोल्लसितैरभीक्ष्ण-
मुक्षाम्बभूवुरभितो वपुरम्बुवर्षैः ।
खेदायतश्वसितवेगनिरस्तमुग्ध-
मूर्द्धन्यरत्ननिकरैरिव हास्तिकानि ॥ ३० ॥

---

"पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः" इत्यमरः । [ जलमड्डुक-वाद्यवल्गुवल्गद्घनस्तनतटस्खलितानि] जलमेव मड्डुकवाद्यं, वाद्यविशेषः । जलमेकेन पाणिनोत्थापितम्, अपरेण ताड़ितं मड्डुकवत् * ध्वनतीति प्रसिद्धम् । तेन वल्गु सुन्दरं यथा तथा वल्गद्भिश्चलैः घनैः स्तनतटैः स्खलितानि स्खलनं गतानि गमितानि वा [ जलानि ] पूर्वोक्तनग-निम्नगासलिलानि [ मन्दं जग्मुः ] । अत्र जलमन्दगमनस्य विशेषणा-गत्या रयप्रतिबन्धादिपदार्थहेतुकत्वात् काव्यलिङ्गम् ; रूपकालयश्च ॥२९

आलोलेति ।—हस्तिनां समूहाः [ हास्तिकानि ] "अचित्तहस्ति-धेनोष्ठक्" ( ४।२।४७ पा० ) इति ठक् । [ आलोलपुष्करमुखोल्लसितैः ] आलोलानि यानि पुष्कराणि हस्ताग्राणि 'पुष्करं करिहस्ताग्रे' इत्यमरः । तेषां मुखैः रन्ध्रैरुल्लसितानि उत्क्षिप्तानि तैः [ अम्बुवर्षैः ] जलवर्षणैः [ खेदायतश्वसितवेगनिरस्तमुग्धमूर्द्धन्यरत्ननिकरैः ] खेदेनाध्वश्रमेणायतेन द्राघीयसा श्वसितस्योच्छ्वासमारुतस्य वेगेन निरस्ताः वहिरुत्क्षिप्ताः ये मुग्धाः सुन्दराः मूर्द्धन्याः मूर्ध्नि भवाः । "शरीरावयवाच्च" (४।३।५५ पा०) इति यत्प्रत्ययः,"ये चाभावकर्म्मणोः" (६।४।१६८ पा०) इति प्रकृतिभावात् "नस्तद्धिते" ( ६।४।१४४ पा० ) इति टिलोपाभावः । रत्ननिकरा मुक्ताफलप्रकरास्तैः [ इव ] इत्युत्प्रेक्षा । [ वपुः अभितः ] स्वस्वशरीरं परितः [ अभीक्ष्णम् उक्षाम्बभूवुः ] अनारतं सिषिचुः । "उक्ष सेचने"

---

* "वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः" इत्यमरः ।

ये पक्षिणः प्रथममम्बुनिधिं गतास्ते
येऽपीन्द्रपाणितुलितायुधलूनपक्षाः ।
ते जग्मुरद्रिपतयः सरसीर्विगाढु-
माक्षिप्तकेतुकुथसैन्यगजच्छलेन ॥ ३१ ॥

---

"इजादेश्च गुरुमतोऽनृच्छः" (३।१।३६ पा०) इत्याम्प्रत्ययः। 'गजेन्द्र-जीमूतवराहशङ्ख-मत्स्याहिशुक्त्युद्भववेणुजानि। मुक्ताफलानि प्रथितानि लोके तेषान्तु शुक्त्युद्भवमेव भूरि ॥' इति गजानां मुक्ताकरत्वे प्रमाणम् ॥ ३० ॥

य इति।—[ये पक्षिणः] पक्षवन्तः, इन्द्रेणाच्छिन्नपक्षा इत्यर्थः। संसर्गे इनिप्रत्ययः। * [ते, अद्रिपतयः] मैनाकादयः [प्रथममम्बुनिधिं, गताः] प्रविष्टाः, [येऽपि] ये ये इत्यर्थः [इन्द्रपाणितुलितायुधलून-पक्षाः] इन्द्रस्य पाणिना तुलितेन प्रेरितेनायुधेन वज्रेण लूनपक्षाः छिन्नगरुतः [ते] अद्रिपतयः [आक्षिप्तकेतुकुथसैन्यगजच्छलेन] आक्षिप्ता अपनीताः केतवो ध्वजाः कुथाः पृष्ठास्तरणानि च येषाम्। 'प्रवेण्या-स्तरणं वर्णः परिस्तोमः कुथो द्वयोः' इत्यमरः। तेषां सैन्यगजानां छलेन [सरसीः, विगाढुं] विगाहितुम्। "स्वरतिसूति—" (७।२।४४ पा०) इति विकल्पान्नेडागमः। [जग्मुः]। अत्र गजच्छलेनेति छल-शब्देन गजत्वमपह्नुत्याद्रित्वारोपणात् छलादिशब्दैरसत्यत्वप्रतिपादन-रूपोऽपह्नवालङ्कारः; तेन पक्षवतामद्रीणां सागरावगाहनदर्शनात् मत्सरात् स्वयमपि सलिलमवगाहमानाः साक्षाल्लूनपक्षाः पर्वता इवे-त्युत्प्रेक्षा व्यज्यते † ॥ ३१ ॥

---

* "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इति वार्त्तिकम्।

† इत्यलङ्कारेणालङ्कारध्वनिः।

आत्मानमेव जलधेः प्रतिबिम्बिताङ्ग-
मूर्मौ महत्यभिमुखापतितं निरीक्ष्य ।
क्रोधादधावदपभीरतितूर्णमन्य- *
नागाभियुक्त इव युक्तमहो ! महेभः ॥ ३२ ॥

नादातुमन्यकरिमुक्तमदाम्बुतिक्तं
धूताङ्कुशेन न विहातुमपीच्छताऽम्भः ।
रुद्धे गजेन सरितः सरुषाऽवतारे
रिक्तोदपात्रकरमास्त चिरं जनौघः ॥ ३३ ॥

---

आत्मानमिति ।—[ महेभः, जलधेः ] जलाशयस्य [ महत्यूर्मौ, प्रतिबिम्बिताङ्गं ] प्रतिबिम्बितमङ्गं यस्य तम् [ अभिमुखापतितम् ] अभिमुखमागतम् [ आत्मानमेव ] आत्मप्रतिबिम्बमेवेत्यर्थः । [ निरीक्ष्य, अन्यनागाभियुक्तः ] अन्यनागेन प्रतिगजेनाभियुक्तोऽभिद्रुतः [ इव अतितूर्णम्, अपभीः ] निर्भीकः सन् [ क्रोधादधावत्, अहो ! ] इति मौढ्येन विस्मये । तच्च [ युक्तं ] महेभस्येति भावः । अभियुक्त इवेत्युत्प्रेक्षायाः प्रतिगजभ्रान्तिनिबन्धनत्वात् भ्रान्तिमदुत्प्रेक्षयोरङ्गाङ्गि-भावेन सङ्करः ॥ ३२ ॥

नेति ।—[ अन्यकरिमुक्तमदाम्बुतिक्तम् ] अन्यकरिणा प्रतिगजेन मुक्तेन मदाम्बुना तिक्तं सुरभि । 'कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्त्तिताः' इति केशवः । [ अम्भः, आदातुं ] ग्रहीतुं [ नेच्छता, विहातुं ] त्यक्तुम् [ अपि, न ] इच्छता अनिच्छता, क्रोधपिपासाभ्यामिति भावः । [ धूताङ्कुशेन, सरुषा ] सक्रोधेन [ गजेन, सरितः ] नगसरितः [अवतारे] तीर्थे [ रुद्धे ] सति [ जनौघः, रिक्तोदपात्रकरं ] रिक्तान्युदपात्राणि येषु ते कराः यस्मिन् तद्यथा तथा, "एकहलादौ पूर-

---

* "अतितूर्णमन्य—" इत्यत्र "अभिहन्तुमन्य—" इति पाठान्तरम् ।

पन्थानमाशु विजहीहि पुरः स्तनौ ते
पश्यन् प्रतिद्विरदकुम्भविशङ्किचेताः ।
स्तम्बेरमः परिणिनंसुरसावुपैति
षिड्गैरगद्यत ससम्भ्रममेव काचित् ॥ ३४ ॥

कीर्णं शनैरनुकपोलमनेकपानां
हस्तैर्विगाढमदतापरुजः शमाय ।

---

यितव्येऽन्यतरस्याम्" (६।३।५९ पा०) इत्युदकशब्दस्योदादेशः । [ चिरम्, आस्त ] अतिष्ठत् । "आस उपवेशने" लङ् । * ॥ ३३ ॥

पन्थानमिति ।—[ पन्थानमाशु, विजहीहि ] । "ओ हाक् त्यागे" लोटि सेर्ह्यादेशः † "आ च हौ" ( ६।४।११७ पा० ) इति विकल्पादीकारादेशः । [ पुरः ] अग्रे [ ते स्तनौ पश्यन्, प्रतिद्विरदकुम्भविशङ्किचेताः ] प्रतिद्विरदस्य कुम्भौ विशङ्कत इति तद्विशङ्कि चेतो यस्य सः, प्रतिगजकुम्भभ्रान्तिमानित्यर्थः ; अत एव भ्रान्तिमदलङ्कारः । [ असौ ] स्तम्बे तृणे रमत इति [ स्तम्बेरमः ] हस्ती । 'इभः स्तम्बेरमः पद्मी' इत्यमरः । "स्तम्बकर्णयो रमिजपोः" ( ३।२।१३ पा० ) इत्यच्प्रत्ययः, "तत्पुरुषे कृति बहुलम्" (६।३।१४ पा०) इत्यलुक् । परिणन्तुं दन्ताभ्यां तिर्य्यक् प्रहर्त्तुमिच्छुः [ परिणिनंसुः ] सन्नित्यर्थः । नमेः सन्नन्तादुप्रत्ययः, "एकाच उपदेशेऽनुदात्तात्" ( ७।२।१० पा० ) इतीट्प्रतिषेधः । [ उपैति ] आयाति । 'पुरः' इत्यत्र 'पुरा' इति पाठे,—पुरोपैतीत्यन्वयः, उपैष्यतीत्यर्थः । "यावत्पुरानिपातयोर्लट्" ( ३।३।४ पा० ) इति भविष्यदर्थे लट् । [ षिड्गैः ] विटैः । 'षिड्गः पल्लविको विटः' इति कोषः । [ काचित्, एव ] एवम्, उक्तरीत्या इत्यर्थः [ ससम्भ्रमं ] सत्वरम् [ अगद्यत ] गदिता ॥ ३४ ॥

कीर्णमिति ।—[ अनेकपानां ] द्विपानां [ विगाढमदतापरुजः ]

---

* काव्यलिङ्गस्वभावोक्त्योः संसृष्टिः ।

† "सेर्ह्यपिच्च" ( ३।४।८७ पा० ) ।

आकर्णमुल्लसितमम्बु विकाशिकाश-
नीकाशमाप समतां सितचामरस्य ॥ ३५ ॥

गण्डूषमुज्झितवता पयसः सरोषं
नागेन लब्धपरवारणमारुतेन ।
अम्भोधिरोधसि पृथुप्रतिमानभाग-
रुद्धोरुदन्तमुसलप्रसरं निपेते ॥ ३६ ॥

---

विगाढः प्ररूढो यो मदेन तापः स एव रुक् रोगः तस्याः रुजः [ शमाय, शनैः ] मन्दं [ हस्तैः, अनुकपोलं ] कपोलयोः [ कीर्णं ] क्षिप्तम् [ आकर्णं ] कर्णपर्य्यन्तम् । "आङ्मर्य्यादाभिविध्योः" ( २।१।१३ पा० ) इत्यव्ययीभावः । [ उल्लसितम् ] उत्पतितं [ विकाशिकाशनीकाशं ] विकाशि यत्काशं काशकुसुमं तेन सदृशं काशनीकाशम् । नित्यसमासत्वादस्वपदविग्रहः ; अत एव 'स्युरुत्तरपदे त्वमी । निभसङ्काशनीकाशप्रतीकाशोपमाऽऽदयः' इत्यमरः । [ अम्बु ] पानीयं [ सितचामरस्य, समतां ] सादृश्यम् [ आप ] । "तुल्यार्थैः—" ( २।३।७२ पा० ) इत्यादिना षष्ठी । उपमाऽलङ्कारः ॥ ३५ ॥

गण्डूषमिति ।—[ लब्धपरवारणमारुतेन ] लब्धः परवारणस्य प्रतिगजस्य मारुतो मदगन्धवाहो येन तेन, अत एव [ सरोषं ] यथा तथा [ पयसः ] पानीयस्य [ गण्डूषं ] मुखपूरणं मुखान्तर्गतं पय इत्यर्थः 'गण्डूषो मुखपूरणः' इति हलायुधः । द्विलिङ्गत्वेऽपि पुंलिङ्गमेवाह वामनः "लिङ्गाध्याहारौ" ( ५ अधि० १ अध्या० १४ सू० ) इत्यत्र * ।

---

* अस्य सूत्रस्यार्थस्तत्रैव वृत्तौ यथा,—"लिङ्गञ्च अध्याहारश्च लिङ्गाध्याहारौ अतिप्रयुक्तौ प्रयोज्याविति । लिङ्गं यथा,—'वत्से मा बहु निःश्वसीः कुरु सुरागण्डूषसेकं शनैः' इत्यादिषु गण्डूषशब्दः पुंसि भूयसा प्रयुक्तः, न स्त्रियां, आम्नातोऽपि स्त्रीत्वे" इति एकाधिकलिङ्गस्य शब्दस्य यस्मिन् लिङ्गे बहुलप्रयोगो दृश्यते, तस्मिन्नेव लिङ्गे स प्रयोक्तव्य इति भावः । अत्रापि वामनोदाहृतगण्डूषशब्दस्यैव प्रयोगः, अतः पुंस्त्वमेव सम्यक् इति मतम् ।

दानं ददत्यपि जलैः सहसाऽधिरूढे
को विद्यमानगतिरासितुमुत्सहेत ?।
यद्दन्तिनः कटकटाहतटान्मिमङ्क्षो-
र्मङ्क्षूदपाति परितः पटलैरलीनाम् ॥ ३७ ॥

---

[ उज्झितवता ] त्यक्तवता [ नागेन ] गजेन। 'मतङ्गजो गजो नागः' इत्यमरः। [ अम्भोधिरोधसि ] सागरतीरे *। [ पृथुप्रतिमानभागरुद्धोरुदन्तमुसलप्रसरं ] 'दन्तयोरुभयोर्मध्यं प्रतिमानमिति स्मृतम्'। पृथुना प्रतिमानभागेन रुद्धः प्रतिबद्धः उरू दन्तौ मुसलाविव तयोः प्रसरः प्रसारो यस्मिन् कर्मणि तत् यथा तथा। 'अयोग्रं मुसलोऽस्त्री स्यात्' इत्यमरः। [ निपेते ] निपतितम्। भावे लिट्। क्रोधवेगादलब्धरोधाः प्रहृत्य पारवश्यात् स्वयं चाधोमुखः पपातेत्यर्थः। क्रोधान्धाः किं न कुर्वन्तीति भावः ॥ ३६ ॥

दानमिति।—दीयत इति [ दानं ] धनं मदश्च। 'दानं गजमदे त्यागे' इति विश्वः। तत् [ददति] † वितरति [अपि] दातर्य्यपीत्यर्थः। [सहसा] अकस्मात्। स्वरादित्वादव्ययत्वमिति शाकटायनः। [जलैः] जडैः नीरैश्च। 'जलं गोकलले नीरे ह्रीवेरे च जडेऽन्यवत्' इति विश्वः। [ अधिरूढे ] आक्रान्ते सति [ विद्यमानगतिः ] गत्यन्तरवान् समर्थश्च [कः] पुमान् [आसितुं] तत्र स्थातुम् [उत्सहेत ?] न कोऽपीत्यर्थः। "शकधृष—" ( ३।४।६५ पा० ) इत्यादिना तुमुन्। [ यत् ] यस्मात् [मिमङ्क्षोः मङ्क्तुमिच्छोः। मज्जेः सन्नन्तादुप्रत्ययः। [ दन्तिनः, कटकटाहतटात् ] कटो गण्डः स कटाहः खर्पर इव। 'कटाहः खर्परस्तु यः' इति वैजयन्ती। तस्य तटात् प्रदेशात् [ अलीनां पटलैः परितः, मङ्क्षु ] द्राक्। 'द्राङ् मङ्क्षु सपदि द्रुते' इत्यमरः। [ उदपाति ] उत्पतितम्। भावे लुङ्। "चिण् भावकर्मणोः" ( ३।१।६६ पा० ) इति चिण् "चिणो लुक्"

---

* "सागरतीरे" इत्यत्र जलाशयतीरे इत्येवार्थः युक्तियुक्तः।

† शतरि रूपम्।

**अन्तर्जलौघमवगाढवतः कपोलौ**
**हित्वा चणं विततपद्धतिरन्तरीचे ।**
**द्रव्याश्रयेष्वपि गुणेषु रराज नीलो**
**वर्णः पृथग्गत इवालिगणो गजस्य ॥ ३८ ॥**
**संसर्पिभिः पयसि गैरिकरेणुरागै-**
**रम्भोजगर्भरजसाऽङ्गनिषङ्गिणा च ।**

---

( ६।४।१०४ पा० ) इति तलुक्। विशेषेण सामान्यसमर्थनरूपोऽर्था-न्तरन्यासः ॥ ३७ ॥

अन्तरिति।—जलौघे अन्तरिति [ अन्तर्जलौघं ]। विभक्त्यर्थेऽव्ययीभावः ; अथवा,—जलौघं जलपूरम्, अन्तः अभ्यन्तरे [अवगाढवतः] प्रविष्टवतः। गाहेर्निष्ठाक्तवतुप्रत्ययः, ढत्वष्टुत्वढलोपाः। [ गजस्य कपोलौ हित्वा चणम्, अन्तरीचे ] उपर्य्याकाशे [विततपद्धतिः] विस्तृत-पद्धमूलः आ मूलात् विततपद्ध इत्यर्थः। 'स्त्री पद्धतिः पद्धमूलम्' इत्यमरः। "पद्धात्तिः" (५।२।२५ पा०) इति तिप्रत्ययः। [ अलिगणः ] भ्रमरसङ्घः [गुणेषु] रूपादिषु, द्रव्यमाश्रयो येषां तेषु [ द्रव्याश्रयेषु अपि ] अयुतसिद्धत्वात् * द्रव्यसमवेतत्वाच्च द्रव्याधीनसत्ताकेषु सत्स्वपीत्यर्थः। [ पृथग्गतः ] जलमज्जनभयात् स्वाश्रयपरिहारेण स्थितः [ नीलो वर्णः ] नीलरूपं, गजस्य नीलिमा [ इव रराज ]। 'गुणे शुक्लादयः पुंसि' इत्यमरः। अत्रालिगणे सादृश्याद्गजनीलत्वाश्रयादन्यत उपलब्धि-निर्वाहाय पृथक्स्थितिविशिष्टत्वमुत्प्रेक्ष्यते ॥ ३८ ॥

संसर्पिभिरिति।—सरिच्च महेभश्च [ सरिन्महेभौ, पयसि संसर्पिभिः] गजात् सरिज्जले विसृत्वरैः [ गैरिकरेणुरागैः ] गैरिकरेणवः धातव एव रागास्तैः। करणे घञ्। [ अङ्गनिषङ्गिणा ] गजाङ्गसङ्गिना [ अम्भोज-गर्भरजसा च ] पद्मान्तःपरागेण च निमित्तेन [ क्रीडोपभोगं ]

---

* अपृथक्सिद्धत्वादित्यर्थः।

क्रीडोपभोगमनुभूय सरिन्महेभा-
वन्योऽन्यवस्त्रपरिवर्त्तमिव व्यधत्ताम् ॥ ३९ ॥

यां चन्द्रकैर्मदजलस्य महानदीनां
नेत्रश्रियं विकसतो विदधुर्गजेन्द्राः।
तां प्रत्यवापुरविलम्बितमुत्तरन्तो
धौताङ्गलग्ननवनीलपयोजपत्रैः ॥ ४० ॥

प्रत्यन्यदन्ति निशिताङ्कुशदूरभिन्न-
निर्य्याणनिर्यदसृजं चलितं निषादी।

---

क्रीडया लीलया उपभोगं सम्भोगम् [ अनुभूय, अन्योऽन्यवस्त्रपरिवर्त्तम् ] अन्योऽन्यं मिथो वस्त्रयोः परिवर्त्तं विनिमयं [ व्यधत्ताम् ] अकुरुताम् [ इव ]। दधातेर्लङि परस्मैपदे तसस्तामादेशः। अत्र सरिन्महेभयोः प्रतीयमाननायिकादेरभेदाध्यवसायेन वस्त्रविनिमयोत्प्रेक्षा अतिशयोक्त्या सङ्कीर्य्यते ॥ ३९ ॥

यामिति।—[ गजेन्द्राः, विकसतः ] समन्तात् पयसि तैलबिन्दुवत् प्रसरतः [ मदजलस्य, चन्द्रकैः ] चन्द्राकारैर्मण्डलैः [ महानदीनां यां नेत्र-श्रियं, विदधुः ] चक्रुः, [ तां ] नेत्रश्रियम् [ उत्तरन्तः ] जलान्निर्गच्छन्तः [ धौताङ्गलग्ननवनीलपयोजपत्रैः ] धौतेषु क्षालितेष्वङ्गेषु लग्नैः सक्तैर्नव-नीलपयोजपत्रैर्नवनीलोत्पलदलैः [ अविलम्बितं ] क्षिप्रमेव [ प्रत्यवापुः ] प्रतिभेजिरे। अत्र गजानां नदीनाञ्च समनेत्रश्रीविनिमयोक्त्या सम-परिवृत्तिरलङ्कारः। "समन्यूनाधिकानाञ्च यदा विनिमयो भवेत्। सार्कं समाधिकन्यूनैः परिवृत्तिरसौ मता॥" इति लक्षणात् ॥ ४० ॥

प्रतीति।—अन्यदन्तिनं प्रति [ प्रत्यन्यदन्ति ] प्रतिगजाभिमुख-मित्यर्थः। "लक्षणेनाभिप्रती आभिमुख्ये" ( २।१।१४ पा० ) इत्यव्ययी-भावः। [ चलितं ] धावन्तम्, अत एव [ निशिताङ्कुशदूरभिन्ननिर्य्याण-निर्यदसृजं ] निशितेनाङ्कुशेन दूरं गाढं यथा तथा भिन्नं यत् निर्याण-

रोद्धुं महेभमपरिव्रढिमानमागा-
दाक्रान्तितो न वशमेति महान् परस्य ॥ ४१ ॥
सेव्योऽपि सानुनयमाकलनाय यन्त्रा
नीतेन वन्यकरिदानकृताधिवासः ।
नाभाजि केवलमभाजि गजेन शाखी
नान्यस्य गन्धमपि मानभृतः सहन्ते ॥ ४२ ॥

---

मपाङ्गदेशः । 'अपाङ्गदेशो निर्य्याणम्' इत्यमरः । तस्मान्निर्यत् निःसरत् असृक् यस्य तं [ महेभं, रोद्धुं ] ग्रहीतुं [ निषादी ] यन्ता ; परिवृंहते प्रभवतीति परिवृढः प्रभुः । वृहतेर्वृंहेर्वा कर्त्तरि क्तप्रत्यये "प्रभौ परिवृढः" ( ७।२।२१ पा० ) इति नकारहकारयोर्लोपः, निष्ठातकारस्य ढत्वञ्च निपात्यते, अन्यथा ढलोपस्य सर्वत्रासिद्धेरिष्ठनादिषु "र ऋतो हलादेर्लघोः" ( ६।४।१६१ पा० ) इति रेफादेशो न स्यात् ; तस्मात् इमनिचि रेफादेशे परिव्रढिमा, ततो नञ्समासः । तम् [ अपरिव्रढिमानम् ] असामर्थ्यम् [ आगात् ] प्राप । "इणो गा लुङि" ( २।४।४५ पा० ) इति गादेशः । तथा हि [ महान् ] बलवान् [ आक्रान्तितः ] बलात्कारात् [ परस्य वशं * नैति ] † । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४१ ॥

सेव्य इति ।—[ यन्त्रा ] निषादिना [ आकलनाय ] बन्धनाय [ सानुनयं ] ससान्त्वं [ नीतेन ] समीपं प्रापितेन [ गजेन, वन्यकरिदानकृताधिवासः ] वन्यगजदानैः कृतोऽधिवासो वासना यस्य सः, तद्गन्धीत्यर्थः । [ शाखी ] वृक्षः । व्रीह्यादित्वात् इनिः । [ सेव्योऽपि ] सन् [ नाभाजि ] नासेवि । "भज सेवायाम्" कर्मणि लुङि "चिणो लुक्" ( ६।४।१०४ पा० ) इति तलुक् वृद्धिश्च ; किन्तु [ केवलम्, अभाजि ] अभञ्जीत्यर्थः । 'भञ्जो आमर्दने "भञ्जेश्च चिणि" ( ६।४।३३

---

* अधीनताम् ।

† न प्राप्नोति ।

अद्रीन्द्रकुञ्जचरकुञ्जरगण्डकाष-
सङ्क्रान्तदानपयसो वनपादपस्य।
सेनागजेन मथितस्य निजप्रसूनै-
र्मम्ले यथागतमगामि कुलैरलीनाम् ॥ ४३ ॥
नोच्चैर्यदा तरुतलेषु ममुस्तदानी-
माधोरणैरभिहिताः पृथुमूलशाखाः।
बन्धाय चिच्छिदुरिभास्तरसाऽऽत्मनैव
नैवात्मनीनमथवा क्रियते मदान्धैः ॥ ४४ ॥

---

पा०) इति विभाषानलोपः, शेषं पूर्ववत्। तथा हि [ मानभृतः ] अहङ्कारिणः [ अन्यस्य गन्धमपि न सहन्ते ] परं किमुतेति भावः। अतो वृक्षभञ्जनं गजस्य युक्तमेवेत्यर्थः। पूर्ववदलङ्कारः * ॥ ४२ ॥

अद्रीन्द्रेति।—[ अद्रीन्द्रकुञ्जचरकुञ्जरगण्डकाषसङ्क्रान्तदानपयसः ] अद्रीन्द्रस्य रैवतकस्य कुञ्जेषु चरति यस्तस्य कुञ्जरस्य गण्डकाषेण कपोल-सङ्घर्षणेन सङ्क्रान्तं दानपयो मदाम्बु यस्मिन् तस्य, अत एव [ सेनागजेन, मथितस्य ] भग्नस्य [ वनपादपस्य, निजप्रसूनैः ] निजैरात्मीयैः प्रसूनैः पुष्पैः। 'निजमात्मीयनित्ययोः' इति वैजयन्ती। [ मम्ले ] म्लानम्। म्लायतेर्भावे लिट्। [ अलीनां कुलैः ] तु [ यथागतम्, अगामि ] गतम्, आगतक्रमेणैव गतं, न तु म्लानमित्यर्थः। आपद्यात्मीयानात्मीययोर्भेद इति भावः। गमेर्गत्यर्थस्याकर्म्मकत्वविवक्षणाद्भावे लुङ्। इभवनपादपादीनां विशेषणसाम्यादापन्नाद्यौपम्यप्रतीतेः कथञ्चित् समासोक्तिरुन्नेया ॥ ४३ ॥

नेति।—[ इभाः यदा, उच्चैः ] उन्नतेषु [ तरुतलेषु, न ममुः ] नावर्त्तन्त, [तदानीम्, आधोरणैः] नियन्तृभिः [अभिहिताः] इमाश्छिन्त्वेत्युप-

---

* नाभाजि अभाजि इति विरोधस्य।

उष्णोष्णशीकरसृजः प्रबलोष्मणोऽन्त-
रुत्फुल्लनीलनलिनोदरतुल्यभासः।
एकान् विशालशिरसो हरिचन्दनेषु
नागान् बबन्धुरपरान्मनुजा निरासुः॥ ४५॥

---

दिष्टाः [ पृथुमूलशाखाः, बन्धाय ] स्वबन्धनायैव [ तरसा ] बलेन [आत्मना] स्वयम् [एव चिच्छिदुः]। न चैतद् युक्तमिति भावः। यद्वा,—मूढानां युक्तमेवेत्याह, [अथवेति।—[ अथवा मदान्धैः, आत्मनीनम् ] आत्मने हितं [ न क्रियत एव ]। "आत्मन्विश्वजनभोगोत्तरपदात् खः" ( ५।१।९ पा० ) इति खप्रत्ययः, "आत्माध्वानौ खे" ( ६।४।१६९ पा० ) इति प्रकृतिभावात् "नस्तद्धिते" ( ६।४।१४४ पा० ) इति टिलोपो न। पूर्वपूर्ववदर्थान्तरन्यासः॥ ४४॥

उष्णोष्णेति।—[ मनुजाः ] नराः [ उष्णोष्णशीकरसृजः ] उष्णोष्णाः उष्णप्रकाराः। "प्रकारे गुणवचनस्य" ( ८।१।१२ पा० ) इति द्विर्वचनं, कर्म्मधारयवद्भावात् सुपो लुक्। तान् शीकरान् सृजन्ति मुञ्चन्तीति तथोक्तान्। क्विप्। [ अन्तः, प्रबलोष्मणः ] प्रवृद्धतापान् [ उत्फुल्ल-नीलनलिनोदरतुल्यभासः ] उत्फुल्लं विकचम्। "उत्फुल्लसम्फुल्लयोरुप-सङ्ख्यानम्" * उदुपसर्गेऽपि फलेर्निष्ठालत्वम्। तस्य नीलनलिनस्य नीलोत्पलस्योदरेण तुल्यभासः समानकान्तीन्, कृष्णवर्णानित्यर्थः। [ विशालशिरसः ] विपुलमस्तकान् [एकान्] कतिचित् [नागान्] गजा-

---

* "ति च" (७।४।८९ पा०) इति सूत्रे सिद्धान्तकौमुद्यां द्रष्टव्यम्। एतत्तु वार्त्तिक-सूत्रं दीक्षितसम्मतं, काशिकायान्तु अन्यथा दृश्यते यथा,—"उत्फुल्लसंफुल्लयोरिति वक्तव्यम्" इति, 'ञिफला विशरणे' इत्यस्मात् धातोः उत्तरस्य निष्ठातकारस्य लकारो निपात्यते इत्युक्तञ्च; भाष्यकारेणापि अन्यथाकृत्य पठितं यथा,—"फलेर्लत्वे उत्पूर्व-स्योपसंख्यानम्। फलेर्लत्वे उत्पूर्वस्योपसंख्यानं कर्त्तव्यम्। उत्फुल्लोऽनृतं कथयति अत्यल्पमिदमुच्यते उत्पूर्वादिति। उत्फुल्लसंफुल्लयोरिति वक्तव्यम्" इति, एतस्य चेत् वार्त्तिकत्वं, तदा काशिकया सह न पाठविरोधः इति वेदितव्यम्।

कण्डूयतः कटभुवं करिणो मदेन
स्कन्धं सुगन्धिमनुलीनवता नगस्य।
स्थूलेन्द्रनीलशकलावलिकोमलेन
कण्ठेगुणत्वमलिनां वलयेन भेजे॥ ४६॥
निर्धूतवीतमपि बालकमुच्छलन्तं
यन्ता क्रमेण परिसान्त्वनतर्जनाभिः।

---

नित्यर्थः। [ हरिचन्दनेषु ] चन्दनविशेषेषु 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्' इत्यमरः। [ बबन्धुः ; अपरान् ] नागानहीनित्यर्थः। 'दुष्टाश्वश्राहिगजा नागाः' इत्युभयत्रापि वैजयन्ती। [निरासुः] निष्कासयामासुः। अस्यतेर्लिट्। अत्रोभयेषामपि नागानां प्रकृतत्वात् केवलप्रकृतश्लेषः॥ ४५॥

कण्डूयत इति।—[ कटभुवं ] गण्डस्थलं [ कण्डूयतः ] कषतः। "कण्ड्वादिभ्यो यक्" ( ३।१।२७ पा० ) इति यक्, ततः शतृप्रत्ययः। कण्डूयतेर्ञित्त्वात्प्रकृतित्वादुभयपदित्वम्। [ करिणो मदेन, सुगन्धिं ] शोभनगन्धम्। गन्धस्येत्वे तदेकान्तग्रहणं नाद्रियन्ते कवयः। [ नगस्य ] वृक्षस्य [ स्कन्धं ] प्रकाण्डम् [ अनुलीनवता ] तत्र संश्लिष्टेनेत्यर्थः। लीयतेर्निष्ठा इति क्तवतुप्रत्ययः। "ल्वादिभ्यः" ( ८।२।४४ पा० ) इति निष्ठानत्वम्। [ स्थूलेन्द्रनीलशकलावलिकोमलेन ] स्थूलानामिन्द्रनीलशकलानाम् आवलिवत् कोमलेन मनोहरेण [ अलिनां वलयेन, कण्ठेगुणत्वं ] कण्ठवलयत्वम्। "अमूर्द्धमस्तकात् स्वाङ्गादकामे" ( ६।३।१२ पा० ) इत्यलुक्। [ भेजे ] प्राप्तम्। कर्मणि लिट्। अत्रालिवलये इन्द्रनीलमयकण्ठभूषणत्वारोपाद्रूपकालङ्कारः, शकलावलिकोमलेन इत्युपमा च॥ ४६॥

निर्धूतेति।—[ यन्ता ] निषादी [ निर्धूतवीतं ] निर्धूतं निरस्तं, वीतं पादघाताङ्कुशवारणं यस्मिन् कर्मणि तद् यथा तथा [ उच्छलन्तम् ]

शिक्षावशेन शनकैर्वशमानिनाय
शास्त्रं हि निश्चितधियां क्व न सिद्धिमेति ? ॥४७॥
स्तम्भं महान्तमुचितं सहसा मुमोच
दानं ददावतितरां सरसाग्रहस्तः ।
बद्धापराणि परितो निगड़ान्यलावीत्
स्वातन्त्र्यमुज्ज्वलमवाप करेणुराजः ॥ ४८ ॥

---

उत्प्लवमानम् [ अपि ]। 'पादकर्म्म यतं प्रोक्तं यतमङ्कुशवारणम्। उभयं वीतमाख्यातम्' इति हलायुधः। [ बालकं ] पञ्चवर्षगजम्। 'पञ्चवर्षो गजो बालः पोतस्तु दशवार्षिकः' इति वैजयन्ती। [ शिक्षावशेन ] स्वकीयेन गजशास्त्राभ्यासबलेन [ क्रमेण ] परिपाट्या [ परिसान्त्वनतर्जनाभिः ] परिसान्त्वनान्युपलालनानि तर्जनाः भर्त्सनाश्च ताभिः, शनैरेव [शनकैः]। "अव्ययसर्वनाम्नामकच् प्राक् टेः" ( ५।३।७१ पा० ) इति स्वार्थेऽकच्प्रत्ययः। [वशं] शमं, शान्तिमित्यर्थः, [ आनिनाय ]। [ हि ] तथा हि, [ निश्चितधियां ] सुष्ठु निश्चितार्था धीरेषां तेषां, पुंसामित्यर्थः। [शास्त्रं क्व सिद्धिं नैति ? ] स्वभ्यस्तं शास्त्रं सर्वत्र फलतीत्यर्थः। 'विभक्तधना भ्रातरो विभक्ताः' इतिवत्, निश्चितार्था धीर्निश्चितेत्युपचर्य्यते ; अत एवात्र गम्यमानार्थत्वादुत्तरपदस्याप्रयोगलक्षणो लोप इत्याहुः * ॥ ४७ ॥

स्तम्भमिति।—करेणुश्चासौ राजा च [ करेणुराजः ] गजश्रेष्ठः, करेणूनां राजेति गजपतिः राजा च ध्वन्यते। उभयत्रापि "राजाहः-

---

* किराते १म सर्गे १म श्लोकस्य टीका द्रष्टव्या। तत्र हि "विदितः" इति "वृत्तिम्" इत्यत्र वृत्तिगतं विदितत्वं वेदितरि वनेचरे उपचर्य्य सम्यग्व्याख्यातं प्रपञ्चितञ्च टीकाकृता, तद्वदिहापीत्यवधेयम्। श्लोकेऽस्मिन् सामान्येन, सम्यक् शास्त्रार्थज्ञानवतां पुंसां स्वभ्यस्तशास्त्रसिद्धिकरणपदार्थेन, विशेषस्य, यन्तृकर्तृकबालगजशासनविधानस्य समर्थनात्, सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः।

जज्ञे जनैर्मुकुलिताक्षमनाददाने
संरब्धहस्तिपकनिष्ठुरचोदनाभिः।
गम्भीरवेदिनि पुरः कवलं करीन्द्रे
मन्दोऽपि नाम न महानवगृह्य साध्यः ॥ ४९ ॥

---

सखिभ्यष्टच्" (५।४।९१ पा०) इति टच्। [उज्ज्वलम्] उच्छृङ्खलं [स्वातन्त्र्यं] स्वेच्छाचारित्वम् [अवाप]। तदेवाह,—[उचितं] चिरपरिचितं [महान्तं, स्तम्भम्] आलानं जाड्यञ्च [सहसा मुमोच]। 'स्तम्भः स्थूणाजड़त्वयोः' इति विश्वः। [सरसाग्रहस्तः] सरसः आर्द्रोऽग्रहस्तः पुष्करम् अग्रपाणिश्च यस्य स सन् [दानं] मदं, दीयत इति दानं धनञ्च [अतितराम्] अतिमात्रम्। अव्ययादामुप्रत्ययः *। [ददौ] ववर्षेत्यर्थः। [परितः, वङ्गापराणि] वङ्गपश्चिमपादानि वङ्गान्यानि च। 'अपरः पश्चिमः पादः' इति गजप्रकरणे वैजयन्ती। [निगड़ानि] शृङ्खलानि। 'अथ शृङ्खले। अन्दुको निगड़ोऽस्त्रियाम्' इत्यमरः। [अलावीत्] लुनाति स्म। 'लूञ् छेदने' लुङ् "अस्तिसिचोऽपृक्ते" (७।३।९६ पा०) इतीट्, "इट ईटि" (८।२।२८ पा०) इति सलोपः। अत्र करेणुराजपदसाधर्म्यध्वनिः, विशेष्यस्यापि श्लिष्टत्वान्न श्लेष इत्युक्तम् † ॥ ४८ ॥

जज्ञ इति।—गम्भीरं मन्दं वेत्तीति गम्भीरवेदी। 'त्वग्भेदाच्छोणितस्रावान्मांसस्य च्यवनादपि। आत्मानं यो न जानाति तस्य गम्भीरवेदिता ॥' इति राजपुत्रीये। 'चिरकालेन यो वेत्ति शिक्षां परिचितामपि। गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः ॥" इति मृगचर्मीये। तस्मिन् [गम्भीरवेदिनि करीन्द्रे, संरब्धहस्तिपकनिष्ठुरचोदनाभिः] संरब्धः कुपितः हस्तिनं पातीति हस्तिपः स एव हस्तिपको निषादी। 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः।

---

* "किमेत्तिङव्ययघादा—" (५।४।११ पा०)।

† अत्र समासोक्तिः साधीयसीति मन्यामहे।

क्षिप्तं पुरो न जगृहे मुहुरिक्षुकाण्डं
नापेक्षते स्म निकटोपगतां करेणुम् ।
सस्मार वारणपतिः परिमीलिताक्ष-
मिच्छाविहारवनवासमहोत्सवानाम् ॥ ५० ॥
दुःखेन भोजयितुमाशयिता शशाक
तुङ्गाग्रकायमनमन्तमनादरेण ।

तस्य निष्ठुराभिश्चोदनाभिस्तर्जनाभिरपि [ मुकुलिताक्षं ] निमीलितनेत्रं यथा तथा [ पुरः, कवलं ] ग्रासम् [ अनाददाने ] * सति । [ मन्दः ] मूढः [ अपि ] । 'मूढाल्पापटुनिर्भाग्याः' इत्यमरः । गजभेदोऽपि,— 'भद्रो मन्दो मृगश्चैव विज्ञेयास्त्रिविधा गजाः' इति । [महान्] बलाधिकः [ अवगत्य ] निगत्य [ साध्यः, न नाम ] न खल्विति [ जनैः, जज्ञे ] ज्ञातम् । जानातेः कर्मणि लिट् । मन्दोऽपीत्यादिवाक्यार्थः कर्म ॥४९॥

क्षिप्तमिति ।—[ वारणपतिः ] करिवरः [ मुहुः, पुरः क्षिप्तम् ] अग्रे न्यस्तम् [ इक्षुकाण्डम् ] इक्षुदण्डं [ न जगृहे ] न स्वीचकार, [ निकटोपगतां ] समीपस्थां [ करेणुं ] करिणीञ्च [ नापेक्षते स्म ] नेच्छति स्म । "लट् स्मे" ( ३।२।११८ पा० ) इति भूतार्थे लट् । किन्तु [ परिमीलिताक्षं ] यथा तथेति स्मृत्यनुभावः । [ इच्छाविहारवनवास-महोत्सवानाम् ] इच्छया विहारा येषु ते वनवासा एव महोत्सवास्तेषां [ सस्मार ] तानेव चिन्तयामासेत्यर्थः । "अधीगर्थदयेशां कर्मणि" ( २।३।५२ पा० ) इति शेषत्वविवक्षायां षष्ठी । न स्वच्छन्दचारिणां निर्बन्धे भोगेषु मनः प्रवर्त्तत इति भावः । वाक्यार्थहेतुकं काव्यलिङ्ग-मलङ्कारः ॥ ५० ॥

दुःखेनेति ।—[उत्क्षिप्तहस्ततलदत्तविधानपिण्डस्नेहस्रुतिस्नपितबाहुः] उत्क्षिप्ते उद्यते हस्ततले दत्तो निहितो यः विधानस्य गजग्रासस्य पिण्डः । 'विधानं हस्तिकवलः' इति वैजयन्ती । तस्य स्नेहस्रुत्या घृतादिनिष्य-

* अगत्कृति ।

उत्क्षिप्तहस्ततलदत्तविधानपिण्ड-
स्नेहस्रुतिस्नपितबाहुरिभाधिराजम् ॥ ५१ ॥

शुक्लांशुकोपरचितानि निरन्तराभि-
र्वेश्मानि रश्मिविततानि नराधिपानाम्।
चन्द्राकृतीनि गजमण्डलिकाभिरुच्चै-
र्नीलाभ्रपङ्क्तिपरिवेशमिवाधिजग्मुः ॥ ५२ ॥

---

न्दनेन स्नपितबाहुराप्लुतभुजः। स्नातेर्ण्यन्तात् कर्मणि क्तः "अर्तिह्री—" (७।३।३६ पा०) इत्यादिना पुगागमः, मित्वाद्ध्रस्वः। [आशयिता] भोजयिता; अश्नेर्ण्यन्तात्तृच्। [तुङ्गाग्रकायं] स्वभावत एवोन्नतोर्ध्वकायम् [अनादरेण, अनमन्तं] कवलग्रहणाय नतिमकुर्वाणम् [इभाधिराजम्]। "गतिबुद्धि—" (१।४।५२ पा०) इत्यादिना अणिकर्तुर्णौ कर्मत्वम्। [दुःखेन] कृच्छ्रेण [भोजयितुं शशाक]। स्वभावोन्नतानां तत्राप्यहङ्कारग्रस्तानां को नमयिता? इति भावः * ॥ ५१ ॥

शुक्लेति।—[शुक्लांशुकोपरचितानि] शुक्लांशुकैः शुक्लपटैः उपरचितानि उपकल्पितानि, अन्यत्र तु अल्पाः अंशवोऽंशुकाः सूक्ष्मास्तेजोऽवयवाः। "अल्पे" (५।३।८५ पा०) इत्यल्पार्थे कन्प्रत्ययः। शुक्लैस्तैरुपरचितानि व्याप्तानि। [रश्मिविततानि] रश्मिभिः प्रग्रहैः किरणैश्च विततानि विस्तृतानि। 'किरणप्रग्रहौ रश्मी' इत्यमरः। चन्द्रस्येवाकृतिर्येषां तानि [चन्द्राकृतीनि] चन्द्रमण्डलनिभानीत्यर्थः। [नराधिपानां, वेश्मानि] हर्म्याणि। [निरन्तराभिः] नीरन्ध्राभिः [उच्चैर्गजमण्डलिकाभिः] गजपरिधिभिः। स्वार्थे कप्रत्ययः। कात् पूर्वस्येकारः †। [नीलाभ्रपङ्क्तिपरिवेशम्] नीलाभ्रपङ्क्तिभिः परिवेशं परिवेष्टनमिति यावत्। 'परिवेशस्तु परिधिः' इत्यमरः। [अधिजग्मुरिव] इत्युत्प्रेक्षा उपमया श्लेषेण च सङ्कीर्य्यते ॥ ५२ ॥

---

* काव्यलिङ्गमलङ्कारः।

† "प्रत्ययस्थात् कात्—" (७।३।४४ पा०)।

गत्यूनमार्गगतयोऽपि गतोरुमार्गाः
स्वैरं समाचकृषिरे भुवि वेल्लनाय ।
दर्पोदयोल्लसितफेनजलानुसार-
संलक्ष्यपल्ययनवध्रपदास्तुरङ्गाः ॥ ५३ ॥
आजिघ्रति प्रणतमूर्द्धनि वाह्लिजेऽश्वे
तस्याङ्गसङ्गमसुखानुभवोत्सुकायाः ।

---

गत्यूनेति।—[ गत्यूनमार्गगतयः अपि ] गत्यूना विशिष्टगमनहीना मार्गगतयोऽध्वगमनानि येषां ते, तथाऽपि [ गतोरुमार्गाः ] प्रस्थितदूराध्वान इति विरोधः। अपिर्विरोधे। गत्यूना मार्गी मृगसम्बन्धिनी गतिर्येषाम् इति विरोधपरिहारः; अत एव विरोधाभासोऽलङ्कारः। [ दर्पोदयोल्लसितफेनजलानुसारसंलक्ष्यपल्ययनवध्रपदाः ] दर्पस्य तेजसोऽन्तःसारस्योदयेनोत्कर्षेणोल्लसितस्योन्नतस्य फेनजलस्य फेनीभूतोन्नतस्वेदोदकस्यानुसारेण प्रसारेण संलक्ष्याणि पल्ययनवध्राणामासनबन्धचर्मवरत्राणां पदानि तन्नोदनान्निम्नीभूतस्थलानि येषां ते तथोक्ताः। [ तुरङ्गाः भुवि, वेल्लनाय ] अङ्गपरिवर्त्तनाय [ स्वैरं ] मन्दं [ समाचकृषिरे ] समाकृष्टाः। अध्वश्रमापनोदनार्थमिति भावः। वर्द्धते दृढबन्धनाद्दीर्घीभवतीति वध्रम्। "वृधिवपिभ्यां रन्" ( उ० २ पाद० २७ सू० ) इत्यौणादिके रन्प्रत्यये लघूपधगुणो रपरः। 'वध्रं लपुवरत्रयोः' इति विश्वः। अमरस्तु 'नध्री वध्री वरत्रा स्यात्' इत्याह। तदा "—ष्ट्रन्" ( उ० ४ पा० १५८ सू०) इत्यौणादिके ष्ट्रन्प्रत्यये पूर्ववत् गुणो रपरः, प्रत्ययतकारस्य "झषस्तथोर्धोऽधः" ( ८।२।४० पा० ) इति धत्वे षित्त्वात् स्त्रीलिङ्गे ङीष् ॥ ५३ ॥

आजिघ्रतीति। वाह्लिरश्वयोनिर्देशविशेषः तज्जे [ वाह्लिजेऽश्वे ] "वाह्लिदेश्ये" इति पाठे विशेष्याप्रयोगो गम्यमानत्वादित्युक्तम्। "दिगादिभ्यो यत्" ( ४।३।५४ पा० ) इति भवार्थे यत्प्रत्ययः। तदन्तविधिस्तु मृग्यः। [ प्रणतमूर्द्धनि ] नम्रशिरसि, कृतप्रणामे च [ आजि-

नासाविरोकपवनोल्लसितं तनीयो-
रोमाञ्चतामिव जगाम रजः पृथिव्याः ॥ ५४ ॥

हेम्नः स्थलीषु परितः परिवृत्य वाजी
धुन्वन् वपुः प्रवितताऽऽयतकेशपङ्क्तिः।
ज्वालाकणाऽरुणरुचा निकरेण रेणोः
शेषेण तेजस इवोल्लसता रराज ॥ ५५ ॥

---

प्रति ] गन्धं गृह्णति, चुम्बति च सति, स्वभावात् कामाच्चेति भावः। [ नासाविरोकपवनोल्लसितं ] नासाविरोकं नासारन्ध्रं तस्य पवनो निश्वासः तेनोल्लसितमुद्भूतं [ तनीयः ] तनुतरं [ रजः, तस्य ] अश्वस्य [ अङ्गसङ्गमसुखानुभवोत्सुकायाः ] अङ्गसङ्गमेन वेल्लनप्रयुक्तेन यत् सुखं तस्यानुभवे उत्सुकायाः उत्कण्ठितायाः [पृथिव्याः रोमाञ्चतां जगामेव] इत्युत्प्रेक्षा। सा च भूतुरङ्गमयोः प्रतीयमानचेतननायकाद्यभेदाध्यवसायादतिशयोक्तिमूलेत्यवधेयम्। विरोचतेऽनेनेति विरोकम्। घञ्प्रत्ययः, "चजोः कु घिण्ण्यतोः" (७।३।५२ पा०) इति कुत्वं, लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य इति नपुंसकत्वाविरोधः ; अत एव 'छिद्रं निर्व्यथनं रोकम्' इत्यमरः। 'रोको रश्मौ विले न पुम्' इति वैजयन्ती। 'रोको दीप्तौ विले रोकम्' इति विश्वः। ये तु केनाप्यभिप्रायेण "विरेकपवने" इति पठन्ति, तेषां परोत्सर्गैकजीविनामितिवदपानीयपवनप्रतीतेरश्लीलाख्यो दोषः, "अश्लीलं तदमङ्गल्यजुगुप्साव्रीडधीकरम्" इति लक्षणात् ॥ ५४ ॥

हेम्न इति।—[ हेम्नः स्थलीषु ] स्वर्णभूमिषु। "जानपद—" (४।१। ४२ पा०) इत्यादिना अकृत्रिमार्थे ङीष्प्रत्ययः। [ परितः परिवृत्य] परिवृत्तिं कृत्वा [वपुः, धुन्वन्] धूलिनिर्गमाय कम्पयन्, अत एव [ प्रवितताऽऽयतकेशपङ्क्तिः ] प्रवितता विश्लिष्टा आयता च केशपङ्क्तिः रोमसङ्घातो यस्य सः,[वाजी, ज्वालाकणाऽरुणरुचा] ज्वालाकणाः स्फुलिङ्गाः तद्वदरुणरुचा रक्तवर्णेन [ रेणोर्निकरेण, उल्लसता ] अत्युत्कटतया

**दन्तालिकाधरणनिश्चलपाणियुग्म-**
**मर्द्धोदितो हरिरिवोदयशैलमूर्ध्नः।**
**स्तोकेन नाक्रमत वल्लभपालमुच्चैः**
**श्रीवृक्षकी पुरुषकोन्नमिताग्रकायः ॥ ५६ ॥**

---

बहिरुन्नच्छता [ तेजसः ] अन्तःसारस्य दर्पस्य [ शेषेण ] अतिरेकेण [ इव रराज ]। उत्प्रेक्षाऽलङ्कारः कणारुणेत्युपमा च ॥ ५५ ॥

दन्तालिकेति।—[पुरुषकोन्नमिताग्रकायः] पुरुषकोऽश्वानां स्थानक-भेदः। तदुक्तम् ;—'पश्चिमेनाग्रपादेन भुवि स्थित्वाऽग्रपादयोः। ऊर्द्ध-प्रेरणया स्थानमश्वानां पुरुषः स्मृतः' ॥ इति। पुरुष एव पुरुषकः तेन पुरुषकेण स्थानकेनोन्नमितः ऊर्द्धावस्थितोऽग्रकायः पूर्वकायो यस्य स तथोक्तः, अत एव [ उदयशैलमूर्द्ध्नः ] उदयशैलस्य मूर्द्ध्नो मस्तकात्, अर्द्धमुदितः [ अर्द्धोदितः, हरिः ] सूर्य्यः [ इव ] स्थितः इत्यर्थः। अर्द्धोदित-विशेषणात् [ उच्चैः ] उन्नतः, श्रीवृक्षः एव श्रीवृक्षकः आवर्त्तविशेषस्त-द्वानश्वः [श्रीवृक्षकी]। "वक्षोभवाऽऽवर्त्तचतुष्टयञ्च कण्ठे भवेद्यस्य च रोच-मानः। श्रीवृक्षकी नाम हयः स भर्त्तुः श्रीपुत्रपौत्रादिविवृद्धये स्यात् ॥" इति लक्षणात्। 'श्रीवृक्षकी वक्षसि चेद्रोमावर्त्तौ मुखेऽपि च' इति तु वैजयन्ती। [ दन्तालिकाधरणनिश्चलपाणियुग्मं ] दन्तालिका मुख-रज्जुः। 'मुखरज्जुश्च दन्ताली राणिका रश्मणीति च' इति वैजयन्ती। तस्या धरणे ग्रहणे निश्चलं स्थिरं पाणियुग्मं यस्य तं, पाणिभ्यां दृढं गृहीतोभयवल्गमित्यर्थः। [ वल्लभपालम् ] उत्तमाश्वपालम्। 'वल्लभो दयितेऽध्यक्षे कुलीनेऽश्वेऽपि वल्लभः' इति विश्वः। [ स्तोकेन नाक्रमत ] वल्गाग्रहणदार्ढ्यात् स्तोकेनापि अभिभवितुं न शक्तोऽभूदित्यर्थः। इह 'श्लथयितुं क्षणमक्षमताङ्गना' 'न हन्दुःखमिह किञ्चित्' इत्यादिव-दप्यर्थस्य सामर्थ्यलभ्यत्वादपेरप्रयोगः ; अन्यथा "स्तोकेन नाक्रमत किन्तु भूयः" इति व्याख्याने निश्चलपाणियुग्मत्वादिविशेषणावगतवाह-कौशल्यप्रकाशनतात्पर्य्यभङ्गप्रसङ्गात्। "करणे च स्तोका—" ( २।३।३३

रेजे जनैः स्नपनसान्द्रतरार्द्रमूर्त्ति-
र्दैवैरिवानिमिषदृष्टिभिरीक्ष्यमाणः ।
श्रीसन्निधानरमणीयतरोऽश्व उच्चै-
रुच्चैःश्रवा जलनिधेरिव जातमात्रः ॥ ५७ ॥

अश्रावि भूमिपतिभिः क्षणवीतनिद्रै-
रश्नन् पुरो हरितकं मुदमादधानः ।
ग्रीवाऽग्रलोलकलकिङ्किणिकानिनाद-
मिश्रं दधद्दशनचुर्चुरशब्दमश्वः ॥ ५८ ॥

---

पा०) इत्यादिना विकल्पात् तृतीया ; "अनुपसर्गाद्वा" ( १।३।४३ पा० ) इति विकल्पादात्मनेपदम् । उपमाऽलङ्कारः पदार्थहेतुकेन काव्यलिङ्गेन संसृज्यते ॥ ५६ ॥

रेज इति ।—[ स्नपनसान्द्रतरार्द्रमूर्त्तिः ] स्नपनेनाभिषेचनेन सान्द्रतरार्द्रमूर्त्तिः [ अनिमिषदृष्टिभिः ] विस्मयादनिमिषाक्षैः [ जनैर्दैवैरिव ] तादृग्भिः [ ईक्ष्यमाणः, श्रीसन्निधानरमणीयतरः ] श्रियः शोभायाः देव्याश्च सन्निधानेन रमणीयतरः । 'तत्र सन्निहिता लक्ष्मीः सन्ति यत्रोत्तमा हयाः' इत्यागमादिति भावः । [ उच्चैः ] उन्नतः [ अश्वः, जलनिधेः] समुद्रात्, जात एव [जातमात्रः] सद्योजात इत्यर्थः । अन्यथोक्तसाधर्म्यासम्भवादिति भावः । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । उच्चैरुन्नतं श्रवः कीर्त्तिरुन्नते श्रवसी कर्णौ वा यस्य सः [ उच्चैःश्रवाः ] शक्राश्वः [ इव रेजे ] । उपमाऽलङ्कारः श्रीति भेदेऽप्यभेदरूपया अतिशयोक्त्या संसृज्यते ॥ ५७ ॥

अश्रावीति ।—[ पुरः ] अग्रे [ हरितकं ] हरिततृणम् [ अश्नन् ] अत एव [ ग्रीवाऽग्रलोलकलकिङ्किणिकानिनादमिश्रं ] ग्रीवाग्रे लोलाश्चलाः कलाः अव्यक्तमधुराः, किङ्किणिकाः क्षुद्रघण्टिकाः तासां निनादेन मिश्रं [ दशनचुर्चुरशब्दं ] दशनानां दन्तानां चुर्चुरशब्दं चुर्चुर-

उत्खाय दर्पचलितेन सहैव रज्ज्वा
कीलं प्रयत्नपरमानवदुर्ग्रहेण ।
आकुल्यकारि कटकस्तुरगेण तूर्ण-
मश्वेति विद्रुतमनुद्रवताश्वमन्यम् ॥ ५९ ॥
अव्याकुलं प्रकृतमुत्तरधेयकर्म-
धाराः प्रसाधयितुमव्यतिकीर्णरूपाः ।

---

ध्वनिं [ दधत् ] अत एव [ मुदमादधानः ] उत्पादयन् [ अश्वः ] जातावेक-वचनम् । [ क्षणवीतनिद्रैः ] क्षणेन वीतनिद्रैः 'अल्पनिद्रोऽल्पभुग्वाग्मी मितभाष्यनसूयकः' इति सौभाग्यलक्षणादिति भावः । [ भूमिपतिभिः, अश्रावि ] श्रुतः, अश्वस्य शब्दोऽश्रावीत्यर्थः । "वीणाः श्रूयन्ते, भेर्यः श्रूयन्ते" इत्यादिवत् शब्दधर्म्मः शब्दिषूपचर्य्यते । स्वभावोक्तिरलङ्कारः * ॥ ५८ ॥

उत्खायेति ।—[ दर्पचलितेन ] दर्पाच्चलितेनोल्ललितेन अत एव [ रज्ज्वा ] पाशेन [ सह, कीलं ] शङ्कुम् । 'शङ्कावपि द्वयोः कीलः' इत्यमरः । [ उत्खाय ] उत्पाट्य [ तूर्णं, विद्रुतं ] धावन्तं [ अन्यमश्वम्, अश्वेत्यनुद्रवता ] बडवेति भ्रान्त्याऽनुधावता † [ प्रयत्नपरमानवदुर्ग्रहेण ] प्रयत्नपरिग्रहीतुं प्रयतमानैरपि मानवैर्मनुष्यैर्दुर्ग्रहेण [ तुरगेण, कटकः ] शिबिरम् [ आकुल्यकारि ] आकुलीकृतः । आकुलशब्दादभूततद्भावे च्विः । "अस्य च्वौ" ( ७।४।३२ पा० ) इतीकारः । करोतेः कर्मणि लुङि चिणो लुक् ‡ ॥ ५९ ॥

अव्याकुलमिति ।—वल्गा मुखरज्जुः, सा चोत्क्षिप्तादिभेदेन चतुर्दशविधा । तदुक्तं हयलीलावत्याम्,—"उत्क्षिप्ता शिथिला तथोत्तर-

---

* शब्दं दधदिति पदार्थस्य मुदाधानं प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ।

† अत एव ।

‡ भ्रान्तिमानलङ्कारः ।

सिद्धं मुखे नवसु वीथिषु कश्चिदश्वं
वल्गाविभागकुशलो गमयाम्बभूव ॥ ६० ॥

---

वती मन्दा च वैहायसी विच्छिन्नैककरार्द्धकन्धरसमोत्कीर्णा विभक्ता तथा। अत्युत्क्षिप्ततलोद्धृते खलु तथा व्यागूढ़गोकर्णिके वाहानां कथितास्चतुर्दशविधा वल्गाप्रभेदा अमी ॥" इति। तल्लक्षणानि तु तत्रैव द्रष्टव्यानि, अत्र विस्तरभयान्न लिख्यन्ते। तस्या विभागो विविच्य प्रयोगः तत्र कुशलः [ वल्गाविभागकुशलः ] षड्‌विधप्रेरणाभिज्ञ इत्यर्थः। वल्गाग्रहणस्य रागाद्युपलक्षणत्वात्। यथाह भोजः,—"वाहनं प्रतिवाहानां षड्‌विधं प्रेरणं विदुः। रागावल्गाकशापार्ष्णिप्रतोदरवभेदतः ॥" इति। [ कश्चित् ] कश्चन वाहकः [ अव्याकुलम् ] अव्यग्रम्, अलसमिति यावत्। प्रकर्षेण कृतं [ प्रकृतं ] सज्जितमित्यर्थः। [ मुखे ] मुखकर्मणि [ सिद्धं ] सिद्धिमन्तम् [ अश्वं ] चतुष्काख्ये गतिविशेषे मुखे संस्थानविशेषादिविशेषणविशिष्टमश्वमित्यर्थः। तदुक्तं रेवतोत्तरे, — "सृक्काधरोष्ठसितफेनलवाभिराम-फूत्काररवायुपदमुन्नतकन्धराग्रम्। नीत्वोपकुञ्चितमुखं नवलीहसाम्यमश्वं चतुष्कसमये मुखसिद्धमाहुः ॥" इति। [ उत्तरधेयकर्मधाराः ] उत्तरधेयकर्म युद्धाद्युत्तरकाले धेयं विधेयं प्रयोज्यं यत्कर्म्म क्रिया तद्रूपा इत्यर्थः। [ अव्यतिकीर्णरूपाः ] असङ्कीर्णरूपा धारा गतिभेदाः। 'अश्वानान्तु गतिर्धारा विभिन्ना सा च पञ्चधा। आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥' इति वैजयन्ती। 'गतयोऽमूः पञ्च धाराः' इत्यमरश्च। अश्वशास्त्रे तु संज्ञान्तरेणोक्ताः,—'गतिः पुला चतुष्का च तद्वन्मध्यजवा परा। पूर्णवेगा तथा चान्या पञ्च धाराः प्रकीर्त्तिताः ॥ एकैका त्रिविधा धारा हयशिक्षाविधौ मता। लघ्वी मध्या तथा दीर्घा ज्ञात्वैता योजयेत् क्रमात् ॥" इति। तथा च पञ्चदश विभेदा भवन्ति। ताः पञ्च धाराः [ प्रसाधयितुं ] परिचेतुं [ नवसु, वीथिषु ] सञ्चारस्थानेषु [ गमयाम्बभूव। वीथयो नवाश्वानां सर्वत्र धारादार्ढ्यार्थाः परिमिताः प्रचारदेशाः, ताश्च तिस्र इत्येके, नवेत्यन्ये, तत्रोत्तरपक्षमाश्रित्योक्तं

मुक्तास्तृणानि परितः कटकं चरन्त-
स्त्रुट्यद्वितानतनिकाव्यतिषङ्गभाजः।
सस्नुः सरोषपरिचारकवार्य्यमाणा
दामाञ्चलस्खलितलोलपदं तुरङ्गाः॥ ६१॥

---

कविना नवस्विति। यथाह भोजः,—'वीथ्यस्तिस्रोऽथ धाराणां लघ्वीमध्योत्तमाः क्रमात्। तासां स्याद्धनुषां मानमशीतिर्नवतिः शतम्॥ श्रेष्ठमध्योत्तमानान्तु वाजिनां वीथिकाः स्मृताः। नवानां कथिता वीथ्यो दुष्टानां क्रमशाक्रमे। अन्येषामपि सर्वत्र गतिदार्ढ्यार्थमीरिताः॥ समोन्नता सा विषमाम्बुकीर्णा शुद्धा नताग्रा तृणवीरुदाढ्या। स्थाणु-प्रकीर्णोपलसम्प्रकीर्णा, पार्श्वोन्नताख्या नवधेति वीथ्यः॥ सर्ववीथिषु यो वाजी दृढ़शिक्षासमन्वितः। तेन राजा रणे नित्यं मृगयायां मुदं व्रजेत्॥" इति। अन्ये तु उरसाल्यादयो गतिविशेषा वीथय इत्याहुः,—'उरसाली वरशाली पृथुली मध्यनामकः। आलीढ़ः शोभनैरङ्गैः प्रत्यालीढ़स्तथाऽपरः॥ उपधेनव उक्तश्च पादचाली च सर्वगः। निर्दिष्टा वीथयस्त्वेताः—' इति॥ ६०॥

मुक्ता इति।—[मुक्ताः] विहारार्थमुत्सृष्टाः, अत एव [कटकं] शिविरं [परितः]। "अभितः परितः" (वा०) * इत्यादिना द्वितीया। [तृणानि, चरन्तः] भक्षयन्तः [त्रुट्यद्वितानतनिकाव्यतिषङ्गभाजः:] त्रुट्यन्तीषु छिन्नासु वितानतनिकासु पटमण्डपरज्जुषु व्यतिषङ्गं सङ्गं भजन्तीति तथोक्ताः। अत एव [सरोषपरिचारकवार्य्यमाणाः] सरोषैः परिचारकैः किङ्करैर्वार्य्यमाणाः अपसार्य्यमाणाः [तुरङ्गाः, दामाञ्चल-स्खलितलोलपदं] दामाञ्चलानि पादपाशाः। 'दामाञ्चलं पादपाशे' इति वैजयन्ती। दृष्यवरलाबन्धनशङ्कवः इति केचित्। तेषु स्खलितेन

---

* "उपान्वध्याङ्वसः" (१।३।४८ पा०) इति सूत्रे उद्धृतमेतत् वार्त्तिकं दीक्षितैः; काशिकायां भाष्येऽपि "कर्म्मणि द्वितीया" (२।३।२ पा०) इति सूत्रे दृश्यते।

उत्तीर्णभारलघुनाऽप्यलघूलपौघ-
सौहित्यनिःसहतरेण तरोरधस्तात् ।
रोमन्थमन्थरचलद्गुरुसास्नमासा-
ञ्चक्रे निमीलदलसेक्षणमौक्षकेण ॥ ६२ ॥
मृत्पिण्डशेखरितकोटिभिरर्द्धचन्द्रं
शृङ्गैः शिखाऽग्रगतलक्ष्ममलं हसद्भिः ।

---

लोलानि पदानि यस्मिन् कर्मणि तद्यथा तथा [ सस्तुः ] अपसस्तुः *
॥ ६१ ॥

उत्तीर्णेति ।—[ उत्तीर्णभारलघुना ] उत्तीर्णभारमवरोपितावपनम्, अत एव लघुः तेन तथोक्तेन [ अपि ] तथाऽपि [ अलघूलपौघसौहित्य-निःसहतरेण] अलघुना उलपानां वल्वजतृणानाम् ओघेन यत् सौहित्यं पूर्त्तिः । 'पर्य्याप्तमुपसम्पन्नं पूर्त्तिः सौहित्यमुच्यते'' इति हलायुधः । तेन निःसहतरेणात्यन्तमसहतरेण, वाह्यभार ावतारेऽप्यन्तरतिभोजनाद् गुरूभवतेत्यर्थः । सहेः निःपूर्वात् पचाद्यजन्तात्तरप्प्रत्ययः ।'उलपा वल्वजाः प्रोक्ताः' इति विश्वः । [ औक्षकेण ] उक्ष्णां समूहेन । "गोत्रोक्ष—" ( ४।२।३९ पा० ) इत्यादिना वुञ्प्रत्ययः । [ तरोरधस्तात् ] तरुतले [ रोमन्थमन्थरचलद्गुरुसास्नम् ] रोमन्थः पशूनां चर्वितचर्वणं, तेन मन्थरं मन्दं चलन्त्यो गुर्व्यः सास्नाः गलकम्बलानि यस्मिन् कर्मणि तद्यथा तथा । 'सास्ना तु गलकम्बलः' इत्यमरः । किञ्च, [ निमीलदलसेक्षणम् ] निमीलन्ति सुखान्मुकुलीभवन्ति अलसानि ईक्षणानि यस्मिन् कर्मणि तद्यथा तथा [ आसाञ्चक्रे ] आसितम् । 'आस उपवेशने' भावे लिट् । "दयायासश्च" ( ३।१।३७ पा० ) इत्याम्प्रत्ययः । "कृञ्चानु-प्रयुज्यते लिटि" ( ३।१।४० पा० ) इति कृञोऽनुप्रयोगः । इतः प्रभृत्या चतुष्टयात् स्वभावोक्तिः ॥ ६२ ॥

मृत्पिण्डेति ।—[ मृत्पिण्डशेखरितकोटिभिः ] मृत्पिण्डैर्वप्रक्रीड़ा-

---

* पदार्थहेतुकं काव्यलिङ्गम् ।

उत्कृङ्गिताऽन्यवृषभाः सरितां नदन्तो
रोधांसि धीरमपचस्करिरे महोक्षाः ॥ ६३ ॥
मेदस्विनः सरभसोपगतानभीकान्
भङ्क्त्वा परानन‍डुहो मुहुराहवेन ।
ऊर्ज्जस्वलेन सुरभीरनु निःसपत्नं
जग्मे जयोद्धुरविशालविषाणमुक्ष्णा ॥ ६४ ॥

---

लग्नैर्मृत्खण्डैः शेखरिताः सञ्जातशेखराः कोटयोऽग्राणि येषां तैः, अत एव [ शिखाऽग्रगतलक्ष्ममलं ] शिखाऽग्रगतमुभयकोट्यन्तर्गतं लक्ष्मैव मलं यस्य सः, एवम्भूतं श्वेतम् [अर्द्धचन्द्रं हसद्भिः] इत्यतिशयोक्तिभेद इत्युक्तम्, अभूतोपमेति मतान्तरम्। [ शृङ्गैः ] विषाणैः [ उत्कृङ्गिताऽन्यवृषभाः ] उत्कृङ्गा उत्पतितशृङ्गाः कृता उत्कृङ्गिताः अन्यवृषभाः प्रतिवृषभाः यैस्ते, अत एव [ धीरं ] गम्भीरं [ नदन्तः ] गर्जन्तः, महान्त उक्षाणः [ महोक्षाः ]। 'अचतुर—' (५।४।७७ पा०) इत्यादिना निपातात् साधुः। [ सरितां रोधांसि अपचस्करिरे ] आलिलिखुः, हर्षाद्रुरुजुरित्यर्थः। अपपूर्वात्किरतेः कर्त्तरि लिट्। "किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्" * इत्यात्मनेपदम्। "ऋच्छत्यृताम्" (७।४।११ पा०) इति गुणः, "अपाच्चतुष्पाच्छकुनिष्वालेखने" (६।१।१४२ पा०) इति सुडागमः ॥ ६३ ॥

मेदस्विन इति।—ऊर्ज्जो बलमस्यास्तीति तेन [ऊर्ज्जस्वलेन] बलिना। 'ज्योत्स्नातमिस्रा—' (५।२।११४ पा०) इत्यादिना निपातः। [उक्ष्णा] वृषभेण [ मेदस्विनः ] मांसलान्। "अस्मायामेधास्रजो विनिः" (५।२।१२१ पा०) इति विनिः। अत एव [ सरभसोपगतान् ] सरभसं सत्वरमुपगतान् अभिकामयन्त इति [ अभीकान् ] कामुकान्। 'कम्रः

---

* इति काशिकायाम्। "क्रीडोऽनुसंपरिभ्यश्च" (१।३।२१ पा०) इत्यत्र वार्त्तिकम्। सिद्धान्तकौमुद्यान्तु "वक्तव्यम्" इत्यत्र "—व्यम्" इति पाठः।

**बिभ्राणमायतिमतीमवृथा शिरोधिं**
**प्रत्यग्रतामतिरसामधिकं दधन्ति।**
**लोलोष्ठमौष्ट्रकमुदग्रमुखं तरूणा-**
**मभ्रंलिहानि लिलिहे नवपल्लवानि ॥ ६५ ॥**

---

कामयिताभीकः' इत्यमरः। "अनुकाभिकाभीकः कमिता" (५।२।७४ पा०) इति निपातः। [ परानानडुहः ] बलीवर्दान् [ मुहुराह्वेन ] युद्धेन [भङ्क्त्वा] निर्जित्य [जयोद्धुरविशालविषाणम्] जयेनोद्धुरे निर्भरे। 'ऋक्पूरा—' (५।४।७४ पा०) इत्यादिना समासान्तः। विशाले च विषाणे यस्मिन् कर्मणि तद्यथा तथा, [ निःसपत्नम् ] अप्रतिपक्षं [ सुरभीरनु ] गवां पृष्ठतः। "कर्मप्रवचनीययुक्ते द्वितीया" (२।३।८ पा०) इति द्वितीया। [ जग्मे ] गतम्। भावे लिट् ॥ ६४ ॥

बिभ्राणमिति।—[ आयतिमतीं ] दैर्घ्यवतीं, न च वृथा दैर्घ्यमित्याह, अवृथेति।—[ अवृथा ] उच्चैस्तरुपल्लवग्रहणात् सफलामित्यर्थः। शिरो धीयतेऽस्यामिति [ शिरोधिं ] ग्रीवाम्। 'शिरोधिः कन्धरेत्यपि' इत्यमरः। "कर्मण्यधिकरणे च" ( ३।३।९३ पा० ) इति किप्रत्ययः। [ बिभ्राणं ] दधानम्, [ उदग्रमुखं ] पल्लवग्रहणार्थमूर्ध्वोत्क्षिप्ततुण्डम् [औष्ट्रकम्] उष्ट्रसमूहः। 'गोत्रोक्ष—' (४।२।३९ पा०) इत्यादिना वुञ्। [अधिकम्] अतिशयितो रसः स्वादो यस्यां ताम् [अतिरसां, प्रत्यग्रताम्] अभिनवत्वं [दधन्ति] दधति। "वा नपुंसकस्य" (७।१।७९ पा०) इति वैकल्पिको नुमागमः। अभ्रं लिहन्तीति [ अभ्रंलिहानि ] उच्चतराणि। "वहाभ्रे लिहः" ( ३।२।३२ पा० ) इति खश्प्रत्ययः। 'अरुर्द्विषत्—' (६।३।६७ पा०) इत्यादिना मुमागमः। [तरूणां नवपल्लवानि] 'पल्लवोऽस्त्री किसलयम्' इत्यमरः। [ लोलोष्ठं ] यथा तथा "ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्" * इति पररूपम्। [ लिलिहे ] आस्वादयामास, जघासेत्यर्थः † ॥ ६५ ॥

---

* काशिकायां "एङि पररूपम्" (६।१।९४ पा०) इत्यस्य वार्त्तिकम्। कौमुद्यान्तु "ओत्वोष्ठयोः समासे वा" इतिमात्रपाठः।

† उष्ट्रविशेषणस्य उच्चैस्तरपल्लवलेहनं प्रति हेतुत्वात् काव्यलिङ्गम्।

साङ्गं कथञ्चिदुचितैः पिचुमर्दपत्रै-
रास्यान्तरालगतमाम्रदलं म्रदीयः ।
दासेरकः सपदि संवलितं निषादै-
र्विप्रं पुरा पतगराडिव निर्जगार ॥ ६६ ॥

स्पष्टं बहिःस्थितवतेऽपि निवेदयन्त-
श्चेष्टाविशेषमनुजीविजनाय राज्ञाम् ।
वैतालिकाः स्फुटपदप्रकटार्थमुच्चै-
र्भोगावलीः कलगिरोऽवसरेषु पेठुः ॥ ६७ ॥

---

साङ्गमिति ।—[ उचितैः ) अभ्यस्तैः । 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः । [ पिचुमर्दपत्रैः ] निम्बदलैः [ साङ्गम् ] । 'पिचुमर्दश्च निम्बे' इत्यमरः । [ कथञ्चित् ] प्रमादात् [ आस्यान्तरालगतं ] मुखान्तर्गतं [ म्रदीयः ] मृदुतरम् [ आम्रदलं ] चूतपल्लवं [ दासेरकः ] उष्ट्रः [ पुरा, निषादैः ] म्लेच्छैः [ संवलितं विप्रं, पतगराट् ] गरुत्मान् [ इव, सपदि, निर्जगार] उद्गीर्णवान् । पुरा किल कुतश्चित्कारणात् म्लेच्छभक्षणे तैः सहान्तः प्रविश्य गलं दहन्तं विप्रं गरुड उज्जगारेति पौराणिकी कथाऽत्रानुसन्धेया * ॥ ६६ ॥

स्पष्टमिति ।—[ बहिः स्थितवतेऽपि अनुजीविजनाय ] राज्ञोऽवसरकाङ्क्षिणे इति भावः । [ राज्ञां, चेष्टाविशेषं ] तत्कालोचितचरित्रविशेषं [ स्पष्टं निवेदयन्तः ] तद्वाञ्छकप्रबन्धपाठैरिति भावः । [ कलगिरः ] मधुरवाचः [ वैतालिकाः ] मङ्गलपाठकाः [ अवसरेषु ] तत्तद्वेलासु [ स्फुटपदप्रकटार्थं ] स्फुटैः प्रसिद्धैः पदैः प्रकटः प्रकाशोऽर्थोऽभिधेयो यस्मिन् कर्मणि तद्‌ यथा तथा [ उच्चैः, भोगावलीः ] प्रब-

---

* महाभारते आदिपर्व्वणि वर्णिता । उपमाऽलङ्कारः । "निर्जगार" इत्यत्र जुगुप्साव्यञ्जकाश्लीलाख्यो दोषः ।

उन्नम्रताम्रपटमण्डपमण्डितं तत्
आनीलनागकुलसङ्कुलमाबभासे।
सन्ध्यांशुभिन्नघनकर्बुरितान्तरीक्ष-
लक्ष्मीविडम्बि शिविरं शिवकीर्त्तनस्य॥ ६८॥

धरस्योद्धर्त्ताऽसि त्वमिति ननु सर्वत्र जगति
प्रतीतस्तत्किं मामतिभरमधः प्रापिपयिषुः।
उपालब्धेवोच्चैर्गिरिपतिरिति श्रीपतिमसौ
बलाक्रान्तः क्रीडद्द्विरदमथितोर्वीरुहरवैः॥६९॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
पञ्चमः सर्गः॥ ५॥

---

न्धान् [ पेठुः ] पठन्ति स्म। "अत एकहल्मध्येऽनादेशादेर्लिटि" (६।४।१२०) इत्येत्वाभ्यासलोपौ॥ ६७॥

उन्नम्रेति।—[ उन्नम्रताम्रपटमण्डपमण्डितम् ] उन्नम्रैरुन्नतैस्ताम्रैः धातुरक्तैः पटमण्डपैर्दूष्यैर्मण्डितम् [ आनीलनागकुलसङ्कुलम् ] आ समन्तात् नीलैर्नागकुलैर्गजसङ्घैः सङ्कुलम्, अत एव [ सन्ध्यांशुभिन्नघन-कर्बुरितान्तरीक्षलक्ष्मीविडम्बि ] सन्ध्यांशुभिन्नैः सन्ध्यारागसम्भिन्नैर्घनै-र्मेघैः कर्बुरितस्य चित्रीकृतस्यान्तरीक्षस्य लक्ष्मीं विडम्बयत्यनुकरोतीति तत्तथोक्तं, [शिवकीर्त्तनस्य] मङ्गलकीर्त्तेः कृष्णस्य [ तत्, शिविरं ] कटकम् [ आबभासे ] मनोहरमभूदित्यर्थः। उपमाऽलङ्कारः इत्यनुप्रासश्च॥ ६८॥

धरस्येति।—[बलाक्रान्तः] बलैः सैन्यैराक्रान्तः [ असौ गिरिपतिः ] रैवतकः [ क्रीडद्द्विरदमथितोर्वीरुहरवैः ] क्रीडद्भिर्विहरमाणैर्द्विरदै-र्मथितानां भग्नानामुर्वीरुहाणां वृक्षाणां रवैः शब्दैर्निमित्तेन [ श्रीपतिं ] हरिम्। [ ननु ] अङ्ग! [ त्वं धरस्य ] पर्वतस्य [ उद्धर्त्ता ] उद्धारकः [ असि इति सर्वत्र जगति, प्रतीतः ] प्रसिद्धः। गोवर्द्धनोद्धरणादिति

# षष्ठः सर्गः ।

—०○—

अथ रिरंसुममुं युगपद्गिरौ
कृतयथास्वतरुप्रसवश्रिया ।
ऋतुगणेन निषेवितुमादधे
भुवि पदं विपदन्तकृतं सताम् ॥ १ ॥

---

भावः । [ तत् ] तर्हि [ किं ] किमर्थम् [ अतिभरम् ] अतिभारवन्तं [ मामधः, प्रापिपयिषुः ] प्रापयितुमिच्छुः असि ? प्रापयतेः सन्नन्तादुप्रत्ययः । [ इत्युच्चैः, उपालब्धेव ] आक्रन्ददिवेत्युत्प्रेक्षा । उपाङ्पूर्वाल्लभेर्लुङ् 'एकाच उपदेशे—' (७।२।१०) इति नेट्, "झषस्तथोर्धोऽधः ( ८।२।४० पा० ) इति तकारस्य धकारः, "धि च" ( ८।२।२५ पा० ) इति सिचः सकारलोपः । शिखरिणी वृत्तम् ;—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ॥ ६८ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये पञ्चमः सर्गः ॥ ५ ॥

---

अथ ऋतुवर्णनं प्रस्तौति,—अथेति ।—[ अथ ] सेनानिवेशानन्तरं [ गिरौ ] रैवतके [ रिरंसुं ] रन्तुमिच्छुम् । रमेः सनन्तादुप्रत्ययः । एतेन ऋतुवर्णनप्रवृत्तेः प्रभुचित्तवृत्तिज्ञानपूर्वकत्वमुक्तम् । [ सतां ] साधूनां, विपदामन्तं करोतीति विपदन्तकृत् । क्विप् । तं [ विपदन्तकृतम् ] । अतः सेव्यमिति भावः । [ अमुं ] हरिं [ निषेवितुं ] स्वतरून् स्वस्वनियतवृक्षान् अनतिक्रम्य यथास्वतरु । यथार्थेऽव्ययीभावः । यथास्वतरु स्थिता प्रसवश्रीः पुष्पफलसम्पत्तिः यथास्वतरुप्रसवश्रीः । 'प्रसवस्तु

नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकयत्
स सुरभिं सुरभिं सुमनोभरैः ॥ २ ॥
विलुलितालकसंहतिरामृशन्
मृगदृशां श्रमवारि ललाटजम्।

फले पुष्पे' इत्यमरः। शाकपार्थिवादिषु द्रष्टव्यः। सा कृता येन तेन [कृतयथास्वतरुप्रसवश्रिया] यथास्वतरुकृतप्रसवश्रियेत्यर्थः। [ऋतुगणेन युगपद्भुवि पदम्, आदधे] आहितम्। युगपदृतुगणः प्रादुरभूदित्यर्थः। नव्यवसरं सेवकाः क्षिपन्तीति भावः। अत्र सर्गे सर्वत्र यमकं शब्दालङ्कारः। तल्लक्षणं तूक्तं चतुर्थे। अर्थालङ्कारस्तु यथासम्भवमूह्यः। अस्मिन् सर्गे द्रुतविलम्बितं वृत्तम्;—'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥ १ ॥

अथ लोकवेदयोः प्राथम्येन व्यवहारात् वसन्तमादौ वर्णयति, नवेति।—[सः] हरिः [पुरः] अग्रे प्रथमं वा, नवपलाशानि नूतनपर्णानि पलाशवनानि किंशुककाननानि यस्मिन्, तं [नवपलाशपलाशवनम्]। बहुव्रीहिपूर्वपदो बहुव्रीहिः। 'पलाशः किंशुके पत्रे पलाशम्' इति विश्वः। स्फुटानि विकचानि परागैः रजोभिः परागतानि व्याप्तानि च पङ्कजानि यस्मि१ तं [स्फुटपरागपरागतपङ्कजम्]। मृदुलाः कोमला अत एव तान्ताः आतपसमये किञ्चित् म्लानाः लतान्ताः पल्लवा यस्मिन् तं [मृदुलतान्तलतान्तं, सुमनोभरैः] पुष्पसमृद्धिभिः [सुरभिं] सुगन्धिं [सुरभिं] वसन्तम् [अलोकयत्] अपश्यत्। 'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः। सुगन्धौ च मनोज्ञे च वाच्यवत्' इति विश्वः। इह प्रतिपादं प्रथमाक्षरद्वयात् परतोऽक्षरत्रयावृत्तिरूपयमकप्रक्रमाच्चतुर्थपादेऽपि तदेव यमकम्। एकस्मादप्यपरमिति सजातीयसंसृष्टिः ॥ २ ॥

तनुतरङ्गततिं सरसां दलत्-
कुवलयं वलयन् मरुदाववौ ॥ ३ ॥
तुलयति स्म विलोचनतारकाः
कुरवकस्तवकव्यतिषङ्गिणि ।
गुणवदाश्रयलब्धगुणोदये
मलिनिमाऽलिनि माधवयोषिताम् ॥ ४ ॥
स्फुटमिवोज्ज्वलकाञ्चनकान्तिभि-
र्युतमशोकमशोभत चम्पकैः ।

---

विलुलितेति ।—[ विलुलितालकसंहतिः ] विधुतचिकुरनिकरः सन् [ मृगदृशां ललाटजं, श्रमवारि ] स्वेदम् [ आमृशन् ] परिमृजन्, मन्द इति भावः । [ सरसां तनुतरङ्गततिं, दलत्कुवलयं ] दलन्ति विकसन्ति कुवलयानि यस्मिन् कर्मणि तद्यथा तथा [ वलयन् ] चालयन्, शीतल इति भावः । [ मरुत् ] वसन्तवायुः [ आववौ ] आवाति स्म ॥ ३ ॥

तुलयतीति ।—[ कुरवकस्तवकव्यतिषङ्गिणि ] कुरवकस्तवके व्यतिषङ्गिणि लग्ने, अत एव [ गुणवदाश्रयलब्धगुणोदये ] गुणवतः शुक्लगुणयुक्तस्य कुरवकस्तवकस्याश्रयेणाश्रयणेन लब्धो गुणोदयो निजनीलिमगुणोत्कर्षो येन तस्मिन्, धवले नीलस्य स्फुरणादिति भावः । [ अलिनि ] भ्रमरे ; मलिनस्य भावः [ मलिनिमा ] कृष्णत्वं [ माधवयोषितां ] हरिवधूनां [ विलोचनतारकाः ] विलोचनानां तारकाः कनीनिकाः । 'तारकाक्ष्णः कनीनिका' इत्यमरः । [ तुलयति स्म ] समीचकार, तद्वत् बभावित्यर्थः । तुलाशब्दात् सदृशपर्य्यायात् "तत्करोति—"(गण० सू०) इति ण्यन्तात् "लट् स्मे" ( ३।२।११८ पा० ) इति भूते लट् । उपमाऽलङ्कारः ॥ ४ ॥

स्फुटमिति ।—[ उज्ज्वलकाञ्चनकान्तिभिः ] शुद्धसुवर्णप्रभैः [ चम्पकै-

विरहिणां हृदयस्य भिदाभृतः।
कपिशितं पिशितं मदनाग्निना ॥ ५ ॥
स्मरहुताशन-मुर्मुर-चूर्णतां
दधुरिवाम्रवणस्य रजःकणाः।
निपतिताः परितः पथिकव्रजा-
नुपरि ते परितेपुरतो भृशम् ॥ ६ ॥
रतिपतिप्रहितेव कृतक्रुधः
प्रियतमेषु बधूरनुनायिका।

---

युतं] चम्पकसमूहमध्यगतमित्यर्थः। [स्फुटं] विकचम् [अशोकम्] अशोकपुष्पं; भिदा भेदः। "षिद्भिदादिभ्योऽङ्" (३।३।१०४ पा०) इत्यङ्। तां बिभर्त्ति यत् तस्य [भिदाभृतः] भिन्नस्य [विरहिणां, हृदयस्य] हृदयपिण्डस्य, सम्बन्धिना [मदनाग्निना, कपिशितं] कपिशीकृतं [पिशितं] मांसम् [इवाशोभत] इत्युत्प्रेक्षा ॥ ५ ॥

स्मरेति।—[आम्रवणस्य] चूतवनस्य; 'आम्रश्चूतो रसालोऽसौ' इत्यमरः। 'प्रनिरन्तःशर—'(८।४।५ पा०) इत्यादिना वन-नकारस्य णत्वम्। [रजःकणाः] परागचूर्णाः [स्मरहुताशनमुर्मुरचूर्णतां] स्मरहुताशनः कामाग्निः स एव मुर्मुरस्तुषाग्निः। 'मुर्मुरस्तु तुषानलः इति वैजयन्ती। तस्य चूर्णतां [दधुरिव] इत्युत्प्रेक्षा। [अतः] मुर्मुरचूर्णत्वादेव [परितः उपरि निपतिताः, ते] रजःकणाः [पथिकव्रजान्] पन्थानं गच्छन्तीति पथिकाः *। "पथः ष्कन्" (५।१।७५ पा०) इति ष्कन् प्रत्ययः। तेषां व्रजान् † [भृशं परितेपुः] परितापयामासुः। अतो मुर्मुरचूर्णत्वोत्प्रेक्षणमिति भावः ॥ ६ ॥

रतिपतीति।—[प्रियतमेषु] विषये [कृतक्रुधः] कृतरुषः। 'प्रतिघा

---

* प्रवासगता, प्रियाभिर्वियुक्ताः इत्यर्थः, विरहिण इति यावत्।

† समूहान्, विप्रयुक्तान् जनानित्यर्थः।

वकुलपुष्परसासवपेशल-
ध्वनिरगान्निरगात् मधुपावलिः ॥ ७ ॥
प्रियसखीसदृशं प्रतिबोधिताः
किमपि काम्यगिरा परपुष्टया ।
प्रियतमाय वपुर्गुरुमत्सर
च्छिदुरयाऽदुरयाचितमङ्गनाः ॥ ८ ॥

---

रुट्क्रुधौ स्त्रियाम्' इत्यमरः । [ वधूरनुनायिका ] कुपितस्त्रीरनुनेष्यन्ती । "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" ( ३।३।१० पा० ) इति भविष्यदर्थे ण्वुल् प्रत्ययः, "अकेनोर्भविष्यदाधमर्ण्ययोः" ( २।३।७० पा० ) इति षष्ठीप्रतिषेधाद्वधूरिति द्वितीया । [ रतिपतिप्रहितेव ] रतिपतिना कामेन प्रहिता प्रेषितेव, तद्वाणीश्रवणानन्तरमेव तासां कोपत्याग-दर्शनादियमुत्प्रेक्षा । [ वकुलपुष्परसासवपेशलध्वनिः ] वकुलपुष्पाणां रसो मकरन्दः स एवासवः * तेन तत्पानेन इत्यर्थः, पेशलध्वनिर्मधुरस्वरा [ मधुपावलिः ] । कर्त्री । [ अगात् ] न गच्छतीत्यगस्तस्मात्, वृक्षादि-त्यर्थः । [ निरगात् ] निर्गता । "इणो गा लुङि" ( २।४।४५ पा० ) इति गादेशः ॥ ७ ॥

प्रियसखीति ।—[ गुरुमत्सरच्छिदुरया ] गुरोर्महतो मत्सरस्य द्वेषस्य छिदुरया छेत्त्र्या । "विदिभिदिच्छिदेः कुरच्" ( ३।२।१६२ पा० ) इति कुरच् । [ काम्यगिरा ] ग्राह्यवाचा [ परपुष्टया ] कोकिलया [ प्रिय-सखीसदृशं ] प्रियसख्या सदृशं यथा तथा [ किमपि ] परैर्दुर्बोधं रहस्यं हितं [ प्रतिबोधिताः ] उपदिष्टाः [ अङ्गनाः प्रियतमाय, अयाचितम् ] अप्रार्थितमेव [ वपुः ] निजाङ्गम् [ अदुः ] अर्पयामासुः । ददातेर्लुङि 'गातिस्था—'( २।४।७७ पा० ) इत्यादिना सिचो लुक् ।

---

* उपमेयभूते पुष्परसे उपमानभूतस्य आसवस्य अभेदारोपात् रूपकम् अलङ्कारः ।

मधुकरैरपवादकरैरिव
स्मृतिभुवः पथिका हरिणा इव।
कलतया वचसः परिवादिनी-
स्वरजिता रजिता वशमाययुः ॥ ९ ॥

समभिसृत्य रसादवलम्बितः
प्रमदया कुसुमावचिचीषया।
अविनमन् न रराज वृथोच्चकै-
रनृतया नृतया वनपादपः ॥ १० ॥

---

कोकिलाकूजितश्रवणानन्तरमेवाङ्गार्पणादौत्सुक्य-हेतुकाद्यनन्तरन्यायेन तथा किमपि बोधिता इत्युत्प्रेक्षा ॥ ८ ॥

मधुकरैरिति।—[ मधुकरैः ] कर्तृभिः [ अपवादकरैरिव ] अपवादं मृगवञ्चनाय घण्टादिकुत्सितवाद्यं कुर्वन्तीत्यपवादकराः व्याधास्तैरिव, [ पथिकाः हरिणा इव, परिवादिनीस्वरजिता ] वीणाविशेषध्वनि-जयिन्या। 'सप्तभिः परिवादिनी' इत्यमरः। जयतेः क्विपि तुक्। [ वचसः ] गीतस्य [ कलतया ] माधुर्य्येण करणेन। [ रजिताः ] आकृष्टाः सन्त इत्यर्थः। रञ्जेर्ण्यन्तात् कर्मणि क्तः। "रञ्जेर्णौ मृगरमणे—" ( वा० ) इति उपधानकारलोपः। इहोपमानमृगसादृश्यादौपचारिकं मृगत्वम् उपमेयेषु पथिकेष्वस्तीत्यविरोधः। [ स्मृतिभुवः ] स्मरस्य मृगपातचिन्ताविषयत्वात् मृगग्रहणगर्त्तदेशस्य च [ वशमाययुः ]। यथा व्याधगानासक्त्या गर्त्तं मृगाः पतन्ति, तद्वन्मधुकरहुङ्काराकृष्टाः पान्थाः स्मरपारवश्यं भेजुरित्यर्थः। अनेकैवेयमुपमा ॥ ९ ॥

समभिसृत्येति।—[ प्रमदया ] कर्त्र्या। [ कुसुमावचिचीषया ] कुसुमानामवचिचीषया अवचेतुमिच्छया, रिरंसयेति भावः। चिनोतेः सन्नन्तात् "अप्रत्ययात्" ( ३।३।१०२ पा० ) इति स्त्रियामकारप्रत्ययः, "विभाषा चेः" ( ७।३।५८ पा० ) इति विकल्पात् कुत्वाभावः।

इदमपास्य विरागि परागिणी-
रलिकदम्बकमम्बुरुहां ततीः ।
स्तनभरेण जितस्तवकानम-
न्नवलते वलतेऽभिमुखं तव ॥ ११ ॥

[ रसात् ] रागात् [ समभिसृत्य ] समागत्य [ अवलम्बितः ] हस्तेन गृहीतः, तथाऽपि [ अविनमन् ] वश्यमगच्छन्, अत एव [ वृथोच्चकैः ] व्यर्थमुन्नतः [ वनपादपः ] न तु नागरिक इति भावः । न ऋतेत्यन्तता असत्या तया [ अनृतया ] नुर्भावो नृता तया [ नृतया ] पुंस्त्वेन [ न रराज ] । 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः । यः कान्ताकरगृहीतोऽपि न द्रवति, स नपुंसक एव, लौकिकस्तु पुंस्त्वव्यपदेशो मिथ्यैवेति भावः * ॥ १० ॥

अथ कश्चित् स्वयंग्रहाश्लेषसुखार्थं प्रियामलिपातेन भाययंस्त्रिभिः विशेषकैराह, इदमित्यादि ।—[ स्तनभरेण ] साधनेन, जिताभ्यां स्तवकाभ्यामानमन्ती नवलता यया सा तथोक्ता, तस्याः सम्बुद्धिः [ जितस्तवकानमन्नवलते ] स्तवकानमन्नवलतोपमे इत्यर्थः ; अत एव [ इदं, विरागि ] विरक्तिमत् [ अलिकदम्बकं, परागिणीः ] परागवतीरिति विरक्तिहेतूक्तिः । [अम्बुरुहां ततीरपास्य, तवाभिमुखं, वलते] चलति ; विशिष्टलताभ्रमादिति भावः । तथा च भ्रान्तिमदलङ्कारो व्यज्यते † ॥ ११ ॥

---

* अत्र अविनमन् इति श्लिष्टविशेषणमहिम्ना रिरंसया प्रमदाजनेन सप्रणयं करेण समालिङ्गितोऽपि वनपादपः कान्तावशतां न आपादि इत्यप्रस्तुतानागरिकनायकव्यवहारसमारोपात् समासोक्तिः कथञ्चिदुन्नेया ।

† "जितस्तवकानमन्नवलते" इत्यत्र जितपदस्य सादृश्यार्थवाचकतया समासगता आर्थी उपमाऽलङ्कारः, तेनैव च प्रकृते वास्तवभ्रान्तेरनुपपत्त्या नायं भ्रान्तिमदलङ्कारः, केवलमुपमाऽलङ्कारेणासौ व्यज्यते इति दिक् । "परागिणीः" इति पदस्य अम्बुरुहततित्यागे हेतुरूपतयोक्तेः पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

सुरभिणि श्वसिते * दधतस्तृषं
नवसुधामधुरे च तवाधरे ।
अलमलेरिव गन्धरसावमू
मम न सौमनसौ मनसो मुदे ॥ १२ ॥
इति गदन्तमनन्तरमङ्गना
भुजयुगोन्नमनोच्चतरस्तनी ।

---

अथालेस्तदभिमुखाऽऽगमने कारणमाह, सुरभीति ।—[तव सुरभिणि, श्वसिते] निश्वासमारुते [नवसुधामधुरे] नवसुधावन्मधुरे [अधरे च, तृषं] तृष्णां [दधतः] दधानस्य [अलेः] भ्रमरस्य [ममेव, अमू] उपलभ्यमानौ, सुमनसां पुष्पाणां सम्बन्धिनौ [सौमनसौ, गन्धरसौ] सौरभमाधुर्य्यौ [मनसः] अन्तःकरणस्य [मुदे, नालं] न पर्य्याप्तौ ; अतस्त्वद्वदनरसगन्धलोभादागच्छतीत्यर्थः । "नमः स्वस्ति—"( २।३।१६ पा० ) इत्यादिना चतुर्थी । अत्र कान्ताकर्त्तृकस्वयङ्ग्रहाश्लेषसुखार्थिनः प्रियस्य तद्भयहेतोरलेरेवागमनहेतुत्वेनात्र दृष्टान्तेन मुखसौरभरस-लोभरकुसुमवैराग्ययोर्वर्णयितुमौचित्यात् यमकानुसारेण विप्रकृष्टे-नापि ममशब्देन इवशब्दस्यान्वयः । "वलतेऽभिमुखं तव" "अलिभया-दिव सस्वजे" इत्युपक्रमोपसंहाराभ्यामलेः प्रकृतत्वेनोपमेयत्वाव-गमात् ; अन्यथा, मध्ये तद्वैपरीत्ये तद्विरोधादित्यलमद्विचलनाध्वमार्ग-णेन । अत्रोपमाऽनुप्रासयमकानां तावद्विजातीयानां संसृष्टिः स्पष्टैव ; तथा यमकानां त्रयाणां चतुर्थपादादावेकस्मादक्षरात् द्वाभ्यां त्रिभ्यश्च परतोऽक्षरत्रयावृत्तिलक्षणानां स्थितत्वात् सजातीयसंसृष्टिश्चेष्टा ॥ १२ ॥

---

* अत्र "सुरभिनिश्वसिते" इति समासान्तर्गतविषया पाठोऽपि दृश्यते । तत्र सुरभि सौरभ्यवत् निश्वसितं निश्वासः तस्मिन् । भावे निष्ठा । उभयथापि अर्थगतं किञ्चित् वैशिष्ट्यं नास्ति, सत्यप्येवं टीकाकृतः केवलं "निश्वासमारुते" एवं व्याख्या-नात् व्यस्तविषया पाठः तदभिप्रेतः इति मन्यामहे ।

प्रणयिनं रभसादुदरश्रिया
बलिभयाऽलिभयादिव सस्वजे ॥ १३ ॥
वदनसौरभलोभपरिभ्रमद्-
भ्रमरसम्भ्रमसम्भृतशोभया ।
चलितया विदधे कलमेखला-
कलकलोऽलकलोलदृशाऽन्यया ॥ १४ ॥

---

इतीति।—[ इति ] इत्थं [ गदन्तं प्रणयिनम् अनन्तरं, भुजयुगोन्नमनोच्चतरस्तनी ] भुजयुगस्योन्नमनेनोच्चतरावत्युन्नतौ स्तनौ यस्याः सा। "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" ( ४।१।५४ पा० ) इति ङीष्। [ बलिभया ] बलयो विद्यन्ते यस्यास्तया बलिमत्या। "तुन्दिवलिवटेर्भः" ( ५।२।१३९ पा० ) इति भप्रत्ययः। [ उदरश्रिया ] मध्यशोभया उपलक्षिता [ अङ्गना अलिभयादिव रभसात्, सस्वजे ] आलिलिङ्ग। वस्तुतस्तु रागादेवेति भावः। 'ष्वञ्ज परिष्वङ्गे' इति धातोः कर्त्तरि लिट्। नायिकेयं मध्या,—'लज्जामन्मथमध्यस्था मध्येयं नायिका मता' इति लक्षणात् * ॥ १३ ॥

वदनेति।—[ वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया ] वदनस्य सौरभे सौगन्ध्ये लोभेन परिभ्रमता भ्रमरेण हेतुना यः सम्भ्रमस्तेन सम्भृतशोभया सम्पादितश्रिया [ चलितया ] अलिसम्भ्रमात् प्रस्थितया, अत एव [ अलकलोलदृशा ] अलकैरलकपातैर्लोलदृशा चञ्चलाक्ष्या [ अन्यया ] स्त्र्यन्तरेण [ कलमेखलाकलकलः ] कलो मेखलायाः कलकलः कोलाहलः [ विदधे ] विहितः। अलिभयादपसरन्त्याः काञ्चीगुणध्वनिरजनीत्यर्थः। एतेन चकितत्वमुक्तम्। "चकितं भयसम्भ्रमः"। अनुप्रासयमकयोः सजातीयशब्दालङ्कारयोः संसृष्टिः स्पष्टैव तावत्; तथा यमकयोश्च द्वयोः सजातीययोः चतुर्थपादादावेकस्मा-

---

* उत्प्रेक्षाऽलङ्कारः।

अजगणन् गणशः प्रियमग्रतः
प्रणतमप्यभिमानितया न याः।
सति मधावभवन्मदनव्यथा-
विधुरिता धुरि ताः कुकुरस्त्रियः॥ १५॥

कुसुमकार्मुककार्मुकसंहित-
द्रुतशिलीमुखखण्डितविग्रहाः।
मरणमप्यपराः प्रतिपेदिरे
किमु मुहुर्मुहुर्गतभर्तृकाः॥ १६॥

---

दक्षरात् द्वाभ्याञ्च परतोऽक्षरत्रयावृत्तिलक्षणयोः स्थितत्वात् सजातीययोः संसृष्टिः॥ १४॥

अजगणन्निति।—[ याः, कुकुरस्त्रियः ] यादवाङ्गनाः [ गणशः ] बहुशः। "बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्" (५।४।४२ पा०) इति शस्प्रत्ययः। [अग्रतः * प्रणतमपि प्रियं] जातावेकवचनं, प्रियानित्यर्थः। [अभिमानितया] अभिमानिनीनां भावोऽभिमानिता तया। "त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः" (वा०) इति पुंवद्भावः। [ नाजगणन् ] न गणयन्ति स्म। गणेश्चौरादिकात् णौ चङि "ई च गणः" (७।४।९७ पा०) इत्यभ्यासस्य पाक्षिक ईत्वाभावः। [ ताः ] कुकुरस्त्रियः [ मधौ ] वसन्ते [ सति ] प्रवर्त्तमाने। 'मधुश्चैत्रे वसन्ते च' इति विश्वः। [ मदनव्यथाविधुरिताः ] मदनव्यथया विह्वलिताः सत्यः [धुरि] अग्रे [ अभवन् ] अवर्त्तन्त। स्वयमेव पुरः प्रवृत्ता इत्यर्थः॥ १५॥

कुसुमेति।—[ गतभर्तृकाः ] वियोगिन्यः। "नद्यृतश्च" ( ५।४।१५३ पा० ) इति कप्। [ अपराः ] काश्चिदङ्गनाः [ कुसुमकार्मुककार्मुकसंहितद्रुतशिलीमुखखण्डितविग्रहाः ] कुसुमकार्मुकस्य कामस्य कार्मुके †

---

* पूर्व्वम्। † धनुषि।

रुरुदिषा वदनाम्बुरुहश्रियः
सुतनु ! सत्यमलङ्करणाय ते ।
तदपि सम्प्रति सन्निहिते मधा-
वधिगमं धिगमङ्गलमश्रुणः ॥ १७ ॥
त्यजति कष्टमसावचिरादसून्
विरहवेदनयेत्यघशङ्किभिः ।

संहितैः * द्रुतैर्जवनैः शिलीमुखैः शरैः खण्डितविग्रहाः पाटितशरीराः सत्यः [ मरणमपि प्रतिपेदिरे, मुहुः ] पुनः पुनः [ मुमुहुः ] मुमूर्च्छुरिति [ किमु ] वक्तव्यमित्यर्थः † ॥ १६ ॥

अथ कस्याश्चित् प्रोषितभर्तृकाया बन्धुजनसमाश्वासनं विशेषकेणाह, रुरुदिषेति ।—हे [ सुतनु ] शुभाङ्गि ! "अम्बार्थनद्योर्ह्रस्वः" ( ७।३।१०७ पा० ) इति ह्रस्वत्वम् । दीर्घोत्तरपदो बहुव्रीहिः, अन्यथा गुणः स्यात् । [ रुरुदिषा ] रोदनेच्छा, अश्रुविमोचनमित्यर्थः । रुदेः सन्नन्तात् अप्रत्यये टाप् । [ ते ] तव [ वदनाम्बुरुहश्रियः अलङ्करणाय सत्यम् ] "रम्याणां विकृतिरपि श्रियं तनोति" इति न्यायादिति भावः । गम्यमानक्रियापेक्षत्वाच्चतुर्थी । [ तदपि ] तथाऽपि [ सम्प्रति, मधौ ] वसन्ते [ सन्निहिते ] सन्निहितोत्सवे सति [ अश्रुणोऽधिगमं ] प्राप्तिम्, [ अमङ्गलं, धिक् ] निन्दनीय इत्यर्थः । 'धिङ्निर्भर्त्सननिन्दयोः' इत्यमरः । "धिगुपर्य्यादिषु त्रिषु" ‡ (वा०) इति द्वितीया । अतो मा रुद इत्यर्थः § ॥१७॥

त्यजतीति ।—[ प्रियतया ] इष्टतया [ अघशङ्किभिः ] अनर्थोत्प्रे-

---

* संयोजितैः ।                † अर्थापत्तिरलङ्कारः ।

‡ "उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु । द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥" इति कौमुद्याम् "उपान्वध्याङ्वसः" ( १।४।४८ पा० ) इति सूत्रे, काशिकायाञ्च "कर्म्मणि द्वितीया" ( २।३।२ पा० ) इति सूत्रे उद्धृतमेतत् वार्त्तिकम् ।

§ उपमारूपकयोः सन्देहसङ्करः ।

प्रियतया गदितास्त्वयि बान्धवे-
रवितथा वितथाः सखि ! मा गिरः ॥ १८ ॥
न खलु दूरगतोऽप्यतिवर्त्तते
महमसाविति बन्धुतयोदितैः ।
प्रणयिनो निशमय्य वधूर्वहिः
स्वरमृतैरमृतैरिव निर्ववौ ॥ १९ ॥

[ विशेषकम् । ]

---

स्त्रिभिः । "प्रेम पश्यति भयान्यपदेऽपि" इति भावः । [ बान्धवैस्त्वयि ] विषये [ गदिताः ] उच्चारिताः [ कष्टं ] बत [ असौ ] बाला [ विरहवेदनया अचिरात्, असून् ] प्राणान् [त्यजति] त्यक्ष्यति । "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" ( ३।३।१३१ पा० ) इति लट् । [ इति ] एवंविधाः [ गिरः ] उक्तीः हे [ सखि ! ] विगतं तथात्वं यासां ताः वितथाः अनृताः । 'वितथं त्वनृतं वचः' इत्यमरः । बहुव्रीहौ विशेष्यलिङ्गता, ब्राह्मणादित्वात् ह्रस्वः, ततो नञ्समासः । [ अवितथाः ] सत्यः [ मा वितथाः ] मा कृथाः, वृथाऽतिशोकेन मा मृथा इत्यर्थः । विपूर्वात्तनोतेर्लुङि थास्, "तनादिभ्यस्तथासोः" ( २।४।७९ पा० ) इति विभाषा सिचो लुक्, "अनुदात्तोपदेश—" ( ६।४।३७ पा० ) इत्यादिनाऽनुनासिकलोपः "न माङ्योगे" ( ६।४।७४ पा० ) इत्यडागमप्रतिषेधः ॥ १८ ॥

नेति ।—किञ्च, [ असौ ] ते प्रणयी [ दूरगतः ] दूरस्थः [ अपि, महं ] वसन्तोत्सवं । 'मह उद्धव उत्सवः' इत्यमरः । [ नातिवर्त्तते ] नातिक्रामति [ खलु, इति, बन्धुतया ] बन्धुसमूहेन । "ग्रामजनबन्धुसहायेभ्यस्तल्" ( ४।२।४३ पा० ) इति तल्प्रत्ययः । [ उदितैः ] उक्तैः । वदेः कर्मणि क्तः । [ ऋतैः ] सत्यवचनैः । 'सत्यं तथ्यमृतं सम्यक्' इत्यमरः । [ वहिः प्रणयिनः ] तदैव दैवादागतस्य प्रियस्य

मधुरया मधुबोधितमाधवी-
मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मद-
ध्वनिभृता निभृताक्षरमुज्जगे ॥ २० ॥

अरुणिताखिलशैलवना मुहु-
र्विदधती पथिकान् परितापिनः ।

---

[ स्वरं ] कण्ठगतं शब्दं [ निशमय्य ] श्रुत्वा। "शमु अदर्शने" इति चौरादिकात् ल्यप् मित्त्वाद्ध्रस्वः । "ल्यपि लघुपूर्वात्" ( ६।४।५६ पा० ) इत्ययादेशः [ वधूः, अमृतैरिव ] सुधाभिरिव [ निर्ववौ ] निर्ववार । वातेर्लिट् । "निर्वाणं निर्वृतिः सुखम्" इति * ॥ १९ ॥

मधुरयेति ।—[ मधुरया ] मनोहरया [ मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया] मधुना वसन्तेन बोधिताः विकसिताश्च ता माधव्यश्च । पुष्पधर्म्मः पुष्पितासु उपचर्य्यते । तासां माधवीनाम् अतिमुक्तलतानाम् । 'अतिमुक्तः पुण्ड्रकः स्याद् वासन्ती माधवीलता' इत्यमरः । मधुसमृद्ध्या मकरन्दसम्पदा समेधितमेधया संवर्द्धितप्रतिभया, अत एव [ उन्मदध्वनिभृता ] उन्मदयतीत्युन्मदो मदकरः । पचाद्यच् । † तं ध्वनिं बिभर्त्ति इत्युन्मदध्वनिभृत् तया [ मधुकराङ्गनया, मुहुर्निभृताक्षरं ] लक्षणया स्थिरनादं यथा तथेत्यर्थः । अथवा "सर्वः शब्दो वर्णात्मक एव, व्यञ्जकविशेषाभावादस्फुटः" इति मतमाश्रित्योक्तं, सर्वपथीनाः कवय इति [ उज्जगे ] उच्चैर्गीतम् । गायतेरविवक्षितकर्म्मत्वाद् भावे लिट् । 'बन्धवैषम्यराहित्यं समता पदगुम्फने' इति लक्षणात् समताख्यो गुणः ‡ ॥ २० ॥

---

* उपमाऽलङ्कारः ।

† "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ( ३।१।१३४ पा० ) इति सूत्रम् ।

‡ अत्र पाञ्चालीरीतिरिति दर्पणकारवर्गः ।

विकचकिंशुकसंहतिरुच्चकै-
रुदवहद्दवहव्यवहश्रियम् ॥ २१ ॥
रवितुरङ्गतनूरुहतुल्यतां
दधति यत्र शिरीषरजोरुचः ।
उपययौ विदधन्नवमल्लिकाः
शुचिरसौ चिरसौरभसम्पदः ॥ २२ ॥

अरुणितेति ।—[ अरुणिताखिलशैलवना ] अरुणितान्यरुणीकृतानि अखिलानि शैलवनानि यया सा, [ मुहुः पथिकान् ] अध्वगान्, विरहिण इत्यर्थः, [ परितापिनः ] सन्तापवतः [ विदधती ] * उच्चैरेव [ उच्चकैः ] उन्नता । "अव्ययसर्वनाम्नामकच् प्राक् टेः" (५।३।७१ पा०) इत्यकच्प्रत्ययः । [ विकचकिंशुकसंहतिः ] विकचा विकसिता या किंशुकसंहतिः पलाशकुसुमराशिः सा, [ दवहव्यवहश्रियं ] दवाग्नि-शोभाम् [ उदवहत् ]। तद्गुण-निदर्शनाऽलङ्कारौ । इति वसन्तवर्ण-नम् ॥ २१ ॥

अथ ग्रीष्मवर्णनमारभते, रवीत्यादि ।—[ यत्र ] शुचौ [ शिरीषरजो-रुचः ] शिरीषरजसां † रुचः कान्तयः [ रवितुरङ्गतनूरुहतुल्यतां ] सूर्य्याश्वरोमसावर्ण्यं [ दधति ] हरिद्वर्णा भवन्तीत्यर्थः । [ असौ, शुचिः ] ग्रीष्मः । 'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढ़योस्तथा । ग्रीष्मे हुतवहे-ऽपि स्यात्—' इति विश्वः । [ नवमल्लिकाः ] । 'पुष्पे जातीप्रभृतयः स्वलिङ्गाः' इत्यमरः । 'पुष्पमूलेषु बहुलम्' (वा०) ‡ इति बहुलग्रहणात् लुप् । लुपि युक्तवद्व्यक्तिवचने भवतः इति स्त्रीलिङ्गता । § [ चिरसौरभ-

* कुर्वती ।

† शिरीषकुसुमपरागाणामित्यर्थः ।

‡ "लुप च" ( ४।३।१६६ पा० ) इत्यस्य वार्त्तिकम् ।

§ "अत्र च व्यक्तिर्युक्तवद्भावेनेष्यते, वचनं त्वभिधेयवदेव भवति" इति

दलितकोमलपाटलकुड्मले
निजवधूश्वसितानुविधायिनि ।
मरुति वाति विलासिभिरुन्मद-
भ्रमदलौ मदलौल्यमुपाददे ॥ २३ ॥
निदधिरे दयितोरसि तत्क्षण-
स्नपनवारितुषारभृतः स्तनाः ।
सरसचन्दनरेणुरनुक्षणं
विचकरे च करेण वरोरुभिः ॥ २४ ॥

---

सम्पदः ] चिरं चिरावस्थायिनी सौरभसम्पद् यासां ताः, स्थिरगन्धा इत्यर्थः । [ विदधत् ] कुर्वन् [ उपययौ ] प्राप्तः * ॥ २२ ॥

दलितेति ।—[ दलितकोमलपाटलकुड्मले ] पाटलायाः अवयवाः पाटलाः । लुक्प्रकरणे "पुष्पमूलेषु बहुलम्" (वा०) इति बहुलग्रहणा-दलुक् । ते च ते कुड्मलाश्च दलिताः विभिन्नाः कोमलाः पाटल-कुड्मला येन तस्मिन्, [ निजवधूश्वसितानुविधायिनि ] निजवधूनां श्वसितं निश्वासमनुविधत्तेऽनुकरोतीति तथोक्ते, तादृशेत्यर्थः । उन्मदा भ्रमन्तश्चालयो यस्मिन् तस्मिन् [ उन्मदभ्रमदलौ, मरुति ] ग्रीष्मानिले [ वाति ] वहति सति । वातेर्लटः शत्रादेशः । [ विलासिभिः ] विल-सनशीलैः कामिभिः । "वौ कषलसकत्थस्रम्भः" ( ३।२।७४३ पा० ) इति घिनुण्प्रत्ययः । [ मदलौल्यं ] मदेन लौल्यं चापल्यम् [ उपाददे ] मत्तैर्जातमित्यर्थः † ॥ २३ ॥

निदधिर इति ।—[ वरोरुभिः ] स्त्रीभिः [ तत्क्षणस्नपनवारितुषार-भृतः ] तत्क्षणस्नपनेन सद्यःसेकेन, वारितुषारभृतो जलशीकरधारिणः

---

"हरीतक्यादिभ्यश्च" ( ४।३।१६७ पा० ) इति सूत्रस्थकाशिकावृत्तेराशयः मल्लिनाथेन प्रकटीकृतः ।

* उपमा श्रार्थी । † उपमाऽलङ्कारः ।

स्फुरदधीरतड़िन्नयना मुहुः
प्रियमिवागलितोरुपयोधरा।
जलधरावलिरप्रतिपालित-
स्वसमया समयाज्जगतीधरम्॥ २५॥
गजकदम्बकमेचकमुच्चकै-
र्नभसि वीक्ष्य नवाम्बुदमम्बरे।

---

इत्यर्थः। 'तुषारौ हिमशीकरौ' इति शाश्वतः। [स्तनाः दयितोरसि, निदधिरे] निहिताः। तेषां सन्तापशान्तये स्नानार्द्राङ्गा एव आलिङ्गन्नित्यर्थः। किञ्च, [करेण] पाणिना [सरसचन्दनरेणुः] सरस आर्द्रश्चन्दनरेणुः घृष्टश्चन्दनपङ्कश्च [अनुक्षणं, विचकरे] विकीर्णाः। किरतेः कर्मणि लिट्। "ऋच्छत्यृताम्" (७।४।११ पा०) इति गुणः। करेणुकरोरुभिरिति पाठस्तु "ऊरूत्तरपदादौपम्ये" (४।१।६९ पा०) इत्यूङ्प्रसङ्गाद्धेयः। इति ग्रीष्मवर्णनम्॥ २४॥

अथ वर्षाऽवतारमाह, स्फुरदिति।—[स्फुरदधीरतड़िन्नयना] स्फुरन्ती अधीरे चञ्चले तड़ितौ नयने इव तड़िन्नयने यस्याः सा, [अगलितोरुपयोधरा] अगलिता अरिक्ता उरुपयोधरा मेघा यस्याम्; अन्यत्र,—ऊरू च पयोधरौ च ऊरुपयोधरम्। प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः। न गलितं न पतितं यस्यां सा [जलधरावलिः] मेघपङ्क्तिः। अत्र जलधरावलेः पयोधराणाञ्चावयवावयविभावात् पृथङ्निर्देशः। [अप्रतिपालितस्वसमया] अनपेक्षितनिजवेला सती, एकत्र,—यौगपद्यात्, अन्यत्र,—अधैर्य्याच्चेति भावः। [जगतीधरं] रैवतकं भूधरं [प्रियमिव, समयात्] समागच्छत्। यातेर्लङ्। पयोजगतीशब्दयोः पचाद्यजन्तेन धरशब्देन षष्ठीसमासः। अत्र विशेषणमहिम्ना जलधरावलौ नायिकात्वप्रतीतेः समासोक्तिः, सा तु प्रियमिवेत्युपमयाऽङ्गेन सङ्कीर्य्यते *॥ २५॥

---

* अत्र जगतीधरजलधरावल्योः प्रियप्रियातुल्यत्वे समासोक्त्यैवावसिते यज्जगतीधरस्य प्रियतुल्यत्ववचनं तत् पुनरुक्तम्।

अभिससार न वल्लभमङ्गना
न चकमे च कमेकरसं रहः ॥ २६ ॥
अनुययौ विविधोपलकुण्डल-
द्युतिवितानकसंवलितांशुकम् ।
धृतधनुर्वलयस्य पयोमुचः
शबलिमा बलिमानमुषो वपुः ॥ २७ ॥

---

गजेति।—[ नभसि ] श्रावणमासि। 'नभाः श्रावणिकश्च सः' इत्यमरः। [ अम्बरे ] व्योम्नि [ गजकदम्बकमेचकं ] गजकदम्बकमिव मेचकं श्यामलम्। 'कालश्यामलमेचकाः' इत्यमरः। उच्चैरेव [उच्चकैः] उन्नतं [ नवाम्बुदं वीक्ष्य अङ्गना ], एकः एकायनः रसो रागो यस्य तं [ एकरसं ] तिरस्कृतरसान्तरमित्यर्थः। [ कं वल्लभं ] प्रियं [ रहः ] एकान्ते [ न चकमे ] न कामयते स्म ? तथा [ न, अभिससार च ]। सर्ववल्लभं सर्वापि तत्तदङ्गना चकमे अभिससार चेति नवाम्बुदस्योद्दीपकत्वादतिशयोक्तिः। इह कामनापूर्वकत्वादभिसरणस्य तयोरर्थक्रमबलीयस्त्वन्यायेन यमकवशायातपाठक्रमबाधेन योजना न्याय्यैव * ॥२६॥

अनुययाविति।—[ धृतधनुर्वलयस्य ] धृतेन्द्रचापमण्डलस्य [ पयोमुचः ] मेघस्य सम्बन्धी, शबलस्य भावः [ शबलिमा ] विचित्रता। "पृथ्वादिभ्य इमनिज्वा" ( ५।१।१२२ पा० ) इतीमनिच्प्रत्ययः। [ विविधोपलकुण्डलद्युतिवितानकसंवलितांशुकम् ] विविधा नानावर्णा उपला मणयो ययोस्तयोः कुण्डलयोः द्युतिवितानकेन कान्तिपुञ्जेन संवलिता मिलिता अंशवो निजनीलभासो यस्य तत्तथोक्तम्। "शेषाद्विभाषा" ( ५।४।१५४ पा० ) इति कप्प्रत्ययः। [ बलिमानमुषः ] बल्यसुराहङ्कारापहारकस्य हरेः [ वपुः, अनुययौ ] अनुचकार, तद्वद्बभावित्यर्थः। † उपमाऽलङ्कारः॥ २७ ॥

---

* उपमाऽलङ्कारः।

† पुरा किल श्रीहरिः वामनरूपमवलम्ब्य त्रिपादमितभूमिनिमित्तं बलिराजं पातालतलमनैषीत इति पुराणम्।

द्रुतसमीरचलैः क्षणलक्षित-
व्यवहिता विटपैरिव मञ्जरी ।
नवतमालनिभस्य नभस्तरो-
रचिररोचिररोचत वारिदैः ॥ २८ ॥
पटलमम्बुमुचां पथिकाङ्गना
सपदि जीवितसंशयमेष्यती ।
सनयनाम्बुसखीजनसम्भ्रमा-
द्विधुरबन्धुरबन्धुरमैक्षत ॥ २९ ॥

---

द्रुतेति ।—[ द्रुतसमीरचलैः ] द्रुतसमीरेण शीघ्रमारुतेन चलैः [वारिदैः], क्षणं लक्षिता च व्यवहिता च सा [ क्षणलक्षितव्यवहिता ]। क्षणिकाविर्भावतिरोधानेत्यर्थः । स्नातानुलिप्तवत् "पूर्वकालैक—" (२।१। ३९ पा०) इत्यादिना समासः। अचिरं रोचिर्यस्याः सा [ अचिररोचिः] विद्युत्, द्रुतसमीरचलैः [विटपैः] शाखाभिः क्षणलक्षितव्यवहिता [ नवतमालनिभस्य ] नवतमालेन सदृशस्य, तद्वन्नीलस्येत्यर्थः, नित्यसमासः। नभस्तरुरिव तस्य [नभस्तरोः, मञ्जरी इव] गुच्छ इव [अरोचत] । उपमाऽलङ्कारः । अत्र नभस्तरोर्नभःश्रेष्ठस्येति व्याख्याने तरुशब्दस्य व्याघ्रादिवच्छ्रेष्ठार्थगोचरत्वात् तमालशब्देन विशेषवाचिना तन्नीलसामान्येन पौनरुक्त्यमिति वल्लभः। तमालशब्दस्येन्द्रनीलवन्नैल्यमात्रोपमानत्वात् तरुशब्दस्य स्वार्थवृत्तित्वेऽपि न पौनरुक्त्यमित्यन्ये ॥ २८ ॥

पटलमिति ।—[ पथिकाङ्गना ] काचित् प्रोषितभर्तृका, अत एव [ सपदि, जीवितसंशयं ] मरणम् [ एष्यती ] निश्चितमरणेत्यर्थः। "आच्छीनद्योर्नुम्" ( ७।१।८० पा० ) इति विकल्पान्नुमभावः। अत एव [ सनयनाम्बुसखीजनसम्भ्रमात् ] सनयनाम्बोः सवाष्पस्य सखीजनस्य सम्भ्रमात् क्षोभात् [ विधुरबन्धुः ] सम्भ्रमदर्शनात् विह्वलबन्धुजना सती [ अम्बुमुचां पटलम्, अबन्धुरम् ] अशोभनं, सदैन्यरोषमिति यावत् ।

प्रवसतः सुतरामुदकम्पय-
द्विदलकन्दलकम्पनलालितः।
नमयति स्म वनानि मनस्विनी-
जनमनोनमनो घनमारुतः॥ ३० ॥

जलदपङ्क्तिरनर्त्तयदुन्मदं
कलविलापि कलापिकदम्बकम्।
कृतसमार्जनमर्दलमण्डल-
ध्वनिजया निजया स्वनसम्पदा॥ ३१ ॥

---

[ ऐक्षत ]। ईक्षतेर्लङ् "आटश्च" ( ६।१।९० पा० ) इति वृद्धिः। इह विरहवेदनाक्षमाया नायिकाया मरणसाधनमेघपटलावेक्षणवर्णनायां तदुद्योगलक्षणा मरणावस्थोक्ता ; सा हि द्विविधा,—तदुद्योगस्तद्योगश्चेत्याहुः ;—'दृङ्मनःसङ्गसङ्कल्पाज्जागरः कृशता रतिः। ह्रीत्यागो-न्मादमूर्च्छान्ता इत्यनङ्गदशा दश॥' इत्यवस्थासङ्ग्रहः॥ २९ ॥

प्रवसत इति।—[ विदलकन्दलकम्पनलालितः ] कन्दली भूकन्दली। 'द्रोणपर्णी स्निग्धकन्दा कन्दली भूमिकन्दली' इति शब्दार्णवः। तस्याः पुष्पाणि कन्दलानि। "फले लुक्" ( ४।३।१६३ पा० ) इत्यणो लुक्। विदलानां विकचानां कन्दलानां कम्पनेन अवधूननेन लालितः उपस्कृतः [ मनस्विनीजनमनोनमनः ] मनस्विनीजनस्य मनसां नमनो नमयिता, मानिनीमानभञ्जन इत्यर्थः। कर्त्तरि ल्युट्। [ घनमारुतः ] मेघवायुः [ वनानि नमयति स्म, प्रवसतः ] प्रोषितान् [ सुतरामुद-कम्पयत् ] उद्वेजितवान्। मनस्विनीमानमर्दनस्य वननमनं प्रोषितकम्पनं वा कियदिति भावः *॥ ३० ॥

जलदेति।—[ निजया ] आत्मीयया [ स्वनसम्पदा कृतसमार्जन-मर्दलमण्डलध्वनिजया ] कृतः समार्जनस्य मार्जनाख्यसंस्कारसहितस्य

---

* अर्थापत्तिरलङ्कारो व्यज्यते।

नवकदम्बरजोऽरुणिताम्बरै-
रधिपुरन्ध्रि शिलीन्ध्रसुगन्धिभिः।
मनसि रागवतामनुरागिता
नवनवा वनवायुभिरादधे ॥ ३२ ॥
शमिततापमपोढ़महीरजः
प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम्।
प्रविरलैरचलाङ्गनमङ्गना-
जनसुगं न सुगन्धि न चक्रिरे ॥ ३३ ॥

---

मर्दलमण्डलस्य ध्वनिर्जयो यया सा तथोक्ता। मार्जनं नाम मर्दलानां ध्वननार्थं भस्ममर्दिताम्भःपुष्करलेपनम्। [ जलदपङ्क्तिरुन्मदम् ] उत्कटमदं [ कलविलापि ] मधुरालापि [ कलापिकदम्बकं ] मयूरवृन्दम् [ अनर्त्तयत् ] ॥ ३१ ॥

नवेति।—[ नवकदम्बरजोऽरुणिताम्बरैः ] नवकदम्बरजोभिररुणितमरुणीकृतमम्बरमाकाशं यैस्तैः [ शिलीन्ध्रसुगन्धिभिः ] शिलीन्ध्राणां कन्दलीकुसुमानां यः सुगन्धः स एषामस्तीति शिलीन्ध्रसुगन्धिनः तैः। "गन्धस्येत्वे तदेकान्तग्रहणम्" (वा०) अस्मादिन्प्रत्ययाश्रयणम्। 'कदल्याञ्च शिलीन्ध्रः स्यात्' इति शब्दार्णवे। [ वनवायुभिः ] पुरन्ध्रीषु स्त्रीषु विषये [ अधिपुरन्ध्रि ]। विभक्त्यर्थेऽव्ययीभावः। [ रागवतां ] कामिनां [ मनसि, नवनवा ] नवप्रकारा। "प्रकारे गुणवचनस्य" ( ८।१।१२ पा० ) इति द्विर्भावः, कर्मधारयवद्भावात् सुपो लुक्। [ अनुरागिता आदधे ] अनुराग उत्पादित इत्यर्थः * ॥ ३२ ॥

शमितेति।—[ अम्बुमुचः ] मेघाः [ प्रविरलैरम्भसां प्रथमबिन्दुभिः, शमिततापमपोढ़महीरजः] निरस्तधूलिकम्; न तु पङ्किलमिति भावः।

---

* अम्बरस्य आरुण्यग्रहात् तद्गुणः।

द्विरददन्तवलक्षमलक्ष्यत
स्फुरितभृङ्गमृगच्छवि केतकम् ।
घनघनौघविघट्टनया दिवः
कृशशिखं शशिखण्डमिव च्युतम् ॥ ३४ ॥

दलितमौक्तिकचूर्णविपाण्डवः
स्फुरितनिर्झरशीकरचारवः ।
कुटजपुष्पपरागकणाः स्फुटं
विदधिरे दधिरेणुविडम्बनाम् ॥ ३५ ॥

---

[ सुगन्धि ] सन्तप्तसेकाद्द्भूतसौरभम् । इह तदेकान्तत्वाद्गन्धस्येत्त्वम् । [ अचलाङ्गनं ] रैवतकाङ्गनम् । 'अङ्गनं चत्वराजिरे' इत्यमरः । [ अङ्गनाजनसुगम् ] अङ्गनाजनस्य सुखेन गच्छन्त्यस्मिन्निति सुगं, सुखसञ्चारमित्यर्थः । "सुदुरोरधिकरणे" ( वा० ) * इति गमेडप्रत्यये टिलोपः । [ न न चक्रिरे ] चक्रिरे इत्यर्थः । द्वौ नञौ प्रकृतमर्थं गमयतः ॥ ३३ ॥

द्विरदेति ।—[ द्विरददन्तवलक्षं ] गजदन्तधवलम् । 'वलक्षो धवलोऽर्जुनः' इत्यमरः । [ स्फुरितभृङ्गमृगच्छवि ] भृङ्गो मृग इव भृङ्गमृगः तस्य छविः सा स्फुरिता यस्मिंस्तत् तथोक्तम् ; केतक्याः पुष्पं [केतकम्] । "पुष्पमूलेषु बहुलम्" ( वा० ) इत्यणो लुकि, नादिवृद्धिः "लुक् तद्धितलुकि ( १।२।४९ पा० ) इति स्त्रीप्रत्ययस्यापि लुक् । [ घनघनौघविघट्टनया ] निविड़मेघसङ्घोपघातेन [ दिवः ] अन्तरिक्षात् [ च्युतं, कृशशिखं ] सूक्ष्माग्रं [शशिखण्डमिवालक्ष्यत ] इत्युत्प्रेक्षा † ॥ ३४ ॥

दलितेति ।—[ दलितमौक्तिकचूर्णविपाण्डवः ] दलितमौक्तिकानां निष्पिष्टमुक्ताफलानां चूर्ण इव विपाण्डवोऽतिशुभ्राः [ स्फुरितनिर्झरशीकरचारवः ] स्फुरिता ये निर्झराणां शीकराः कणास्त इव चारवः,

---

* "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" ( ३।२।४८ पा० ) इत्यस्य वार्त्तिकम् ।

† दन्तवलक्षमिति भृङ्गमृगेति चोपमाभ्यां संसृज्यते ।

नवपयःकणकोमलमालती-
कुसुमसन्ततिसन्ततसङ्गिभिः।
प्रचलितोडुनिभैः परिपाण्डिमा
शुभरजोभरजोऽलिभिराददे ॥ ३६ ॥

निजरजः पटवासमिवाकिर-
द्धृतपटोपमवारिमुचां दिशाम्।
प्रियवियुक्तवधूजनचेतसा-
मनवनी नवनीपवनावलिः ॥ ३७ ॥

---

[ कुटजपुष्परागकणाः, स्फुटं दधिरेणुविडम्बनां ] दधिचूर्णानुकारं [ विदधिरे ] चक्रिरे, तद्वद्बभुरित्यर्थः। पूर्वोपमानद्वयानुप्राणितेयमुपमेति सङ्करः ॥ ३५ ॥

नवेति।—[ नवपयःकणकोमलमालतीकुसुमसन्ततिसन्ततसङ्गिभिः ] नवपयःकणवन्नवोदकविन्दुवत् कोमलानां मालतीकुसुमानां जातिपुष्पाणां सन्ततिषु सन्ततसङ्गिभिर्निरन्तरासक्तैः। 'सुमना मालती जातिः' इत्यमरः। अत एव [ प्रचलितोडुनिभैः ] परागभूषणात् सञ्चरन्नचलकल्पैरिवेत्युत्प्रेक्षा। [अलिभिः], शुभाद्रजोभरात् परागपुञ्जाज्जातः [ शुभरजोभरजः, परिपाण्डिमा ] धवलिमा [ आददे ] स्वीकृतः * ॥३६॥

निजेति।—[ प्रियवियुक्तवधूजनचेतसाम् ] कर्मणि षष्ठी। [ अनवनी ] अरक्षणी, किन्तु हन्त्रीत्यर्थः। अवतेः कर्त्तरि ल्युटि ङीप्। [ नवनीपवनावलिः ] नवकदम्बकाननपङ्क्तिः [ धृतपटोपमवारिमुचां ] धृताः पटोपमाः पटकल्पाः † वारिमुचो मेघा याभिस्ताः, मेघपटावृता इत्यर्थः। तासां [ दिशां, निजरजः ] स्वपरागं [ पटवासं ] पिधा-

---

* पयःकणकोमलेत्युपमा, अलीनां पाण्डिमस्वीकारात् तद्गुणश्च।

† इत्युपमा।

प्रणयकोपभृतोऽपि पराङ्मुखाः
सपदि वारिधरारवभीरवः ।
प्रणयिनः परिरब्धुमथाङ्गना
ववलिरे वलिरेचितमध्यमाः ॥ ३८ ॥

विगतरागगुणोऽपि जनो न क-
श्चलति वाति पयोदनभस्वति ।
अभिहितेऽलिभिरेवमिवोच्चकै-
रनन्नते नन्नते नवपल्लवैः ॥ ३९ ॥

---

नम् [ इव ] इत्युत्प्रेक्षा । [ अकिरत् ] अक्षिपत् । सखीवदिति भावः ॥ ३७ ॥

प्रणयीति ।—[ प्रणयकोपभृतः ] अत एव [ पराङ्मुखाः ] विमुखा [ अपि ] । "स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधात्" ( ४।१।५४ पा० ) इति विकल्पादाकारः । [ सपदि, वारिधरारवभीरवः ] वारिधरारवेभ्यो मेघगर्ज्जितेभ्यो भीरवो भीताः, [ अङ्गनाः ] स्त्रियः, जाता इति शेषः । [ अथ ] अनन्तरं गर्जिताकर्णनानन्तरमेव, [ प्रणयिनः ] प्रियान् [ परिरब्धुम् ] आलिङ्गितुं [ वलिरेचितमध्यमाः ] वलिरेचितान्यालिङ्गनार्थमङ्गप्रसारणात्त्रिवलिरिक्तीकृतानि मध्यमान्यवलग्नानि * यासां ताः तथाभूता एव [ ववलिरे ] प्रवृत्ताः । वलतेर्वकारादित्वात् "न शसददवादिगुणानाम् (६।४।१२६ पा०) इत्येत्वाभ्यासलोपप्रतिषेधः ॥ ३८ ॥

विगतेति ।—[ पयोदनभस्वति ] मेघमारुते [ वाति ] वहति सति । वातेर्लटः शत्रादेशः । [ विगतरागगुणः ] विरक्तः [ अपि, को जनः ] नरः [ न चलति ]? सर्वोऽपि चलत्येवेत्यर्थः । [ एवमलिभिरुच्चकैः ] उच्चैस्तरामन्नतमसत्यं न भवतीत्यनन्नतं तस्मिन् [ अन-

---

* देहमध्यभागोऽवलग्नम् ।

अरमयन् भवनादचिरद्युतेः
किल भयादपयातुमनिच्छवः।
यदुनरेन्द्रगणं तरुणीगणा-
स्तमथ मन्मथमन्थरभाषिणः॥ ४०॥

ददतमन्तरिताहिमदीधितिं
खगकुलाय कुलायनिलायिताम्।

---

न्हते ] सत्यवचने [अभिहिते] सति [ नवपल्लवैः, नन्हत इव ] न्हत्यं कृत-मिवेत्युत्प्रेक्षा। न्हतेर्भावे लिट्॥ ३९॥

अरमयन्निति।—[ अथ, अचिरद्युतेः ] विद्युतः [ भयात् ] भयादिव, न तु तथा, किन्तु रागादेवेति भावः। [किल] इत्यलीके। [ भवनात् ] रमणगृहाद् [ अपयातुम् ] निर्गन्तुम् [ अनिच्छवः ] भयव्याजात् तत्रैव स्थिता इति भावः। "बिन्दुरिच्छुः" (३।२।१६९ पा०) इत्युप्रत्ययान्तो निपातः। मन्मथेन मन्थरमलसं भाषन्त इति [ मन्मथमन्थरभाषिणः ] कामवशा इत्यर्थः। [ तरुणीगणाः, तं ] प्रकृतं [ यदुनरेन्द्रगणं ] यदव एव नरेन्द्रास्तेषां गणम् [ अरमयन् ] रमयन्ति स्म। अत्र भयेन रागनिगूहनान्मीलनालङ्कारः,—'मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्' इति लक्षणात्; सोऽप्यागन्तुकेन भयेन सहजरागतिरोधानादागन्तुकेन सहजतिरोधानरूपः। इति वर्षावर्णनम्॥ ४०॥

अथ शरद्वर्णनमारभते, ददतमिति।—[ रथावयवायुधः ] चक्रायुधो हरिः [ अन्तरिताहिमदीधितिं ] तिरोहितोष्णांशुं, तथा [ खगकुलाय ] पक्षिसङ्घाय [ कुलायनिलायिताम् ] कुलायेषु नीडेषु निलीयन्त इति कुलायनिलायिनः। 'कुलायो नीडमस्त्रियाम्' इत्यमरः। तेषां भावस्तत्ता, तां [ ददतं ] प्रयच्छन्तम्। पक्षिसञ्चारं प्रतिबध्नन्तमित्यर्थः। "नाभ्यस्ताच्छतुः" (७।१।७८ पा०) इति नुम्प्रतिषेधः। [ दिशाम् ] इति कर्मणि षष्ठी। [ अबोधकृतम् ] अबोधकारिणम्।

जलदकालमबोधकृतं दिशा-
मपरथाऽऽप रथावयवायुधः ॥ ४१ ॥
स विकचोत्पलचक्षुषमैक्षत
क्षितिभृतोऽङ्कगतां दयितामिव ।
शरदमच्छगलद्वसनोपमा-
क्षमघनामघनाशनकीर्त्तनः ॥ ४२ ॥
जगति नैशमशीतकरः करै-
र्वियति वारिदवृन्दमयं तमः ।

---

मेघावरणेन प्राच्यादिविवेकं लुम्पन्तमित्यर्थः। [ जलदकालं ] प्रावृट्-कालम् [ अपरथा ] प्रकारान्तरेण [ आप ] प्राप। मेघोदयोपाधिना प्रावृड्व्यवहारभाजं तमेव कालं मेघात्ययोपाधिना शरत्संज्ञयोपलेभे इत्यर्थः। कालो हि एक एव सन्ननेकोपाधिसम्बन्धान्नानात्वेनोपचर्य्यत इति तद्विदः ॥ ४१ ॥

स इति।—अघानां * नाशनं निवर्त्तनं कीर्त्तनं यस्य सः [ अघ-नाशनकीर्त्तनः स ] हरिः [ विकचोत्पलचक्षुषं ] विकचमुत्पलमेव चक्षु-र्यस्यास्ताम् [ अच्छगलद्वसनोपमाक्षमघनाम् ] अच्छं शुभ्रं गलत् स्रंसमानं यद्वसनं तस्योपमा सादृश्यं तस्याः क्षमा योग्या घना मेघा यस्यां सा, ताम्; अत एव [ क्षितिभृतोऽङ्कगताम् ] उत्सङ्गगतां [ दयितामिव ] इत्युत्प्रेक्षा। [ शरदमैक्षत ] † ॥ ४२ ॥

जगतीति।—[ अशीतकरः ] उष्णांशुः [ करैः ] स्वांशुभिः [ जगति ] लोके, निशायां भवं [ नैशम् ]। "निशाप्रदोषाभ्याञ्च" (४।३।१४ पा०) इति विकल्पादण्प्रत्ययः [ तमः ] तिमिरम् [ अदिद्रवत् ] द्रावयति स्म, निरस्तवानित्यर्थः। द्रु गतौ। "णौ चङ्युपधाया ह्रस्वः" (७।४।१ पा०)

---

* पापानाम्।

† उत्पलचक्षुषमिति रूपकम्; वसनोपमाक्षमघनामित्युपमा च।

जलजराजिषु नैद्रमदिद्रव-

न्न महतामहताः क्व च नारयः ॥ ४३ ॥

समय एव करोति बलाबलं

प्रणिगदन्त इतीव शरीरिणाम्।

शरदि हंसरवाः परुषीकृत-

स्वरमयूरमयू रमणीयताम् ॥ ४४ ॥

---

इत्युपधाह्रस्वः, सन्वद्भावः, "स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा" (७।४।८१ पा०) इत्यभ्यासस्य विकल्पादित्वम्। [वियति] आकाशे [वारिदवृन्दमयं] मेघसङ्घरूपम्। स्वार्थे मयट्। तमः अदिद्रवत्। [जलजराजिषु] निद्रामेव [नैद्रं] निमीलनं, तदेव तमः अदिद्रवत्। तथा हि [महतां] महात्मनाम् [अरयः क्व च] क्व वा [न नाहताः] अहता न? किन्तु सर्वत्र हता भवन्तीत्यर्थः। द्वितीयनिषेध-प्रापितस्य प्रकृतार्थस्य हननस्य तृतीयेन निषेधः। पुनः क्वेति कशब्द-सामर्थ्यात् प्रकृतार्थपर्य्यवसानम्। * वैधर्म्येण सामान्याद्विशेषसमर्थन-रूपोऽर्थान्तरन्यासः ॥ ४३ ॥

समय इति :—[समयः] कालः [एव शरीरिणां, बलाबलं] बलाबले। "विप्रतिषिद्धं चानधिकरणवाचि" (२।४।१३ पा०) इति विकल्पात् द्वन्द्वैकवद्भावः। [करोतीति, प्रणिगदन्तः] प्रतिपादयन्त [इव] इत्युत्प्रेक्षा। "नेर्गदनदपत—" (८।४।१७ पा०) इत्यादिना णत्वम्। [शरदि, हंसरवाः], परुषीकृतस्वरा निष्ठुरीकृतनादा मयूरा यस्मिन् कर्मणि तत् [परुषीकृतस्वरमयूरं] यथा तथा [रमणीयताम्, अयुः] प्राप्ताः। यातेर्लङि "लङः शाकटायनस्यैव" (३।४।१११ पा०) इति झेर्जुसादेशः। "उस्यपदान्तात्" (६।१।९६ पा०) इति पररूपं, संहितायाम् "ढ्रलोपे पूर्वस्य दीर्घोऽणः" (६।३।१११ पा०) इति दीर्घः।

---

* क्वचन क्वत्र इति व्याख्यानं समीचीनतया प्रतिभाति।

तनुरुहाणि पुरोविजितध्वने-
र्धवलपक्षविहङ्गमकूजितैः ।
जगलुरक्षमयेव शिखण्डिनः
परिभवोऽरिभवो हि सुदुःसहः ॥ ४५ ॥

अनुवनं वनराजिवधूमुखे
बहुलरागजवाधरचारुणि ।
विकचबाणदलावलयोऽधिकं
रुरुचिरे रुचिरेक्षणविभ्रमाः ॥ ४६ ॥

---

शरत्प्रावृषोर्हंसमयूरकूजितयोः माधुर्य्यामाधुर्य्यविपर्य्ययदर्शनात्काल एव प्राणिनां बलाबलनिदानमिति व्यक्तमभूदित्यर्थः ॥ ४४ ॥

तनुरुहाणीति ।—[ पुरः ] अग्रे [ धवलपक्षविहङ्गमकूजितैः ] धवलपक्षविहङ्गमाः हंसपक्षिणः । 'हंसास्तु श्वेतगरुतः' इत्यमरः । तेषां कूजितैः [ विजितध्वनेः, शिखण्डिनः ] मयूरस्य तनौ रुहाणि रूढानि [ तनुरुहाणि ] बर्हाणि । इगुपधलक्षणः कप्रत्ययः । [ अक्षमया ] हंसकूजितेर्ष्यया [ इव, जगलुः ] गलन्ति स्म । कालप्रयुक्तस्य बर्हगलनस्याक्षमाहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा । युक्तं चैतदित्याह,—[ अरिभवः परिभवः, सुदुःसहः ] अत्यसह्यः [ हि ] । पराजयदुःखितस्याङ्गसादो युज्यत इति भावः । कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः, स च अक्षमोत्प्रेक्षया सङ्कीर्य्यते ॥ ४५ ॥

अनुवनमिति ।—[ अनुवनं ] प्रतिवनं [ बहुलरागजवाधरचारुणि ] बहुलो रागो यस्याः सा चासौ जवा च । 'ओड्रपुष्पं जवा' इत्यमरः । पुष्पेषु जातीप्रभृतित्वात् स्त्रीलिङ्गता । सैवाधरस्तेन चारुणि रम्ये [ वनराजिवधूमुखे ] वनराजिरेव बधूस्तस्या मुखं प्राग्भागः तदेव मुखं वक्त्रमिति श्लिष्टरूपकं, तस्मिन् [ रुचिरेक्षणविभ्रमाः ] रुचिराणामीक्षणानां विभ्रम इव विभ्रमः शोभा यासां ताः [ विकचबाणदलावलयः ]

कनकभङ्गपिशङ्गदलैर्दधे
सरजसारुणकेशरचारुभिः ।
प्रियविमानितमानवतीरुषां
निरसनैरसनैरवृथार्थता ॥ ४७ ॥
मुखसरोजरुचं मदपाटला-
मनुचकार चकोरदृशां यतः ।

---

नीलझिण्टीपलपङ्क्तयः । 'बाणोऽस्त्री नीलझिण्टाच्च' इति वैजयन्ती । [ अधिकं, रुरुचिरे ] शुशुभिरे । उपमारूपकयोः सङ्करः ॥ ४६ ॥

कनकेति ।—[ कनकभङ्गपिशङ्गदलैः ] कनकभङ्गाः स्वर्णखण्डा इव पिशङ्गानि दलानि येषां तैः, [ सरजसारुणकेशरचारुभिः ] सह रजसा सरजसं, "अचतुर—" ( ५।४।७७ पा० ) इत्यादिना साकल्यार्थेऽव्ययीभावे समासान्तो निपातः । बहुव्रीह्यर्थे लक्षणया तु सरजस्का इत्यर्थः ; अत एव "न सरजसमित्यनव्ययीभावे" ( ५ अधि० २ अध्या० ६५सू० ) इति वामनः । अथ वा महाकविप्रयोगप्राचुर्य्यदर्शनादव्ययीभावदर्शनं प्रायिकमिति पक्षाश्रयणाद्बहुव्रीह्यर्थोऽपि साधुरेव । तथा च सरजसं सरजसा वा ये अरुणकेशराः तैश्चारुभिः, तथा [ प्रियविमानितमानवतीरुषां ] प्रियैः विमानिता अवमानिता मानवत्यो मानिन्यः तासां या रुषो रोषास्तासां [ निरसनैः ] निरासकैः । अस्यतेः कर्त्तरि ल्युट् । [ असनैः ] प्रियकप्रसूनैः । 'सर्जकासनबन्धूकपुष्पप्रियकजीवकाः' इत्यमरः । [ अवृथार्थता ] माननिरासकत्वादस्यन्तीत्यसनानीत्यन्वर्थनामकत्वं [दधे] दध्रे । दधातेः कर्मणि लिट् * ॥ ४७ ॥

मुखेति ।—धृतो नवातपो येन तत् [ धृतनवातपं ] बालातपताम्रमित्यर्थः, [ अम्भसि कमलम् ] अम्भःस्थं कमलम् । अम्भोग्रहणं स्थलकमलनिवृत्त्यर्थम् अम्लानताद्योतनार्थं वा । [ यतो मदपाटलां,

---

* उपमाकाव्यलिङ्गयोः संसृष्टिः ।

धृतनवातपमुत्सुकतामतो
न कमलं कमलम्भयदम्भसि ? ॥ ४८ ॥
विगतशस्यजिघत्समघट्टयत्
कलमगोपवधूर्न मृगव्रजम् ।
श्रुततदीरितकोमलगीतक-
ध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥ ४९ ॥

---

चकोरदृशां ] स्त्रीणां [ मुखसरोजरुचं ] मुखारविन्दशोभाम् [ अनुचकार ]। * "अनुपराभ्यां कृञः" ( १।३।७९ पा० ) इति परस्मैपदनियमः। [ अतः ] अनुकरणाद्धेतोः [ कं ] पुमांसम् [ उत्सुकतां ] प्रेयसीमुखावलोकनकौतुकितां [ नालम्भयत् ? ] नागमयत्; सर्वं चालम्भयदेव, तत्स्मारकत्वादित्यर्थः। एतेनौत्सुक्यवस्तुना कार्येण, कारणभूता कमलदर्शनोत्था मुखस्मृतिर्व्यज्यत इति वस्तुनाऽलङ्कारध्वनिः। एतेन स्त्रीमुखसादृश्यात् कमलं स्वाधाराम्भसि पुंस उत्सुकतामलम्भयदिति वल्लभराजव्याख्यानं 'काकस्य कार्ष्ण्याद्धवलः प्रसादः' इतिवदसङ्गतं मन्तव्यमिति। अलम्भयदिति।—लभेर्ण्यन्ताल्लङ् "लभेश्च" (७।१।६४ पा०) इति नुमागमः। लभेश्चात्र प्राप्त्युपसर्ज्जनकगत्यर्थत्वात् "गतिबुद्धि" ( १।४।५२ पा० ) इत्यादिना अणिकर्त्तुः कर्म्मत्वे द्विकर्म्मकता। गत्युपसर्ज्जनकप्राप्त्यर्थत्वे तु वैपरीत्यमित्युक्तं "सितं सितिम्ना" इत्यत्र, प्रथमसर्गे २५ श्लोके ॥ ४८ ॥

विगतेति।—[ इषे ] आश्वयुजमासे। 'स्यादाश्विन इषोऽप्याश्वयुजः' इत्यमरः। कलमगोपी शालिगोप्त्री सा चासौ वधूश्च [ कलमगोपवधूः ]। "स्त्रियाः पुंवत्—" ( ६।३।३४ पा० ) इत्यादिना पुंवद्भावः। श्रुत आकर्णितस्तया वध्वा ईरितस्य आलापितस्य कोमलगीतकस्य मधुरगानस्य ध्वनिर्येन तं [ श्रुततदीरितकोमलगीतकध्वनिम् ] अत एव [ अग्रतः ] अग्रे; न निमिषति विस्मयानन्दाभ्यामित्यनिमि-

---

* इत्युपमा।

कृतमदं निगदन्त इवाऽऽकुली-
कृतजगत्त्रयमूर्जमतङ्गजम्।
ववुरयुक्छदगुच्छसुगन्धयः
सततगास्ततगानगिरोऽलिभिः॥ ५० ॥
विगतवारिधरावरणाः क्वचिद्
ददृशुरुल्लसितासिलतासिताः।

---

षम्। इगुपधलक्षणः कप्रत्ययः। तदीक्षणं यस्य तम् [ अनिमिषे-क्षणम् ]। घस्तुमत्तुं वेच्छा जिघत्सा। घसेः, घसेरदादेशाद्वा सन्नन्तात् "अप्रत्ययात्" (३।३।१०२ पा०) इति स्त्रियामप्रत्ययः। विगता शस्यस्य जिघत्सा यस्य तं [ विगतशस्यजिघत्सम् ]। उपसर्ज्जनात् ह्रस्वः।*
[ मृगव्रजं, नाघट्टयत् ] नाताड़यत्। सिद्धे साधनाप्रयोगादिति भावः। अत्र दण्डसाध्ये मृगनिवारणे काकतालीयन्यायेन सुखार्थस्य गानस्य कारणत्वकथनात्समाधिरलङ्कारः,—'कारणान्तरयोगात् कार्य्यस्य सुकरत्वं समाधिः' इत्यलङ्कारसर्व्वस्वसूत्रात्॥ ४९ ॥

कृतेति।—[ अयुक्छदगुच्छसुगन्धयः ] अयुजो विषमाश्छदा येषां ते अयुक्छदाः सप्तपर्णास्तेषां गुच्छैः स्तवकैः सुगन्धयः शोभनगन्धाः; गजमदगन्धिन इति भावः। [ अलिभिः ] भृङ्गैः [ ततगानगिरः ] तता विस्तृता गानगिरो येषां ते, अलिभिर्गीयमाना इत्यर्थः। सततं गच्छन्तीति [ सततगाः ] सदागतयः, वायव इति यावत्। [ कृतमदं ] जनितमदम्, अत एव [ आकुलीकृतजगत्त्रयम्, ऊर्जमतङ्गजम् ] ऊर्जः कार्त्तिकः। 'बाहुलोर्जौ कार्त्तिकिकौ' इत्यमरः। स एव मतङ्गज इति रूपकम्। तं [ निगदन्त इव ] अयमागच्छतीत्यावेदयन्त इव [ ववुः ] वान्ति स्म। मत्तमातङ्गगमनेऽप्येवंविधवायुवहनसम्भवादियमुत्प्रेक्षा, रूपकं त्वङ्गमस्याः॥ ५० ॥

विगतेति।—[ शरदि, यदवः ] यादवाः, यदुशब्देन रघुशब्दवत् तद-

---

* "गोस्त्रियोरुपसर्जनस्य" ( १।२।४८ पा० ) इति सूत्रम्।

क्वचिदिवेन्द्रगजाजिनकञ्चुकाः
शरदि नीरदिनीर्यदवो दिशः ॥ ५१ ॥

विलुलितामनिलैः शरदङ्गना
नवसरोरुहकेशरसम्भवाम् ।
विकरितुं परिहासविधित्सया
हरिवधूरिव धूलिमुदक्षिपत् ॥ ५२ ॥

हरितपत्रमयीव मरुद्गणैः
स्रगवनद्धमनोरमपल्लवा ।

---

पत्ये लक्षणा, जनपदशब्दानामेव "तद्राजस्य बहुषु—" (२।४।६२ पा०) इति लुक्सम्भवादिति । [क्वचित्, विगतवारिधरावरणाः] निवृत्तमेघावरणाः अत एव [ उल्लसितासिलतासिताः ] उल्लसिता कोशादुद्धृता, असिलता, तद्वदसिताः श्यामा इत्युपमा । ।[ क्वचिन्नीरदिनीः ] मेघवतीः, शुभ्राभ्रपटलच्छन्ना इत्यर्थः ; अत एव [ इन्द्रगजाजिनकञ्चुकाः ] इन्द्रगजाजिनम् ऐरावतचर्म तदेव कञ्चुकः कूर्पासको यासां ता इव स्थिताः इत्युत्प्रेक्षा । [ दिशो ददृशुः ] । उक्तालङ्कारयोः संसृष्टिः ॥ ५१ ॥

विलुलितामिति ।—[ शरदङ्गना ] शरदेवाङ्गना इति रूपकम् [ अनिलैः, विलुलितां ] विक्षोभितां [ नवसरोरुहकेशरसम्भवां, धूलिं ] परागं, [ परिहासविधित्सया ] नर्मरीतिचिकीर्षया । दधातेः सन्नन्तात् स्त्रियामप्रत्यये टाप् । [ हरिवधूः, विकरितुं ] विक्षेप्तुम् [ इव ] । "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" ( ३।३।१० पा० ) इति तुमुन्प्रत्ययः । [ उदक्षिपत् ] प्रेरितवती । रूपकोज्जीवितेयमुत्प्रेक्षा । किरतिरयं कीर्य्यमाणकर्मा । यथा रजः किरति मारुतः । क्वचित् तत्कारकीदृश्यकर्मा यथाऽलैवेति विवेकः ॥ ५२ ॥

हरितेति ।—[ अभिताम्रमुखी ] अरुणमुखी । "स्वाङ्गाच्चोपसर्ज-

मधुरिपोरभिताम्रमुखो मुदं
दिवि तता वितताम शुकावलिः ॥ ५३ ॥
स्मितसरोरुहनेत्रसरोजला-
मतिसिताङ्गविहङ्गहसद्दिवम् ।
अकलयन्मुदितामिव सर्वतः
स शरदं शरदन्तुरदिङ्मुखाम् ॥ ५४ ॥
गजपतिद्वयसीरपि हैमन-
स्तुहिनयन् सरितः पृषताम्पतिः ।

---

नात् (४।१।५४ पा०) इत्यादिना विकल्पात् ङीष्। [ शुकावलिः, मरुङ्क्तीः ] सुमनोगणैः [ दिवि तता ] हरिप्रियार्थमाकाशे वितता, हरितानां हरिद्वर्णानां पत्राणां विकारः [ हरितपत्रमयी ]। "टिड्ढा-णञ्" (४।१।१५ पा०) इत्यादिना विकल्पात् ङीप्। [ अवनद्धमनोरम-पल्लवा ] तथा, अवनद्धाः ग्रथिताः मनोरमाः पल्लवा यस्यां सा [ स्रगिव ] इत्युत्प्रेक्षा। [ मधुरिपोः ] कृष्णस्य [ मुदं वितताम ] ॥ ५३ ॥

स्मितेति।—[ सः ] हरिः [ स्मितसरोरुहनेत्रसरोजलां ] स्मितानि विकसितानि सरोरुहाण्येव नेत्राणि येषु तानि सरोजलानि यस्यां तां तथोक्ताम् [ अतिसिताङ्गविहङ्गहसद्दिवम् ] अतिसिताङ्गाः धवलपक्षा ये विहङ्गा हंसास्तैर्हसन्ती स्मयमानेव स्थिता द्यौर्यस्यां तां तथोक्ताम्; शरैस्तृणविशेषैर्दन्तुराण्युन्नतदन्तानि हासात्प्रकाशदशनानीति यावत्। "दन्त उन्नत उरच्" (५।२।१०६ पा०) इत्युरच् प्रत्ययो मत्वर्थीयः, तानि दिङ्मुखानि यस्यां तां [ शरदन्तुरदिङ्मुखां, शरदं, सर्वतो मुदिता-मिवाकलयत् ] सर्वत्र नेत्रविकाशादिलिङ्गैर्हृष्टामिवामन्यतेत्यर्थः। अत्र सरोजहंसशरेषु नेत्रहासदन्तत्वारोपणाद्रूपकालङ्कारः; तद्वशात्प्रतीय-मानाङ्गनाभेदाध्यवसायाच्छरदि मुदितत्वोत्प्रेक्षेति सङ्करः। इति शर-द्वर्णनम् ॥ ५४ ॥

सलिलसन्ततिमध्वगयोषिता-
मतनुतातनुतापकृतं दृशाम् ॥ ५५ ॥
इदमयुक्तमहो ! महदेव य-
द्वरतनोः स्मरयत्यनिलोऽन्यदा ।
स्मृतसयौवनसोष्मपयोधरान्
सतुहिनस्तु हिनस्तु वियोगिनः ॥ ५६ ॥

---

अथ हैमन्तं वर्णयति, गजपतीति।—गजपतिः प्रमाणमासां [ गजपतिद्वयसीः ] महागजप्रमाणाः। "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" ( ५।२।३७ पा० ) इति प्रमाणार्थे द्वयसच्प्रत्ययः। "टिड्ढाणञ्" ( ४।१। १५ पा० ) इत्यादिना ङीप्। ताः [ अपि, सरितः, तुहिनयन् ] हिमीकुर्वन्। "तत्करोति" (ग०) इति ण्यन्ताल्लटः शत्रादेशः। हेमन्ते भवः [ हैमनः ]। "सर्वत्राण् च तलोपश्च" ( ४।३।२२ पा० ) इति हेमन्तशब्दाच्छैषिकोऽण्प्रत्ययः तकारलोपश्च। [ पृषतां ] बिन्दूनां [ पतिः ] वायुः। 'पृषन्ति बिन्दुपृषताः' इत्यमरः। [ अध्वगयोषिताम् ] अध्वानं गच्छन्तीत्यध्वगाः पथिकाः। "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" (३।२।४८ पा०) इति डप्रत्ययः। तद्योषितां, प्रोषितभर्तृकाणां, [ दृशाम्, अतनुतापकृतं ] महासन्तापकारिणीं [ सलिलसन्ततिम् अतनुत ] उष्णमश्रूत्पादयामासेत्यर्थः। हैमन्तमारुतो विरहिणीदुःसहोऽजनीति भावः * ॥ ५५ ॥

सर्वदाऽपि वियोगिनामुद्दीपकवायोर्हैमन्ते वैशिष्ट्यमाचष्टे, इदमिति।—[ अनिलः ] वायुः [ अन्यदा ] अन्यस्मिन् काले, ग्रीष्मादावित्यर्थः। "सर्वैकान्य—" (५।३।१५ पा०) इत्यादिना दाप्रत्ययः। [ वियोगिनः ] वियुक्तान्। "गतिबुद्धि—" ( १।४।५२ पा० ) इत्यादिना अणिकर्तुः कर्मत्वम्। [ वरतनोः ] वरतनुमित्यर्थः। "अधीगर्थ—" ( २।३। ५२ पा० ) इत्यादिना कर्मणि शेषे षष्ठी। [ स्मरयति ] इति [ यत् ]।

---

* कारणविरुद्धकार्योत्पत्तिरूपो विषमालङ्कारः।

प्रियतमेन यया सरुषा स्थितं
न सह सा सहसा परिरभ्य तम्।
श्लथयितुं क्षणमक्षमताङ्गना
न सहसा सहसा कृतवेपथुः ॥ ५७ ॥

---

स्मरतेराध्यानेि मित्त्वाद्ध्रस्वत्वम्। [ इदं ] स्मारकत्वमपि [ महत् ] अत्यन्तम् [ अयुक्तमेव ], सहकारिविरहादिति भावः। [ अहो ] अत्यन्ताकिञ्चित्करत्वाद्विस्मयः। हेमन्ते तु हन्तृत्वमप्यस्य सम्भवतीत्याह,—[ सतुहिनः ] तुहिनसहितः [ तु ] सयौवना यौवनयुक्ताः, अत एव सोष्माणो ये पयोधराः कुचास्ते स्मृता यैस्तान् [ स्मृतसयौवनसोष्मपयोधरान् ] वियोगिनो वियुक्तान्। "तथा युक्तं चानीप्सितम्" (१।४।५० पा०) इति कर्मत्वम्। [ हिनस्तु ] हन्तु। सम्भावनायां लोट्। हेमन्ते हि हिमसहकारात् कुचोष्मैकसाध्यदुःखोत्पादनसामर्थ्याद्वियोगिमारकत्वमपि सम्भाव्यते, ग्रीष्मादौ तु तादृक्सहकारिविरहात् स्मारकत्वमप्ययुक्तमित्यर्थः। अमारके मारकसम्बन्धोक्तेरतिशयोक्तिभेदः। इह सहजकविप्रौढोक्तिसिद्धयोरभेदाध्यवसाय इति रहस्यम् ॥५६॥

प्रियतमेनेति।—अत्राद्यपर्य्याये, न सह सा इति त्रेधा विभागः, अन्यत्र सहसेत्येकं पदम्। [ सरुषा ] सरोषया [ यया ] स्त्रिया कर्त्र्या। [ प्रियतमेन सह न स्थितम् ]। नपुंसके भावे क्तः। [ सा, अङ्गना ] स्त्री [ सहसा ] मार्गशीर्षमासेन। 'मार्गशीर्षे सहा मार्गः' इत्यमरः। [ कृतवेपथुः ] जनितकम्पा सती। "ट्वितोऽथुच्" (३।३। ८९ पा०) इत्यथुच् प्रत्ययः। [ तं ] पूर्वमगणितमेव प्रियं, हसेन सह वर्त्तत इति [ सहसा ] सती। 'अथो हसः हासो हास्यञ्च' इत्यमरः। "स्वनहसोर्वा" (३।३।६२ पा०) इति विकल्पादप् प्रत्ययः। [सहसा] शीघ्रम्। स्वरादिपाठादव्ययत्वम्। [ परिरभ्य ] आश्लिष्य [क्षणं] क्षणमपीत्यर्थः, अन्यथा वैरं स्यात्; अत एव सामर्थ्यलभ्यार्थत्वादपेरप्रयोगः। [ श्लथयितुं नाक्षमत ] शिथिलीकर्त्तुं नोत्सहते स्मेत्यर्थः;

भृशमदूयत याऽधरपल्लव-
क्षतिरनावरणा हिममारुतैः ।
दशनरश्मिपटेन च शीत्कृतै-
र्निवसितेव सितेन सुनिर्ववौ ॥ ५८ ॥
व्रणभृता सुतनोः कलशीत्कृत-
स्फुरितदन्तमरीचिमयं दधे ।
स्फुटमिवावरणं हिममारुतै-
र्मृदुतया दुतयाऽधरलेखया ॥ ५९ ॥

---

मानिनीमानभञ्जनक्षमोऽयं मास इति भावः । कलहान्तरितेयं नायिका । 'कोपात्कान्तं पराणुद्य पश्चात्तापसमन्विता' इति लक्षणात् ॥५७॥

भृशमिति ।—[ अनावरणा ] आवरणरहिता [ या, अधरपल्लवक्षतिः ] अधरपल्लवस्य क्षतिर्व्रणः, [हिममारुतैर्भृशम्, अदूयत] अतप्यत । दूङो दैवादिकात् कर्त्तरि लङ् । सा क्षतिः, यत्तदोर्नित्यसम्बन्धात् । [ शीत्कृतैः ] शीत्कारैः कर्त्तृभिः [ सितेन ] शुभ्रेण [ दशनरश्मिपटेन ] दशनरश्मय एव पटस्तेन करणेन । [निवसितेव] आच्छादितेवेत्युत्प्रेक्षा । वसेराच्छादनार्थात्कर्मणि क्तस्येडागमः । [ सुनिर्ववौ च ] सुष्ठु निर्ववार ; शीतालुराच्छाद्यत इति भावः । हिमक्षताधरनिर्वाणस्य शीत्कारकारणकस्य दशनरश्मिपटाच्छादने हेतुत्वोत्प्रेक्षणाद्रूपकोत्प्रेक्षयोः सङ्करः ॥ ५८ ॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह, व्रणेति ।—[ मृदुतया ] मार्दवेन । हेतुना । [ हिममारुतैः, दुतया ] पीड़ितया । 'टुदु उपतापे' इति धातोः सौवादिकात् कर्मणि क्तः । [ व्रणभृता ] दन्तव्रणवत्या, [ सुतनोः ] स्त्रियाः, अधरो लेखेव तया [ अधरलेखया ] कर्त्र्या [ कलशीत्कृतस्फुरितदन्तमरीचिमयं ] कलेन शीत्कृतेन हेतुना स्फुरिताः प्रका-

धृततुषारकणस्य नभस्वत-
स्तरुलताऽङ्गुलितर्जनविभ्रमाः ।
पृथु निरन्तरमिष्टभुजान्तरं
वनितयाऽनितया न विषेहिरे ॥ ६० ॥

हिमऋतावपि ताः स्म भृशस्विदो
युवतयः सुतरामुपकारिणि ।
प्रकटयत्यनुरागमकृत्रिमं
स्मरमयं रमयन्ति विलासिनः ॥ ६१ ॥

---

स्मिता ये दन्तमरीचयस्तन्मयं तद्रूपं, [ स्फुटम्, आवरणम् ] आच्छादनं [ दधे इव ] धृतमिवेत्युत्प्रेक्षा । दधातेः कर्मणि लिट् ॥ ५९ ॥

धृतेति ।—[ धृततुषारकणस्य ] धृतास्तुषारकणास्तुहिनशीकरा येन तस्य [ नभस्वतः ] पवनस्य सम्बन्धिनः [ तरुलताऽङ्गुलितर्जनविभ्रमाः ] तरुलता एवाङ्गुलयस्ताभिस्तर्जनानि यानि तान्येव विभ्रमाः विलासाः [ पृथु ] विशालम्, इष्टस्य दयितस्य भुजान्तरं भुजमध्यं वक्षःस्थलं [ इष्ट-भुजान्तरं निरन्तरम्, अनितया ] अप्राप्तया, गाढालिङ्गनमलभमानया इत्यर्थः । इणः कर्त्तरि क्तः । [ वनितया ] स्त्रिया [ न विषेहिरे ] न सोढाः । विरहिण्यस्तर्जिता इव नभस्वतो बिभ्यतीति भावः * ॥६०॥

हिमेति ।—[ स्मरमयं ] स्मरादागतं, स्मरप्रयुक्तमित्यर्थः । "तत आगतः" ( ४।३।७४ पा० ) इति मयट् । [ अकृत्रिममनुरागं ] सहजं प्रेम [ प्रकटयति ] प्रकटीकुर्वाणे, तत्कार्य्येण स्वेदेनेति भावः ; अत एव [सुतरामुपकारिणि] पुंसां रिरंसाजननात् तेभ्यः स्वानुरागप्रकाश-

---

* अत्र द्वितीयपादे रूपकालङ्कारः ; तेन च यथा कश्चित् कुतश्चित् कारणात् कामपि वैरतमापन्नां विपन्नाम् अङ्गुल्या तर्ज्जयति, सा तु स्वभावदुःखिता तदानीं तत दुःसहं तर्ज्जनादिकं न सहते तथेति ध्वन्यते ।

कुसुमयन् फलिनीरलिनीरवै-
र्मदविकाशिभिराहितहुङ्कृतिः ।
उपवनं निरभर्त्सयत प्रियान्
वियुवतीर्युवतीः शिशिरानिलः ॥ ६२ ॥

---

नाचात्यन्तोपकर्त्तरीत्यर्थः। एवम्भूते [ हिमऋतावपि ] हैमन्तेऽपि, स्वेदसम्भावनारहितकालेऽपीत्यर्थः। सांहितः "ऋत्यकः" ( ६।१।१२८ पा० ) इति प्रकृतिभावः। भृशं स्विद्यन्ति रागोष्मणा [ भृशस्विदः ] इति सात्त्विकोक्तिः। क्विप्। हैमन्तोऽपि रागिणां स्वेदहेतुरेव ; तद्धेतुरागहेतुत्वादिति भावः। [ताः] तथा धीराः [ युवतयः, विलासिनः ] प्रियान् [ रमयन्ति स्म ] हेमन्तस्योद्दीपकत्वात् पीडाक्षमत्वात् दीर्घरात्रत्वाच्चोभयेच्छासदृशमरमन्तेत्यर्थः। इति हैमन्तवर्णनम् ॥ ६१ ॥

अथ शिशिरं वर्णयति,—कुसुमयन्नित्यादिना।—[ उपवनं ] वने इत्यर्थः। विभक्त्यर्थेऽव्ययीभावः। "तृतीयासप्तम्योर्बहुलम्" ( २।४। ८४ पा० ) इति विकल्पादम्भावः। [ फलिनीः ] प्रियङ्गुलताः। 'प्रियङ्गुः फलिनी फली' इत्यमरः। [ कुसुमयन् ] कुसुमवतीः कुर्वन्। इत्युद्दीपनसामग्रीवर्णनम्। कुसुमयतेर्मत्वन्तप्रकृतिकात् "तत्करोति" (ग०) इति ण्यन्तात् लटः शत्रादेशः ; णाविष्ठवद्भावे "विन्मतोर्लुक् (५।३। ६५ पा० ) इति मतुपः लुक्। [ मदविकाशिभिः ] मदेन विजृम्भमाणैः [ अलिनी-रवैः ] भृङ्गीहुङ्कारैः, [आहितहुङ्कृतिः] कृतहुङ्कारः। माधुर्य्यातिशयद्योतनार्थमलिनी इति स्त्रीलिङ्गनिर्देशः। [ शिशिरानिलः प्रियान्, वियुवतीः ] कोपाद्वियुञ्जानाः। यौतेः शतरि धातोरुवङादेशः "उगितश्च" ( ४।१।६ पा० ) इति ङीप्। [ युवतीः ] बधूः। "यूनस्तिः" ( ४।१।७७ पा० ) इति तिप्रत्ययः। [ निरभर्त्सयत ] अतर्जयत। तर्जिभर्त्स्योश्चौरादिकयोरनुदात्तेत्त्वादात्मनेपदम्। अत्र वायौ अचेतने चेतनधर्मो निर्भर्त्सनमुत्प्रेक्ष्यते ; सा चालिनी-हुङ्कारभङ्गाराज्जीवितेति रूपकसङ्कीर्णा व्यञ्जकाप्रयोगाद्गम्या च ॥ ६२ ॥

उपचितेषु परेष्वसमर्थतां
व्रजति कालवशाद्बलवानपि।
तपसि मन्दगभस्तिरभीषुमा-
न्नहि महाहिमहानिकरोऽभवत् ॥ ६३ ॥

अभिषिषेणयिषुं भुवनानि यः
स्मरमिवाख्यत लोध्ररजश्चयः।
क्षुभितसैन्यपरागविपाण्डुर-
द्युतिरयं तिरयन्नुदभूद्दिशः ॥ ६४ ॥

---

उपचितेष्विति।—[ कालवशाद्बलवानपि, परेषु ] शत्रुषु [ उपचितेषु ] प्रवृद्धेषु सत्सु, [ असमर्थतां ] दौर्बल्यं [ व्रजति ]। [ हि ] यस्मात् [ तपसि ] माघमासे, 'तपा माघे' इत्यमरः। [ मन्दगभस्तिः ] मृदुरश्मिः [ अभीषुमान् ] अंशुमान्। 'अभीषुः प्रग्रहे रश्मौ' इत्यमरः। महत उपचितस्य हिमस्य हानिं नाशं करोतीति [ महाहिमहानिकरः ] तद्धेतुः [ नाभवत् ]। "कृञो हेतु—" ( ३।२।२० पा० ) इत्यादिना हेत्वर्थे टप्रत्ययः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः * ॥ ६३ ॥

अभीति।—[ क्षुभितसैन्यपरागविपाण्डुरद्युतिः ] क्षुभित उद्धतो यः सैन्यपरागः सेनारजः, स इव विपाण्डुरद्युतिः शुभ्रवर्णः † [ यो लोध्ररजश्चयः भुवनानि, अभिषिषेणयिषुं ] सेनया अभियातुमिच्छुम्। 'यत्सेनयाऽभिगमनमरौ तदभिषेणनम्' इत्यमरः। "सत्यापपाश—" ( ३।१।२५ पा० ) इत्यादिना सेनाशब्दात् णिचि सनि "सनाशंसभिक्ष

---

* "का कथा दुर्बलस्य" इति अपिशब्देनार्थान्तरप्रतिपादनात् अर्थापत्त्यलङ्कारस्य।

† इत्युपमा।

**शिशिरमासमपास्य गुणोऽस्य नः**
**क इव शीतहरस्य कुचोष्मणः ।**
**इति धियाऽस्तरुषः परिरेभिरे**
**घनमतो नमतोऽनुमतान् प्रियाः ॥ ६५ ॥**
**अधिलवङ्गममी रजसाऽधिकं**
**मलिनिताः सुमनोदलतालिनः ।**

---

उः" ( ३।२।६८ पा० ) इति उप्रत्ययः । "स्थादिष्वभ्यासेन—" ( ८।३।६४ पा० ) इति धात्वभ्याससकारयोः षत्वम् । [स्मरम्, आख्यतेव] आख्यातवानिवेत्युत्प्रेक्षा । "चक्षिङः ख्याञ्" ( २।४।५४ पा० ) "अस्यतिवक्तिख्यातिभ्योऽङ्" ( ३।१।५२ पा० ) इति च्लेरङादेशः । [अयं] लोध्ररजश्चयः [दिशः तिरयन्] तिरस्कुर्वन् । तिरःशब्दात् "तत्करोति—" ( ग० ) इति ण्यन्ताल्लटः शत्रादेशः * । णाविष्ठवद्भावे टिलोपः । [उद्भूत्] ॥६४॥

शिशिरेति ।—[शिशिरमासमपास्य] अपहाय, शीतं हरतीति तस्य [शीतहरस्य] । "हरतेरनुद्यमनेऽच्" ( ३।२।९ पा० ) इत्यच् प्रत्ययः । [नः] अस्माकम् [अस्य, कुचोष्मणः] कुचौष्ण्यस्य [क इव गुणः] किं फलम् ? सम्पाद्यत इति शेषः । गम्यमानक्रियाऽपेक्षया क्वानिर्देशः । इवशब्दो वाक्यालङ्कारे । [इति धिया, अतः] अस्मिन् शिशिरमासे । सार्वविभक्तिकस्तसिः । [प्रियाः] कान्ताः [अस्तरुषः] निरस्तरोषाः सत्यः [नमतः] प्रणतान् [अनुमतान्] स्वप्रियान् [घनं] निविडं [परिरेभिरे] आश्लिष्टवत्यः । इति धियेति । सुखार्थस्य परिरम्भस्य कुचोष्मसाफल्यार्थत्वमुत्प्रेक्ष्यते व्यञ्जकाप्रयोगाद्गम्यत्वञ्चास्याः † ॥६५॥

अधीति ।—लवङ्गेषु [अधिलवङ्गम्] । विभक्त्यर्थेऽव्ययीभावः ।

---

* "लटः शतृशानचा—" ( ३।२।१२४ पा० ) इत्यादिना ।

† अत्र धीशब्दः अत इति शब्दस्य पुनरुक्तौ, हेत्वर्थेन इतिनैव तदर्थस्योक्तत्वात् ; तेन "इति यतोऽस्तरुषः" इति युक्तः पाठः ।

स्फुटमिति प्रसवेन पुरोऽहसत्
सपदि कुन्दलता दलताऽलिनः॥ ६६॥
अतिसुरभिरभाजि पुष्पश्रिया
मतनुतरतयेव सन्तानकः।
तरुणपरभृतः स्वनं रागिणा-
मतनुत रतये वसन्तानकः॥ ६७॥

---

सुमनसां पुष्पाणां दलेषु तालयन्ति प्रतितिष्ठन्ति इति [ सुमनोदल-तालिनः ]। ताच्छील्ये आभीक्ष्ण्ये वा णिनिः। [ अमी, अलिनः ] मधुपाः [ रजसा ] परागेणार्त्तवेन च [ अधिकं ], मलिनाः मलीमसाः पापिनश्च कृताः [ मलिनिताः, इति ] हेतोः [ पुरः ] अग्रे [ सपदि, कुन्दलता ] माघ्यवल्ली। 'माघ्यं कुन्दम्' इत्यमरः। [ दलता ] विकसता [ प्रसवेन ] निजकुसुमेन [ अहसत् ] जहास [ स्फुटम् ] इत्युत्प्रेक्षायाम्। रजस्वलाया गन्तारं कामिनं सपत्नी हसन्तीति भावः। कुन्दकुसुमस्य धावल्याद्धासत्वेनोत्प्रेक्षा॥ ६६॥

अथ यमकविशेषकौतुकितया कविः पुनर्द्वादशभिः ऋतून् वर्णय-न्नाद्यैश्चतुर्भिर्वसन्तं वर्णयति, अतिसुरभिरिति।—[ अतिसुरभिः ] अत्य-न्तसुगन्धिः [सन्तानकः] कल्पवृक्षः [ पुष्पश्रियां ] पुष्पसम्पदाम् [अतनुतर-तया ] महत्तरत्वेन। अतनुशब्दात्तरबन्तात् तल्प्रत्ययः। [ अभाजीव ] अभञ्जीव इत्युत्प्रेक्षा, तथा नम्र इत्यर्थः। "भञ्जेश्च चिणि" ( ६।४।३३ पा० ) इति विभाषा, नलोपे उपधावृद्धिः, "चिणो लुक्" ( ६।४।१०४ पा० ) इति तलुक्। किञ्च वसन्तस्यानको दुन्दुभिः [ वसन्तानकः ] इति रूपकम्। [तरुणपरभृतः] तरुणकोकिलः, [ रागिणां ] कामिनां [रतये] रागवर्द्धनाय [स्वनमतनुत] मधुरं चुकूजेत्यर्थः। प्रभा वृत्तम्;—'स्वरशरविरतिर्ननौ रौ प्रभा' इति लक्षणात्॥ ६७॥

नोज्झितुं युवतिमाननिरासि
दक्षमिष्टमधुवासरसारम् ।
चूतमालिरलिनामतिरागा-
दक्षमिष्ट मधुवासरसाऽरम् ॥ ६८ ॥

जगद्वशीकर्त्तुमिमाः स्मरस्य
प्रभावनीकि तनवै जयन्तीः ।
इत्यस्य तेने कदलीर्मधुश्रीः
प्रभावनी केतनवैजयन्तीः ॥ ६९ ॥

---

नोज्झितुमिति ।—[अरम्] अत्यन्तम्, इष्टेष्वीप्सितेषु मधुषु मकरन्देषु वासे वसतौ रसो रागो यस्याः सा [इष्टमधुवासरसा], मधुपानप्रियेत्यर्थः । अत एव [अलिनामालिः] भृङ्गश्रेणिः [युवतिमाननिरासि, दक्षं] कुड्मलम्; उद्दीपकत्वादिति भावः । मधुवासरेषु वसन्तदिनेषु सारं श्रेष्ठं [मधुवासरसारम्], तत्कालश्लाघ्यमित्यर्थः । [चूतं] सहकारम् [अतिरागात्] अतिलौल्यात् [उज्झितुं] हातुं [नाक्षमिष्ट] नासहिष्ट । क्षमेर्भौवादिकाल्लुङ् । स्वागता वृत्तम्;—"स्वागतेति रनभाद्गुरुयुग्मम्" इति लक्षणात् ॥ ६८ ॥

जगदिति ।—प्रभावयतीति [प्रभावनी] सम्पादयित्री । कर्त्तरि ल्युटि ङीप् । [मधुश्रीः] कर्त्री । [जगद्वशीकर्त्तुं, प्रभौ] समर्थे [अस्य स्मरस्य, अनीके] सैन्ये [जयन्तीः] जित्वरीः [केतनवैजयन्तीः] ध्वजपताकाः * [तनवै] करवाणि । तनोतेः प्राप्तकाले लोट् । टेरेत्वमित्येकारः । "एत ऐ" (३।४।९३ पा०) "आडुत्तमस्य पिच्च" (३।४।९२ पा०) इति आटि; "आटश्च" (६।१।९० पा०) इति वृद्धिः । [इति] मनीषयेति शेषः । [इमाः कदलीः] रम्भातरून् [तेने] वितस्तार ।

---

* "केतनन्तु निमन्त्रणे । गृहे केतौ च कृत्येऽथ" इति "वैजयन्ती पताकायाम्" इति च मेदिनी ।

स्मररागमयी वपुस्तमिस्रा
परितस्तार रवेरसत्यवश्यम् ।
प्रियमाप दिवाऽपि कोकिले स्त्री
परितस्ताररवे रसत्यवश्यम् ॥ ७० ॥

'कदली वारणबुसा (षा) रम्भा मोचांशुमत्फला' इत्यमरः। कदलीषु कामवैजयन्तीत्वोत्प्रेक्षा । * वृत्तमुपजातिः ॥ ६९ ॥

स्मरेति ।—[ असती ] दुष्टा, [स्मररागमयी] स्मरेण कामेन निमित्तेन, यो रागो रमणेच्छा, स एव तन्मयी, [तमिस्रा] तमःस्तोमः । 'तमिस्रा तिमिरे रोगे तमिस्रा तु तमस्ततौ। कृष्णपक्षनिशायाञ्च' इति विश्वः । [ रवेर्वपुः ] मण्डलं, [ परितस्तार ] आववे, अहनि रजनीधियं जनयामासेत्यर्थः। परिपूर्वात् स्तृणातेर्लिट्। [ अवश्यं ] सत्यमित्यर्थः। कुतः ? [परितः] समन्तात्, [ताररवे] उच्चतरध्वनौ, [ कोकिले, रसति ] कूजति सति, इत्युद्दीपकोक्तिः। [ स्त्री ] स्त्रिय इत्यर्थः। जातावेकवचनम्। [ दिवाऽपि ] दिवेति सप्तम्यर्थेऽव्ययम्। वशं गतो वश्यः। "वशं गतः" ( ४।४।८६ पा० ) इति यत्प्रत्ययः। न वश्यस्तम् [अवश्यम्] अवशं गतमपीत्यर्थः। [ प्रियमाप ] स्वयमभिससारेत्यर्थः। यदवगणयन्तमपि प्रियं दिवाऽपि मानमवगणय्य निषेधं चोल्लङ्घ्य समगच्छन् तत्सत्यम् ; रागतिमिरतिरोहितमानभानुमण्डला मानिन्य इति रूपकानुप्राणिता प्रियाप्तिक्रियानिमित्ता परिस्तरणक्रियास्वरूपोत्प्रेक्षा अवश्यमिति व्यञ्जकप्रयोगाद्वाच्या। औपच्छन्दसिकं वृत्तम् ;—"विषमे ससजा गुरू समे चेत् स्मरयाश्छन्दसिकं तदोपपूर्वम्" इति लक्षणात् ॥ ७० ॥

* यथा राजानुगमनमनुचिन्त्य तत्सहचराः सखायश्च ध्वजपताकादीन् सहकारमनोहरसलिलपूर्णकलसान् कदलीदलविराजितद्रव्यजातांश्च प्रसारयन्ति, वसन्तश्रियोऽपि तथेति ध्वनिः ।

वपुरम्बुविहारहिमं शुचिना
रुचिरं कमनीयतरा गमिता ।
रमणेन रमण्यचिरांशुलता-
रुचिरङ्कमनीयत रागमिता ॥ ७१ ॥
मुदमब्दभुवामपां मयूराः
सहसाऽऽयन्त नदी पपाट लाभे ।
अलिनाऽरमतालिनी शिलीन्ध्रे-
सह सायन्तनदीपपाटलाभे ॥ ७२ ॥

---

अथैकेन ग्रीष्ममाह, वपुरिति।—[ शुचिना ] ग्रीष्मेण, प्रयोजककर्त्रा। [अम्बुविहारहिमम्] अम्बुविहारेण जलक्रीड़या, हिमं शीतलम्, अत एव [ रुचिरम् ] उज्ज्वलं, [ वपुः ] देहं, [ गमिता ] प्रापिता। "गतिबुद्धि—" ( १।४।५२ पा० ) इत्यादिना अणिकर्त्तुः कर्म्मत्वम्। "प्रधानकर्म्मण्याख्येये लादीनाहुर्द्विकर्म्मणाम्" इति अभिहितत्वञ्च; अत एव [ कमनीयतरा ] रमणीयतरा, अचिरांशुर्लतेव अचिरांशुलता विद्युल्लता, तस्या रुचिरिव रुचिर्यस्याः सा [ अचिरांशुलतारुचिः ] इत्युपमाद्वयम्। तथा [ रागमिता ] रागमनुरागमिता प्राप्ता। इणः कर्त्तरि क्तः। [ रमणी, रमणेन ] प्रियेण [अङ्कम्] उत्सङ्गम् [ अनीयत ] नीता। "नीह्रकृष्वहाम्" * इति नयतेर्द्विकर्म्मकता। शेषं पूर्ववत्। तोटकं वृत्तम्;—"वद तोटकमब्धिसकारयुतम्" इति लक्षणात् ॥ ७१ ॥

अथ द्वाभ्यां वर्षर्तुं वर्णयति, मुदमित्यादि।—[ अब्दभुवां ] मेघप्रभवाणाम् [ अपां लाभे ] मेघे वर्षति सतीत्यर्थः। [सहसा मयूराः, मुदम्] आनन्दम् [ आयन्त ] अलभन्त। 'अय गतौ' लङि "आडजादीनाम्"

---

* "दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।
कर्म्मयुक् स्यादकथितं तथा स्यान्नीह्रकृष्वहाम्॥" इति।

कुटजानि वीक्ष्य शिखिभिः शिखरीन्द्रं
समयाऽवनौ घनमदभ्रमराणि ।
गगनञ्च गीतनिनदस्य गिरोच्चैः
समया वनौघनमदभ्रमराणि ॥ ७३ ॥

note the peculiarity the name of metre contained in the verse.

(६।४।७२ पा०) इत्याडागमे वृद्धिः । [ नदी पपाट ] नद्यः प्रावहन्नित्यर्थः । 'अट पट गतौ' लिट् । जातावेकवचनम् । [ अलिना ] भृङ्गेण [ सह, सायन्तनदीपपाटलाभे ] सायन्तनः सायम्भवः । "सायञ्चिरम्" (४।३।२३ पा०) इत्यादिना ट्युप्रत्ययः तुडागमश्च । स चासौ दीपश्च तद्वत्पाटलाभे पाटलप्रभे, इत्युपमाऽलङ्कारः । तस्मिन् [शिलीन्ध्रे] कन्दलीकुसुमे [ अलिनी अरमत ] । अत्र मयूरमोदप्राप्त्याद्यनेककर्त्तृकक्रियायौगपद्याद्भिन्नाधिकरणक्रियासमुच्चयरूपः समुच्चयालङ्कारभेदः,—'गुणक्रियायौगपद्यं समुच्चयः' इति सामान्यलक्षणम् । औपच्छन्दसिकं वृत्तम् ॥ ७२ ॥

कुटजानीति ।—[शिखरीन्द्रं समया] रैवतकाद्रेः समीपे । "अभितःपरितःसमया—" (वा०) इत्यादिना द्वितीया । [ अवनौ ] प्रदेशे, घनमदा भ्रमरा येषु तानि [ घनमदभ्रमराणि ] । [ कुटजानि ] कुटजकुसुमानि, वनौघेन पयःपूरेण नमन्त्यभ्राणि मेघा यस्मिन् तत् [वनौघनमदभ्रम्] । 'पयःकीलालममृतं जीवनं भुवनं वनम्" इत्यमरः । [गगनञ्च वीक्ष्य, शिखिभिः] मयूरैः [गीतनिनदस्य ] गानध्वनेः, [ समया ] तुल्यया * "तुल्यार्थैः—" (२।३।७२ पा०) इत्यादिना वैकल्पिकी षष्ठी । [ गिरा ] वाचा, केकयेत्यर्थः । [ उच्चैः, अराणि ] रणितम् । 'रण शब्दे' भावे लुङ् चिणो लुक् । कुटजा वृत्तम् ;—'सजसा भवेदिह सगौ कुटजाख्यम्' इति लक्षणात् ॥ ७३ ॥

---

* तुल्यपमा ।

अभीष्टमासाद्य चिराय काले
समुद्धृताशं कमनी चकाशे ।
योषिन्मनोजन्मसुखोदयेषु
समुद्धृताऽऽशङ्कमनीचकाशे ॥ ७४ ॥

स्तनयोः समयेन याऽङ्गनाना-
मभिनद्धारसमा न सा रसेन ।
परिरम्भरुचिं ततिर्जलाना-
मभिनद्वा रसमानसारसेन ॥ ७५ ॥

---

अथ त्रिभिः शरदं वर्णयति, अभीष्टमित्यादि ।—कामयत इति [ कमनी ] कामयित्री । 'कम्रः कामयिताभीकः कमनः कामनोऽभिकः' इत्यमरः । कमेः कर्तरि ल्युटि ङीप् । [ योषित् ] जातावेकवचनम् । अनीचा उन्नताः काशा अश्ववाला यस्मिन् [ अनीचकाशे काले ] शरदीत्यर्थः ; [ मनोजन्मसुखोदयेषु ] कामसुखाविर्भावेषु [ धृताशं ] धृता आशा अभिलाषो येन तं, [अभीष्टं] प्रियं, [ चिराय ] चिरकालेन, 'चिराय चिररात्राय' इत्यमरः । सम्यगुद्धृता उत्सृष्टा आशङ्का सङ्कोचो यस्मिन् कर्मणि तत् [ समुद्धृताऽऽशङ्कं ] विस्रब्धं यथा तथा, [ आसाद्य ] प्राप्य, मुदा सह वर्त्तत इति [ समुत् ] सानन्दा सती, [ चकाशे ] विललासेत्यर्थः । अत्र समुच्चकाश इति योषितः प्रियप्राप्तिनिमित्त-हर्षाख्यभावनिबन्धनात्प्रेयोऽलङ्कारः,—"रसभावतदाभासतत्प्रशमानां निबन्धनेन रसवत्प्रेयऊर्ज्जस्विसमाहितानि" इत्यलङ्कारसर्वस्वलक्षणात् । वृत्तमुपजातिः ॥ ७४ ॥

स्तनयोरिति ।—रसमानाः कूजनशीलाः । "ताच्छील्यवयोवचन-शक्तिषु चानश्" ( ३।२।१२९ पा० ) इति ताच्छील्ये चानश् प्रत्ययः । रसतेः परस्मैपदित्वान्न शानच् प्रत्ययः । ते सारसाः पक्षिविशेषाः यस्मिन्

जातप्रीतिर्या मधुरेणानुवनान्तं
कामे कान्ते सारसिकाकाकुरुतेन।
तत्सम्पर्कं प्राप्य पुरा मोहनलीलां
कामेकान्ते सा रसिका का कुरुते न? ॥७६॥

तेन [ रसमानसारसेन, समयेन ] शरत्कालेनेत्यर्थः ; सारसानां तत्रैव सम्भवात्। 'सारसो मैथुनी कामी गोनर्द्दः पुष्कराह्वयः' इति यादवः। [ अङ्गनानां स्तनयोर्या, जलानां ततिः ] शारदोष्मजन्मा स्वेदोदबिन्दु-सन्दोहः, अभितो नद्धा [ अभिनद्धा ]। नह्यतेरभिपूर्वात्कर्म्मणि क्तः। "नहो धः" (८।२।३४ पा०) इति धत्वम्। [ हारसमा ] मुक्ताहार-तुल्या ; * कुचमण्डलमण्डनायमानेति भावः। [ सा ] जलानां ततिः [ रसेन ] रागेण हेतुना। बलीयसेति भावः। [ परिरम्भरुचिम् ] आलिङ्गनेच्छां, [ नाभिनत् ] न विभेद। शारदस्वेदस्याप्यलङ्कारतया उद्दीपकस्याजुगुप्सितत्वान्निःसपत्नशृङ्गारा विजयन्ते स्म इत्यर्थः ; अत एव रसनिबन्धनाद्रसवदलङ्कारः। लक्षणमुक्तं पूर्वश्लोके। औपच्छन्दसिकं वृत्तम् ॥ ७५ ॥

जातेति।—[ या ] स्त्री, [ अनुवनान्तम् ]। विभक्त्यर्थेऽव्ययीभावः। [ मधुरेण ] श्राव्येण, [ सारसिकाकाकुरुतेन ] सारस्य एव सारसिकाः सारसाङ्गनाः। कात्पूर्वस्येत्वम्। † तासां काकुरुतेन विकृतशब्देन। 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनिः' इत्यमरः। काकुश्च तद्रुतं च तेन ; [ कामे ] कामकल्पे। सिंहो देवदत्त इतिवद्गौणप्रयोगः। [ कान्ते ] प्रिये, [ जातप्रीतिः ] जातस्नेहा अभूत्। [ रसिका ] रसवती, रागवतीत्यर्थः। "अत इनिठनौ" (५।२।११५ पा०) इति ठन्प्रत्ययः। [ सा का ] स्त्री, [ एकान्ते ] रहसि, [ तत्सम्पर्कं ] तस्य कान्तस्य सम्पर्कं,

* इत्युपमा।

† "प्रत्ययस्थात् कात् पूर्व्वस्यात इदाप्यसुपः" (७।३।४४ पा०) इतिसूत्रम्।

**कान्ताजनेन रहसि प्रसभं गृहीत-**
**केशे रते स्मरसहाऽऽसवतोषितेन ।**
**प्रेम्णा मनःसु रजनीष्वपि हैमनीषु ।**
**के शेरते स्म रसहासवतोषितेन ॥ ७७ ॥**

---

[ प्राप्य, पुरा ] पुरुषप्रेरणात्पूर्वमेव, [कां, मोहनलीलां] सुरतक्रीड़ां, [ न कुरुते ? ] सर्वा अपि स्त्री सर्वानपि सुरतविशेषान् कामतन्त्रप्रसिद्धान् विस्रब्धस्वकारेत्यर्थः ; तेन शृङ्गारस्य पराकाष्ठा प्राप्तेत्युक्तम् । मत्तमयूरं वृत्तम् ;—"वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम्" इति लक्षणात् ॥ ७६ ॥

अथैकेन हेमन्तमाह, कान्तेति ।—सहत इति सहः । पचाद्यच् । स्मरस्य सहः, कामोद्दीपक इत्यर्थः, तेनाऽऽसवेन तोषितः तेन [ स्मर-सहाऽऽसवतोषितेन] अत एव रसहासावस्य स्त इति तेन, [रसहासवता] रागहास्यवता, अत एव [ प्रेम्णा, मनस्सु ] पुंसां चित्तेषु, [ उषितेन ] वसता । वसतेः कर्त्तरि क्तः । "वसतिक्षुधोरिट्" ( ७।२।५२ पा० ) इतीडागमः । 'गतिबुद्धि—' ( १।४।५२ पा० ) इत्यादिसूत्रे चकाराद्वर्त्त-मानार्थता । कान्तैव जनस्तेन [ कान्ताजनेन ] । जातावेकवचनम् । [ रहसि, प्रसभं ] बलात्, [गृहीतकेशे] आकृष्टशिरोरुहे, [ रते ] सुरते, हेमन्ते भवा हैमन्यस्तासु [ हैमनीषु अपि ], द्राघीयसीष्वपीति भावः । "सर्वत्राण् च तलोपश्च" ( ४।३।२२ पा० ) इति हेमन्तशब्दादण्प्रत्ययः, तकारलोपश्च । "टिड्ढाणञ्—" (४।१।१५ पा०) इत्यादिना ङीप् । [रज-नीषु, के ] युवानः [शेरते स्म] स्वपन्ति स्म ? न केऽपीत्यर्थः । * "लट् स्मे" ( ३।२।११८ पा० ) इति भूते लट् । एतेनातिभूमिङ्गतः शृङ्गार इति व्यज्यते । वसन्ततिलका वृत्तम् ॥ ७७ ॥

---

* हेमन्तकालस्य दीर्घरजनीष्वपि भृशं सम्भोगवतां रसभाववतां नास्ति सुरत-ग्लानिरिति भावः ।

गतवतामिव विस्मयमुच्चकै-
रसकलामलपल्लवलीलया ।
मधुकृतामसकृद्गिरमावली
रसकलामलपल्लवलीलया ॥ ७८ ॥

कुर्वन्तमित्यतिभरेण नगानवाचः
पुष्पैर्विराममलिनाञ्च न गानवाचः ।
श्रीमान् समस्तमनुसानु गिराविहर्त्तुं
बिभ्रत्यचोदि स मयूरगिरा विहर्त्तुम् ॥७९॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
ऋतुवर्णनं नाम षष्ठः सर्गः ॥ ६ ॥

---

अथैकेन शिशिरं वर्णयति, गतवतामिति ।—[ असकलामलपल्लव-लीलया ] असकला असमग्रविकासिनोऽमला निर्मलाश्च ये पल्लवास्तेषां लीला तया, नृत्यरूपयेत्यर्थः । [ विस्मयं, गतवतामिव ] स्थितानामिव, इत्युत्प्रेक्षा । [ मधुकृतां ] मधुकराणां सम्बन्धिनी, लवलीषु लताविशेषेषु, लयो लयनं, स्थितिर्यस्याः सा [लवलीलया,आवलिः] पङ्क्तिः, [ रसकलां ] रसेन मध्वास्वादेन, कलामव्यक्तमधुराम् । "ध्वनौ तु मधुरास्फुटे । कलः" इत्यमरः । [गिरं] वाचम्, [असकृदुच्चकैरलपत्] । मधुमदहेतुकस्य मधुकरालापस्य पल्लवलीलया जनितविस्मयहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतुत्प्रेक्षा । द्रुतविलम्बितं वृत्तम् ॥ ७८ ॥

कुर्वन्तमिति ।—[इति] इत्थं, [पुष्पैः] एव [अतिभरेण] * महाभरेण, तत्कृतेन वा गौरवेण, [ नगान् ] वृक्षानवाञ्चन्तीति [ अवाचः ] नम्रान् । अञ्चेरवपूर्वात् "ऋत्विक्" ( ३।२।५९ पा० ) इत्यादिना क्विन्प्रत्ययः । [ कुर्वन्तम् अलिनां, गानवाचः ] गीतध्वनेर्झङ्कारस्य [ च, न विरामम् ]

---

* "अतिभरेण" इत्यत्र "हेतौ" (२।३।२३ पा०) इत्यनेन तृतीया इत्यवगन्तव्यम् ।

# सप्तमः सर्गः ।

—॰॰—

अनुगिरमृतुभिर्वितायमाना-
मथ स विलोकयितुं वनान्तलक्ष्मीम् ।
निरगमदभिराद्धुमादृतानां
भवति महत्सु न निष्फलः प्रयासः ॥ १ ॥

---

अविराममसमाप्तिं कुर्वन्तं [ समस्तमृतुं ] सर्वानृतून् * [अनुसानु] सानुष्वित्यर्थः । विभक्त्यर्थेऽव्ययीभावः । [ बिभ्रति ] बिभ्राणे, [ इह गिरौ ] रैवतकाद्रौ [ विहर्तुं ] क्रीडितुं, [ श्रीमान् सः ] हरिः [ मयूरगिरा ] केकया, [ अचोदि ] प्रेरितः । भगवन्निह विहर ऋतुगणमनुगृहाणेति प्रार्थित इवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । वृत्तमुक्तम् ॥७९॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये षष्ठः सर्गः ॥ ६ ॥

---

इत्थमृतुगणप्रादुर्भावमभिधाय तत्फलतया भगवतः सानुचरस्य वनविहारलीलावर्णनमारभते, अनुगिरमिति ।—[ अथ ] ऋतुप्रादुर्भावानन्तरं [ सः ] हरिः गिराविति [ अनुगिरम् ] । विभक्त्यर्थेऽव्ययीभावः । "गिरेश्च सेनकस्य" ( ५।४।११२ पा० ) इति समासान्तः । [ ऋतुभिः, वितायमानां ] वितन्यमानाम् । तनोतेः कर्मणि लटः शानजादेशः । "तनोतेर्यकि" ( ६।४।४४ पा० ) इति वैभाषिक आकारा-

---

* इयर्त्ति गच्छति अशोकपुष्पविकाशान् इति वसन्तादिषड्विधः कालविशेषः ऋतुः । "षड्धा ऋतवः" इति श्रुतेः ;—"शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिमः । माघादिमासयुग्मैस्तु ऋतवः षट् क्रमादिमे ॥" इत्युक्तेश्च बोद्धव्यः ।

दधति सुमनसो वनानि बह्वी-
र्युवतियुता यदवः प्रयातुमीषुः ।
मनसिशयमहाऽस्त्रमन्यथाऽमी
न कुसुमपञ्चकमप्यलं विसोढुम् ॥ २ ॥

देशः । [वनान्तलक्ष्मीं विलोकयितुं, निरगमत्] * निर्गतः । "पुषादि—" (३।१।५५ पा०) इत्यादिना गमेर्लुङि च्लेरङादेशः । ऋतुगणभक्तिं स्वीकर्त्तुमिति भावः । तथा हि,—[अभिराद्धुम्] आराधयितुम्, [आदृतानाम्] आदरं कुर्वताम्, आस्थावतामित्यर्थः । कर्त्तरि क्तः । [प्रयासः] सेवायासः, [महत्सु] विषये [निष्फलो न भवति]; न हि भक्तानुकम्पिनो महान्तस्तत्सेवां व्यर्थयन्तीति भावः । अतो हरेरप्यृतुगणानुग्रहणार्थं निर्गमो युक्तः इति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः,—'सामान्यविशेषभावकार्य्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः' इति सर्वस्वसूत्रम् । † अत्र सर्गे पुष्पिताग्रा वृत्तम्,—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ १ ॥

दधतीति ।—[यदवः] यादवाः । व्याख्यातं चैतत् । [बह्वीः] बह्वः, बहुविधा इत्यर्थः । "बह्वादिभ्यश्च" (४।१।४७ पा०) इति विकल्पादीकारः । [सुमनसः] पुष्पाणि, 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः । [दधति] दधन्ति । "वा नपुंसकस्य" (७।१।७९ पा०) इति अभ्यस्ताच्छतुर्वैकल्पिको नुम्प्रतिषेधः । [वनानि, युवतियुताः] स्त्रीसमेताः एव, [प्रयातुम्, ईषुः] इच्छन्ति स्म । अत्र हेतुमाह,—[अन्यथा] युवतिजनाभावे, [अमी] यदवः, [मनसिशयमहाऽस्त्रं] मनसि शेते

* अत्र प्रथमपादार्द्धवाक्यसमूहस्य द्वितीयपादस्थेन "निरगमत्" इति पदेनान्वयसमाप्तेरर्द्धान्तरैकपदता नाम दोषः ।

† तथा चेतनाविरहितानामृतूनां वनलक्ष्मीविस्तारासम्बन्धेऽपि तत् सम्बन्धोक्तेरतिशयोक्तिश्च ।

अवसरमधिगम्य तं हरन्त्यो-
हृदयमयत्नकृतोज्ज्वलस्वरूपाः ।
अवनिषु पदमङ्गनास्तदानीं
न्यदधत विभ्रमसम्पदोऽङ्गनासु ॥ ३ ॥

---

इति मनसिशयः कामः। "अधिकरणे शेतेः" (३।२।१५ पा०) इत्यच्प्रत्ययः; "हलदन्तात् सप्तम्याः संज्ञायाम्" (६।३।९ पा०) इत्यलुक्। तस्य महाऽस्त्रभूतं [कुसुमपञ्चकमपि] पञ्चापि कुसुमानीत्यर्थः। पञ्चानां सङ्घः पञ्चकम्। "सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" (५।१।५८ पा०) इति कप्रत्ययः। [विसोढुं, नालं] न शक्ताः। सकलसुमनसां सामर्थ्ये तत्रारविन्दादीनामेव पञ्चबाणबाणत्वस्य प्रमाणसिद्धत्वादिति भावः। अतो युवतिभिः सह प्रयाणं युक्तमिति वाक्यार्थेन वाक्यार्थसमर्थनाद्वाक्यार्थसमर्थनरूपकाव्यलिङ्गमलङ्कारः। 'अरविन्दमशोकञ्च चूतञ्च नवमल्लिका। नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः॥' इति * ॥ २ ॥

अवसरमिति।—[तम्, अवसरं] सहजिगमिषाकालम् [अधिगम्य, हृदयं हरन्त्यः] हृदयङ्गमा भवन्त्यः; सर्वं हि प्रार्थ्यमानमेव प्रियं भवतीत्यर्थः; [अयत्नकृतोज्ज्वलस्वरूपाः] यत्नेन कृतं न भवतीत्ययत्नकृतं तथाऽप्युज्ज्वलं स्वरूपं यासां ताः, स्वभावसुन्दरमूर्त्तय इत्यर्थः। [अङ्गनाः, तदानीं] तस्मिन्नवसरे, [अवनिषु पदं, न्यदधत] निहितवत्यः, पादचारेणैव चेलुरित्यर्थः। दधातेर्लङि "आत्मनेपदेष्वनतः" (७।१।५ पा०) इति झस्यादादेशः। [अङ्गनासु, विभ्रमसम्पदः] विलाससम्पदः

---

* नानाविधकुसुमगन्धैः एकान्तस्थितलताकुञ्जैश्च, तथा स्वभावमनोहरैः मनोहरपल्लवयुतैस्तरुभिश्च तथा शाखानिलीनकोकिलकुलकूजितैः सुगन्धिद्रव्यजातैश्च मृदुमन्दपवनवीजितयुवजनानां मदनशरविमोहनम् अवश्यमेव तस्मिन् सम्भाव्येत इति भावः।

नखरुचिरचितेन्द्रचापलेखं
ललितगतेषु गतागतं दधाना ।
मुखरितवलयं पृथौ नितम्बे
भुजलतिका मुहुरस्खलत्तरुण्याः ॥ ४ ॥

---

पदं न्यदधत । तदानीं विलासाः प्रवृत्ता इत्यर्थः । अत्राङ्गनानां विलाससम्पदां चोभयोनामपि प्रकृतानामेव हृदयहरणादिना वर्णनासाम्येनौपम्यस्य गम्यमानत्वात् केवलप्रकृतविषया तुल्ययोगिताऽलङ्कारः । वाच्यभेदेनाप्यङ्गनाविलाससम्पदामुत्तरोत्तरस्य पूर्वपूर्वविशेषकत्वावगमादेकावलीभेदो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ३ ॥

न्यदधत विभ्रमसम्पदोऽङ्गनास्वित्युक्तं, ता एव प्रपञ्चयति, नखेति ।— [ ललितगतेषु ] मन्दगमनेषु, [ नखरुचिरचितेन्द्रचापलेखं ] नखानां रुचिभिः प्रभाभिः, रचिता इन्द्रचापलेखा यस्मिन् कर्मणि तद् यथा तथा, [ गतागतं ] यातायातं । "विप्रतिषिद्धं चानधिकरणवाचि" ( २।४।१३ पा० ) इति वैभाषिको द्वन्द्वैकवद्भावः । [ दधाना तरुण्याः भुजलतिका, मुखरितवलयं ] मुखराः कृता इति मुखरिताः ध्वनिता, वलया यस्मिन् कर्मणि तद्यथा तथा । 'कटको वलयोऽस्त्रियाम्' इत्यमरः । [ पृथौ नितम्बे मुहुः, अस्खलत् ] चस्खाल । अत्र नखरुचीत्यालम्बनगुण उक्तः । गतागतं दधाना अस्खलदिति तच्चेष्टा, मुखरितवलयमिति तदलङ्कृतिः । तटस्थास्तूक्ता वसन्तादयः । अन्यत्र,—विस्तारत इति चतुर्विधोऽप्युद्दीपनक्रम उक्तः । उक्तञ्च,—'आलम्बनगुणाश्चैव तच्चेष्टा तदलङ्कृतिः । तटस्थश्चेति विज्ञेयश्चतुष्कोद्दीपनक्रमः' ॥ इति । तत्रालम्बनं रसस्य समवायिकारणं नायिका नायकश्च । तद्गुणो रूपलावण्यादिः । तच्चेष्टा भावहावादिः । अन्यत् सुगमम् । एवमुत्तरत्रापि ॥ ४ ॥

अतिशयेति ।—[ अतिशयपरिणाहवान् ] अतिशयेन परिणाहवान्, अतिविशाल इत्यर्थः ; अन्यथा तज्जघनस्यापर्याप्तेरिति भावः ।

अतिशयपरिणाहवान् वितेने
बहुतरमर्पितरत्नकिङ्किणीकः ।
अलघुनि जघनस्थलेऽपरस्या
ध्वनिमधिकं कलमेखलाकलापः ॥ ५ ॥

गुरुनिविड़नितम्बविम्बभारा-
क्रमणनिपीड़ितमङ्गनाजनस्य ।
चरणयुगमसुस्रुवत्पदेषु
स्वरसमसक्तमलक्तकच्छलेन ॥ ६ ॥

---

'परिणाहो विशालता' इत्यमरः । "उपसर्गादसमासेऽपि णोपदेशस्य" (८।४।१४ पा०) इति णत्वम् । [बहुतरम्, अर्पितरत्नकिङ्किणीकः] अर्पिता आहिता, रत्नानां किङ्किण्यो यस्मिन् सः । "नद्यृतश्च" (५।४।११५ पा०) इति कप्प्रत्ययः । [कलमेखलाकलापः] कलो मधुरारावी मेखलाकलापः [अपरस्याः] स्त्रियः, [अलघुनि जघनस्थले अधिकं ध्वनिं वितेने]। तदलङ्कृतिरियम् ॥ ५ ॥

गुर्विति ।—[गुरुनिविड़नितम्बविम्बभाराक्रमणनिपीड़ितं] गुरु गुरुत्वगुणयुक्तं, निविड़ं दृढ़ञ्च, यन्नितम्बविम्बं तदेव भारस्तस्याक्रमणेनाधिष्ठानेन निपीड़ितं निष्पीड़ितम्, [अङ्गनाजनस्य चरणयुगं] कर्तृ [पदेषु] पादन्यासस्थानेषु, [अलक्तकच्छलेन] लाक्षारसमिषेण, [स्वरसं] स्वद्रवमेव । 'गुणे रागे द्रवे रसः' इत्यमरः । [असक्तम्] अविच्छिन्नं यथा तथा, [असुस्रुवत्] स्रवति स्म । स्रवतेः चरणार्थाल्लुङि 'णिश्रि—' (३।१।४८ पा०) इत्यादिना चङि धातोरुवङादेशः । द्रवद्रव्यकर्त्तृक एवायमकर्मकः, अन्यकर्त्तृकत्वे तु सकर्मकः । अत्रालक्तकच्छलेनेत्यलक्तकापह्नवेन स्वरसत्वारोपाच्छलादिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः ॥६॥

तव सपदि समीपमाऽऽनये ता-
महमिति तस्य मयाऽग्रतोऽभ्यधायि।
अतिरभसकृताऽलघुप्रतिज्ञा-
मनृतगिरं गुणगौरि! मा कृथा माम् ॥ ७ ॥

न च सुतनु! न वेद्मि यन्महीया-
नसुनिरसस्तवनिश्चयः परेण।
वितथयति न जातु मद्वचोऽसा-
विति च तथाऽपि सखीषु मेऽभिमानः ॥८॥

---

अथ कस्याश्चित् सख्याः कुपितनायिकाऽनुनयवचनं पञ्चभिः कुलकेनाह, तवेत्यादि।—[तां] मत्सखीं, [सपदि तव समीपमहम्, आनये] आनेष्यामि। भविष्यत्सामीप्ये वर्त्तमानप्रत्ययः, कर्त्तुरभिप्राये आत्मनेपदम्। [इति मया तस्याग्रतः, अभ्यधायि] अभिहितम्। दधातेः कर्मणि लुङ्, "आतो युक् चिण्कृतोः" (७।३।३३ पा०) इति युगागमः। [हे गुणगौरि!] गुणैः सौभाग्यदाक्षिण्यादिभिर्गौरि पार्वतीति रूपकम्। [अतिरभसकृताऽलघुप्रतिज्ञाम्] अतिरभसेनातित्वरया कृता अलघुर्महती प्रतिज्ञा त्वदानयनार्था यया तां, [माम्, अनृतगिरम्] असत्यवाचं, [मा कृथाः] मा कार्षीः, मद्वचनं सर्वथा कर्त्तव्यमित्यर्थः। करोतेः लुङि थास् "न माङ्योगे" (६।४।७४ पा०) इत्यड़ागमप्रतिषेधः ॥ ७ ॥

ननु मत्प्रतिज्ञाऽपि दुरत्याज्येति विप्रतिषेधमाशङ्क्याह, न चेति।—हे [सुतनु!]। शुभाङ्गि! दीर्घान्तोत्तरपदात् सम्बुद्धिः, अन्यथा गुणः स्यात्। अहं [न वेद्मि] इति [न च] न, किन्तु वेद्मि एवेत्यर्थः। किं तद्वेत्सीत्यत आह,—[महीयान्] महत्तरः, [तव निश्चयः] त्वदनैक्यप्रतिज्ञा [परेण] जनान्तरेण, सुनिरसः सुखमोच्यः। अस्यतेः खल्प्रत्ययः।

सततमनभिभाषणं मया ते
परिपणितं भवतीमनानयन्त्या ।
त्वयि तदिति विरोधनिश्चितायां
भवति ! भवत्वसुहृज्जनः सकामः ॥ ९ ॥
गतधृतिरवलम्बितुं वतासू-
ननलमनालपनादहं भवत्याः । *

---

स न भवतीति [ असुनिरसः ] इति [ यत् ] तदित्यर्थलभ्यम् । उद्देश्येन विधेयाक्षेपात् यच्छब्दस्योत्तरवाक्यस्थत्वाच्च न पूर्ववाक्ये तच्छब्दप्रयोग इति निबन्धः । [तथाऽपि] विदितत्वेऽपि,[असौ] मत्सखी, [जातु] कदाचिदपि, [ मद्वचः, न वितथयति ] नानृतीकरोति, [ इति च सखीषु ] मध्ये [मेऽभिमानः] । स्वप्रतिज्ञाभङ्गेऽपि मत्प्रतिज्ञामेव पालयसीत्यहङ्कारात् निःशङ्कम्प्रतिज्ञातमित्यर्थः ॥ ८ ॥

सततमिति ।—[ भवतीं ] त्वाम्, [अनानयन्त्या] आनयितुमशक्नुवन्त्या इत्यर्थः । [ मया, सततं ] सदा, [ ते ] तव । कर्मणि षष्ठी । [ अनभिभाषणम् ] असम्भाषणं, [ परिपणितम् ] । भवतीति "भातेर्डवतुः" (उ, १पा० ६४सू० ) इत्यौणादिको डवतुप्रत्ययः । "उगितश्च" (४।१।६ पा०) इति ङीप् । तस्याः सम्बुद्धिः ; हे [भवति !] सुभगे ! [त्वयि, तदिति] तदसम्भाषणमस्तु इति [विरोधनिश्चितायां] निश्चितविरोधायां सत्याम् । "वाहिताग्न्यादिषु" ( २।२।३७ पा० ) इति विकल्पात् निष्ठायाः परनिपातः । [ असुहृज्जनः ] विपक्षवर्गः, [ सकामः ] फलितमनोरथः, [ भवतु ] भवेत् । प्राप्तकाले लोट् । अस्मद्विरोधकाङ्क्षिणामयमानन्दकालः प्राप्त इत्यर्थः ॥ ९ ॥

न केवलमावयोर्विरोधः, प्राणहानिरपि मम स्यादित्याह, गतेति ।—[ गतधृतिः ] † अधीरा, [ अहं, भवत्याः ] तव, [ अनालपनात् ]

---

* अत्र द्वितीयपादे सन्धौ कष्टत्वं दोषः ।

† "धृतिर्नेष्टौ स्त्रियां तुष्टौ योगभिद्धैर्यधारणे" इति मेदिनी ।

प्रणयिनि यदि न प्रसादबुद्धि-
र्भव मम मानिनि! जीविते दयालुः ॥१०॥
प्रियमिति वनिता नितान्तमागः-
स्मरणसरोषकषायितायताक्षी।
चरणगतसखीवचोऽनुरोधात्
किल कथमप्यनुकूलयाञ्चकार ॥ ११ ॥

---

असम्भाषणात्, आलपनं विहायेत्यर्थः। ल्यब्लोपे पञ्चमी। [असून्] प्राणान्, [अवलम्बितुं] धारयितुम्, [अनलम्] अशक्ता। 'अलं भूषण-पर्य्याप्तिशक्तिवारणवाचकम्' इत्यमरः। [बत] इति खेदे। अत एव हे [मानिनि, प्रणयिनि] प्रिये, [प्रसादबुद्धिः] अनुग्रहबुद्धिः, [न यदि] नास्ति चेत्, तथाऽपि [मम जीविते दयालुर्भव]। "स्पृहिगृहि—" (३।२।१५८ पा०) इत्यादिना आलुच्प्रत्ययः। स धूर्त्तोऽपि मत्प्राण-त्राणार्थमनुग्राह्य इति भावः॥ १०॥

प्रियमिति।—[इति] इत्थं, [नितान्तम्, आगःस्मरणसरोष-कषायितायताक्षी] आगसोऽन्यासङ्गापराधस्य स्मरणेन सरोषे अत एव कषाये लोहिते कृते कषायिते आयते चाक्षिणी यस्याः सा तथोक्ता। 'निर्य्यासे च कषायोऽथ सौरभे लोहितेऽन्यवत्' इति विश्वः। [वनिता] नायिका, [चरणगतसखीवचोऽनुरोधात्] चरणगतायाः पूर्वोक्त-वाक्यान्ते प्रणतायाः सख्या वचसोऽनुरोधादनुल्लङ्घनात्, [किल]। किलेत्यपरमार्थे; वस्तुतस्तु अनुरागादेवेति भावः। [प्रियं, कथमपि] कथञ्चित्, [अनुकूलयाञ्चकार] अभिमुखीचकार, अनुजग्राहेत्यर्थः। एषा खण्डिता नायिका;—'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति दशरूपकलक्षणात्; अत एव कविना आगःस्मरणसरोषकषायिताक्षी-त्युक्तम्। एषा चासम्भाषणचिन्ताखेदाश्रुनिःश्वासाद्यनुभाववती ॥११॥

द्रुतपदमिति मा वयस्य ! यासी-
र्ननु सुतनुमनुपालयानुयान्तीम् ।
न हि न विदितखेदमेतदीय-
स्तनजघनोद्वहने तवापि चेतः ॥ १२ ॥

इति वदति सखीजनेऽनुरागा-
द्दयिततमामपरश्चिरं प्रतीक्ष्य ।
तदनुगमवशादनायतानि
न्यधित मिमान इवावनिं पदानि ॥ १३ ॥

---

अथ काचित् सखी कञ्चिदग्रे शीघ्रगामिनं युग्मेनाह, * द्रुतेति ।—हे [ वयस्य ! ] सखे ! [ इति ] इत्थं, [द्रुतपदं] शीघ्रपदक्रमं यथा तथा, [ मा यासीः ] मा गमः । यातेर्लुङि "न माङ्योगे" ( ६।४।७४ पा० ) इत्यट्प्रतिषेधः । [ ननु, अनुयान्तीम् ] अनुगच्छन्तीं, [ सुतनुं ] शुभाङ्गीं प्रियाम्, [ अनुपालय ] प्रतीक्षस्व । असावपि शीघ्रमायातु तत्राह 'न हीति ।—[ तव चेतोऽपि एतदीयस्तनजघनोद्वहने, विदितखेदम् ] अनुभूतखेदं, [ न हि न ] नेति न, किन्तु वेत्त्येवेत्यर्थः ; अतः कथं शीघ्रमायास्यतीति भावः । "सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ" ( ५अधि० १अध्या० ८सू०) इति वामनः ॥ १२ ॥

इतीति ।—[ सखीजने इति वदति ] सति [ अपरः ] कश्चित् [ दयिततमाम्, अनुरागात् ] स्नेहात्, [ चिरं प्रतीक्ष्य, तदनुगमवशात् ] तस्याः प्रियायाः कर्त्र्याः अनुगमः पश्चाद्गमनं तस्य वशादनुसारात्, [ अवनिं, मिमानः ] मानं कुर्वाणः, [ इव ] इत्युत्प्रेक्षा । माङो लटः कर्त्तरि शानजादेशः । "श्लौ" ( ६।१।१० पा० ) इति द्विर्भावः । [ अनायतानि ] अनन्तरालानि, [ पदानि, न्यधित ] निहितवान् ।

---

* अत्र युग्मेनेति प्रामादिकं, द्वितीयश्लोके सख्युक्तिसम्पर्कविरहात्

यदि मयि लघिमानमागतायां
तव धृतिरस्ति गतास्मि सम्प्रतीयम् ।
द्रुततरपदपातमाऽऽपपात
प्रियमिति कोपपदेन कापि सख्या ॥१४॥

---

धाञो लुङि तङ् "स्थाध्वोरिञ्च" (१।२।१७ पा०) इतीकारः। सिचः कित्त्वात् न गुणः "ह्रस्वादङ्गात्" (८।२।२७ पा०) इति सकारलोपः। एषा च नायिका स्वाधीनपतिका ;—"स्वाधीनपतिका सा तु या न मुञ्चति वल्लभम्" इति लक्षणात्। हृष्टा चेयम् ॥ १३ ॥

अथ काचित् पुरःप्रयातप्रियमेलनाय शीघ्रानुधावनं प्रार्थयमानां सखीमाह, यदीति।—हे सखि! [मयि, लघिमानमागतायां] स्वयङ्गमनेन लाघवं प्राप्तायां, [तव, धृतिरस्ति यदि] सन्तोषो भवति चेत्। 'धृतिः सन्तोषधैर्य्ययोः' इत्यमरः। [इयम्] एतदवस्थैव [सम्प्रति] अस्मिन् क्षणे एव, [गतास्मि इति] वदन्तीति शेषः। इतिना गम्यमानार्थत्वादप्रयोगः, अन्यथा पौनरुक्त्यादित्यालङ्कारिकाः। [सख्या] सह [कोपपदेन] कोपव्याजेन, वस्तुतस्तु रागादेवेति भावः। 'व्याजोऽपदेशो लक्ष्यञ्च' इति 'निमित्तं व्यञ्जनं पदम्' इति चामरः। [कापि] काचित् नायिका, [द्रुततरपदपातं] द्रुततराः शीघ्रतराः, पादपाताः पादन्यासा यस्मिन् कर्मणि तद्यथा तथा, [प्रियं] वल्लभम्, [आपपात] अनुधावति स्म। * एषा च स्वयंप्रवृत्ता स्वलाघवशङ्कितया पूर्वं निर्वासितप्रिया, अथेदानीं स्वयंप्रवृत्तेः पश्चात्तप्ता चेति गम्यते ; अतः कलहान्तरिता,—"कोपात् कान्तं पराणुद्य पश्चात्तापसमन्विता" इति लक्षणात् ॥ १४ ॥

---

* अत्र प्रथमं रोषवशात् प्रियं परित्यज्य तद्गमनादेव पुनरतिशयतापमुपगतायाः, ततश्च कान्तमनुगन्तुमेकान्तमुत्सुकायाः कस्याश्चित् नायिकायाः सखीं प्रति कविमरीषप्रकाशनेन नायकानुगमनं ध्वन्यते।

अविरलपुलकः सह व्रजन्त्याः
प्रतिपदमेकतरः स्तनस्तरुण्याः ।
घटितविघटितः प्रियस्य वक्ष-
स्तटभुवि कन्दुकविभ्रमं बभार ॥ १५ ॥

अशिथिलमपराऽवसज्य कण्ठे
दृढपरिरब्धबृहद्बहिःस्तनेन ।
हृषिततनुरुहा भुजेन भर्त्तु-
र्मृदमस्पृढ व्यतिविद्धमेकबाहुम् ॥ १६ ॥

---

अविरलेति ।—[ सह व्रजन्त्याः ] पार्श्वमाश्लिष्य गच्छन्त्या इत्यर्थः, [ तरुण्याः ] सम्बन्धी [अविरलपुलकः] प्रियाऽङ्गसङ्गमात् सान्द्ररोमाञ्चः, [एकतरः] अन्यतरः, द्वयोरन्यः, सन्निकृष्ट इति भावः । "एकाच्च प्राचाम्" (५।३।९४ पा० ) इति द्वयोरेकस्य निर्द्धारणे डतरच्प्रत्ययः । [ स्तनः प्रियस्य ] । वक्षस्तटमिव तस्य भूः प्रदेशस्तस्यां [ वक्षस्तटभुवि प्रतिपदं, घटितविघटितः] संयुक्तवियुक्तः, पतितोत्पतितः सन् इति यावत् । विशेषणयोरपि मिथोगुणप्रधानभावविवक्षया "विशेषणं विशेष्येण बहुलम्" (२।१।५७ पा० ) इति समासः । [ कन्दुकविभ्रमं ] गेन्दुकशोभाम् । 'गेन्दुकः कन्दुकः' इत्यमरः । [ बभार ] । अन्यविभ्रमस्यान्यसम्बन्धायोगात् सादृश्याक्षेपे निदर्शना । एषा च प्रियपार्श्वगामिनी । इतःप्रभृति मदनरसेत्यतः प्राग्वक्ष्यमाणाः षट् नायिकाः स्वाधीनपतिकाः हृष्टाः प्रगल्भाश्चेत्यनुसन्धेयम् ॥ १५ ॥

अथापरस्या अपि गतिविशेषं विशेषकेणाह, अशिथिलमित्यादि ।—[ अपरा ] स्त्री, [ दृढपरिरब्धबृहद्बहिःस्तनेन ] दृढं परिरब्धौ गृहीतौ बृहद्बहिःस्तनौ येन तेन, [ हृषिततनुरुहा ] हृषितान्युद्गतानि तनुरुहि रोमाणि यस्य तेन, पुलकितेनेत्यर्थः । क्विबन्तोत्तरपदो बहुव्रीहिः । "हृषेर्लोमसु" ( ७।२।२९ पा० ) इतीडागमः । [ भुजेन ] भर्त्तुर्वामबाहुना,

मुहुरसुसममाघ्नती नितान्तं
प्रणदितकाञ्चि नितम्बमण्डलेन ।
विषमितपृथुहारयष्टि तिर्य्यक्
कुचमितरं तदुरःस्थले निपीड्य ॥ १७ ॥

गुरुतरकलनूपुरानुनादं
सललितनर्त्तितवामपादपद्मा ।
इतरदनतिलोलमाऽऽदधाना
पदमथ मन्मथमन्थरं जगाम ॥ १८ ॥

[ विशेषकम् । ]

---

[ अस्तद ] गाढ़ं यथा तथा, [ व्यतिविद्धं ] व्यतिषञ्जितम् । [ मृदुं ] कोमलम्, [ एकबाहुं ] निजदक्षिणबाहुं, [भर्त्तुः कण्ठे, अशिथिलं] दृढ़म्, [ अवसज्य ] आसज्य ; जगामेति भाविना सम्बध्यते ॥ १६ ॥

मुहुरिति ।—पुनः किं कृत्वा ?—[नितम्बमण्डलेन] करणेन [ नितान्तम् ] अतिशयेन, [ प्रणदितकाञ्चि ] प्रणदिता प्रकर्षेण नदन्ती काञ्ची यस्मिन् कर्मणि तद् यथा तथा । "उपसर्गादसमासेऽपि णोपदेशस्य" ( ८।४।१४ पा० ) इति णत्वम् । [मुहुः, असुसमं] प्राणेशम्, [ आघ्नती ] ताड़यन्ती । हन्तेराङ्पूर्वात् लटः शत्रादेशे ङीप् ; सकर्मकत्वात् न "आङो यमहनः" ( १।३।२८ पा० ) इत्यात्मनेपदम् । [ विषमित-पृथुहारयष्टिः ] विषमिता विषमीकृता, पृथुहारयष्टिर्यस्मिन् कर्मणि तद् यथा तथा । [ इतरं ] पूर्वश्लोकोक्तवहिःस्तनादन्यं, दक्षिणमित्यर्थः । [ कुचं, तदुरःस्थले ] तस्य भर्त्तुरुरःस्थले, [ तिर्य्यक् निपीड्य ] । पूर्ववत् सम्बन्धः ॥ १७ ॥

गुरुतरेति ।—[ अथ गुरुतरकलनूपुरानुनादं ] पुनर्गुरुतरः सान्द्रतरः, कलो मधुरश्च नूपुरस्यानुनादो ध्वनिर्यस्मिन् कर्मणि तद् यथा तथा,

लघुललितपदं तदंसपीठ-
द्वयनिहितोभयपाणिपल्लवाऽन्या ।
सकठिनकुचचूचुकप्रणोदं
प्रियमबला सविलासमन्वियाय ॥ १९ ॥

---

[ सललितनर्त्तितवामपादपद्मा ] सललितं सलीलं, नर्त्तितं व्यापारितं, वामं सव्यं, पादपद्मं यया सा, [इतरत्] दक्षिणं, [पदम्, अनतिलोलं] भर्तृचरणस्खलनादनतिचपलं यथा तथा, [ आदधाना ] निक्षिपन्ती सती, [ मन्मथमन्थरं ] मन्मथेन मन्थरमलसं, [ जगाम ]। एषा च पार्श्वगामिनी ॥ १८ ॥

अथान्यासामप्येकैकेन गतिविशेषमाह, लघ्वित्यादि।—[ अन्या, अबला ] स्त्री, [तदंसपीठद्वयनिहितोभयपाणिपल्लवा ] तस्य प्रियस्यांसौ पीठे इव तयोर्द्वये निहितावुभौ पाणिपल्लवौ यया सा सती। "उभादुदात्तो नित्यम्" ( ५।२।४४ पा० ) इति पृथक् सूत्रकरणादेव सिद्धे पुनर्नित्यग्रहणसामर्थ्याद्वृत्तिविषये उभशब्दस्थानेऽप्युभयशब्दप्रयोगः। यथाह कैयटः,—"तत्र—'उभादुदात्तो नित्यम्' इति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगो माभूत्, उभयशब्दस्यैव यथा स्यादित्युभयत्रेत्यादि भवति" इति। [लघुललितपदं] लघुनी द्रुते, ललिते च पदे यस्मिन् कर्मणि तद् यथा तथा, [ सकठिनकुचचूचुकप्रणोदं ] कठिनाभ्यां कुचचूचुकाभ्यां स्तनाग्राभ्यां यः प्रणोदो निपीडनं, तेन सह यथा तथा। 'चूचुकन्तु कुचाग्रं स्यात्' इत्यमरः। "तेन सह" ( २।२।२८ पा० ) इत्यादिना समासे, "वोपसर्ज्जनस्य" ( ६।३।८२ पा० ) इति सहशब्दस्य सभावः। णोपदेशत्वात् प्रणोद इति णत्वम्। [ सविलासं ] च [ प्रियम्, अन्वियाय ] अनुजगाम *। एषा पृष्ठगामिनी ॥ १९ ॥

---

* एतेनातिशयकामपरतन्त्रतया प्रियपृष्ठगामिनी निजाभीष्टं पूरयतीति ध्वन्यते। उपमयोः संसृष्टिः।

जघनमलघुपीवरोरु कृच्छ्रा-
दुरुनिविरीसनितम्बभारखेदि।
दयिततमशिरोधरावलम्बि-
स्वभुजलताविभवेन काचिदूहे ॥ २० ॥

अनुवपुरपरेण बाहुमूल-
प्रहितभुजाऽऽकलितस्तनेन निन्ये।
निहितदशनवाससा कपोले
विषमवितीर्णपदं बलादिवान्या ॥ २१ ॥

---

जघनमिति।—[ काचित् ] स्त्री, [ अलघुपीवरोरु ] अलघू गुरू, पीवरौ पीनौ, चोरू यस्य तत्, [ उरुनिविरीसनितम्बभारखेदि ] उरु र्महान्, निविरीसो निविडः। 'निविडं निविरीसञ्च दृढं गाढं प्रचक्षते' इति वैजयन्ती। "नेर्विडज्विरीसचौ" ( ५।२।३२ पा० ) इति निशब्दाद्विरीसच्प्रत्ययः। स च यो नितम्बः स्त्रीकटिपश्चाद्भागः। 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः। स एव भारस्तेन खिद्यत इति तथोक्तम्। आभीक्ष्ण्ये णिनिः। [ जघनं ] कटिपुरोभागं, [ दयिततमशिरोधरावलम्बि-स्वभुजलताविभवेन ] दयिततमस्य शिरोधरायां ग्रीवायाम्, अवलम्बिन्योर्लम्बमानयोः, स्वभुजलतयोर्विभवेन सामर्थ्येन, [ कृच्छ्रात्, ऊहे ] उवाह। वहेः स्वरितेत्त्वात् कर्त्रभिप्राय आत्मनेपदम्। इयञ्च पृष्ठगामिनी प्रियकण्ठावलम्बा * ॥ २० ॥

अनुवपुरिति।—[ अन्या ] स्त्री, वपुषः पश्चात् [ अनुवपुः ] स्त्रीपृष्ठभागः। "अव्ययं विभक्ति" ( २।१।६ पा० ) इत्यादिना पश्चादर्थेऽव्ययीभावः। [ बाहुमूलप्रहितभुजाऽऽकलितस्तनेन ] बाहुमूलयोः स्त्री

---

* रूपकोपमयोः संसृष्टिः।

अनुवनमसितभ्रुवः सखीभिः
सह पदवीमपरः पुरोगतायाः ।
उरसि सरसरागपादरेखा-
प्रतिमतयाऽनुययावसंशयानः ॥ २२ ॥
मदनरसमहौघपूर्णनाभी-
ह्रदपरिवाहितरोमराजयस्ताः ।

---

कक्षयोः, प्रहितावधःप्रसारितौ, भुजौ ताभ्याम् आकलितस्तनेन गृहीत-स्तनेन, [कपोले निहितदशनवाससा *] न्यस्ताधरेण, किञ्चिदावृत्तमुख्याः तस्याः कपोलं चुम्बतीत्यर्थः । [अपरेण] कामिना, [विषमवितीर्णपदं] विषमं प्रियाङ्घ्रिसङ्घर्षात् श्लिष्टं, वितीर्णपदं न्यस्ताङ्घ्रि यथा तथा, [बलादिव, निन्ये] नीता । आरोप्य नीयमानेव गमयाञ्चक्रे इत्यर्थः । † एषा पुरोगामिनी ॥ २१ ॥

अनुवनमिति ।—[अपरः] कामी, [अनुवनं] वनं प्रति, [सखीभिः सह पुरोगतायाः, असितभ्रुवः] स्वकान्तायाः, [पदवीम्, उरसि] वक्षसि, [सरसरागपादरेखाप्रतिमतया] सरस आर्द्रः, रागो लाक्षारञ्जनं यस्य तस्य पादस्य, या रेखा विन्यासः, सा प्रतिमा उपमानं यस्याः सा तत्-प्रतिमा तस्य भावस्तत्ता तया, तत्सदृशतयेत्यर्थः । [असंशयानः] अस-न्दिहानः । शीङो लटः कर्त्तरि शानजादेशः । [अनुययौ] । अत्र पादरेखाप्रतिमतयेति सादृश्यवस्तुना सुरतकालीनं पादताडनं वस्तु सरागपदार्थमहिम्ना प्रतीयत इति पदगतः स्वतःसिद्धार्थशक्तिमूलो वस्तु-ध्वनिः संलक्ष्यक्रमध्वनेर्भेदः ॥ २२ ॥

मदनेति ।—[मदनरसमहौघपूर्णनाभीह्रदपरिवाहितरोमराजयः] मद-

---

* "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः ।

† अत्र बलादिव इत्युत्प्रेक्षाऽलङ्कारः ।

सरित इव सविभ्रमप्रयात-
प्रणदितहंसकभूषणा विरेजुः ॥ २३ ॥
श्रुतिपथमधुराणि सारसाना-
मनुनदि शुश्रुविरे रुतानि ताभिः।

नस्य रसः शृङ्गारः, अन्यत्र,—रसो जलं, तस्य महौघेन महापूरेण, पूर्णा नाभ्य एव ह्रदाः, तेषां परिवाहाः कृताः परिवाहिता जलोच्छ्वासीकृताः, रोमराजयो यासां ताः। 'जलोच्छ्वासाः परिवाहाः' इत्यमरः। सरिज्जलानि ह्रदानापूर्य्य परितः उच्छ्वसन्तीति प्रसिद्धिः। [सविभ्रमप्रयात-प्रणदितहंसकभूषणाः] सविभ्रमैः सविलासैः, प्रयातैः प्रकृष्टगमनैः, प्रणदिताः शिञ्जिताः, ये हंसकाः पादकटकाः। 'हंसकः पादकटकः' इत्यमरः। अन्यत्र,—हंसा एव हंसकाः मरालास्त एव भूषणानि यासां [ताः] स्त्रियः, [सरित इव विरेजुः]। मदनरसपूर्णेत्यनेन नाभीनां तद्गम्भीरत्वं व्यज्यते। परिवाहितरोमराजय इति रोमराजीनां परिवाहत्वरूपणात् नाभ्य एव ह्रदा इति रूपकाश्रयणम्। ताः सरित इवेति श्लिष्टविशेषणीयमुपमा; श्लेष एवेत्यन्ये * ॥ २३ ॥

श्रुतिपथेति।—[अनुनदि] नदीनां समीपे। समीपार्थेऽव्ययीभावः। "अव्ययीभावश्च" (१।४।१८ पा०) इति नपुंसकत्वे ह्रस्वत्वम्।

* अत्र नाभ्यां ह्रदत्वारोपे रोमराजीनां परिवाहत्वारोपः निमित्तं तथा रसशब्दश्च श्लिष्टः, तेन च श्लिष्टशब्दनिबन्धनकेवलपरम्परितरूपकालङ्कारः,—'यत्र कस्यचिदारोपः परारोपणकारणम्। तत्परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम्॥' इति दर्पणोक्तेः। तथा श्लेषस्य साम्यनिर्वाहकत्वात् ताः सरित इव इत्युपमा च; एवंविध स्थले तु श्लेषस्य अङ्गत्वम् उपमायाश्चाङ्गित्वमिति नव्याः; यदुक्तं दर्पणे,—"सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव" इत्यादौ च नोपमाप्रतिभोत्पत्तिहेतुश्लेषः, पूर्णोपमाया निर्विषयत्वापत्तेः" इत्यारभ्य "किन्त्वात्र श्लेषस्यैव साम्यनिर्वाहकता, न तु साम्यस्य श्लेषनिर्वाहकता, श्लेषबन्धतः प्रथमं साम्यस्यासम्भवात्, इत्युपमाया एवाङ्गित्वेन व्यपदेशो ज्यायान्" इति।

विदधति जनतामनःशरव्य-
व्यधपटुमन्मथचापनादशङ्काम् ॥ २४ ॥

मधुमथनबधूरिवाऽऽह्वयन्ति
भ्रमरकुलानि जगुर्यदुत्सुकानि ।
तदभिनयमिवाऽऽवलिर्वनाना-
मतनुत नूतनपल्लवाङ्गुलीभिः ॥ २५ ॥

[ताभिः] स्त्रीभिः, [जनतामनःशरव्यव्यधपटुमन्मथचापनादशङ्कां] जनानां समूहो जनता। "ग्रामजन—" (४।२।४३ पा०) इत्यादिना सामूहिकस्तल्प्रत्ययः। तस्याः मनांसि एव शरव्यं लक्ष्यम्। * 'लक्षं लक्ष्यं शरव्यञ्च' इत्यमरः। तस्य व्यधः वेधः। "व्यधजपो-रनुपसर्गे" (३।३।६१ पा०) इत्यप्प्रत्ययः। तत्र पटुः समर्थो यो मन्मथचापनादः स इति शङ्कां † भ्रमं, [विदधति] विदधानानि। "वा नपुंसकस्य" (७।१।७९ पा०) इति वैकल्पिको नुम्प्रतिषेधः। [श्रुतिपथमधुराणि] श्राव्याणीत्यर्थः। [सारसानां रुतानि, शुश्रुविरे] श्रुतानि। सारसरुतश्रवणात् मन्मथोद्दीपनमासीदित्यर्थः। अत्र सारस-रुते मन्मथचापनादभ्रमात् भ्रान्तिमदलङ्कारः,—'कविसम्मतसादृश्या-द्विषये पिहितात्मनि। आरोप्यमाणानुभवो यत्र स भ्रान्तिमा-न्मतः॥' इति लक्षणात् ॥ २४ ॥

मध्विति।—[उत्सुकानि] उन्मनांसि, [भ्रमरकुलानि, मधु-मथनबधूः] मधुमथनस्य हरेर्बधूः, [आह्वयन्ति] आकारयन्ति, [इव] इत्युत्प्रेक्षा। 'हूतिराकारणाह्वानम्' इत्यमरः। "शप्श्यनोर्नित्यम्" (७।१।८१ पा०) इति ह्वयतेः शतुर्नुमागमः। [जगुः] इति [यत्]। गायतेर्लिट्। [वनानामावलिः, नूतनपल्लवाङ्गुलीभिः] नूतनपल्लवा

* इति रूपकम्।

† तस्य शङ्कामिति षष्ठीसमास उचितः।

असकलकलिकाऽऽकुलीकृतालि-
स्खलनविकीर्णविकाशिकेशराणाम् ।
मरुदवनिरुहां रजो वधूभ्यः
समुपहरन् विचकार कोरकाणि ॥ २६ ॥

एवाङ्गुल्य इत्येकदेशवर्त्तिसावयवरूपकम् । अस्यैव वनावलो नर्त्तकीत्व-रूपगमकत्वादिति । ताभिः [ तदभिनयं ] तद्व्यञ्जकचेष्टाम्, [ अतनुतेव ] । 'व्यञ्जकाभिनयो समौ' इत्यमरः । 'अङ्गैरालम्बयेद्गीतं हस्तेनार्थं प्रदर्शयेत्' इति वचनात् । गीतार्थस्याज्ञानस्य व्यञ्जनमङ्गुलिभिरकार्षीदिवेति क्रियास्वरूपोत्प्रेक्षा । पूर्वोक्तरूपकानुप्राणिता साज्ञानोत्प्रेक्षा सापेक्षेति सजातीयसङ्करोऽपीति ॥ २५ ॥

असकलेति ।—[ मरुत् ] वनानिलः, [असकलकलिकाकुलीकृतालिस्खलनविकीर्णविकाशिकेशराणाम् ] असकला असमग्राः, अर्द्धविकचा इत्यर्थः, ताभिः कलिकाभिः कोरकैः, आकुलीकृतानां संक्षोभितानामलीनां स्खलनेन विघट्टनेन, विकीर्णा विक्षिप्ताः, विकाशिनः केशराः किञ्जल्का येषां तेषाम्, [ अवनिरुहाम् ] । क्विप् । [ रजः ] परागं, [ वधूभ्यः, समुपहरन् ] प्रयच्छन् । यथा कश्चित् कामीति भावः । धनमर्जयन्वसतीतिवत् "लक्षणहेत्वोः क्रियायाः" ( ३।२।१२६ पा० ) इति हेत्वर्थे शतृप्रत्ययः । [ कोरकाणि ] कुड्मलानि । 'कलिका कोरकः पुमान्' इत्यमरकोषे पुंस्त्वाभिधानं प्रायिकाभिप्रायम् । 'कोरकं कुड्मलेऽपि स्यात्कक्कोलकमृणालयोः' इति विश्वप्रकाशादौ नपुंसकत्वस्याभिधानात् । [ विचकार ] विकासयामासेत्यर्थः । * विपूर्वात् किरतेः करोतेर्वा लिट् । अत्र कोरकविकासकरणस्य समुपहरन्निति हेत्वर्थेन वधूसम्प्रदानकपरागोपहरणार्थत्वावगमात् फलोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ २६ ॥

* यथा कश्चित् कामुकः, कान्तासन्तोषणाय मनोहरमुपहारं समर्पयति, तथा वायुरपि वधूपरितोषणाय कुसुमपरागं ताभ्यः समर्पयन् कोरकाणि विकासयामास इति ध्वनिः ।

उपवनपवनानुपातदक्षै-
रलिभिरलाभि यदङ्गनागणस्य ।
परिमलविषयस्तदुन्नताना-
मनुगमने खलु सम्पदोऽग्रतःस्थाः ॥ २७ ॥
रथचरणधराङ्गनाकराब्ज-
व्यतिकरसम्पदुपात्तसौमनस्याः ।

उपवनेति ।—[ उपवनपवनानुपातदक्षैः ] वने इत्युपवनम् । विभक्त्यर्थेऽव्ययीभावः । तत्र यः पवनस्तस्यानुपातेनानुसारेण * दक्षैविचक्षणैः [ अलिभिः, यत् ] यतः कारणात्, [अङ्गनागणस्य] सम्बन्धी, [परिमलविषयः ] परिमलो गन्धविशेषः । "विमर्द्दोत्थे परिमलो गन्धे जनमनोहरे" इत्यमरः । स एव विषयो भोग्यार्थः । 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी' इत्यमरः । [ अलाभि ] लब्धः । लभेः कर्मणि लुङ् "विभाषा चिण्णमुलोः" ( ७।१।६९ पा० ) इति विकल्पानुमभावः इति "अत उपधायाः" ( ७।२।११६ पा० ) इति वृद्धिः । [ तत् ] तस्मात्, [ उन्नतानां ] महताम्, [ अनुगमने ] पश्चाद्भावने, अनुवृत्तौ च, [ सम्पदः, अग्रतःस्थाः ] पुरोवर्त्तिन्यः, [खलु] । "सुपि स्थः" ( ३।२।४ पा० ) इति कप्रत्ययः । अत्रानुगमनयोर्द्वयोरभेदाध्यवसायात् श्लेषोत्थापितातिशयोक्त्यनुप्राणितोऽयमर्थान्तरन्यासः सामान्येन विशेषसमर्थनरूपः ॥ २७ ॥

रथेति ।—[ सुमनसः ] पुष्पाणि, [ रथचरणधराङ्गनाकराब्जव्यतिकरसम्पदुपात्तसौमनस्याः ] रथचरणं चक्रं, तस्य धरो धारयिता हरिः । पचाद्यच् । तस्याङ्गनास्तासां कराब्जैः † व्यतिकरः सम्पर्कः, स एव सम्पत्

* अत्र सप्तमीसमास उचितः ।

† अब्जतुल्यैः करैः ।

जगति सुमनसस्तदादि नूनं
दधति परिस्फुटमर्थतोऽभिधानम् ॥ २८ ॥
अभिमुखपतितैर्गुणप्रकर्षा-
दवजितमुद्धतिमुज्ज्वलां दधानैः ।
तरुकिसलयजालमग्रहस्तैः
प्रसभमनीयत भङ्गमङ्गनानाम् ॥ २९ ॥

---

तया उपात्तं लब्धं, सौमनस्यं सुमनस्त्वं, सन्तुष्टचित्तत्वमित्यर्थः, याभिस्ताः सत्यः, अत एव स सौमनस्यलाभ आदिर्यस्मिन् कर्मणि तत्, [ तदादि ] ततः प्रभृतीत्यर्थः, [ जगति । अर्थतः ] पूर्वोक्तावयवार्थात्, [ परिस्फुटं] प्रसिद्धावयवार्थम्, [अभिधानं] सुमनस इति नामधेयं, [दधति] ; पूर्वं त्वश्वकर्णादिवद्रूढमिति भावः । 'आख्याह्वे चाभिधानञ्च नामधेयञ्च नाम च' इत्यमरः । स्त्रियः पुष्पाख्यवचेतुं प्रवृत्ता इति फलितोऽर्थः । [ नूनम् ] इत्युत्प्रेक्षायाम् । अत्रोपात्तसौमनस्या इति सौमनस्योपादानस्य पदार्थस्य विशेषणगत्या सुमनःपदान्वर्थताहेतुकत्वोक्त्या काव्यलिङ्गम् ; तदुत्थापिता चेयं तदादित्वोत्प्रेक्षेति सङ्करः, तेन चाङ्गनाकराणामतिश्लाघ्यत्वं व्यज्यते ॥ २८ ॥

अभिमुखेति ।—[ अभिमुखपतितैः ] भञ्जनार्थमभिमुखमागतैः, [ उज्ज्वलाम् ] उत्कृष्टाम्, [ उद्धतिम् ] उपरिप्रसारमौद्धत्यञ्च, [ दधानैरङ्गनानाम् ]। अग्राणि च ते हस्ताश्चेति समानाधिकरणसमासः । अत एव 'हस्ताग्राग्रहस्तादयोर्गुणगुणिनोर्भेदाभेदात्' ( ५ अधि० २ अध्या० २०सू० ) इति वामनः । तैः [ अग्रहस्तैः ] कर्तृभिः । [ गुणप्रकर्षात् ] हेतोः [ अवजितम् ] अवधीरितं, [ तरुकिसलयजालं, प्रसभं ] बलात्, [ भङ्गं ] छेदं, पराजयञ्च, [ अनीयत ] नीतम् । "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इति किसलयजालस्य प्राधान्यादभिधानम् ।

मुदितमधुभुजो भुजेन शाखा-
श्चलितविशृङ्खलशङ्ककं धुवत्याः ।
तरुरतिशयिताऽपराङ्गनायाः
शिरसि मुदेव मुमोच पुष्पवर्षम् ॥ ३० ॥

अनवरतरसेन रागभाजा
करजपरिक्षतिलब्धसंस्तवेन ।
सपदि तरुणपल्लवेन बध्वा
विगतदयं खलु खण्डितेन मम्ले ॥ ३१ ॥

---

अत्राग्रहस्तेषु विशेषणमहिम्ना जिगीषुत्वस्य किसलयजाले जेतव्यत्वस्य च प्रतीतिः समासोक्तिरलङ्कारः * ॥ २९ ॥

मुदितेति ।—[ मुदितमधुभुजः ] मुदिता हृष्टा मधुभुजो मधुपा यासु ताः, [ शाखाः,भुजेन ] हस्तेन, [ चलितविशृङ्खलशङ्ककं ] चलितानि विशृङ्खलानि अप्रतिहतरवाणि शङ्ककानि वलयानि यस्मिन् कर्मणि तद्यथा तथा, [ धुवत्याः ] कम्पयन्त्याः । 'धू विधूनने' इति धातोस्तौदादिकाच्छतरि ङीप् "क्ङिति च" ( १।१।५ पा० ) इति गुणवृद्धिप्रतिषेधादुवङादेशः । [अतिशयिताऽपराङ्गनायाः] अतिशयिता सौन्दर्य्येणातिक्रान्ता, अपराङ्गना यया सा तस्याः, † [शिरसि तरुः, मुदेव ] तदभिसरणसन्तोषेणेवेति गुणहेतूत्प्रेक्षा । [पुष्पवर्षं] पुष्पवृष्टिं, [मुमोच] ॥३०॥

अनवरतेति ।—[अनवरतरसेन] अनवच्छिन्नद्रवेण, अन्यत्र,—अनुवद्धशृङ्गारेण, [ रागभाजा ] रक्तेन प्रीतिभाजा च ; [ करजपरिक्षतिलब्धसंस्तवेन ] करजपरिक्षतिषु नखक्षतेषु, लब्धसंस्तवेन प्राप्तपरिचयेन । 'संस्तवः स्यात् परिचयः' इत्यमरः । [ बध्वा, विगतदयं ] निर्दयं यथा

---

* भङ्गश्चेषः पराजयश्च इति द्वयोर्भेदेऽपि अभेदारोपादतिशयोक्तिश्चालङ्कारः ।

† कयाचित् तरुण्या इति शेषः ।

प्रियमभि कुसुमोद्यतस्य बाहो-
र्नवनखमण्डनचारुमूलमन्या।
मुहुरितरकराऽऽहितेन पीन-
स्तनतटरोधि तिरोदधेऽंशुकेन॥ ३२॥
विततवलिविभाव्यपाण्डुरेखा-
कृतपरभागविलीनरोमराजिः।

---

तथा, [ खण्डितेन ] छिन्नेन, निराकृतेन च, [ तरुणपल्लवेन ] नवकिसलयेन युवविटेन च। 'पल्लवः किसलये विटे' इति विश्वः। [ सपदि, मम्ले ] म्लानम्। [ खलु ] प्रसिद्धौ। म्लायतेर्भावे लिट्। अत्राभिधायाः प्रकृतार्थे नियन्त्रितत्वादप्रकृतार्थप्रतीतेः शब्दशक्तिमूलो ध्वनिः, न श्लेषः; तेन चोभयोः पल्लवयोरौपम्यं गम्यते॥ ३१॥

अथाऽऽसां पुष्पावचये शृङ्गारचेष्टाः वर्णयन् कस्याश्चित् चेष्टाविशेषमेकेनाह, प्रियमिति।—[ अन्या ] स्त्री, [ प्रियमभि ] प्रियस्याग्रत इत्यर्थः। "अभिरभागे" ( १।४।९१ पा० ) इत्यभेर्लक्षणार्थे कर्म्मप्रवचनीयत्वात् तद्योगे द्वितीया। [ कुसुमोद्यतस्य ] कुसुमेषूद्यतः कुसुमोद्यतः, कुसुमग्रहणार्थमुत्क्षिप्त इत्यर्थः। प्रकृतिविकारभावाभावान्न तादर्थ्ये चतुर्थीसमासः। तस्य [ बाहोः, नवनखमण्डनचारुमूलं ] नवं यन्नखं नखक्षतं, तदेव मण्डनं, तेन चारु सुन्दरं, मूलं कक्षभागमित्यर्थः। [मुहुः, इतरकराऽऽहितेन ] इतरकरेण सव्यपाणिना, आहितेन निहितेन, [ अंशुकेन ] उत्तरीयेण; पीनं स्तनतटं रुणद्धीति [ पीनस्तनतटरोधि ] तदावरणं यथा तथा, [ तिरोदधे ] तिरश्चकार। अयं चापलाख्यः सञ्चारिभावः,—"आत्मप्रकाशिनी चेष्टा रागादेश्चापलं मतम्" इति लक्षणात्। प्रौढ़ा चेयम्॥ ३२॥

अथापरस्याश्चेष्टाविशेषं षड्भिः कुलकेनाह, विततेत्यादि।—[विततवलिविभाव्यपाण्डुरेखाकृतपरभागविलीनरोमराजिः] काचित् वितता-

कृशमपि कृशतां पुनर्नयन्ती
विपुलतरोन्मुखलोचनाऽवलग्नम् ॥ ३३ ॥
प्रसकलकुचबन्धुरोद्धुरोरः
प्रसभविभिन्नतनूत्तरीयबन्धा ।
अवनमदुदरोच्छ्वसद्दुकूल-
स्फुटतरलक्ष्यगभीरनाभिमूला ॥ ३४ ॥

---

भिर्गात्रोन्नमनात् विश्लिष्टाभिः, वलिभिः त्रिवलिभिः, विभाव्याः संलक्ष्याः, पाण्डुरेखाः रेखाकाराः पाण्डुवर्णा वलित्रयान्तरालभागाः ताभिः, कृतपरभागा जनितवर्णोत्कर्षा ; अत एव विशेषेण लीना विलीना, रोमराजिर्यस्याः सा तथोक्ता, [कृशमपि] स्वभावत एवेति भावः। [अवलग्नं] मध्यम्। 'मध्यमञ्चावलग्नञ्च मध्योऽस्त्री' इत्यमरः। [पुनः कृशतां नयन्ती]। अग्रपुष्पग्रहणाय गात्रविजृम्भणादिति भावः। तथा [विपुलतरोन्मुखलोचना] विपुलतरे उन्मुखे ऊर्द्ध्वमुखे च लोचने यस्याः सा ; अग्रपुष्पग्रहणार्थमिति भावः ॥ ३३ ॥

प्रसकलेति।—[प्रसकलकुचबन्धुरोद्धुरोरः प्रसभविभिन्नतनूत्तरीयबन्धा] प्रसकलाभ्यामतिसमग्राभ्यां कुचाभ्यां बन्धुरमुन्नतानतम्। 'बन्धुरं तून्नतानतम्' इत्यमरः। उद्धुरं निर्भरं, दृढमिति यावत्। 'ऋक्पूर्—' (५।४।७४ पा०) इत्यादिना समासान्तः। तस्मादुरसः प्रसभात् बलात्कारात् विभिन्नौ विश्लिष्टस्तनूत्तरीयबन्धौ यस्याः सा, गात्रविजृम्भणात् विस्रस्तकुचावरणेत्यर्थः। किञ्च, [अवनमदुदरोच्छ्वसद्दुकूलस्फुटतरलक्ष्यगभीरनाभिमूला] अवनमतोऽन्तर्लीयमानादुदरादुच्छ्वसत् विश्लिष्यत् दुकूलं यस्य तत्, अत एव स्फुटतरं यथा तथा लक्ष्यं गभीरमगाधं नाभेर्मूलमन्तरालं यस्याः सा * ॥ ३४ ॥

---

* अत्र परुषवर्णबहुलतया श्रुतिदुःखावहत्वात् दुःश्रवत्वदोष इत्यवधेयम्।

व्यवहितमविजानती किलान्त-
र्वणभुवि वल्लभमाऽऽभिमुख्यभाजम्।
अधिविटपि सलीलमग्रपुष्प-
ग्रहणपदेन चिरं विलम्ब्य काचित्॥ ३५॥

अथ किल कथिते सखीभिरत्र
क्षणमपरेव ससम्भ्रमा भवन्ती।
शिथिलितकुसुमाकुलाग्रपाणिः
प्रतिपदसंयमितांशुकावृताङ्गी॥ ३६॥

---

व्यवहितमिति।—[ काचित् ] पूर्वोक्तविशेषणविशिष्टा अङ्गना, [ अन्तर्वणभुवि ] वनाभ्यन्तरप्रदेशे। "प्रनिरन्तः—" ( ८।४।५ पा० ) इत्यादिना वननकारस्य णत्वम्। [ व्यवहितं ] तिरोहितम्, [ आभिमुख्यभाजं ] अभिमुखावस्थितमित्यर्थः, तं [ वल्लभं ] प्रियम्, [ अविजानती किल ] जानानाप्यजानानेव, [ अधिविटपि ] विटपिनि वृक्षे। विभक्त्यर्थेऽव्ययीभावः। [ सलीलं ] यथा तथा, [ अग्रपुष्पग्रहणपदेन ] अग्रे वृक्षाग्रे यानि पुष्पाणि, तेषां ग्रहणस्य पदेन मिषेण, [चिरं विलम्ब्य] प्रियाय स्वाङ्गप्रकाशनार्थमिति भावः *॥ ३५॥

अथेति।—[अथ] विलम्बानन्तरम्, [अत्र] अस्मिन् प्रिये, [ सखीभिः कथिते ] सति [ किल ] अयमत्रैवास्त इति निवेदिते सति, [ क्षणं ससम्भ्रमा, अपरेव ] पूर्वविपरीतव्यापारकरणादन्येव, [ भवन्ती ] बुद्धिपूर्वकारित्वमज्ञाननाटनेन वञ्चयन्तीत्यर्थः, [ शिथिलितकुसुमाकुलाग्रपाणिः] शिथिलितः पुष्पग्रहणात् निवर्त्तितः, कुसुमाकुलः कुसुमव्यापृतो-

---

* अत्र व्यवहितं प्रियं जानत्यपि अजानतीव इति किलशब्देन सम्भावनाबोधनात् उत्प्रेक्षाऽलङ्कारः; तथा प्रियाय स्वाङ्गप्रदर्शनार्थं विलम्बनं पुष्पचयनव्याजेन प्रकटनादपह्नुतिश्च।

कृतभयपरितोषसन्निपातं
सचकितसस्मितवक्त्रवारिजश्रीः ।
मनसिजगुरुतत्क्षणोपदिष्टं
किमपि रसेन रसान्तरं भजन्ती ॥ ३७ ॥
अवनतवदनेन्दुरिच्छतीव
व्यवधिमधीरतया यदस्थितास्मै ।

ऽग्रपाणिर्यया सा तथोक्ता, [ प्रतिपदसंयमितांशुकावृताङ्गी ] प्रतिपदं प्रतिस्थानं, संयमितेन नियमितेनांशुकेन । 'अंशुकं सूक्ष्मवस्त्रे स्यात्' इति विश्वः । वस्त्रेणावृतमङ्गं यस्याः सा तथोक्ता सती * ॥ ३६ ॥

कृतभयेति ।—किञ्च, [ कृतभयपरितोषसन्निपातं ] कृतः भयपरितोषयोः भर्तृदर्शनोत्थसाध्वसहर्षयोः सन्निपातः सङ्करो येन तत्, [ मनसिजगुरुतत्क्षणोपदिष्टं ] मनसि जातः मनसिजः स्मरः । "सप्तम्यां जनेर्डः" ( ३।२।९७ पा० ) इति डः "हलदन्तात् सप्तम्याः संज्ञायाम्" ( ६।३।९ पा० ) इत्यलुक् । स एव गुरुराचार्य्यस्तेन तत्क्षणे उपदिष्टं तदेकहेतुकम् इत्यर्थः । [ किमपि ] अनिर्वाच्यं, [ रसान्तरं ] लक्षणया भावान्तरं, तच्चेह किलकिञ्चिताख्यं विवक्षितम् । कृतभयेत्यादिविशेषणेन "क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितम्" इति लक्षणार्थस्य प्रतीतेः । [ रसेन ] रागेण हेतुना, [ भजन्ती ], अत एव [ सचकितसस्मितवक्त्रवारिजश्रीः ] सचकिता सभयसम्भ्रमा । 'चकितं भयसम्भ्रमे' इत्यमरः । सस्मिता हर्षात् समन्दहासा वक्त्रवारिजश्रीर्यस्याः सा सती । अत्र चकितस्मितयोः पूर्वोक्तभयहर्षानुभावत्वेनोक्तिः † ॥ ३७ ॥

अवनतेति ।—[अवनतवदनेन्दुः] लज्जया नम्रमुखीत्यर्थः । [ अधीर-

* अन्या भवन्ती इव इति सम्भावनाबोधनादुत्प्रेक्षा । नेयमुपमा, उपमानभूतायाः अपरायाः अप्रसिद्धत्वात् ।

† उपमारूपकयोः संसृष्टिः ।

अहरत सुतरामतोऽस्य चेतः
स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥ ३८ ॥

[षड्भिः कुलकम् ।]

किसलयशकलेष्ववाचनीयाः
पुलकिनि केवलमङ्गके निधेयाः ।
नखपदलिपयोऽपि दीपितार्थाः
प्रणिदधिरे दयितैरनङ्गलेखाः ॥ ३९ ॥

---

तया ] अदृष्टतया, [ व्यवधिं ] किञ्चित् व्यवधानम् । "उपसर्गे घोः किः" ( ३।३।९२ पा० ) इति किप्रत्ययः । [ इच्छती ] वाञ्छन्ती [ इव ] तथा व्याकुला सतीत्यर्थः । "आच्छीनद्योर्नुम्" ( ७।१।८० पा० ) इति विकल्पानुमभावः । [अस्मै] प्रियाय, [ अस्थित ] आत्मानं प्रकाशयन्ती स्थितेत्यर्थः । तिष्ठतेः कर्त्तरि लुङ् । "प्रकाशनस्थेयाख्ययोश्च" ( १।३।२३ पा० ) इत्यात्मनेपदं, "स्थाघ्वोरिच्च" ( १।२।१७ पा० ) इति सिचः कित्त्वमिकारश्च धातोरन्तादेशः, कित्त्वान्न गुणः । इति [यत्, अतः] हेतोः [ अस्य ] प्रियस्य, [ चेतः सुतरामहरत ] । तथा हि, [ त्रपैव स्त्रियोऽभिभूषयति, स्फुटं ] प्रसिद्धमित्यर्थः । अतोऽस्याऽपि त्रपाभूषितत्वादतिमनोहरत्वं युक्तमिति भावः । उत्प्रेक्षाऽर्थान्तरन्यासौ । * कुलकम् । मध्यमा चेयं नायिका,—"लज्जामन्मथमध्यस्था मध्यमोदितयौवना" इति लक्षणात् ॥३८॥

किसलयेति ।—[ किसलयशकलेषु ] वर्त्तमाना इति शेषः । [ अवाचनीयाः ] प्रसिद्धलिपिवैलक्षण्याद्वाचयितुमनर्हाः, किन्तु [ केवलं पुलकिनि ] दयितस्पृष्टत्वात् तत्स्पर्शादेव रोमाञ्चवति, [ अङ्गके ] वपुषि,

---

* अत्र पूर्वार्द्धे व्यवधानेच्छायाः अवास्तवत्वात् "इच्छतीव" इत्यनेन सम्भावनया प्रकाशनात् उत्प्रेक्षा । "त्रपा स्त्रियो भूषयति" इत्यनेन पूर्ववाक्यसमर्थनाच्च अर्थान्तरन्यास इति विभाव्यम् ।

कृतकृतकरुषा सखीमपास्य
त्वमकुशलेति कयाचिदाऽऽत्मनैव ।
अभिमतमभि साभिलाषमावि-
ष्कृतभुजमूलमबन्धि मूर्ध्नि माला ॥ ४० ॥
अभिमुखमुपयाति मा स्म किञ्चि-
त्त्वमभिदधाः पटले मधुव्रतानाम् ।

---

[निधेयाः] विरहतापशान्त्यर्थमर्पणीयाः । कुतः ?—[नखपदलिपयः] नखपदानि नखाङ्का एव लिपयोऽक्षराणि येषु ते, न तु प्रसिद्धाक्षराः, अतोऽवाचनीया इत्यर्थः । नैतावताऽनुतापकारित्वं चेत्याह,—[अपि] तथाऽपि, [दीपितार्थाः] सङ्केतितसन्निवेशवशादेव द्योतिताभिधेयाः, [अनङ्गलेखाः] लिख्यन्त इति लेखाः । कर्म्मणि घञ्प्रत्ययः । अनङ्गस्य लेखाः तत्प्रयुक्ता इत्यर्थः, [दयितैः] दयिताभिः, दयितैश्च, 'पुमान् स्त्रिया" (१।२।६७ पा० ) इत्येकशेषः । [प्रणिदधिरे] प्रणिहिताः, लिखिता इत्यर्थः । दधातेः कर्म्मणि लिट् । 'नेर्गदनद—' (८।४।१७ पा० ) इत्यादिना नकारस्य णत्वम् । लोकप्रसिद्धलेख्यवैलक्षण्याद्व्यतिरेकालङ्कारः ॥ ३९ ॥

कृतेति ।—[ कृतकृतकरुषा ] कृतकृत्रिमरोषया, [ कयाचित् ] नायिकया, [त्वम्, अकुशला] माल्यग्रथने कुशला नासि, [इति सखीम्, अपास्य ] निरस्य, [आत्मनैव] स्वयमेव, [अभिमतम् अभि] अभिप्रायाभिमुखं, [ साभिलाषमाविष्कृतभुजमूलं ] प्रकाशितकक्षप्रदेशं यथा तथा, [ मूर्ध्नि माला, अबन्धि ] बद्धा । अयञ्च स्वाभिप्रायव्यञ्जकचेष्टारूपश्चापलाख्यः सञ्चारिविशेषः । नायिका प्रौढ़ेव,—"स्मरमन्दीकृतव्रीड़ा प्रौढ़ा सम्पूर्णयौवना" इति लक्षणात् ॥ ४० ॥

अथ काञ्चिन्नायिकां प्रति सखी वचनं विशेषकेणाह, अभिमुखमिति ।—[ मधुव्रतानां ] मधु मकरन्दं व्रतयन्ति भुञ्जत इति मधुव्रताः

मधुसुरभिमुखाब्जगन्धलब्धे-
रधिकमधित्वदनेन मा निपाति ॥ ४१ ॥
सरजसमकरन्दनिर्भरासु
प्रसवविभूतिषु भूरुहां विरक्तः ।
ध्रुवममृतपनामवाञ्छयाऽसा-
वधरममुं मधुपस्तवाऽऽजिहीते ॥ ४२ ॥

मधुपाः । कर्मण्यण्प्रत्ययः । तेषां [पटले अभिमुखम्, उपयाति] आगते सति, [ त्वं, किञ्चित् मास्म अभिदधाः ] न किञ्चिदालप, मौनं भजेत्यर्थः । "स्मोत्तरे लङ् च" ( ३।३।१७६ पा० ) "न माङ्योगे" ( ३।४।७४ पा० ) इत्यट्प्रतिषेधः । मौनस्य मधुकरबाधानिवृत्तिरेव फलमित्याह, मध्विति ।—[ मधुसुरभिमुखाब्जगन्धलब्धेः ] मधुना मद्येन, सुरभेर्मुखाब्जस्य यो गन्धस्तस्य लब्धेर्लाभात् । स्त्रियां क्तिन् । [ अनेन ] मधुव्रतपटलेन [ अधित्वत् ] त्वयि । विभक्त्यर्थेऽव्ययीभावः । "त्वमावेकवचने" ( ७।२।९७ पा० ) इत्यत्रैकवचन इत्यर्थनिर्देशादिह विभक्त्यभावेऽप्येकार्थवृत्तेर्युष्मदो मपर्य्यन्तस्य त्वादेशः ; अत एव विभक्त्यभावात् च त्वादेशोऽत्र चिन्त्य इति वल्लभवचनं चिन्त्यम् । [ अधिकम् ] अत्यन्तं, सर्वत्रेत्यर्थः । [ मा निपाति ] मा निपत्यताम् । * भावे लुङि चिण्वद्वृद्धिः । अत्र निपातासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ ४१ ॥

सरजसेति ।—किञ्च, मधु पिबतीति [ मधुपः ] मधुलिट्, मद्यपश्च । "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) इति कः । भुवि रोहन्ति जायन्त इति [ भूरुहां ] वृक्षाणां, भौमानाञ्च देहिनां सम्बन्धिनीषु, [ सरजसमकरन्दनिर्भरासु ] सह रजसा सरजसम् । "अचतुर—"

* यदि केचिदपरे कामपरतन्त्राः त्वां प्रार्थयेयुः, तदा तैः सह सम्भाषणं न ते विधेयं, तव मुखनिःसृतमधुरालापश्रवणेन कथमपि त्वां न ते त्यजेयुरिति ध्वनिः ।

इति वदति सखीजने निमील-

द्द्विगुणितसान्द्रतराक्षिपक्ष्ममाला ।

---

( ५।४।७७ पा० ) इत्यादिना साकल्यार्थेऽव्ययीभावे समासान्तनिपातः । तेन सरजस्क इति बहुव्रीह्यर्थो लक्ष्यः मुख्यो वा, महाकविप्रयोगबाहुल्यात् । अव्ययीभावदर्शनन्तु प्रायिकमित्युक्तं प्राक् । तथा च सरजसं सरजसो वा यो मकरन्दस्तेन निर्भरासु पूर्णासु, न तु त्वदधरामृतेन नाप्यरजस्कत्वेनेति भावः ; अन्यत्र,—रजः स्त्रीपुष्पम् । 'स्याद्रजः पुष्पमार्तवम्' इत्यमरः । तत्साहचर्य्यात् मकरन्दशब्देन शुक्रप्रतीतिः, तेन शुक्रशोणितसन्निपातप्रायास्वित्यर्थः । [ प्रसवविभूतिषु ] पुष्पसमृद्धिषु, जन्मपरम्परासु च, [ विरक्तः ] निःस्पृहः सन्, [ अमृतपनामवाञ्छया ] अमृतं पिबतीति अमृतप इति नाम्नो वाञ्छया, [ असावमुं, तवाधरम् ] ओष्ठं प्रति, [ आजिहीते ] आगच्छति । [ ध्रुवं ] सत्यमित्युत्प्रेक्षायाम् । अन्यत्र तु,—अमृतपो देव इति नामवाञ्छया देवभूयापेक्षयेत्यर्थः ; अथ वा निःश्रेयसप्राप्तीच्छयेत्यर्थः । 'श्रेयो निःश्रेयसामृतम्' इत्यमरः । ध्रुवं शाश्वतम् अधरं धरासम्बन्धरहितम् अमुं परलोकपथम् । शुभमिह चामुत्र चान्वेति इत्यादौ लोके वेदे चेदमदसोर्लोकद्वये रूढिप्रदर्शनात् । आजिहीते अन्विष्यतीत्यर्थः । 'ओहाङ् गतौ' इति धातोर्लटि "श्लौ" ( ६।१।१० पा० ) इति द्विर्भावः । "ई हल्यघोः" (६।४।११३ पा०) इतीकारः । इह नायिकावदनसौरभहेतुकस्य मधुपानामागमनस्यामृतपनामवाञ्छाहेतुकत्वोत्प्रेक्षणाद् गुणहेतूत्प्रेक्षा ; सा च ध्रुवमिति व्यञ्जकप्रयोगाद्वाच्या सती मधुपस्याधरोद्देशस्यासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्त्युत्थापितेति सङ्करः । पूर्वोक्ताप्रकृतार्थप्रतीतिस्तु मधुपादिशब्दानामभिधया प्रकृतार्थनियन्त्रितत्वात् शब्दशक्तिमूलो ध्वनिरेव, न श्लेष इत्यलं विस्तरेणेति ॥ ४२ ॥

इतीति ।—[ इति ] इत्थं, सख्येव जनस्तस्मिन् [ सखीजने वदति ] सति, [ निमीलद्द्विगुणितसान्द्रतराक्षिपक्ष्ममाला ] निमीलन्त्यौ भया-

अपतदलिभयेन भर्त्तुरङ्कं
भवति हि विक्लवता गुणोऽङ्गनानाम् ॥ ४३ ॥
मुखकमलकमुन्नमय्य यूना
यदभिनवोढ़वधूर्बलादचुम्बि ।
तदपि न किल बालपल्लवाग्र-
ग्रहपरया विविदे विदग्धसख्या ॥ ४४ ॥

---

न्मुकुलीभवन्त्यौ, अत एव द्वे आवृत्ती ययोस्ते द्विगुणे द्विरावृत्ते। 'गुणा-स्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती। कृते द्विगुणिते, अत एव सान्द्रतरे, अक्षिपक्ष्ममाले नेत्रलोमपङ्क्ती यस्याः सा, काचि-दिति शेषः। अक्षिग्रहणस्य पक्ष्मद्वयद्वैगुण्यलक्ष्मीरक्षणीयेवेति द्योत-नार्थत्वान्न पौनरुक्त्यम्। [अलिभयेन भर्त्तुः, अङ्कम्] उत्सङ्गम् [अपतत्] प्राप्तवती। अहो महत्कष्टं यत् कीटकादपि भयमित्याशङ्क्याह,—[अङ्ग-नानां] न तु पुंसामिति भावः। [विक्लवता] भीरुता, [गुणो भवति हि] न तु दोष इति भावः ; अत एव जनसमक्षं भर्त्तुरङ्कारोहणमपि न दोषः, पार्श्वस्थाऽऽलम्बनादीनां भयानुभावत्वात्। अलङ्कारोऽयमर्थान्तर-न्यासः। विशेषकम् ॥ ४३ ॥

मुखेति :—[यूना अभिनवोढ़वधूः] नवोढ़ाऽङ्गनाऽपि, [बलात्] बलात्कारात्। मुखं कमलमिवेत्युपमितसमासः। तदल्पं [मुखकमलकम्]। अल्पार्थे कन् प्रत्ययः। [उन्नमय्य] उद्यम्य। "ल्यपि लघुपूर्वात्" (६।४।५६ पा०) इत्ययादेशः। [अचुम्बि] चुम्बितेति [यत्, तत्] चुम्बनं, [विदग्धसख्या] चतुरसख्या, [बालपल्लवाग्रग्रहपरया] बाल-पल्लवाग्राणां ग्रहो ग्रहणम्। "ग्रहवृद्दनिश्चिगमश्च" (३।३।५८ पा०) इत्यप्प्रत्ययः। तत्परया तदासक्तया सत्या, कश्चिद्वासङ्ग कल्पयन्त्येत्यर्थः ; [न विविदे अपि किल] न प्रकाशितमिति किमुत वक्तव्यमित्यपिशब्दार्थः। किलेत्यलीके। वस्तुतो विदित्वाऽप्यविदित्वेव

व्रततिविततिभिस्तिरोहितायां
प्रतियुवती वदनं प्रियः प्रियायाः ।
यदधयदधरावलोपनृत्य-
त्करवलयस्वनितेन तद्विवव्रे ॥ ४५ ॥

विलसितमनुकुर्वती पुरस्ता-
द्धरणिरुहाधिरुहो वधूर्लतायाः ।
रमणमृजुतया पुरः सखीना-
मकलितचापलदोषमालिलिङ्ग ॥ ४६ ॥

---

स्थितं वैदग्ध्यात्, अन्यथा तयोर्विस्रम्भविहारविघातादिति भावः । मुग्धेयं नायिका,—"उदयद्यौवना मुग्धा लज्जापिहितमन्मथा' इति लक्षणात् ॥ ४४ ॥

व्रततीति ।—[ प्रतियुवतौ ] प्रतिकूला युवतिः प्रतियुवतिः सपत्नी तस्यां, [ व्रततिविततिभिः ] व्रततिविततयो लताजालानि । 'वल्ली तु व्रततिर्लता' इत्यमरः । ताभिः [ तिरोहितायां ] सत्यां [प्रियः प्रियायाः वदनमधयत् ] अपिबदिति [ यत् ] । धेटो भौवादिकाल्लङ् । [ तद् ] वदनपानम् [ अधरावलोपनृत्यत्करवलयस्वनितेन ] अधरावलोपेन अधरखण्डनेन, तज्जनितव्यथयेत्यर्थः । नृत्यतोश्चलतोः, करयोर्वलयानां कङ्कणानां, स्वनितेन ध्वनिना, [ विवव्रे ] विवृतम्, तदेव तस्यास्तदनुमापकमभूदित्यर्थः । अत्रैका हृष्टा, अपरा त्वीर्ष्यानिर्वेदवतीत्यनुसन्धेयम् ॥ ४५ ॥

विलसितमिति ।—[ वधूः ] काचित् स्त्री, [पुरस्ताद्] अग्रे, [धरणिरुहाधिरुहः ] धरणिरुहमधिरोहतीति धरणिरुहाधिरुट् वृक्षादिरूढा । रुहेः क्विप् । तस्या [ लतायाः, विलसितं ] चेष्टितम् । भावे क्तः । [ अनुकुर्वती ] एवमित्याश्लेषप्रकारमभिनयन्ती, [ ऋजुतया ] अकुटिल-

सललितमवलम्ब्य पाणिनांऽसे
सहचरमुच्छ्रितगुच्छवाञ्छयाऽन्या।
सकलकलभकुम्भविभ्रमाभ्या-
मुरसि रसादवतस्तरे स्तनाभ्याम् ॥ ४७ ॥

मृदुचरणतलाग्रदुःस्थितत्वा-
दसहतरा कुचकुम्भयोर्भरस्य।
उपरि निरवलम्बनं प्रियस्य
न्यपतदथोच्चतरोच्चिचीषयाऽन्या ॥ ४८ ॥

---

बुद्धितया, [ सखीनां, पुरः ] अग्रे, [ अकलितचापलदोषम् ] अकलितः अविचारितः, चापलमनुचितकरणमेव दोषो यस्मिन् कर्मणि तत् यथा तथा, [ रमणं ] प्रियम्, [ आलिलिङ्ग ]। एषा हर्षोत्सुक्यवती प्रौढ़ा च ॥ ४६ ॥

सललितमिति।—[ अन्या ] स्त्री, [ उच्छ्रितगुच्छवाञ्छया ] उन्नतस्तवकजिघृक्षया, [ सललितं ] सविलासं यथा तथा, [ सहचरं ] प्रियं, [ पाणिना ] औचित्याद्वामेनेति शेषः। [ अंसे, अवलम्ब्य ] अवष्टभ्य, [ सकलकलभकुम्भविभ्रमाभ्यां ] सकलयोः समग्रयोः कलभकुम्भयोः करिकुम्भयोर्विभ्रम इव विभ्रमः सौन्दर्य्यं ययोस्ताभ्यां, [स्तनाभ्यां, रसात्] रागात्, [ उरसि, अवतस्तरे ] आच्छादयामास, सहचरमित्यनुषङ्गः। अभिमुखावस्थानादिति भावः। स्तृणातेः कर्त्तरि लिट्। "ऋतश्च संयोगादेर्गुणः" ( ७।४।१० पा० ) इति गुणः। "शर्पूर्वाः खयः" ( ७।४।६१ पा० ) इत्यभ्यासस्कारलोपश्च। इयञ्च प्रौढैव ॥ ४७ ॥

मृद्विति।—[अन्या] स्त्री, उच्चतराणाम् अत्युन्नतकुसुमानाम् उच्चेतुम् अवचेतुमिच्छया [ उच्चतरोच्चिचीषया ]। चिनोतेः सन्नन्तात् स्त्रियामप्रत्यये टाप। "विभाषा चेः" ( ७।३।५८ पा० ) इति कुत्वविकल्पः।

उपरिजतरुजानि याचमानां
कुशलतया परिरम्भलोलुपोऽन्यः ।
प्रथितपृथुपयोधरां गृहाण
स्वयमिति मुग्धवधूमुदास दोर्भ्याम् ॥४९॥

इदमिदमिति भूरुहां प्रसूनै-
र्मुहुरतिलोभयता पुरः पुरोऽन्या ।
अनुरहसमनायि नायकेन
त्वरयति रन्तुमहो ! जनं मनोभूः ॥ ५० ॥

---

[ मृदुचरणतलाग्रदुःस्थितत्वात् ] मृदुचरणतलाग्रेण दुःस्थितत्वात् दुःखेन स्थितत्वात्, [ कुचकुम्भयोर्भरस्य ]। "पुंसि संज्ञायां घः प्रायेण" ( ३।३।११८ पा० ) इति घप्रत्ययः। न सहतेऽत्यन्तमिति [ असहतरा ]। सहेः पचाद्यजन्तात् नञ् समासात् तरप्प्रत्ययः। भरमसहमानेत्यर्थः। कृद्योगात् कर्म्मणि षष्ठी। [ अथ ] अस्मिन्नवसरे, [ निरवलम्बनं ] यथा तथा [ प्रियस्योपरि न्यपतत् ]। निरवलम्बनत्वान्निपपातेत्यर्थः। एषा च प्रौढ़ा। स्वभावोक्तिरलङ्कारः ॥ ४८ ॥

उपरिजेति।—[ उपरिजतरुजानि ] उपरिजानि उपरि जातानि, तरोर्जातानि तरुजानि कुसुमानि तानि, [ याचमानाम् ] अवचित्य देहीति प्रार्थयमानां, [ प्रथितपृथुपयोधरां ] प्रशस्तपीवरकुचां, [ मुग्धवधूम् ] अकुटिलधियं स्त्रियं, [परिरम्भलोलुपः] आश्लेषलालसः, [ अन्यः, कुशलतया ] वञ्चनापटुतया, [ स्वयं गृहाण ] त्वमेवावचिनुष्वेत्यर्थः, [इति] गम्यमानार्थत्वादुक्तेति न प्रयुक्तं पौनरुक्त्यात्। [दोर्भ्याम्, उदास] उदयच्छतिस्म। अयं चैकायत्तत्वादनुकूलनायकः, नायिका तु स्वाधीनपतिका प्रौढ़ा च ॥ ४९ ॥

इदमिति।—[ अन्या ] स्त्री, [ इदमिदमिति ] इदं ग्राह्यमिदं

विजनमिति बलादमुं गृहीत्वा
क्षणमथ वीक्ष्य विपक्षमन्तिकेऽन्या ।
अभिपतितुमना लघुत्वभीते-
रभवदमुञ्चति वल्लभेऽतिगुर्वी ॥ ५१ ॥

---

ग्राह्यमित्युक्तेत्यर्थः । [ भूरुहां ] वृक्षाणां, [ प्रसूनैः ] पुष्पैः, [पुरः पुरो मुहुः, अतिलोभयता ] प्रलोभयता, [नायकेन] रहोऽनु [ अनुरहसम् ] एकान्तम् । "अन्ववतप्तात्" (५।४।८१ पा०) इत्यव्ययीभावसमासान्तः । [ अनायि ] नीता । तथा हि [ मनोभूः ] कामः, [ जनं रन्तुं त्वरयति ], देशकालानपेक्षयेति भावः । अत एवाश्चर्य्यम् [ अहो ] इति पूर्ववत् नायिकानायकविवेकः । अर्थान्तरन्यासः ॥ ५० ॥

विजनमिति ।—[अन्या] स्त्री, [विजनम्] एकान्तम्, [इति] हेतोः, [ अमुं ] वल्लभं, [क्षणं बलात्, गृहीत्वा] आकृष्य, [ अथान्तिके, विपक्षं ] सपत्नीजनं, [वीक्ष्य, लघुत्वभीतेः] तुच्छत्वभयात् ; अभिपतितुं मनो यस्याः सा [ अभिपतितुमनाः ] । "तुङ्काममनसोरपि" इति मकारलोपः । * अपसर्त्तुंकामेत्यर्थः । [ वल्लभे, अमुञ्चति ] अत्यजति सति । तस्य विपक्षानवेक्षणादिति भावः । [ अतिगुर्वी ] अतिगौरववति, [अभवत्] । स्वयङ्ग्रहलाघवतिरोधानात् भर्तृवल्लभत्वप्रकाशनाच्चेति भावः । भाग्यवतां सर्वं श्रेयसे भवतीति रहस्यम् । एषा त्वतिप्रगल्भैव † ॥ ५१ ॥

---

* "पृषोदरादीनि यथोपदिष्टम्" ( ६।३।१०९ पा० ) इति सूत्रव्याख्याने कारिका,—"लुम्पेदवश्यं मः कृत्ये तुङ्काममनसोरपि ।

समो वा हिततयोः मांसस्य पचियुड्घञोः ॥" इति ।

† अत्र लघुत्वभयेन गन्तुकामायाः नायिकायाः नायककर्तृकगमनविरोधस्य कृतिरपि गुर्वीत्वजननेन नायिकायाः अभीष्टा इति विरुद्धकृतेऽरिष्टफलकत्वात् विचित्रालङ्कारः । यदुक्तं दर्पणे,—"विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत्" इति, काव्यलिङ्गमलङ्कारश्च ।

अधिरजनि जगाम धाम तस्याः
प्रियतमयेति रुषा स्रजाऽवनद्धः ।
पदमपि चलितुं युवा न सेहे
किमिव न शक्तिहरं ससाध्वसानाम् ॥५२॥

न खलु वयममुष्य दानयोग्याः
पिबति च पाति च याऽसकौ रहस्त्वाम् ।

---

अधीति ।—[ अधिरजनि ] रजन्याम् । विभक्त्यर्थेऽव्ययीभावः । [ तस्याः ] सपत्न्या इत्यर्थः । बुद्धिस्थत्वान्नामग्रहणासहत्वाच्च तच्छब्देन निर्देशः । [ धाम ] गृहं, [ जगामेति रुषा ] हेतुना [प्रियतमया] कर्त्र्या, [ स्रजा ] करणेन [ अवनद्धो युवा पदमपि ] । "अत्यन्तसंयोगे च" ( २।१।२९ पा० ) इति द्वितीया । [ चलितुं, न सेहे ] न शशाक । तथा हि [ ससाध्वसानां ] भयत्रस्तानां, [ किमिव ] किं वा । इवशब्दो वाक्यालङ्कारे, "इवेतीषदर्थौपमोत्प्रेक्षावाक्यालङ्कारेषु" इति गणव्याख्याने । शक्तिं हरतीति [ शक्तिहरम् ] । "हरतेरनुद्यमनेऽच्" ( ३।२।९ पा० ) इत्यच्प्रत्ययः । [ न ] भवतीति शेषः । 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति' इति वचनात् । भवन्तीति लटः पूर्वाचार्य्याणां संज्ञा । सर्वस्यापि भीरूणां शक्तिहरत्वादबलाकृतः सम्बन्धोऽपि यूनः शक्तिहर इति युक्तम् इति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । खण्डितेयं नायिका,—'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति लक्षणात् । नायकस्तु दक्षिणः,—"भयसम्बन्धसहनादिभिस्तुल्यो नैकत्र दक्षिणः" इति लक्षणार्थप्रतीतेरिति ॥ ५२ ॥

अथ काचित् खण्डिता निजकान्तमागस्कारिणं पल्लवदानेन प्रसादयन्तं चतुर्भिर्भर्त्सयितुमारभते, नेत्यादि ।—[ वयममुष्य * दानयोग्या

---

* पल्लवस्य ।

व्रज विटपममुं ददस्व तस्यै
भवतु यतः सदृशोश्चिराय योगः ॥ ५३ ॥

तव कितव ! किमाहितैर्वृथा नः
क्षितिरुहपल्लवपुष्पकर्णपूरैः ।
ननु जनविदितैर्भवद्व्यलीकै-
श्चिरपरिपूरितमेव कर्णयुग्मम् ॥ ५४ ॥

---

न] भवामः [खलु]। किन्तु [या] असावेव [असकौ] त्वत्प्रिया। "अव्ययसर्वनाम्नामकच् प्राक्टेः" (५।३।७१ पा०) इत्यकच्। [रहः] रहसि। 'रहश्चोपांशु चालिङ्गे' इत्यमरः। [त्वां, पिबति] पानं करोति * [च]। 'पा पाने' भौवादिकात् कर्त्तरि लट्। "पाघ्रा—" (७।३।७८ पा०) इत्यादिना पिबादेशः। [पाति] रक्षति, [च] अन्यतो वारयति चेत्यर्थः। 'पा रक्षणे' अदादित्वाच्छपो लुक्। [तस्यै अमुं], विटान् पातीति [विटपं] पल्लवम्। 'विटपः पल्लवे षिङ्गे' इति विश्वः। [ददस्व] प्रयच्छ। 'दद दाने' इति भौवादिकाल्लोट्। [व्रज] गच्छ, [यतः] दानात्, [चिराय] चिरकालात्। चिरार्थेऽव्ययम्। [सदृशोः] अनुरूपयोर्युवयोः, [योगो भवतु] उभयोरपि विटपत्वादिति भावः। समालङ्कारोऽयम् ;—'सा समालङ्कृतिर्योगो वस्तुनोरनुरूपयोः' इति लक्षणात् ॥ ५३ ॥

तवेति।—[हे कितव]! धूर्त्त! [वृथा] व्यर्थमेव, [आहितैः] तत्कार्य्यस्यान्यथासिद्धत्वादिति भावः। [तव] सम्बन्धिभिः [क्षितिरुहपल्लवपुष्पकर्णपूरैः] क्षितिरुहाणां पल्लवाः पुष्पाणि च तान्येव कर्णौ पूरयन्तीति कर्णपूराः कर्णावतंसाः। कर्मधारयः। तैः [नः] अस्माकं, [किम्?] तत्साध्यं न किञ्चिदस्तीत्यर्थः। गम्यमानसाधनक्रियाऽपेक्षया कर्णपूराणां करणत्वात् तृतीया। उक्तञ्च न्यासोद्योते,—'न केवलं

---

* चुम्बति इत्येव साधु, अन्यथा त्वामित्यत्र द्वितीयानुपपत्तेः।

मुहुरुपहसितामिवालिनादै-
र्वितरसि नः कलिकां किमर्थमेनाम् ।
वसतिमुपगतेन धाम्नि तस्याः
शठ ! कलिरेष महांस्त्वयाऽद्य दत्तः ॥ ५५ ॥
इति गदितवती रुषा जघान
स्फुरितमनोरमपक्ष्मकेसरेण ।

---

श्रूयमाणैव क्रिया निमित्तं कारकभावस्य, अपि तु गम्यमानाऽपि' इति। किन्तु [ ननु ] अङ्ग, [जनविदितैः] जनेष्वतिप्रसिद्धैः। जनेषु विदितैरिति सप्तमीसमासः। "क्तस्य च वर्तमाने" ( २।३।६७ पा० ) इति कर्तृयोगे षष्ठीप्रतिप्रसवत्वेऽपि "क्तेन च पूजायाम्" ( २।२।१२ पा० ) इति षष्ठीसमासनिषेधात्। जनानामाधारत्वविवक्षायां तदप्राप्तेः। [ भवद्व्यलीकैः ] तवाप्रियवचनैः, [ कर्णयुग्मं चिरपरिपूरितम् एव ] नित्यं पूर्णमेव ; अतः परिपूरितस्य पूरणायोगादलमेवैभिरित्यर्थः। अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुत्वेनोपनिबन्धाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ५४ ॥

मुहुरिति।—[ अलिनादैर्मुहुः, उपहसितां ] प्रतारणार्थेऽतिप्रहस्यमानाम्, [ इव ] स्थिताम्, [एनां, कलिकां] कोरकम्, अल्पं कलिं, कलहञ्च। 'कलहे च युगे कलिः' इति वैजयन्ती। स्त्रीप्रत्ययस्त्वविवक्षितः श्लेषे। [ नः ] अस्माकं, [ किमर्थं वितरसि ? ] हे [ शठ ! ] गूढविप्रियकारिन् !, [ तस्याः ] त्वत्प्रियायाः, [धाम्नि] भवने, [ वसतिं ] स्थितिम्, [ उपगतेन त्वया अद्य, एष ] वर्तमानः, [ महान् कलिः] कलहः, [दत्तः] स्वदत्त एव ; महति कलौ स्थिते किं कल्यन्तरेणेत्यर्थः। अत्रापि पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ; तच्च कलिकामिति श्लेषोत्थापितया कोरककलहयोर्भेदेऽपि अभेदरूपातिशयोक्त्यानुप्राणितमिति सङ्करः ॥ ५५ ॥

इतीति।—[ इति ] इत्थं, [ गदितवती ] उक्तवती, [ अन्या ] स्त्री,

श्रवणनियमितेन कान्तमन्या-
सममसिताम्बुरुहेण चक्षुषा च ॥ ५६ ॥
विनयति सुदृशो दृशः परागं
प्रणयिनि कौसुममाऽऽननानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वय-
मपि रोषरजोभिरापुपूरे ॥ ५७ ॥

---

[ रुषा कान्तं, स्फुरितमनोरमपक्ष्मकेसरेण ] स्फुरितान्युज्ज्वलानि, मनोरमाणि च पक्ष्माणीव केसराणि ; अन्यत्र,—केसराणीव पक्ष्माणि यस्य तेन, [ श्रवणनियमितेन ] श्रोत्रे धृतेन निरुद्धेन च, [ असिताम्बुरुहेण ] नीलोत्पलेन, [ चक्षुषा च, समं ] युगपत्, [ जघान ] ताड़यामास । * एषा खण्डिता । † नायकस्तु धृष्टः,—"व्यक्तागा निर्भयो धृष्टः" इति लक्षणात् । अत्र स्फुरितेत्यादितुल्यधर्मगम्योपमानयोरसिताम्बुरुहचक्षुषोरुभयोरपि ताड़नसाधनतयोपात्तत्वेन प्रकृतत्वात् केवलप्रकृतास्पदा तुल्ययोगिता । लक्षणन्तूक्तम् । कलापकम् ॥ ५६ ॥

विनयतीति ।—[ प्रणयिनि ] प्रिये, [ सुदृशः ] प्रियायाः, [ दृशः ] लोचनात्, एकस्मादेवेति भावः । कुसुमेषु भवः [ कौसुमं ,परागं ] रजःकणं, तच्चैकमेवेति भावः । [ आननानिलेन ] निजमुखफूत्कारेण, [ विनयति ] अपनयति सति, [ तदहितयुवतेः ] तत्सपत्न्याः, [अक्ष्णोर्द्वयमपि ] न त्वेकमेवेति भावः । [ रोषरजोभिः ] रोषा एव रजांसि तैः, [ अभीक्ष्णम्, आपुपूरे ] । नैकेन रजःकणेन किञ्चित् स्पृष्टमात्रमिति

---

* कान्ताकर्णयुगलार्पितनीलोत्पलावलोकनेन कामपरतन्त्रः नायिकाकर्तृककर्णोत्पलताड़नं स्वीचकार ; सा च तादृशरोषकषायितचक्षुषा दर्शनेन पुनर्नितरां सन्त्रस्तश्च कान्त इति ध्वनिः ।

† इयं हि वक्रोक्त्या परुषभाषणेन कर्णोत्पलताड़नेन च धीरमध्यता-अधीरमध्यता-अधीरप्रगल्भताभिः सङ्कीर्णा इति दर्पणकारः ।

स्फुटमिदमभिचारमन्त्र एव
प्रतियुवतेरभिधानमङ्गनानाम् ।
वरतनुरमुनोपहूय पत्या
मृदुकुसुमेन यदाहताऽप्यमूर्च्छत् ॥ ५८ ॥

समदनमवतंसितेऽधिकर्णं
प्रणयवता कुसुमे सुमध्यमायाः ।
व्रजदपि लघुतां बभूव भारः
सपदि हिरण्मयमण्डनं सपत्न्याः ॥ ५९ ॥

---

भावः । पूरयतेः कर्मणि लिट् । पूर्णमित्यर्थः । अत्र रजोविनयस्य अन्यत्र रजःपूरणकारणत्वायोगादकारणत्वमेव पूरणमिति विभावनाऽलङ्कारो रूपकानुप्राणित इति सङ्करः ॥ ५७ ॥

स्फुटमिति ।—[ इदं, प्रतियुवतेः ] सपत्न्याः, [ अभिधानं ] नामधेयम्, [ अङ्गनानाम् ] । अभिचारः परमारणकर्म ; यथा श्येनेनाभिचरन् यजेतेति, तस्य मन्त्रः [ अभिचारमन्त्रः ] स [ एव स्फुटम् ] इत्युत्प्रेक्षा । [ यत् ] यस्मात्, [ वरतनुः ] स्त्री, [ पत्या ] भर्त्रा, [ अमुना ] सपत्नीनामधेयेन, [ उपहूय मृदुकुसुमेन ] । मृदुग्रहणमचिरावचितत्वं द्योतयन् देवता अभिचारमन्त्राणामनादिसंस्कारभावं द्योतयति । तेन [ अप्याहता अमूर्च्छत् ] यदुच्चारणपूर्वकं कुसुमताड़नमपि मारकं, सोऽभिचारमन्त्र एव सत्यम्, अन्यथा केवलकुसुमेऽपि तत्प्रसङ्गादित्यर्थः * ॥ ५८ ॥

समदनमिति ।—[ प्रणयवता ] प्रियेण, [ सुमध्यमायाः ] प्रियायाः, [ अधिकर्णं ] कर्णे । विभक्त्यर्थेऽव्ययीभावः । [ कुसुमे समदनं ]

---

* भर्त्ता चेत् सपत्नीनाम्ना सम्बोध्यते पत्नी, तदा भर्त्तुः सपत्नीस्मरणस्यातीव दुःसहतया तस्या मोहसम्भवादिति भावः ।

अवजितमधुना तवाहमक्ष्णो
रुचिरतयेत्यवनम्य लज्जयेव।
श्रवणकुवलयं विलासवत्या
भ्रमररुतैरुपकर्णमाचचक्षे ॥ ६० ॥
अवचितकुसुमा विहाय वल्ली-
र्युवतिषु कोमलमाल्यमालिनीषु।

यथा तथा [ अवतंसिते ] अवतंसीकृते सति, [ सपदि, लघुतां ] हीनतामगुरुत्वञ्च, [ व्रजदपि ], समान एकः पतिर्यस्यास्तस्याः [ सपत्न्याः ]। "नित्यं सपत्न्यादिषु" ( ४।१।३५ पा० ) इति ङीप् नकारश्च। तस्मादेव निर्देशात् समानशब्दस्य सभावनिपातः। [ हिरण्मयमण्डनं ] हिरण्यस्य विकारो हिरण्मयम्। "दाण्डिनायन—" ( ६।४।१७४ पा० ) इत्यादिना निपातः। तन्मण्डनं [ भारो बभूव ] यत्किञ्चिदपि प्रेम्णा कान्तेन स्वहस्तदत्तं श्लाघ्यं मण्डनं भवति, अन्यन्महार्घमपि हीनं भारश्च, न तु मण्डनमित्यर्थः। लघुत्वगुरुत्वगुणविरोधस्य हीनार्थत्वेन परिहाराद्विरोधाभासभेदः ॥ ५९ ॥

अवजितमिति।—[ विलासवत्याः ] स्त्रियाः, [ श्रवणकुवलयं ] श्रवणोत्पलं कर्तृ। [ अहमधुना तवाक्ष्णोः, रुचिरतया ] रुचिरस्य भावः रुचिरता। भावे तल्। तया सौन्दर्य्येण [ अवजितम् इति ] वक्तव्यानुवादः। अत एव [ लज्जया अवनम्य भ्रमररुतैः ] * तन्मिषेणेत्यर्थः। [ उपकर्णं ] कर्णे। विभक्त्यर्थेऽव्ययीभावः। [ आचचक्षे इव ] इत्युत्प्रेक्षा ॥ ६० ॥

अवचितेति।—[ अलीनां कुलानि, अवचितकुसुमा ] अवचितानि युवतिभिरुपात्तानि कुसुमानि यासां ताः, रिक्ता इत्यर्थः। वल्लीः ] पुष्पलताः, [ विहाय ], कोमलानि माल्यानि मलन्ते धारयन्तीति तासु

* भ्रमररुतैरित्यपङ्क्तिसङ्कीर्णा।

पदमुपदधिरे कुलान्यलीनां
न परिचयो मलिनात्मनां प्रधानम् ॥६१॥
श्लथशिरसिजपाशपातभारा-
दिव नितरां नतिमङ्गिरंसभागैः।
मुकुलितनयनैर्मुखारविन्दै-
र्घनमहतामिव पक्ष्मणां भरेण ॥ ६२ ॥

---

[कोमलमाल्यमालिनीषु]। 'मल मल्ल धारणे' इति धातोर्णिनिः। "ऋन्नेभ्यो ङीप्" (४।१।५ पा०) इति ङीप्। [युवतिषु पदम्, उपदधिरे] निदधुः। तथा हि, [मलिनात्मनां] कृष्णदेहानां, दुष्टचित्तानाञ्च, [परिचयः] चिरकालसाहचर्य्यं, [न प्रधानं] न प्रयोजकं, किन्तु भुक्तिरेवेति भावः। * अतः परिचितलतात्यागो नाश्चर्य्यमित्यर्थः। अत्र मलिनात्मनामिति कृष्णाङ्गत्वस्य दुष्टचित्तत्वेन सहाभेदाध्यवसायेनार्थान्तरन्यासस्योत्थापनात् श्लेषप्रतिभोत्थापितातिशयोक्त्यनुप्राणितोऽयमिति सङ्करः ॥ ६१ ॥

अथोत्तरसर्गे जलक्रीडावर्णनाय तदुपोद्घातत्वेनाऽऽसां वनविहारोद्भवं श्रमातिरेकं सप्तभिः कुलकेन दर्शयति, श्लथेत्यादि।—[श्लथशिरसिजपाशपातभारादिव] शिरसि जाताः शिरोरुहाः। "सप्तम्यां जनेर्डः" (३।२।९७ पा०) इति डः। "हलदन्तात्—" (६।३।९ पा०) इत्यादिना सप्तम्या अलुक्। तेषां पाशः कलापः, श्लथस्य तस्य यः पातः तस्य भारादिवेति हेतूत्प्रेक्षा। "न पादादौ खल्वादयः" (५ अधि० १ अध्या० ५ सू०) इति वामनीयनिषेधेऽपि इवशब्दस्य पादादौ प्रयोगः

---

* यथा कश्चित् धूर्त्तः स्वभोगमात्रार्थमेव प्रणयपरायणः भोगक्लिष्टां चिरपरिचितामपि कामिनीं परिहाय नवीनामन्यामुपगच्छति, तथैवालिकुलमिति ध्वन्यते।

अधिकमरुणिमानमुद्वहद्भि-
र्विकसदशीतमरीचिरश्मिजालैः।
परिचितपरिचुम्बनाभियोगा-
दपगतकुङ्कुमरेणुभिः कपोलैः॥ ६३॥
अवसितललितक्रियेण बाह्वो-
र्ललिततरेण तनीयसा युगेन।

कवेरौद्दण्ड्यात्। * [नितराम्] अतिशयेन। अव्ययादामुप्रत्ययः। [नतिमद्भिरंसभागैः] उपलक्षिताभिर्नितम्बिनीभिरिति भाविना सम्बन्धः। एवमुत्तरत्रापि योज्यम्। नतांसत्वमुत्तमस्त्रीलक्षणम्। पुनः [घनमहतां] सान्द्रदीर्घाणां, [पक्ष्मणां भरेणेव] इति पूर्ववद्धेतूत्प्रेक्षा। [मुकुलितनयनैर्मुखारविन्दैः]। अत्रोत्प्रेक्षयोः संसृष्टिः॥ ६२॥

अधिकमिति।—पुनः, [परिचितपरिचुम्बनाभियोगात्] परिचितानां प्रणयिनां परिचुम्बनैरभियोगान्मर्दनात्, [अपगतकुङ्कुमरेणुभिः] अत एव [विकसदशीतमरीचिरश्मिजालैः] विकसन्ति वैमल्यात् प्रतिफलन्ति अशीतमरीचेरुष्णांशो रश्मिजालानि येषु तैः। असम्बन्धेऽपि सम्बन्धोक्त्यातिशयोक्तिः। अत एव [अधिकमरुणिमानमुद्वहद्भिः] कुङ्कुमापायेऽप्यातपलङ्घनादतिलोहितैरित्यर्थः। [कपोलैः] गण्डस्थलैः †॥ ६३॥

* निरर्थकानामेव खल्वादिशब्दानां निषेधादव उत्प्रेक्षाऽर्थकस्य इवशब्दस्य प्रयोगो न दुष्यति, इति केचित्। वस्तुतस्तु तत्र सूत्रे निरर्थकानामेव निषेध इत्यत्र प्रमाणाभावात् सुष्ठुक्तं मल्लिनाथेन; तथा हि, तत्सूत्रे वृत्तौ यदुक्तं,—"पादादौ खल्वादयः शब्दा न प्रयोज्याः। आदिशब्दः प्रकारार्थः। येषामादौ प्रयोगो न श्लिष्यति ते गृह्यन्ते। ते पुनर्वतहन्तप्रभृतयः" इति।

† काव्यलिङ्गमलङ्कारः।

सरसकिसलयानुरञ्जितैर्वा
करकमलैः पुनरुक्तरक्तभाभिः ॥ ६४ ॥
स्मरसरसमुरःस्थलेन पत्यु-
र्विनिमयसङ्क्रमिताङ्गरागरागैः ।
भृशमतिशयखेदसम्पदेव
स्तनयुगलैरितरेतरं निषण्णैः ॥ ६५ ॥

---

अवसितेति ।—पुनः, [ अवसितललितक्रियेण ] अवसिताः श्रमेण परिसमाप्ताः, ललिताः क्रियाः सुकुमारचेष्टा अपि यस्य तेन, [ ललिततरेण ] मृदुतरेण, [ तनीयसा ] तनुतरेण, [बाहुयुगेन], पुनः [ सरसकिसलयानुरञ्जितैर्वा ] सरसैरार्द्रैः किसलयैरनुरञ्जितैर्वा अनुरञ्जनं प्रापितैरिव ; पुनरुक्ता द्विगुणाः रक्ता भासो येषां तैः [पुनरुक्तरक्तभाभिः]। "हलि सर्वेषाम्" ( ८।३।२२ पा० ) इति यकारलोपः। [ करकमलैः ] पाणिपङ्कजैः। अत्रेतरजनकरापेक्षया पुनरुक्तरक्तत्वं स्वाभाविकमेव। तत्र किसलयरञ्जनहेतुकत्वमुत्प्रेक्ष्यते। इवार्थे वाशब्दः तदुत्प्रेक्षायां प्रयुक्तः ॥ ६४ ॥

स्मरेति ।—पुनः, [ स्मरसरसं ] स्मरेण सरसं सानुरागं यथा तथा, [ पत्युरुरःस्थलेन ] कर्त्रा। [ विनिमयसङ्क्रमिताङ्गरागरागैः ] विनिमयेन व्यतिहारेण, संक्रामितोऽङ्गरागोऽनुलेपनं, तेन रागो रञ्जनं येषु तैः, [ अतिशयखेदसम्पदा ] अतिशयोऽतिशयितो यः खेदस्तस्य सम्पदा महिम्ना [ इव ] इत्युत्प्रेक्षा। [ भृशम्, इतरेतरं निषण्णैः ] परस्परं संश्रितैः, [ स्तनयुगलैः ] * ॥ ६५ ॥

---

* अत्र हि कुचमण्डलानां घनसन्निविष्टतया अतिखेदहेतुकसंश्रितत्वमुत्प्रेक्षितम् ; तेन च लोकेऽपि यथा कैर्नाचिद्दमानिताववभौ तत्प्रतिविधातुमसमर्थतया महदनुतापवशात् परस्परं सन्तापाभिव्यक्तये मिलितौ भवतः, तथा कुचमण्डलानामपि युग्मसन्निहितावस्थानमिति व्यज्यते ।

अतनुकुचभराऽऽनतेन भूयः
श्रमजनिताऽऽनतिना शरीरकेण।
अनुचितगतिसादनिःसहत्वं
कलभकरोरुभिरूरुभिर्दधानैः ॥ ६६ ॥

अपगतनवयावकैश्चिराय
च्छितिगमनेन पुनर्वितीर्णरागैः।
कथमपि चरणोत्पलैश्चलद्भि-
र्भृशविनिवेशवशात्परस्परस्य ॥ ६७ ॥

---

अतन्विति।—पुनः, [अतनुकुचभराऽऽनतेन] अतनुना महता, कुचभरेण आनतेन नम्रेण, प्रागेवेति भावः। [भूयः] पुनश्च, [श्रमजनिताऽऽनतिना] श्रमजनिता आनतिर्यस्य तेन, [शरीरकेण] सुकुमारशरीरेण; किञ्च, [अनुचितगतिसादनिःसहत्वं] अनुचिता अनभ्यस्ता। 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः। तया गत्या पादचारेण, यः सादः कार्श्यं, तेन यन्निःसहत्वम् असहत्वं, तत् [दधानैः] गन्तुमक्षमैरित्यर्थः। न सहन्त इति निःसहाः। पचाद्यजन्तेनोपसर्गस्य समासे त्वप्रत्ययः। [कलभकरोरुभिः] कलभकराः करिहस्ता इव उरवो महान्तस्तैः, [ऊरुभिः] सक्थिभिः। 'सक्थि क्लीबे पुमानूरुः' इत्यमरः * ॥६६॥

अपगतेति।—पुनः, [चिराय] चिरं [च्छितिगमनेन, अपगतनवयावकैः] अपगतो नवयावको नवलाक्षारागो येषां तैः, [पुनः] तेनैव, [वितीर्णरागैः] सौकुमार्यादुत्पादितरागैः, [परस्परस्य, भृशविनिवेशवशात्] स्थिरन्यासबलात्, एकं स्थिरं निवेश्य तदवष्टम्भेन, इतरचालनक्रमेणेत्यर्थः। [कथमपि] महता प्रयत्नेन। 'कथमादि तथाऽप्यन्तं यत्नगौरवभेदयोः' इत्युत्पलः। [चलद्भिश्चरणोत्पलैः] † ॥ ६७ ॥

---

* उपमाऽलङ्कारः। † उपमाऽलङ्कारः।

मुहुरिति वनविभ्रमाऽऽभिषङ्गा-
दतमि तदा नितरां नितम्बिनीभिः ।
मृदुतरतनवोऽलसाः प्रकृत्या
चिरमपि ताः किमुत प्रयासभाजः ॥ ६८ ॥

प्रथममलघुमौक्तिकाभमासीत्
श्रमजलमुज्ज्वलगण्डमण्डलेषु ।
कठिनतरकुचाग्रपाति * पश्चा-
दथ शतशर्करतां जगाम तासाम् ॥ ६९ ॥

---

मुहुरिति ।—[ नितम्बिनीभिः ] उक्तधर्मोपलक्षिताभिः स्त्रीभिः, [ मुहुः, इति ] एवं, [ वनविभ्रमाऽऽभिषङ्गात् ] वनभ्रमणाऽऽसङ्गात्, [ तदा नितराम्, अतमि ] तान्तम् । तमेर्ण्यन्ताद्भावे लुङ् । "नोदात्तोपदेशस्य मान्तस्यानाचमेः" ( ७।३।३४ पा० ) इति वृद्धिप्रतिषेधः । युक्तञ्चैतदित्याह ।—[ मृदुतरतनवः ] अतिकोमलाङ्गाः, [ ताः ] स्त्रियः, [ प्रकृत्या, अलसाः ] जड़ाः, अथ [ चिरमपि प्रयासभाजः ] चेत् [ किमुत ] सुतरामलसाः स्युरित्यर्थः । अत्राप्रकृतनैसर्गिकाऽऽलस्यस्य कथनेनाऽऽगन्तुकस्य † कैमुत्यन्यायतः सिद्धत्ववर्णनादर्थापत्तिरलङ्कारः,—'एकस्य वस्तुनो भावाद् यत्र वस्त्वन्यदापतेत् । कैमुत्यन्यायतः सा स्यादर्थापत्तिरलङ्क्रिया ॥' इति लक्षणात् । श्रमश्चात्र सञ्चारी वाच्यः,—'श्रमः खेदोऽध्वरत्यादेः खेदोऽस्मिन्मर्दनादयः' इति लक्षणात् ॥ ६८ ॥

अथ श्रमानुभावं स्वेदं वर्णयति, प्रथममिति ।—[ अथ तासां ] स्त्रीणां, [ श्रमजलं प्रथमम्, उज्ज्वलगण्डमण्डलेषु ] उज्ज्वलगण्डस्थलेषु, [ अलघुमौक्तिकाभं ] स्थूलमुक्ताफलसदृशम्, [ आसीत् ] । [ पश्चात्

---

* अत्र "कठिनकुचतटाग्रपाति" इति ग्रन्थान्तरधृतपाठः ।

† तस्य ।

विपुलकमपि यौवनोद्धतानां
घनपुलकोदयकोमलं चकाशे ।
परिमलितमपि प्रियैः प्रकामं
कुचयुगमुज्ज्वलमेव कामिनीनाम् ॥ ७० ॥

अविरतकुसुमावचायखेदा-
न्निहितभुजालतयैकयोपकण्ठम् ।
विपुलतरनिरन्तरावलग्न-
स्तनपिहितप्रियवक्षसा ललम्बे ॥ ७१ ॥

---

कठिनतरकुचाग्रपाति] सत्, अथ पतनानन्तरं शतं शर्कराः शतशर्करम् । 'समाहारे द्विगुरेकवचनं वा टाबन्ते' इति नपुंसकत्वम् । तस्य भावः तत्ता तां [ शतशर्करतां ] शतशकलत्वं, [ जगाम ] । अत्रैकस्य श्रम-जलस्य क्रमेणानेकाश्रयसम्बन्धनिबन्धनात् पर्य्यायालङ्कारभेदः,—'क्रमे-णैकमनेकस्मिन्नाधारे वर्त्तते यदि । एकस्मिन्नथ वाऽनेकं पर्य्यायालङ्कृति-र्मता ॥' इति लक्षणात् ; स च मौक्तिकाभमित्युपमया संसृज्यते ॥६९॥

अन्येऽपि कुचमण्डलमविकृतशोभमित्याह, विपुलकमिति ।—[यौव-नोद्धतानां कामिनीनां कुचयुगं, विपुलकमपि] पुलकरहितमपि, [ घन-पुलकोदयकोमलं ] घनपुलकोदयेन सान्द्ररोमोद्गमेन, कोमलं सदिति विरोधः । विपुलं विस्तृतं तदेव विपुलकमित्यविरोधः । [ प्रियैः प्रकामं, परिमलितमपि ] परितो मलमस्येति परिमलं तत्कृतं परिमलितं मलिनीकृतं तथाऽपि, [ उज्ज्वलं ] विमलम्, [ एव चकाशे ] इति विरोधः । परिमलवत् कृतं परिमलितमित्यविरोधः । मत्वन्तात् "तत्क-रोति—" (ग०) इति णिचि कर्म्मणि क्तः । णाविष्ठवद्भावे विन्मतोर्लुक् । अपिर्विरोधे । विरोधाभासालङ्कारयोः संसृष्टिः ॥ ७० ॥

अथैकस्याः प्रियकण्ठावलम्बने श्रमानुभावमेकेनाह, अविरतेति ।—

अभिमतमभितः कृताङ्गभङ्गा
कुचयुगमुन्नतिवित्तमुन्नमय्य ।
तनुरभिलषितं क्लमच्छलेन
व्यवृणुत वेल्लितबाहुवल्लरीका ॥ ७२ ॥

---

[ अविरतकुसुमावचायखेदात् ] अविरतो यः कुसुमानामवचायो हस्तेन लवनम् । "हस्तादाने चेरस्तेये" ( ३।३।४० पा० ) इति घञ् । तेन यः खेदस्तस्मात्, भर्त्तुः [ उपकण्ठं ] कण्ठे । विभक्त्यर्थेऽव्ययीभावः । [ निहितभुजालतया ] निहिते भुजालते यया तथा । 'दोः प्रकोष्ठौ भुजो बाहुर्भुजा च स्मर्य्यते बुधैः' इति वैजयन्ती । * [ विपुलतरनिरन्तरावलग्नस्तनपिहितप्रियवक्षसा ] विपुलतरौ निरन्तरमवलग्नौ संश्लिष्टौ च यौ स्तनौ ताभ्यां पिहितं छादितं प्रियस्य वक्षो यया तया [ एकया ] स्त्रिया, [ ललम्बे ] लम्बितम् । भावे लिट् ॥ ७१ ॥

अथापरस्या अङ्गभङ्गाख्यमपरमनुभावमाह, अभिमतमिति ।—[ तनुः ] काचित् तन्वी । "वोतो गुणवचनात्" ( ४।१।४४ पा० ) इति विकल्पादनीकारः । [ अभिमतमभितः ] प्रियमभीत्यर्थः । [ उन्नतिवित्तम् ] औन्नत्येन प्रतीतम् । विदेर्भावार्थात् "वित्तो भोगप्रत्यययोः" ( ८।२।५८ पा० ) इति प्रत्ययार्थे निष्ठानत्वाभावनिपातः । [ कुचयुगम्, उन्नमय्य] उत्तुङ्गीकृत्य, [कृताङ्गभङ्गा] कृतोऽङ्गभङ्गो गात्रविजृम्भणं यया सा, तथा [वेल्लितबाहुवल्लरीका] वेल्लिते मिथो वेष्टिते, बाहुवल्लर्य्यौ भुजलते यया सा । "नद्यृतश्च" ( ५।४।१५३ पा० ) इति कप् । [ क्लमच्छलेन ] श्रमापनोदकचेष्टाव्याजेनेत्यर्थः । [ अभिलषितम् ] आलिङ्गनाद्यभिलषितं [व्यवृणुत] प्रकटितवती । वृणोतेर्लङ् । प्रौढेयमुत्सुका च ॥ ७२ ॥

---

* कोषप्रमाणात् भुजार्थे भुक्तस्यापि भुजाशब्दस्य प्रयोगः कविभिर्नादृत इत्ययुक्तता-नामदोषः ।

हिमलवसदृशः श्रमोदविन्दू-
नपनयता किल नूतनोढवध्वाः।
कुचकलशकिशोरकौ कथञ्चि-
त्तरलतया तरुणेन पस्पृशाते ॥ ७३ ॥

गत्वोद्रेकं जघनपुलिने रुद्धमध्यप्रदेशः
क्रामन्नूरुद्रुमभुजलताः पूर्णनाभीह्रदान्तः।
उल्लङ्घ्योच्चैः कुचतटभुवं प्लावयन् रोमकूपान्
स्वेदापूरो युवतिसरितां व्याप गण्डस्थलानि ॥७४॥

---

अथ कस्याश्चिन्मुग्धायाः प्रियचापलोक्तिद्वारा स्वेदोद्गमं प्रकटयति, हिमेति।—[ हिमलवसदृशः ] हिमकणनिभान् [ श्रमोदविन्दून् ] स्वेदविन्दूनित्यर्थः। "मन्थौदन—" ( ६।३।६० पा० ) इत्यादिना उदकस्योदादेशः। [ अपनयता किल ] प्रमार्जतेव, न तु तत्र तात्पर्य्यमिति भावः। [ तरुणेन ] यूना, [ नूतनोढवध्वाः ]। कुचौ कलशाविव तौ च किशोरकाविव उच्छलनसाम्यादश्वशावाविव। 'अश्वशावः किशोरकः' इत्यमरः। तौ [ कुचकलशकिशोरकौ ]। उभयत्राप्युपमितसमासः। [ कथञ्चित् ] क्लेशेन, सप्रतिषेधमेवेत्यर्थः। [ तरलतया ] चपलतया, उत्सुकतयेत्यर्थः। [ पस्पृशाते ] स्पृष्टौ। स्पृशेः कर्म्मणि लिट्। मुग्धेयम् * ॥ ७३ ॥

अथ सर्वासामेव स्वेदोद्रेकं वर्णयति, गत्वेति।—[ युवतिसरितां ] युवतय एव सरितस्तासां, [स्वेदापूरः] स्वेद एवापूरः प्रवाहः, [ जघनपुलिने ] जघनमेव पुलिनं तत्र [गत्वोद्रेकम्] उद्रेकं गत्वा, [रुद्धमध्यप्रदेशः] रुद्ध आवृतो मध्यप्रदेशोऽवलग्नभागः, प्रवाहदेशश्च येन सः, [पूर्णनाभीह्रदान्तः]। रेफान्तमकारान्तं वा। पूर्णेति पूरेर्ण्यन्तात् कर्म्मणि

---

* उपमाद्वयस्य उत्प्रेक्षायाश्च संसृष्टिः।

प्रियकरपरिमार्गादङ्गनानां यदाऽभूत्
पुनरधिकतरैव स्वेदतोयोदयश्रीः ।
अथ वपुरभिषेक्तुन्तास्तदाऽम्भोभिरीषु-
र्वनविहरणखेदम्लानमम्लानशोभाः ॥ ७५ ॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
वनविहारो नाम सप्तमः सर्गः ॥ ७ ॥

---

क्तः "वा दान्त—" (७।२।२७ पा०) इत्यादिना णिलुगिट्प्रतिषेध-निपातः। [उच्चैः] उन्नतौ [कुचतटभुवं] कुचावेव तटौ तयोर्भुवं प्रदेशम्, [उल्लङ्घ्य, रोमकूपान्] रोमाणि रोमरन्ध्राणि, तान्येव कूपान्, [प्लावयन्] पूरयन्, [ ऊरुद्रुमभुजलताः क्रामन्, * गण्डस्थलानि ] कपोलभागान्, उन्नतभूभागांश्च, [व्याप] प्राप। अत्र युवतिषु सरित्त्वस्य तदवयवेष्ववयवानाञ्च निरूपणात् समस्तवस्तुविषयसावयवरूपकं श्लेषानुप्राणितम्; तच्च एकस्यानेकत्रवृत्तिरूपेण पर्य्यायेण सङ्कीर्णम्। मन्दाक्रान्ता वृत्तं,— "मन्दाक्रान्ता जलधिषड्गैर्म्भौं नतौ ताद्गुरू चेत्" इति लक्षणात् ॥७४॥

एवमध्वश्रमानुभावं स्वेदोद्रेकं वर्णयित्वा तत्फलभूतां जलविहारेच्छामाऽऽसां दर्शयति, प्रियेति।—[यदा अङ्गनानां, प्रियकरपरिमार्गात्] प्रियकरस्पर्शात्। मृजेर्घञ्प्रत्ययः। [स्वेदतोयोदयश्रीः] स्वेदोद्गमसम्पत्, [पुनः] भूयोऽपि, [अधिकतरैव अभूत् तदा, अम्लानशोभाः] अक्षीणकान्तयः, वपुषि म्लानेऽपीति भावः। [ताः] अङ्गना, [ वनविहरणखेदम्लानं ] वनविहरणखेदेन म्लानम्। म्लायतेः कर्त्तरि क्तः, "संयोगादेरतो धातोर्यण्वतः" (८।२।४३ पा०) इति निष्ठानत्वम्। [वपुः] अङ्गम्; [अथ] कार्त्स्न्येन। 'मङ्गलानन्तराऽऽरम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः। [अम्भोभिरभिषेक्तुम्, ईषुः] इच्छन्ति स्म। इषे-

---

* ऊरवं एव द्रुमाः ऊरुद्रुमाः, भुजा एव लताः भुजलताः, ते च ताश्च इत्युभयोः पूर्वपदस्य विशेषणत्वं स्वीकृत्य कर्म्मधारयसमासः, ताः क्रामन् परिपूरयन्।

# अष्टमः सर्गः ।

आयासादलघुतरस्तनैः स्तनद्भिः
श्रान्तानामविकचलोचनारविन्दैः ।
अभ्यम्भः कथमपि योषितां समूहै-
स्तैरुर्वीनिहितचलत्पदं प्रचेले ॥ १ ॥

---

लिट्। अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थसमर्थनहेतुकत्वेनोपनिबन्धात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। मालिनी वृत्तम् ॥ ७५ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये सप्तमः सर्गः ॥ ७ ॥

---

अथ वपुरभिषेक्तुं तास्तदाम्भोभिरीषुरित्युक्तं, तदेव वर्णयितुमारभते, आयासादिति ।—[ अलघुतरस्तनैः ] पृथुतरकुचैरिति मान्द्यहेतूक्तिः । [ स्तनद्भिः ] भूषाभिः श्रमश्वासैर्वा शब्दायमानैः। 'स्तन शब्दे' इति धातोर्लटः शत्रादेशः। [ अविकचलोचनारविन्दैः ] श्रमनिमीलिताक्षिपद्मैः * [आयासात्] वनविहारखेदात्, [श्रान्तानां] क्लान्तानां, [योषितां तैः समूहैः] कर्तृभिः। [ उर्वीनिहितचलत्पादं ] उर्व्यां निहितानि निक्षिप्तानि। 'डुधाञ् धारणे' इति धातोः कर्मणि क्तः। तथैव चलन्ति पदानि यस्मिन् कर्मणि तत् यथा तथा, उत्क्षेपणाशक्त्या भुवि बलादाकृष्यमाणचरणमित्यर्थः। [ अभ्यम्भः ] अम्भः प्रति, [ कथमपि, प्रचेले ] प्रचलितम्। भावे लिट्। स्वभावोक्तिरलङ्कारः,—

---

* इत्युपमा।

यान्तीनां सममसितभ्रुवां नतत्वा-
दंसानां महति नितान्तमन्तरेऽपि ।
संसक्तैर्विपुलतया मिथो नितम्बैः
सम्बाधं बृहदपि तद् बभूव वर्त्म ॥ २ ॥

नीरन्ध्रद्रुमशिशिरां भुवं व्रजन्तीः
साशङ्कं मुहुरिव कौतुकात्करैस्ताः ।
पस्पर्श क्षणमनिलाऽऽकुलीकृतानां
शाखानामतुहिनरश्मिरन्तरालैः ॥ ३ ॥

---

'स्वभावोक्तिरसौ चारु यथावद् वस्तुवर्णनम्' इति लक्षणात् । अस्मिन् सर्गे प्रहर्षिणी वृत्तं,—'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति लक्षणात् ॥ १ ॥

यान्तीनामिति ।—[ समं ] पङ्क्तिशः, [ यान्तीनाम् ]। "आच्छीनद्योर्नुम्" ( ७।१।८० पा० ) इति वैकल्पिको नुमागमः । [ असितभ्रुवां ] स्त्रीणाम्, [ अंसानां नतत्वात् ] हेतोः [ नितान्तं महति, अन्तरे ] अवकाशे सति, [ अपि विपुलतया ] हेतुना [ मिथः संसक्तैः ] अन्योऽन्यश्लिष्टैः, [ नितम्बैः, बृहत् ] विस्तृतम्, [ अपि तद्वर्त्म ]; सम्बाध्यत इति [ सम्बाधं ] सङ्कटम् । 'सङ्कटं ना तु सम्बाधः' इत्यमरः । घञन्तस्यापि विशेष्यलिङ्गत्वं सम्बाधमनुवर्त्तत इति भाष्यकारादिप्रयोगादिष्यते । [ बभूव ] नतांसत्वनितम्बवैपुल्योक्त्या सौन्दर्यातिशय उक्तः । असम्बाधेऽपि सम्बाधाभिधानादतिशयोक्तिः ॥ २ ॥

नीरन्ध्रेति ।—[ नीरन्ध्रद्रुमशिशिरां ] नीरन्ध्रैः सान्द्रैर्द्रुमैः शिशिरां, [भुवं, व्रजन्तीः] गच्छन्तीः, [ताः] स्त्रीः [अतुहिनरश्मिः] उष्णांशुः, [क्षणम्, अनिलाऽऽकुलीकृतानाम् ] अनिलेन, आकुलीकृतानां चालितानां, [शाखानाम्, अन्तरालैः] नीरन्ध्रत्वेऽपि मुहुरनिलचालनजनितैरवकाशैः,

एकस्यास्तपनकरैः करालितायाः
विभ्राणः सपदि सितोष्णवारणत्वम् ।
सेवायै वदनसरोजनिर्जितश्री-
रागत्य प्रियमिव चन्द्रमाश्चकार ॥ ४ ॥
स्वं रागादुपरि वितन्वतोत्तरीयं
कान्तेन प्रतिपदवारिताऽऽतपायाः ।

---

[ मुहुः, कौतुकात् ] औत्सुक्यात्, [ इव, साशङ्कं ] परदारत्वात् सभय-मित्यर्थः । [ करैः, पस्पर्श ] स्पृष्टवान् । अत्र चलच्छाखाहेतुकस्य तपन-करस्पर्शस्यौत्सुक्यहेतुकत्वोत्प्रेक्षणात् गुणहेतूत्प्रेक्षा * ॥ ३ ॥

अथ कस्याश्चिद्धृतं श्वेताऽऽतपत्रं चन्द्रत्वेनोत्प्रेक्षते, एकस्या इति ।—[ वदनसरोजनिर्जितश्रीः ] वदनसरोजेन स्त्रीमुखपङ्कजेन निर्जित श्रीः, [ चन्द्रमाः ] । एतेन वदनसरोजस्य चन्द्रविजयात् सरोजान्तरवैलक्षण्यं चन्द्रस्य निकृष्टत्वञ्चोक्तम् । अत एव [ सेवायै ] तत्सेवनार्थम्, [ आगत्य तपनकरैः, करालितायाः ] भीषितायाः, पीड़ितायाः इत्यर्थः । 'करालो भीषणेऽन्यवत्' इति विश्वः । एतेन सेवाऽवकाशो दर्शितः । [ एकस्याः ] कस्याश्चिदङ्गनायाः, [ सपदि ] आतपक्षणे एव, [ सितोष्णवारणत्वं ] स्वयमेव श्वेताऽऽतपत्रत्वं, [ बिभ्राणः ] सन्, [ प्रियं चकारेव ] इति क्रिया-स्वरूपोत्प्रेक्षा । पराजितः कयाचित् सेवनया जेतुश्चित्तसन्तोषमुपा-र्जयतीति भावः ॥ ४ ॥

स्वमिति ।—[ रागात् ] हेतोः, [ उपरि ] प्रियाया मूर्द्धनि, [ स्वं ] स्वकीयम्, [ उत्तरीयं, वितन्वता ] विस्तारयता, [ कान्तेन ] प्रियेण,

---

* उत्प्रेक्षाऽलङ्कारेण च उपांशौ परदाराऽऽकर्षणे भीतीत्कण्ठितस्य अप्रस्तुत-विटजनस्य अवसरकृतहस्तकरणकतत्स्पर्शव्यवहारप्रतीतेः श्लिष्टकरशब्देन तत्पोषकतया च समासोक्तिरव ध्वन्यते ।

सच्छत्त्रादपरविलासिनीसमूहा-
च्छायाऽऽसीदधिकतरा तदाऽपरस्याः ॥ ५ ॥
संस्पर्शप्रभवसुखोपचीयमाने
सर्वाङ्गे करतललग्नवल्लभायाः ।
कौशेयं व्रजदपि गाढतामजस्रं
सस्रंसे विगलितनीवि नीरजाक्ष्याः ॥ ६ ॥

---

[ प्रतिपदवारितातपायाः ] प्रतिपदं पदे पदे, वारितः आतपो यस्याः तस्या [अपरस्याः] कस्याश्चिदङ्गनायाः, [ सच्छत्त्रात् ] छत्त्रयुक्तात्, [ अपरविलासिनीसमूहात् ] सकाशात् । "पञ्चमी विभक्ते:" (२।३।४० पा०) इति पञ्चमी । [ अधिकतरा, छाया ] अनातपः, कान्तिश्च, [ तदा आसीत् । छत्त्रच्छायातोऽपि कान्तस्वहस्तधृतोत्तरीयच्छायैवानन्यसाधारणी ज्यायसी च । मुखकान्तिरपि तस्या एव भूयसीति भावः । 'छाया त्वनातपे कान्तौ' इत्यमरः । एतेन सच्छत्त्रादच्छत्त्रस्याधिकच्छायेति विरोधोऽपि निरस्त इति विरोधाभासोऽलङ्कारः ॥ ५ ॥

संस्पर्शेति ।—[ करतललग्नवल्लभायाः ] करतले लग्नो वल्लभो यस्यास्तस्याः स्वहस्तेन तद्धस्तं गृहीत्वा गच्छन्त्या इत्यर्थः ; अत एव [ नीरजाक्ष्याः सर्वाङ्गे, संस्पर्शप्रभवसुखोपचीयमाने ] संस्पर्शप्रभवेण प्रियाऽङ्गसङ्गप्रभवेण सुखेनोपचीयमाने पोषं गमिते सति ; अत एव [ गाढतां ] दृढत्वं, [ व्रजदपि विगलितनीवि ] सुखपारवश्याद्विश्लिष्टग्रन्थि [ कौशेयं ] दुकूलम्, [ अजस्रं, सस्रंसे ] स्रस्तम् । * एषा हृष्टा हर्षितरोमा च ॥ ६ ॥

---

* गाढमपि स्रस्तमिति विरोधो नीवीविगलनहेतुसमाहित इति विरोधाभासोऽलङ्कारः ।

गच्छन्तीरलसमवेक्ष्य विस्मयिन्य-
स्तास्तन्वीर्न विदधिरे गतानि हंस्यः।
बुद्ध्वा वा जितमपरेण काममाऽऽवि-
ष्कुर्वीत स्वगुणमपत्रपः क एव ? ॥ ७ ॥
श्रीमद्भिर्जितपुलिनानि माधवीना-
मारोहैर्निविड़बृहन्नितम्बबिम्बैः।
पाषाणस्खलनविलोलमाशु नूनं
वैलक्ष्याद् ययुरवरोधनानि सिन्धोः ॥ ८ ॥

---

गच्छन्तीरिति।—[हंस्यः] हंसाङ्गनाः, [अलसं] मन्दं, [गच्छन्तीस्ताः, तन्वीः] स्त्रीः, [अवेक्ष्य, विस्मयिन्यः] गतिसौष्ठवाद्विस्मयवत्यः सत्यः, [गतानि] स्वयं लीलागमनानि, [न विदधिरे] न चक्रुः; लज्जयेति भावः। तथा हि [अपरेण] परेण, [जितं स्वगुणं, बुद्ध्वा वा] बुद्ध्वाऽपीत्यर्थः। [क एव] को वा, [अपत्रपः] सन् [कामम्, [आविष्कुर्वीत] प्रकाशयेत्? न कश्चिदपीत्यर्थः। "इदुदुपधस्य चा प्रत्ययस्य" (८।३।४१ पा०) इति विसर्जनीयस्य षत्वम्। अत्र तिरश्चां विवेकित्वातिशयोक्त्या गतिकरणनिषेधसमर्थनार्थोऽयमर्थान्तरन्यासः * ॥ ७ ॥

श्रीमद्भिरिति।—[श्रीमद्भिः] शोभावद्भिः, [निविड़बृहन्नितम्बबिम्बैः] निविड़ा बृहन्तश्च नितम्बबिम्बाः कटिपश्चाद्भागा येषां तैः, [माधवीनां] माधवस्येमाः माधव्यस्तासां हरिवधूनाम्, आरुह्यन्त इति [आरोहैः] कटिपुरोभागैः, जघनैरित्यर्थः, [जितपुलिनानि] जित-

---

* अत्र तन्वीनां सविलासगतिदर्शनेन हंसीनां गमनाभावसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिः।

मुक्ताभिः सलिलरयास्तशुक्तिपेशी-
मुक्ताभिः कृतरुचि सैकतं नदीनाम् ।
स्त्रीलोकः परिकलयाञ्चकार तुल्यं
पल्यङ्कैर्विगलितहाररचारुभिः स्वैः ॥ ९ ॥
आघ्राय श्रमजमनिन्द्यगन्धबन्धुं
निश्वासश्वसनमसक्तमङ्गनानाम् ।

---

सैकतानि, [ सिन्धोरवरोधनानि ] समुद्रमहिष्यो नद्य इत्यर्थः । [ वैलक्ष्यात् ] पराजयकृतमनःसङ्कोचाद्धेतोः, [ पाषाणस्खलनविलोलं ] पाषाणेषु स्खलनेन अभिघातेन विलोलं यथा तथा, [ आशु, ययुः ] अगुः, [ नूनम् ] । नदीनां स्वाभाविक्याः पाषाणस्खलिताशुगतेः वैलक्ष्यहेतुकत्वोत्प्रेक्षणात् गुणहेतूत्प्रेक्षा ॥ ८ ॥

मुक्ताभिरिति ।—[ स्त्रीलोकः ] स्त्रीजनः कर्त्ता । [ सलिलरयास्तशुक्तिपेशीमुक्ताभिः ] सलिलरयेणास्ता नुन्नाः शुक्तयो मुक्तास्फोटास्त एव पेश्यः कोशाः, पुटा इति यावत् । 'मुक्तास्फोटः स्त्रियां शुक्तिः' इति 'पेशी कोशी द्विहीनेऽण्डम्' इति चामरः । ताभिः मुक्ताभिः विमुक्ताभिः [ मुक्ताभिः ] मौक्तिकैः । 'अथ मौक्तिकं मुक्ता' इत्यमरः । [ कृतरुचि ] कृतशोभं, [ नदीनां ] सिकतामयं [ सैकतं ] पुलिनम् । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः । "सिकताशर्कराभ्याञ्च" ( ५।२।१०४ पा० ) इत्यण्प्रत्ययः । [ विगलितहारचारुभिः ] विगलितैर्विशीर्णैर्हारैः चारुभिः [ स्वैः, पल्यङ्कैः ] शयनैः । 'शयनं मञ्चपर्य्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः । [ तुल्यं ] सदृशं, [ परिकलयाञ्चकार ] मेने । पूर्णोपमेयम ॥ ९ ॥

आघ्रायेति । -[ भृङ्गैः ] कर्तृभिः । [ श्रमजम् ] अध्वश्रमोत्थम्, [ अनिन्द्यगन्धबन्धुं ] अनिन्द्यगन्धस्य श्लाघ्यगन्धस्य बन्धुं सहचरं, तद्वन्तमित्यर्थः । [ अङ्गनानां, निश्वासश्वसनं ] निश्वासमारुतम्, [ असक्तम् ]

आरण्याः सुमनस ईषिरे न भृङ्गै-
रौचित्यं गणयति को विशेषकामः ? ॥१०॥
आयान्त्यां निजयुवतौ वनात् सशङ्कं
बर्हाणामपरशिखण्डिनीं भरेण ।
आलोक्य व्यवदधतं पुरो मयूरं
कामिन्यः श्रदधुरनार्जवं नरेषु ॥ ११ ॥
आलापैस्तुलितरवाणि माधवीनां
माधुर्य्यादमलपतत्रिणां कुलानि ।

---

अप्रतिषिद्धम्, [ आघ्राय ], अरण्ये भवाः [आरण्याः, सुमनसः] पुष्पाणि, [ नेषिरे ] नेष्टाः । 'इषु इच्छायां' कर्मणि लिट् । अनुचितोऽयमकाण्डे परिचितपरित्याग इत्याह,—विशेषं कामयते इति [ विशेषकामः ] । "शीलिकामिभिक्षाचरिभ्यो णः" (वा०) इति णप्रत्ययः । [ कः औचित्यं गणयति ? ] न कोऽपीत्यर्थः । अर्थान्तरन्यासः ॥ १० ॥

आयान्त्यामिति ।—[ निजयुवतौ वनात्, आयान्त्याम् ] आगच्छन्त्यां सत्यां, [ सशङ्कं ] सभयम्, [ अपरशिखण्डिनीं ] जारिणीं, [ बर्हाणां भरेण, व्यवदधतं ] छादयन्तं, [ मयूरं पुर आलोक्य, कामिन्यः नरेषु ] प्रियेषु, [ अनार्जवं ] कौटिल्यं, [ श्रदधुः ] विश्वस्तवत्यः, कुटिलाः पुरुषा इति निश्चिक्युरित्यर्थः । * दधातेर्लुङि "गातिस्था—" ( २।४।७७ पा० ) इत्यादिना सिचो लुक्, "आतः" ( ३।४।११० पा० ) इति झेर्जुसादेशः । "श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या" (वा०) इति श्रच्छब्दस्य धातोः प्राक् प्रयोगः ॥ ११ ॥

आलापैरिति ।—[ माधवीनां ] हरिबधनाम्, [ आलापैः ]

---

* तिर्य्यञ्चोऽपि यत् निजयुवतिभयात् जारिणीं गोपायितुमभियतन्ते, स्वभावचतुराः नरास्तु सुतरामतीव धूर्त्तबुद्धिसम्पन्ना इत्यभिप्रायः ।

अन्तर्द्धामुपययुरुत्पलावलीषु
प्रादुःष्यात् क इव जितः पुरः परेण ?॥ १२॥
मुग्धायाः स्मरललितेषु चक्रवाक्या
निःशङ्कं दयिततमेन चुम्बितायाः ।
प्रारेभानभि विदधुर्विधूतहस्ताः
शीत्कारं समुचितमुत्तरं तरुण्यः ॥ १३ ॥
उत्क्षिप्तस्फुटितसरोरुहार्घ्यमुच्चैः
सस्नेहं विहगरुतैरिवाऽऽलपन्ती ।

---

कर्तृभिः । [ माधुर्य्यात् ] हेतोः [ तुलितरवाणि ] तिरस्कृतरुतानि, [ अमलपतत्रिणां ] हंसानां, [ कुलानि उत्पलावलीषु, अन्तर्द्धाम् ]। "अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्" (वा०) इति अन्तःशब्दस्योपसर्गत्वात् "आतश्चोपसर्गे" ( ३।३।१०६ पा० ) इत्यङ्प्रत्ययः । [उपययुः ]। युक्तं चैतदित्याह,—तथा हि, [ परेण जितः कः, इव ] इवशब्दो वाक्यालङ्कारे [ पुरः ] जेतुरग्रे, [ प्रादुःष्यात् ? ] प्रादुर्भवेत् ? "उपसर्गप्रादुर्भ्यामस्तिर्य्यच्परः" ( ८।३।८७ पा० ) इति षत्वम् । अर्थान्तरन्यासः ॥ १२ ॥

मुग्धाया इति ।—[ दयिततमेन, निःशङ्कं ] निर्विचारं, [ चुम्बितायाः ] दष्टायाः, [ स्मरललितेषु ] चुम्बनाद्यनन्तरकृत्येषु शीत्कारादिकामचेष्टितेषु, [ मुग्धायाः ] मूढायाः, [चक्रवाक्याः, समुचितं ] योग्यं, [ शीत्कारं ] शीत्काररूपम्, [ उत्तरं ] कृत्यं, [ तरुण्यः ] स्वयं [प्रारेभान् अभि विधूतहस्ताः ] सत्यः [ विदधुः ]। तादात्म्यभावनया स्वयं दष्टा इव शीच्चक्रुरिति शीत्कारासम्बन्धे तत्सम्बन्धातिशयोक्त्या तत्तासामुद्दीपकमासीदित्युक्तम् * ॥ १३ ॥

---

* चुम्बनशीत्कारयोः कार्य्यकारणयोर्वैयधिकरण्यादसङ्गतिरलङ्कारः ।

नारीणामथ सरसी सफेनहासा
प्रीत्येव व्यतनुत पाद्यमूर्मिहस्तैः ॥ १४ ॥
नित्याया निजवसतेर्निरासिरे यत्
रागेण श्रियमरविन्दतः कराग्रैः।
व्यक्तत्वं नियतमनेन निन्युरस्याः
सापत्न्यं क्षितिसुतविद्विषो महिष्यः ॥ १५ ॥

---

उत्क्षिप्तेति।—[ अथ ] अनन्तरम्, [ उत्क्षिप्तस्फुटितसरोरुहार्घ्यम् ] उत्क्षिप्तं स्फुटितसरोरुहं विकचारविन्दमेवार्घ्यमर्घ्यद्रव्यं यस्मिंस्तत्तथा, [ सस्नेहं विहगरुतैरुच्चैः, आलपन्ती ] स्वागतादिवचनं व्याहरन्ती, [इव] स्थिता इत्युत्प्रेक्षा। फेन इव हासः * तेन सहिता [ सफेनहासा ] स्मितपूर्वाभिभाषिणीत्यर्थः। [ सरसी ] पुष्करिणी, [नारीणाम्, ऊर्मिहस्तैः] ऊर्मिभिरेव हस्तैः, [पाद्यं] पादोदकम्। "पादार्घाभ्यास्त्र" ( ५।४।२५ पा० ) इति यत्प्रत्ययः [ प्रीत्येव ] इत्युत्प्रेक्षा। [ व्यतनुत ]। रूपकानुप्राणितोत्प्रेक्षाद्वयस्य सापेक्षत्वात् संसृष्टिः † ॥ १४ ॥

नित्याया इति।—[ क्षितिसुतविद्विषः ] नरकद्विषो हरेः, [ महिष्यः, कराग्रैः ] पाणिपल्लवैः करणैः [ यत्, रागेण ] रक्तवर्णेन, इच्छया च, [ श्रियं ] शोभां, रमाञ्च, [ नित्यायाः ] सदातन्याः, [ निजवसतेः ] स्ववासात् [ अरविन्दतः ] अरविन्दात्, [ निरासिरे ] निष्काशयाञ्चक्रुः, निश्चक्रुशेति यावत्। "उपसर्गादस्यत्यूह्योर्वा वचनम्" ( वा० ) इति विकल्पादात्मनेपदम्। [ अनेन ] निरासेन, [ अस्याः ] श्रियः, [ सापत्न्यं ] सपत्नीत्वम्। ब्राह्मणादित्वात् ष्यञ्प्रत्ययः। [ नियतं, व्यक्तत्वं निन्युः ] व्यक्तीचक्रुरित्यर्थः। अत्र श्रीशब्देन रमाशोभयोरभेदाध्यवसायेन श्रीनि-

---

* फेनः एव हास इति युक्तं प्रतिभाति, सरसीनां प्रकृतहासासम्भवेन फेने हासत्वारोपस्यैव युक्तत्वात्।

† सङ्कर इति पाठो युक्तः, सापेक्षयोः संसृष्ट्यसम्भवात्।

आस्कन्दन् कथमपि योषितो न याव-
द्भीमत्यः प्रियकरधार्य्यमाणहस्ताः ।
औत्सुक्यात्त्वरितममूस्तदम्बु तावत्
सङ्क्रान्तप्रतिमतया दधाविवान्तः ॥ १६ ॥

ताः पूर्वं सचकितमाऽऽगमय्य गाधं
कृत्वाऽथो मृदुपदमन्तराऽऽविशन्त्यः ।
कामिन्यो मन इव कामिनां सरागै-
रङ्गैस्तज्जलमनुरञ्जयाम्बभूवुः ॥ १७ ॥

---

रासस्य सापत्न्यव्यक्तीकरणार्थत्वोत्प्रेक्षणात् श्लेषप्रतिभोत्थापितातिशयोक्त्यनुप्राणितेयं फलोत्प्रेक्षेति सङ्करः ॥ १५ ॥

आस्कन्दन्निति ।—[ भीमत्यः ] प्रवेशभीरवः, [ योषितः, प्रियकरधार्य्यमाणहस्ताः ] प्रियकरैर्धार्य्यमाणहस्ताः प्रियकरावलम्बाः सत्यः, [यावत् कथमपि, नास्कन्दन्] न प्राविशन्, [तावत्, सङ्क्रान्तप्रतिमतया] सङ्क्रान्तप्रतिविम्बतया, [ तदम्बु ] कर्त्तृ [ औत्सुक्यात् ] उत्कण्ठया, [ त्वरितममूः, अन्तर्दधाविव ] अन्तः प्रावेशयदिवेत्यर्थः । प्रतिविम्बसङ्क्रमणादन्तर्द्धानोत्प्रेक्षणात् क्रियानिमित्ता क्रियास्वरूपोत्प्रेक्षा ॥१६॥

ता इति ।—[ ताः कामिन्यः, कामिनां ] कामुकानां, [ मन इव तज्जलं, पूर्वं ] प्रथमं, [ सचकितं ] सभयं यथा तथा, [गाधम्] उत्तानम्, [ आगमय्य ] गमनेन ज्ञात्वा, पुरःप्रविष्टपुरुषमुखेन गाधं तदिति परामृश्येत्यर्थः ; अन्यत्र,— दूतमुखेन ज्ञात्वेत्यर्थः । [ अथो ] अनन्तरं, [ मृदु ] मन्दं, [पदं कृत्वा ] पदं न्यस्य ; अन्यत्र तु,—स्वयं सम्भाषणादिकं कृत्वेत्यर्थः । [अन्तराऽऽविशन्त्यः] अन्तरमभ्यन्तरमाऽऽविशन्त्यः प्रविष्टाः सत्यः ; अन्यत्र,—रहस्यकर्मणि प्रवृत्ता इत्यर्थः । [सरागैः] साङ्गरागैः सानुरागैश्च,

सङ्क्षोभं पयसि मुहुर्महेभकुम्भ-
श्रीभाजा कुचयुगलेन नीयमाने।
विश्लेषं युगमगमद्रथाङ्गनाम्नो-
रुद्वृत्तः क इव सुखावहः परेषाम्? ॥१८॥
आसीना तटभुवि सस्मितेन भर्त्रा
रम्भोरूरवतरितुं सरस्यनिच्छुः।
धुन्वाना करयुगमीक्षितुं विलासान्
शीतालुः सलिलगतेन सिच्यते स्म ॥ १९ ॥

---

[अङ्गैः] गात्रैः, [अनुरञ्जयाम्बभूवुः] तद्वर्णाक्रान्तं चक्रुः; अन्यत्र,—त्वनुरक्तं चक्रुरित्यर्थः। श्लेषसङ्कीर्णेयमुपमा ॥ * ॥ १७ ॥

सङ्क्षोभमिति।—[महेभकुम्भश्रीभाजा] तत्सदृशश्रीभाजेत्यर्थः; अत एवासम्भवद्वस्तुसम्बन्धो निदर्शनाऽलङ्कारः। [कुचयुगलेन] उल्लसितेनेति भावः। [पयसि मुहुः सङ्क्षोभं, नीयमाने] प्राप्यमाणे सति, [रथाङ्गनाम्नोर्युगं] चक्रवाकयुगलं, [विश्लेषं] वियोगम्, [अगमत्] वियोगासह्यमपीति भावः। तथा हि, [उद्वृत्तः] उन्नतौ वृत्तश्च उद्वर्त्तनं यस्येति वा उद्वृत्तः; अन्यत्र,—उद्वृत्तः उन्मार्गवर्त्तीति यावत्। स [क इव] को वा, [परेषां] स्वेतरेषां, [सुखावहः?] सुखकरः? न कोऽपीत्यर्थः। अयञ्च श्लेषमूलातिशयोक्तिजीवितोऽर्थान्तरन्यासः ॥ १८ ॥

आसीनेति।—शीतं न सहत इति [शीतालुः] शीतभीरुः। "शीतोष्णाभ्यां तदसहने आलुच् वक्तव्यः" (वा०) इत्यालुच्। अत एव [सरसि, अवतरितुं] प्रवेष्टुम्, [अनिच्छुः] अनभिलाषुका, अत एव [तटभुवि, आसीना] उपविष्टा। आसेः कर्त्तरि शानच्। "ईदासः"

---

* तथा "तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः" इति दर्पणोक्तलक्षणादत्र जलस्य अङ्गरागादिनाऽनुरञ्जनत्वकथनात् तद्गुणालङ्कारः।

नेच्छन्ती सममसुना सरोऽवगाढुं
रोधस्तः प्रतिजलमीरिता सखीभिः ।
आश्लिक्षद्भयचकितेक्षणं नवोढा
वोढारं विपदि न दूषिताऽतिभूमिः ॥ २० ॥
तिष्ठन्तं पयसि पुमांसमंसमात्रे
तद्दघ्नं तदवयती किलाऽऽत्मनोऽपि ।

---

( ७।२।८२ पा० ) इतीकारः। रम्भे कदलीस्तम्भाविवोरू यस्याः सा [ रम्भोरूः ] स्त्री । "ऊरूत्तरपदादौपम्ये" (४।१।६९ पा०) इत्यूङ्प्रत्ययः । [सलिलगतेन] स्वयं सलिलं गतेन प्रविष्टेन, [ सस्मितेन भर्त्रा विलासानोचितं करयुगं, धुन्वाना ] कम्पयन्ती । धुनोतेः कर्त्तरि शानच्प्रत्ययः । [सिच्यते स्म ] सिक्ता ॥ १९ ॥

नेच्छन्तीति ।—[ अमुना समम् ] अनेन भर्त्रा सह, [सरः, अवगाढुम्] अवगाहितुम् । "स्वरतिसूतिसूयतिधूञूदितो वा" ( ७।२।४४ पा० ) इति विकल्पान्नेडागमः । [ नेच्छन्ती ] लज्जया अनिच्छन्ती । नञर्थस्य नशब्दस्य सुप्सुपा * इति समासः, नञ्समासो वा । अथ [ सखीभिः, प्रतिजलं ] जलं प्रति, [ रोधस्तः ] रोधसः । पञ्चम्यास्तसिल् । [ ईरिता ] नुन्ना, [ नवोढा ] नववधूः, [ भयचकितेक्षणं ] भयेन चकितेक्षणं सम्भ्रान्तदृष्टि यथा तथा, [वोढारं] भर्त्तारम् [ आश्लिक्षत् ] आलिङ्गितवती । 'श्लिष आलिङ्गने' इति धातोर्लुङि च्लेः क्सादेशः । न च धार्ष्ट्यदोषापत्तिरित्याह,—[ विपदि ] विपत्तौ, अतिक्रान्ता भूमिः [ अतिभूमिः ] अमर्य्यादा, [ न दूषिता ] "आपत्काले नास्ति मर्य्यादा" इति न्यायादिति भावः । अर्थान्तरन्यासालङ्कारः ॥ २० ॥

तिष्ठन्तमिति ।—[ सुतनुः ] शुभाङ्गी स्त्री, अंसः प्रमाणमस्येति

---

* "सह सुपा" ( २।१।४ पा० ) इति सूत्रम् ।

अभ्येतुं सुतनुरभीरियेष मौग्ध्या-
दाश्लेषि द्रुतममुना निमज्जतीति ॥ २१ ॥
आ नाभेः सरसि नतभ्रुवाऽवगाढे
चापल्यादथ पयसस्तरङ्गहस्तैः ।
उच्छ्रायि स्तनयुगमध्यरोहि लब्ध-
स्पर्शानां भवति कुतोऽथवा व्यवस्था ? ॥२२॥

---

[ अंसमात्रे ] अंसप्रमाणे । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" ( ५।२।३७ पा० ) इति मात्रच्प्रत्ययः । [ पयसि ] जले, [ तिष्ठन्तं पुमांसं ] वीक्ष्येति शेषः । [ आत्मनोऽपि, तत् ] पयः [ तद्दघ्नं ] तावन्मात्रमंसमात्रम् [ अवयती ] जानती, [ किल ] तथा सम्भावयन्तीत्यर्थः । 'वार्त्ता-सम्भाव्ययोः किल' इत्यमरः । अवपूर्वादिणः शतरि "इणो यण्" ( ६।४।८१ पा० ) इति यणादेशः, "उगितश्च" ( ४।१।६ पा० ) इति ङीप् । किलशब्दस्यालीकार्थत्वे मौग्ध्याविरोधः । अत एव [मौग्ध्यात्] अविवेकात्, [ अभीः ] निर्भीका सती, [ अभ्येतुं ] पुमांसमभिगन्तुम्, [ इयेष ] इच्छति स्म । [ अमुना ] पुंसा, [निमज्जतीति द्रुतम्, आश्लेषि] आश्लिष्टा ॥ २१ ॥

आ नाभेरिति ।—[ नतभ्रुवा ] स्त्रिया, [सरसि, आ नाभेः] नाभि-पर्य्यन्तम् । "आङ् मर्य्यादाभिविध्योः" ( २।१।१३ पा० ) इति विक-ल्पादसमासः । * [ अवगाढे ] प्रविष्टे सति । गाहेः कर्म्मणि क्तः । [ अथ पयसः, चापल्यात् ] लौल्यात् । ब्राह्मणादिषु पाठात् ष्यञ्प्रत्ययः । तरङ्गैरेव हस्तैः [ तरङ्गहस्तैः ], उच्छ्रायोऽस्यास्तीति [ उच्छ्रायि ] उन्नति-मत्, [ स्तनयुगम्, अध्यरोहि ] अधिरूढम् । भिक्षुकपादप्रसारणन्याया-

---

* अत्र आङा समासाभावादेव 'पञ्चम्यपाङ्परिभिः' ( २।४।८९ पा० ) इति सूत्रेण "आनाभेः" इत्यत्र पञ्चमीविभक्तिः ; समासे तु—"आमेखलं सञ्चरतां घनानाम्" इत्यादिवत् स्यादिति विभाव्यम् ।

कान्तानां कुवलयमप्यपास्तमक्ष्णोः
शोभाभिर्न मुखरुचाऽहमेकमेव ।
संहर्षादलिविरुतैरितीव गाय-
ल्लोलोर्मौ पयसि महोत्पलं ननर्त्त ॥ २३ ॥

त्रस्यन्ती चलशफरीविघट्टितोरु-
र्वामोरूरतिशयमाप विभ्रमस्य ।

---

दिति भावः। रीढतेः कर्म्मणि लुङ्। [ अथवा ] तथा ह्रीत्यर्थः। [ लब्धस्पर्शानां ] लब्धप्रवेशानामित्यर्थः। [ कुतः ] कुत्र वा। सार्व-विभक्तिकस्तसिल्। [ व्यवस्था ] मर्य्यादा, [ भवति ? ] न कुत्रापीति भावः। प्रायेण सर्वेऽप्यसम्भवब्रह्मचारिण एवेति भावः। अत्र चापल्यादिति द्वयोरपि लौल्ययोरभेदाध्यवसायमूलातिशयोक्त्या तरङ्गहस्तैरिति रूपकेण च पयसि कामित्वप्रतीतेः समासोक्तिः, तदुपजीवी चार्थान्तरन्यास इति सङ्करः ॥ २२ ॥

कान्तानामिति।—[ लोलोर्मौ ] चपलोर्मिणि। "तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" (७।१।७४ पा० ) इति विकल्पात् पुंवद्भावः। [पयसि, महोत्पलम्] अरविन्दं, कर्त्तृ। 'अरविन्दं महोत्पलम्' इत्यमरः। [ कान्तानां मुखरुचा अहमेकमेव नापास्तं ] किन्तु तासाम् [ अक्ष्णोः शोभाभिः कुवलयमपि] अपास्तम् [इति, संहर्षात्] सन्तोषाद्धेतोः, [अलिविरुतैर्गायत् ] अलिरुतरूपं गानं कुर्वदिति रूपकम्। "इत्थम्भूतलक्षणे" (२।३।२१ पा०) इति तृतीया। [ ननर्त्तेव ] "न दुःखं पञ्चभिः सह" इति न्यायात् नृत्यति स्म। अत्रोर्मिचलनहेतुके महोत्पलचलने अलिनादसंहर्षहेतुकसमानन्टत्यत्वोत्प्रेक्षणात् क्रियानिमित्तक्रिया-स्वरूपोत्प्रेक्षा वाच्या ॥ २३ ॥

त्रस्यन्तीति।—[ चलशफरीविघट्टितोरुः ] चलाः शफर्य्यः यातुकामा मत्स्यः। 'प्रोष्ठी तु शफरी द्वयोः' इत्यमरः। ताभिर्विघट्टितौ विद्धौ

क्षुभ्यन्ति प्रसभमहो ! विनाऽपि हेतो-
र्लीलाभिः किमु सति कारणे रमण्यः ? ॥२४

आकृष्टप्रतनुवपुर्लतैस्तरङ्गि-
स्तस्याम्भस्तदथ सरोमहाऽर्णवस्य ।
अक्षोभि प्रसृतविलोलबाहुपक्षै-
र्योषाणामुरुभिरुरोजगण्डशैलैः ॥ २५ ॥

---

ऊरू यस्याः सा, अत एव [त्रस्यन्ती] बिभ्यती । "वा भ्राश—" (३।१।७३ पा० ) इत्यादिना विकल्पात् श्यनि शतरि ङीप् । वामौ सुन्दरावूरू यस्याः सा [ वामोरूः ] स्त्री । "संहितशफलक्षणवामादेश्च" ( ४।१।७० पा० ) इत्यूङ्प्रत्ययः । [ विभ्रमस्य ] विलासस्य, [ अतिशयमाप ] । तथा हि, [रमण्यः, हेतोर्विनाऽपि] कारणं विनाऽपि । "पृथग्विना—" ( २।३।३२ पा० ) इत्यादिना विकल्पात् पञ्चमी । [ लीलाभिः ] विलासैः, [ प्रसभं ] प्रकामं, [क्षुभ्यन्ति, अहो] निष्कारणक्षोभादाश्चर्य्यमित्यर्थः । [ कारणे सति किमु ? ] वक्तव्यम् । अत्राप्रकृतनिष्कारणक्षोभकथनात् सकारणक्षोभस्य कैमुत्यन्यायलब्धत्ववर्णनादर्थापत्तिरलङ्कारः ;—"दण्डापूपिकयार्थान्तरस्यापतनमर्थापत्तिः" इति सूत्रम् ॥२४॥

आकृष्टेति ।—[ अथ ] अनन्तरम्, [ आकृष्टप्रतनुवपुर्लतैः ] आकृष्टाः प्रतनवो वपूंष्येव लता यैस्तैः, [तरङ्गिः] प्लवमानैः, [प्रसृतविलोलबाहुपक्षैः] प्रसृता आयता विलोलाश्चला बाहव एव पक्षा गरुन्ति येषां तैः । गिरिधर्मस्य पक्षवत्त्वस्य तदवयवेषूपचारः । [उरुभिः] महद्भिः, [योषाणां] स्त्रीणां, [ उरोजगण्डशैलैः ] उरोजैरेव गण्डशैलैर्गिरिच्युतैः स्थूलोपलैः, [ तस्य, सरोमहाऽर्णवस्य ] सर एव महाऽर्णवस्तस्य, [तदम्भः अक्षोभि] । क्षुभ्यतेर्ण्यन्तादण्यन्ताद्वा कर्म्मणि लुङ् । समस्तवस्तुविषयकं सावयवं रूपकम् ॥ २५ ॥

गाम्भीर्यं दधदपि रन्तुमङ्गनाभिः
सङ्क्षोभं जघनविघट्टनेन नीतः ।
अम्भोधिर्विकसितवारिजाननोऽसौ
मर्य्यादां सपदि विलङ्घयाम्बभूव ॥ २६ ॥

आदातुं दयितमिवावगाढमारा-
दूर्मीणां ततिभिरभिप्रसार्य्यमाणः ।
कस्याश्चित् विततचलच्छिखाऽङ्गुलीको-
लक्ष्मीवान् सरसि रराज केशहस्तः ॥ २७ ॥

---

गाम्भीर्य्यमिति ।—[गाम्भीर्य्यम्] अगाधत्वम्, अविकारिचित्तत्वञ्च, [ दधदपि ] गम्भीरः सन्नपि, [ रन्तुं ] विहर्त्तुं, सङ्गन्तुञ्च, [ अङ्गनाभिः, जघनविघट्टनेन ] जघनस्य विघट्टनेन सङ्घर्षेण, [ सङ्क्षोभं ] चलनं, चित्तविकारञ्च, [नीतः] । अत एव [ विकसितवारिजाननः ] विकसितं वारिजमाननमिव वारिजमिव चाननं यस्य सः, [ असौ ], अम्भांसि धीयन्तेऽस्मिन्निति [ अम्भोधिः ] जलाशयः । कश्चित् पुमांश्च तत्तुल्यो गम्यते । "कर्मण्यधिकरणे च" (३।३।९३ पा०) इति किप्रत्ययः । [सपदि, मर्य्यादां ] सीमानम्, औचितीञ्च, [ विलङ्घयाम्बभूव ] लङ्घितवान् । धीरोऽपि स्त्रीसन्निकर्षाद्विक्रियत इति भावः । अत्र गाम्भीर्य्यादि-प्रकृताम्भोधिविशेषणसाम्यादप्रकृतविशिष्टपुरुषप्रतीतेः समासोक्तिर-लङ्कारः, सा च प्रतीयमानाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितेति सङ्करः ॥ २६ ॥

आदातुमिति ।—[ सरसि, विततचलच्छिखाऽङ्गुलीकः ] वितताः प्रसारिताश्चलन्त्यश्च शिखा अग्राण्येवाङ्गुल्यो यस्य सः । "नद्यृतश्च" (५।४।१५३ पा० ) इति कप् । [ लक्ष्मीवान् ] शोभावान् । "मादुपधा-याश्च मतोर्वोऽयवादिभ्यः" (८।२।९ पा०) इति मतुपो मकारस्य वत्वम् ।

उन्निद्रप्रियकमनोरमं रमण्याः
संरेजे सरसि वपुः प्रकाशमेव ।
युक्तानां विमलतया तिरस्क्रियायै
नाक्रामन्नपि हि भवत्यलं जलौघः ॥ २८ ॥
किं तावत् सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते युवत्याः ? ।

---

[ कस्याश्चित्, केशहस्तः ] केशपाशः । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे' इत्यमरः । हस्त इति करश्च ध्वन्यते । [ आरात् ] समीपे । 'आराद्दूरसमीपयोः' इत्यमरः । [ अवगाढम् ] अन्तर्मग्नं, [ दयितम्, आदातुं ] ग्रहीतुम्, [इव ऊर्मीणां, ततिभिः] समूहैः, [अभिप्रसार्य्यमाणः] अभितो व्यापार्य्यमाणः सन्, [ रराज ] । * अत्रादातुमिव प्रसार्य्यमाण इति प्रसारणस्यादानार्थत्वोत्प्रेक्षणादियं क्रियानिमित्ता क्रियाफलोत्प्रेक्षा ; सा च चलच्छिखाऽङ्गुलीक इति रूपकानुप्राणितया हस्त इति श्लेषमूलया वाच्यस्य केशकलापस्य प्रतीयमानात् कराद्भेदे अभेदरूपाऽतिशयोक्त्या निर्व्यूढेति सङ्करः ॥ २७ ॥

उन्निद्रेति ।—[उन्निद्रप्रियकमनोरमम्] उन्निद्रं यत् प्रियकम् असन-कुसुमम् । 'सर्ज्जकासनबन्धूकपुष्पप्रियकजीवकाः' इत्यमरः । तदिव मनोरमं कनकगौरमित्यर्थः । [ रमण्या वपुः, सरसि प्रकाशमेव ] जलमग्नमपि वैमल्याल्लक्ष्यमेव, [संरेजे] । तथा हि,—[ जलौघः ] जल-पूरः, जडौघो मूर्खजनौघश्च । डलयोरभेदात् । [ आक्रामन्नपि ] आप्ल-वन् अपि ; अन्यत्र अधिक्षिपन्नपि, [ विमलतया ] वैमल्येन, [युक्तानां] शुद्धानां, [तिरस्क्रियायै] तिरोधानाय, परिभवाय च, [ अलं ] समर्थः, [ न भवति हि ] । श्लेषमूलया भेदेऽभेदरूपाऽतिशयोक्त्यानुप्राणितो-ऽयमर्थान्तरन्यासः ॥ २८ ॥

---

* यथा अन्तर्मग्नं दयितमादातुं कराभ्यां कृतव्यापारा राजते, तथेति ध्वनिः ।

संशय्य क्षणमिति निश्चिकाय कश्चि-
द्विव्वोकैर्बकसहवासिनां परोक्षैः ॥ २९ ॥

शृङ्गाणि द्रुतकनकोज्ज्वलानि गन्धाः
कौसुम्भं पृथु कुचकुम्भसङ्गि वासः ।
मार्द्वीकं प्रियतमसन्निधानमास-
न्नारीणामिति जलकेलिसाधनानि ॥ ३० ॥

---

किमिति ।—[ सरसि, आरात् ] दूरात्, [एतत्] पुरोवर्त्ति, [ तावत् सरोजं किम् ? आहोस्वित् ] उत, [ युवत्या मुखम् अवभासते ? इति क्षणं, संशय्य ] सन्दिह्य । शीङः क्त्वो ल्यप् "अयङ्यिक्ङिति" ( ७।४।२२ पा० ) इत्ययङादेशः । [ कश्चित् ] विलासी, [ बकसहवासिनां ] बकसहचारिणां, पद्मानामित्यर्थः । विलासशून्यताद्योतनार्थमित्थं निर्देशः । [ परोक्षैः ] अप्रत्यक्षैः, अननुभूतचरैः इत्यर्थः, अविद्यमानैरिति यावत्, [ विव्वोकैः ] विलासैरित्यर्थः । यद्यपि 'विव्वोकोऽनादरक्रिया' इत्युक्तं, तथाऽपि विशेषवाचिनां सामान्ये लक्षणेत्यदोषः । [निश्चिकाय] विशेषदर्शनात् मुखमेवेति निश्चितवानित्यर्थः । सन्देहालङ्कारोऽयम्; — 'विषयो विषयी यत्र सादृश्यात् कविसम्मतात् । सन्देहगोचरौ स्यातां सन्देहालङ्कृतिश्च सा ॥' इति लक्षणात् । सोऽप्यन्ते निश्चयोक्ते-र्निश्चयान्तः ॥ २९ ॥

अथ जलक्रीड़ासम्भारानाह,—शृङ्गाणीति ।—[ द्रुतकनकोज्ज्वलानि ] द्रुतेन तप्तनिषिक्तेन, कनकेनोज्ज्वलानि लिप्तानीत्यर्थः । [ शृङ्गाणि ] क्रीड़ाऽम्बुयन्त्राणि । 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाऽम्बुयन्त्रके' इति विश्वः । [ गन्धाः ] चन्दनकुङ्कुमादिगन्धद्रव्याणि ; अत एव पुंसि बहुत्वे च । 'गन्धस्तु सौरभे योगे गन्धके गर्वलेशयोः । स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः ॥' इत्यभिधानात् । [ पृथु ] विशालं, [ कुचकुम्भसङ्गि ] कुचावरणम् ; कुसुम्भेन रक्तं [ कौसुम्भम् ] ।

उत्तुङ्गादनिलचलांशुकास्तटान्ता-
च्चेतोभिः सह भयदर्शिनां प्रियाणाम् ।
श्रोणीभिर्गुरुभिरतूर्णमुत्पतन्त्य-
स्तोयेषु द्रुततरमङ्गना निपेतुः ॥ ३१ ॥

---

"तेन रक्तं रागात्" (४।२।१ पा०) इत्यण्प्रत्ययः। [वासः] वस्त्रम्। मृद्वीकाया विकारः [मार्द्वीकं] द्राक्षामद्यम्। 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः। किञ्च, [प्रियतमसन्निधानं] सर्वसाफल्य-कारणमिति भावः। [इति] एतानि, [नारीणां, जलकेलिसाधनानि] जलक्रीड़ोपायाः [आसन्]। उद्दीपकसम्पत्तिरुक्ता। अत्र घटादीनां केलिसाधनत्वस्वरूपतुल्यधर्म्मयोगात्प्रकृतत्वाच्च केवलप्रकृत-गोचरा तुल्ययोगिता ॥ ३० ॥

उत्तुङ्गादिति।—[अनिलचलांशुकाः] अनिलेन वेगानिलेन, चलांशुकाश्चलद्वसनाः, [अङ्गनाः उत्तुङ्गात् तटान्तात्, भयदर्शिनां] भयो-त्प्रेक्षिणाम्, अनर्थाशङ्किनामित्यर्थः। [प्रियाणां चेतोभिः सह]; तेषां तत्रैवावधानादिति भावः। [गुरुभिः] गुर्वीभिः। "वोतो गुण-वचनात्" (४।१।४१ पा०) इति विकल्पादनोकारः। [श्रोणीभिः] हेतुना, [अतूर्णं] मन्दम्, [उत्पतन्त्यस्तोयेषु द्रुततरं निपेतुः]। गुरु-त्वस्य पतनहेतुत्वादुत्पतनविरोधित्वाच्च शीघ्रपातो मन्दोत्पतनं चेति भावः। अत्र प्रियचेतःपाताङ्गनापातयोः कार्य्यकारणयोरसह-भाविनोः सहभावोक्तेः कार्य्यकारणयोः पौर्वापर्य्यविध्वंसनरूपाऽति-शयोक्त्युपजीविता सहोक्तिरलङ्कारः;—'सहार्थेनान्वयो यत्र भवेदति-शयोक्तितः। कल्पितौपम्यपर्य्यन्ता सा सहोक्तिरिहेष्यते ॥' इति लक्षणात्। चेतोवत्पेतुरित्यौपम्यकल्पनया कार्य्यगताशुभावप्रतीतेः चमत्कारः इति रहस्यम्। तात्कालिकांशुकचलनादिसूक्ष्मस्वभाव-विशेषप्रकाशनात् स्वभावोक्तिश्चेति सङ्करः ॥ ३१ ॥

मुग्धत्वादविदितकैतवप्रयोगा
गच्छन्त्यः सपदि पराजयं तरुण्यः ।
ताः कान्तैः सह करपुष्करेरिताम्बु-
व्यात्युक्षीमभिसरणग्लहामदीव्यन् ॥ ३२ ॥
योग्यस्य त्रिनयनलोचनानलार्चि-
र्निर्दग्धस्मरपृतनाऽधिराज्यलक्ष्म्याः ।

---

मुग्धत्वादिति ।—[ मुग्धत्वात् ] मूढत्वात्, [ अविदितकैतवप्रयोगाः ] अविदिताः कैतवप्रयोगाः मुखसेचनादिकपटाचरणानि याभिस्ताः, अत एव [ सपदि पराजयं गच्छन्त्यस्तास्तरुण्यः कान्तैः सह, अभिसरणग्लहाम् ] अभिसरणं स्वयमभिगमनं ग्लहो द्यूते पणो यस्यास्ताम् । 'पणोऽक्षेषु ग्लहः' इत्यमरः । "अक्षेषु ग्लहः" ( ३।३।७० पा० ) इति अक्षैर्देवनपणे लत्वनिपातः । अप्प्रत्ययस्तु "ग्रहवृदृनिश्चिगमश्च" ( ३।३।५८ पा० ) इत्येव सिद्ध इति केचित् । अन्ये तु ग्लहिं प्रकृत्यन्तरमङ्गीकृत्याप्प्रत्ययस्यैव निपातो घञपवादीत्याहुः । [ कर-पुष्करेरिताम्बुव्यात्युक्षीं ] करपुष्करैः करकमलैरीरितैरम्बुभिर्यां व्यात्युक्षीं व्यतिहारेणोक्षणं, : परस्पराभ्युक्षणमित्यर्थः । "कर्मव्यतिहारे णच् स्त्रियाम्" ( ३।३।४३ पा० ) इति णच्प्रत्ययः । "णचः स्त्रियामञ्" (५।४।१४ पा०) इति स्वार्थिकोऽञ् प्रत्ययः । "टिड्ढाणञ्—" ( ४।१।१५ पा० ) इत्यादिना ङीप् । तां व्यात्युक्षीम् [ अदीव्यन् ] तया अक्रीडन्नि-त्यर्थः । "दिवः कर्म च" ( १।४।४३ पा० ) इति विकल्पात् कर्मत्वम् । अत्राविदितकैतवप्रयोगस्य विशेषणगत्या पराजयहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ३२ ॥

योग्यस्येति ।—[ त्रिनयनलोचनानलार्चिर्निर्दग्धस्मरपृतनाधिराज्य-लक्ष्म्याः ] त्रिनयनस्त्र्यम्बकः । "क्षुभ्नादिषु च" ( ८।४।३९ पा० ) इति निषेधात् "पूर्वपदात् संज्ञायाम्" ( ८।४।३ पा० ) इति णत्वाभावः ।

कान्तायाः करकलशोद्यतैः पयोभि-
र्वक्रेन्दोरकृत महाऽभिषेकमेकः ॥ ३३ ॥
सिञ्चन्त्याः कथमपि बाहुमुन्नमय्य
प्रेयांसं मनसिजदुःखदुर्बलायाः ।
सौवर्णं वलयमवागलत्कराग्रा-
ल्लावण्यश्रिय इव शेषमङ्गनायाः ॥ ३४ ॥

---

तस्य लोचनानलार्चिषा निर्दग्धस्य स्मरस्य याः पृतनास्तासामधिराज्य-माधिपत्यं तदेव लक्ष्मीस्तस्याः, [ योग्यस्य ] अर्हस्य, त्रैलोक्यविजयिनः स्थाने तादृशस्यैव स्थाप्यत्वादिति भावः । [ कान्तायाः वक्रेन्दोः ] * स्मरसखत्वादस्येति भावः । [ करकलशोद्यतैः ] करावञ्जलिरेव कलशस्ते-नोद्यतैरुत्क्षिप्तैः, [पयोभिर्महाऽभिषेकम्, एकः] कश्चित् कामी, [ अकृत ] कृतवान् । करोतेर्लुङि तङ् "तनादिभ्यस्तथासोः" ( २।४।७९ पा० ) इति सिचो लुक् । अत्र जलक्रीडाऽऽसेके महाऽभिषेकत्वोत्प्रेक्षा व्यञ्जका-प्रयोगात् प्रतीयमाना करकलशेति रूपकानुप्राणितेति सङ्करः ॥ ३३ ॥

सिञ्चन्त्याः इति ।—[ मनसिजदुःखदुर्बलायाः ] मनसिजदुःखेन स्मरपीड़या दुर्बलायाः, अत एव [ कथमपि बाहुम्, उन्नमय्य ] उद्यम्य, [ प्रेयांसं ] प्रियतमम् । "प्रियस्थिर—" ( ६।४।१५७ पा० ) इत्यादिना प्रादेशः । [ सिञ्चन्त्याः ] स्नपयन्त्याः, [ अङ्गनायाः कराग्रात्, सौवर्णं ] हिरण्मयं, [ वलयं ] कङ्कणम् ; 'कङ्कणं वलयोऽस्त्रियाम्' इत्यमरः । [ लावण्यश्रियः ] लवणैव लावण्यं कान्तिविशेषः । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः । 'लवणो रसरक्षोऽब्धिभेदेषु लवणा त्विषि' इति विश्वः । यद्वा,—'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' तस्य श्रीः सम्पत् तस्याः, [ शेषम् ]

---

* इति रूपकम् ।

स्निह्यन्ती दृशमपरा निधाय पूर्णं
मूर्त्तेन प्रणयरसेन वारिणेव ।
कन्दर्पप्रवणमनाः सखीसिसिक्षा-
लक्ष्येण प्रतियुवमञ्जलिञ्चकार ॥ ३५ ॥
आनन्दं दधति मुखे करोदकेन
श्यामाया दयिततमेन सिच्यमाने ।

अतिरिक्तं, शरीरसम्पदवशिष्टमिति यावत् । 'शेषः सङ्कर्षणेऽनन्ते उप-युक्तेतरेऽन्यवत्' इति विश्वः । तत् [ इव, अवागलत् ] अपतत् । * शेषमिवेति गुणनिमित्तजातिस्वरूपोत्प्रेक्षा ॥ ३४ ॥

स्निह्यन्तीति ।—[ कन्दर्पप्रवणमनाः ] स्मरपरवशचित्ता, अत एव [ दृशं निधाय ] पुंस्येव दृष्टिं कृत्वा, [ स्निह्यन्ती ] दृष्टिविशेषेण स्नेहं प्रकाशयन्तीत्यर्थः । [ अपरा ] स्त्री, [ सखीसिसिक्षालक्ष्येण ] सख्याः सिसिक्षा सेक्तुमिच्छा, तस्याः लक्ष्येण व्याजेन, बद्धाञ्जलिरेव तिष्ठन्ती, न तु सिञ्चन्तीति द्योतनाय सिसिक्षेतीच्छायां सनः प्रयोगः । [प्रतियुवं] युवानं प्रति । "अनश्च" (५।४।१०८ पा०) इत्यव्ययीभावे समासान्तः । [ मूर्त्तेन ] मूर्त्तिमता, [प्रणयरसेनेव] इत्युत्प्रेक्षा । पाठादर्थस्य बलीयस्त्वादिवशब्दस्य व्यवहितेनान्वयः । [ वारिणा पूर्णम्, अञ्जलिञ्चकार ] प्रार्थयामासे-त्यर्थः † ॥ ३५ ॥

आनन्दमिति ।—[ आनन्दं दधति ] प्रियसम्भावनया हर्षं दधाने,

* प्रियदर्शनेन सञ्जातमनसिजावेशवशीभूताया विषयान्तरानासक्तमानसाया विलासिन्या नास्ति भूषणादिषु प्रीतिरिति ध्वन्यते ।

† याचकोऽपि अञ्जलिं बद्ध्वा प्रार्थयते । अत्र "पूर्णम्" इति पदं 'वारिणा' इति पदानन्तरमेव प्रयोक्तुमौचित्यात् तदन्यथानिवेशात् अस्थानपदतानाम दोषः । तथा कामपरतन्त्रतया सखीं प्रति जलसेचनं विस्मृतवतीति ध्वनिश्च । एवं सखीं प्रति प्रक्रान्तजलसेचनापह्नवेन युवकप्रार्थनासमारोपादपह्नुतिरलङ्कारः ।

ईर्ष्यन्त्या वदनमसिक्तमप्यनल्प-
स्वेदाम्बुस्नपितमजायतेतरस्याः ॥ ३६ ॥
उद्वीक्ष्य प्रियकरकुड्मलापविद्धै-
र्वक्षोजद्वयमभिषिक्तमन्यनार्याः।
अम्भोभिर्मुहुरसिचद् बधूरमर्षा-
दात्मीयं पृथुतरनेत्रयुग्ममुक्तैः ॥ ३७ ॥

---

[श्यामाया] मध्यमयौवनायाः स्त्रियः। 'श्यामा यौवनमध्यस्था' इत्युत्पलः। [मुखे] वदने, [दयिततमेन] अतिशयेन दयितः प्रियः। अतिशये तमप्प्रत्ययः। तेन कर्त्रा [करोदकेन] अञ्जलिजलेन, [सिच्यमाने] सति [ईर्ष्यन्त्याः] असहमानायाः। 'परोत्कर्षाक्षमेर्ष्या स्यात्' इति लक्षणात्। [इतरस्याः] सपत्न्याः, [वदनमसिक्तमपि] प्रियेणेति शेषः। [अनल्पस्वेदाम्बुस्नपितम्] अनल्पेन स्वेदाम्बुना स्नपितं सिक्तम्, [अजायत] अभवत्। ईर्ष्याकृतकोपकार्य्यत्वात् स्वेदादीनामिति भावः। असिक्तमपि सिक्तमिति विरोधः। तस्य स्वेदाख्यकारणोक्ते-राभासत्वमिति विरोधाभासोऽलङ्कारः ॥ ३६ ॥

उद्वीक्ष्येति।—[प्रियकरकुड्मलापविद्धैः] प्रियस्य करकुड्मलाभ्यां पाणिपुटाभ्यामपविद्धैः सिक्तैः, [अम्भोभिरभिषिक्तम्, अन्यनार्य्याः] सपत्न्याः, [वक्षोजद्वयमुद्वीक्ष्य, बधूः] नायिका, [अमर्षात्] ईर्ष्याकृत-कोपात्, [आत्मीयं] वक्षोजद्वयं [पृथुतरनेत्रयुग्ममुक्तैः] पृथुतरेण नेत्र-युग्मेन मुक्तैः, [अम्भोभिः] वाष्पैः, [मुहुः, असिचत्] अभिषिक्तवती; तन्म-त्सरादिवेति भावः। अतो वस्तुनाऽलङ्कारध्वनिः। * "लिपिसिचिह्वश्च" (३।१।५३ पा०) इति सिञ्चतेर्लुङि च्लेरङादेशः ॥ ३७ ॥

---

* अत.सिद्धेन वस्तुना तन्मत्सरादिवेत्युत्प्रेक्षाऽलङ्कारो व्यज्यते।

कुर्वद्भिर्मुखरुचिमुज्ज्वलामजस्रं
यैस्तोयैरसिचत वल्लभां विलासी ।
तैरेव प्रतियुवतेरकारि दूरात्
कालुष्यं शशधरदीधितिच्छटाऽच्छैः ॥३८॥

रागान्धीकृतनयनेन नामधेय-
व्यत्यासादभिमुखमीरितः प्रियेण ।
मानिन्या वपुषि पतन्निसर्गमन्दो
भिन्दानो हृदयमसाहि नोदवज्रः ॥ ३९ ॥

---

कुर्वद्भिरिति ।—[ मुखरुचिं ] मुखकान्तिम्, [ उज्ज्वलां कुर्वद्भिर्यैस्तोयैः, विलासी ] विलसनशीलः कामी । "वौ कषलस—" (३।२।१४३ पा०) इत्यादिना घिनुण्प्रत्ययः । [वल्लभामजस्रम्, असिचत] सिक्तवान् । स्वरितेत्त्वादात्मनेपदम्, "आत्मनेपदेष्वन्यतरस्याम्" ( ३।१।५४ पा० ) इति सिञ्चतेर्लुङि च्लेरङादेशः । [ शशधरदीधितिच्छटाऽच्छैः ] शशिकरनिकरवत् स्वच्छैः, * [ तैरेव ] तोयैः, [ दूरात्, प्रतियुवतेः ] सपत्न्याः, [कालुष्यम्] आविलत्वं, वैवर्ण्यञ्च, [अकारि] । स्वच्छतोयैः कालुष्यं कृतमिति विरुद्धकार्योत्पत्तिरूपो विषमभेदः ; तच्चान्यत्रेत्यसङ्गतिः, वैवर्ण्यकालुष्ययोरभेदाध्यवसायादतिशयोक्तिस्तदुत्थापितेति सङ्करः ॥३८॥

रागेति ।—[ रागान्धीकृतनयनेन ] रागेण विपक्षानुरागेणान्धीकृतनयनेन, [ प्रियेण, नामधेयव्यत्यासात् ] विपक्षनामपूर्वकम्, [ अभिमुखम्, ईरितः] क्षिप्तः, [वपुषि पतन्, निसर्गमन्दः] स्वभावजडः, तथाऽपि [ हृदयं, भिन्दानः ] विदारयन् ; उदकमेव वज्रोऽशनिः [ उदवज्रः ] । "मन्थौदन—" (६।३।६०,पा०) इत्यादिना विकल्पादुदादेशः । [मानिन्या] विपक्षनामग्रहणजनितकोपवत्या नायिकया, [ नासाहि ] न सोढः ।

---

* इत्युपमा ।

प्रेम्णोरः प्रणयिनि सिञ्चति प्रियायाः
सन्तापं नवजलविप्रुषो गृहीत्वा।
उद्भूताः कठिनकुचस्थलाभिघाता-
दासन्नां भृशमपराङ्गनामधाक्षुः ॥ ४० ॥

सङ्क्रान्तं प्रियतमवक्षसोऽङ्गरागं
साध्वस्याः सरसि हरिष्यतेऽधुनाऽम्भः।
तुष्टेवं सपदि हृतेऽपि तत्र तेपे
कस्याश्चित् स्फुटनखलक्ष्मणः सपत्नी ॥ ४१ ॥

---

तीक्ष्णयोगादतीक्ष्णमपि तीक्ष्णं भवतीति भावः। उदवज्र इति केवल-निरवयवरूपकम् ॥ ३९ ॥

प्रेम्णेति।—[ प्रणयिनि प्रेम्णा प्रियाया उरः सिञ्चति ] सति, [ कठिनकुचस्थलाभिघातात्, उद्भूताः ] उत्पतिताः, [ नवजलविप्रुषः ] नवजलस्य विप्रुषो विन्दवः। 'पृषन्ति विन्दु पृषताः पुमांसो विप्रुषः स्त्रियाम्' इत्यमरः। तस्याः सिक्तायाः [ सन्तापं, गृहीत्वा ] आदाय, [ आसन्नां ] समीपस्थाम्, [ अपराङ्गनां ] सपत्नीं, [ भृशम्, अधाक्षुः ] सन्तापयन्ति स्म। दहतेर्लुङि "वदव्रज—" ( ७।२।३ पा० ) इत्यादिना सिचि वृद्धिः घत्वादिकार्य्यम्। तत्सिक्तादेवापरस्याः तापोदयात् तत्तापस्यैवाऽऽधानं दाहक्रिययोत्प्रेक्ष्यते, सा च व्यञ्जकाप्रयोगाद्गम्या ॥४०॥

सङ्क्रान्तमिति।—[ प्रियतमवक्षसः ] सकाशात् [ सङ्क्रान्तं ] गाढा-लिङ्गनात् कुचतटलग्नम्, [ अस्याः ] सिक्तायाः, [ अङ्गरागमधुना ] एव [ सरसि अम्भः ] कर्तृ। [ साधु ] निःशेषं, [ हरिष्यते ] प्रमार्क्ष्यति, [ एवं तुष्टा ] इति बुद्ध्वा, [ सपदि, तत्र ] तस्मिन् अङ्गरागे, [हृतेऽपि, स्फुटनख-लक्ष्मणः ] व्यक्तनखचिह्नायाः, [कस्याश्चित्] नायिकायाः सम्बन्धिनी, *

---

* कस्याश्चित् अङ्गरागे इति पूर्वपाठान्वयः।

ह्रतायाः प्रतिसखि कामिनाऽन्यनाम्ना
क्षीमत्याः सरसि गलन्मुखेन्दुकान्तेः।
अन्तर्द्धिं द्रुतमिव कर्त्तुमश्रुवर्षै-
र्भूमानं गमयितुमीषिरे पयांसि ? ॥ ४२ ॥
सिक्तायाः चणमभिषिच्य पूर्वमन्या-
मन्यस्याः प्रणयवता वताबलायाः।

---

[ सपत्न्या, तेपे ] तप्तम्। * भावे लिट्। तदिदमातपार्त्तस्य छाया-मन्विष्यतो दारुणदवदहनवेष्टनं यदङ्गरागमेव द्रष्टुमचमाया नखचत-साक्षात्कार इति। अत्र सन्तापशान्त्यर्थेन विपक्षाङ्गनाङ्गरागक्षालनेन तद्विरुद्धसन्तापोत्पादनाद्विरुद्धकार्य्योत्पत्तिरूपो विषमालङ्कारः ॥ ४१ ॥

ह्रताया इति।—[ प्रतिसखि ] सख्याः समीपे, सखीसमक्षमित्यर्थः। समीपार्थेऽव्ययीभावे नपुंसकत्वह्रस्वत्वे। [ कामिना ] प्रियेण ; अन्यस्याः सपत्न्याः नाम्ना [ अन्यनाम्ना ]। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। [ ह्रतायाः ], अत एव [ गलन्मुखेन्दुकान्तेः, क्षीमत्याः ] लज्जितायाश्च, कस्याश्चिदिति शेषः। [ सरसि, द्रुतं ] शीघ्रम्, [ अन्तर्द्धिम् ] अन्तर्द्धा-नम्। अदन्तरोरुपसर्गवद्वृत्तिरिति वचनात् "उपसर्गे घोः किः" (३।३।९२ पा॰) इति किप्रत्ययः। [ कर्त्तुमश्रुवर्षैः ] कर्त्तृभिः। [ पयांसि ] सरोजलानि, [ भूमानं गमयितुं ] वृद्धिं प्रापयितुम्। "गतिबुद्धि—" (१।४।५२ पा॰) इत्यादिना अणिकर्त्तुः कर्मत्वं प्राधान्या-दभिधानञ्च। [ ईषिरे इव ] इष्टानि किमु ? इत्युत्प्रेक्षेयमश्रुपातनिमित्ता, तया मरणदुःखादपि दुःसहं सपत्न्या दुःखमिति वस्तुध्वनिः ॥ ४२ ॥

सिक्ताया इति।—[ प्रणयवता ] प्रियेण, [ चणं पूर्वम्, अन्यां ] सप-त्नीम्, [ अभिषिच्य ] पश्चात् [सिक्ताया अन्यस्याः, अबलायाः] स्त्रियाः,

---

* सपत्न्याः प्रियसंसर्गानुभूतिर्योषितामत्यन्तदुःसहेति भावः।

कालिम्ना समधित मन्युरेव वक्त्रं
प्रापाक्ष्णोर्गलदपशब्दमञ्जनाम्भः ॥ ४३ ॥
उद्वोढुं कनकविभूषणान्यशक्तः
सध्रीचा वलयितपद्मनालसूत्रः ।
आरूढ़प्रतिवनिताकटाक्षभारः
साधीयो गुरुरभवद्भुजस्तरुण्याः ॥ ४४ ॥

---

[ वक्त्रं ] कर्म [ मन्युः ] कोपः, [ एव ] कर्त्ता । [ कालिम्ना ] कार्ष्ण्येन, वैवर्ण्येन सहेति यावत् । [समधित] सन्दधे, [ बत ] इति खेदे । सम्पूर्वाद्दधातेः कर्त्तरि लुङि तङ् "स्थाघ्वोरिच्च" ( १।२।२७ पा० ) इतीकारः । सिचः कित्त्वात् न गुणः । "ह्रस्वादङ्गात्" ( ८।२।२७ पा० ) इति सकारलोपः । [ गलत् ] स्रवत्, [ अक्ष्णोः ] सम्बन्धि [ अञ्जनाम्भः ] कज्जलोदकम्, [ अपशब्दं ] वर्णस्यापवादं, [ प्राप ] । कोपकालिम-तिरोधानेन स्वकालिम्न एव प्रकाशनादिति भावः । * पूर्वेण वाक्यार्थे-नोत्तरवाक्यार्थसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ४३ ॥

उद्वोढुमिति ।—[ कनकविभूषणानि उद्वोढुमशक्तः ] सौकुमार्य्या-दिति भावः ; अत एव [ सध्रीचा ] सहाञ्चतीति सध्र्यङ्, तेन सह-चरेण कर्त्रा । "ऋत्विक्" ( ३।२।५९ पा० ) इत्यादिना क्विन्प्रत्ययः । "सहस्य सध्रिः" (६।३।९५ पा०) इति सहशब्दस्य सध्र्यादेशः । "अनि-दिताम्—" ( ६।४।२४ पा० ) इति नकारलोपः, "अचः" ( ६।४।१४८ पा० ) इत्यकारलोपे "चौ" ( ६।३।१३८ पा० ) इति दीर्घः । [ वल-यितपद्मनालसूत्रः ] वलयितानि वलयीकृतानि, पद्मनालसूत्राणि मृणा-लतन्तवो यस्य सः, मृणालकृतकङ्कण इत्यर्थः । तथाऽपि [ आरूढ़प्रति-वनिताकटाक्षभारः ] आरूढ़ः आरूढ़वान्, प्रतिवनितायाः सपत्न्याः,

---

* अत्र कोपजनितकालिमकज्जलजलकालिम्नोर्भिन्नयोरपि अभेदाध्यवसाया-दतिशयोक्तिरलङ्कारः

आबद्धप्रचुरपरार्द्ध्यकिङ्किणीको
रामाणामनवरतोदगाहभाजाम् ।
नारावं व्यतनुत मेखलाकलापः
कस्मिन् वा सजलगुणे गिरां पटुत्वम् ? ॥४५॥
पर्य्यच्छे सरसि हृतेऽंशुके पयोभि-
र्लोलाक्षे सुरतगुरावपत्रपिष्णोः ।

---

कटाक्ष एव भारो यस्य सः; तया सासूयं दृष्ट इत्यर्थः । अत एव [तरुण्याः, भुजः] बाहुः, [साधीयः] बाढतरमिति क्रियाविशेषणम् । "अन्तिकबाढयोर्नेदसाधौ" (५।३।६३ पा०) इति बाढशब्दस्य साधादेशः । [गुरुः] भारवान्, श्लाघ्यश्च, [अभवत्] । अत्र कनकभूषणाभावेऽपि तत्कार्य्यगुरुत्ववर्णनाद्विभावना, सा च गुरुरिति श्लेषप्रतिभोत्थापिताऽतिशयोक्त्यनुप्राणितेति सङ्करः ॥ ४४ ॥

आबद्धेति ।—उदकस्य गाहोऽवगाहनं उदगाहः । "मन्थोदन—" (६।३।६० पा०) इत्यादिना उदादेशः । तमनवरतं भजन्ति यास्तासाम् [अनवरतोदगाहभाजां, रामाणां] स्त्रीणां सम्बन्धी, [आबद्धप्रचुरपरार्द्ध्यकिङ्किणीकः] आबद्धाः प्रोताः, प्रचुरा भूयिष्ठाः, परार्द्ध्याः श्रेष्ठाश्च, किङ्किण्यो यस्मिन् सः तथोक्तः । "नद्यृतश्च" (५।४।१५३ पा०) इति कप् । [मेखलाकलापः, आरावं] ध्वनिं, [न व्यतनुत] । तथा हि,— [सजलगुणे] जलेन सह सजलो जलार्द्रो गुणः सूत्रं यस्य सः; तथा डलयोरभेदाज्जडगुणो जडधर्मो जाड्यं, तेन सहेति सजडगुणो जडश्च तस्मिन्, [कस्मिन् वा] मेखलाकलापे पुंसि वा, [गिरां] वाचां, ध्वनीनाञ्च, [पटुत्वं] सामर्थ्यं ? न कुत्रापीत्यर्थः । श्लेषमूलाभेदातिशयोक्त्यनुप्राणितोऽयमर्थान्तरन्यासः ॥ ४५ ॥

पर्य्यच्छ इति ।—[पर्य्यच्छे] परि परितोऽच्छं स्वच्छम्, अन्तर्गतवस्तुतिरोधायकमित्यर्थः । तस्मिन् [सरसि पयोभिः, अंशुके] स्त्रीपरिधाने,

सुश्रोण्या दलवसनेन वीचिहस्त-

न्यस्तेन द्रुतमकृताब्जिनी सखीत्वम् ॥ ४६ ॥

नारीभिर्गुरुजघनस्थलाहताना-

मास्यश्रीविजितविकाशिवारिजानाम्।

लोलत्वादपहरतां तदङ्गरागं

संजज्ञे स कलुष आशयो जलानाम् ॥४७॥

---

[ हृते ] स्थानादपसारिते सति, [ सुरतगुरौ ] रमणे च, [ लोलाक्षि ] श्रोण्यासक्तदृष्टौ सतीत्यर्थः। 'लोलश्चलसतृष्णयोः' इत्यमरः। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" (५।४।११३ पा०) इति षच्। [ अपलपिष्णोः ] अपलपमानायाः। 'लज्जा सापलपान्यतः' इत्यमरः। "अलङ्कृञ्—" (३।२।१३६ पा०) इत्यादिना इष्णुच्प्रत्ययः। [ सुश्रोण्याः ] प्रियायाः। प्रस्तुतोचितनिर्देशोऽयम्। [ अब्जिनी ] नलिनी, [ द्रुतं, वीचिहस्तन्यस्तेन ] वीचिरेव हस्तस्तेन न्यस्तेन, [ दलवसनेन ] दलं पर्णमेव वसनं तेन, तद्दानेनेत्यर्थः। [ सखीत्वम् अकृत ] सखीकृत्यं चकारेत्यर्थः। अत्राब्जिन्यादिषु सखीत्वाद्यारोपात् समस्तवस्तुवर्त्ति सावयवरूपकम् * ॥ ४६ ॥

नारीभिरिति।—[ नारीभिः ] कर्त्रीभिः [ गुरुजघनस्थलाहतानां ] गुरुजघनस्थलैराहतानाम्, [ आस्यश्रीविजितविकाशिवारिजानाम् ] आस्यश्रीभिर्मुखशोभाभिर्विजितानि विकाशीनि वारिजानि पद्मानि येषां तेषां, [ लोलत्वात् ] चलत्वात्, सतृष्णत्वाच्च। 'लोलश्चलसतृष्णयोः' इत्यमरः। [ तदङ्गरागं ] तासामङ्गरागम्, [ अपहरतां ] क्षालयतां च, [ जलानां ] तोयानां, जडानां च, [स आशयः] ह्रदः, हृदयं च, [ कलुषः]

---

* रूपकालङ्कारेण चात्र यथा लोके परिहासार्थं केनचित् धूर्त्तनायकेनापहृते कस्याश्चित् वसने, तत्सखी वसनान्तरेण सखीलज्जां निराकरोति, तथा पद्मिनीति व्यवहारसमारोपप्रतीतेः समासोक्त्यलङ्कारो ध्वन्यते।

सौगन्ध्यं दधदपि काममङ्गनानां
दूरत्वाद्गतमहमाननोपमानम् ।
नेदीयो जितमिति लज्जयेव तासा-
मालोले पयसि महोत्पलं ममज्ज ॥ ४८ ॥
प्रभ्रष्टैः सरभसमम्भसोऽवगाह-
क्रीड़ाभिर्विदलितयूथिकापिशङ्गैः ।
आकल्पैः सरसि हिरण्मयैर्वधूना-
मौर्वाग्निद्युतिशकलैरिव व्यराजि ॥ ४९ ॥

---

अप्रसन्नः, क्षुभितश्च, [ संजज्ञे ] सञ्जातः, अपहर्त्तुस्ताड़नस्वहरणादिभिराशयः कलुषो भवतीति ध्वनिः। अभिधायाः प्रकृतार्थे नियन्त्रणात् न श्लेषः ॥ ४७ ॥

सौगन्ध्यमिति।—[ कामं ] पर्य्याप्तं, [ सौगन्ध्यं ] सुरभिगन्धित्वं, सम्बन्धित्वञ्च। 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' इति विश्वः। [ दधदपि अहं, दूरत्वात् ] पूर्वं दूरस्थत्वात्, [ अङ्गनानाम्, आननोपमानं ] मुखसादृश्यं, [ गतम् ]। 'दूरस्थाः पर्वता रम्याः' इतिवदिति भावः। सम्प्रति पुनः, [ तासां, नेदीयः ] नेदिष्ठमन्तिकतमं सत्। "अन्तिकबाढयोर्नेदसाधौ" ( ५।३।६३ पा० ) इत्यन्तिकशब्दस्य नेदादेशः। [ जितं ] परिभूतमभूवम्, [ इति लज्जयेव, महोत्पलम् ] अरविन्दम्, [आलोले] चले, [पयसि ममज्ज] ; यथा दूरे साम्येन दृश्यमानः सम्बन्धी सन्निधाववमानितः क्वचिल्लज्जया निलीयते तद्वदिति। * अत्र पयश्चलनकृतेऽभमज्जने लज्जाहेतुकत्वमुत्प्रेक्ष्यत इति श्लेषमूलाऽतिशयोक्तिहेतूत्प्रेक्षयोः संसृष्टिः ॥ ४८ ॥

प्रभ्रष्टैरिति।—[ सरभसं ] सत्वरम्, [ अम्भसोऽवगाहक्रीड़ाभिः ]

---

* तद्वदिति श्लेषमूलोत्प्रेक्षाऽलङ्कारेणोपमाऽलङ्कारो ध्वन्यते इति बोध्यम्।

आस्माकी युवतिदृशामसौ तनोति
छायैव श्रियमनपायिनीं किमेभिः ?।
मत्वैवं स्वगुणपिधानसाभ्यसूयैः
पानीयैरिति विदधाविरेऽञ्जनानि ॥ ५० ॥

अम्भसोऽवगाह्य एव क्रीड़ास्ताभिः, [ प्रभ्रष्टैः ] जलावगाहक्षोभादम्भसि च्युतैः, [ विदलितयूथिकापिशङ्गैः ] विदलिता विकसिता, यूथिकाः पीतयूथिका, हैमपुष्पिकाऽपरपर्य्याया विवक्षिताः, अन्यथा पिशङ्गत्वा-योगात्। 'गणिका यूथिकाम्बष्ठा सा पीता हैमपुष्पिका' इत्यमरः। तद्वत् पिशङ्गैः, [ हिरण्मयैः ] सौवर्णैः। "दाण्डिनायन—" (६।४।१७४ पा०) इत्यादिना निपातः। [ वधूनाम्, आकल्पैः ] भूषणैः, [ सरसि और्वाग्निद्युतिशकलैः ] जलाशयत्वादत्रापि सन्निहितैर्वड़वानलज्वाला-खण्डैः, [इव] इत्युत्प्रेक्षा। [व्यराजि] विराजितम्। भावे लुङ्॥ ४९॥

आस्माकीति।—अस्माकमियम् [ आस्माकी ] अस्मदीया, अस्मत्का-रितेत्यर्थः। "युष्मदस्मदोरन्यतरस्यां खञ्च" (४।३।१ पा०) इति चका-रादण् प्रत्ययः। "तस्मिन् अणि च युष्माकास्माकौ" (४।३।२ पा०) इति प्रकृतेरस्माकादेशः। "टिड्ढाणञ्" (४।१।१५ पा०) इत्यादिना ङीप्। [ असौ, छाया ] कान्तिः, विमलेति यावत्। सा [ एव युवति-दृशाम्, अनपायिनीं] स्थायिनीं, [श्रियं तनोति, एभिः] अञ्जनैः, [किम् ?] एतत् साध्यं न किञ्चिदस्तीत्यर्थः। गम्यमानसाधनापेक्षया करणत्वात् तृतीया इत्युक्तं प्राक्। [ एवं मत्वा ] उक्तप्रकारेणाञ्जनवैफल्यं निश्चि-त्येत्यर्थः; अत एव गम्योत्प्रेक्षेयम्। [ स्वगुणपिधानसाभ्यसूयैः ] स्वगुणस्य स्वाविष्कृतदृङ्नैर्मल्यगुणस्य पिधानं तिरोधानम्। 'अपि-धानतिरोधानपिधानाच्छादनानि च' इत्यमरः। "वष्टि भागुरि-रल्लोपमवाप्योरुपसर्गयोः"(का०)* इत्यकारलोपः। तेन साभ्यसूयैः सेर्ष्यैः,

* "आपञ्चैव हलन्तानां यथा वाचा निशा दिशा" इत्यपरार्द्धः।

निर्धौते सति हरिचन्दने जलौघै-
रापाण्डोर्गतपरभागयाऽङ्गनायाः ।
अञ्जाय स्तनकलशद्वयादुपेये
विच्छेदः सहृदययेव हारयष्ट्या ॥ ५१ ॥
अन्यूनं गुणममृतस्य धारयन्ती
सम्फुल्लस्फुरितसरोरुहावतंसा ।

---

पातुमर्हैः, [ पानीयैः ] । 'अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्' इत्यमरः । "तव्यत्तव्यानीयरः" ( ३।१।९६ पा० ) इति पिबतेरनीयर्-प्रत्ययः । [ अञ्जनानि ] कज्जलानि, [ इति ] अनेन स्वगुणप्रकाशनयोग्य-तया विवक्षितेन प्रकारेण, निःशेषत्वरूपेणेत्यर्थः । [ विदधाविरे ] विधौतानि, क्षालितानीत्यर्थः । 'धावु गतिशुद्ध्योः' इति धातोः कर्म्मणि लिट् ॥ ५० ॥

निर्धौत इति।—[हरिचन्दने] रक्तचन्दने, [जलौघैः,निर्धौते] क्षालिते, [सति] । धावेः कर्म्मणि क्तः । "च्छ्वोः शूडनुनासिके च" (६।४।१९ पा०) इति वकारस्योठादेशः । "एत्येधत्यूठ्सु" ( ६।१।८९ पा० ) इति वृद्धि-रौकारः । [ आपाण्डोः ] पाण्डुवर्णात्, [ अङ्गनायाः स्तनकलशद्वयात्, गतपरभागया ] सावर्ण्याद्विगतवर्णोत्कर्षया ; अत एव सामान्या-लङ्कारः ;—'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । [ हारयष्ट्या ] कर्त्र्या, [ सहृदयया इव ] सचित्तयेवेत्युत्प्रेक्षा । निज-परभागहानिपरिज्ञानवत्येवेत्यर्थः । [ अञ्जाय ] सपदि । 'स्राक् झटि-त्यञ्जसाञ्जाय द्राङ् मङ्क्षु सपदि द्रुते' इत्यमरः । [ विच्छेदः ] त्रुटनम्, [ उपेये ] प्राप्तः । हीनजीवनादजीवनमेव वरमिति भावः । उप-पूर्वादिणः कर्म्मणि लिट् । विक्षोभहेतुकस्य हारविच्छेदस्य सहृदय-हेतुकत्वोत्प्रेक्षा, सा चोक्तसामान्योत्थापितेति सङ्करः ॥ ५१ ॥

अन्यूनमिति ।—[ अन्यूनं ] समग्रम्, [ अमृतस्य ] पीयूषस्य, [ गुणं ]

प्रेयोभिः सह सरसी निषेव्यमाणा
रक्तत्वं व्यधित वधूदृशां सुरा च ॥ ५२ ॥
स्नान्तीनां बृहदमलोदबिन्दुचित्रौ
रेजाते रुचिरदृशामुरोजकुम्भौ।
हाराणां मणिभिरुपाश्रितौ समन्ता-
दुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव ॥ ५३ ॥

माधुर्य्यादिकं, [ धारयन्ती ]। 'अगन्धमव्यक्तरसं शीतलञ्च तृषापहम्। अच्छं लघु च पथ्यञ्च तोयं गुणवदुच्यते ॥' इति। उक्तोदकगुणांश्च धारयन्ती सरसीपक्षे। 'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले ध्रुवम्' इति विश्वः। [सम्फुल्लस्फुरितसरोरुहावतंसा] सम्फुल्लानि विकचानि। उत्फुल्लसम्फुल्लयोरुपसंख्यानात् निष्ठातस्य लत्वम्। * स्फुरितानि उज्ज्वलानि च यानि सरोरुहाणि, एकत्र,—सहजानि, अन्यत्र,—संस्कारार्थं क्षिप्तानि, तान्यवतंसो भूषणं यस्याः सा तथोक्ता। [प्रेयोभिः सह निषेव्यमाणा]। स्नानपानाभ्यामिति भावः। [सरसी] पुष्करिणी, [वधूदृशां, रक्तत्वम्] आरुण्यं, [ व्यधित ] विधत्ते स्म। तथा [ सुरा च ]। व्यधितेति धाञः कर्त्तरि लुङि तङ्। इहोत्साहवर्द्धनाय मुहुः सेव्यत्वात् शृङ्गाणीति श्लोके सलिलक्रीड़ासम्भारेषु मार्द्वीकमिति परिगणनाच्च सरसीवत् सुराया अपि प्रकृतत्वविवक्षायां तुल्ययोगिता; तदविवक्षायान्तु दीपकम्। सुरेवेति पाठे त्वप्रकृतविवक्षैव कार्य्या, अन्यथा उपमाऽनुपमा स्यात्। न च तुल्ययोगिताऽवकाशः, इवशब्देन गम्योपम्यलक्षणभङ्गात् इति ॥ ५२ ॥

स्नान्तीनामिति।—[ स्नान्तीनां ] जलमवगाहमानानां, [ रुचिरदृशां ] सुदृशां सम्बन्धिनौ, [ बृहदमलोदबिन्दुचित्रौ ] बृहद्भिरमलैश्चोद-

* "उत्फुल्लसम्फुल्लयोरुपसङ्ख्यानम्" इति वार्त्तिकसूत्रम्। "ति च" (७।४।८९ पा०) इति पाणिनीयसूत्रस्य दीक्षितकृतवृत्त्यन्तर्गतं वेदितव्यम्।

आरूढः पतित इति स्वसम्भवोऽपि
स्वच्छानां परिहरणीयतामुपैति ।
कर्णेभ्यश्च्युतमसितोत्पलं वधूनां
वीचीभिस्तटमनु यन्निरासुरापः ॥ ५४ ॥

---

बिन्दुभिश्रितौ । "मन्थौदनः—" ( ६।३।६० पा० ) इत्यादिना उदकशब्दस्योदादेशः । [ उरोजकुम्भौ उत्सूतैः, हाराणां ] मुक्ताहाराणां, [ मणिभिः ] गुटिकाभिः । उपहन्यते उपगम्यते, पीड्यते वा । 'उपघ्न आश्रये' ( ३।३।८५ पा० ) इति हन्तेरप्प्रत्ययान्त उपधालोपी निपातः । गुणवतः औदार्य्यादिगुणवतः सूत्रवतश्च, उपघ्नस्य काम्या आत्मन इच्छा गुणवदुपघ्नकाम्या तया, [ गुणवदुपघ्नकाम्यया ] आत्मनो गुणवदाश्रयाकाङ्क्षयेत्यर्थः । "काम्यच्च" ( ३।१।९ पा० ) इति काम्यच्प्रत्यये प्रत्ययान्तधातुत्वात् "अप्रत्ययात्" (३।३।१०२ पा०) इति स्त्रियामप्रत्यये टाप् । [ समन्तादुपाश्रितौ ] संश्रितौ, [ इव, रेजाते ] राजेते स्म । "फणाञ्च सप्तानाम्" ( ६।४।१२५ पा० ) इति विकल्पादेकाराभ्यासलोपौ । गुणवच्छब्देन सूत्रशब्देन च सूत्रभेदे सूत्रान्तरमश्रिश्रियत् इति प्रतीतेः श्लेषानुप्राणितयाऽतिशयोक्त्यानुप्राणितेयमुत्प्रेक्षा * ॥ ५३ ॥

आरूढ इति ।—[ स्वसम्भवोऽपि ] आत्मसम्भवोऽपि, [ आरूढः ] उच्चस्थानगत, उत्तमाश्रमश्च, [ पतितः ] तथा भ्रष्टः, [ इति ] हेतोः, आरूढपतितत्वादित्यर्थः । [ स्वच्छानां ] निर्म्मलानां, [ परिहरणीयतां ] त्याज्यत्वम्, [उपैति] । 'प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकः' इति

---

* यथा हि गुणज्ञाः जनाः स्वगुणस्य समधिकमुत्कर्षमापादयितुं सर्वगुणालङ्कृतं दोषलेशरहितं जनं भजन्ते, एवमेव मणयः स्तनयुगलमाश्रिताः इत्युपमाऽलङ्कारः श्लेषानुप्राणितोत्प्रेक्षया व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ।

दन्तानामधरमयावकं पदानि
प्रत्यग्रास्तनुमविलेपनां नखाङ्काः।
आनिन्युः श्रियमधितोयमङ्गनानां
शोभायै विपदि सदाश्रिता भवन्ति ॥ ५५ ॥

---

स्मरणादिति भावः। * कुतः? [यत्] यस्मात्, [आपः वधूनां कर्णेभ्यः च्युतमसितोत्पलं] स्वसम्भवमपीति भावः। [वीचीभिः, तटमनु] तटं प्रति, [निरासुः] चिक्षिपुः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः समर्थनवाक्यगतश्लेषमूलाऽतिशयोक्त्या सङ्कीर्णः ॥ ५४ ॥

दन्तानामिति।—तोयेष्वधि [अधितोयम्]। विभक्त्यर्थेऽव्ययीभावः। [अङ्गनानाम्, अयावकं] प्रक्षालितलाक्षारागम्, [अधरं, दन्तानां पदानि] दन्तक्षतानि, तथा [अविलेपनां] धौताङ्गरागां, [तनुं] शरीरं, [प्रत्यग्राः] नवाः, [नखाङ्काः] च [श्रियम्, आनिन्युः] प्रापयामासुः। "नीवह्योर्हरतेश्चैव" इति वचनात् द्विकर्मकत्वम्। † तथा हि, सतः सज्जनान् सुन्दरांश्चाश्रिताः [सदाश्रिताः] ये केचिदिति शेषः। [विपदि] विभवाभावकालेऽपि [शोभायै] वैभवाय, [भवन्ति]। "क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या" इति क्लृपेरर्थनिर्देशाच्चतुर्थी। ‡ अर्थान्तरन्यासः ॥ ५५ ॥

---

* कश्चित् सन्न्यासं स्वीकृत्य परं योगमार्गमुपगतः, पश्चात् कुतश्चित् कारणात् तस्मात् विच्युतः चेत् यथा स्वजनाः तं योगभ्रष्टं पुनः गृहस्थाश्रमं जिघृक्षन्तं स्वस्थानात् विच्यावयति, राजा च स्वदासत्वेन तं नियोजयति, तद्वदित्यभिप्रायः।

† "अकथितञ्च" (१।४।५१ पा०) इति सूत्रस्य कारिका "कर्म्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्" इति द्विकर्म्मकत्वम्।

‡ "क्लृपि सम्पद्यमाने च" (वा०) इति क्लृपेरर्थग्रहणात् तदर्थकभवतेः प्रयोगे चतुर्थी ज्ञातव्या।

कस्याश्चिन्मुखमनु धौतपत्त्रलेखं
व्यातेने सलिलभरावलम्बिनीभिः ।
किञ्जल्कव्यतिकरपिञ्जरान्तराभि-
श्चित्रश्रीरलमलकाऽग्रवल्लरीभिः ॥ ५६ ॥
वक्षोभ्यो घनमनुलेपनं यदूना-
मुत्तंसानहरत वारि मूर्द्धजेभ्यः ।
नेत्राणां मदरुचिरक्ततैव तस्थौ
चक्षुष्यः खलु महतां परैरलङ्घ्यः ॥ ५७ ॥

---

कस्याश्चिदिति ।—[ धौतपत्त्रलेखं ] क्षालितपत्त्रावलीकं, [कस्याश्चित्, मुखमनु ] मुखेन सम्बद्धं यथा तथा, मुखे इति यावत् । "तृतीयार्थे—" (१।४।८५ पा०) इत्यनोः कर्मप्रवचनीयत्वात् द्वितीया । [ सलिलभरावलम्बिनीभिः ] सलिलभरेणावलम्बिनीभिर्लम्बमानाभिः, आर्जवं गताभिरित्यर्थः । [ किञ्जल्कव्यतिकरपिञ्जरान्तराभिः ] किञ्जल्कव्यतिकरेण केशरमिश्रणेन, पिञ्जराण्यन्तराणि मध्यभागा यासां ताभिः । अलकाऽग्राणि वल्ल्यो मञ्जर्य इवेत्युपमितसमासः । 'वल्लरी मञ्जरी स्त्रियाम्' इत्यमरः । ताभिः [ अलकाऽग्रवल्लरीभिः, चित्रश्रीः ] मकरिकापत्त्रशोभा, [अलं, व्यातेने] सम्पादिता । तनोतेः कर्मणि लिट् । अत्र चित्रस्य श्रीरिव श्रीरिति निदर्शनाभेदः अलकाऽग्रवल्लरीत्युपमया पिञ्जरान्तरेति तद्गुणेन च संसृज्यते ॥ ५६ ॥

अथ श्लोकद्वयेन पुंसामप्यवस्थाभेदं वर्णयति, वक्षोभ्य इत्यादि ।—[ वारि ] सर उदकं कर्तृ [यदूनां] यादवानां, [वक्षोभ्यः, घनं] सान्द्रम्, [ अनुलेपनम् ] अङ्गरागम्, [ अहरत ] । जित्वात्तङ् । अत्र वधूनामिति क्वाचित्कः पाठः वक्षोजानुपेक्ष्य वक्षोमात्रनिर्देशादुत्तरश्लोके तेषामिति पुंलिङ्गपरामर्शाच्च न ग्राह्यः । [ मूर्द्धजेभ्यः ] शिरोरुहेभ्यः,

योो वाह्यः स खलु जलैर्निरासि रागो
यश्चित्ते स तु तदवस्थ एव तेषाम् ।
धीराणां व्रजति हि सर्व एव नान्तः-
पातित्वादभिभवनीयतां परस्य ॥ ५८ ॥
फेनानामुरसिरुहेषु हारलीला
चेलश्रीर्जघनतलेषु शैवलानाम् ।

---

[ उत्तंसान् ] शेखरान्, अहरत । [नेत्राणां, मदरुचिः] मदरागः, [ अत्र-तैव ] तथैव, [तस्थौ] । वारिविहारस्यापि रागजनकत्वादिति भावः ; अत एव रागद्वयस्याप्यभेदाध्यवसायेन तदवस्थानिर्देशादतिशयोक्तिः । तथा हि, [ महतां ], चक्षुषि भवः [ चक्षुष्यः ] प्रियोऽक्षिजश्च । 'प्रियेऽक्षिजे च चक्षुष्यः' इति विश्वः । "शरीरावयवाच्च" ( ४।३।५५ पा० ) इति यत् । [ परैः, अलङ्घ्यः ] दुर्द्धर्षः, [ खलु ] । चक्षुष्य इति श्लेषमूलाऽतिशयोक्तिः, तया पूर्वोक्तया च सङ्कीर्णोऽयमर्थान्तरन्यासः ॥५७॥

य इति ।—[ तेषां ] यदूनां, वहिर्भवः [ वाह्यः ] । "वहिषष्टि-लोपो यञ्च" (वा०) इति वचनात् यञ्प्रत्ययः । [यः, रागः] अङ्गरागः, [ सः ] रागः, [ जलैः ] तोयैः, जडैश्च, [ निरासि ] निरस्तः, [खलु] । अस्यतेः कर्मणि लुङ् । [ चित्तेः, यः ] रागः, [ स तु ] ; सैवावस्था यस्य सः [ तदवस्थ एव ] न निरस्त इत्यर्थः । अत्र रागयोरभेदाध्यवसायाद-तिशयोक्तिः । [हि] तथा हि, [सर्वः] अपि, [धीराणां] महताम्, [ अन्तः-पातित्वात्] अन्तर्गतत्वात्, [एव] इति यावत् । [ परस्याभिभवनीयतां न व्रजति ] अन्यथा व्रजत्येवेत्यर्थः । पूर्ववदलङ्कारः ॥ ५८ ॥

फेनानामिति ।—[ वधूनां ] भ्रष्टभूषणानामपीति भावः । [ पयसि विभूषणं,पर्य्याप्तं] समग्रमासीदित्यर्थः । कुतः ? [फेनानां] हिण्डीराणाम्, [उरसिरुहेषु] उरसि रुहन्तीत्युरसिरुहाः स्तनाः । "सुपि" (३।२।४ पा०) इति योगविभागात् कप्रत्ययः,"हलदन्तात्" ( ६।३।८ पा० ) इत्यलुक् ।

गण्डेषु स्फुटरचनाऽब्जपत्रवल्ली
पर्य्याप्तं पयसि विभूषणं वधूनाम् ॥ ५९ ॥

भ्रश्यद्भिर्जलमभि भूषणैर्वधूना-
मङ्गेभ्यो गुरुभिरमज्जि लज्जयेव ।
निर्माल्यैरथ ननृतेऽवधीरिताना-
मप्युच्चैर्भवति लघीयसां हि धार्ष्ट्यम् ॥६०॥

आमृष्टास्तिलकरुचः स्रजो निरस्ता
नीरक्तं वसनमपाकृतोऽङ्गरागः ।

---

तेषु [ हारलीला ] मुक्तावलिश्रीः, जातेति शेषः, [ शैवलानां जघनतलेषु, चैलश्रीः ] वसनशोभा जातेति शेषः । [ गण्डेषु ] कपोलेषु, शैवला इति विभक्तिविपरिणामादनुषङ्गः । [ स्फुटरचना ] व्यक्तविन्यासा, [अब्जपत्रवल्ली ] पद्मपत्रलता, जातेति शेषः । अत्र फेनानां हारलीलेव लीला, शैवलानां चैलश्रीरिव श्रीरिति निदर्शनाभ्यां, शैवलाः पत्रवल्लीति रूपकेण च पादत्रयवाक्यार्थैश्चतुर्थवाक्यार्थसमर्थनात् तैरेवाङ्गाङ्गिभावेन सङ्कीर्णं वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ५९ ॥

भ्रश्यद्भिरिति ।—[ वधूनामङ्गेभ्यः, भ्रश्यद्भिः ] पतद्भिः, [ गुरुभिः ] सौवर्ण्याद्गुरुत्वयुक्तैः, [ भूषणैः, लज्जया ] भ्रंशप्रयुक्तया ह्रिया, [इव] इत्युत्प्रेक्षा । [जलमभि अमज्जि] जले मग्नम् । भावे लुङ् । [अथ] अनन्तरमेव, न तु विलम्बेनेति भावः । [ निर्माल्यैः ] भुक्तोज्झितमाल्यैः, [ ननृते ] जले अनर्त्ति । भ्रंशेऽपि निर्लज्जैरिति भावः । [ हि ] तथा हि, [ अवधीरितानां] तिरस्कृतानाम्, [अपि, लघीयसां] तुच्छानाम्, [उच्चैर्धार्ष्ट्यं] निर्लज्जत्वमेवाधिकं, [ भवति ] इति अर्थान्तरन्यासः । महान्तः पदभ्रंशे लज्जिताः क्वचित् निलीयन्ते, तुच्छास्तु निर्लज्जा विजृम्भन्ते इति भावः । अप्सु गुरूणि मज्जन्ति, लघूनि प्लवन्त इति परमार्थः ॥ ६० ॥

कामः स्त्रीरनुशयवानिव स्वपक्ष-
व्याघातादिति सुतराञ्चकार चारूः ॥ ६१ ॥
शीतार्त्तिं बलवदुपेयुषेव नीरै-
रासेकाच्छिशिरसमीरकम्पितेन ।
रामाणामभिनवयौवनोष्मभाजो-
राश्लेषि स्तनतटयोर्नवांशुकेन ॥ ६२ ॥

---

आमृष्टा इति।—[ तिलकरुचः ] पत्रशोभाः, [ आमृष्टाः, स्रजः ] मालाः, [ निरस्ताः, वसनं ] कौसुम्भं वासः, [नीरक्तम्] अरक्तं, निरस्त-रागमित्यर्थः ; कृतमिति शेषः। [ अङ्गरागोऽपाकृतः ] ; सर्वत्र जलैरि-त्यर्थः। [ इति ] इत्थं, [स्वपक्षव्याघातात्] स्ववर्गक्षयात्, [ अनुशयवान् ] अनुतापवान्, [इव] इत्युत्प्रेक्षा *। [कामः, स्त्रीः] स्त्रियः। "वाम्शसोः" ( ६।४।८० पा० ) इतीयङादेशविकल्पात् पक्षे पूर्वसवर्णदीर्घः। [ सुतरां, चारूः ] पूर्वतोऽपि रमणीयाः, [ चकार ]। स्त्रीणां काम एव भूषणम्, अन्यद्वैरूप्यमेवेति भावः ॥ ६१ ॥

शीतेति।—[ नीरैः ] तोयैः, [आसेकात्] आसेचनात्, [ शीतार्त्तिं ] शीतव्यथां, [ बलवत् ] सुष्ठु, [ उपेयुषेव ] प्राप्तवतेवेत्युत्प्रेक्षा ; अत एव [ शिशिरसमीरकम्पितेन ] शीतवातवेपितेन, [ नवांशुकेन ] कर्त्रा। [ अभिनवयौवनोष्मभाजोः ] अभिनवो यो यौवनेनोष्मा उष्णत्वं तद्भाजोः, [ रामाणां, स्तनतटयोः ] स्तनयोरेव तटयोः आधारयोः, [ आश्लेषि ] आश्लिष्टं, संसक्तमित्यर्थः। भावे लुङ्। सेकहेतुकस्यांशुकश्लेषस्य शीतार्त्तिहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा ॥ ६२ ॥

---

* यथा हि अभिमानी कश्चित् सपत्नोत्पादितेषु कर्मसु केनचित् विफलतां नीतेषु सत्सु पश्चात्तापपरीतः सन् ततोऽपि तेषु रमणीयतां विधातुमत्यर्थं यतते, तद्वत् कामः स्वपक्षक्षये जाते स्त्रियः अत्यर्थं मनोज्ञाः चकारेति कामे अभिमानिपुरुषव्यवहार-समारोपात् समासोक्त्यलङ्कारोऽपि अनयैवोत्प्रेक्षया व्यज्यते।

श्च्योतद्भिः समधिकमात्तमङ्गसङ्गा-
ल्लावण्यं तनुमदिवाम्बु वाससोऽन्तैः ।
उत्तेरे तरलतरङ्गरङ्गलीला-
निष्णातैरथ सरसः प्रियासमूहैः ॥ ६३ ॥

दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥ ६४ ॥

---

इत्थमासां जलक्रीड़ामुक्त्वा, जलादुत्तरणं वर्णयति, श्च्योतद्भिरिति ।—[ अथ ] जलक्रीड़ाऽनन्तरम्, [ अङ्गसङ्गात् ] गात्रसम्पर्कात्, [ आत्तम् ] उपात्तं, संसक्तमिति यावत् । [ समधिकम् ] अतिरिक्तं, [ तनुमत् ] मूर्त्तिमत्, [ लावण्यमिव ] कान्तिसारमिवेत्युत्प्रेक्षा । [ अम्बु, श्च्योतद्भिः ] क्षरद्भिः । भौवादिकत्वात् लघूपधगुणः । [तरलतरङ्गरङ्गलीलानिष्णातैः] तरलाश्चपलास्तरङ्गा एव रङ्गा नृत्यस्थानानि, * तेषु लीला नर्त्तितानि, तासु निष्णातैः कुशलैः । "निनदीभ्यां स्नातेः कौशले" (८।३।८९ पा०) इति षत्वम् । [ वाससोऽन्तैः ] वस्त्रस्याञ्चलैरुपलक्षितैः, [ प्रियासमूहैः ] स्त्रीसङ्घैः, [ सरसः ] ह्रदात्, [उत्तेरे] उत्तीर्णं, निर्गतमित्यर्थः । तरतेर्भावे लिट् ॥ ६३ ॥

दिव्यानामिति ।—[ दिव्यानामपि ] दिवि भवा दिव्यास्तेषामपि, [ कृतविस्मयां ] सौन्दर्य्यातिरेकेण जनिताद्भुतरसां, [ स्फुरदरविन्दचारुहस्तां ] स्फुरदरविन्दाभ्यां चारू हस्तौ यस्यास्तां, पद्महस्तामित्यर्थः । [ पुरस्तात् ] अग्रतः, [ अम्भस्तः ] जलात् । पञ्चम्यास्तसिल् । [उत्तरन्तीं] निष्क्रामन्तीं, [काञ्चित्] स्त्रियं, मथ्यमानात् समुद्रात् सद्यः प्रादुर्भवन्तीं

---

* इति रूपकम् ।

श्लक्ष्णं यत्परिहितमेतयोः किलान्त-
र्द्धानार्थं तदुदकसेकसक्तमूर्व्वोः।
नारीणां विमलतरौ समुल्लसन्त्या
भासाऽन्तर्दधतुरुरू दुकूलमेव ॥ ६५ ॥

वासांसि न्यवसत यानि योषितस्ताः
शुभ्राभ्रद्युतिभिरहासि तैर्मुदेव।

---

[श्रियमिव] लक्ष्मीमिव, [उद्वीक्ष्य शौरिः, जलनिधिमन्थनस्य] समुद्रमन्थनमित्यर्थः। मन्थेर्भौवादिकस्येदित्त्वात् नुमागमः, "अधीगर्थ—" (२।३।५२ पा०) इत्यादिना कर्म्मणि षष्ठी। [अस्मार्षीत्] स्मृतवान्। अत्र समुद्रमन्थनस्मारिकया श्रियमिवेत्युपमया सादृश्यात् श्रीः स्मृतेति स्मरणालङ्कारप्रतीतिरलङ्कारध्वनिः * ॥ ६४ ॥

श्लक्ष्णमिति।—[एतयोरूर्व्वोः, अन्तर्द्धानार्थं] छादनार्थं, [किल, श्लक्ष्णं] स्निग्धं, [यत्] दुकूलं, [परिहितम्] आच्छादितम्, [उदकसेकसक्तम्] उदकसेकेन संसक्तं, संस्पृष्टमित्यर्थः, [तत् दुकूलं] कर्म्म। [विमलतरौ नारीणाम्, ऊरू] पीवरौ ऊरू, [एव] कर्त्तारौ [समुल्लसन्त्या] स्फुरन्त्या, [भासा] निजकान्त्या, [अन्तर्दधतुः] छादितवन्तौ; तदेतद्भूषणमिति भावः। अत्र दुकूलस्योरूच्छादकत्वेऽपि तदभावोक्तेरसम्बन्धेऽपि सम्बन्धरूपाऽतिशयोक्तिः; तदपेक्षया चोर्व्वोर्दुकूलानां छादकयोराच्छादकत्वोक्तेरसम्बन्धे सम्बन्धरूपाऽतिशयोक्त्यनुप्राणितेति सजातीयसङ्करः, तदनुप्राणितश्च विषमालङ्कारः इति विजातीयसङ्करः। तेन चोर्व्वोर्लोकोत्तरं लावण्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ६५ ॥

वासांसीति।—[ताः योषितो यानि वासांसि, न्यवसत] निवसित-

---

* पुरा हि देवदानवैर्मिलित्वा क्षीरोदधिममृतं ममन्थे; पश्चाच्च लक्ष्मीः कमलहस्ता तस्मात् प्रादुरासीत् इति पौराणिकी वार्त्ता; अत एव उद्दीपकीभूतानां कमलासदृशीनां कामिनीनां दर्शनात् तत्सहकारेणैव लक्ष्मीरूपस्य लोकप्रसिद्धवस्तुनः

अत्याक्षुः स्नपनगलज्जलानि यानि
स्थूलाश्रुस्नुतिभिररोदि तैः शुचेव ॥ ६६ ॥
आर्द्रत्वादतिशयिनीमुपेयिवद्भिः
संसक्तिं भृशमपि भूरिशोऽवधूतैः ।
अङ्गेभ्यः कथमपि वामलोचनानां
विश्लेषो बत नवरक्तकैः प्रपेदे ॥ ६७ ॥

---

वत्यः । 'वस आच्छादने' इति धातोः कर्त्तरि लङ् । [ शुभ्राभ्रद्युतिभिः ] शुभ्राभ्राणां द्युतिरिव द्युतिर्येषां तैः, * [तैः] वासोभिः, [मुदा] नारीनिवसनानन्देन, [ अहासीव ] हसितमिव । भावे लुङ् । [ स्नपनगलज्जलानि] स्नपनेन गलज्जलानि स्रवत्तोयानि, [यानि] वासांसि, [अत्याक्षुः] त्यक्तवत्यः, [ तैः शुचा, स्थूलाश्रुस्रुतिभिः ] स्थूला अश्रुस्रुतिर्येषां तैः, [अरोदीव] रोदनं कृतमिव । भावे लुङ् । अत्र धावल्यगुणजलगलनक्रियानिमित्तयोर्हासरोदनक्रिययोः सजातीयोत्प्रेक्षयोः सङ्करः † ॥ ६६ ॥

आर्द्रत्वादिति ।—[ आर्द्रत्वात् ] जलेन प्रेम्णा च सरसत्वात्, [ अतिशयिनीम् ] अतिशयवतीं, [ संसक्तिं ] संश्लेषं, परिचयञ्च, [उपेयिवद्भिः ] प्राप्तवद्भिः, अत एव [ भृशं, भूरिशः ] बहुशः, [ अवधूतैरपि ] निरस्तैरपि ; अन्यत्र,—निष्कासितैरपि ; नवरक्तैरेव [नवरक्तकैः] नूतनरक्तवस्त्रैः, नवानुरागिभिश्च, [वामलोचनानां] सुदृशाम्, [अङ्गेभ्यो विश्लेषः, बत ] खेदे, [ कथमपि, प्रपेदे ] प्राप्तः । एकत्रातिश्लेषात्, अन्यत्रातिपरिचयाच्चेति भावः । अत्यासक्ताः कामिनो धनपरायणाभिर्वेश्याभिरवधूताः

---

स्मरणं स्फुटः एव, तत् कथमलङ्कारध्वनिरित्युक्तं तन्न जानीमहे ; प्रत्युत एतेन तासामलौकिकं लावण्यं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः समुचित एव ।

* इत्युपमा ।

† तेनैव च सङ्करेण नारीगणैः पिहितानां परित्यक्तानाञ्च वसनानां यथासङ्ख्य प्रियसङ्गित्वं तद्विरहित्वञ्च व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ।

प्रत्यंसं विलुलितमूर्द्धजा चिराय
स्नानार्द्रं वपुरुदवापयत् किलैका।
नाजानादभिमतमन्तिकेऽभिवीक्ष्य
स्वेदाम्बुद्रवमभवत्तरां पुनस्तत् ॥ ६८ ॥

---

कथञ्चित् ता मुञ्चन्तीत्यर्थान्तरप्रतीतिः। इह विशेष्यस्यापि श्लिष्टत्वात् शब्दशक्तिमूलो ध्वनिरेव ॥ ६७ ॥

प्रत्यंसमिति।—[ एका ] स्त्री, [ प्रत्यंसम् ] अंसयोः। विभक्त्यर्थेऽव्ययीभावः। [ विलुलितमूर्द्धजा ] विकीर्णकेशा सती, [ स्नानार्द्रं वपुः, चिराय ] चिरम्, [ उदवापयत् ] निरवापयत्, अशोषयदिति यावत्। वयतेर्ण्यन्तात् लङ्। "अर्त्तिह्री—"(७।३।३६ पा०) इत्यादिना पुगागमः। [किल] खलु, [पुनस्तत्] वपुः, [ अभिमतं ] प्रियम्, [ अन्तिकेऽभिवीक्ष्य, स्वेदाम्बुद्रवं] स्वेदाम्बुनो द्रवम्। * द्रवशब्दः शुक्लादिवत् गुणे पुंसि, गुणिनि भेद्यलिङ्गः,—"आपो द्रवाः सर्वाणि द्रवाणि शूद्रस्रुखेन जुहोति" इत्यादिप्रयोगात्। [ अभवत्तराम् ] अतिशयेनाभवदित्यर्थः। "तिङश्च" ( ५।३।५६ पा० ) इति तरप्। "किमेत्तिङ्—" ( ५।४।११ पा० ) इत्यादिना तिङन्तादामुप्रत्ययः। "तद्धितश्चासर्वविभक्तिः" ( १।१।३८ पा० ) इत्यव्ययत्वम्। [ नाजानात् ] वाक्यार्थः कर्म्म, तत् द्रवभवनं नाज्ञासीदित्यर्थः। अविरतस्वेदार्द्रतामजानती स्नानार्द्रमेवेति मन्यमाना पुनः पुनः वपुरुद्वापयन्त्येवास्त इति तात्पर्य्यार्थः। अत्र वपुश्शत्कर्त्तृकस्य वीक्षणस्य वपुष्युपचारात् द्रवणक्रियायाः समानकर्त्तृकत्वात् पूर्वकालतानिर्वाहः। एषा च गर्वौत्सुक्यादिसञ्चारिसङ्कीर्णस्वेदरोमाञ्चादिसात्त्विकसम्पन्ना स्मितायनुभाववती च इत्यनुसन्धेयम्। अत्रोद्वापनरूपकारणे सति द्रवत्वनिवृत्तिरूपकार्य्यानुत्पत्तेः तद्विरुद्ध-

---

* तेनार्द्रमित्यर्थः।

सीमन्तं निजमनुबध्नती कराभ्या-
मालक्ष्य स्तनतटबाहुमूलभागा।
भर्त्राऽन्या मुहुरभिलष्यता निदध्ये
नैवाहो! विरमति कौतुकं प्रियेभ्यः॥ ६९॥

द्रवत्वप्रतिपादनमुखेनाभिधानात् विशेषोक्तिरलङ्कारः;—"तत्सामग्र्या-मनुत्पत्तिर्विशेषोक्तिर्निगद्यते" इति लक्षणात् * ॥ ६८ ॥

सीमन्तमिति।—[निजम्] आत्मीयं, [सीमन्तं] मूर्द्धजमध्यपद्धतिम्। 'सीमन्तमस्त्रियां स्त्रीणां केशमध्ये तु पद्धतिः' इति वैजयन्ती। [कराभ्याम्, अनुबध्नती] रचयन्ती, विभजन्तीत्यर्थः; अत एव [आलक्ष्य स्तनतटबाहुमूलभागा] आ समन्तात्, लक्ष्या विभाव्याः, स्तनतटे बाहुमूले च तेषां भागाः प्रदेशा यस्याः सा, [अन्या] स्त्री, [अभिलष्यता] अभिलषता। "वा भ्राश—" (३।१।७० पा०) इत्यादिना वैकल्पिकः श्यन्-प्रत्ययः। [भर्त्रा मुहुः, निदध्ये] निध्याता, दृष्टेत्यर्थः। 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः। [अहो] आश्चर्य्यं, [कौतुकम्] अभिलाषः। प्रीणन्तीति प्रियाः विषयाः। ["इगुपधज्ञाप्रीकिरः कः" (३।१।१३५ पा०) इति कः। तेभ्यः [प्रियेभ्यः, न विरमत्येव] उपभोगेऽपि न निवर्त्तते इति आश्चर्य्यम्। 'न जातु कामः कामानामुपभोगेन शाम्यति' इति भावः। "जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्" (वा०) इति पञ्चमी। "व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम्। अर्थान्तर-न्यासः॥ ६९॥

* अपि च, द्रवद्रव्योत्पत्तेः कारणाभावेऽपि तद्दर्शनात् विनाहेतुककार्य्योत्पाद-रूपा विभावना; किमत्र अहेतुकस्य कार्य्योत्पादस्य दर्शनात् विभावना, उत वा कारण-सत्त्वेऽपि फलोत्पत्तेरदर्शनात् विशेषोक्तिः इत्युभयोः सन्देहसङ्करः। अत्र पूर्वार्द्धे वपुषः चिराय स्नानार्द्रीभावत्वाभावेऽपि स्वेदाम्बुद्रवे साम्येन स्नानजनिताम्बुबुद्धेरु-दयात् भ्रान्तिमदलङ्कारः, तस्य च प्रोक्तसङ्करेण विजातीयसङ्करः।

स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम्।
वासश्च प्रतनु विविक्तमस्त्वितीयान्
आकल्पो यदि कुसुमेषुणा न शून्यः ॥७०॥

इति धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन
श्रियमाप्तवतोऽतिशायिनीमपमलाङ्गभासः।
अवलोक्य तदैव यादवानपरवारिराशेः
शिशिरेतररोचिषाऽप्यपां ततिषु मङ्क्तुमीषे ॥७१॥

note the peculiar characteristic of the verse which itself expresses the meaning by its word

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
जलविहारवर्णनं नामाष्टमः सर्गः ॥ ८ ॥

---

स्वच्छेति।—[ स्वच्छाम्भःस्नपनविधौतं ] स्वच्छेनाम्भसा स्नपनेनाभिषेकेण विधौतं विमलितम्, [ अङ्गं ] वपुः, [ ताम्बूलद्युतिविशदः ] ताम्बूलद्युत्या ताम्बूलरागेण विशद उज्ज्वल [ ओष्ठः ] अधरः, [ प्रतनु ] सूक्ष्मं, [ विविक्तं ] विमलं, [ वासश्च ]। विविक्तमेकान्तस्थानञ्च। 'विविक्तौ पूतविजनौ' इत्यमरः। इत्येवंरूपः [ इयान् ] एतावानेव, [ विलासिनीनाम्, आकल्पः ] नेपथ्यम्, [ अस्तु ] किमन्यैरित्यर्थः। [ कुसुमेषुणा ] कामेन, [ शून्यो यदि न ] स्यात्। अन्यथा उद्विजितानामिव कनकभूषणमपि भारायत एवेति भावः। एतेन विच्छित्त्याख्य आलम्बनचेष्टारूप उद्दीपनविभावः उक्तः;—'स्तोकभूषणयोगेऽपि विच्छित्तिरिति गद्यते' इति लक्षणात्। अत्र स्नानताम्बूलादिपदार्थान्वितविशेषणगत्या अङ्गोष्ठादीनामाकल्पत्वप्रतिपादनार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ७० ॥

अथोत्तरसर्गे सूर्य्यास्तमयादिवर्णनं प्रस्तौति, इतीति।—[ इति ] इत्थं, [ सरसि, मज्जनेन ] स्नानेन, [ धौतपुरन्ध्रिमत्सरान् ] क्षालित-

# नवमः सर्गः ।

—००—

अभितापसम्पदमथोष्णरुचि-
र्निजतेजसामसहमान इव ।
पयसि प्रपित्सुरपराम्बुनिधे-
रधिरोढुमस्तगिरिमभ्यपतत् ॥ १ ॥

---

मानिनीमानान् । अभीक्ष्णमतिशेते अतिशायिनी ताम् [ अतिशायिनीम्] । आभीक्ष्ण्ये णिनिः । [श्रियमाप्तवतः, अपमलाङ्गभासः] विमलाङ्गकान्तीन्,[यादवानवलोक्य तदैव, शिशिरेतररोचिषाऽपि] उष्णांशुनाऽपि, [ अपरवारिराशेः ] पश्चिमाब्धेः, [अपां ततिषु] पूरेषु, [ मङ्क्तुं ] प्रवेष्टुम्, [ ईषे ] इष्टम् । भावे लिट् । परचेष्टासाक्षात्कारो विषयिणां तादृग्विषयाभिलाषमन्तराधत्त इति भावः । अत्र भानोः कालप्राप्तमज्जनस्य यादवमज्जनावलोकनहेतुकत्वमुत्प्रेक्ष्यते । अतिशायिनी वृत्तम् ;—'ससजा भजतोऽतिशायिनी भवति गौ दिगश्वैः' इति छन्दोलक्षणात् ॥ ७१ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्येऽष्टमः सर्गः ॥ ८ ॥

---

अथ सूर्य्यास्तमयं वर्णयति, अभितापेति ।—[अथ] जिमज्जनाऽनन्तरम्, [ उष्णरुचिः ] सूर्य्यः, [निजतेजसाम्, अभितापसम्पदं] सन्तापातिरेकम्, [ असहमान इव, अपराम्बुनिधेः ] पश्चिमाब्धेः, [ पयसि, प्रपित्सुः ] पतितुमिच्छुः । पततेः सन्नन्तादुप्रत्ययः । "सनि मीमा—" ( ७।४।५४ पा० ) इत्यादिना इसादेशः, "अत्र लोपोऽभ्यासस्य" ( ७।४।५८ पा० )

गतया पुरः प्रति गवाक्षमुखं
दधती रतेन भृशमुत्सुकताम्।
मुहुरन्तरालभुवमस्तगिरेः
सवितुश्च योषिदमिमीत दृशा ॥ २ ॥

---

इत्यभ्यासलोपः। [अस्तगिरिम्] अस्ताद्रिम्। 'अस्तस्तु चरमक्ष्माभृत्' इत्यमरः। [अधिरोढुम्, अभ्यपतत्] अभ्यधावत्। अत्रासह्यमान इवेति कालप्राप्तस्य पयसि प्रपातस्य निजतेजोऽसहनहेतुकत्वमुत्प्रेक्ष्यते। * अस्मिन् सर्गे प्रमिताक्षरा वृत्तम्;—'प्रमिताक्षरा सजससैरुदिता' इति लक्षणात् ॥ १ ॥

गतयेति।—[रतेन] रत्यर्थे। "प्रसितोत्सुकाभ्यां तृतीया च" (२।३।४४ पा०) इति सप्तम्यर्थे तृतीया। [भृशम्, उत्सुकतां], कालाक्षमत्वलक्षणमौत्सुक्यं, [दधती योषित्, पुरः] अग्रे। [प्रति गवाक्षमुखं] गवाक्षमुखं गवाक्षद्वारं प्रति, [गतया] अपसृतया, [दृशा अस्तगिरेः सवितुश्च, अन्तरालभुवं] मध्याकाशप्रदेशं, [मुहुः, अमिमीत] माति स्म। हस्तमात्रमवशिष्टमरत्निमात्रमवशिष्टमित्यादिमानकरणेनास्तमयं प्रतीक्षितवतीत्यर्थः। माङो लङि "श्लौ" (६।१।१० पा०) इति द्विर्भावः। "भृञामित्" (७।४।७६ पा०) इत्यभ्यासस्येत्वम्। एतच्चास्तमयप्रतीक्षणभ्रमादौत्सुक्यानुभावान्तरोपलक्षणम्। अत्रौत्सुक्यभाववचनात् प्रेयोऽलङ्कारः † ॥ २ ॥

---

* यथा हि कश्चित् अभिमानतापदग्धशरीरः तत्प्रशमनाय उच्चतरस्थानमासाद्य तस्मात् पतित्वा जलाशयाभ्यन्तरमनुप्रविश्य स्वसन्तापं निर्वापयति, तथाविधं वस्तु उष्णरश्मिनाऽप्यकारि इव इति हेतूत्प्रेक्षयाऽनया व्यज्यते।

† अत्र कामिनीनां दृशा अस्तगिरेः सवितुश्चाभ्यन्तरदेशस्य परिमितेरसम्बन्धेऽपि सादृश्यदर्शनरूपविषयनिगरणेन परिमाणस्य अभेदप्रतिपत्तेः सिद्धवन्निर्देशात् असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिश्च इत्यनयोः अङ्गाङ्गिभावात् सङ्करः।

विरलातपच्छविरनुष्णवपुः
परितो विपाण्डु दधदभ्रशिरः ।
अभवद्गतः परिणतिं शिथिलः
परिमन्दसूर्य्यनयनो दिवसः ॥ ३ ॥

अपराह्णशीतलतरेण शनै-
रनिलेन लोलितलताऽङ्गुलये ।
निलयाय शाखिन इवाह्वयते
ददुराकुलाः खगकुलानि गिरः ॥ ४ ॥

---

विरलेति।—[परिणतिं] परिवृत्तिम्, अन्यत्र,—जरावस्थाञ्च, [गतः]; अत एव [ विरलातपच्छविः ] विरला अल्पा आतपस्य छविर्यस्य सः, अन्यत्र,—क्षीणप्रभः, [ अनुष्णवपुः ] अन्यत्र,—श्लेष्मोदयादीषदुष्णदेहः। अलवणा यवागूरितिवत् अल्पार्थे नञ्प्रयोगः। [ परितो विपाण्डु] एकत्र,—शुभ्राभ्रपटलच्छन्नत्वात्, अपरत्र,—पलितैश्च पाण्डुरम्। अभ्रमाणमेव शिरः [ अभ्रशिरः, दधत् ] उद्वहन्, [ परिमन्दसूर्य्यनयनः] परिमन्दं प्रशान्तम्, अर्थग्रहणासमर्थञ्च, सूर्य्य एव नयनं यस्य स, [दिवसः, शिथिलः] शिथिलवृत्तिः, शिथिलाङ्गश्च, [ अभवत् ]। अत्राभ्रशिर इत्याद्यवयवरूपणात् दिवस एव स्थविर इत्यवयविरूपकसिद्धेस्तद्रूपणादेकदेशविवर्त्तिरूपकं श्लेषानुप्राणितम् ॥ ३ ॥

अपराह्णेति।—[अपराह्णशीतलतरेण] अपरोऽपरभागोऽह्नोऽपराह्णो दिनान्तः। "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" (२।२।१८ पा०) इत्येकदेशिसमासः। "राजाहःसखिभ्यष्टच्" (५।४।९१ पा०)। "अह्नोऽह्न एतेभ्यः" (५।४।८८ पा०) इत्यह्नादेशः, "अह्नोऽदन्तात्" (८।४।७ पा०) इति णत्वम्। तस्मिन् अपराह्णे, शीतलतरेण [अनिलेन शनैः, लोलितलताऽङ्गुलये ] लोलिताश्चालिता लता एवाङ्गुलयो यस्य तस्मै;

उपसन्ध्यमास्त तनु सानुमतः
शिखरेषु तत्क्षणमशीतरुचः ।
करजालमस्तसमयेऽपि सता-
मुचितं खलूच्चतरमेव पदम् ॥ ५ ॥
प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्त्तुरभूत्
न पतिष्यतः करसहस्रमपि ॥ ६ ॥

---

अत एव [ निलयाय ] निवासाय, [ आह्वयते ] अङ्गुलिसंज्ञया आह्वानं कुर्वाणाय, [ इव ] स्थितायेत्युत्प्रेक्षा । [ शाखिने ] वृक्षाय, [ खगकुलानि ] पक्षिसङ्घाः, [ आकुलाः ] तुमुलाः, [गिरः] इदमागम्यत इति प्रत्युत्तराणि, [ ददुः ] इव इत्यनुषङ्गादुत्प्रेक्षा ॥ ४ ॥

उपसन्ध्यमिति ।—[ उपसन्ध्यं] सन्ध्यायाः समीपे । समीपार्थेऽव्ययीभावे नपुंसकत्वाद्ध्रस्वत्वम् । [ अशीतरुचः ] उष्णांशोः, [ तनु करजालं, तत्क्षणं ] तस्मिन् क्षणे, तत्कालेऽपीत्यर्थः । अत्यन्तसंयोगे द्वितीया । [ सानुमतः ] अद्रेः, [ शिखरेषु, आस्त ] अतिष्ठत् । आसेः कर्त्तरि लङ् । [ सताम्, अस्तसमये ] नाशसमये, [ अपि, उच्चतरमेव पदम् ] उन्नतस्थानमेव, [ उचितं खलु ] । अर्थान्तरन्यासः ॥ ५ ॥

प्रतिकूलतामिति ।—[ विधौ ] दैवे, [ प्रतिकूलतामुपगते ] सति, [ बहुसाधनता ] अनेकसाधनवत्ता, [ विफलत्वमेति ] । महत्यपि साधनसम्पत्तिर्निष्फलैवेत्यर्थः । [ हि ] तथा हि, [ पतिष्यतः ] आसन्नपातस्य, [दिनभर्त्तुः, करसहस्रमपि] करा अंशवः, हस्ताश्च । 'बलिहस्तांशवः कराः' इत्यमरः । तेषां सहस्रमपि, [ अवलम्बनाय ] अवष्टम्भनाय,

नवकुङ्कुमारुणपयोधरया
स्वकरावसक्तरुचिराम्बरया ।
अतिसक्तिमेत्य वरुणस्य दिशा
भृशमन्वरज्यदतुषारकरः ॥ ७ ॥
गतवत्यराजत जपाकुसुम-
स्तवकद्युतौ दिनकरेऽवनतिम् ।

---

[ नाभूत् ]। अतो दैवमेव प्रबलमिति भावः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः * ॥ ६ ॥

नवेति ।—[ अतुषारकरः ] उष्णांशुः, [ नवकुङ्कुमारुणपयोधरया ] नवकुङ्कुमवदरुणपयोधरया नवसन्ध्याऽरुणमेघया, अन्यत्र,—नवकुङ्कुमारुणकुचया, [ स्वकरावसक्तरुचिराम्बरया ] स्वकिरणाक्रान्तरुचिराकाशया, अन्यत्र,—स्वहस्तलग्नचारुवस्त्रया, [ वरुणस्य दिशा ] पश्चिमदिशा सहेत्यर्थः। वरुणसम्बन्धात् पराङ्गनात्वञ्च गम्यते। "वृद्धोयूना—" ( १।२।६५ पा० ) इति सूत्रादौ सहार्थाप्रयोगात् सहार्थानामप्रयोगेऽपि "सहयुक्तेऽप्रधाने" (२।३।१९ पा०) इति सहार्थे तृतीया। [ अतिसक्तिम् ] अतिसन्निकर्षम्, अत्यासक्तिञ्च, [ एत्य ] प्राप्य, [ भृशम्, अन्वरज्यत् ] लोहितोऽनुरक्तश्चाभवत्। रञ्जेर्दैवादिकात् कर्त्तरि लङ्। "कुषिरञ्जोः प्राचां श्यन् परस्मैपदञ्च" ( ३।१।९० पा० ) इति कर्मकर्त्तरि वा। अत्र वारुणीदिनकरादिविशेषणमहिम्नैव तयोर्जारोपनायिकाभावप्रतीतेः समासोक्तिरलङ्कारः ॥ ७ ॥

गतवतीति ।—[जपाकुसुमस्तवकद्युतौ ] † लोहितवर्णे, [ दिनकरेऽवनतिम् ] अस्ततां, [गतवति] सति, लम्बमाने सतीत्यर्थः। [दिग्वलयं]

---

* विधाविति विधिविधुशब्दयोरिकारोकारयोरीकाररूपत्वात् वर्णश्लेषः।

† इत्युपमा।

बहलानुरागकुरुविन्ददल-
प्रतिबद्धमध्यमिव दिग्वलयम् ॥ ८ ॥

द्रुतशातकुम्भनिभमंशुमतो-
वपुरर्द्धमग्नवपुषः पयसि ।
रुरुचे विरिञ्चिनखभिन्नबृह-
ज्जगदण्डकैकतरखण्डमिव ॥ ९ ॥

अनुरागवन्तमपि लोचनयो-
र्दधतं वपुः सुखमतापकरम् ।

---

दिङ्मण्डलं, कङ्कणाङ्ग ध्वन्यते । * [ बहलानुरागकुरुविन्ददलप्रतिबद्धमध्यमिव ] बहलानुरागैः सान्द्ररागैः कुरुविन्ददलैः पद्मरागशकलैः प्रतिबद्धः प्रत्युप्तो मध्यो यस्य तदिव, [ अराजत ] इत्युत्प्रेक्षा । 'कुरुविन्दस्तु मुस्तायां कुल्माषव्रीहिभेदयोः । इङ्गुदे पद्मरागे च मुकुलेऽपि समीरितः ॥' इति विश्वः ॥ ८ ॥

द्रुतेति ।—[ द्रुतशातकुम्भनिभं ] द्रुतं तप्तं यत् शातकुम्भं तपनीयम् । 'तपनीयं शातकुम्भम्' इति सुवर्णपर्य्यायेष्वमरः । तेन सदृशं तन्निभमिति नित्यसमासः । [ पयसि ] समुद्रोदके, [ अर्द्धमग्नवपुषः ] अर्द्धं तथा तथा मग्नं वपुर्यस्य तस्य, [ अंशुमतः ] अर्कस्य, [ वपुः ] मण्डलं, [ विरिञ्चिनखभिन्नबृहज्जगदण्डकैकतरखण्डमिव ] विरिञ्चेर्ब्रह्मणो नखेन विभिन्नस्य द्वेधा विदलितस्य, बृहतो महतः, जगदण्डकस्य जगदाश्रयकोशस्य, ब्रह्माण्डकस्यैकतरखण्डमन्यतरदलमिव, [ रुरुचे ] रराज । अत्रोपमानस्य पुराणप्रसिद्धत्वादुपमाऽलङ्कारः ॥ ९ ॥

अनुरागवन्तमिति ।—[ अपरदिग्गणिका ] अपरदिक् पश्चिमा, सैव

---

* यथा हि कङ्कणं लोहितैः पद्मरागमणिशकलैः प्रत्युप्तमध्यदेशं धारयन्ती सती काप्यङ्गना अतीव शोभमाना तिष्ठति, एवमेव दिगङ्गना आसीदिति वस्तु ध्वन्यते ।

निरकाशयद्रविमपेतवसुं
वियदालयादपरदिग्गणिका ॥ १० ॥
अभितिग्मरश्मि चिरमा विरमा-
दवधानखिन्नमनिमेषतया ।

---

गणिका वेश्या, [ अनुरागवन्तमपि ] अनुरागो लौहित्यम्, अभिलाषश्च, तद्वन्तमपि, [ लोचनयोः ], सुखयतीति [ सुखं ] सुखकरं, शान्तत्वादा-भिरूप्याच्च दर्शनीयं, [वपुर्दधतम्] अपि, [अतापकरम्] अनौष्ण्यादशठ-त्वाच्चासन्तापकारिणं, सुखस्पर्शं वा, तथाऽपि [ अपेतवसुं ] नीरश्मिं, निर्धनञ्च। 'देवभेदेऽनले रश्मौ वसू रत्ने धने वसु' इत्यमरः। [ रविं ] रविः सूर्य्यो विटश्च गम्यते। तं, [ वियदालयात् ] वियदाकाशमेवालयो गृहं, तस्मात्, [निरकाशयत्] निष्काशितवती। धनपरा हि वेश्या निर्गु-णमपि धनिकमासर्वस्वहरणादत्यनुरक्तवदनुवर्त्तन्ते, गुणवन्तमपि हृत-सर्वस्वं निर्वासयन्ति सद्य एवेति भावः। अस्तं गतोऽर्क इति श्लोकार्थः। अत्र वियदालयादपरदिग्गणिकेत्येकदेशरूपणाद्रवेर्विटत्वरूपणावगमादे-कदेशविवर्त्तिरूपकम्; श्लेषोऽपि तदुत्थापितत्वादनुराग एवानुरागो वसव एव च वसूनीति रूपकपर्य्यवसित एवेत्यङ्गम् * ॥ १० ॥

अभीति।—[ नलिनी, अभितिग्मरश्मि ] सूर्य्याभिमुखम्, [ चिरमा विरमात् ] अस्तमयात्, [ अनिमेषतया ] अपक्ष्मपाततया। दलसङ्कोच एवात्र निमेषः। [ अवधानखिन्नम् ] अवधानेनाभिमुखावस्थाननिर्बन्धेन

---

* यथा हि गणिकाः वित्तलोभात् निसर्गसुन्दरं सानुरागमपि पुरुषं धनस्य सर्वस्वाहरणादेव इदानीं दरिद्रतां गतम् अनायासेनैव विहाय पुरुषान्तरं भजन्ते, तथैव पश्चिमाशा चिरपरिचितं तपनं विहाय नवोदयं शशधरमेव प्रीणयितुं यतते, इति गणिकाव्यवहारसमारोपात् समासोक्त्यलङ्कारः; परन्त्वत्र समासोक्तौ साधारणविशेषणवशादेव परार्थस्य प्रतीतावपि पुनस्तस्य शब्देनोपादानात् पुनरुक्ति-रिति दर्पणकृन्मतम्, अत्र अपरदिगित्येतावतैव विशेषणमहिम्ना तस्याः गणिकात्व-प्रतीतेः।

विगलन्मधुव्रतकुलाश्रुजलं
न्यमिमीलदब्जनयनं नलिनी ॥ ११ ॥
अविभाव्यतारकमदृष्टहिम-
द्युतिबिम्बमस्तमितभानु नभः।
अवसन्नतापमतमिस्रमभा-
दपदोषतैव विगुणस्य गुणः ॥ १२ ॥
रुचिधाम्नि भर्त्तरि भृशं विमलाः
परलोकमभ्युपगते विविशुः।

---

खिन्नमलसम्, अत एव [ विगलन्मधुव्रतकुलाश्रुजलं ] विगलन्निःसरन्मधुव्रतकुलमेवाश्रुजलं यस्य तत्, [अब्जनयनम्] अब्जमेव नयनं, [न्यमिमीलत्] मीलयति स्म। "भ्राजभास—" ( ७।४।३ पा० ) इत्यादिना विकल्पादुपधाह्रस्वः, अत एव नाभ्यासदीर्घः। अनुरक्ता हि कान्ता कान्तमनिमेषं पश्यन्ती, तदपाये सति निमीलिताक्षी स्यादिति भावः। अत्राप्यब्जनयनमित्याद्यवयवरूपणादवयविनोर्नलिनीतिग्मरश्म्योर्नायिकानायकत्वरूपकसिद्धेरेकदेशविवर्त्तिरूपकम् ॥ ११ ॥

अविभाव्येति।—[ अविभाव्यतारकम् ] अलक्ष्यनक्षत्रम्, [ अदृष्टहिमद्युतिबिम्बम्] अदृष्टं हिमद्युतेरिन्दोर्बिम्बं यस्मिन् तत्, अद्याप्यनुदितचन्द्रतारकमित्यर्थः। अस्तमित्यदर्शनेऽव्ययम्। [ अस्तमितभानु ] अस्तमितोऽस्तङ्गतो भानुर्यस्मिन् तत्। एतावता निर्गुणत्वमुक्तम्, अथ निर्दोषत्वमाह,—[ अवसन्नतापम् ] अर्कास्तमयात् प्रशान्तसन्तापम्, [ अतमिस्रम् ] अनुदितान्धकारं, [ नभः ] अन्तरीक्षम्, [ अभात् ] भाति स्म। भातेर्लङ्। ननु निर्गुणस्य का शोभेति न वाच्यं, निर्दोषताया अपि गुणत्वादित्यर्थान्तरन्यासेनाह,—[ विगुणस्य ] गुणहीनस्य, [ अपदोषता] निर्दोषत्वम्, [एव गुणः] ; अतो गुणवत्त्वाच्छोभायुक्तेति कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

ज्वलनं त्विषः कथमिवेतरथा
सुलभोऽन्यजन्मनि स एव पतिः ॥ १३ ॥
विहिताञ्जलिर्जनतया दधती
विकसत्कुसुम्भकुसुमारुणताम् ।
चिरमुज्झिताऽपि तनुरौज्झदसौ
न पितृप्रसूः प्रकृतिमात्मभुवः ॥ १४ ॥

---

रुचीति ।—[ रुचिधाम्नि ] तेजोनिधौ सूर्य्ये, [ भर्त्तरि ] पत्यौ, [ परलोकं ] देशान्तरम्, [ अभ्युपगते ] मृते च सति, [ विमलाः ] शुद्धाः, [ त्विषो भृशं ज्वलनं विविशुः ] । 'अग्निं वावादित्यः सायं प्रविशति' इति श्रुतेरिति भावः । अन्यत्र,—'मृते या म्रियते पत्यौ सा स्त्री ज्ञेया पतिव्रता' इति स्मरणादिति भावः । अग्निप्रवेशफलमाह,—[ इतरथा ] ज्वलनाप्रवेशे, [ अन्यजन्मनि ] जन्मान्तरे, [स एव] स सूर्य्य एव, [पतिः] । अन्यत्र तु,—योऽस्मिन् जन्मनि पतिः स एव [ कथमिव सुलभः ? ] न कथञ्चिदित्यर्थः । 'उद्यन्तं वावादित्यमग्निरनुसमारोहति' इति श्रुतिः । 'तेनैव सह मोदते' इति स्मरणादिति भावः । अतोऽग्निप्रवेशो युक्त इति समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १३ ॥

अथ सन्ध्याप्रादुर्भावमाह, विहितेति ।—[ जनतया ] जनसमूहेन, "ग्रामजन—" ( ४।२।४३ पा० ) इत्यादिना समूहार्थे तल्प्रत्ययः । [ विहिताञ्जलिः ] कृतप्रणामेत्यर्थः । [ विकसत्कुसुम्भकुसुमारुणतां दधती ] विकसत्कुसुम्भकुसुमवदरुणतां दधती ; राजसत्वादिति भावः । तदुक्तं,—'सर्गाय रक्तं रजसोपबृंहितम्' इति । प्रसूत इति प्रसूर्माता । 'जनयित्री प्रसूर्माता' इत्यमरः । पितॄणां प्रसूः [ पितृप्रसूः, असौ ] इयं सन्ध्या रूपिणी, [ आत्मभुवः ] ब्रह्मणः, [ तनुः ] मूर्त्तिः, [ चिरम् उज्झिताऽपि ] त्यक्ताऽपि, [प्रकृतिं] स्वभावं, जगद्वन्द्यत्वादिनिजधर्ममित्यर्थः । [ नौज्झत् ] न विससर्ज्ज । 'उज्झ विसर्गे'

अथ सान्द्रसान्ध्यकिरणारुणितं
हरिहेतिहूति मिथुनं पततोः।
पृथगुत्पपात विरहार्त्तिदल-
हृदयस्रुतासृगनुलिप्तमिव ॥ १५ ॥
निलयः श्रियः सततमेतदिति
प्रथितं यदेव जलजन्म तया।

---

लङ्, "आडजादीनाम्" (६।४।७२ पा०) इत्याडागमः, "आटश्च" (६।१।९० पा०) इति वृद्धिः। भूतपूर्वोऽपि महाजनपरिग्रहः फलतीति भावः। 'पितामहः पितॄन् सृष्ट्वा मूर्त्तिं तामुत्ससर्ज ह। सा प्रातः सायमागत्य सन्ध्यारूपेण पूज्यते॥' इत्यादि भविष्यपुराणमत्र प्रमाणम्। अत्र तनुत्यागरूपकारणसद्भावेऽपि प्रकृतित्यागरूपकार्य्यानुदयाद्विशेषोक्तिरलङ्कारः,—'तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते' इति लक्षणात्॥ १४॥

अथेति।—[अथ] सन्ध्योदयानन्तरं, [सान्द्रसान्ध्यकिरणारुणितं] सान्द्रा ये सान्ध्याः सन्ध्यायां भवाः। "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" (४।३। १६ पा०) इत्यण्प्रत्ययः। तैः किरणैररुणितमरुणीकृतम्, अत एव [विरहार्त्तिदलहृदयस्रुतासृगनुलिप्तमिव] विरहार्त्त्या विरहवेदनया दलतो दीर्य्यमाणात् हृदयात् स्रुतेन क्षरितेनासृजा रुधिरेणानुलिप्तमिव स्थितमित्युत्प्रेक्षा। हरेर्विष्णोर्हेतिरायुधं, चक्रमित्यर्थः। 'हेतिः शस्त्रे तु न स्त्रियोः' इति केशवः। [हरिहेतिहूति] हरिहेतेर्हूतिरिव हूतिराह्वा यस्य तद्धरिहेतिहूति, चक्राह्वमित्यर्थः। [पततोः] पक्षिणोः। 'पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः' इत्यमरः। [मिथुनं] चक्रवाकद्वन्द्वमित्यर्थः, [पृथक्] भेदेन, [उत्पपात] उदडीयत॥ १५॥

निलय इति।—[यदेव], जले जन्म यस्य तत् [जलजन्म] जलजम्, [एतत्] एव, [सततं श्रियः, निलयः] आलयः, [इति प्रथितं] प्रसिद्धम्।

दिवसात्यये तदपि मुक्तमहो !
चपलाजनं प्रति न चोद्यमदः ॥ १६ ॥
दिवसोऽनुमित्रमगमद्विलयं
किमिहास्यते बत मयाऽबलया ।
रुचिभर्त्तुरस्य विरहाधिगमा-
दिति सन्ध्ययाऽपि सपदि व्यगमि ॥ १७ ॥

'निकाय्यनिलयालयाः' इत्यमरः । [ तदपि ] नित्यवासभूतमपीत्यर्थः । [ तया ] श्रिया, [दिवसात्यये] सायङ्काले, [ मुक्तम्, अहो ! ] देवानामपि कृतघ्नत्वं यदापदि महोपकारिणस्त्याग इत्याश्चर्य्यम् । अथ वा, [चपलाजनं ] चपला चापल्यवती स्त्री, कमला च, 'चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च' इति विश्वः । सैव जनश्चपलाजनः । "जातेश्च" ( ६।२।४१ पा० ) इति "संज्ञापूरण्योश्च" ( ६।३।३।३८ पा० ) इति चोभयत्रापि पुंवद्भावप्रतिषेधः । तं, [ प्रति ] तस्मिन् इत्यर्थः । [ अदः ] इदं कृतघ्नत्वं, [ चोद्यं ] चोदनीयं, कथमित्याक्षेप्यमित्यर्थः, [ न ] । चपलत्वात् न आश्चर्य्यमेतदिति भावः । श्लेषमूलाऽतिशयोक्त्यनुप्राणितोऽयमर्थान्तरन्यासः ॥ १६ ॥

दिवस इति ।—[ दिवसः ] वासरः ; पुमानिति भावः । [ अनुमित्रं ] मित्रं सूर्य्यं, सुहृदञ्च अनु, मित्रेण सहेत्यर्थः । "तृतीयार्थे" (१।४।८५ पा०) इत्यनोः कर्म्मप्रवचनीयत्वात् द्वितीया । 'मित्रं सुहृदि मित्रोऽर्के' इति विश्वः । [ विलयं ] नाशम्, [ अगमत् ] गतः । गमेर्लुङि पुषादित्वात् च्लेरङादेशः । * [ अबलया ] स्त्रिया, [ मया, रुचिभर्त्तुः ] तेजोनिधेः, प्रेमास्पदपतेश्च, [ अस्य ] सूर्य्यस्य, [विरहाधिगमात्] । ल्यब्लोपे पञ्चमी । विरहज्ञानं प्राप्येत्यर्थः । [ इह ] अस्मिँल्लोके, [ किमास्यते ] किमर्थं स्थीयते ? आसेर्भावे लिट् । [ बत ] इति खेदे । [ इति ] इत्थमा-

* "पुषादिद्युता—" ( ३।१।५५ पा० ) इति सूत्रम् ।

प्रतिते पतङ्गमृगराजि निज-
प्रतिविम्बरोषित इवाम्बुनिधौ।
अथ नागयूथमलिनानि जगत्-
परितस्तमांसि परितस्तरिरे ॥ १८ ॥

व्यसरन्नु भूधरगुहाऽन्तरतः
पटलं वहिर्वहलपङ्करुचि।

लोच्येवेत्यर्थः, अत एव उत्प्रेक्षा। [ सन्ध्ययाऽपि सपदि, व्यगमि ] व्यपागामीत्यर्थः। गमेः स्वार्थण्यन्ताद्भावे लुङ्, मित्त्वाद्ध्रस्वः,—'अण्यन्ता-दुपधावृद्धिर्नायं स्याद्धेतुमण्णिचि। तस्मात् स्वार्थे णिजुत्पाद्यो मितां ह्रस्वो यतो भवेत् ॥' विगमशब्दात् "तत्करोति—" (ग०) इति ण्यन्ता-ल्लुङिति केचित् ॥ १७ ॥

अथान्धकारं वर्णयति, पतित इति।—[ पतङ्गमृगराजि ] पतङ्गो-ऽर्क एव मृगराट् सिंह इति रूपकसमासः। तस्मिन् [ निजप्रतिविम्ब-रोषित ] निजेन प्रतिविम्बेन रोषिते कोपित [ इव ] इत्युत्प्रेक्षा। स्वप्रतिविम्बे प्रतिसिंहभ्रमादिति भावः। अत एव [ अम्बुनिधौ पतिते ] सति; तज्जिघांसयेति भावः। भावलक्षणसप्तमी। [ अथ ] अस्तु पतनानन्तरं, [ नागयूथमलिनानि ] नागयूथानि करिकुलानीव मलिनानि श्यामानि। "उपमानानि सामान्यवचनैः" ( २।१।५५ पा० ) इति समासः। [ तमांसि, जगत् ] लोकं, [ परितः, परितस्त-रिरे ] आच्छादयामासुः। स्तृणातेः कर्त्तरि लिट्। "ऋतश्च संयोगा-देर्गुणः" ( ७।४।१० पा० ) इति गुणः। अत्र यद्यपि नागयूथमलिना-नीत्युक्त्यानुशासनसिद्धोपमाऽनुसारात् पतङ्गमृगराजीत्यत्राप्युपमितसमा-साश्रयणेनोपमैवोचिता, तथाऽपि तदुत्प्रेक्षायाः पतङ्गेऽसम्भवात् सिंहे सम्भवाच्च रूपकमेव युक्तम्; तथा च रूपकानुप्राणितोत्प्रेक्षेयमुप-मेति च सङ्करः। तत्रोत्प्रेक्षया भ्रान्तिमदुपमया रूपकञ्च व्यज्यत इत्यल-ङ्कारेणालङ्कारध्वनिरिति सङ्क्षेपः ॥ १८ ॥

दिवसावसानपटुनस्तमसो
वहिरेत्य चाधिकमभक्त गुहाः ॥ १९ ॥
किमलम्बताम्बरविलग्नमधः
किमवर्द्धतोर्ध्वमवनीतलतः ।
विससार तिर्य्यगथ दिग्भ्य इति
प्रचुरीभवन्न निरधारि तमः ॥ २० ॥
स्थगिताम्बरक्षितितले परित-
स्तिमिरे जनस्य दृशमन्धयति ।

---

व्यसरदिति ।—[ बहुलपङ्करुचि ] सान्द्रकर्दमच्छवि * [ दिवसावसानपटुनः ] दिवसावसाने दिनान्ते, पटुनः समर्थस्य, [ तमसः पटलं, भूधरगुहाऽन्तरतः ] भूधरगुहानामन्तरतोऽभ्यन्तरात्, [ एत्य ] आगत्य, [ बहिः ] गवाक्षप्रदेशे, [ व्यसरत् ] विसृतं वा, [वहिः] वाह्यदेशादेत्य, [ गुहाः, अधिकं ] भृशम्, [ अभक्त च ] भजते स्म, किं प्रविष्टं वेत्यर्थः । भजतेर्लुङि तङ् । “झलो झलि” ( ८।२।२६ पा० ) इति सकारलोपः । अत्र व्यापकत्वसादृश्यात् तमसोऽन्तर्वहिरपादानकत्वसन्देहात् सन्देहालङ्कारः ॥ १९ ॥

किमिति ।—[प्रचुरीभवत्] बहुलीभवत्, [तमः] कर्त्तृ [किम्, अम्बरविलग्नम् ] आकाशस्थं सत्, [ अधः ] भूतलं प्रति, [अलम्बत ?] अस्रंसत किमिव ? [ अवनीतलतः ] भूतलात्, [ ऊर्द्ध्वम् ] उपरिष्टात्, [ अवर्द्धत किम् ? अथ दिग्भ्यस्तिर्य्यक्, विससार ] विस्तृतम्, [ इति न निरधारि ] अधोलम्बनादीनामन्यतमं न अवधारितमित्यर्थः । धारयतेः कर्म्मणि लुङ् । अत्रापि पूर्ववत् सन्देहालङ्कारः ॥ २० ॥

स्थगितेति ।—[ स्थगिताम्बरक्षितितले ] स्थगिते तिरोहिते, अम्बर-

---

* इत्युपमा ।

दधिरे रसाञ्जनमपूर्वमतः
प्रियवेश्मवर्त्म सुदृशो ददृशुः ॥ २१ ॥

अवधार्य्य कार्य्यगुरुतामभवत्
न भयाय सान्द्रतमसन्तमसम् ।
सुतनोः स्तनौ च दयितोपगमे
तनुरोमराजिपथवेपथवे ॥ २२ ॥

ददृशेऽपि भास्कररुचाऽह्नि न यः
स तमीं तमोभिरधिगम्य तताम् ।

---

क्षितितले येन तस्मिन्, [ तिमिरे परितो जनस्य दृष्टम्, अन्धयति ] अन्धां कुर्वति सति, [ सुदृशः ] स्त्रियः, [अपूर्वं] नूतनं, [रसाञ्जनं] रसं रागमेवाञ्जनं सिद्धाञ्जनं, [ दधिरे ] दधुः । [ अतः ] हेतोः, [ प्रियवेश्मवर्त्म ददृशुः ] । अत्र रसाञ्जन वाक्यार्थेन प्रियवेश्मदर्शनसमर्थनात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ; तेन रसः सिद्धाञ्जनमिवेत्युपमाध्वननादलङ्कारेणालङ्कारध्वनिः ॥ २१ ॥

अवधार्य्येति ।—[ सान्द्रतमसन्तमसं ] सान्द्रतमं यत्सन्तमसं व्यापकं तमः । 'विष्वक्सन्तमसम्' इत्यमरः । "अवसमन्धेभ्यस्तमसः" (५।४।७९ पा०) इति समासान्तोऽच्प्रत्ययः । तत् कर्त्तृ [ सुतनोः ] शुभाङ्ग्याः, [दयितोपगमे] प्रियाभिसरणे, [कार्य्यगुरुतां] सम्भोगकार्य्यस्यावश्यकत्वम्, [ अवधार्य्य ] निश्चित्य, [ भयाय नाभवत् ] । [ स्तनौ ] कुचौ, [ च, तनुरोमराजिपथवेपथवे ] तनुः कृशो यो रोमराजेः पन्थाः । रोमराजिपथो मध्यभागस्तस्य वेपथवे कम्पाय । "ट्वितोऽथुच्" ( ३।३।८९ पा० ) इत्यथुच्प्रत्ययः । नाभवतामिति विपरिणामेनानुषङ्गः । कार्य्यासक्तस्य तत्रापि कामुकस्य कुतो भयं क्लेशगणना च इति भावः । अत्र सन्तमसकुचयोः कामनिमित्ते भयकम्पानुदये कार्य्यगौरवावधारणहेतुकत्वोत्प्रेक्षेयमनेन व्यज्यते ॥ २२ ॥

द्युतिमग्रहीद् ग्रहगणो लघवः
प्रकटीभवन्ति मलिनाश्रयतः ॥ २३ ॥
अनुलेपनानि कुसुमान्यबला:
कृतमन्यवः पतिषु दीपशिखाः ।
समयेन तेन चिरसुप्तमनो-
भवबोधनं सममबोधिषत ॥ २४ ॥

दहशी इति ।—[यो ग्रहगणः, अह्नि] दिवसे, [भास्कररुचा] सवितुस्त्विषा, [ न ददृशेऽपि ] नेक्षितः, [ स ] ग्रहगणः, [ तमोभिः, ततां ] व्याप्ताम् ; तान्यस्यामिति [ तमीं ] रात्रिम् । 'रजनी यामिनी तमी' इत्यमरः । [ अधिगम्य ] प्राप्य, [ द्युतिम्, अग्रहीत् ] ग्रहेर्लुङि "ग्रहोऽलिटि" ( ७।२।३७ पा० ) इति इटो दीर्घत्वेऽपि स्थानिवत्त्वेनेटत्वात् सिचो लोपे सवर्णदीर्घः । तथा हि, [ लघवः ] अल्पाः । 'लिघ्विष्टेऽल्पे लघुः' इत्यमरः । [ मलिनाश्रयतः ] निकृष्टाश्रयणात्, [ प्रकटीभवन्ति ] । अर्थान्तरन्यासः ॥ २३ ॥

अनुलेपनानीति ।—[तेन समयेन] प्रदोषकालेन, कर्त्रा । [ अनुलेपनानि ] कुङ्कुमचन्दनादीनि, [ कुसुमानि ] माल्यादीनि ; तथा [ पतिषु, कृतमन्यवः ] कृतकोपाः, [ अबलाः ] स्त्रियः, तथा [दीपशिखाः] दीपज्वालाश्चेत्येतानि सर्वाणि [ चिरसुप्तमनोभवबोधनं ] चिरं सुप्तस्य पूर्वं स्तब्धस्य, मनोभवस्य कामस्य, बोधनमुद्दीपनं यस्मिन् कर्मणि तत् यथा तथा, तत्पूर्वकमित्यर्थः । इतरथा अनुलेपनादिबोधकस्य वैफल्यासम्भवात् * च इति भावः । [ समं ] सहैव, [ अबोधिषत ] बोधितानि । बुध्यतेर्ण्यन्तात्कर्मणि लुङ् । अत्र गन्धमाल्यसम्पादनस्त्रीमनःप्रसाददीपशिखोत्पादनानामबोधिषतेत्येकेन श्लिष्टशब्देनाभिधानात् श्लेषमूलाऽभेदाध्यवसायरूपाऽतिशयोक्तिरेका ; तथा सुप्तमनोभवबोधनमिति

* अनुलेपनादिबोधनस्य वैफल्यादिति पाठो युक्तः ।

वसुधाऽन्तनिःसृतमिवाहिपतेः
पटलं फणामणिसहस्ररुचाम्।
स्फुरदंशुजालमथ शीतरुचः
ककुभं समस्कुरुत माघवनीम् ॥ २५ ॥

विशदप्रभापरिगतं विबभा-
वुदयाचलव्यवहितेन्दुवपुः।
मुखमप्रकाशदशनं शनकैः
सविलासहासमिव शक्रदिशः ॥ २६ ॥

---

क्रियाविशेषणसामर्थ्यात् सममिति यौगपद्याभिधानाच्च मनोभवबोधनया कार्य्यकारणभूतयोस्तद्विपर्य्ययरूपाऽपरा तदुभयापेक्षया गन्धमाल्यादीनां प्रस्तुतानामवबोधनरूपैकधर्मसम्बन्धात् तुल्ययोगिताभेदश्चेति सङ्करः ॥ २४ ॥

अथ चन्द्रोदयवर्णनं प्रारभते, वसुधेति।—[ अथ ] मनःप्रसादानन्तरं, [ वसुधाऽन्तनिःसृतम् ] वसुधाऽन्तेन भूप्रान्तेन, निःसृतं वहिर्निर्गतम्, [ अहिपतेः ] शेषस्य, [ फणामणिसहस्ररुचां ] फणामणिसहस्राणां रुचां भासां, [ पटलं ] स्तोम, [ इव ] इत्युत्प्रेक्षा। [ शीतरुचः ] चन्द्रस्य सम्बन्धि, [स्फुरदंशुजालम्] स्फुरदुल्लसदंशुजालम्; मघोन इमां [ माघवनीं ] माहेन्द्रीम्। "मघवा बहुलम्" (६।४।१२८ पा०) इति विकल्पान्न तादेशः। [ ककुभं ] दिशं, [ समस्कुरुत ] अभूषयत्, प्राच्यां दिशि चन्द्रकिरणजालमलक्ष्यतेत्यर्थः। "सम्परिभ्यां करोतौ भूषणे" (६।१।३७ पा०) इति सम्पूर्वस्य सुडागमः, "अडभ्यासव्यवायेऽपि" * इति नियमात् ॥ २५ ॥

विशदेति।—[ विशदप्रभापरिगतं ] शुभ्रकान्तिव्याप्तम्, [ उद-

---

* "किरतौ लवने" ( ६।१।१४० पा० ) इति सूत्रस्य वार्त्तिकम्, "अड्भ्यासव्यवायेऽपि" "सुट् कात्पूर्व इति वक्तव्यम्"।

कलया तुषारकिरणस्य पुरः
परिमन्दभिन्नतिमिरौघजटम् ।
क्षणमभ्यपद्यत जनैर्न मृषा
गगनं गणाधिपतिमूर्त्तिरिति ॥ २७ ॥
नवचन्द्रिकाकुसुमकीर्णतमः
कवरीभृतो मलयजार्द्रमिव ।
ददृशे ललाटतटहारि हरे-
र्हरितो मुखे तुहिनरश्मिदलम् ॥ २८ ॥

---

याचलव्यवहितेन्दुवपुः ] उदय इति अचलः । 'उदयः पूर्वपर्वतः' इत्यमरः । तेन व्यवहितमिन्दुवपुरिन्दुमण्डलं यस्मिन् तत्, [ शक्रदिशः ] प्राच्याः, [मुखम्] अग्रभागः, वक्त्रञ्च प्रतीयते, तदभेदेनोत्प्रेक्ष्यते । [ अप्रकाशदशनम् ] अलक्ष्यदन्तं, [ सविलासहासं ] सविलासस्मितम्, [इव, शनकैः ] मन्दं, [ विबभौ ] ॥ २६ ॥

कलयेति ।—[ पुरः ] प्राच्यामग्रभागे च, [ तुषारकिरणस्य ] इन्दोः, [कलया] किरणेन, अन्यत्र,—षोड़शभागैकभागेनोपलक्षितं, [ परिमन्दभिन्नतिमिरौघजटम् ] परिमन्दमल्पं, भिन्ना विदलिताः, तिमिरौघा एव जटा यस्य तत्, [गगनं, न मृषा] सत्यं, [गणाधिपतिमूर्त्तिः] गणाधिपतेः प्रमथपतेरीश्वरस्य । 'गणाः प्रमथसंख्यौघाः' इति वैजयन्ती । मूर्त्तिः, [ इति जनैः क्षणमभ्यपद्यत ] गगनमष्टानां शिवमूर्त्तीनामन्यतममिति यत्, तत्सत्यमभिपन्नमित्यर्थः । कलामात्रोदितश्चन्द्र इति फलितोऽर्थः । रूपकालङ्कारः ॥ २७ ॥

नवेति ।—[ नवचन्द्रिकाकुसुमकीर्णतमः कवरीभृतः ] नवचन्द्रिकाभिरेव कुसुमैः कीर्णं तम एव कवरी केशपाशः । "जानपद—" ( ४।१।४२ पा० ) इत्यादिना ङीष् । तां बिभर्त्तीति तद्भृतः, [ हरेः ]

प्रथमं कलाऽभवदथार्धमथो
हिमदीधितिर्महदभूदुदितः।
दधति ध्रुवं क्रमश एव न तु
द्युतिशालिनोऽपि सहसोपचयम् ॥ २९ ॥
उदमज्जि कैटभजितः शयना-
दपनिद्रपाण्डुरसरोजरुचा।

---

शक्रस्य, [ हरितः ] दिशः, [ मुखे ] अग्रभाग एव मुखं वक्त्रमिति श्लिष्टरूपकं, तस्यैव [ललाटतटहारि] ललाटतटवत् हारि मनोहरं, [तुहिनरश्मिदलम् ] हिमरश्मिदलमिन्दुखण्डं, [ मलयजार्द्रमिव ] मलयजेन चन्दनेनार्द्रमिव, [ ददृशे ] धावल्यादिति भावः। अत्र नवचन्द्रिकाकुसुमेत्याद्येकदेशविवर्त्तिरूपकमहिम्ना हरिवधूत्वप्रतीतौ तत्सहकृतश्लेषावगतवक्त्राभेदाध्यवसितमुखसम्बन्ध-प्रसादासादित-ललाटतटोपमोज्जीवनेनेन्दुदलस्यानुपात्तनिजधावल्य-गुणनिमित्तमलयजार्द्रत्व-गुणस्वरूपोत्प्रेक्षा इति सङ्करः ॥ २८ ॥

प्रथममिति।—[हिमदीधितिः] चन्द्रः, [ प्रथमं कला ] कलामात्रम् [ अभवत् ]। 'कला तु षोड़शो भागः' इत्यमरः। [अथार्द्धम्] अर्द्धमात्रम्, अभवत्। [ अथो ] अनन्तरम्। 'अथो अथ' इत्यमरः। [ उदितः ] साकल्यादुत्थितः सन्, अमहान् महान् सम्पद्यमानोऽभूत् [ महदभूत् ]। 'अभूततद्भावे च्विः,* हलन्तत्वान्न कार्य्यान्तरप्राप्तिः। तथा हि, [ द्युतिशालिनः ] तेजिष्ठा, [ अपि, क्रमशः एव ] क्रमेणैव, [ उपचयं ] वृद्धिं, [ दधति, सहसा ] झटिति, [ तु न ] दधति [ ध्रुवम् ]। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २९ ॥

उदमज्जीति।—[ अपनिद्रपाण्डुरसरोजरुचा ] विकसितसितपुण्ड-

---

* "कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः" ( ५।४।५० पा० ) सूत्रस्यैतस्य वृत्तौ प्रदर्शितमेतत् वार्त्तिकसूत्रम्।

प्रथमप्रबुद्धनदराजसुता-
वदनेन्दुनेव तुहिनद्युतिना ॥ ३० ॥
अथ लक्ष्मणाऽनुगतकान्तवपु-
र्जलधिं विलङ्घ्य शशिदाशरथिः ।
परिवारितः परित ऋक्षगणै-
स्तिमिरौघराक्षसकुलं बिभिदे ॥ ३१ ॥
उपजीवति स्म सततं दधतः
परिमुग्धतां वणिगिवोडुपतेः ।

टीकश्रिया, * [ तुहिनद्युतिना ] चन्द्रेण, [ प्रथमप्रबुद्धनदराजसुता-वदनेन्दुनेव ] प्रथमं हरेः पूर्वमेव प्रबुद्धायाः, अन्यथा तन्मुखं न दृश्येतेति भावः। नदराजसुतायाः सिन्धुकन्यायाः श्रियः वदनेन्दुनेवेत्युत्प्रेक्षा । [ कैटभजितः ] हरेः, [ शयनात् ] समुद्रादित्यर्थः। उक्तोत्प्रेक्षासम्भावनार्थमित्थं निर्देशः । [ उदमज्जि ] उन्मग्नम्, उत्थितमित्यर्थः ॥ ३० ॥

अथेति ।—[ अथ ] उदयानन्तरम् ; लक्ष्मणा लाञ्छनेन, लक्ष्मणेन सौमित्रिणा चानुगतमनुसृतं कान्तं वपुर्यस्य सः [ लक्ष्मणानुगतकान्त-वपुः ] इति शब्दश्लेषः, वस्तुतः शब्दभेदेनार्थद्वयाभावेऽपि जतुकाष्ठ-वदेकशब्दप्रतीतेः। [ परितः ] समन्तात्, [ ऋक्षगणैः ] नक्षत्रगणैः, जाम्बवदादिभल्लूकसमूहैश्च इत्यर्थश्लेषः। एकनालावलम्बिफलद्वयवद-खण्डैकशब्दादर्थद्वयप्रतीतेः। 'नक्षत्रमृक्षं भं तारा' इति 'ऋक्षाच्छ-भल्लभल्लूकाः' इति चामरः। [ परिवारितः, शशिदाशरथिः ] शश्येव दाशरथिर्दशरथपुत्रो रामः। अत इञ्। [ जलधिं विलङ्घ्य, तिमिरौघ-राक्षसकुलम् ] तिमिरौघ एव राक्षसकुलं तत्, [बिभिदे] विभेदयामास। भिदेः कर्त्तरि लिट्। श्लेषसङ्कीर्णसमस्तवस्तुवर्तिसावयवरूपका-लङ्कारः ॥ ३१ ॥

* इत्युपमा ।

घनवीथिवीथिमवतीर्णवतो

निधिरम्भसामुपचयाय कलाः ॥ ३२ ॥

रजनीमवाप्य रुचमाप शशी

सपदि व्यभूषयदसावपि ताम् ।

अविलम्बितक्रममहो ! महता-

मितरेतरोपकृतिमच्चरितम् ॥ ३३ ॥

---

उपजीवतीति ।—[ अम्भसां निधिः ] समुद्रः, [ वणिगिव सततं, परिमुग्धतां] सौन्दर्य्यं, अन्यत्र,—मौढ्यं, व्यवहारानभिज्ञतामिति यावत्। 'मुग्धः सुन्दरमूढयोः' इति विश्वः । [ दधतः ] दधानस्य, [ घनवीथिवीथिम्] घनानां वीथिर्घनवीथिरन्तरिक्षं, सा वीथिः पण्यवीथिरिवेत्युपमितसमासः । ताम् [ अवतीर्णवतः ] प्रविष्टवतः, [ उडुपतेः ] नक्षत्रनाथस्य, कस्यचिद्धनिकवणिजश्च, [कलाः] षोड़शांशान्, मूलधनवृद्धीश्च । 'कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके । षोड़शांशेऽपि चन्द्रस्य' इति विश्वः । [ उपचयाय ] स्वाम्बुवृद्धये, समृद्धये च, [उपजीवति स्म] सेवते स्म, अन्यत्र,—लभते स्मेत्यर्थः । यथा क्रियादिकुशलो ह्यकुशलान्महान्तं लाभमाप्नोति तद्वदिति भावः । श्लेषसङ्कीर्णेयमुपमा । उपमासङ्कीर्णः श्लेष इत्यन्ये ॥ ३२ ॥

रजनीमिति ।—[ शशी रजनीमवाप्य, रुचं ] शोभाम्, [ आप ] । [ असौ ] शशी, [ अपि, तां ] रजनीं, [ सपदि व्यभूषयत् ] । तथा हि, [ महतां ] सतां, [ चरितमवलम्बितक्रमं ] यथा तथा [इतरेतरोपकृतिमत् ] अन्योऽन्योपकारवत्, [ अहो ] इत्यविलम्बादाश्चर्य्यम् । अत्र रजनीशशिनोर्मिथः शोभाकरत्वादन्योऽन्यालङ्कारः ;—'तदन्योऽन्यं मिथो यत्रोत्पाद्योत्पादकता भवेत्' इति लक्षणात् । तत्समर्थकश्चायमर्थान्तरन्यास इत्यङ्गाङ्गिभावेन सङ्करः ॥ ३३ ॥

दिवसं भृशोष्णरुचिपादहतां
रुदतीमिवानवरतालिरुतैः ।
मुहुरामृशन् मृगधरोऽग्रकरै-
रुदशिश्वसत् कुमुदिनीवनिताम् ॥ ३४ ॥
प्रतिकामिनीति ददृशुश्चकिताः
स्मरजन्मघर्मपयसोपचिताम् ।
सुदृशोऽभिभर्तृ शशिरश्मिगल-
ज्जलविन्दुमिन्दुमणिदारुवधूम् ॥ ३५ ॥

---

दिवसमिति ।—[ मृगधरः ] चन्द्रः, [ दिवसं ] दिवस इत्यर्थः । "कालाध्वनोरत्यन्तसंयोगे" ( २।३।५ पा० ) इति द्वितीया । [ भृशोष्णरुचिपादहतां ] भृशम् उष्णरुचेः उष्णांशोः, पादेन करेण, अङ्घ्रिणा च । 'पादा रश्म्यङ्घ्रितुर्य्यांशाः' इत्यमरः । हतां ताड़ितां, अत एव [ अनवरतालिरुतैः ] अनवरतैरविच्छिन्नैरलिरुतैः, [रुदतीं] क्रन्दन्तीम्, [इव] स्थितां, [ कुमुदिनीवनितां ] कुमुदिन्येव वनिता ताम् ; अग्राणि च ते कराश्च इत्यभेदेन समासः, "अभेदादग्रहस्तादयः" इति वामनः । तैः [अग्रकरैः] अग्रांशुभिः, अग्रहस्तैश्च, [ मुहुः, आमृशन् ] स्पृशन्, [उदशिश्वसत्] उच्छ्वासयति स्म । परावमृष्टानां पतिभिराश्वासनीयत्वादिति भावः । श्वसधातोः "णौ चङ्युपधाया ह्रस्वः" (७।४।१ पा०) इति ह्रस्वः । अत्र पाद एव पादस्तेन हतामिति हननसाधितश्लिष्टरूपकोत्थापितेयमलिरुतैरिति व्यधिकरणपरिणामगर्भा रोदनोत्प्रेक्षेति विजातीयसङ्करः ; तथा करैरेव करैः कुमुदिनीवनितेति श्लिष्टाश्लिष्टरूपणान्मृगधरे वल्लभत्वप्रतीतेरेकदेशविवर्त्तिरूपकं तत्सापेक्षेयमुदशिश्वसदिति गम्योत्प्रेक्षेत्यपरो विजातीयसङ्करः ; रोदनोत्प्रेक्षासापेक्षेयमुच्छ्वासनोत्प्रेक्षेति सजातीयसङ्करोऽपि ॥ ३४ ॥

प्रतीति ।—[ सुदृशः ] अङ्गनाः, [ अभिभर्तृ ] भर्त्तारमभि । "लक्ष-

अमृतद्रवैर्विदधदब्जदृशा-
मपमार्गमोषधिपतिः स्म करैः ।
परितो विसर्पि परितापि भृशं
वपुषोऽवतारयति मानविषम् ॥ ३६ ॥
अमलात्मसु प्रतिफलन्नभित-
स्तरुणीकपोलफलकेषु मुहुः ।

---

क्षेनाभिप्रती आभिमुख्ये" ( २।१।१४ पा० ) इत्यव्ययीभावः । [ शशि-रश्मिगलज्जलविन्दुं ] शशिरश्मिभिर्गलन्तः स्रवन्तो जलविन्दवो यस्या-स्ताम्, [ इन्दुमणिदारुवधूम् ] इन्दुमणिश्चन्द्रकान्तशिला सैव दारु तस्य तन्मयी वा वधूः स्त्रीप्रतिमा तां, [ स्मरजन्मघर्मपयसोपचितां ] स्मरा-ज्जन्म यस्य तेन स्मरजन्मना घर्मपयसा स्वेदाम्बुना, उपचितां व्याप्तां, खिन्नगात्रामित्यर्थः, [ प्रतिकामिनीति ] प्रतिकूला कामिनी प्रति-कामिनी, सपत्नीति भ्रान्त्येति शेषः । [ चकिताः ] भीताः, [ ददृशुः ] । अत्र चन्द्रशिलापुत्रिकायां सादृश्यनिबन्धनया प्रतिकामिनीभ्रान्त्या भ्रान्तिमदलङ्कारः ॥ ३५ ॥

अमृतेति ।—[ ओषधिपतिः] चन्द्रः एव, ओषधिपतिर्वैद्य इति श्लिष्ट-रूपकम् । [ अमृतद्रवैः ] अमृतमेवामृतमौषधविशेषः, तेन द्रवैरार्द्रैः, [ करैः ] किरणैरेव करैः हस्तैः, [ अब्जदृशां, * अपमार्गम् ] अङ्गपरि-मार्जनं, [ विदधत् ] कुर्वन्, [ परितो विसर्पि ] सर्वव्यापि, [ भृशं, परि-तापि] सन्तापकारि, [मानविषं] मानः कोप एव विषं तत्, [ वपुषः ] शरीरात्, [ अवतारयति स्म ] अवारोपितवान् । अत्र सावयवरूप-केण ओषधलिप्त जाङ्गुलिकहस्तसंस्पर्शात् विषमिव निशाकरकरस्पर्शा-देवाङ्गनानां वपुषि रोषो न स्पृष्ट इत्युपमा व्यज्यते ॥ ३६ ॥

अमलेति ।—[ अधिकावभासितदिशाम् ] अधिकमवभासिताः

---

* पद्माक्षीणाम् ।

विससार सान्द्रतरमिन्दुरुचा-
मधिकावभासितदिशां निकरः ॥ ३७ ॥

उपगूढवेलमलघूर्मिभुजैः
सरितामचुक्षुभदधीशमपि ।
रजनीकरः किमिव चित्रमहो !
यदुरागिणां गणमनङ्गलघुम् ॥ ३८ ॥

भवनोदरेषु परिमन्दतया
शयितोऽलसः स्फटिकयष्टिरुचः ।

प्रकाशिताः दिशो याभिस्तासाम्, [ इन्दुरुचां निकरः, अमलासु ] निर्मलमूर्त्तिषु, [ तरुणीकपोलफलकेषु ] तरुणीनां ये कपोलाः फलकानीव * तेषु, [अभितो मुहुः, प्रतिफलन्] सङ्क्रामन्, [सान्द्रतरं] प्रचुरतरं, [ विससार ]; दर्पणसङ्क्रमणादिवेति भावः। अत्रेन्दुरुचां कपोलासङ्क्रमेऽपि सङ्क्रमोक्तेरसम्बन्धे सम्बन्धोक्तिरूपाऽतिशयोक्तिः ॥ ३७ ॥

उपगूढेति।—[ रजनीकरः ] चन्द्रः, [ अलघूर्मिभुजैः ] अलघुभिरूर्मिभिरेव भुजैः, [ उपगूढवेलम् ] उपगूढा वेला येन तं, सावष्टम्भमिति भावः। [ सरितामधीशं ] समुद्रम्, [ अपि ] स्वभावादक्षोभ्यमपीति भावः। [ अचुक्षुभत् ] क्षोभयति स्म। क्षुभ्यतेर्ण्यन्ताल्लुङ्। "णौ चङ्युपधाया ह्रस्वः" ( ७।४।१ पा० )। [ अनङ्गलघुम् ] अनङ्गेन लघुं गतसारं, [यदुरागिणां] यदव एव रागिणस्तेषां, [ गणम्] अचुक्षुभत् इति, [ अहो ! किमिव चित्रं ] न किञ्चिदित्यर्थः। अत्राक्षोभ्यमब्धिं क्षोभयतश्चन्द्रस्य दण्डापूपिकान्यायादन्यक्षोभकत्वोक्तेरर्थापत्तिरलङ्कारः ॥ ३८ ॥

भवनेति।—[ परिमन्दतया ] एकाकित्वादसमर्थतया, [ भवनो-

* इत्युपमा।

अवलम्ब्य जालकमुखोपगतान्
उदतिष्ठदिन्दुकिरणान् मदनः ॥ ३९ ॥
अविभावितेषुविषयः प्रथमं
मदनोऽपि नूनमभवत्तमसा।
उदिते दिशः प्रकटयत्यमुना
यदघर्मधाम्नि धनुराचकृषे ॥ ४० ॥
युगपद्विकाशमुदयाद्गमिते
शशिनः शिलीमुखगणोऽलभत।

---

दरेषु] गृहाभ्यन्तरेषु, [शयितः] सुप्तः, अत एव [अलसो मदनः, जालकमुखोपगतान्] गवाक्षविवरप्रविष्टान्, अत एव [स्फटिकयष्टिरुचः] स्फटिकयष्टीनां रुगिव रुक् शोभा येषां तान्, स्फटिकदण्डसन्निभान्, [इन्दुकिरणान्, अवलम्ब्य] अवष्टभ्य, [उदतिष्ठत्] उत्थितः। अत्रोद्बोधोत्थानयोरभेदविवक्षया "उदोऽनूर्ध्वकर्म्मणि" (१।३।२४ पा०) इति परस्मैपदसिद्धिः। एतत्पदे च अभेदाध्यवसायमूलातिशयोक्त्या "स्फटिकयष्टिरुचः" इत्युपमया च "अवलम्ब्य" इत्यत्रावलम्बेवेत्युत्थानस्यावलम्बनहेतुकत्वोत्प्रेक्षा प्रत्याय्यत इत्येतासां सङ्करः ॥ ३९ ॥

अविभावितेष्विति।—[मदनोऽपि, प्रथमं] चन्द्रोदयात् प्राक्, [तमसा, अविभावितेषुविषयः] अविभावितोऽलक्षितः इषुविषयो बाणलक्ष्यं येन सः, [अभवत्, नूनम्] इत्युत्प्रेक्षा। [यत्] यस्मात्, [अघर्म्मधाम्नि] शीतकरे, [उदिते, दिशः प्रकटयति] सति [अमुना] मदनेन, [धनुः, आचकृषे] आकृष्टम्; चन्द्र एव महानुद्दीपको मदनस्याभूदिति भावः ॥ ४० ॥

युगपदिति।—[पुष्पधनुषो धनुषः] पुष्पधनुः पुष्पधन्वा। "वा संज्ञायाम्" (५।४।१३४ पा०) इति विकल्पात् नानङादेशः। तस्य धनुः पुष्पचापं पुष्पान्तरञ्च तस्मात्, च्यलितः, निःसृतो वेति भावः,

द्रुतमेत्य पुष्पधनुषो धनुषः
कुमुदेऽङ्गनामनसि चावसरम् ॥ ४१ ॥
ककुभां मुखानि सहसोज्ज्वलयन्
दधदाकुलत्वमधिकं रतये ।
अदिदीपदिन्दुरपरो दहनः
कुसुमेषुमत्रिनयनप्रभवः ॥ ४२ ॥

---

[शिलीमुखगणाः] शिली शल्यं मुखं येषां ते शिलीमुखाः बाणाः, अलयश्च । 'अलिबाणौ शिलीमुखौ' इत्यमरः । तेषां गणाः, [शशिनः उदयात्, विकाशम्] औत्सुक्यम्, उन्मीलनञ्च, [युगपत्] एकदा, [गमिते] प्रापिते, [अङ्गनामनसि] अङ्गनानां सुदृशां, मनसि हृदये, [कुमुदे च, अवसरम्] अवकाशम्, आश्वासञ्च, [द्रुतमेत्य, अलभत] । उभयत्र प्रवेशं लब्धवानित्यर्थः । अत्र चन्द्रोदये कुमुदकामिनीहृदययोर्द्वयोरपि प्रकृतयोः शिलीमुखप्रवेशलक्षणैकधर्म्मयोगादौपम्यात् तुल्ययोगिता ; एकधर्म्मत्वञ्च अत्र शिलीमुखेति श्लिष्टपदोपात्तयोरलिबाणयोरेकत्वाध्यवसायमूलातिशयोक्तिप्रसादादिति सङ्करः ॥ ४१ ॥

ककुभामिति ।—[ककुभां] दिशां, [मुखानि, सहसा] झटिति, [उज्ज्वलयन्] उद्भासयन्, [रतये] सुरताय, [अधिकम्, आकुलत्वम्] औत्सुक्यं, [दधत्] यूनामिति शेषः । अन्यत्र,—रतये कामदेव्यै, आकुलत्वं भयविह्वलत्वं, दधत् । अत्रेरत्रिमुनेर्नयनप्रभवः 'अत्रिनेत्रसमुद्भवः' इति पुराणात् । त्रिनयनप्रभवो न भवतीति [अत्रिनयनप्रभवः, अपरः] त्रिनयनप्रभवादन्यः, [दहनः] अग्निः, [इन्दुः, कुसुमेषुं] कामम्, [अदिदीपत्] दीपयति स्म । दीप्यतेर्णौ चङि "भ्राज—" (७।४। ३ पा० ) इत्यादिना विकल्पात् न उपधाह्रस्वः । अत्र प्रकृते कुसुमेषोर्दीपनं नाम प्रवर्द्धनं तस्य तत्र प्रतीयमानेन प्रज्वलनेनाभेदाध्यवसायात् तन्निमित्तमिन्दोर्दिङ्मुखोद्भासनादिधर्मसम्बन्धादपरोऽयं दहन

इति निश्चितप्रियतमागतयः
सितदीधितावुदयवत्यबलाः।
प्रतिकर्म कर्त्तुमुपचक्रमिरे
समये हि सर्वमुपकारि कृतम् ॥ ४३ ॥

सममेकमेव दधतुः सुतनो-
रुरुहारभूषणमुरोजतटौ।
घटते हि संहततया जनिता-
मिदमेव निर्विवरतां दधतोः ॥ ४४ ॥

---

इत्यपरशब्दप्रयोगसामर्थ्यात् दहनत्वोत्प्रेक्षा, न रूपकमिति रहस्यम्। चन्द्रोदयात् कामो ववृधे इति तात्पर्य्यम् ॥ ४२ ॥

एवं चन्द्रोदयाख्यमुद्दीपनविभावमुक्त्वा तत्फलमाह, इतीति।—[ इति ] एवं, [ सितदीधितावुदयवति, अबलाः ] स्त्रियः, [ निश्चितप्रियतमागतयः ] निश्चिता प्रियतमानामागतिरागमनं याभिस्ताः सत्यः, [प्रतिकर्म्म] प्रसाधनं, [कर्त्तुम् उपचक्रमिरे]। * 'प्रतिकर्म्म प्रसाधनम्' इत्यमरः। चन्द्रोदयात् प्रियागमनं निश्चित्य अलङ्कर्त्तुं प्रक्रान्ता इत्यर्थः। [हि] तथा हि,—[ समये ] कार्य्यकाले, [ कृतम् ] अनुष्ठितं, [ सर्वं ] कर्म्म, [ उपकारि ] उपकारकं भवति, अन्यथा विफलमेवेति भावः ; अतो निश्चित्य प्रवृत्तिरासां युक्तेत्यर्थान्तरन्यासः ॥ ४३ ॥

अथ प्रसाधनमेव प्रपञ्चयति, सममिति।—[ सुतनोः ] स्त्रियाः, [ उरोजतटौ, उरु ] श्लाघ्यम्, [ एकमेव, हारभूषणं ] हारमेव भूषणं, [ समम् ] अवैषम्येण, [ दधतुः ]। [ संहततया ] संश्लिष्टतया, ऐकमत्येन च, [जनितां, निर्विवरतां] निरन्तरालतां, नीरन्ध्रत्वञ्च, [ दधतोः,

---

* "प्रोपाभ्यां समर्थाभ्याम्" ( १।३।४२ पा० ) इति उपपूर्वकात् क्रमतेरारम्भार्थकत्वादेवात्मनेपदं वेदितव्यम्।

कदलीप्रकाण्डरुचिरोरुतरौ
जघनस्थलीपरिसरे महति ।
रशनाकलापकगुणेन वधू-
र्मकरध्वजद्विरदमाकलयत् ॥ ४५ ॥

अधरेष्वलक्तकरसः सुदृशां
विशदं कपोलभुवि लोध्ररजः ।
नवमञ्जनं नयनपङ्कजयो-
र्विभिदे न शङ्खनिहितात्पयसः ॥ ४६ ॥

---

इदं ] समभागित्वम्, [एव घटते हि] । अन्तर्भेदान्तराया हि विषयिणां विषयोपभोगाः कुचयोस्तदभावात् समशोभार्थं हारधारणं युक्तमिति भावः * ॥ ४४ ॥

कदलीति ।—[ वधूः, कदलीप्रकाण्डरुचिरोरुतरौ ] कदलीप्रकाण्ड-रुचिरः रम्भास्तम्भसुन्दरः † ऊरुरेव तरुर्बन्धनवृक्षो यस्मिन् । अत्र कदली-काण्डस्य सौन्दर्य्यमात्रोपमानत्वात् न बन्धनयोग्यवृक्षवाचिना तरुशब्देन पुनरुक्तिः । [ महति, जघनस्थलीपरिसरे ] जघनस्थल्येव परिसरः प्रदेशस्तस्मिन्, [ रशनाकलापकगुणेन ] रशनाकलापक एव गुणस्तेन, [मकरध्वजद्विरदं] मकरध्वजो मदनः, स एव द्विरदस्तम्, [ आकलयत् ] अबध्नात् । रशनाबन्धेन जघनमतीव मदनोद्दीपकमासीदित्यर्थः । समस्तवस्तुविवर्त्ति सावयवरूपकम् ॥ ४५ ॥

अधरेष्विति ।—[सुदृशाम्, अधरेषु] ओष्ठेषु, [अलक्तकरसः] लाक्षा-द्रवः ; तथा [ कपोलभुवि ] गण्डस्थले, [ विशदं ] शुभ्रं, [ लोध्ररजः ] ; तथा [नयनपङ्कजयोर्नवमञ्जनं] च [शङ्खनिहितात्, पयसः] क्षीरात्, [ न

---

* शोभानुप्राप्तिरितीऽयमर्थान्तरन्यासः ।

† इत्युपमा ।

स्फुरदुज्ज्वलाधरदलैर्विलस-
द्दशनांशुकेशरभरैः परितः।
धृतमुग्धगण्डफलकैर्विबभु-
र्विकसद्भिरास्यकमलैः प्रमदाः॥ ४७॥

भजते विदेशमधिकेन जित-
स्तदनुप्रवेशमथवा कुशलः।
मुखमिन्दुरुज्ज्वलकपोलमतः
प्रतिमाच्छलेन सुदृशामविशत्॥ ४८॥

---

विभिदे ] भिन्नं नाभूत्। कर्म्मकर्त्तरि लिट्। अधरादिनिहितं लाक्षा-रागादिकं शङ्खनिहितक्षीरवत् सावर्ण्यादाश्रयतोऽभेदेन दुर्ग्रहमभूदि-त्यर्थः। अत्र यदधरालक्तकरसादिकं तत् शङ्खनिहितं क्षीरमित्येक-वाक्यतया वाक्यार्थे वाक्यार्थसमारोपादसम्भवद्वस्तुसम्बन्धो वाक्यार्थ-निष्ठो निदर्शनाऽलङ्कारः, तेन अधरालक्तकादीनां गुणतः एकत्वरूपः सामान्यालङ्कारो गम्यते,—'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात्॥ ४६॥

स्फुरदिति।—[ प्रमदाः ] स्त्रियः, [ स्फुरदुज्ज्वलाधरदलैः ] स्फुरन्त-श्चलन्तः उज्ज्वलाश्चामला अधरा ओष्ठा एव दलानि पत्राणि येषां तैः, [ परितः, विलसद्दशनांशुकेशरभरैः ] विलसन्तो दशनांशवो दन्तकान्तय एव केशरभराः किञ्जल्कपुञ्जा येषां तैः. [धृतमुग्धगण्डफलकैः ] धृतानि मुग्धानि गण्डा एव फलकानि कर्णिका यैः तैः, [ विकसद्भिरास्यकमलै-र्विबभुः ]। अत्रास्यकमलैरिति रूपणात्प्रमदा एव सरस्य इति सिद्धे-रेकदेशविवर्त्ति सावयवरूपकम्। आस्यकुमुदैरिति पाठे,—कुमुदस्य मुखोपमानकत्वं कविसमयविरुद्धं ज्ञेयम्॥ ४७॥

भजते इति।—[ अधिकेन ] प्रबलेन, [ जितः, विदेशं ] देशान्तरं, [ भजते ]। [ अथवा, कुशलः ] कार्य्यचतुरः, [ तदनुप्रवेशं ] भजते,

ध्रुवमागताः प्रतिहतिं कठिने
मदनेषवः कुचतटे महति।
इतराङ्गवन्न यदिदं गरिम-
ग्लपितावलग्नमगमत्तनुताम् ॥ ४९ ॥
न मनोरमास्वपि विशेषविदां
निरचेष्ट योग्यमिदमेतदिति।

---

तमेव शरणतया प्रविश्य जीवतीत्यर्थः। [अतः] हेतोः, [इन्दुः, उज्ज्वल-कपोलम्] उज्ज्वलौ कपोलौ यस्य तदिति मुखस्य बिम्बग्रहणयोग्यतोक्तेः पदार्थहेतुकं काव्यलिङ्गम्। [सुदृशां मुखं, प्रतिमाच्छलेन] प्रतिबिम्बव्याजेन, [अविशत्] प्रविष्टः। साक्षाच्चन्द्र एवायं, न प्रतिमाचन्द्र इति छलशब्दात्प्रतीतेः, छलशब्देनासत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः पूर्वोक्तकाव्यलिङ्गसापेक्ष इति सङ्करः; तेन कपोलयोर्लोकोत्तरं लावण्यं दर्पणौपम्यञ्च व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ ४८ ॥

ध्रुवमिति।—[मदनेषवः] कामशराः, [महति कठिने कुचतटे, प्रतिहतिं] प्रतिघातम्, [आगताः] प्राप्ताः, [ध्रुवम्] * [यत्] यस्मात्, [गरिमग्लपितावलग्नं] गरिम्णा निजभारेण, ग्लपितं कर्शितम्, अवलग्नं मध्यं येन तत्, [इदं] कुचतटम्; इतराङ्गेन तुल्यम् [इतराङ्गवत्]। "तेन तुल्यम्—" (५।१।११५ पा०) इति वतिप्रत्ययः। [तनुतां] कार्श्यं, [नागमत्] नाभजत्। "पुषादि—" (३।१।५५ पा०) इति सूत्रेण च्लेरङादेशः। तदा मदनेषुपातात्कुचातिरिक्तमङ्गनानामङ्गं कृशमासीदित्यर्थः ॥ ४९ ॥

न मनोरमास्विति।—[प्रियतमे गृहम्, एष्यति] आगमिष्यति सति,

---

* अत्र कृशाङ्गीनां स्तनगरिमणि कामशराणां प्रतिघातेऽप्राप्तेऽपि प्रौढोक्त्या तेषामिव प्रतिहतत्वोक्तिः इत्युत्प्रेक्षा।

गृहमेष्यति प्रियतमे सुदृशां
वसनाङ्गरागसुमनःसु मनः ॥ ५० ॥
वपुरन्वलिप्त परिरम्भसुख-
व्यवधानभीरुकतया न वधूः ।
क्षममस्य बाढमिदमेव हि यत्
प्रियसङ्गमेष्वनवलेपमदः ॥ ५१ ॥
निजपाणिपल्लवतलस्खलना-
दभिनासिकाविवरमुत्पतितैः ।

---

[ विशेषविदामपि, सुदृशां ] सम्यग्दर्शनीयानां स्त्रीणां, [ मनः ] कर्त्तृ [ मनोरमास्वपि, वसनाङ्गरागसुमनःसु ] वस्त्रगन्धमाल्येषु, [इदमेतदिति] इदं, पुरोवर्त्ति वस्तु ; एतदिति—वसनमिति, अनुलेपनमिति, सुमनस इति, विशेषाकारेण, तथा [ योग्यम् ] अस्माकं धारणार्हमिति च, [ न निरचैष्ट] न निरधारयत्। प्रियागमनहर्षातिरेकादितिकर्त्तव्यतामूढमभूदित्यर्थः। चिनोतेर्लुङि तङि च्लेः सिच्, "सार्वधातुकार्द्धधातुकयोः" ( ७।३।८४ पा० ) इति गुणः। हर्षोऽत्र सञ्चारिभावः, निश्चयसम्बन्धेऽयसम्बन्धोक्तेरतिशयोक्तिः, सुमनःसुमन इति यमकश्लेषश्चेति संसृष्टिः ॥ ५० ॥

वपुरिति।—[ वधूः ] स्त्री, [ परिरम्भसुखव्यवधानभीरुकतया ] आलिङ्गनसुखविच्छेदभीरुत्वेन। "क्रुकन्नपि वक्तव्यः" (वा०) इति क्रुकन्प्रत्ययः। [ वपुर्नान्वलिप्त ] नानुलिप्तवती, अङ्गरागमात्रव्यवधानमपि न सहते स्म इत्यर्थः। लिम्पतेः कर्त्तरि लुङि तङ्। [हि] तथा हि,—[अदः] वपुः, [प्रियसङ्गमेषु, अनवलेपम्] अचन्दनम्, अगर्वञ्च, इति [यत्]। 'अवलेपस्तु गर्वे स्याल्लेपने भूषणेऽपि च' इति विश्वः। [ इदमेव ] अनवलेपनत्वमेव, [ अस्य ] वपुषः, [ बाढं ] भृशं, [क्षमं] युक्तम्। श्लेषानुप्राणितोऽयमर्थान्तरन्यासः ॥ ५१ ॥

अपरा परीक्ष्य शनकैर्मुमुदे

मुखवासमास्यकमलश्वसनैः ॥ ५२ ॥

विधृते दिवा सवयसा च पुरः

परिपूर्णमण्डलविकाशभृति ।

हिमधाम्नि दर्पणतले च मुहुः

स्वमुखश्रियं मृगदृशो ददृशुः ॥ ५३ ॥

---

निजेति ।—[अपरा] स्त्री, [निजपाणिपल्लवतलस्खलनात्] निजपाणिपल्लवतलस्य स्खलनादभिघातात्, [अभिनासिकाविवरम्] नासारन्ध्रं प्रति, [उत्पतितैः, आस्यकमलश्वसनैः] आस्यकमलस्य श्वसनैर्मुखमारुतैः, [मुखवासं] मुखवासनां, [शनकैः परीक्ष्य मुमुदे]। इयं वासकसज्जिका नायिका * ॥ ५२ ॥

विधृते इति ।—[दिवा] आकाशेन, [सवयसा] वयस्यया, [च, पुरः] अग्रे, [विधृते] विधारिते, [परिपूर्णमण्डलविकाशभृति] परिपूर्णमण्डलविकाशं विम्बशोभां बिभर्तीति तद्भृत् तस्मिन्, [हिमधाम्नि] चन्द्रे, [दर्पणतले च, मृगदृशः] स्त्रियः, [स्वमुखश्रियं] पूर्वत्रोपमानभूतामुत्तरत्रोपमेयभूताञ्चेत्यर्थः। [मुहुर्ददृशुः]। औपम्यपरीक्षार्थमिति भावः। अत्रान्यश्रियोऽन्यत्रासम्भवाच्चन्द्रे तत्सदृशीमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना, तथा चन्द्रदर्पणयोर्द्युसवयसोश्च यथासङ्ख्यमन्वयात् यथासङ्ख्यालङ्कारश्च ; तदुभयापेक्षया चन्द्रदर्शनयोर्मुखश्रीदर्शनस्थानत्वेन प्रस्तुतयोरेवौपम्यस्य गम्यत्वात्तुल्ययोगितेति सङ्करः ॥ ५३ ॥

---

* "पाणी पल्लवाविव" "आस्यं कमलमिव" इति उपमितसमासद्वयाश्रयणात् समासगतार्थोपमयोः संसृष्टिः ।

अधिजानु बाहुमुपधाय नमत्-
करपल्लवार्पितकपोलतलम् ।
उदकण्ठि कण्ठपरिवर्त्तिकल-
स्वरशून्यगानपरयाऽपरया ॥ ५४ ॥

प्रणयप्रकाशनविदो मधुराः
सुतरामभीष्टजनचित्तहृतः ।
प्रजिघाय कान्तमनु मुग्धतर-
स्तरुणीजनो हृश इवाथ सखीः ॥ ५५ ॥

---

अधिजान्विति ।—[ नमत्करपल्लवार्पितकपोलतलं ] नमति कपो-लार्पणाय प्रह्वीभवति, करपल्लवे अर्पितं निहितं, कपोलतलं गण्डस्थलं, यस्य तं, [ बाहुम्, अधिजानु ] जानुनि । विभक्त्यर्थेऽव्ययीभावः । [ उपधाय ] निधाय, कूर्परेण जानुमवष्टभ्येत्यर्थः । [ कण्ठपरिवर्त्ति-कलस्वरशून्यगानपरया ] कण्ठे परिवर्त्तते इति कण्ठपरिवर्त्ति, न तु मुखोच्चारितम् इत्यर्थः, कलमव्यक्तमधुरं, स्वरशून्यं तारध्वनिहीनं, षड्जादिस्वराभिव्यक्तिहीनं वा, यद्गानं तत्परया तदासक्तया, मन्द-कण्ठेनैव गायन्त्येत्यर्थः ; कालक्षेपार्थमिति भावः । अयञ्चोत्कण्ठा-ऽनुभावः । [ अपरया ] स्त्रिया, [ उदकण्ठि ] उत्कण्ठितम् ; प्रिय-सङ्गमायोत्सुकया स्थितमित्यर्थः । भावे लुङि चिणो लुक् । अत्र कालक्षेपासहिष्णुत्वलक्षणमौत्सुक्यं सञ्चारि तन्निबन्धनात्प्रेयोऽलङ्कारः । "परयापरया" इति यमकविशेषणेत्यनयोः संसृष्टिः । नायिका विरहो-त्कण्ठिता,—'चिरं पत्युरनालोके विरहोत्कण्ठितोन्मनाः' इति लक्ष-णात् ॥ ५४ ॥

प्रणयेति ।—[ अथ ] प्रसाधनानन्तरं, [ मुग्धतरः ] अत्यन्तकाम-मोहितः, [ तरुणीजनः, प्रणयप्रकाशनविदः ] अनुरागव्यञ्जनचतुरा

न च मेऽवगच्छति यथा लघुतां
करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमुपगम्य वदे-
रभिदूति काचिदिति सन्दिदिशे ॥ ५६ ॥

दयिताय मानपरयाऽपरया
त्वरितं ययावगदिताऽपि सखी ।
किमु चोदिताः प्रियहितार्थकृतः
कृतिनो भवन्ति सुहृदः सुहृदाम् ? ॥ ५७ ॥

---

इत्यर्थः, [ मधुराः ] मधुरभाषिणीः, अन्यत्र,—रम्याकृतीः, [ सुतराम्, अभीष्टजनचित्तहृतः ] अभीष्टजनस्य चित्तहृतो मनोहारिणीः, [ सखीः दूता इव, कान्तमनु ] प्रेयोजनं प्रति, [प्रजिघाय] प्रेषितवान् । हिनोतेर्लिट् । इवेन सह समासवचनात् दूता इवेति उपमासमासः, तया सखीनामासत्त्यन्तरङ्गत्वकार्य्यदर्शित्वादिव्यञ्जनादलङ्कारेण वस्तुध्वनिः ॥ ५५ ॥

तथा काचिन्नायिका दूतीं वाचिकमनुशास्ति, न चेति ।—[ स मे ] दयितः, [ यथा मयि करुणां कुरुते, यथा, लघुताम् ] अल्पतां, [ च, नावगच्छति ] न मन्यते, [एनं] दयितम्, [उपगम्य] प्राप्य, [ तथा ] तेन प्रकारेण, [ निपुणं, वदेः ] । विध्यर्थे प्रार्थने वा लिङ् । [ इति ] इत्थं, [ काचित् ] नायिका, [ अभिदूति ] दूतीमभि । "लक्षणेनाभिप्रती आभिमुख्ये" ( २।१।१४ पा० ) इत्यव्ययीभावे नपुंसकह्रस्वत्वम् । [सन्दिदिशे ] सन्दिष्टवती । कर्त्तरि लिट् । स्वरितेत्त्वादात्मनेपदम् । नायिका तु कलहान्तरिता,—'कोपात् कान्तं पराणुद्य पश्चात्तापसमन्विता' इति लक्षणात् ॥ ५६ ॥

दयितायेति ।—[ मानपरया ] अभिमानवत्या, अत एव [अपरया]

प्रतिभिद्य कान्तमपराधकृतं
यदि तावदस्य पुनरेव मया ।
क्रियतेऽनुवृत्तिरुचितैव ततः
कलयेदमानमनसं सखि ! माम् ॥ ५८ ॥
अवधीर्य्य धैर्य्यकलिता दयितं
विदधे विरोधमथ तेन सह ।

---

नायिकया, [ अगदिता अपि ] दयितमानयेत्यनुक्ताऽपि [ सखी, दयिताय ] दयितमानेतुम् । "क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः" ( २।३।१४ पा० ) इति चतुर्थी । [ त्वरितं ] शीघ्रं, [ ययौ ] । अन्यथा मरणशङ्केति भावः । तथा हि,—सुष्ठु शोभनं हृदयं येषां ते [ सुहृदः ] मित्राणि । "सुहृद्दुर्हृदौ मित्रामित्रयोः" ( ५।४।१५० पा० ) इति निपातः । [ चोदिताः ] प्रेरिताः सन्तः, [ सुहृदां ], प्रियो हृद्यः हितः श्रेयस्करश्च योऽर्थस्तं कुर्वन्तीति [ प्रियहितार्थकृतः ], कृतमेषामस्तीति [ कृतिनः ] कृतकृत्या, [ भवन्ति किमु ? ] । किन्तु चोदनां विनैवेति भावः । अर्थान्तरन्यासः । नायिका च पूर्ववत् ॥ ५७ ॥

अथ काचित् कलहान्तरिता कान्तं प्रति लिभिर्दूतीं सन्दिशति, प्रतिभिद्येत्यादि ।—[ अपराधकृतम् ] आगस्कारिणं, [कान्तं, प्रतिभिद्य] निराकृत्य, [ पुनर्मयैवास्य, अनुवृत्तिः ] अनुसरणं, [ क्रियते यदि तावत् उचितैव ], पतिव्रतानां प्राणेश्वरचित्तानुवृत्तेर्धर्म्मत्वादिति भावः । किन्तु हे [ सखि !, ततः ] अनुवृत्तेः, [ माम्, अमानमनसम् ] अभिमानहीनचित्तां, [ कलयेत् ] मन्येत * ॥ ५८ ॥

तर्ह्यलाघवाय विग्रहैव स्थीयतां तत्राह, अवधीर्य्येति । [ अथ, धैर्य्यकलिता] कलितधैर्य्या सती । "वाहिताग्न्यादिषु" (२।२।३७ पा०) इति

---

* स इति शेषः ।

तव गोप्यते किमिव कर्त्तुमिदं
न सहाऽस्मि साहसमसाहसिकी ॥ ५९ ॥
तदुपेत्य मा स्म तमुपालभथाः
किल दोषमस्य न हि विद्म वयम् ।
इति सम्प्रधार्य्य रमणाय वधू-
र्विहितागसेऽपि विससर्ज सखीम् ॥ ६० ॥

---

निष्ठायाः परनिपातः। [ दयितम्, अवधीर्य्य ] तिरस्कृत्य, [ तेन सह विरोधं, विदधे ] करोमीति चेत् ? दधातेः कर्त्तरि लट्। हे सखि ! [ तव किमिव, गोप्यते ] विगूह्यते ? न किञ्चिदित्यर्थः ; किन्तु कथ्यत एवेति कथयति,—सहसा बलेन वर्त्तत इति साहसिकी। "ओजः-सहोऽम्भसा वर्त्तते" ( ४।४।२७ पा० ) इति ठक्। सा न भवतीति [ असाहसिकी ]। अहमिति शेषः। [ इदं साहसं ] विरोधं, विरोधा-चरणरूपं साहसकृत्यमित्यर्थः, [कर्त्तुम्]। "शकधृष—" (३।४।६५ पा०) इत्यादिना तुमुन्। सहत इति [ सहा ] समर्था। पचाद्यच्। [नास्मि]। अत्र असाहसिकत्वस्य विशेषणगत्या साहसासहनहेतुत्वोक्तेः पदार्थ-हेतुकं काव्यलिङ्गमलङ्कारः ॥ ५९ ॥

तर्हि किमत्र कार्य्यम् ? अत आह, तदिति।—[ तत् ] तस्मात्, [ तं] वल्लभम्, [उपेत्य, मा स्मोपालभथाः] नोपालभस्व, तद्दोषं न गणये-रित्यर्थः। "स्मोत्तरे लङ् च" ( ३।३।१७६ पा० ) इति उपाङ्पूर्वात् लभेः लङ् " न माङ्योगे" ( ६।४।७४ पा० ) इत्यट्प्रतिषेधः। ननु साप-राधः कथं नोपालभ्यः ? तत्राह,—[ वयमस्य, दोषम् ] अपराधं, [न हि विद्म किल ] अजानाना इव तिष्ठाम इत्यर्थः। कार्य्यार्थिनः कुतो गर्व इति भावः। "विदो लटो वा" ( ३।४।८३ पा० ) इति णलाद्या-देशः। [ इति, सम्प्रधार्य्य ] निश्चित्य, [वधूः] नायिका, [विहितागसे-ऽपि ] कृतापराधायाऽपि, [ रमणाय ] प्रेयसे। क्रियाग्रहणात् चतुर्थी।

ननु सन्दिशेति सुदृशोदितया
त्रपया न किञ्चन किलाभिदधे।
निजमैक्षि मन्दमनिशं निशितैः
कृशितं शरीरमशरीरशरैः॥ ६१॥

ब्रुवते स्म दूत्य उपसृत्य नरा-
न्नरवत्प्रगल्भमतिगर्भगिरः।
सुहृदर्थमीहितमजिह्मधियां
प्रकृतेर्विराजति विरुद्धमपि॥ ६२॥

---

[ सखीं, विससर्ज ] प्रजिघाय। विरहासहिष्णुतयेति भावः। एषा कलहान्तरिता प्रौढ़ा च॥ ६०॥

नन्विति।—[ ननु, सन्दिश ] सन्देशं ब्रूहि, [ इति, उदितया ] दूत्या कथितया, [ सुदृशा ] नायिकया, कर्त्र्या। [ त्रपया ] हेतुना, [ किञ्चन, नाभिदधे किल ] नाभिहितं खलु; किन्तु [ निशितैः, अशरीरशरैः ] अनङ्गबाणैः, [अनिशं, कृशितं] कृशीकृतम्। कृशशब्दात् "तत्करोति—" (ग०) इति ण्यन्तात् कर्मणि क्तः। णाविष्ठवद्भावे "र ऋतो हलादेर्लघोः" (६।४।१६१ पा०) इति ऋकारस्य रेफादेशः। [ निजं शरीरं मन्दम्, ऐक्षि ] ईक्षितम्। एषाऽपि कलहान्तरिता मध्यमा च। त्रपया निजहृदयानभिधानात् निजशरीरनिरीक्षणेन स्वावस्थानिवेदनाच्च तुल्यलज्जास्मरत्वावगमादिति। इयञ्च पञ्चमी कार्श्याख्या कामावस्था,—'दृङ्मनःसङ्गसङ्कल्पा जागरः कृशताऽरतिः। ह्रीत्यागोन्माद-मूर्च्छान्ता इत्यनङ्गदशा दश॥' इति॥ ६१॥

इत्थं नायिकाभिरुपदिष्टा दूत्यः किमकुर्वन् इत्यत आह, ब्रुवत इति।—[ प्रगल्भमतिगर्भगिरः ] प्रगल्भाः धृष्टाः, मतिगर्भाः प्रतिभासाराश्च गिरो यासां ता, [ दूत्यः, नरान् ] पुरुषान्, [ उपसृत्य, नरवत् ]

मम रूपकीर्त्तिमहरद्भुवि य-
स्तदनुप्रविष्टहृदयेयमिति।
त्वयि मत्सरादिव निरस्तदयः
सुतरां क्षिणोति खलु तां मदनः ॥ ६३ ॥
तव सा कथासु परिघट्टयति
श्रवणं यदङ्गुलिमुखेन मुहुः।

---

नरैः पुंभिस्तुल्यम्। "तेन तुल्यं क्रिया चेद्वतिः" (५।१।११५ पा०) इति वतिप्रत्ययः। [ब्रुवते स्म]। न चैतावता वैजात्यं दूषणमित्यर्थान्तरन्यासेनाह, सुहृदर्थमिति।—तथा हि,—[अजिह्मधियाम्] अकुटिलबुद्धीनां सम्बन्धि, सुहृदे [सुहृदर्थम्]। "अर्थेन सह नित्यसमासः सर्वलिङ्गता चेति वक्तव्यम्" (वा०) इति नित्यसमासः। [ईहितं] चेष्टितं [प्रकृतेर्विरुद्धमपि] स्वभावविपरीतमपि, [विराजति] शोभते; तस्मात् न धार्ष्ट्यं दोष इत्यर्थः ॥ ६२ ॥

अथ काचित् दूती कञ्चित् प्रियं प्रति सप्तभिः प्रार्थयते, ममेत्यादि।—[यो भुवि मम, रूपकीर्त्तिं] सौन्दर्य्यं, प्रथमम् [अहरत्, इयं] त्वत्प्रिया, [तदनुप्रविष्टहृदया] तस्मिन् आसक्तचित्ता, [इति] अतो हेतोः, [त्वयि मत्सरादिव मदनः, निरस्तदयः] निष्कृपः सन्, [तां] त्वत्प्रियां, [सुतरां, क्षिणोति] क्षपयति [खलु]। एतेन कार्श्यावस्थोक्ता। अत्र साक्षात्प्रतिपक्षभूतनायकपीड़नासमर्थस्य मदनस्य तदीयनायिकापीड़नोक्त्या प्रत्यनीकालङ्कारः;—'बलिन प्रतिपक्षस्य प्रतीकारे सुदुष्करे। यस्तदीयतिरस्कारः प्रत्यनीकं तदुच्यते॥' इति लक्षणात्; स च त्वयि मत्सरादिवेति हेतूत्प्रेक्षोत्थापित इति सङ्करः ॥६३॥

तवेति।—[सा] त्वत्प्रिया, [तव, कथासु] गुणकीर्त्तनेषु, [मुहुरङ्गुलिमुखेन] अङ्गुल्यग्रेण, [श्रवणं] श्रोत्रविवरं, [परिघट्टयति] स्फाल-

घनतां ध्रुवं नयति तेन भव-
द्गुणपूगपूरितमतृप्ततया ॥ ६४ ॥
उपताप्यमानमलघूष्मभिः
श्वसितैः सितेतरसरोजदृशः ।
द्रवतां न नेतुमधरं क्षमते
नवनागवल्लिदलरागरसः ॥ ६५ ॥
दधति स्फुटं रतिपतेरिषवः
शितताṃ यदुत्पलपलाशदृशः ।

---

यति, इति [ यत् ] यदृच्छयेति शेषः । [ तेन ] परिघट्टनेन, [ भवद्गुण-पूगपूरितं ] श्रवणम्, [ अतृप्ततया ] तावत् गुणग्रहणेन असन्तुष्टतया, [ घनतां नयति ]। बहुतण्डुलमानार्थं प्रस्थादिवद्भूयो गुणप्रवेशाय श्लेषयतीत्यर्थः, [ ध्रुवम् ] इत्युत्प्रेक्षायाम्। अत्र कण्डूविनोदनार्थं श्रोत्रघट्टने घनतानयनमुत्प्रेक्ष्यते * ॥ ६४ ॥

उपेति ।—[ अलघूष्मभिः ] अलघुरन्तःसन्तापोपाधिकः उष्मा उष्णत्वं येषां तैः, [श्वसितैः] निश्वासैः, [उपताप्यमानं, सितेतरसरोजदृशः] नीलोत्पलाक्ष्या, [अधरं, नवनागवल्लिदलरागरसः ] नवनागवल्लिदलानां ताम्बूलदलानां, रागरसो रञ्जनद्रवः, [ द्रवताम् ] आर्द्रतां, [ नेतुं, न क्षमते ] न शक्नोति। एतेन ज्वरावस्थोक्ता। अत्र द्रवत्वनयनसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ६५ ॥

दधतीति ।—[ रतिपतेरिषवः, शितताṃ ] नैशित्यं, [दधति, स्फुटम्] इत्युत्प्रेक्षायाम्। [ यत् ] यस्मात्, [ निरन्तरप्रवृत्तकठिनस्तनमण्डला-

---

* अत्र मोट्टायितं भावः ;—"तद्भावभाविते चित्ते वल्लभस्य कथाऽऽदिषु । मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम् ॥" इति लक्षणात् ।

हृदयं निरन्तरबृहत्कठिन-

स्तनमण्डलावरणमप्यभिदन् ॥ ६६ ॥

कुसुमादपि स्मितदृशः सुतरां

सुकुमारमङ्गमिति नापरथा ।

अनिशं निजैरकरुणः करुणं

कुसुमेषुरुत्तपति यद्विशिखैः ॥ ६७ ॥

विषतां निषेवितमपक्रियया

समुपैति सर्वमिति सत्यमदः ।

---

वरणमपि ] निरन्तरं नीरन्ध्रं, बृहत् कठिनञ्च यत् स्तनमण्डलं तदेवावरणं वर्म यस्य तत् तदपि, [ उत्पलपलाशदृशः ] उत्पलदलाक्ष्याः, [ हृदयम्, अभिदन् ] भिन्दन्ति स्म। भिदेर्लुङि "इरितो वा" ( ३।१।५७ पा० ) इति च्लेरङादेशः। सावरणमपि भिन्नमिति विरोधोत्थापितेयं स्मरशरनैशित्योत्प्रेक्षा; तया च रन्ध्रान्वेषिणा कामेन निपीड्यमानायास्तस्यास्त्वद्विरहो जीवितसंशयमापादयतीति वस्तु द्योत्यते ॥ ६६ ॥

कुसुमादिति ।—[ स्मितदृशः ] स्मेराक्ष्याः, [ अङ्गं कुसुमादपि सुतरां, सुकुमारं ] कोमलम्, [ इति ] इदम्, [ अपरथा ] अन्यथा, [ न ], किन्तु सत्यमेवेत्यर्थः। [ यत् ] यस्मात्, [ कुसुमेषुः, अकरुणः ] निष्कृपः सन्, [ निजैः, विशिखैः ] बाणैः। 'पृषत्कबाणविशिखाः' इत्यमरः। कुसुमैरेवेत्यर्थः, [ करुणं ] दीनं यथा तथा, [ अनिशं ] नित्यम्, [ उत्तपति ] तापयतीत्यर्थः। तपतिरयं भौवादिकः सकर्म्मकः। कुसुमाधिकसौकुमार्य्याभावे कुसुमैः पीड्यत इति कुसुमाधिकसौकुमार्य्यगुणोत्प्रेक्षा नापरथेति व्यञ्जकप्रयोगात् वाच्या ॥ ६७ ॥

विषतामिति ।—[ अपक्रियया ] विपरीतप्रयोगेण, [ निषेवितम् ] उपयुक्तं, [ सर्वम् ], अमृतमपीति भावः। [ विषतां ] विषवदहितत्वं,

अमृतस्रुतोऽपि विरहाद्भवतो-
यदमूं दहन्ति हिमरश्मिरुचः ॥ ६८ ॥
उदितं प्रियां प्रति सहार्दमिति
श्रदधीयत प्रियतमेन वचः।
विदितेङ्गिते हि पुर एव जने
सपदीरिताः खलु लगन्ति गिरः ॥ ६९ ॥
[ कुलकम् ]

---

[ समुपैति इति, अदः ] इदं विपत्त्वं, [ सत्यं ] ध्रुवम् ; [ यत् ] यस्मात्, [ अमृतस्रुतोऽपि ]। स्रवतेः क्विपि लुक्। [ हिमरश्मिरुचः ] चन्द्रपादाः, [ भवतो विरहात् ] हेतोः, त्वया विना सेवनादित्यर्थः। [ अमूं ] त्वत्-प्रियां, [ दहन्ति ]। याः पूर्वं त्वया सह सेवनादाह्लादयन्निति भावः। एतेन विषयद्वेषरूपा अरत्यवस्थोक्ता। अत्र विशेषेण सामान्यसमर्थन-रूपोऽर्थान्तरन्यासः ॥ ६८ ॥

उदितमिति।—[ प्रियां प्रति ] प्रियामुद्दिश्य। हृदयस्येदं हार्दं प्रेम। 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः। "तस्येदम्" ( ४।३।१२० पा० ) इत्यण्प्रत्ययः। "हृदयस्य हृल्लेखयदण्लासेषु"(६।३।५० पा०) इति हृदयस्य हृदादेशः। [ सहार्दं ] सस्नेहम्, [ इत्युदितम् ]। वदेः कर्मणि क्तः, "वचिस्वपि—" (६।१।१५ पा०) इत्यादिना सम्प्रसारणम्। [वचः] दूतीवाक्यं, [प्रियतमेन, श्रदधीयत] विश्वसितम्। दधातेः कर्मणि लङ्, "श्रदन्तरोरुपसर्गवद्वृत्तिः" इति काशिकावचनाच्छ्रच्छब्दस्य प्राक्प्रयोगः। [ हि ] यस्मात्, [ पुरः एव ] पूर्वमेव, [ विदितेङ्गिते ] विदितपराभिप्राये, [ जने ]। इङ्गितं हृद्गतो भावः। [ ईरिताः ] सज्जने समुदीरिताः, [ गिरः सपदि, लगन्ति ] सज्जन्ति, [ खलु ] ; स्वयं प्रियाहृदयवेदित्वात्। स्वबुद्धेः संवादेन दूतीकथितं प्रिया-विरहदुःखं विश्वसितेत्यर्थः। अर्थान्तरन्यासः। एषा कलहान्तरिता,

दयिताहृतस्य युवभिर्मनसः
परिमूढतामिव गतैः प्रथमम् ।
उदिते ततः सपदि लब्धपदैः
क्षणदाकरेऽनुपदिभिः प्रययै ॥ ७० ॥

निपपात सम्भ्रमभृतः श्रवणा-
दसितभ्रुवः प्रणदितालिकुलम् ।
दयितावलोकविकसन्नयन-
प्रसरप्रणुन्नमिव वारिरुहम् ॥ ७१ ॥

---

अत एव मानाख्यो विप्रलम्भः शृङ्गारः,—'पूर्वानुरागमानाख्यप्रवास-करुणात्मना। विप्रलम्भाभिधानोऽयं शृङ्गारः स्यात् चतुर्विधः ॥' इति। कुलकम् ॥ ६९ ॥

दयितेति।—[ प्रथमं ] चन्द्रोदयात् प्राक्, [ परिमूढतां ] निज-मनोपहर्तृमार्गानभिज्ञतां, [ गतैः, ततः ] पश्चात्, [ क्षणदाकरे ] चन्द्रे, [ उदिते ] सति, [ सपदि, लब्धपदैः ] दृष्टचोरपदचिह्नैः, [दयिताहृतस्य] दयिताभिर्हृतस्याकृष्टस्यापहृतस्य च, [ मनसोऽनुपदिभिः ] अन्वेष्टृभिः, अन्विष्यद्भिरित्यर्थः, [ इव ]। अत एव गम्योत्प्रेक्षा प्रागवलम्बितधैर्य-त्यागनिमित्ता। "अनुपद्यन्वेष्टा" (५।२।९० पा०) इति निपातः। 'अन्वेष्टानुपदी प्रोक्ता' इति वैजयन्ती। [ युवभिः, प्रययै ] प्रयातम्। यातेर्भावे लिट्। अत्रोक्तपदान्वेषणोत्प्रेक्षया यूनां चोरग्राहिरूपकं गम्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ७० ॥

अथ यूनां गृहप्राप्त्यनन्तरं वृत्तान्तं वर्णयति, निपपातेति।—[सम्भ्रम-भृतः ] प्रत्युत्थानसम्भ्रमिण्याः, [ असितभ्रुवः ] अङ्गनायाः, [ प्रणदिता-लिकुलं ] गुञ्जदलिपुञ्जम्। "उपसर्गादसमासेऽपि णोपदेशस्य" (८।४।१४ पा० ) इति णत्वम्। [ वारिरुहं ] श्रवणोत्पलं, [ दयितावलोक-

उपनेतुमुन्नतिमतेव दिवं
कुचयोर्युगेन तरसाऽऽकलिताम्।
रभसोत्थितामुपगतः सहसा
परिरभ्य कश्चन बधूमरुधत्॥ ७२॥

अनुदेहमागतवतः प्रतिमां
परिणायकस्य गुरुमुद्वहता।
मुकुरेण वेपथुभृतोऽतिभरात्
कथमप्यपाति न बधूकरतः॥ ७३॥

---

विकसन्नयनप्रसरप्रगुणमिव ] दयितावलोकेन विकसतो विस्तारं गच्छतः, नयनस्य प्रसरेण प्रसारेण, प्रगुणमिव। पूर्ववत् णत्वम्। [ श्रवणात् निपपात ] तथा सम्भ्रान्तमित्यर्थः। अत्र सम्भ्रमहेतुकस्य कर्णोत्पलपातस्य नयनप्रसारहेतुकत्वमुत्प्रेक्ष्यते। एषा च हृष्टा॥ ७१॥

उपनेतुमिति।—[ सहसोपगतः ] हठादागतः, [ कश्चन ] युवा, अत एव [रभसोत्थितां] रभसेनोत्थिताम्, अत एव [उन्नतिमता कुचयोर्युगेन ] करणेन * [ दिवम् ] आकाशम्, [ उपनेतुमिव ] ऊर्द्ध्वमुत्क्षेप्तुमिवेति फलोत्प्रेक्षा उत्थाननिमित्तौन्नत्यगुणनिमित्ता। [ तरसा ] बलेन, [ आकलितां ] व्याक्षिप्तां, [ बधूं ] प्रियां, [ परिरभ्य ] आश्लिष्य, [अरुधत्] रुद्धवान्, उपवेशितवान् इत्यर्थः, ऊर्द्ध्वोत्क्षेपान्निवारितवान् इति चार्थः। रुधेर्लुङि "इरितो वा" ( ३।१।५७ पा० ) इति विकल्पात् च्लेरङादेशः। एषा हृष्टा, रोमाञ्चिताद्यनुभाववती च॥ ७२॥

अनुदेहमिति।—[ अनुदेहं ] देहस्य पश्चात्। "अव्ययं विभक्ति—" ( २।१।६ पा० ) इत्यादिना पश्चादर्थेऽव्ययीभावः। [ आगतवतः, परिणायकस्य ] परिणेतुः, वोढुरित्यर्थः। नयतेर्ण्वुल्प्रत्ययः। "उपसर्गा-

---

* "करणेन" इत्यत्र "कर्त्रा" इति युक्तं, करणत्वासम्भवात्।

अवनम्य वक्षसि निमग्नकुच-
द्वितयेन गाढमुपगूढवता ।
दयितेन तल्पणचलद्रशना-
कलकिङ्किणीरवमुदासि वधूः ॥ ७४ ॥
करुद्धनीवि दयितोपगतौ
गलितं त्वराविरहितासनया ।

---

इसमासेऽपि—" ( ८।४।१४ पा० ) इति णत्वम् । [ गुरुं ] पूज्यां, भारवतीञ्च, [ प्रतिमां ] प्रतिबिम्बम्, [ उद्वहता ] पश्चात् स्थितस्यापि, तदाभिमुख्यादिति भावः । [ मुकुरेण ] दर्पणेन, कर्त्रा । 'दर्पणे मुकुरादर्शौ' इत्यमरः । [विपथुभृतः] नवोढतया भयशृङ्गाराभ्यां कम्पमानात्, अति अतिमात्रो भरो यस्य तस्मात् [ अतिभरात् ], प्रतिबिम्बगुरुमुकुरधारणादिति भावः । [ वधूकरतः ] वध्वा नवोढायाः, करतः पाणितलात् । पञ्चम्यास्तसिल् । [ कथमपि, नापाति ] न पतितं, महता प्रयत्नेन धारित इत्यर्थः । भावे लुङ् । एषा च मुग्धा । अत्र वधूकरस्य भारासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः, गुरुमिति श्लेषोत्थापितेति सङ्करः * ॥ ७३ ॥

अवनम्येति ।—[अवनम्य गाढम्, उपगूढवता] आश्लिष्टवता, अत एव [वक्षसि निमग्नकुचद्वितयेन दयितेन, तल्पणचलद्रशनाकलकिङ्किणीरवं] तल्पणे चलन् उच्छलन्, रशनायाः कलकिङ्किणीरवो यस्मिन् कर्मणि तद् यथा तथा, [ वधूः ] अङ्गना, [ उदासि ] उत्क्षिप्ता । अस्यतेः कर्मणि लुङ् । एषा च हृष्टा रोमाञ्चाद्यनुभाववती च । स्वभावालङ्कारः † ॥ ७४ ॥

करुद्धेति ।—[ दयितोपगतौ ] प्रियागमने सति, अत एव [ त्वरा-

---

* पतनकारणे अतिगुरौ सत्यपि पतनानिष्पत्तेर्विशेषोक्तिश्च ।

† स्वभावोक्त्यलङ्कार इति पाठो युक्तः, उक्तालङ्कारस्य कुत्राप्यनुपलम्भात् ।

त्वगादृष्टहाटकशिलासदृश-
स्फुरदूरुभित्ति वसनं ववसे ॥ ७५ ॥
पिदधानमन्वगुपगम्य दृशौ
ब्रुवते जनाय वद कोऽयमिति।
अभिधातुमध्यवससौ न गिरा
पुलकैः प्रियं नववधूर्न्यगदत् ॥ ७६ ॥

---

विरहितासनया ] त्वरया विरहितं त्यक्तमासनं यया तया, उत्थितयेत्यर्थः, कयाचिदिति शेषः ; अत एव [ गलितं ] स्रस्तम्, अत एव [ करलग्ननीवि ] करगृहीतबन्धं, [ वसनं, त्वगादृष्टहाटकशिलासदृशस्फुरदूरुभित्ति ] त्वरया दृष्टा हाटकशिलासदृशी हेमशिलाप्रतिमा स्फुरन्ती ऊरुभित्तिरूरुदेशो यस्मिन् कर्म्मणि तद् यथा तथा। 'हिरण्यं हेम हाटकम्' इत्यमरः। [ ववसे ] आच्छादितम्। वस्तेराच्छादनार्थात् कर्म्मणि लिट्। ऊरु भित्तिरिवेत्युपमितसमासः। अलोपमयोः संसृष्टिः ॥ ७५ ॥

पिदधानमिति।—[ नववधूः ] नवोढ़ा, [ अन्वक् ] पश्चात्, [ उपगम्य दृशौ, पिदधानं ] छादयन्तं, [ प्रियं ] दृष्टिच्छादकः [ अयं कः ? वद इति, ब्रुवते ] पृच्छते, [जनाय, गिरा] वाचा, [अभिधातुं, नाध्यवससौ ] नोत्सेहे ; लज्जयेति भावः। अध्यवपूर्वात् स्यतेः कर्त्तरि लिट्। किन्तु [ पुलकैर्न्यगदत् ]। अत्र प्रियज्ञानस्यार्थस्य लज्जया असंलक्षितस्य पुलकैः प्रकाशनात् सूक्ष्मालङ्कारः। 'संलक्षितसूक्ष्मार्थप्रकाशनं सूक्ष्मम्' इत्यलङ्कारसर्वस्वलक्षणात् * ॥ ७६ ॥

---

* तथा हि तदीया वृत्तिः,—"इह सूक्ष्मः स्थूलमतिभिः असंलक्ष्यो योऽर्थः स यदा कुशाग्रमतिभिरिङ्गिताकाराभ्यां संलक्ष्यते तदा तस्य संलक्षितस्य विदग्धं प्रति प्रकाशनं सूक्ष्ममलङ्कारः" इति।

उदितोरुसादमतिवेपथुमत्
सुदृशोऽभिभर्तृ विधुरं त्रपया ।
वपुरादरातिशयशंसि पुनः
प्रतिपत्तिमूढमपि वाढमभूत् ॥ ७७ ॥

परिमन्थराभिरलघूरुभरा-
दधिवेश्म पत्युरुपचारविधौ ।
स्खलिताभिरप्यनुपदं प्रमदाः
प्रणयातिभूमिमगमन् गतिभिः ॥ ७८ ॥

---

उदितेति ।—[अभिभर्तृ] भर्तृसमक्षम् । "लक्षणेनाभिप्रती आभिमुख्ये" ( २।१।१४ पा० ) इत्यव्ययीभावः । [उदितोरुसादम्] उदित उत्पन्नः, ऊरुसादः ऊर्वोर्निश्चेष्टता यस्य तत्, [अतिवेपथुमत्] अतिकम्पवत् । एतेन विशेषणद्वयेन प्रत्युत्थानालिङ्गनविरोधिन स्तम्भवेपथू सात्त्विकावुक्तौ । [त्रपया, विधुरं] विलक्षम् । एतेन लज्जासञ्चारिणा प्रियवाक्कुण्ठत्वमुक्तम् । एवं [प्रतिपत्तिमूढमपि] इतिकर्त्तव्यतामूढमपि, [सुदृशो वपुः पुनः, वाढं] भृशम्, [आदरातिशयशंसि] मुखरागादिलिङ्गैरादरविशेषव्यञ्जकम्, [अभूत्] । सत्यादरे किमुपचारैरिति भावः ॥ ७७ ॥

परीति ।—[प्रमदाः, अधिवेश्म] निजवेश्मनि, [पत्युः, उपचारविधौ] प्रत्युत्थानादिकर्मणि, [अलघूरुभरात्] अलघोर्महत उरुभरात्, [परिमन्थराभिः] अलसाभिः, [अनुपदं] पदे पदे, [स्खलिताभिरपि गतिभिः, प्रणयातिभूमिं] प्रेमप्रकर्षम्, [अगमन्] परं प्रेमास्पदीभूता इत्यर्थः । प्रत्युत्थानादपि स्खलितगमनमेव पत्युः प्रीतिकरमभूदिति भावः । स्त्रीणां स्खलनं पत्युः प्रीतिकरमिति विरोधाभासोऽलङ्कारः ॥ ७८ ॥

मधुरोन्नतभ्रु ललितञ्च दृशोः
सकरप्रयोगचतुरञ्च वचः।
प्रकृतिस्थमेव निपुणागमितं
स्फुटनृत्यलीलमभवत् सुतनोः ॥ ७९ ॥

तदयुक्तमङ्ग ! तव विश्वसृजा
न कृतं यदीक्षणसहस्रतयम्।
प्रकटीकृता जगति येन खलु
स्फुटमिन्द्रताऽद्य मयि गोत्रभिदा ॥ ८० ॥

---

मधुरेति।—मधुरं मनोहरं यथा तथा उन्नते उच्चलिते भ्रुवौ यस्मिन् तत् [ मधुरोन्नतभ्रु ]। "गोस्त्रियोरुपसर्जनस्य" (१।२।४८ पा०) इति ह्रस्वत्वम्। [ दृशोर्ललितञ्च ] नयनचेष्टा च, सकरप्रयोगं हस्ताभिनयसहितं तच्चतुरञ्च [ सकरप्रयोगचतुरं, वचश्च, सुतनोः ] स्त्रियाः, [ प्रकृतिस्थमेव ] स्वभावसिद्धमेव सदपि, [ निपुणागमितं ] निपुणेन निपुणाचार्य्येणागमितमभ्यासितम्; अत एव [ स्फुटनृत्य-लीलं ] स्फुटं प्रथितं, यत् नृत्यं तस्य लीलेव लीला यस्य तत् तथोक्तम्, [ अभवत् ] इति निदर्शनाऽलङ्कारः। * तया नर्त्तक्युपमा गम्यते ॥७९॥

अथ कस्याश्चित् सपत्नीनामग्रहणाद्धतायाः कान्तोपालम्भं विशेष-केणाह, तदिति।—[ अङ्ग ] इत्यामन्त्रणे। [ विश्वसृजा ] विधात्रा, [ तव, ईक्षणसहस्रतयं ] नेत्रसहस्रम्। संख्याया अवयवे तयप्। [ न कृतं ] न सृष्टम्, इति [ यत् तदयुक्तम् ]। कुतः ? [येन] कारणेन, [ मयि ] विषये, [ स्फुटं ] प्रत्यक्षमेव, [गोत्रभिदा] नामभेदिना, अद्रि-भेदिना च। 'गोत्रः नाम्नि कुलेऽप्यद्रौ' इति यादवः। त्वयेति

---

* अत्र उपमेति युक्तं, बहुव्रीहौ निदर्शनास्वीकारे स्वगाचीत्यत्रापि तत्प्रसङ्गात्।

न विभावयत्यनिशमक्षिगता-
मपि मां भवानतिसमीपतया ।
हृदयस्थितामपि पुनः परितः
कथमीक्षते बहिरभीष्टतमाम् ? ॥ ८१ ॥

इति गन्तुमिच्छुमभिधाय पुरः
क्षणदृष्टिपातविकसद्वदनाम् ।
स्वकरावलम्बनविमुक्तगलत्-
कलकाञ्चि काञ्चिदरुणस्तरुणः ॥ ८२ ॥

---

श्लेषः । [ अद्य इन्द्रता जगति प्रकटीकृता खलु ] । अत्र गोत्रभिदिति श्लेषानुप्राणितं सहस्राक्षत्वमुत्प्रेक्ष्यते * ॥ ८० ॥

नेति ।—[अनिशम्, अक्षिगतां] चक्षुःसन्निकृष्टाम्, [अपि] द्वेष्यामिति च गम्यते । 'द्वेष्ये त्वक्षिगतः' इत्यमरः । [ मामतिसमीपतया भवान् न विभावयति ] । "शेषे प्रथमः" ( १।४।१०८ पा० ) इति प्रथमपुरुषः । इन्द्रियसन्निकृष्टमपि न लक्ष्यत इति विरोधाभासनार्थोऽपिशब्दः । परमार्थस्तु द्वेष्यत्वादतिसामीप्याच्च अविभावनं न चित्रमिति भावः । [अभीष्टतमां पुनः, हृदयस्थितामपि] हृदयादनपेतामपि, अन्तर्हितामिति च गम्यते । अत एव विरोधाभासकोऽपिशब्दः । [ परितः, बहिः ] पुरतः, [कथं] भवान् [ईक्षते] । इदन्तु चित्रम् । अतिसामीप्यवत् व्यवधानस्यापि दर्शनप्रतिबन्धकत्वादिति भावः । प्रेमास्पदं वस्तु परोक्षमप्यपरोक्षमीक्षते, इतरदपरोक्षमपि परोक्षमेवेति तात्पर्य्यार्थः । विरोधाभासयोः सङ्करः ॥ ८१ ॥

इतीति ।—[ इत्यभिधाय पुरो गन्तुमिच्छुं, क्षणदृष्टिपातविकसद्वदनां ] क्षणं दृष्ट्योः पातेन विकसद्वदनां परस्परदृष्टिपातमात्रगतकोपा-

---

* तदकरणादयुक्तत्वम् ।

अपयाति सरोषया निरस्ते
कृतकं कामिनि चुचुवे मृगाच्या ।
कलयन्नपि सव्यथोऽवतस्थे-
ऽशकुनेन स्खलितः किलेतरोऽपि ॥ ८३ ॥

आलोक्य प्रियतममंशुके विनीवी
यत्तस्थे नमितमुखेन्दु मानवत्या ।
तन्नूनं पदमवलोकयाम्बभूवे
मानस्य द्रुतमपयानमास्थितस्य ॥ ८४ ॥

---

मित्यर्थः । [ काञ्चित् ] नायिकां, [ तरुणः ] युवा, [ स्वकरावलम्बन-विमुक्तगलत्कलकाञ्चि ] स्वकरावलम्बनं प्रियकरेण ग्रहणं, तेन विमुक्ता मुक्तबन्धना, अत एव गलन्ती भ्रंशमाना, कला मधुरा, काञ्ची यस्मिन् कर्म्मणि तद्यथा तथा, [ अरुणत् ] रुद्धवान् । रुधेर्लङि "रुधादिभ्यः श्नम्" ( ३।१।७८ पा० ) । एषा च कलहान्तरिता । विशेषकम् ॥८२॥

अपयातीति ।—[ सरोषया मृगाक्ष्या निरस्ते, कामिनि ] भर्त्तरि, [ अपयाति ] निर्याति सति, [ कृतकं ] कृत्रिमं यथा तथा, [ चुचुवे ] तन्निर्गमनप्रतिबन्धार्थं चुतं कृतमित्यर्थः । 'चुशब्दे' भावे लिट् । [ इतरोऽपि ] नायकोऽपि, [ कलयन्नपि ] कृतककोपेयमिति जानन्नपि, [ अशकुनेन, स्खलितः किल ] निरुद्ध इवेत्यर्थः, [सव्यथः] सनिर्वेद इव, [ अवतस्थे ] स्थितः, न गत इत्यर्थः ; उभावपि समानानुरागाविति भावः । एषा च कलहान्तरिता * ॥ ८३ ॥

आलोक्येति ।—[ मानवत्या ] कोपवत्या स्त्रिया । 'स्त्रीणामीर्ष्या-कृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इत्युक्तेः । [ प्रियतममालोक्य ] । स्थित्या समानकर्तृकत्वात् क्त्वानिर्देशः । [अंशुके, विनीवी] प्रियावलोक-

---

* उत्प्रेक्षयोः संसृष्टिः ।

सुदृशः सरसव्यलीकतप्त-
स्तरसाऽऽश्लिष्टवतः सयौवनोष्मा ।
कथमप्यभवत् स्मरानलोष्णाः
स्तनभारो न नखम्पचः प्रियस्य ? ॥ ८५ ॥

दधत्युरोजद्वयमुर्वशीतलं
भुवो गतेव स्वयमुर्वशी तलम् ।

---

नाभिगलितबन्धे सति । भाषितपुंस्कत्वात् पुंवद्भावः । 'स्त्रीकटीवस्त्र-बन्धेऽपि नीविः परिपणेऽपि च' इत्यमरः । [ नमितमुखेन्दु ] यथा तथा [ तस्थे ] स्थितम्, इति [ यत्, तत् ] तस्मान्नम्रमुखावस्थानात्, [ द्रुतं ] शीघ्रं, प्रियावलोकनत्वरा एवेत्यर्थः । [ अपयानमास्थितस्य ] प्रयाणं गतस्य, [ मानस्य ] कोपस्य, [ पदं ] पदचिह्नम्, [ अवलोकया-म्बभूवे] अन्वेषितमित्यर्थः । लज्जानिमित्ताया मुखनतेः अन्वेषणार्थ-त्वमुत्प्रेक्ष्यते [ नूनम् ] इति । मानगन्धोऽप्यस्तमित इति भावः ॥८४॥

सुदृश इति ।—[ सरसव्यलीकतप्तः ] सरसमार्द्रं, नूतनमिति यावत्, तेन व्यलीकेन प्रियकृतेनापराधेन तप्तः ; तथा यौवनोष्मणा सह वर्त्तते इति [ सयौवनोष्मा ] ; किञ्च, [ स्मरानलोष्णः ] कामाग्निसन्तप्तः, एवं त्रिविधाग्नितप्तोऽपि [ सुदृशः स्तनभारः, तरसा ] वेगेन, अतिदाह-दशायामेवेत्यर्थः । [ आश्लिष्टवतः ] आलिङ्गितवतः, [ प्रियस्य, कथमपि ] कथं वा, कुतो हेतोरित्यर्थः । नखं पचति क्वाथयतीति [ नखम्पचः ] । पचिरत्र तापवाची । "मितनखे च" ( ३।२।३४ पा० ) इति खश्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्" ( ६।३।६७ पा० ) इति मुमा-गमः । [ नाभवत् ] तथोष्ण ईषदुष्णोऽपि नाभूदित्यर्थः । प्रिया-सङ्गप्रतीकाराः खलु कामिनां सन्तापा इति भावः । तादृगौष्ण्य-सम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ८५ ॥

दधतीति ।—[ उरु ] महत्, [ अशीतलं ] स्मरयौवनोष्मभ्यामुष्णम्,

बभौ मुखेनाप्रतिमेन काचन
श्रियाधिका तां प्रति मेनका च न ॥ ८६ ॥

इत्थं नारीर्घटयितुमलं कामिभिः काममासन्
प्रालेयांशोः सपदि रुचयः शान्तमानान्तरायाः।
आचार्य्यत्वं रतिषु विलसन्मन्मथश्रीविलासा
ह्रीप्रत्यूहप्रशमकुशलाः शीधवश्चक्रुरासाम् ॥८७॥

इति श्रीमाघकविकृतौ शिशुपालबधे महाकाव्ये
प्रदोषवर्णनं नाम नवमः सर्गः ॥ ९ ॥

---

[ उरोजद्वयं ] कुचद्वयं, [ दधती भुवस्तलं गता, स्वयं ] साक्षात्, [ उर्वशी इव ] स्थितेत्युत्प्रेक्षा। [ काचन ] स्त्री, [ अप्रतिमेन मुखेन बभौ तां प्रति, मेनका ] मेनकाख्या अप्सरसः [ च, श्रियाधिका ] श्रिया सौन्दर्य्येणाधिका, [ न ] इत्यतिशयोक्तिः। तयोर्यमकाभ्यां संसृष्टिः। वंशस्थं वृत्तम् ॥ ८६ ॥

इत्थमिति।—[ इत्थम् ] अनेन प्रकारेण। "इदमस्थमुः" ( ५।३।२४ पा० ) इति थमुप्रत्ययः। [ सपदि, शान्तमानान्तरायाः ] शान्तः शमितः, मानः कोप एवान्तरायो याभिस्ताः। "वा दान्त—" ( ७।२।२७ पा० ) इत्यादिना शमेर्ण्यन्तात् शान्तेति निपातः। [ प्रालेयांशोः ] चन्द्रस्य, [ रुचयो नारीः कामिभिर्घटयितुम् ]। मितां ह्रस्वः, "पर्य्याप्तिवचनेष्वलमर्थेषु" ( ३।४।६६ पा० ) इति तुमुन्प्रत्ययः। [ कामं ] प्रकामम्, [ अलम् ] समर्थाः, [आसन्]। दूत्य इवेति भावः। [ विलसन्मन्मथश्रीविलासाः ] विलसन्तो मन्मथश्रीविलासा मणितशीत्कारादिमदनातिरेकविकारा * याभिस्ताः; [ ह्रीप्रत्यूहप्रशमकुशलाः ] ह्रीरेव

---

* "मणितं रतिकाले स्त्रीणामव्यक्तशब्दभेदे" इति वाचस्पत्यम्; शीत्काशब्दस्यापि तथाविधध्वनिविशेषवाचकत्वम्; एवञ्च मणितशीत्कारादयो हि मदनविकारातिशयव्यञ्जकाः स्त्रीणां रतिकालकृतनिनादविशेषाः इति टीकाकृतामाशयः।

# दशमः सर्गः ।

—◦◦—

सज्जितानि सुरभीण्यथ यूना-
मुल्लसन्नयनवारिरुहाणि ।
आययुः सुघटितानि सुरायाः
पात्रतां प्रियतमावदनानि ॥ १ ॥

---

प्रत्यूहो विघ्नः, तस्य प्रशमे निवारणे कुशलाः ; शेरते आभिरिति [शीधवः] मदिराः । "शीङो धुक्" (उ० ४पा० ३८सू०)इत्यौणादिको धुक्प्रत्ययः । [आसां रतिषु, आचार्य्यत्वम्] उपदेशं, [चक्रुः], नर्म्मसख्य इवेति भावः । अत्र प्रथमार्द्धे प्रस्तुतचन्द्रभासां मानशमनकामिघटनपाटवविशेषण-साम्यादप्रस्तुतदूतीत्वप्रतीतेः समासोक्तिः ; द्वितीयार्द्धे तु शीधुष्वारोपित-स्याचार्य्यत्वस्य प्रकृतोपयोगात् परिणामः ; तयोः सापेक्षत्वात् सङ्करः, तेन च दूतीनर्म्मसख्युपमाध्वनिः । उत्तरसर्गे मधुपानरतोत्सववर्णनायाश्चाय-मेव प्रस्तावः । मन्दाक्रान्तावृत्तं,—"मन्दाक्रान्ता जलधिषड्गैर्म्भौ नतौ तौ गुरू चेत्" इति लक्षणात् ॥ ८७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघ-काव्यव्याख्याने सर्वङ्कषाख्ये नवमः सर्गः ॥ ९ ॥

---

आचार्य्यत्वं रतिषु शीधवश्चक्रुरित्युक्तं, तत्प्रपञ्चनायास्मिन् सर्गे मधुपानं तावद्वर्णयति, सज्जितानीति ।—[ अथ ] पानगोष्ठीप्रस्तावा-नन्तरं, [ सज्जितानि ] यावकक्षालनादिना संस्कृतानि, [ सुरभीणि ] यथायोगं स्वभावसंस्काराभ्यां सुगन्धीनि, [ उल्लसन्नयनवारिरुहाणि ] नयनानि वारिरुहाणीव, अन्यत्र,—नयनानीव वारिरुहाणि वासनार्थं

सोपचारमुपशान्तविचारं
सानुतर्षमनुतर्षपदेन ।
ते मुहूर्त्तमथ मूर्त्तमपीप्यन्
प्रेम मानमवधूय वधूः स्वाः ॥ २ ॥

---

[ चषाणि, तान्युल्लसन्ति येषु तानि तथोक्तानि, [सुघटितानि] सुष्ठु सुखेर्योजितानि, शोभनसंस्थानवत्तया निर्मितानि वा, [प्रियतमावदनानि, यूनां ] कामिनां, [ सुरायाः, पात्रतां ] पानभाजनताम्, [ आययुः ] ; प्रियामुखसम्पर्कजनितरसास्वादलोभात् तासां मुखसुरामेव पपुरिति भावः । अत्र वदनेष्वारोप्यमाणायाः पात्रतायास्तादात्म्येन तेषां पानसाधनताऽऽपादनेन प्रकृतवदनोपयोगात् परिणामालङ्कारः ;—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति लक्षणात् । तेन श्लेषसङ्कीर्णोपमा व्यज्यते । अस्मिन् सर्गे स्वागता वृत्तं,—"स्वागतेति रनभा गुरुयुग्मम्" इति लक्षणात् ॥ १ ॥

सोपचारमिति ।—[ अथ ] पात्रीकरणानन्तरं, [ते] युवानः, [सोपचारं ] सप्रार्थनम्, [ उपशान्तविचारं ] निवृत्तशङ्कम् । 'विवादम्' इति पाठे,—मानमवधूयेति पुनरुक्तिः, चारचारमित्यनुप्रासक्रमभङ्गश्च स्यात् । [ सानुतर्षं ] सतृष्णञ्च यथा तथा, [ अनुतर्षपदेन ] अनुतर्षत्यनेनेत्यनुतर्षो मद्यम् । 'मद्येऽनुतर्षं तत्पाने पात्रे तृष्णाऽभिलाषयोः' इत्युभयत्रापि विश्वः । तस्य पदेन छलेन, [ मूर्त्तं ] मूर्त्तिमत् , [ प्रेम, स्वाः ] स्वीयाः, [वधूः, मुहूर्त्तं] क्षणं, [मानं] कोपम्, [अवधूय, अपीप्यन्] पाययन्ति स्म । पिबतेर्णौ चङि "लोपः पिबतेरीच्चाभ्यासस्य" ( ७।४।४ पा० ) इति धात्वाकारलोपः, ईकारोऽभ्यासस्य । "न पादमि—" ( १।३।८९ पा० ) इत्यादिना निगरणार्थत्वमिति परस्मैपदनिषेधेऽपि "णिचश्च" ( १।३। ७४ पा० ) इत्यात्मनेपदविकल्पात् पाक्षिकं परस्मैपदम् । "गतिबुद्धि—" (१।४।५२ पा० ) इत्यादिना वधूरित्यणिकर्त्तुः कर्म्मत्वम् । अनुतर्षपदे-

क्रान्तकान्तवदनप्रतिबिम्बे
मग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते
निर्ववार मधुनीन्द्रियवर्गः ॥ ३ ॥

कापिशायनसुगन्धि विघूर्ण-
न्नुन्मदोऽधिशयितुं समशेत ।
फुल्लदृष्टि वदनं प्रमदाना-
मब्जचारु चषकञ्च षडङ्घ्रिः ॥ ४ ॥

---

नेत्यनुतर्षापह्नवेन मूर्त्तप्रेमत्वोत्प्रेक्षणात् व्यञ्जकाप्रयोगाच्च प्रतीयमाना सापह्नवोत्प्रेक्षा ॥ २ ॥

क्रान्तेति ।—[ क्रान्तकान्तवदनप्रतिबिम्बे ] क्रान्तं सङ्क्रान्तं, कान्तवदनप्रतिबिम्बं यस्मिन् तस्मिन्, नेत्रनिर्वृतिकर इत्यर्थः । [ मग्नबालसहकारसुगन्धौ ] मग्नाः क्षिप्ताः, बालसहकाराश्चूतविशेषपल्लवाः । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । तैः सुगन्धौ सुरभिणि, घ्राणतर्पण इत्यर्थः । "तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" ( ७।१।७४ पा० ) इति पुंवद्भावः । [ स्वादुनि ] मधुरे, रसनाकर्षिणीत्यर्थः । [प्रणदितालिनि] गुञ्जन्मधुकरे, श्रुतिसुख इत्यर्थः । [ शीते ] स्पर्शसुखे इत्यर्थः । एवं पञ्चविषयसमष्टौ [ मधुनि ] मद्ये, [ इन्द्रियवर्गः ] चक्षुरादिपञ्चकं, [ निर्ववार ] निर्वृतमभूत् । अत्र रूपरसादिपदार्थानां मधुविशेषणभावेन निर्वृतिहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ३ ॥

कापिशायनेति ।—[ उन्मदः ] उद्रिक्तमदः, अत एव [ विघूर्णन् ] भ्रमन्, [ षडङ्घ्रिः ] षट्पदः, [ कापिशायनसुगन्धि ] कापिशायनेन सुगन्धि सुरभि । 'कश्यं कल्यं तथा मद्यं मैरेयं कापिशायनम्' इति

बिम्बितं भृतपरिस्रुति जानन्
भाजने जलजमित्यबलायाः ।
घ्रातुमक्षि पतति भ्रमरः स्म
भ्रान्तिभाजि भवति क्व विवेकः ? ॥ ५ ॥

दत्तमिष्टतमया मधु पत्यु-
र्बाढमाप पिबतो रसवत्ताम् ।

---

वैजयन्ती । [ फुल्लदृष्टि ] विकसितनेत्रं, [ प्रमदानां ] वनितानां, [ वदनम्, अब्जचारु ] अधि... ...र्थेन अब्जेन चारु, [ चषकं ] पानपात्रं, [ च ] । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । [ अधिशयितुम् ] अधिष्ठातुं, [ समशेत ] "इदं भजामीदं भजामि वा ?" इत्युभयलोभाद्यं दोलायमानमानस आसीदित्यर्थः । अत्र प्रकृतयोरेव वदनचषकयोः षट्पदाभिलाषास्पदत्वरूपैकधर्म्मयोगादौपम्यस्य गम्यतायां तुल्ययोगिताभेदः ॥ ४ ॥

बिम्बितमिति ।—[ ...तपरिस्रुति ] भृता परिस्रुत् वारुणी यस्मिंस्तस्मिन् । 'परिस्रुद्व... ...लजा' इत्यमरः । [ भाजने ] पानपात्रे, [ बिम्बितं ] प्रतिबिम्बितम् । [ अबलायाः अक्षि जलजमिति, जानन् ] सादृश्यात् तथा भ्राम्यन्नित्यर्थः । [ भ्रमरः घ्रातुं पतति स्म ] । तथा हि, [ भ्रान्तिभाजि ] भ्रान्तिर्भ्रमणं, विपरीतज्ञानञ्च तद्भाजि, [ विवेकः ] विचारः, [ क्व भवति ] न क्वापीत्यर्थः । अत्र भ्रमरस्याक्ष्णि जलजभ्रान्तेर्भ्रान्तिमदलङ्कारः, तत्समर्थकत्वात् श्लेषमूलातिशयोक्त्युत्थापितोऽर्थान्तरन्यासः तेन सहाङ्गाङ्गिभावेन सङ्करः ॥ ५ ॥

दत्तमिति ।—[ इष्टतमया * दत्तं, मधु ] मद्यं कर्त्तृ । [पिबतः पत्युः, रसवत्तां ] प्रेयसीकरस्पर्शादतिस्वादुताम्, [ आप ] । अतिशायने

---

* प्रियतमया ।

यत्सुवर्णमुकुटांशुभिरासी-
च्चेतनाविरहितैरपि पीतम् ॥ ६ ॥
स्वादनेन सुतनोरविचारा-
दोष्ठतः समचरिष्ट रसोऽत्र ।
अन्यमन्यदिव यन्मधु यूनः
स्वादमिष्टमतनिष्ट तदेव ॥ ७ ॥
बिभ्रती मधुरतामतिमात्रं
रागिभिर्युगपदेव पपाते ।

---

मतुप् । [ वाढं ] ध्रुवमित्युत्प्रेक्षा । कुतः ? [ यत् ] यस्मात्, [ चेतनाविरहितैः ] अचेतनैः, [ सुवर्णमुकुटांशुभिरपि ], मधुनि प्रसृतैरिति भावः । [ पीतं ] पीतवर्णं पीतञ्च, [ आसीत् ] । अत्र पीतमिति श्लेषमूलातिशयोक्त्या पीतिम्नः क्रियाभेदाध्यवसायेनाचेतनांशुकर्तृकपानक्रियानिमित्ता प्रेयसीस्वहस्तदानाहितरसवत्तोत्प्रेक्षा ; तया च यदचेतनानामपि पेयं तच्चेतनानां किं वक्तव्यमित्यर्थापत्तिध्वननादलङ्कारेणालङ्कारध्वनिः ॥ ६ ॥

स्वादनेनेति ।—[ सुतनोः ] कान्तायाः । [ स्वादनेन ] आस्वादनेन, [ ओष्ठतः ] ओष्ठात्, [ रसः ] स्वादः, [ अत्र ] मधुनि, [ अविचारात् ] असंशयात्, [ समचरिष्ट ] सङ्क्रान्तः । सम्पूर्वात् चरतेर्लुङ् । "समस्तृतीयायुक्तात्" ( १।३।५४ पा० ) इत्यात्मनेपदम् । कुतः ? [ यत् ] यस्मात्, [ तदेव ] पूर्वभुक्तमेव, [ मधु, अन्यदिव ] अपूर्वमिव, [ अन्यम् ] अपूर्वम्, [ इष्टं ] प्रियं, [ स्वादं ] रसं, [यूनोऽतनिष्ट] । तनोतेर्लुङि तङ् । ओष्ठस्पर्शानन्तरमेव रसान्तरप्रादुर्भावात् अनन्तरन्यायात् तद्रससङ्क्रमणोत्प्रेक्षा, सा चाविचारादिति व्यञ्जकप्रयोगाद्वाच्या ॥ ७ ॥

बिभ्रताविति ।—[ रागिभिः ] कामिभिः, [ अतिमात्रं, मधुरतां ]

आननैर्मधुरसो विकसद्भि-
र्नासिकाभिरसितोत्पलगन्धः ॥ ८ ॥
पीतवत्यभिमते मधुतुल्य-
स्वादमोष्ठरुचकं विदद्क्षौ ।
लभ्यते स्म परिरक्ततयाऽऽत्मा
यावकेन वियताऽपि युवत्याः ॥ ९ ॥

---

स्वादुतां, प्रियत्वं वा, [ बिभ्रतौ ]। 'मधुरं रसवत् स्वादु प्रियेषु मधुरोऽन्यवत्' इति विश्वः। तस्य भावस्तां, विकसद्भिः विकसन्तीभिश्च [ विकसद्भिः] तृष्णया विजृम्भमाणैः। "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" ( १।२।६९ पा० ) इति नपुंसकैकशेषः। [ आननैः, मधुरसः ] मद्यरसः, [नासिकाभिः] घ्राणैः, [असितोत्पलगन्धः] च [युगपदेव, पपाते] पीतौ ; भिन्नेन्द्रियग्राह्यावपि गन्धरसौ युगपत् स्वेन्द्रियसम्बन्धात् युगपत् गृहीतावित्यर्थः। अत्र मनस आशु सञ्चारात् यौगपद्याभिमानः। शतपत्रशरव्यतिभेदवदित्यणुपरिमाणवादिनः। वास्तवमेव यौगपद्यमिति मध्यमपरिमाणवादिनः। सार्वपथीनास्तु कवय इत्यलमतिपल्लवितेन। अत्र रसगन्धयोः प्रकृतयोरेकपानक्रियासम्बन्धात् तुल्ययोगिताभेदः ॥ ८ ॥

पीतवतीति।—[ विदद्क्षौ ] विदंष्टुमिच्छौ, उपदंशेच्छावतीत्यर्थः। दंशेः सन्नन्तादुप्रत्ययः। [ अभिमते ] वल्लभे, [ मधुतुल्यस्वादं ] मधुना तुल्यस्वादं तुल्यरसं, तुल्यत्वञ्च हृद्यतामात्रेण नान्यथा विलक्षणरसस्य अनुपदंशत्वात्। ओष्ठो रुचकमाभरणमिवेत्युपमितसमासः। 'रोचनायान्तु रुचकमश्वाभरणमाल्ययोः' इति विश्वः। तत् [ ओष्ठरुचकम् ] ओष्ठश्रेष्ठं, [ पीतवति ] सति [ वियता ] अपगच्छता, [ अपि ]। इणो लटः शत्रादेशे "इणो यण्" ( ६।४।८१ पा० ) इति यणादेशः। [ युवत्याः ] युवतेः। "ङिति ह्रस्वश्च" ( १।४।६ पा० ) इति वा

कस्यचित् समदनं मदनीय-
प्रेयसीवदनपानपरस्य ।
स्वादितः सकृदिवाऽऽसव एव
प्रत्युत क्षणविदंशपदेऽभूत् ॥ १० ॥
पीतशीधुमधुरैर्मिथुनाना-
माननैः परिहृतं चषकान्तः ।
व्रीड़या रुददिवालिविरावै-
र्नीलनीरजमगच्छदधस्तात् ॥ ११ ॥

---

नदीत्वादाड़ागमः । [ यावकेन ] अलक्तकेन, [ परिरक्ततया ] दन्त-निष्पीड़नकृतेन रागेण हेतुना, [ आत्मा ] स्वरूपं, [ लभ्यते स्म ] लब्धः, पुनरुद्भूतमित्यर्थः । अत्राधरपानादपगतस्यापि यावकस्य रागप्रादुर्भाव-निमित्ता विरोधगर्भा पुनरुक्तवोत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या ॥ ९ ॥

कस्यचिदिति ।—[ समदनं ] यथा तथा, [ मदनीयप्रेयसीवदन-पानपरस्य ] मदयतीति मदनीयं मदकारि । "कृत्यल्युटो बहुलम्" ( ३।३।११३ पा० ) इति कर्त्तरि अनीयर्प्रत्ययः । तस्य प्रेयसीवदनस्य पानं परं प्रधानं यस्य तस्य कामुकत्वात् प्रियामुखपानासक्तस्य, [ कस्य-चित् ] कामिनः, [ सकृदिव स्वादितः ] अबाहुल्येन पीतः । इवशब्दो वाक्यालङ्कारे । [ आसव एव ] । [ प्रत्युत ] वैपरीत्ये इति गण-व्याख्याने । [ क्षणविदंशपदे ] क्षणं विदंशपदे उपदंशस्थाने, [ अभूत् ] । अन्येषां मधुपानलोलुपानामधरास्वाद उपदंशः । अस्य त्वधरपानैकपरस्य मध्वेवोपदंश इत्यर्थः । अधरपानस्य उपदंशत्वसम्बन्धेऽप्यसम्बन्धः, आस-वस्य तदसम्बन्धेऽपि सम्बन्ध इत्यतिशयोक्त्योरसापेक्षत्वात् संसृष्टिः ॥ १० ॥

पीतेति ।—[ पीतशीधुमधुरैः ] पीतशीधूनि पीतमद्यानि ; अत एव मधुराणि मनोज्ञानि तैः, [ मिथुनानां ] स्त्रीपुंसानाम्, [ आननैः,

प्रातिभं त्रिसरकेण गतानां
वक्रवाक्यरचनारमणीयः।
गूढ़सूचितरहस्यसहासः
सुभ्रुवां प्रववृते परिहासः॥ १२ ॥

---

चषकान्तः] पानपात्राभ्यन्तरे। 'चषकोऽस्त्री पानपात्रम्' इत्यमरः। [परिहृतं] त्यक्तं, [नीलनीरजं] वासनार्थं निक्षिप्तं नीलोत्पलं, [व्रीड़या] परिहारलज्जया, [अलिविरावैः रुददिवाधस्तादगच्छत्]। अत्र मद्यापगमनिमित्तस्य नीलनीरजाधोगमनस्य रोदनविशिष्टलज्जा-हेतुकत्वोत्प्रेक्षा, सा चालिविरावैरिति व्यधिकरणपरिणामोज्जीवितेति सङ्करः॥ ११॥

अथ मदानुभावान् वर्णयति, प्रातिभमिति।—त्रयाणां सरकाणां समाहारस्त्रिसरकं त्रिवारमधुपानम्। 'सरकं शीधुपात्रे स्यात् शीधुपाने च शीधुनि' इति विश्वः। "तद्धितार्थ—" (२।१।५१ पा०) इत्यादिना समाहारे द्विगुः। पात्रादित्वात् नपुंसकत्वम्। तेन [त्रिसरकेण] त्रिपानं मदातिभूमिरिति पानप्रसिद्धिः। प्रतिभैव [प्रातिभं] प्रतिभाविशेषः। प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः; यद्वा,—'ज्ञानबीजभूतः संस्कारविशेषः प्रतिभा' इति काव्यप्रकाशकारः। तत्र भवं प्रातिभं ज्ञानप्रभावविशेष एव। भवार्थेऽण्प्रत्ययः। तत् प्रातिभं [गतानां] त्रिवार-मधुपानोत्कट-मदोद्बुद्धसंस्कार-प्रभावित-प्रगल्भमतीनामित्यर्थः। [सुभ्रुवां] स्त्रीणां, [वक्रवाक्यरचनारमणीयः] प्रतिकूलवाक्यप्रयोग-रम्यः, [गूढ़सूचितरहस्यसहासः] गूढ़ानि पूर्वं लज्जया संवृतानि, सूचितानि सम्प्रति मदेन प्रकाशितानि, रहस्यानि ग्राम्यावयवचेष्टाप्रलपितानि यस्मिन् स गूढ़सूचितरहस्यः, स चासौ सहासश्चेति विशेषणसमासः। वैवक्षिकविशेषणविशेष्यभावात्। 'हासो हास्यम्' इत्यमरः। [परि-

हावहारि हसितं वचनानां
कौशलं दृशि विकारविशेषाः ।
चक्रिरे भृशमृजोरपि बध्वाः
कामिनेव तरुणेन मदेन ॥ १३ ॥

अप्रसन्नमपराद्धरि पत्यौ
कोपदीप्तमुररीकृतधैर्य्यम् ।
चालितं नु शमितं नु बधूनां
द्रावितं नु हृदयं मधुवारैः ॥ १४ ॥

---

हासः] नर्मकेलिः, उपहासक्रीडेति यावत् । 'द्रवकेलिपरीहासाः' इत्यमरः । [ प्रववृते ] प्रवृत्तः । इतः परं मदः सञ्चारी ॥ १२ ॥

हावेति ।—[तरुणेन] उत्कटेन, यूना च, [मदेन कामिनेव, ऋजोः] मुग्धायाः, [ अपि बध्वाः ] किमुत प्रौढानामिति भावः । [ हावहारि ] विलासमनोहरं, [ हसितं ] हासः, [ वचनानां कौशलं ] प्रागल्भ्यं, [ दृशि विकारविशेषाः ] विलासविशेषाः, [ भृशम्, चक्रिरे ] कृतानि ; पुंसेव मौग्ध्यं त्याजयित्वा प्रौढ्यं नीतेत्यर्थः । अत्र हसितकौशलविकाराणां यौगपद्योक्त्या समुच्चयः,—'गुणक्रियायौगपद्यं समुच्चयः' इति लक्षणम् । तस्यौपम्ययोगेन सङ्करः । तेन ऋजोरपि इत्यत्र किमुत प्रौढानामित्यर्थापत्तिर्व्यज्यते ॥ १३ ॥

अप्रसन्नमिति ।—[ अपराद्धरि ] आगस्कारिणि । राधेस्तृच्प्रत्ययः । [ पत्यौ ] विषये, [ अप्रसन्नं ] कलुषं, क्षुभितमित्यर्थः । [ कोपदीप्तं ] कोपेन ज्वलितम्, [ उररीकृतधैर्य्यम् ] अङ्गीकृतकाठिन्यम् । 'ऊरीकृतमुररीकृतम्' इत्यमरः । "ऊर्य्यादिच्विडाचश्च" ( १।४।६१ पा० ) इति गतित्वात् "कुगतिप्रादयः" ( २।२।१८ पा० ) इति समासः । [ बधूनां हृदयं, मधुवारैः ] मद्यपर्य्यायैः । 'मधुवारा मधुक्रमाः' इत्य-

सन्तमेव चिरमप्रकृतत्वा-
दप्रकाशितमदिद्युतदङ्गे।
विभ्रमं मधुमदः प्रमदानां
धातुलीनमुपसर्ग इवार्थम्॥ १५॥
सावशेषपदमुक्तमुपेक्षा-
स्रस्तमाल्यवसनाभरणेषु।

---

मरः। [क्षालितं] धौतं, [नु, शमितं] निर्वापितं, [नु, द्रावितं] द्रवीकृतं [नु]; अन्यथा कथं तादृगप्रसन्नतादीप्ततकठिनतानां हठात् निवृत्तिरिति भावः। अत्र क्षालितत्वादीनामेकत्राविरोधात् असादृश्याच्च न संशयालङ्कारः। सति सादृश्ये विरुद्धानेककोटिगोचरत्वात् तस्य। किन्तु अप्रसन्नत्वादिनिरासनिमित्तकं क्षालितत्वाद्युत्प्रेक्षात्रयं, नुशब्दानुवृत्तेः। तच्च अप्रसन्नत्वाद्युद्देशिनां क्षालितत्वाद्यनूद्देशिभिः यथासङ्ख्येनान्वयमपेक्षत इति यथासंख्यालङ्कारेण सङ्कीर्य्यते॥ १४॥

सन्तमिति।—[मधुमदः प्रमदानाम्, अङ्गे] वपुषि, अन्यत्र,—"यस्मात् प्रत्ययविधिः—" (१।४।१३ पा०) इत्युक्तलक्षणे प्रकृत्याख्ये शब्दरूपे * [चिरं] सर्वदा, [सन्तमेव]; एकत्र,—स्वभावात्, अन्यत्र तु,—अनेकार्थत्वाद्धातूनामिति भावः। किञ्च, [अप्रकृतत्वात्] अप्रस्तुतत्वात्, अप्रसक्तत्वादिति भावः। [अप्रकाशितम्] अव्यञ्जितं, [विभ्रमं] विलासं, [धातुलीनं] धातौ भूवादिके लीनं गूढम्, [अर्थम्] अभिधेयम्, [उपसर्गः] प्रादिः, [इव, अदिद्युतत्] द्योतयति स्म। द्युतेः "णौ चङ्युपधाया ह्रस्वः" (७।४।१ पा०)। "द्युतिस्वाप्योः सम्प्रसारणम्" (७।४।६७ पा०) इति अभ्यासस्य सम्प्रसारणमिकारः। उपसर्गस्य धातुलीनार्थद्योतकत्वमादानसन्दानादावनुसन्धेयम्। उपमाऽलङ्कारः॥ १५॥

---

* धातुरूपे इति पाठो युक्तः, उपसर्गेण धात्वर्थस्यैव द्योतनात्।

गन्तुमुत्थितमकारणतः स्म
द्योतयन्ति मदविभ्रममासाम् ॥ १६ ॥
मद्यमन्दविगलत्त्रपमीष-
च्चक्षुरुन्मिषितपक्ष्म दधत्या ।
वीक्ष्यते स्म शनकैर्नववध्वा
कामिनोमुखमधोमुखयैव ॥ १७ ॥
या कथञ्चन सखीवचनेन
प्रागभिप्रियतमं प्रजगल्भे ।

---

सावशेषमिति।—[ सावशेषपदं ] सावशेषाण्यर्द्धोक्तानि पदानि यस्मिन् तत्, [ उक्तम् ] उक्तिर्वाक्यं, [ स्रस्तमाल्यवसनाभरणेषु ] स्रस्तेषु माल्यवसनाभरणेषु, [ उपेक्षा ] अनादरः, [ अकारणतः ] अकस्मादेव, [ गन्तुम्, उत्थितम् ] उत्थानञ्च, [ आसां ] स्त्रीणां, [ मदविभ्रमं ] मद-विकारं, [ द्योतयन्ति स्म ]। एतैरनुभावैरासां मदसञ्चारी ज्ञात इत्यर्थः। अत्रार्द्धोक्तादीनां खलेकपोतकन्यायेन मदद्योतने प्रवृत्तत्वात् कारणसमुद्‌योगाख्यो द्वितीयसमुच्चयः,—'खलेकपोतन्यायेन बहूनां कार्य्यसाधने। कारणानां समुद्‌योगः स द्वितीयः समुच्चयः॥' इति लक्ष-णात् ॥ १६ ॥

मद्येति।—[ मद्यमन्दविगलत्त्रपं ] मद्येन मद्यपानेन मन्दमल्पं विग-लन्ती त्रपा यस्य तत्, अत एव [ ईषत् ] उन्मिषितानि पक्ष्माणि लोमानि यस्य तत्, [ उन्मिषितपक्ष्म चक्षुः दधत्या, नववध्वा] नवोढ़या, [ कामिनः ] प्रियस्य, [मुखम्,अधोमुखयैव] नमितवदनयैव। "स्वाङ्गा-च्चोपसर्जनात्—" ( ४।१।५४ पा० ) इति विकल्पादनीकारः। [शनकैः] असम्भ्रमेण, [ वीक्ष्यते स्म ] तिर्य्यगीक्षितमित्यर्थः। अत्रापि मद-मानाभ्यां त्रपैव बलीयसीति मौग्ध्यातिशयोक्तिः,—'समुद्यद्यौवना मुग्धा लज्जापिहितमन्मथा' इत्युक्तेः ॥ १७ ॥

व्रीड़जाड्यमभजन्मधुपा सा
स्वां मदात् प्रकृतिमेति हि सर्वः ॥ १८ ॥

छादितः कथमपि त्रपयाऽन्त-
र्यः प्रियं प्रति चिराय रमण्याः।
वारुणीमदविशङ्कमथाऽऽवि-
श्चक्षुषोऽभवदसाविव रागः ॥ १९ ॥

आगतानगणितप्रतियातान्
वल्लभानभिसिसारयिषूणाम्।

---

येति।—[ या ] स्त्री, [ कथञ्चन ] कृच्छ्रेण, [ सखीवचनेन ] सखीप्रेरणया, [ प्राक् ] मदात् पूर्वम्, [ अभिप्रियतमं ] प्रियतमसमक्षम्। आभिमुख्येऽव्ययीभावः। [ प्रजगल्भे ] प्रगल्भते स्म। [ सा ] स्त्री ; मधु पिबतीति [ मधुपा ]। "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) इति कः। [ व्रीड़जाड्यं ] व्रीड़ेन जाड्यं मौग्ध्यम्, [ अभजत् ] 'विहायागन्तुकं धर्मं स्वभावमभजन्मदात्' इत्यर्थः। [ हि ] तथा हि, [ सर्वः ] जनः, [ मदात् ] हेतोः, [ स्वां ] स्वकीयां, [ प्रकृतिमेति ] स्वभावं गच्छति। स्वाभाविकधर्मप्रकाशनं मदधर्मः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १८ ॥

छादित इति।—[रमण्या यः प्रियं प्रति, रागः ] विषयाभिलाषः, [ चिराय, त्रपया ] व्रीड़या, [ अन्तश्छादितः ] संवृतः, [ असौ ] अयमेव रागः, [ अथ ] अस्मिन्नवसरे, [ वारुणीमदविशङ्कं ] मद्यमदेन निःशङ्कं, [ चक्षुषः ] नेत्रात्, [ आविरभवदिव ] आविर्भूतः किम् ? अत्र रतिरागमदरागयोरभिलाषपाटलिमरूपयोः श्लेषप्रतिभोत्थापिताभेदाध्यवसायमूलातिशयोक्तिमहिम्ना योऽन्तर्गतो रागः स एव चिरनिरुद्धः सम्प्रति मदोद्घाटितत्रपाकपाट्या चक्षुर्द्वारा वहिरगमन् इत्युत्प्रेक्ष्यते। आविर्भुवोः व्यवधानं कवेः स्वातन्त्र्यात् ॥ १९ ॥

प्रापि चेतसि सविप्रतिसारे
सुभ्रुवामवसरः सरकेण ॥ २० ॥
मा पुनस्तमभिसीसरमाऽऽग-
स्कारिणं मदविमोहितचित्ता ।
योषिदित्यभिललाष न हालां
दुस्त्यजः खलु सुखादपि मानः ॥ २१ ॥

---

आगतानिति ।—[ आगतान् ] स्वयं प्राप्तान्, [अगणितप्रतियातान्] तथाप्यगणिताश्च ते प्रतियाताश्चेति स्नातानुलिप्त इतिवत् पूर्वकाले समासः । तान् [ वल्लभानभिसिसारयिषूणां ] सम्प्रति चन्द्रोदये स्वयमेवाभिसारयितुमभिसर्तुमिच्छूनाम् । अभिसारयतेः स्वार्थण्यन्तात् सनन्तादुप्रत्ययः । [ सुभ्रुवां ] स्त्रीणां, [ चेतसि सविप्रतिसारे ] कष्टमस्माभिरकार्य्यं कृतमिति पश्चात्तापयुक्ते सति । 'पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि' इत्यमरः । [ सरकेण ] मधुना, मधुपानेन वा । 'सरकं शीधुपात्रे स्याच्छीधुपाने च शीधुनि' इति विश्वः । [ अवसरः, प्रापि ] प्राप्तः ; स्वयंगमनसौकर्य्याय मधुपानं चक्रुरित्यर्थः । अत्राभिसारणस्य पश्चात्तापकारणकस्य मदयोगात् सौकर्य्योक्तेः समाध्वलङ्कारः,—'समाधिः सुकरे कार्य्यं कारणान्तरयोगतः' इति काव्यप्रकाशे ॥ २० ॥

मा पुनरिति ।—[ मदविमोहितचित्ता ] मदेन विमोहितचित्ता भ्रमितचित्ता सती, अहमिति शेषः । [ आगस्कारिणम् ] अपराधकृतम् । "अतः कृकमि—" ( ८।३।४६ पा० ) इत्यादिना विसर्ज्जनीयस्य सत्वम् । [ तं, पुनः ] भूयः, [ माऽभिसीसरं ] नाभिसारयाणि । सरतेः स्वार्थे "णौ चङ्युपधाया ह्रस्वः" (७।४।१ पा०) "दीर्घो लघोः" ( ७।४। ९४ पा०) इत्यभ्यासस्य दीर्घः । [ इति ] इत्यालोच्येत्यर्थः । गम्यमानार्थत्वादप्रयोगः, अन्यथा पौनरुक्त्यमित्यालङ्कारिकाः । [ योषित् ] काचित्

ह्रीविमोहमहरद्दयितानाः-
मन्तिकं रतिसुखाय निनाय ।
सप्रसादमिव सेवितमाऽऽसीत्
सद्य एव फलदं मधु तासाम् ॥ २२ ॥
दत्तमात्तमदनं दयितेन
व्याप्तमातिशयिकेन रसेन ।
सस्वदे मुखसुरं प्रमदाभ्यो-
नाम रूढमपि च व्युदपादि ॥ २३ ॥

---

स्त्री, [हालां] सुराम् । 'सुरा हलिप्रिया हाला' इत्यमरः । [नाभिल-
लाष]। तथा हि, [सुखादपि मानो दुस्त्यजः खलु]। अतोऽल्प-
कारणादधिकार्थहानिरिति नाशङ्कनीयमित्यर्थान्तरन्यासः ॥ २१ ॥

ह्रीति ।—[सप्रसादं] मनःप्रसादपूर्वकं, ममेदं श्रेयस्करमिति भावना-
पूर्वकमित्यर्थः, अन्यथा फलोदय एव न स्यात् । 'दैवज्ञे भेषजे
गुरौ' * इति वचनादिति भावः। [सेवितम्] उपभुक्तमिति हेतोः
[मधु तासां सद्य एव फलदमासीत् इव]। कुतः? [ह्रीविमोहं] व्रीड़ा-
जाड्यम्, [अहरत्, रतिसुखाय] सुरतसुखाय, [दयितानामन्तिकं
निनाय]। अत्र ह्रीहरणान्तिकनयनवाक्याभ्यां फलदानवाक्यार्थ-
समर्थनादनेकवाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २२ ॥

दत्तमिति ।—[आत्तमदनम्] आहितमदनं यथा तथा, [दयितेन
दत्तम्]; अत एव [अतिशयिकेन] अतिशयप्रचुरेण । "विनयादिभ्य-
ष्ठक्" (५।४।३४ पा॰) इति ठक् । [रसेन] स्वादेन, [व्याप्तं] स्वादु-
तरमित्यर्थः । मुखस्य सुरा [मुखसुरं] गण्डूषमद्यम् । "विभाषा

---

* मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ । यादृशी भावना यस्य सिद्धिर्भवति
तादृशी ॥" इति सम्पूर्णः श्लोकः ।

लब्धसौरभगुणो मदिराणा-
मङ्गनाऽऽस्यचषकस्य च गन्धः ।
मोदितालिरितरेतरयोगा-
दन्यतामभजतातिशयं नु ॥ २४ ॥

मानभङ्गपटुना सुरतेच्छां
तन्वता प्रथयता दृशि रागम् ।

---

सेनासुराच्छायाशालानिशानाम्” ( २।४।२५ पा० ) इति नपुंसकत्वम् । प्रकृष्टो मदो यासां ताभ्यः [ प्रमदाभ्यः ] स्त्रीभ्यः । “रुच्यर्थानां प्रीयमाणः” ( १।४।३३ पा० ) इति सम्प्रदानसंज्ञा । [ सस्वदे ] रुरुचे, प्रीतिकरमभूदित्यर्थः । कर्त्तरि लिट् । अत एव तदेव तासां मदकरं चासीदित्याह, नामेति ।—[रूढम्] प्रागश्वकर्णादिवदव्युत्पन्नं, [नामापि] प्रमदेति नामधेयं, [ च, व्युदपादि ] व्युत्पन्नं जातम् । यथा प्रकृष्टमदयोगात् प्रमदेत्यन्वर्थनामत्वं भवेत्, तथा तास्तेनामाद्यन्नित्यर्थः । पद्यतेरण्यन्तात् कर्त्तरि लुङ्, “चिण् ते पदः” ( ३।१।६० पा० ) इति चिण्प्रत्यये चिणो लुक् । प्रमदाभिरिति पाठे,—सस्वदे स्वदयाञ्चक्रे इत्यर्थः । ‘स्वादनमशनं भक्षणमाहारो भोजनं स्वदनम्’ इति हलायुधे । स्वदिस्वाद्योरेकार्थत्वाभिधानात् कर्म्मणि लिट् । अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वात् काव्यलिङ्गम् ॥ २३ ॥

लब्धेति ।—[ लब्धसौरभगुणः ] मेलनात् प्राप्तसौरभोत्कर्षः, अत एव [ मोदितालिः ] आनन्दितभृङ्गः, [ मदिराणां ] मद्यानाम्, [अङ्गनाऽऽस्यचषकस्य ] अङ्गनाऽऽस्यमेव चषकं तस्य, [च गन्धः] गन्धगुणः, [इतरेतरयोगात्] इतरेतरस्य योगात् मिश्रणात्, [ अन्यताम् ] अपूर्वताम्, [ अतिशयं नु ] तत्रैवोत्कर्षं वा, [ अभजत ] । यक्षकर्द्दमादौ घृताक्तकुङ्कुमादौ चोभयथा दर्शनादयं संशय इति भावः, अत एव संशयालङ्कारः ॥ २४ ॥

लेभिरे सपदि भावयताऽन्त-
र्योषितः प्रणयिनेव मदेन ॥ २५ ॥
पानधौतनवयावकरागं
सुभ्रुवो निभृतचुम्बनदक्षाः।
प्रेयसामधररागरसेन
स्वं किलाधरमुपाऽऽलि ररञ्जुः ॥ २६ ॥
अर्पितं रसितवत्यपि नाम-
ग्राहमन्ययुवतेर्दयितेन।

---

मानेति।—[ मानभङ्गपटुना ] कोपशमनसमर्थेन, [ सुरतेच्छां तन्वता] मदनोद्दीपकेन, [ दृशि, रागम् ] आरुण्यं, प्रीतिञ्च, [ प्रथयता ] प्रकाशयता, [ अन्तः ] अन्तःकरणं, [भावयता] रञ्जयता, [मदेन प्रणयिनेव सपदि, योषितः ] स्त्रियः, [ लेभिरे ] प्राप्ताः। रागमिति श्लेषमूलातिशयोक्तिसङ्कीर्णेयमुपमा ॥ २५ ॥

पानेति।—[ उपाऽऽलि ] आल्याः समीपे। समीपार्थेऽव्ययीभावः। 'आलिः सखी वयस्या च' इत्यमरः। अत एव [ निभृतचुम्बनदक्षाः ] गूढ़चुम्बनचतुराः, [ सुभ्रुवः, पानधौतनवयावकरागं ] मधुपानक्षालितलाक्षारागं, [ स्वमधरं प्रेयसाम्,अधररागरसेन ] अधरेषु यो रागरसः ताम्बूलरागद्रवस्तेन, [ ररञ्जुः किल ]। अन्यगुणस्यान्यत्राधानमिह रञ्जेरर्थः। किलेत्यपरमार्थे, तेन पानधौतरागेषु स्वाधरेषु प्रेयोऽधररागसंक्रमणनाटितकेन सखीसमक्षमेव प्रियान् चुम्बनं कारयामासुरित्यर्थः। अत्रागन्तुना रञ्जनेन सहजचुम्बननिगूहनान्मीलनालङ्कारभेदः,—"मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्' इति लक्षणात् ॥ २६ ॥

अर्पितमिति।—[दयितेन, अन्ययुवतेः] सपत्न्याः, [नामग्राहं] नाम गृहीत्वा। "नाम्न्यादिशिग्रहोः" ( ३।४।५८ पा० ) इति णमुल्-

उज्झति स्म मदमप्यपिबन्ती
वीक्ष्य मद्यमितरा तु ममाद ॥ २७ ॥
अन्ययाऽन्यवनितागतचित्तं
चित्तनाथमभिशङ्कितवत्या ।
पीतभूरिसुरयाऽपि न मेदे
निर्वृतिर्हि मनसो मदहेतुः ॥ २८ ॥

प्रत्ययः । [ अर्पितं ] दत्तं, [ मद्यं, रसितवती ] आस्वादितवती, [अपि] । रसतेरास्वादनार्थात् क्तवतौ "उगितश्च" ( ४।१।६ पा० ) इति ङीप् । काचित् इति शेषः । [ मदमुज्झति स्म ] न ममादेत्यर्थः । [ इतरा तु ] सपत्नी तु, मद्यम् [अपिबन्त्यपि, वीक्ष्य] दृष्ट्वैव, [ममाद] मत्ता ; मनोनिर्वृतिरेव मदहेतुरिति भावः । अत्र पूर्वार्द्धे रसितवत्यपि न ममादेति विशेषोक्तिः । उत्तरार्द्धे तु अपिबन्त्यपि ममादेति विभावना ;— 'कारणेन विना कार्य्यस्योत्पत्तिः स्यात् विभावना । तत्सामग्र्यामनुत्पत्तिः विशेषोक्तिर्निगद्यते ॥' इति । तयोः सङ्करः * ॥ २७ ॥

अन्ययेति ।—[चित्तनाथम्] भर्त्तारम्, [अन्यवनितागतचित्तं] सपत्नीसङ्क्रान्तचेतसम्, [ अभिशङ्कितवत्या ] तस्मिन् अविश्वसत्या, [ अन्यया ] कयाचित् स्त्रिया, [ पीतभूरिसुरया अपि, न मेदे ] न मत्तम् । माद्यतेर्भावे लिट् । तथा हि, [ मनसो निर्वृतिर्मदहेतुः हि ] । सामान्येन विशेषसमर्थनादर्थान्तरन्यासः । एषा नवोढ़ा भीरुश्च, अन्यथा साशङ्कायाः पानाघटनादिति ॥ २८ ॥

* यत्र हि विभावनाविशेषोक्त्यलङ्कारौ विद्येते,, तत्र तयोः सन्देहसङ्करः वेदितव्यः ; विनाहेतुककार्य्योत्पत्तिरूपाया विभावनायाः, विद्यमानहेतुककार्य्योत्पत्त्यभावरूपायाः विशेषोक्तेः परस्परविरुद्धायाः तुल्यबलत्वेन एकस्य निर्णेतुमशक्यत्वात् ; क्वचित् प्राकरणिकार्थपर्य्यालोचनया तयोः भेदस्य व्यवस्थितत्वेऽपि प्रायश एव सन्देहात् सन्देहसङ्करः भवतीति सुधीभिः चिन्तनीयम् ; अत्र तु तयोः भिन्नाधिकरणगतत्वेन विरोधाभावात् केवलं सङ्कर इत्युक्तमिति ज्ञेयम् ।

कोपवत्यनुनयानगृहीत्वा
प्रागथो मधुमदाऽऽहितमोहा ।
कोपितं विरहखेदितचित्ता
कान्तमेव कलयन्त्यनुनिन्ये ॥ २९ ॥

कुर्वता मुकुलिताक्षियुगाणा-
मङ्गसादमवसादितवाचाम् ।
ईर्ष्ययेव हरता ह्रियमासां
तद्गुणः स्वयमकारि मदेन ॥ ३० ॥

गण्डभित्तिषु पुरा सदृशीषु
व्याञ्जि नाञ्चितदृशां प्रतिमेन्दुः ।

---

कोपवतीति ।—[ प्राक् ] प्रथमं, [ कोपवती ] सरोषा, अत एव [ अनुनयान् ] प्रियप्रार्थनानि, [ अगृहीत्वा ] अनादृत्य, [ अथो ] सम्प्रति, [ विरहखेदितचित्ता ] पश्चात्तापतप्ता, काचित् [ मधुमदाऽऽहित-मोहा ] मधुमदेनाऽऽहितमोहा कृतचित्तविभ्रमा सती, [ कान्तमेव, कोपितम् ] आत्मना रोषितं, [ कलयन्ती ] जानती, [ अनुनिन्ये ] सापराधाऽहं क्षमस्वेति प्रार्थितवती । मत्तेषु किं न सम्भावितमिति भावः । एषा कलहान्तरिता ॥ २९ ॥

कुर्वतेति ।—[ मुकुलिताक्षियुगाणाम्, अवसादितवाचां ] कुण्ठित-गिराम्, [ आसां ] स्त्रीणाम्, [ अङ्गसादम् ] अङ्गसादरूपशरीरनिश्चेष्टतां, [ कुर्वता ह्रियं हरता मदेन, ईर्ष्ययेव ] इत्युत्प्रेक्षा । तस्या ह्रियो गुणः [ तद्गुणः ] अक्षिनिमीलनवाक्सादाङ्गसादरूपः । [ स्वयम्, अकारि ] कृतः । ह्रीमदयोस्तुल्यानुभाविकत्वात् इति भावः ॥ ३० ॥

गण्डेति ।—[ प्रतिमेन्दुः ] प्रतिबिम्बचन्द्रः, [ सदृशीषु ] स्वसमान-

पानपाटलितकान्तिषु पश्चा-
ल्लोध्रचूर्णतिलकाऽऽकृतिराऽऽसीत् ॥ ३१ ॥

उद्धतैरिव परस्परसङ्गा-
दीरितान्युभयतः कुचकुम्भैः ।
योषितामतिमदेन जुघूर्णु-
र्विभ्रमातिशयपुंषि वपूंषि ॥ ३२ ॥

---

वर्णासु, [ अश्वितदृष्टां ] सुदृष्टां, [ गण्डभित्तिषु, पुरा ] सुरापानात् पूर्वं, [ न व्याञ्जि ] नाभेदि ; तदेकतापत्त्या तद्विविक्ततया न गृहीत इत्यर्थः, अत एव सामान्यालङ्कारः,—'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात्। विपूर्वादञ्जेः कर्म्मणि लुङ् "आड़जादीनाम्" ( ६।४।७२ पा० ) इत्याड़ागमः। [ पश्चात् ] पानानन्तरं, [ पानपाटलितकान्तिषु ] पानेन पानमदेन, पाटलिता पाटलीकृता कान्तिर्यासां तासु, गण्डभित्तिषु, [ लोध्रचूर्णतिलकाकृतिः ] लोध्रचूर्णस्य लोध्रपरागस्य, तिलकस्तिलकम् ;—'तमालपत्रतिलकचित्रकाणि विशेषकम्। द्वितीयञ्च तुरीयञ्च न स्त्रियाम्' इत्यमरः। तस्याकृतिरिवाकृतिः यस्य सः, [ आसीत् ] वैवर्ण्यात् विविक्त एवासीदित्यर्थः। तिलकाकृतिरिति निदर्शना * पूर्वोक्तसामान्यसंसृष्टा ॥ ३१ ॥

उद्धतैरिति।—[ उद्धतैः ] दृप्तैः, [ इव कुचकुम्भैः, परस्परसङ्गात् ] अन्योऽन्यसङ्घर्षात्, [उभयतः, ईरितानि] आकृष्टानि, तथा [विभ्रमातिशयपुंषि ] विभ्रमातिशयं विलासविशेषं पुष्णन्ति † तानि, "नपुंसकस्य झलचः" ( ७।१।७२ पा० ) इति नुमागमः। [ योषितां वपूंषि ]। पूर्ववन्नुमागमः। "सान्तमहतः संयोगस्य" ( ६।४।१० पा० ) इति

---

* निदर्शनेत्यत्र उपमेति पाठो युक्तः, बहुव्रीहौ इवादिलोपात् लुप्तोपमैव साधीयसी।

† इति क्विप्प्रत्ययः।

चारुता वपुरभूषयदासां
तामनूननवयौवनयोगः।
तं पुनर्मकरकेतनलक्ष्मी-
स्तां मदो दयितसङ्गमभूषः॥ ३३॥
चीवतामुपगतास्वनुवेलं
तासु रोषपरितोषवतीषु।

दीर्घः। [ अतिमदेन, जुघूर्णुः ] भ्रेमुः। इष्टसङ्घर्षस्तटस्थपीड़ाकरः, यथा वृषभकलहात् वत्सपादभङ्ग इति भावः॥ ३२॥

चारुतेति।—[ आसां ] योषितां, [ वपुः, चारुता ] * सौन्दर्य्यम्, [ अभूषयत्, तां ] चारुताम्, [ अनूननवयौवनयोगः ] सम्पूर्णयौवनसम्पत्तिः, अभूषयत्। [ तं पुनः ] नवयौवनयोगन्तु, [ मकरकेतनलक्ष्मीः ] मदनसम्पत्तिः, अभूषयत्। [ तां ] मकरकेतनलक्ष्मीं, [ दयितसङ्गमभूषः ] दयितसङ्गम एव भूषा यस्य सः, [मदः] अभूषयत्; तां मदः तच्च दयितसङ्गम इत्यर्थः; प्रक्रमानुसारात् तां मदस्तमपि वल्लभसङ्ग इति प्रयोक्तव्ये विशेषणत्वेन प्रयोगो महाकवीनामनुद्वेगात्; यथा भारवेः प्रयोगः,—'शुचि भूषयति' इत्यादौ ( २स० ३२ श्लोके ) 'स नयाङ्गः स च सिद्धिभूषणः' इति वक्तव्ये 'स नयापादितसिद्धिभूषणः' इति। † अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषकत्वादेकावली,—'यत्रोत्तरोत्तरेषां स्यात् पूर्वपूर्वं प्रति क्रमात्। विशेषकत्वकथनमसावेकावली मता॥' इति लक्षणात्॥ ३३॥

* कर्त्री।

* अत्र दयितसङ्गमस्य समासे गुणीभूततया विशेष्यतयोल्लेखविरहात् भग्नप्रक्रमताऽऽख्यदोषः, येन येन हि प्रकारेण प्राक् निर्दिष्टं, तेन तेनैव रूपेण विशेष्यात्मकत्वेन पश्चादनिर्द्देशात् क्रमस्य भङ्गः वेदितव्यः। एतादृशदोषाणां प्रायशः महाकविप्रयोगेषु दर्शनात् महाकवीनामनुद्वेगादित्युक्तं टीकाकृता।

अग्रहीन्नु सशरं धनुरुज्झा-
मास नूज्झितनिषङ्गमनङ्गः ॥ ३४ ॥

शङ्कयाऽन्ययुवतौ वनिताभिः
प्रत्यभेदि दयितः स्फुटमेव ।
न क्षमं भवति तत्त्वविचारे
मत्सरेण हतसंवृति चेतः ॥ ३५ ॥

---

क्षीवतामिति ।—[ क्षीवतां ] मत्तताम् । 'मत्ते शौण्डोत्कटक्षीवाः' इत्यमरः । "क्षीबृ मदे" इत्यस्माद्धातोः "अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः" ( ८।२।५५ पा० ) इति निष्ठान्तो निपातितः । [ उपगतासु ] प्राप्तासु ; अत एव [ अनुवेलं ] प्रतिक्षणं, [ रोषपरितोषवतीषु, तासु ] स्त्रीषु विषये, [ अनङ्गः सशरं धनुरग्रहीन्नु ? उज्झितनिषङ्गं ] त्यक्ततूणीरं यथा तथा, [ उज्झामास नु ] तत्याज किम् ? उज्झतेर्लिट् "इजादेश्च गुरुमतोऽनृच्छः" ( ३।१।३६ पा० ) इत्याम्प्रत्ययः । रुष्टासु धनुर्ग्रहणं, परितुष्टासु त्यागश्च रोषपरितोषाभ्याम् उत्प्रेक्ष्यते ; अन्यथा रोषानन्तरं परितोषः, परितोषानन्तरं रोषश्च न स्यादिति भावः । रोषपरितोषयोर्धनुर्ग्रहणाग्रहणाभ्यां यथासंख्येनान्वयात् यथासंख्यालङ्कारभेदः ; तेनोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ ३४ ॥

शङ्कयेति ।—[ वनिताभिः, अन्ययुवतौ ] सपत्न्यां, [शङ्कया] तत्सङ्गशङ्कामात्रेण, [ दयितः, स्फुटमेव ] निश्चितवदेव, [ प्रत्यभेदि ] सिद्धवत् कृत्वोद्घाटित इत्यर्थः । अनुचितोऽयमविमृश्य मिथ्याऽभियोग इति शङ्कां परिहरति, नेति ।—[ मत्सरेण ] वैरेण, [ हतसंवृति ] हता संवृतिर्गोप्यगोपनं यस्य तत्, [ चेतः, तत्त्वविचारे ] भूतार्थचिन्तायां, [ क्षमं ] सहिष्णु, [ न भवति ] ; मत्सरग्रस्तचेतसामेष स्वभाव इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३५ ॥

आननैर्विचकसे हृषिताभि-
र्वल्लभानभि तनूभिरभावि ।
आर्द्रतां हृदयमाप च रोषो
लोलति स्म वचनेषु बधूनाम् ॥ ३६ ॥
रूपमप्रतिविधानमनोज्ञं
प्रेम कार्य्यमनपेक्ष्य विकाशि ।
चाटु चाकृतकसम्भ्रममासां
कार्मणत्वमगमन् रमणेषु ॥ ३७ ॥

---

आननैरिति ।—[ वल्लभानभि ] वल्लभसमक्षमित्यर्थः । "अभिरभागे" ( १।४।९१ पा० ) इति लक्षणार्थकर्मप्रवचनीयत्वात् द्वितीया । [ वधूनामाननैः, विचकसे ] विकसितम् । भावे लिट् । [ तनूभिः ] अङ्गैः, [ हृषिताभिः ] पुलकिताभिः । "हृषेर्लोमसु" ( ७।२।२९ पा० ) इतीडागमः । [ अभावि ] भूतम् । भावे लुङ् । [ हृदयञ्च, आर्द्रतामाप ] काठिन्यं जहौ इत्यर्थः । [ वचनेषु रोषः, लोलति ] चलति [ स्म ], वचनगतो रोषो वक्रताऽपि निवृत्तेत्यर्थः । अत्र बधूष्वाननविकासाद्यनेकक्रियायौगपद्यात् समुच्चयालङ्कारः,—'गुणक्रियायौगपद्यं समुच्चयः' इति लक्षणात् ॥ ३६ ॥

रूपमिति ।—[अप्रतिविधानमनोज्ञम्] अप्रतिविधानम् अप्रतियत्नमेव मनोज्ञं, स्वभावसुन्दरमित्यर्थः, [ रूपम् ] आकृतिः, [ कार्य्यं ] प्रयोजनम्, [ अनपेक्ष्य, विकाशि ] वर्द्धमानम्, अनोपाधिकमित्यर्थः । [ प्रेम, अकृतकसम्भ्रमम् ] अकृत्रिमसंरम्भं, [ चाटु च ] प्रियवचनञ्च, [ आसां ] स्त्रीणां, [ रमणेषु ] विषये, [कार्मणत्वं] वशीकरणकर्म्मत्वम् । 'वशक्रिया संवद(न)नं मूलकर्म तु कार्मणम्' इत्यमरः । "तद्युक्तात् कर्मणोऽण्" (५।४।३६ पा०) इत्यण् । [अगमन्] प्राप्तानि । गमेर्लुङ्, प्लुरङादेशः । अत्र

लीलयैव सुतनोस्तुलयित्वा
गौरवाढ्यमपि लावणिकेन ।
मानवञ्चनविदा वदनेन
क्रीतमेव हृदयं दयितस्य ॥ ३८ ॥

स्पर्शभाजि विशदच्छविचारौ
कल्पिते मृगदृशां सुरताय ।
सन्नतिं दधति पेतुरजस्रं
दृष्टयः प्रियतमे शयने च ॥ ३९ ॥

---

रूपादिष्वारोप्यमाणस्य कार्मणस्य प्रकृतोपयोगात् परिणामालङ्कारः ॥ ३७ ॥

लीलयेति ।—लावण्यं कान्तिविशेषोऽस्यास्तीति लावणिकं, लावण्यवत् । "अत इनिठनौ" (५।२।११५ पा०) इति ठन्प्रत्यये "ठस्येकः" (७।३।५० पा०) "यस्येति च" (६।४।१४८ पा०) इत्यल्लोपे "हलस्तद्धितस्य" (६।४।१५० पा०) इति यकारलोपः । अन्यत्र तु,—लवणं पण्यमस्यास्तीति लावणिको लवणव्यवहारी । लवणाट्ठञ्प्रत्ययः । तेन [लावणिकेन, मानवञ्चनविदा] अहङ्कारहरणदक्षेण । अन्यत्र,—परिमाणप्रतारणपटुना । [सुतनोः] स्त्रियाः, [वदनेन] कर्त्रा, [गौरवाढ्यं] गाम्भीर्य्यसम्पन्नम्, [अपि] । अन्यत्र,—गुरुत्वयुक्तमपि, [दयितस्य हृदयं, लीलया] विलासेन, [एव, तुलयित्वा] । अन्यत्र,—अनायासेनैव उन्माय, गुर्वपि लघुतया मत्वेत्यर्थः । [क्रीतं] वशीकृतम्, [एव] । अन्यत्र,—दानेन स्वीकृतमेव । अत्र विशेषणमहिम्नैव वदने लावणिकत्वस्य, हृदये पण्यत्वस्य च प्रतीतिः, समासोक्तिरलङ्कारः ; हृदयस्य प्रतीयमानपण्याभेदेन क्रीतत्वोक्तेरलौकिकहृदयावर्जने लौकिकक्रयव्यवहारसमारोपः ॥ ३८ ॥

एवं मदानुभावं वर्णयित्वा सम्प्रति सुरतकेलिवर्णनं प्रस्तौति ; तत्र

यूनि रागतरलैरपि तिर्य्यक्-
पातिभिः श्रुतिगुणेन युतस्य ।
दीर्घदर्शिभिरकारि वधूनां
लङ्घनं न नयनैः श्रवणस्य ॥ ४० ॥

---

सुरतं द्विविधं, वाह्यमाभ्यन्तरञ्चेति ; वाह्यञ्च प्रेक्षणभाषणाऽऽश्लेषण-चुम्बनाद्यनेकभेदभिन्नम् । तत्र दृष्टिविशेषं तावदाह, स्पर्शेति ।—[ स्पर्शभाजि ] सुखस्पर्शे, [ विशदच्छविचारौ ] विशदा विमला शुभ्रा च या छविः कान्तिस्तया चारौ रम्ये, [ सुरताय कल्पिते ] रतिसुखदानाय सृष्टे, विहारयोग्यतया सज्जीकृते च, [ सन्नतिम् ] आनुकूल्यं, सर्वतः साम्यञ्च, [दधति] दधाने, [प्रियतमे शयने च, मृगदृशां दृष्टयः, अजस्रम्] अविच्छिन्नं, [ पेतुः ] पतिताः । युगपदुभयावलोकनादभिलाषं व्यञ्जयामासुरित्यर्थः । अत्र प्रियतमशयनयोः प्रकृतयोरेव धर्मसाम्यादौपम्य-प्रतीतेः केवलप्रकृतगोचरा तुल्ययोगिता ॥ ३९ ॥

यूनीति ।—[ रागतरलैरपि ] रागेण तरलैश्चपलैरपि, दर्शनोत्सुकैरपीत्यर्थः । [ यूनि ] प्रिये, [ तिर्य्यक्पातिभिः ] त्रपया साचि विप्रसारिभिः, [ दीर्घदर्शिभिः ] आयतान्तैः आलोकनव्यापारपरैरित्यर्थः । अन्यत्र,—रागद्वेषचपलैः, अत एव तिर्य्यक्पातिभिः कुटिलवृत्तिभिरपि, दीर्घदर्शिभिः आगामिकार्य्यज्ञैरित्यर्थः । [ वधूनां नयनैः, श्रुतिगुणेन ] शब्दग्रहणपाटवेन, [ युतस्य ] । श्रूयतेऽनेनेति श्रवणं श्रोत्रं तस्य, [ श्रवणस्य, लङ्घनम् ] अतिक्रमः, [नाकारि] न चक्रे ; कर्णान्ते विश्रान्तमित्यर्थः । अन्यत्र तु,—श्रुतिः श्रवणम्, अभ्यास इति यावत् ; सैव गुणस्तेन युतस्य, श्रूयत इति श्रवणं शास्त्रं तस्य वा, लङ्घनं नाकारि ; रागद्वेषग्रस्तोऽपि शास्त्रज्ञः कदाचिच्छास्त्रातिक्रमाद् बिभेतीति भावः । अयञ्च व्यवहारो नयनेषु रागतरलैरित्यादिश्लिष्टविशेषणमहिम्ना गम्यत इति समासोक्तिभेदः, इयञ्च रागदृष्टिरौत्सुक्यानुभावः ॥ ४० ॥

सङ्कथेच्छुरभिधातुमनीशा
सम्मुखी न च बभूव दिदृक्षुः ।
स्पर्शनेन दयितस्य नतभ्रू-
रङ्गसङ्गचपलाऽपि चकम्पे ॥ ४१ ॥

उत्तरीयविनयात् त्रपमाणा
रुन्धती किल तदीक्षणमार्गम् ।
आवरिष्ट विकटेन विवोढु-
र्वक्षसैव कुचमण्डलमन्या ॥ ४२ ॥

---

सङ्कथेति ।—[ नतभ्रूः ] स्त्री, [ सङ्कथेच्छुः ] सङ्कथायां सम्भाषणे, इच्छुः इच्छावत्यपि । "बिन्दुरिच्छुः" ( ३।२।१६९ पा० ) इत्युप्रत्ययान्तो निपातः । [ अभिधातुं ] सम्भाषयितुम्, [ अनीशा ] अक्षमा, बभूव, [ दिदृक्षुः च ] द्रष्टुमिच्छुरपि । अप्यर्थः च-शब्दः । दृशेः सन्नन्ता-दुप्रत्ययः । [ सम्मुखी ] अभिमुखी, [ न बभूव । अङ्गसङ्गचपला ] गात्रस्पर्शचपला, [ अपि, दयितस्य स्पर्शनेन, चकम्पे ] कम्पितवती । एते कम्पादयो लज्जासाध्वसानुभावाः । लज्जाविजितमन्मथेयं मुग्धा ॥ ४१ ॥

अथाऽऽलिङ्गनं वर्णयति, उत्तरीयेति ।—[ अन्या ] स्त्री, [ उत्तरीय-विनयात् ] कुचांशुकाऽऽकर्षणात्, [ त्रपमाणा, तदीक्षणमार्गं ] तस्य वोढुः दृष्टिपथं, [रुन्धती किल] आवृण्वतीव, न तु वस्तुत इति किलार्थः । [ विकटेन ] विशालेन । 'विशङ्कटं विशालं स्यात् करालं विकटं तथा' इति वैजयन्ती । "सम्प्रोदश्च कटच्" ( ५।२।२९ पा० ) इति चकाराद् वेः कटच्प्रत्ययः । [ विवोढुः ] परिणेतुः,[ वक्षसैव कुचमण्ड-लम्, आवरिष्ट ] आवृतवती, कुचावरणव्याजेनालिङ्गितवती इत्यर्थः ।

अंशुकं हृतवता तनुबाहु-
स्वस्तिकाऽऽपिहितमुग्धकुचाग्रा ।
भिन्नशङ्खवलयं परिणीता
पर्य्यरम्भि रभसादचिरोढ़ा ॥ ४३ ॥

सञ्जहार सहसा परिरब्ध-
प्रेयसीषु विरहय्य विरोधम् ।
संहितं रतिपतिः स्मितभिन्न-
क्रोधमाशु तरुणेषु महेषुम् ॥ ४४ ॥

---

वृञो लुङि तङ् इडागमः। अत्र कुचाऽऽवरणेन आलिङ्गनेच्छानिगूहना-न्मीलनभेदः। एषा लज्जामन्मथमध्यस्था मध्यमा ॥ ४२ ॥

अंशुकमिति।—[ अंशुकम् ] उत्तरीयं, [ हृतवता, परिणीता ] भर्त्रा, [ तनुबाहुस्वस्तिकाऽऽपिहितमुग्धकुचाग्रा ] तन्वोः कृशयोः, बाह्वोः, स्वस्तिको बन्धविशेषः, तेनाऽऽपिहिते आच्छादिते, मुग्धे सुन्दरे, कुचाग्रे यस्याः, सा तथोक्ता, [अचिरोढ़ा] नवोढ़ा, [ भिन्नशङ्खवलयं ] भिन्नानि शङ्खस्य वलयानि यस्मिन् कर्मणि तद्‌यथा तथा, [ रभसात् ] वेगात्, [ पर्य्यरम्भि ] गाढ़माश्लिष्टेत्यर्थः। रभेर्ण्यन्तात् कर्मणि लुङ्। "रभेरशब्लिटोः" (७।१।६३ पा०) इति नुमागमः। एषा तिरोहितमुग्धा ॥ ४३ ॥

सञ्जहारेति।—[ तरुणेषु ] युवसु, [ विरोधं ] प्रणयकलहं, [ विरहय्य ] विहाय। रहयतेः स्वार्थण्यन्तात् क्त्वा, तस्य ल्यप् "ल्यपि लघुपूर्वात्" (६।४।५६ पा०) इत्ययादेशः। [ सहसा ], परिरब्धाः प्रेयस्यो यैः तेषु [ परिरब्धप्रेयसीषु ] आश्लिष्टवधूकेषु सत्सु। "ईयसश्च" (५।४।१५६ पा०) इति कपोऽभावः। ईयसो बहुव्रीहौ प्रतिषेधो

स्रंसमानमुपयन्तरि वध्वाः
श्लिष्टवत्युपसपत्नि रसेन ।
आत्मनैव रुरुधे कृतिनेव
स्वेदसङ्गि वसनं जघनेन ॥ ४५ ॥
पीडिते पुर उरःप्रतिपेषं
भर्त्तरि स्तनयुगेन युवत्याः ।

---

वक्तव्यः * इत्युपसर्जनस्य ह्रस्वनिषेधः । [ रतिपतिः ] कामः, [ संहितं ] प्रागारोपितं, [ महेषुं ] महान्तं शरं, [ स्मितभिन्नक्रोधं ] स्वयत्नसाफल्यात् स्मितेनोज्झितपूर्वरोषश्च यथा तथा, [ आशु सञ्जहार ]। सिद्धेऽर्थे साधनानवकाशादित्यर्थः । परिरम्भान्तो यूनां विरह इति भावः ॥ ४४ ॥

स्रंसमानमिति ।—[ उपयन्तरि ] भर्त्तरि, [ रसेन ] रागान्धतयेत्यर्थः । [ उपसपत्नि ] सपत्नीसमीपे । समीपार्थेऽव्ययीभावे नपुंसकह्रस्वत्वम् । [ श्लिष्टवति ] आश्लिष्टवति सति, [ स्रंसमानं ] स्पर्शसुखपारवश्याद् भ्रश्यमानं, तथाऽपि [ स्वेदसङ्गि ] स्वेदेन सात्त्विकेन सक्तं, [वध्वा वसनं, कृतिना इव] कुशलेन इव, स्वस्वेदं लाघवमिति जानतेव इत्यर्थः । [ जघनेन ] कर्त्रा, [ आत्मनैव ] स्वयमेव, [ रुरुधे ] रुद्धम् । सा तु न वेत्तीति भावः । स्वेदहेतुकस्य वसनरोधस्य स्वलाघवज्ञानहेतुकत्वमुत्प्रेक्ष्यते ॥ ४५ ॥

पीड़ित इति ।—[युवत्याः] युवतेः, [स्तनयुगेन, भर्त्तरि, पुरः] अग्रे, समक्षमेव, प्रतिनार्या इत्यर्थः ; उरः प्रतिपिष्य [उरःप्रतिपेषम्] । "परिक्लिश्यमाने च" ( ३।४।५५ पा० ) इति णमुल् । "क्लमेजन्तः" (१।१।३९

---

* 'ईयसश्च'' ( ५।४।१५६ पा० ) इति सूत्रे, गोस्त्रियोरिति ह्रस्वत्वे प्राप्ते, "ईयसो बहुव्रीहेर्नेति वाच्यम्" इति वार्त्तिकं वृत्तिकृता प्रदर्शितम् ।

स्पष्टमेव दलतः प्रतिनार्या-
स्तन्मयत्वमभवद्धृदयस्य ॥ ४६ ॥
दीपितस्मरमुरस्युपपीडं
वल्लभे घनमभिष्वजमाने ।
वक्रतां न ययतुः कुचकुम्भौ
सुभ्रुवः कठिनताऽतिशयेन ॥ ४७ ॥
सम्प्रवेष्टुमिव योषित ईषुः
श्लिष्यतां हृदयमिष्टतमानाम् ।
आत्मनः सततमेव तदन्त-
र्वर्त्तिनो न खलु नूनमजानन् ॥ ४८ ॥

---

पा० ) इत्यव्ययसंज्ञा। वक्षः प्रतिपीड्येत्यर्थः। [ पीड़िते ] सति, [ दलतः ] ईर्ष्यया दीर्य्यमाणस्य, [ प्रतिनार्य्याः ] सपत्न्याः, [ हृदयस्य, तन्मयत्वं ] भर्त्तृतादात्म्यं, [स्पष्टमभवदेव] । अन्यथा कथमन्यपीड़नादन्यदलनमिति भावः ; अत एवेयमसङ्गत्यलङ्कारोपजीविनी तन्मयत्वोत्प्रेक्षेति सङ्करः,—'कार्य्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः' ॥ ४६ ॥

दीपितेति ।—[ वल्लभे, दीपितस्मरम् ] उद्दीपितकामं यथा तथा, [ उरस्युपपीडम् ] उरस्युपपीड्य। "सप्तम्यां चोपपीडरुधकर्षः—" ( ३।४।४९ पा० ) इति णमुल्। "तत्पुरुषे कृति बहुलम्" ( ६।३।१४ पा० ) इत्यलुक्। [ घनम् ] गाढ़म्, [ अभिष्वजमाने ] परिरम्भमाणे सति। 'परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्' इत्यमरः। [ सुभ्रुवः कुचकुम्भौ कठिनताऽतिशयेन, वक्रतां ] परिमण्डलतां, [न ययतुः] न प्राप्तौ। अत्र गाढ़ाऽऽलिङ्गनात् कुचकुम्भयोर्वक्रत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, कुचकुम्भावित्युपमया संसृज्यते ॥ ४७ ॥

सम्प्रवेष्टुमिति ।—[योषितः, श्लिष्यताम्] आलिङ्गताम्, [ इष्टतमानां

**स्नेहनिर्भरमधत्त बधूना-**
**मार्द्रतां वपुरसंशयमन्तः ।**
**यूनि गाढपरिरम्भिणि वस्त्र-**
**क्नोपमम्बु वव्रुषे यदनेन ॥ ४९ ॥**
**न स्म माति वपुषः प्रमदाना-**
**मन्तरिष्टतमसङ्गमजन्मा ।**

---

हृदयं सम्प्रवेष्टुम्, ईषुः] इच्छन्ति स्म, [इव]; इति गाढाऽऽलिङ्गन-निमित्ता क्रियास्वरूपोत्प्रेक्षा गुणस्वरूपोत्प्रेक्षा वा विवक्षाभेदात्। अत एव [आत्मनः] स्वान्, [सततमेव खलु, तदन्तर्वर्त्तिनः] तेषामिष्टतमानाम् अन्तर्हृदयेष्वेव स्थितान्, [नाजानन्नूनम्]; अन्यथा कथं पुनः प्रवेशे-च्छेति भावः। इयमज्ञानोत्प्रेक्षा पूर्वोत्प्रेक्षासापेक्षेति सजातीय-सङ्करः ॥ ४८ ॥

स्नेहेति।—[स्नेहनिर्भरं] प्रेमरसपूर्णं, तैलादिकद्रवद्रव्यपूर्णञ्च। 'स्नेहोऽस्त्री द्रवहार्दयोः' इति वैजयन्ती। अत एव [बधूनां वपुरन्तः, आर्द्रतां] द्रवत्वम्, [अधत्त]। स्नेहद्रव्यसम्पूर्णमन्तरार्द्रं भवतीति भावः। [असंशयं] संशयस्याभावः। अर्थाभावेऽव्ययीभावः। * कुतः? [यत्] यस्मात् [यूनि] पुंसि, [गाढपरिरम्भिणि] गाढं परिरम्भत इति परिरम्भिणि, गाढाश्लेषिणि सति, [अनेन] वपुषा, कर्त्रा, वस्त्रं क्नोपयित्वा परिषिच्य, [वस्त्रक्नोपम्]। क्नूयीधातोर्ण्यन्तात् "अर्त्तिह्री—" (७।३।३६ पा०) इत्यादिना पुगागमे, "चेले क्नोपेः" (३।४।३३ पा०) इति णमुल्। [अम्बु वव्रुषे]। वृषेः कर्म्मणि लिट्। अन्तरार्द्रस्य निष्पीडनाद्बहिरम्बुस्रावसम्भवात् तन्निमित्तेयमन्तरार्द्रत्वोत्प्रेक्षा। प्रिया-ऽङ्गसङ्गात् ताः स्विन्ना इति सात्त्विकोदयोक्तिः ॥ ४९ ॥

न स्मेति।—[प्रमदानाम्], इष्टतमसङ्गमेन जन्म यस्य सः [इष्टतम-

---

* "अव्ययं—" (२।१।६ पा०) इति सूत्रम्।

यद्बहुर्बहिरवाप्य विकाशं

व्यानशे तनुरुहाण्यपि हर्षः ॥ ५० ॥

यत् प्रियव्यतिकराद् वनिताना-

मङ्गजेन पुलकेन बभूवे ।

प्रापि तेन भृशमुच्छ्वसिताभि-

र्नीविभिः सपदि बन्धनमोक्षः ॥ ५१ ॥

---

सङ्गमजन्मा ]। जन्माद्युत्तरपदत्वाद्व्यधिकरणबहुव्रीहिरिति वामनः। * [ बहुः ] विपुलः। 'विपुलानेकयोर्बहुः' इति वैजयन्ती। [ हर्षो वपुषः, अन्तर्न माति स्म] अत्युद्रेकात् न अन्तः संमित इत्युत्प्रेक्षा। कुतः ? [ यत् ] यस्मात्, [ बहिः ] वपुषो बहिः, [ विकाशं ] वृद्धिम्, [ अवाप्य, तनुरुहाणि अपि ] रोमाण्यपि, [ व्यानशे ] व्याप। कर्त्तरि लिट्। "अश्नोतेश्च" ( ७।४।७२ पा० ) इति नुड़ागमः। अत्र बहिर्विकाशन-निमित्तकान्तरमानोत्प्रेक्षा, आनन्दरोमाञ्चयोः श्लेषमूलाभेदाध्यवसाया-तिशयोक्त्यनुप्राणितेति सङ्करः ॥ ५० ॥

यदिति।—[ वनितानां ] स्त्रीणां, [ प्रियव्यतिकरात् ] प्रियस्य भर्त्तुर्व्यतिकरात् सम्पर्कात्, सङ्गमाच्च, [अङ्गजेन] अङ्गव्यापिना, पुलेण च, [ पुलकेन, बभूवे ] भूतम्, इति [ यत् ]। भावे लिट्। [ तेन ] पुलकोदयेन, पुलोदयेन च, [ भृशमुच्छ्वसिताभिः ] उच्छिनाभिर्मोक्षा-ऽऽशया आश्वसिताभिश्च, [ नीविभिः ] लक्षणया कटिवस्त्रैः, अन्यथा बन्धनशब्देन पौनरुक्त्यात्। [ सपदि, बन्धनमोक्षः ] ग्रन्थिभेदः, निगड़मोचनञ्च, [ प्रापि ] प्राप्तः। कर्मणि लुङ्। अभ्युदयेषु राजानो बद्धान् मोचयन्तीति भावः। अत्र प्रकृतपुलकनीविगताङ्गजत्वोच्छ्वसि-तत्वादिविशेषणसाम्यात् बन्धनमोक्षणसम्बन्धाच्च अप्रकृतपुलकारागत-प्रतीतिः समासोक्तिरलङ्कारः ॥ ५१ ॥

---

* "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः" (५मधि० १अ० १९सू०)।

क्षीभरादवनतं परिरम्भे
रागवानवटुजेष्ववकृष्य ।
अर्पितोष्ठदलमाऽऽननपद्मं
योषितो मुकुलिताक्षमधासीत् ॥ ५२ ॥

पल्लवोपमितिसाम्यसपक्षं
दष्टवत्यधरबिम्बमभीष्टे ।
पर्य्यकूजि सरुजेव तरुण्या-
स्तारलोलवलयेन करेण ॥ ५३ ॥

---

अथ चुम्बनक्रीड़ां वर्णयति, क्षीति ।—[ परिरम्भे ] आलिङ्गने, [ क्षीभरात् ] क्षीरेव भरस्तस्मात्, [ अवनतं ], भाराक्रान्तं नमतीति भावः । [ अर्पितोष्ठदलम् ] अर्पितं स्वमुखे निहितम्, ओष्ठ एव दलं पत्रं यस्य तत्, [ योषितः, आननपद्मम् ] आननमेव पद्मं, [रागवान्] रागी, [ अवटुजेषु ] चरमशिरोरुहेषु । 'अवटुर्घाटा कृकाटिका' इत्यमरः । [ अवकृष्य ] अवटुजाऽऽकर्षणेनोन्नमय्येत्यर्थः । [ मुकुलिताक्षं ] निमीलितनेत्रं यथा तथा । "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" ( ५।४।११३ पा० ) इति षच्प्रत्ययः । [ अधासीत् ] पपौ । धेटो लुङ्, "आदेचः—" (६।१।४५ पा०) इत्यात्त्वं, "विभाषा घ्राधेट्—" (२।४।७८ पा० ) इति सिचो वैकल्पिके लुगभावे "अस्तिसिचोऽपृक्ते" ( ३।७।९६ पा० ) इतीड़ागमः । अत्राननोष्ठस्य पद्मदलत्वरूपणात् तत्रानुरागिणो मधुपत्वञ्च गम्यते इत्येकदेशविवर्त्ति रूपकम् ॥ ५२ ॥

पल्लवेति ।—[ पल्लवोपमितिसाम्यसपक्षं] पल्लवेन उपमित्या सादृश्येन, यत् साम्यं, तेन सपक्षम् उभयोरपि पल्लवैकोपमानत्वसाधर्म्यात् सुहृद्भूतम् ; अधरो बिम्बमिव तत् [ अधरबिम्बम्, अभीष्टे ] प्रियतमे, [ दष्टवति ] सति । सह रुजा सरुक् । "तेन सह—" (२।२।२८ पा०) इति बहुव्रीहिः ।

केनचित् मधुरमुल्वणरागं
बाष्पतप्तमधिकं विरहेषु ।
ओष्ठपल्लवमपास्य मुहूर्त्तं
सुभ्रुवः सरसमक्षि चुचुम्बे ॥ ५४ ॥

रेचितं परिजनेन महीयः
केवलाभिरतदम्पति धाम ।
साम्यमाप कमलासखविष्वक्-
सेनसेवितयुगान्तपयोधेः ॥ ५५ ॥

---

"सहस्य सः" (६।३।७८ पा०) इति सः। तेन [सरुजेव] सव्यथे-नेव। 'स्त्री रुग् रुजा चोपतापः' इत्यमरः। [तारलोलवलयेन] ताराण्युच्चैः क्रोशन्ति, कुतः? लोलानि चलानि, वलयानि कङ्कणानि यस्य तेन, [तरुण्याः करेण, पर्यकूजि] परिकूजितम्। भावे लुङ्। सुहृद्दुःखाद् दुःखायन्ते सुहृद इति भावः। अत्र कङ्कणद्वारकस्य कर-कूजनस्य विधूननहेतुकस्य सरुजेवेति रुग्धेतुकत्वमुत्प्रेक्ष्यते ॥ ५३ ॥

केनचिदिति।—[केनचित्] रागिणा, [मधुरं] रसवन्तम्, [उल्वण-रागम्] अतिरक्तं, तथाऽपि [विरहेष्वधिकं, बाष्पतप्तं] बाष्पेण विर-होष्मणा, तप्तं, [सुभ्रुव ओष्ठपल्लवमपास्य, सरसं] सान्द्रशीतम्, [अक्षि मुहूर्त्तं, चुचुम्बे] चुम्बितम्। अत्र तप्तत्वरसवत्त्वयोर्विशेषणगत्या अधर-त्यागाक्षिचुम्बनहेतुकं काव्यलिङ्गद्वयं सापेक्षत्वात् सङ्कीर्य्यते ॥ ५४ ॥

एवं बाह्यसुरतमुक्त्वाऽभ्यन्तरसुरतवर्णनं प्रस्तौति, रेचितमित्यादि।—[परिजनेन, रेचितं] रिक्तीकृतम्; अत एव [केवलाभिरतदम्पति] केवलावेकाकिनावभिरतौ दम्पती जायापती यस्मिन् तत्। 'दम्पती जम्पती जायापती भार्य्यापती च तौ' इत्यमरः। राजदन्ताऽऽदि-जायाशब्दस्य जम्भावो दम्भावश्च विकल्पान्निपातितः। [महीयः

आवृतान्यपि निरन्तरमुच्चै-
र्योषितामुरसिजद्वितयेन ।
रागिणामित इतो विमृशद्भिः
पाणिभिर्जगृहिरे हृदयानि ॥ ५६ ॥

कामिनामसकलानि विभुग्नैः
स्वेदवारिमृदुभिः करजाग्रैः ।
अक्रियन्त कठिनेषु कथञ्चित्
कामिनीकुचतटेषु पदानि ॥ ५७ ॥

---

मह्त्तरं, [धाम] केलिगृहं, [कमलासखविष्वक्सेनसेवितयुगान्तपयोधेः] कमलासखेन लक्ष्मीभर्त्रा, विष्वक्सेनेन जनार्दनेन विष्णुना, सेवितस्याधिष्ठितस्य, युगान्तपयोधेः, [साम्यमाप] इत्युपमाऽलङ्कारः। युगान्तविशेषणं विविक्तताद्योतनार्थम्। एतेनेच्छाविहारतोक्ता ॥ ५५ ॥

अथ विस्रम्भविहारानेवाह, आवृतानीति।—[उच्चैः] उन्नतेन, [उरसिजद्वितयेन, निरन्तरं] नीरन्ध्रम्, [आवृतानि अपि] संवृतान्यपि, [योषितां, हृदयानि] वक्षांसि, चेतांसि च, [इत इतो विमृशद्भिः] इतस्ततः परामृशद्भिः, [रागिणां पाणिभिः, जगृहिरे] गृहीतानि। निगूढं वस्तु हस्तपरामर्शाल्लभ्यत इति एकत्र भावः। अन्यत्र,—कृच्छ्रलब्धः प्रियकरस्पर्शस्तासां हृदयग्राह्योऽभूदिति भावः। नैरन्तर्येण प्रतिबध्नतोरपि कुचयोः कथञ्चिदन्तरं सम्पाद्य हृदयानि स्पृष्टान्येवेति वाक्यार्थः। अत्र द्वितयानामपि हृदयानां प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ ५६ ॥

कामिनामिति।—[स्वेदवारिमृदुभिः] स्वेदवारिणा सात्त्विकेन अङ्गुलीस्वेदेन, मृदुभिः कोमलतां गतैः, अत एव [विभुग्नैः] विनम्रैः, [कामिनां, करजाग्रैः] नखाग्रैः, [कठिनेषु कामिनीकुचतटेषु, असक-

सोष्मणः स्तनशिलाशिखराग्रा-
दात्तघर्मसलिलैस्तरुणानाम् ।
उच्छ्वसत् कमलचारुषु हस्तै-
र्निम्ननाभिसरसीषु निपेते ॥ ५८ ॥

आम्रशद्भिरभितो वलिवीची-
र्लोलमानविततांगुलिहस्तैः ।
सुभ्रुवामनुभवात् प्रतिपेदे
मुष्टिमेयमिति मध्यमभीष्टैः ॥ ५९ ॥

---

लानि] असमग्राणि, [पदानि] चतानि, [कथञ्चित्, अक्रियन्त] कृतानि । कठिनेषु मृदूनां पदलाभो दुःसम्पाद्य इति भावः । नखक्रिया प्रवृत्तेत्यर्थः । अत्र कुचानामीदृक्काठिन्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ५७ ॥

सोष्मण इति ।—[सोष्मणः] यौवनोष्मयुक्तात्, [ स्तनशिलाशिखराग्रात् ] स्तनाविव शिलाशिखरे तयोरग्रादुपरिभागात्, [ आत्तघर्मसलिलैः] उष्णादेशविहारात् प्राप्तस्वेदैः, [तरुणानां हस्तैः] ; उच्छ्वसत्कमलवत् विकचकमलैश्च चारुषु [ उच्छ्वसत्कमलचारुषु ], निम्ननाभिष्वेव सरसीषु [निम्ननाभिसरसीषु, निपेते ] निपतितम् ; ऊष्मस्विन्नानां कुतश्चित् उन्नतात् पयसि पातो युक्त इति भावः । प्रथमं कुचौ स्पृष्ट्वा ततो नाभिदेशमस्पृशन्नित्यर्थः । अत्र कुचयोः शिलाशिखरत्वेन नाभीनां सरसीत्वेन च रूपणात् हस्तानामापातिपुरुषत्वरूपणं गम्यत इति एकदेशविवर्त्ति रूपकम् ॥ ५८ ॥

आम्रशद्भिरिति ।—वलयो वीचय इव [ वलिवीचीरभितः आम्रशद्भिः, लोलमानविततांगुलिहस्तैः ] लोलमानाश्चलनशीलाः । "ताच्छील्यवयोवचनशक्तिषु चानश्" ( ३।२।१२९ पा० ) इति चानश्प्रत्ययः,

प्राप्य नाभिनदमज्जनमाशु
प्रस्थितं निवसनग्रहणाय ।
औपनीविकमरुन्ध किल स्त्री
वल्लभस्य करमाऽऽत्मकराभ्याम् ॥ ६० ॥

कामिनः कृतरतोत्सवकाल-
क्षेपमाऽऽकुलबधूकरसङ्गि ।
मेखलागुणविलग्नमसूयां
दीर्घसूत्रमकरोत् परिधानम् ॥ ६१ ॥

---

न तु शानच्, लोलतेः परस्मैपदित्वात्; अत एव "लोलमानादयश्चानशि" (५अधि० २अ० ८सू०) इति वामनः। विततः प्रसारिताश्च अङ्गुलयो येषां ते तथाविधा हस्ता येषां तैः, [अभीष्टैः] प्रियतमैः, [सुभ्रुवां मध्यं, मुष्टिमेयमिति] मुष्ट्या मातुं शक्यमिति, [अनुभवात्] प्रत्यक्षेण, मुष्ट्या मानं कृत्वैव, [प्रतिपेदे] प्रतिबुद्धम्; न तु प्रसिद्धिमात्रादिति भावः। अमुष्टिमेयस्य मुष्टिमेयत्वोक्तेरतिशयोक्तिभेदोऽलङ्कारः ॥ ५९ ॥

प्राप्येति।—[नाभिनदमज्जनं] नाभिरेव नदो * ह्रद इति रूपकं, तत्र मज्जनं, [प्राप्य आशु, निवसनग्रहणाय] वस्त्राऽऽकर्षणायेत्यर्थः। स्नातस्य वस्त्रग्रहणं युक्तमिति भावः। [प्रस्थितं] प्रवृत्तम्। उपनीवि नीविसमीपे, प्रायेण तत्र भवम् [औपनीविकं] तत्र व्यापृतमित्यर्थः। "उपजानूपकर्णोपनीवेष्ठक्" (४।३।४० पा०) इति ठक्। [वल्लभस्य करं स्त्री आत्मकराभ्याम् अरुन्ध किल] तस्य रोधं नाटितवतीत्यर्थः † ॥६०॥

कामिन इति।—[आकुलबधूकरसङ्गि] आकुले प्रियकरनिवारण-

---

* "नाभिह्रदः" इति पाठस्तु प्राचीनग्रन्थसम्मतः; तेनायमेव श्लोकः छन्दोमञ्जरीकृता उदाहृतः।

† रुधेर्लङि रूपम्।

अम्बरं विनयतः प्रियपाणे-
र्योषितश्च करयोः कलहस्य ।
वारणामिव विधातुमभीक्ष्णं
कक्ष्यया च वलयैश्च शिशिञ्जे ॥ ६२ ॥
ग्रन्थिमुद्ग्रथयितुं हृदयेशे
वाससः स्पृशति मानधनायाः ।

व्यग्रे, वधूकरे सङ्गि सक्तं, [मेखलागुणविलग्नं] मेखलैव गुणस्तत्र विलग्नं [दीर्घसूत्रम्] आतततन्तुकम्, अत्यायतत्वात् बहुधा वेष्टितमित्यर्थः, चिरक्रियश्च। 'दीर्घसूत्रश्चिरक्रियः' इत्यमरः। एवं [कृतरतोत्सवकालक्षेपं] कृतो रतस्यैवोत्सवस्य कालक्षेपः कालविलम्बो येन तत्, [परिधानम्] अधोऽंशुकं, [कामिनः, असूयामकरोत्] इच्छाविघातात् ईर्ष्यां जनयामासेत्यर्थः। अत्र करसङ्गादिपदार्थानां विशेषणगत्या असूयाहेतुत्वादनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ६१ ॥

अम्बरमिति।—[अम्बरं, विनयतः] अपसारयतः, [प्रियपाणेः, योषितः करयोश्च] तस्मिन् रोधकयोरिति भावः। [कलहस्य, वारणां विधातुं] निवारणं कर्त्तुम्, [इव] इति फलोत्प्रेक्षा। [कक्ष्यया च] काञ्च्या। 'कक्ष्या कक्षे वरत्रायां काञ्च्यां गेहप्रकोष्ठयोः' इति वैजयन्ती। 'कक्षया' इति क्षान्तपाठे तु—'कक्षा गृहिणिकाकाञ्चीप्रकोष्ठगजरज्जुषु' इति क्षान्तेषु विश्वः। [वलयैः] कङ्कणैः, [च अभीक्ष्णं, शिशिञ्जे] चुकुशे। भावे लिट्। 'भूषणानान्तु शिञ्जितम्' इत्यमरः। द्वयोः कलहायमानयोः पार्श्वस्थाः साक्रोशं निवारयन्तीति भावः। शिञ्जतिरयं तालव्यादिः, न दन्त्यादिः। 'योषेव शिङ्क्ते' इति श्रुतेः * ॥ ६२ ॥

ग्रन्थिमिति।—[हृदयेशे] प्रिये, [वाससो ग्रन्थिम्, उद्ग्रथयितुं] विस्रं-

* अत्र विहारवर्णनस्य प्रस्तुतत्वेन तदनुगुणानां प्राकरणिकानाञ्च रशनावलयादीनां शिञ्जनरूपैकक्रियाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः।

भ्रूयुगेण सपदि प्रतिपेदे
रोमभिश्च सममेव विभेदः ॥ ६३ ॥
आशु लङ्घितवतीष्टकराग्रे
नीविमर्द्धमुकुलीकृतदृष्ट्या ।
रक्तवैणिकहताधरतन्त्री-
मण्डलक्वणितचारु चुकूजे ॥ ६४ ॥

---

सयितुम्। ग्रथयतेश्चौरादिकात् तुमुन्। [स्पृशति] सति, [मानधनायाः] मानवत्याः, कामिन्या इति शेषः। [भ्रूयुगेण रोमभिश्च]। कर्त्तरि तृतीया।* [सपदि, समं] युगपत्, [एव, विभेदः] भङ्गः, हर्षश्च, [प्रतिपेदे] प्राप्तः। अत्र मानवत्त्वात् कामिनीत्वाच्च नीविस्पर्शे युगपदमर्षहर्षयोरुदयात् तदनुभावयोरपि युगपदाविर्भाव इति भावः। अत्र भ्रूभङ्गरोमाञ्चक्रिययोः समुच्चयात् समुच्चयभेदः; स च विभेद इति श्लेषप्रतिभोत्थापिताभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति सङ्करः ॥ ६३ ॥

आश्विति।—[इष्टकराग्रे] इष्टस्य प्रियस्य कराग्रे, [नीविं] वस्त्रग्रन्थिम्, [आशु] हठात्, [लङ्घितवति] अतिक्रान्तवति; ऊरुमूलं गते सतीत्यर्थः। [अर्द्धमुकुलीकृतदृष्ट्या] सुखपारवश्यादर्द्धनिमीलिताक्ष्या स्त्रिया, [रक्तवैणिकहताधरतन्त्रीमण्डलक्वणितचारु] रक्तो रक्तकण्ठः स्वयं गानकुशलः, वीणा शिल्पमस्य वैणिको वीणावाद्यनिपुणः। "शिल्पम्" (४।४।५५ पा०) इति ठक्। रक्तेन वैणिकेन यन्त्रगानकुशलेन, हतं वादितं यदधरं तन्त्रीणां मण्डलं समूहः, बहुतन्त्रीकस्वरमण्डलादिभेदः, तस्य क्वणितमिव चारु यथा तथा, [चुकूजे] कूजितम्। भावे लिट्। अधरग्रहणं तन्त्रीमाधुर्यातिशयात्। स्पर्शसुखाति-

---

* "कर्त्तृकरणयोस्तृतीया" (२।३।१८ पा०) इति पाणिनीयं सूत्रम्, अत्र तु सङ्क्षेपार्थमेव टीकाकृता "कर्त्तरि तृतीया" इत्यभिहितमिति वेदितव्यम्।

आयताङ्गुलिरभूदतिरिक्तः
सुभ्रुवां कृशिमशालिनि मध्ये ।
श्रोणिषु प्रियकरः पृथुलासु
स्पर्शमाप सकलेन तलेन ॥ ६५ ॥

चक्रुरेव ललनोरुषु राजीः
स्पर्शलोभवशलोलकराणाम् ।
कामिनामनिभृतान्यपि रम्भा-
स्तम्भकोमलतलेषु नखानि ॥ ६६ ॥

---

रेकार्थं तन्त्रीकण्ठस्वरव्यतिकरमनोहरः कोऽपि रससर्वस्वभूतः कण्ठ-कूजितविशेषः कृत इत्यर्थः ; अत एव रक्तवैणिकहृतेति विशेषणम् । कणितचार्विति उपमाऽलङ्कारः ॥ ६४ ॥

आयतेति ।—[ आयताङ्गुलिः ] आयताः अङ्गुलयो यस्य स, [ प्रियकरः ] ; कृशस्य भावः कृशिमा कार्श्यम् । "पृथ्वादिभ्य इमनिज् वा" ( ५।१।१२२ पा० ) इतीमनिच् "रऋतो हलादेर्लघोः" ( ६।४।१६१ पा० ) इति रेफादेशः । तेन शालते शोभते तस्मिन् [ कृशिमशालिनि, सुभ्रुवां मध्ये, अतिरिक्तः ] अधिकः, [ अभूत् ] ; मध्यस्यातिकार्श्या-दस्पृष्टैकदेशोऽभूदित्यर्थः । [ पृथुलासु, श्रोणिषु ] कटिषु । "वह्रि-श्रिश्रुयुद्रुग्ला—" (उणा०४पा०५१सू०) इति सूत्रेण श्रुधातोः निप्रत्ययः । [ सकलेन ] कृत्स्नेन, [ तलेन स्पर्शमाप ] अन्तर्भागेण क्रमेण श्रोणि-मस्पृशदित्यर्थः ; अत एव मध्यातिरेकोक्तिरतिशयोक्तिः ॥ ६५ ॥

चक्रुरेवेति ।—[ स्पर्शलोभवशलोलकराणां ] स्पर्शलोभवशेनोरुस्पर्श-तृष्णापारतन्त्र्येण, लोलकराणां चपलपाणीनां, [कामिनाम्, अनि-भृतानि] अनर्पितानि, [ अपि, नखानि ] कररुहाः । 'पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः । [रम्भास्तम्भकोमलतलेषु] कदली-

ऊरुमूलचपलेक्षणमघ्नन्
यैर्वतंसकुसुमैः प्रियमेताः ।
चक्रिरे सपदि तानि यथार्थं
मन्मथस्य कुसुमाऽऽयुधनाम ॥ ६७ ॥

धैर्यमुल्वणमनोभवभावा
वामतास्त्र वपुरर्पितवत्यः ।
व्रीडितं ललितसौरतधार्ष्ट्या-
स्तेनिरेऽभिरुचितेषु तरुण्यः ॥ ६८ ॥

---

प्रकाण्डपेलवस्वरूपेषु, [ ललनोरुषु ] ललनानामूरुषु, [ राजीः ] रेखाः, [ चक्रुरेव ], ऊरुपरामर्शानान्तरीयनखस्पर्शमात्रादेव रेखा जाता इत्यर्थः । अत्र कोमलतायाः विशेषणगत्या राजीकरणहेतुत्वात् काव्यलिङ्गभेदः, रम्भास्तम्भकोमलेत्युपमया संसृज्यते ॥ ६६ ॥

ऊर्विति ।—[ एताः ] स्त्रियः, [ ऊरुमूलचपलेक्षणम् ] ऊरुमूले चपलेक्षणं लोलचक्षुषं, [प्रियं यैः, वतंसकुसुमैः] कर्णावतंसपुष्पैः । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः"(का०) इत्यकारलोपः । [अघ्नन्] अताड़यन् । हन्तेर्लङ् । "गमहन—" ( ४।६।९८ पा० ) इत्यादिना उपधालोपः । "हो हन्तेः—" ( ७।३।५४ पा० ) इति कुत्वम् । [ तानि ] वतंसकुसुमानि । मनो मथ्नातीति मन्मथः । पृषोदरादित्वात् साधुः । तस्य [ मन्मथस्य, कुसुमायुधनाम ] कुसुममायुधं यस्येति कुसुमायुध इति यन्नाम तद्, [ सपदि यथार्थं, चक्रिरे] चक्रुः ; तदा तेषां तत्कार्य्यकारित्वादिति भावः । अत्र वतंसेष्वारोप्यमाणस्य मन्मथायुधत्वस्य प्रकृतोपयोगात् परिणामालङ्कारः ॥ ६७ ॥

धैर्य्यमिति ।—[ तरुण्यः ] रमण्यः, [ उल्वणमनोभवभावाः ] उल्वण उद्रिक्तो मनोभवभावो रतिरागो यासां ता अपि, [ अभिरुचितेषु ] प्रियेषु, [ धैर्य्यम् ] औदासीन्यं, [ तेनिरे, वपुः ] स्वाङ्गम्, [ अर्पितवत्यः ]

पाणिरोधमविरोधितवाञ्छं
भर्त्सनाश्च मधुरस्मितगर्भाः।
कामिनः स्म कुरुते करभोरू-
र्हारि शुष्करुदितञ्च सुखेऽपि ॥ ६८ ॥

---

यथेष्टकरणाय दत्तवत्योऽपि, [ वामतां ] वक्रतां, [च] तेनिरे ; [ललित-सौरतधार्ष्ट्याः] ललितं मनोहरं सौरतं सुरतसम्बन्धि धार्ष्ट्यं प्रागल्भ्यं यासां ताः, तथाऽपि [ व्रीडितं ] व्रीडां, तेनिरे ; इह स्त्रीणां रहसि रागाङ्गार्पणधार्ष्ट्याऽऽदिगुणा अप्यागन्तुकतया सहजधैर्य्यवक्रताव्रीडितैः पुनः पुनः प्रतिबध्यन्त एवेति भावः। अत्र रागाऽऽदीनां धैर्य्याऽऽदिभिः सह समावेशविरोधस्य सहजागन्तुकाभ्यामाभासीकरणाद्विरोधाभासो-ऽलङ्कारः, धैर्य्यादिगुणसमुच्चयात् समुच्चयालङ्कारश्चेति सङ्करः ॥ ६८ ॥

पाणीति।—'मणिबन्धादा कनिष्ठं करस्य करभो बहिः' इत्य-मरः। करभ इव ऊरुर्यस्याः सा [ करभोरूः ] स्त्री। "ऊरू-त्तरपदादौपम्ये" (४।१।६९ पा०) इत्यूङ्प्रत्ययः। [ अविरोधित-वाञ्छम् ] अनिवारितप्रियमनोरथं यथा यथा, [ कामिनः, पाणिरोधं ] नीविमोचने व्यापृतस्य प्रियपाणेर्निवारणं, [ कुरुते स्म ] ; तथा [ मधुरस्मितगर्भाः ] मधुरं मनोहरं स्मितं गर्भे अन्तर्वर्त्ति यासु ता, मन्दहासमिश्राः, [ भर्त्सनाश्च ] तर्जनाश्च, कुरुते स्म ; तथा [ सुखेऽपि, ] अधरपीडनादौ सुखातिरेके सत्यपि, [हारि] मनोहारि, [शुष्करुदितञ्च] अनश्रुत्वादनार्द्रं, क्लिमरोदनञ्च, कुरुते स्म। स्त्रीणामेष स्वभावो यत् इष्टमप्यनिष्टतया निवारयन्त्य एव सुरतसुखमुपभुञ्जत इत्यर्थः। अत्र सुखेऽपि दुःखवदुपचारात् कुट्टमिताख्योऽनुभावो द्रष्टव्यः,—'केशाधरादि-ग्रहणे मोदमानेऽपि मानसे। दुःखितेव बहिः कुप्येद् यत्र कुट्टमितं हि तत् ॥' इति लक्षणात् ॥ ६९ ॥

वारणार्थपदगद्गदवाचा-
मीर्ष्यया मुहुरपत्रपया च ।
कुर्वते स्म सुदृशामनुकूलं
प्रातिकूलिकतयैव युवानः ॥ ७० ॥

अन्यकालपरिहार्य्यमजस्रं
तद्द्वयेन विदधे द्वयमेव ।
धृष्टता रहसि भर्तृषु ताभि-
र्निर्दयत्वमितरैरबलासु ॥ ७१ ॥

---

वारणार्थेति ।—[ ईर्ष्यया ] अतिपीड़नासहिष्णुतया, [ अपत्रपया च ] रहस्यप्रकाशनवैलक्ष्येण च, [ मुहुः ], वारणार्थपदेषु मा मेत्यादि-निषेधवाचकशब्दप्रयोगेषु, गद्गदवाचां स्खलद्गिरां, [ वारणार्थपदगद्गद-वाचां, सुदृशां], प्रतिकूलं वर्त्तन्त इति प्रातिकूलिकाः प्रतिकूलचारिणः । "तत्प्रत्यनुपूर्वमीपलोमकूलम्" ( ४।४।२८ पा० ) इति ठक् । तत्तया [ प्रातिकूलिकतयैव ] प्रतिकूलाचरणेनैव, [ युवानः, अनुकूलम् ] इष्टं, [ कुर्वते स्म ] ; क्लिमनिवारणात् यत् प्रतिकूलमिवाचरितमधरपीड़-नादिकं तत्तासामिष्टत्वादनुकूलमेवेति प्रतिकूलाचरणमेवानुकूलं भवतीत्यर्थः ; अत एव प्रतिकूलमप्यनुकूलमिति विरोधाभासोऽलङ्कारः, तेन अनुकूलालङ्कारो व्यज्यते ॥ ७० ॥

अन्येति ।—[ अजस्रं ] नित्यम्, [ अन्यकालपरिहार्य्यं ] सुरतेतर-काले त्याज्यं, [ तद्द्वयं ] कर्म्म, [द्वयेन] कर्त्रा, [विदधे] विहितम् [एव]। धाञः कर्मणि लिट् । एतदेव व्यनक्ति ।—[ रहसि, ताभिः] अबलाभिः, [ भर्तृषु ] विषये, [ धृष्टता ] विदधे । [ इतरैः ] भर्त्तृभिः, [ अबलासु ] स्त्रीषु, [ निर्दयत्वं ] विदधे । अन्यदा यथा पुंसां स्त्रीषु दया तासां तेष्वप्रागल्भ्यमलङ्कारस्तद्वत् सुरतेषु तद्विरुद्धमेवालङ्कार इति भावः । अत्र

बाहुपीड़नकचग्रहणाभ्या-
माहतेन नखदन्तनिपातैः।
बोधितस्तनुशयस्तरुणीना-
मुन्मिमील विशदं विषमेषुः॥ ७२॥

कान्तया सपदि कोऽप्युपगूढ़ः
प्रौढ़पाणिरपनेतुमियेष।
संहतस्तनतिरस्कृतदृष्टि-
र्भ्रष्टमेव न दुकूलमपश्यत्॥ ७३॥

---

स्त्रीपुंसधार्ष्ट्यनिर्दयत्वयोः प्रकृतयोर्विधानक्रियायौगपद्यं गम्यत इति तुल्ययोगिताभेदः॥ ७१॥

बाह्विति।—[तरुणीनां], तनौ शेते इति [तनुशयः] तनुषु सुप्तः। "अधिकरणे शेतेः" (३।२।१५ पा०) इत्यच्प्रत्ययः। [विषमेषुः] कामः, [बाहुपीड़नकचग्रहणाभ्यां] बाहुपीड़नं निर्दयाश्लेषः, कचग्रहणं केशाकर्षणं, ताभ्याम्, [आहतेन] मुष्टिघातेन। "नपुंसके भावे क्तः" (३।३।११४ पा०)। [नखदन्तनिपातैः] नखानां दन्तानाञ्च निपातैः क्षतैश्च, [बोधितः] सन्, [विशदं] निर्जाड्यं यथा तथा, [उन्मिमील] उद्बुद्धः। सर्वमेतत् कामस्योद्दीपकमासीदित्यर्थः। अत्र प्रकृतविषमेषु-विशेषणसामर्थ्यादप्रस्तुतसुप्तप्रबुद्धपुरुषप्रतीतेः समासोक्तिरलङ्कारः; एवमेव प्रबोध्यते खलु निद्रालुरित्यलौकिके वस्तुनि लौकिकवस्तुव्यवहार-समारोपः॥ ७२॥

कान्तयेति।—[कान्तया, सपदि] वस्त्राकर्षणक्षण एव, [उपगूढ़ः] आश्लिष्टः, [कोऽपि] युवा कामी, [प्रौढ़पाणिः] व्यग्रहस्तः सन्, [अप-नेतुं] दुकूलमाक्रष्टुम्, [इयेष। संहतस्तनतिरस्कृतदृष्टिः] संह-

आहतं कुचतटेन तरुण्याः
साधु सोढममुनेति पपात ।
त्रुट्यतः प्रियतमोरसि हारात्
पुष्पवृष्टिरिव मौक्तिकवृष्टिः ॥ ७४ ॥

सीत्कृतानि मणितं करुणोक्तिः
स्निग्धमुक्तमलमर्थवचांसि ।
हासभूषणरवाश्च रमण्याः
कामसूत्रपदतामुपजग्मुः ॥ ७५ ॥

---

ताभ्यां निरन्तराऽऽश्लिष्टाभ्यां स्तनाभ्यां तिरस्कृतदृष्टिस्तिरोहिताक्षः सन्, [ भ्रष्टमेव ] प्रागेव स्रस्तं, [ दुकूलं नापश्यत् ]। अत्र दृष्टितिरस्कारस्य विशेषणगत्या अदर्शनहेतुकत्वात् पदार्थहेतुकं काव्यलिङ्गम् ; तच्च दृष्टेः स्तनतिरस्कारासम्बन्धेऽपि सम्बन्धरूपातिशयोक्त्युत्थापितमिति सङ्करः ; तेन च कुचयोर्लोकोत्तरसौन्दर्य्यं व्यज्यत इति अलङ्कारेण वस्तुध्वनिः ॥ ७३ ॥

आहतमिति ।—[ तरुण्याः ] सम्बन्धिना, [ कुचतटेन, आहतम् ] आहतिः, [ असुना ] उरसा, [ साधु सोढमिति ] हेतोः, [ त्रुट्यतः ] शीर्य्यमाणात्, [ हारात् मौक्तिकवृष्टिः पुष्पवृष्टिरिव प्रियतमोरसि पपात ] इत्युत्प्रेक्षा । विक्रान्तः पूज्यते पुष्पवृष्ट्येति प्रसिद्धिः ॥ ७४ ॥

सीत्कृतानीति ।—[ रमण्याः ] तरुण्याः, [ सीत्कृतानि ] सीत्काराः, दन्तनिष्पीड़नायां सीरिति शब्दप्रयोगः, [ मणितं ] रतिकाले स्त्रीणां कण्ठकूजितविशेषः,—'मणितं रतिकूजितम्' इत्यभिधानात् । [ करुणोक्तिः ] त्रायस्वेत्यादिदीनोक्तिः । [ स्निग्धं ] स्नेहार्द्रम्, [ उक्तम् ] उक्तिः, त्वं मे प्राणा इति प्रियवाद इत्यर्थः । [ अलमर्थवचांसि ] अलमर्थानि निषेधार्थानि, वचांसि, मा मेत्यादिनिवारणवचनानि, [ हास-

उद्धतैर्निभृतमेकमनेकै-
श्छेदवन्मृगदृशामविरामैः।
श्रूयते स्म भणितं कलकाञ्ची-
नूपुरध्वनिभिरक्षतमेव ॥ ७६ ॥

ईदृशस्य भवतः कथमेत-
ल्लाघवं मुहुरितीव रतेषु।
क्षिप्तमायतमदर्शयदुर्व्यां
काञ्चिदाम जघनस्य महत्त्वम् ॥ ७७ ॥

---

भूषणरवाश्च ] हासानां भूषणानाञ्च रवाः स्वनाश्च, [ कामसूत्रपदतां ] कामसूत्रस्य वात्स्यायनादिकामतन्त्रप्रतिपादकशास्त्रस्य, पदतां पद्यत इति पदमर्थः, प्रमेयलक्षणमिति यावत्, तत्ताम्, [ उपजग्मुः ] इति गम्योत्प्रेक्षा ; यद्वा,—कामेनैव कृतं सूत्रं तस्य पदानि सुप्तिङन्त-शब्दरूपाणि तस्य शास्त्रस्यैतान्येव पदानि तत्तामुपजग्मुरित्युत्प्रेक्षैव ॥ ७५ ॥

उद्धतैरिति।—[ निभृतम् ] अनुद्धतं, सूक्ष्ममित्यर्थः, [ एकम् ] एकाकि, [ छेदवत् ] विच्छेदयुक्तम्। [ मृगदृशां, भणितं ] रतिकूजितम्, [ उद्धतैः ] स्थूलैः, [ अनेकैः ] बहुभिः, [अविरामैः] अविच्छेदैः, [ कल-काञ्चीनूपुरध्वनिभिः] कलैरव्यक्तमधुरैः, काञ्चीनां नूपुराणाञ्च ध्वनिभिः, [ अक्षतमेव ] अतिरस्कृतमेव, [ श्रूयते स्म ] श्रुतम्। भणितस्य तिरोधायकशब्दान्तरसद्भावेऽपि तादृूप्यानापत्तेरतद्गुणालङ्कारः,—'सति हेतावतद्रूपस्वीकारः स्यादतद्गुणः' इति लक्षणात् ॥ ७६ ॥

ईदृशस्येति।—रतेषु [उर्व्यां क्षिप्तं] रतिसम्भ्रमात् पतितम्, [आयतं] दीर्घभूतं, [ काञ्चिदाम ] रशनागुणः, कर्तृ। ईदृशस्य इति।—[ईदृशस्य भवतः ] काञ्चिदाम्नः स्वायामदृष्टान्तेन जघनपरिमाणप्रदेशिन, इत्थं

प्राप्यते स्म गतचित्रकचित्रै-
श्चित्रमार्द्रनखलक्ष्मकपोलैः ।
दध्रिरेऽथ रभसच्युतपुष्पाः
स्वेदबिन्दुकुसुमान्यलकान्ताः ॥ ७८ ॥

यद् यदेव रुरुचे रुचिरेभ्यः
सुभ्रुवो रहसि तत्तदकुर्वन् ।
आनुकूलिकतया हि नराणा-
माक्षिपन्ति हृदयानि तरुण्यः ॥ ७९ ॥

---

महत्तरस्यातिमहतस्तव, [ जघनस्य, रतेषु ] उपरिसुरतेषु, [ मुहुः कथमेतल्लाघवं] मुहुरुत्पतनपाटवम् ; यस्येत्थम् आयतमङ्गमपि एकवेष्टन-पर्य्याप्तमिति भावः । [ इतीव ] जघनस्य महत्त्वदर्शनादिव, [ महत्त्वमदर्शयत् ] ; इत्थं विस्मितस्येति शेषः । गम्यमानार्थत्वादप्रयोगः । अत्रोर्व्यामायतत्वनिमित्तकाञ्चीदामकर्तृकं विस्मयपूर्वकजघनमहत्त्वदर्शन-मुत्प्रेक्ष्यते ॥ ७७ ॥

प्राप्यत इति ।—[ गतचित्रकचित्रैः ] गतानि विमर्दात् प्रभ्रष्टानि, चित्रकचित्राणि तमालपत्ररचनानि येषां तैः, [कपोलैः, आर्द्रनखलक्ष्म] आर्द्रं यन्नखलक्ष्म तदेव, [ चित्रम् ] इति रूपकम् । [प्राप्यते स्म] प्राप्तम् । [ अथ ] किञ्च, [ रभसच्युतपुष्पाः ] रभसेन रतिसम्भ्रमेण, च्युतपुष्पाः, [ अलकान्ताः ] चूर्णकुन्तलाग्राणि, [ स्वेदबिन्दुकुसुमानि ] स्वेदबिन्दून् एव कुसुमानीति रूपकम् । [ दध्रिरे ] दधुः । धरतेर्भौवादिकात् लिटि ञित्त्वादात्मनेपदम् । स्वेदोऽत्र श्रमानुभावः,—'श्रमः खेदोऽध्व-रत्यादेः श्वासस्वेदातिभूमिकृत्' ॥ ७८ ॥

यद् यदेवेति ।—[ रुचिरेभ्यः ] रमणेभ्यः, [ यद् यदेव ] चेष्टितं, [ रुरुचे ] रोचते स्म, प्रियमभूदित्यर्थः । 'रुच दीप्तावभिप्रीतौ च' इति

प्राप्य मन्मथरसादतिभूमिं
दुर्वहस्तनभराः सुरतस्य।
शश्रमुः श्रमजलाऽऽर्द्रललाट-
श्लिष्टकेशमसितायतकेश्यः ॥ ८० ॥
सङ्गताभिरुचितैश्चलिताऽपि
प्रागमुच्यत चिरेण सखीव।

धातोर्लिट्। "रुच्यर्थानां प्रीयमाणः" (१।४।३३ पा०) इति सम्प्रदान-
त्वम्। [सुभ्रुवो रहसि तत्तदकुर्वन्]। [हि] तथा हि, [तरुण्यः], अनुकूलं
वर्त्तन्ते इत्यानुकूलिकाः। "तत्प्रत्यनुपूर्वमीपलोमकूलम्" (४।४।२८
पा०) इति ठक्। तासां भावस्तत्ता, तया [आनुकूलिकतया] अनु-
कूलवर्त्तितयैव, [नराणां] पुंसां, [हृदयानि, आक्षिपन्ति] आवर्जयन्ति,
इत्यर्थान्तरन्यासः ॥ ७९ ॥

प्राप्येति —[दुर्वहस्तनभराः] दुर्वहः स्तनभरो यासां ताः; एते-
नोपरिसुरतं व्यज्यते, अन्यथा विशेषणवैयर्थ्यात्। असिता आय-
ताश्च केशा यासां ताः, [असितायतकेश्यः] स्त्रियः। "स्वाङ्गाच्च—"
(६।३।४० पा०) इत्यादिना ङीष्। [मन्मथरसात्] स्मररागात्,
[सुरतस्य, अतिभूमिं] परां काष्ठां, [प्राप्य], महान्तं * सुर
प्राप्येत्यर्थः। [श्रमजलाऽऽर्द्रललाटश्लिष्टकेशं] श्रमजलेन स्वेदाम्बुना
आर्द्रे ललाटे श्लिष्टाः केशा यस्मिन् कर्मणि तद् यथा तथा, [शश्रमुः]
इति सानुभावस्य † श्रमभावोक्तिः। भावनिबन्धनात् प्रेयोऽलङ्कारः ॥८०॥

अथ सुरतावसानं वर्णयति, सङ्गताभिरिति।—[उचितैः] परि
चितैः प्रियतमैः सह, [सङ्गताभिर्वधूभिः, प्राक्] सुरतादौ, [चलिता
गन्तुं प्रचलिता, [अपि, ह्रीः, सखीव चिरेण, अमुच्यत] मुक्ता। न सह

* महदिति युक्तं, सुरतशब्दस्य नपुंसकत्वात्; "उत्सवात्मम्" इत्यर्थे तु साधु

† स्वानुभावस्येति युक्तम्, अन्यथा अर्थासङ्गतिः।

भूय एव समगंस्त रतान्ते
स्त्रीर्वधूभिरसहा विरहस्य ॥ ८१ ॥

प्रेक्षणीयकमिव क्षणमासन्
ह्रीविभङ्गुरविलोचनपाताः ।
सम्भ्रमद्रुतगृहीतदुकूल-
च्छाद्यमानवपुषः सुरतान्ताः ॥ ८२ ॥

अप्रभूतमतनीयसि तन्वी
काञ्चिधाम्नि पिहितैकतरोरु ।

---

इत्यसहा । पचाद्यजन्तेन नञ्समासः । [विरहस्यासहा] विरह-मसहमाना सतीत्यर्थः । "कर्तृकर्मणोः कृति" (२।३।६५ पा०) इति कर्मणि षष्ठी । [रतान्ते भूय एव वधूभिः समगंस्त] सङ्गता, सखीव इत्येव । सम्पूर्वाद्गमेर्लुङ्, "समो गम्यृच्छिभ्याम्—" (१।३।२९ पा०) इत्यात्मनेपदम् । "वा गमः" (१।२।१३ पा०) इति सिचः पक्षे कित्त्वाभावात् "अनुदात्तोपदेश—" (६।४।३७ पा०) इत्यादिनाऽनु-नासिकलोपो न । सुरतेतरकाले स्त्रीणां लज्जैव भूषणमिति भावः । उपमाऽलङ्कारः ॥ ८१ ॥

प्रेक्षणीयकमिति ।—[ह्रीविभङ्गुरविलोचनपाताः] ह्रिया विभङ्गुराः स्खलिता, विलोचनपाता दृष्टिपाता येषु ते, [सम्भ्रमद्रुतगृहीतदुकूल-च्छाद्यमानवपुषः] सम्भ्रमेण द्रुतं गृहीतेन दुकूलेन छाद्यमानानि वपूंषि अन्तरङ्गाणि येषु ते, [सुरतान्ताः] सुरतावसानानि, [क्षणं, प्रेक्षणीयकं] दृश्यम्, [इव आसन्] इत्युपमा । नाटकादिरूपकेष्वाहार्य्यकं वस्तु तद्-दृश्यं प्रेक्षणीयकमिति चोच्यते । इह आविर्भावतिरोधानादिना तत्तुल्य-त्वम् ॥ ८२ ॥

अप्रभूतमिति ।—[तन्वी] कृशाङ्गी, [अभीष्टतमेन] प्रेयसा,

क्षौममाकुलकरा विचकर्ष
क्रान्तपल्लवमभीष्टतमेन ॥ ८३ ॥

मृष्टचन्दनविशेषकभक्ति-
र्भ्रष्टभूषणकदर्थितमाल्यः ।
सापराध इव मण्डनमासी-
दात्मनैव सुदृशामुपभोगः ॥ ८४ ॥

[क्रान्तपल्लवं] गृहीताञ्चलम्, अत एव [अतनीयसि] महीयसि, [काञ्चिधाम्नि] जघने, [अप्रभूतं] छादयितुमपर्य्याप्तम्, अत एव [पिहितैकतरोरु] पिहितश्छादितः, एकतर एव ऊरुर्येन तत्, [क्षौमं] दुकूलम्, [आकुलकरा] व्यग्रपाणिः सती, [विचकर्ष] कृत्स्नापिधानार्थमाचकर्ष। लज्जाऽनुभावोऽयम्। अत्र क्षौमविशेषणामाकर्षणहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ८३ ॥

मृष्टेति ।—[मृष्टचन्दनविशेषकभक्तिः] मृष्टा प्रमृष्टा, चन्दनानां, विशेषकाणां तमालपत्राणाञ्च भक्तिः रचना येन सः, 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः। [भ्रष्टभूषणकदर्थितमाल्यः] भ्रष्टानि भूषणानि यस्मिन् स भ्रष्टभूषणः, कुत्सितोऽर्थः कदर्थः। लोकतो विशेष्यलिङ्गत्वम्। "कोः कत् तत्पुरुषेऽचि" (६।३।१०१ पा०) इति कुशब्दस्य कदादेशः। कदर्थानि कृतानि कदर्थितानि दूषितानि, माल्यानि येन सः। ततस्तयोर्वैवक्षिकविशेष्यविशेषणभावाद् विशेषणसमासः। एवम्भूतः [उपभोगः, सापराध इव] पूर्वमण्डनापहारात् कृतापराध इव, [सुदृशामात्मनैव] स्वयमेव। प्रकृत्यादित्वात् तृतीया। [मण्डनमासीत्] प्रतिनिधिकरणेन स्वापराधनिरासार्थमिवेत्युत्प्रेक्षा। स्त्रीणां सम्भोग एव मण्डनं, तदभावे मण्डनान्तरस्याप्यमण्डनत्वादिति भावः * ॥ ८४ ॥

* सापराध इव इत्युत्प्रेक्षाया उपभोगो मण्डनमिति रूपकस्य च सापेक्षत्वात् सङ्करः।

योषितः पतितकाञ्चनकाञ्ची
मोहनातिरभसेन नितम्बे ।
मेखलेव परितः स्म विचित्रा
राजते नवनखक्षतलक्ष्मीः ॥ ८५ ॥

भातु नाम सुदृशां दशनाङ्कः
पाटलो धवलगण्डतलेषु ।
दन्तवाससि समानगुणश्रीः
सम्मुखोऽपि परभागमवाप ॥ ८६ ॥

सुभ्रुवामधिपयोधरपीठं
पीडनैस्त्रुटितवत्यपि पत्युः ।

---

योषित इति ।—[ मोहनातिरभसेन] सुरतसम्भ्रमेण, [पतितकाञ्चनकाञ्ची] पतिता काञ्चनी काञ्चनस्य विकारः काञ्चिर्यस्मात् तस्मिन् निर्मेखले, [ योषितो नितम्बे, परितः ] सर्वतः, [ विचित्रा ] विविधरचना, [ नवनखक्षतलक्ष्मीर्मेखलेव राजते स्म ] उत्प्रेक्षाऽलङ्कारः ॥ ८५ ॥

भात्विति ।—[ सुदृशां ] सम्बन्धी, [ पाटलः ] अरुणः, [ दशनाङ्कः ] दन्तक्षतं, [ धवलगण्डतलेषु ] कपोलेषु, [ भातु नाम ] वैवर्ण्याद् भेदेन प्रकाशतां, नामेत्यङ्गीकारे । [ दन्तवाससि ] अधरे तु, [समानगुणश्रीः] तुल्यवर्णोऽपि, तथा [ सम्मुखोऽपि ] सन्, [ परभागं ] गुणोत्कर्षं, तथा पश्चाद्भागञ्च, [ अवाप ] । इति सावर्ण्यवैवर्ण्ययोः सम्मुखपराङ्मुखत्वयोश्च विरोधः । उपरिभागमवापेत्युभयत्र परिहाराद् विरोधाभासद्वयसंसृष्टिः । तत्राद्यः श्लेषभित्तिकाभेदाध्यवसायमूलः, अन्यस्तद्गुणोत्थापित इति सङ्करः ॥ ८६ ॥

सुभ्रुवामिति ।—[ सुभ्रुवां ] पयोधरपीठे कुचतटे [ अधिपयोधर-

मुक्तमौक्तिकलघुर्गुणशेषा
हारयष्टिरभवद् गुरुरेव ॥ ८७ ॥

विश्रमार्थमुपगूढ़मजस्रं
यत् प्रियैः प्रथमरत्यवसाने।
योषितामुदितमन्मथमादौ
तद् द्वितीयसुरतस्य बभूव ॥ ८८ ॥

आस्तृतेऽभिनवपल्लवपुष्पै-
रप्यनारतरताभिरताभ्यः।

---

पीठम् ]। विभक्त्यर्थेऽव्ययीभावः। [ पत्युः पीड़नैः ] परिरम्भादि-विमर्दैः, [ त्रुटितवती ] छेदं गता, [ अपि ]; अत एव [ मुक्तमौक्तिक-लघुः ] मुक्तमौक्तिका सा च सा लघुश्च, अत एव [ गुणशेषा ] सूत्रमात्र-शेषाऽपि, [ हारयष्टिः, गुरुः ] श्लाघ्या, [ एवाभवत् ]। लघुरपि गुरुरिति विरोधाभासोऽलङ्कारः ॥ ८७ ॥

विश्रमेति।—[ योषितां प्रथमरत्यवसाने, विश्रमार्थं ] श्रमापनोद-नार्थम्। श्राम्यतेर्घञ्प्रत्ययः। "नोदात्तोपदेशस्य मान्तस्यानाचमेः" ( ७।३।३४ पा० ) इति वृद्ध्यभावः। [ अजस्रं यत् प्रियैः, उपगूढ़म् ] उपगूहनम्। "नपुंसके भावे क्तः" ( ३।३।११४ पा० )। "न लोका—" ( २।३।६९ पा० ) इत्यादिना षष्ठीप्रतिषेधः। [ उदितमन्मथम् ] उत्पा-दितकामम्; अत एव [ तत् ] उपगूहनम्, [ द्वितीयसुरतस्यादौ बभूव ]। श्रमापनोदमन्मथोद्बोधाभ्याम् उभयोपयोगादुभयार्थमभूत्; संयोग-पृथक्त्वन्यायादित्यर्थः। अत्र मध्यवर्त्तिन उपगूढ़स्यैकस्य पूर्वोत्तरसुरत-शेषादित्वेन विशेषणगत्या विश्रमार्थोदितमन्मथपदार्थयोर्हेतुत्वात् काव्य-लिङ्गद्वयं तदङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ८८ ॥

आस्तृत इति।—[अनारतरताभिरताभ्यः] अनारतम् अश्रान्तं, रते

दीयते स्म शयितुं शयनीये
न क्षणः क्षणदयाऽपि वधूभ्यः ॥ ८९ ॥
योषितामतितरां नखलूनं
गात्रमुज्ज्वलतया न खलूनम् ।
क्षोभमाशु हृदयं नयदूनां
रागवृद्धिमकरोन्न यदूनाम् ॥ ९० ॥

---

सुरते, अभिरताभ्य आसक्ताभ्यः, [ वधूभ्यः ], क्षणमुत्सवसुखं ददातीति क्षणदा रात्रिः, तयाऽपि [ क्षणदयाऽपि, अभिनवपल्लवपुष्पैः ] अभिनवैः पल्लवैः पुष्पैश्च, [ आस्तृते अपि ] आच्छादितेऽपि, सुखशयनार्हेऽपीत्यर्थः । शेतेऽस्मिन्निति [शयनीये] तल्पे । "कृत्यल्युटो बहुलम्" (३।३।११३ पा०) इत्यधिकरणेऽनीयर् । [शयितुं] शयनं कर्त्तुं, [ क्षणः ] अल्पकालोऽपि, [न दीयते स्म] न दत्तः । किन्त्वाप्रभातमरमयत्, * क्षणदात्वादेवेति भावः । क्षणदयाऽपि क्षणो न दत्त इति विरोधस्योत्सवार्थत्वेन परिहाराद् विरोधाभासोऽलङ्कारः । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः ॥ ८९ ॥

योषितामिति ।—नखलूनं न खलु ऊनं, नयत् ऊनां न यदूनाम् इति पदच्छेदः । [ अतितराम् ] अतिमात्रम् । अव्ययादामुप्रत्ययः । नखैर्लूनं क्षतं [ नखलूनम् ] । "ल्वादिभ्यश्च" ( ८।२।४४ पा० ) इति निष्ठानत्वम् । तथाऽपि [ उज्ज्वलतया ] औज्ज्वल्येन, [ न ऊनं ] न न्यूनं, किन्तु समग्रमेवेत्यर्थः । नखक्षतानां कामिनीगात्रमण्डनत्वादिति भावः । अत एव [ आशु, हृदयं ] प्रियचित्तं, [ क्षोभं ] विकारं, [नयत्] प्रापयत् । नयतेर्लटः शत्रादेशः । [ योषितां गात्रं, यदूनां ] यादवानां, [ रागवृद्धिम्, ऊनां ] न्यूनां, [नाकरोत् खलु] ; किन्तु भूयोऽपि समग्रा-

---

* रमिता इति युक्तं, कर्त्तुस्तृतीयाश्रवात् ।

इति मदमदनाभ्यां रागिणः स्पष्टरागा-
ननवरतरतश्रीसङ्गिनस्तानवेक्ष्य।
अभजत परिवृत्तिं साऽथ पर्य्यस्तहस्ता
रजनिरवनतेन्दुर्लज्जयाऽधोमुखीव ॥ ९१ ॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
सुरतवर्णनं नाम दशमः सर्गः ॥ १० ॥

---

मेवाकरोदित्यर्थः। अत्र यमकं शब्दालङ्कारः। औज्ज्वल्यस्य विशे-षणगत्या रागवृद्धिहेतुत्वात् काव्यलिङ्गम् अर्थालङ्कारः ॥ ९० ॥

इतीति।—[ इति ] इत्थं, [ मदमदनाभ्यां, स्पष्टरागान् ] सर्वदा रागित्वेऽपि तदा ताभ्याम् अपि व्यञ्जितरागानित्यर्थः। [ अनवरत-रतश्रीसङ्गिनः ] अविच्छिन्नसुरतसम्पल्लम्पटान्, [ तान् ] रागिण्यश्च रागि-णश्च तान् [ रागिणः ]। "पुमान् स्त्रिया" (१।२।६७ पा०) इत्येकशेषः। [अवेक्ष्य, अथ] अवेक्षणानन्तरं, * [पर्य्यस्तहस्ता] पर्य्यस्तः परिवृत्तो हस्तो नक्षत्रविशेषः करश्च यस्याः, सा। 'हस्तो नक्षत्रभेदे स्यात् करेभकरयो-रपि' इत्युभयत्रापि विश्वः। [ अवनतेन्दुः ] अस्तचन्द्रा, अत एव [सा रजनिर्लज्जया ]। ग्राम्यचेष्टादर्शनजनितयेति भावः। [ अधोमुखी इव ] नम्रमुखीवेत्युत्प्रेक्षा। [ परिवृत्तिं ] निवृत्त्युन्मुखताम् [ अभजत] प्रभातप्रायाऽभूदित्यर्थः। स्त्रियो हि परकीयग्राम्यचेष्टादर्शने त्रपा-ऽवनतमुख्यो हस्तेन दृष्टिमन्तर्द्धाप्य द्रागपसरन्तीति भावः; अत एव अनन्तरसर्गे प्रभातवर्णनाय प्रस्तावः। मालिनी वृत्तमेतत्। लक्षणं तूक्तं वक्ष्यते चोत्तरसर्गादौ ॥ ९१ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघ-काव्यव्याख्याने सर्वङ्कषाऽऽख्ये दशमः सर्गः ॥ १० ॥

---

* अत्र अवेक्ष्य इत्यनेनैव आनन्तर्य्ये अर्थे लब्धे अथेति पदं पुनरुक्ततामावहति।

## एकादशः सर्गः ।

—∘∘—

श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः
सततमृषभहीनं भिन्नकीकृत्य षड्जम् ।
प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः
परिणतिमिति रात्रेर्मागधा माधवाय ॥ १ ॥

---

अथ प्रस्तुतं प्रभातवर्णनं प्रारभते, श्रुतीति ।—नास्ति काकुर्यस्येत्यकाकुरविकृतध्वनिः । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः । श्रावयतीति श्रावको दूरध्वनिः, स्निग्धो मधुरः, कण्ठः कण्ठस्वरो येषां ते [ अकाकुश्रावकस्निग्धकण्ठाः ] रक्तकण्ठा इत्यर्थः । [ मागधाः ] वैतालिकाः, [ श्रुतिसमधिकं ] श्रुतयो नाम षड्जादिस्वरारम्भकावयवाः शब्दविशेषाः । तदुक्तं,—'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा ॥' इति । ताभिः श्रुतिभिः, समधिकं बहुलं—षड्जविशेषणं पञ्चमविशेषणं वा उभयोरपि तथात्वात् । तदुक्तं,—'चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः । द्वे द्वे निषादगान्धारौ त्रींस्त्रीनृषभधैवतौ ॥' इति । षड्जो मयूरस्य कूजितानुकारी स्वरविशेषः,—'षड्जं मयूरो वदति' इति लक्षणात् । तं [ षड्जं ], भिन्न एव भिन्नकः, अताद्दृशं ताद्दृशं कृत्वा [भिन्नकीकृत्य] तत्कालनिषिद्धस्वरासङ्कीर्णं कृत्वेत्यर्थः । पञ्चमो नाम कोकिलकूजितानुकारी स्वरविशेषः,—'पिकः कूजति पञ्चमम्' इति लक्षणात् । तं [ पञ्चमं पीडयन्तः ] तत्कालनिषेधात् परित्यजन्तः इत्यर्थः । [ सततं ]

रतिरभसविलासाभ्यासतान्तं न यावत्
नयनयुगममीलत् तावदेवाऽऽहतोऽसौ ।
रजनिविरतिशंसी कामिनीनां भविष्य-
द्विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥ २ ॥

---

वीणाऽऽदिवाद्ययुक्तम्; 'ततं वीणादिकं वाद्यम्' इत्यमरः। [ ऋषभ-हीनम् ] ऋषभोऽपि वृषभनर्दितानुकारी स्वरभेद एव। 'गावस्त्वृषभ-भाषिणः' इति लक्षणात्। तेन हीनं, तस्यापि तत्कालनिषिद्धत्वा-दित्यर्थः। सततम् ऋषभहीनञ्च यथा तथा, [ रालेः परिणतिं ] परि-वृत्तिमित्यर्थः। [ इति ] वक्ष्यमाणप्रकारेण, [ उच्चैः ] यथा तथा, [ माधवाय ] कृष्णाय। क्रियाग्रहणात् सम्प्रदानत्वम्। [ प्रणि-जगदुः ] गानेन आचख्युरित्यर्थः। "नेर्गदनद—" (८।४।१७ पा०) इत्या-दिना णत्वम्। पञ्चमादिनिषेधे भरतः;—'प्रभाते सुतरां निन्द्य ऋषभः पञ्चमोऽपि च। जनयेत् प्रधनं त्युचा पञ्चत्वं पञ्चमोऽपि च॥ पञ्चमस्य विशेषोऽयं कथितः पूर्वसूरिभिः। प्रगे प्रगीतो जनयेत् दशनस्य विप-र्य्ययम् ॥' इति। वृत्त्यनुप्रासोऽलङ्कारः। अस्मिन् सर्गे मालिनी वृत्तम्,— "ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥ १ ॥

अथ पूर्वश्लोके 'इति'शब्दपरामृष्टानपररालप्रभृत्युत्तरोत्तरक्रमभाविनः प्रभातवृत्तान्तान् आसर्गसमाप्ति वर्णयन्नाह, रतीति।—[रतिरभसविला-साभ्यासतान्तं] रतिरभसविलासानां सुरतसम्भ्रमलीलानाम्, अभ्यासेन आवर्त्तनेन, तान्तं क्लान्तं, [ नयनयुगं ] कर्तृ। कामिनामिति शेषः। [यावत्, नामीलत्] न मुकुलीभवति, [तावदेवासौ, रजनिविरतिशंसी] निशाऽवसानसूचकः, [उच्चैर्मृदङ्गः, कामिनीनां,भविष्यद्विरहविहितनिद्रा-भङ्गं] भविष्यता उत्तरक्षणभाविना, विरहेण, विहितः कृतो, निद्राभङ्गो यस्मिन् कर्मणि तत् यथा तथा, [आहतः] ताडितः *। अत्र विरहशब्देन

---

* वादकैरिति शेषः।

स्फुटतरमुपरिष्टादल्पमूर्त्तेर्ध्रुवस्य
स्फुरति सुरमुनीनां मण्डलं व्यस्तमेतत् ।
शकटमिव महीयः शैशवे शार्ङ्गपाणे-
श्चपलचरणकाब्जप्रेरणोत्तुङ्गिताग्रम् ॥ ३ ॥
प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति ।

---

सामर्थ्यात् तच्चिन्ता लक्ष्यते ; अन्यथा असतः साम्प्रतिकनिद्राभङ्ग-हेतुत्वायोगादिति । अत्र रतितान्तत्व-रजनिविरतिशंसनयोर्विशेषणगत्या नेत्रनिमीलन-निद्राभङ्गहेतुत्वात् पदार्थहेतुके काव्यलिङ्गे ॥ २ ॥

स्फुटेति ।—[ अल्पमूर्त्तेः ] दूरत्वात् सूक्ष्मविम्बस्य, [ ध्रुवस्य ] औत्तानपादेः । 'ध्रुव औत्तानपादिः स्यात्' इत्यमरः । [ उपरिष्टात्, स्फुटतरम् ] उज्ज्वलतरं, [ व्यस्तं ] पर्य्यस्तम्, [ एतत् सुरमुनीनां ] सप्तर्षीणां, [ मण्डलं, शार्ङ्गपाणेः ] केशवस्य, कृष्णस्य तवेत्यर्थः, [ शैशवे ] प्रचलितस्य [ चपलचरणकाब्जप्रेरणोत्तुङ्गिताग्रं ] चपलस्य चरणकाब्जस्याल्पचरणारविन्दस्य, "अल्पे" (५।३।८५ पा०) इत्यल्पार्थे कन्प्रत्ययः । प्रेरणया नोदनेन, उत्तुङ्गितम् उत्तुङ्गीकृतम् अग्रं यस्य तत्, विपर्य्यासिताग्रमित्यर्थः । [ महीयः ] महत्तरं, [ शकटम् इव ] शकटाकारं शकटासुरशरीरमिव, [ स्फुरति ] दीप्यते । उपमाऽलङ्कारः । पुरा किल बाल्ये कृष्णः शकटरूपधारिणं शकटासुरं पादघातेन पातयामासेति पौराणिकी कथाऽत्रानुसन्धेया ॥ ३ ॥

प्रहरकमिति ।—[ स्वं ] स्वकीयं, स्वपाल्यमित्यर्थः , [ प्रहरकं ] प्रहर एव प्रहरको यामः । 'द्वौ यामप्रहरौ समौ' इत्यमरः । तम्, [ अपनीय ] नीत्वा, [ निदिद्रासता ] निद्रातुमिच्छता । निद्रातेः सन्नन्तात्लटः शत्रादेशः । [ केनचित् ] अतीतप्रहरपालेनेत्यर्थः । [जागृहि] प्रबुध्यस्व, [ इति, प्रतिपदं ] पदे पदे, [ उच्चैरुपहूतो मनुष्यः ] अनन्तर-

मुहुरविशदवर्णां निद्रया शून्यशून्यां
ददददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥ ४ ॥
विपुलतरनितम्बाऽऽभोगरुद्धे रमण्याः
शयितुमनधिगच्छन् जीवितेशोऽवकाशम् ।
रतिपरिचयनश्यन्नैद्रतन्द्रः कथञ्चिद्
गमयति शयनीये शर्वरीं किं करोतु ? ॥ ५ ॥

---

यामिकः, [मुहुर्निद्रया, अविशदवर्णाम्] अस्पष्टाक्षराम्, अत एव [शून्यशून्यां] शून्यप्रकाराम्, अनर्थप्रायामित्यर्थः । "प्रकारे गुणवचनस्य" (८।१।१२ पा०) इति द्विर्भावः, "कर्मधारयवदुत्तरेषु" ( ८।१।११ पा० ) इति कर्मधारयवद्भावादवयवसुपो लुक् । [ गिरम् ] अयमहं जागर्मीति प्रतिवाचं, [ ददददपि ] प्रयच्छन् अपि । "नाभ्यस्ताच्छतुः" ( ७।१।७८ पा० ) इति नुमागमप्रतिषेधः । [ अन्तः ] अन्तःकरणे, [ नो बुध्यते ] न जागर्त्ति । बुध्यतेः दैवादिकात् कर्त्तरि लट् । अलाप्रबोधप्रतिवचनदानयोर्विरोधे अपिशब्दः । निद्राऽऽह्वानाभ्यां तत्समाधानात् विरोधाभासोऽलङ्कारः ॥ ४ ॥

विपुलेति ।—[ रमण्याः, विपुलतरनितम्बाऽऽभोगरुद्धे ] विपुलतरस्य नितम्बस्य आभोगेन विस्तारेण, रुद्धे आक्रान्ते, [ शयनीये, शयितुमवकाशम्, अनधिगच्छन्] अलभमानः, [जीवितेशः ] प्रेयान्, [रतिपरिचयनश्यन्नैद्रतन्द्रः] रतिपरिचयेन पुनःपुनः सुरतावृत्त्या, नश्यन्ती निवर्त्तमाना, निद्राया इयं नैद्री, निद्राप्रयुक्ता तन्द्रा आलस्यं, यस्य स तथाभूतः सन्, [ शर्वरीं, कथञ्चित् गमयति ] कृच्छ्रेण नयति, [किं करोतु ?] किमन्यत् कुर्य्यात् ? शयनानवकाशे सुरतमेव कालयापनोपाय इति तत्रैव प्रवृत्त इति भावः । अत्र शयनीयस्येदृग्रोधासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ; तादृग्रोधस्य विशेषणगत्या शयनावकाशानधिगमहेतुत्वात् काव्यलिङ्गभेद इति सङ्करः ॥ ५ ॥

क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगान्
उदधिमहति राज्ये काव्यवद्दुर्विगाहे ।
गहनमपररात्रप्राप्तबुद्धिप्रसादाः
कवय इव महीपाश्चिन्तयन्त्यर्थजातम् ॥ ६ ॥
क्षितितटशयनान्तादुत्थितं दानपङ्क-
प्लुतबहुलशरीरं शाययत्येष भूयः ।

---

क्षणेति ।—क्षणं शयिताः सुरतश्रमापनोदाय विश्रान्ताः,विबुद्धाः तदैव प्रबुद्धाः । यथाकालं प्रबुद्धत्वात् इति भावः [ क्षणशयितविबुद्धाः ] । स्नातानुलिप्तवत्,"पूर्वकाल—"(२।१।४९पा०) इति समासः । [महीपाः कवय इव, अपररात्रप्राप्तबुद्धिप्रसादाः ] अपररात्रे रात्रेः पश्चिमयामे इत्यर्थः । "पूर्वापर—" ( २।२।५८ पा० ) इत्यादिना एकदेशिसमासे समासान्तः अच् । "रात्राह्नाहाः पुंसि" ( २।४।२९ पा० ) इति पुंस्त्वम् । तत्र प्राप्तबुद्धिप्रसादाः लब्धबुद्धिप्रकाशाः, सन्तः, [ उदधिमहति ] समुद्रगम्भीरे, एकत्र,—तुरगादिभिः, अपरत्र,—रसभावादिभिश्चेति भावः । अत एव [ दुर्विगाहे ] दुष्प्रवेशे, [राज्ये], काव्य इव [ काव्यवत् ] । "तत्र तस्येव" (५।१।११६ पा०) इति वतिप्रत्ययः । [प्रयोगान्] सामाद्युपायानुष्ठानानि, अन्यत्र,—अर्थगुणसाधुशब्दगुम्फान्, [कल्पयन्तः] तर्कयन्तः ;—"ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनो हितम्' इति स्मरणादिति भावः । [ गहनं ] दुष्प्रापम्, अन्यत्र,—दुर्दर्शम्, [अर्थजातं] पुरुषार्थजातं, त्रिवर्गमित्यर्थः, अन्यत्र,—वाच्यलक्ष्यव्यङ्ग्यरूपमभिधेयजातं, [चिन्तयन्ति] विचारयन्ति । इवशब्दस्योपलक्षणत्वात् काव्यवदिति वतिप्रत्ययेऽप्यनेकशब्दार्थगता श्रौती पूर्णा वाक्यार्थोपमा ; काव्यवदिति तद्धितगता कवय इवेति समासगता चेति सङ्कीर्णा ॥ ६ ॥

क्षितीति ।—[ क्षितितटशयनान्तात् ] क्षितितटं भूतलम्, एव शय-

मृदुचलदपरान्तोदीरितान्दूनिनादं
गजपतिमधिरोहः पक्षकव्यत्ययेन ॥ ७ ॥
द्रुततरकरदक्षाः क्षिप्तवैशाखशैले
दधति दधनि धीरानारवान् वारिणीव।
शशिनमिव सुरौघाः सारमुद्धर्तुमेते
कलशिमुदधिगुर्वीं वल्लवा लोडयन्ति ॥ ८ ॥

---

नान्तः शयनस्थानं, तस्मात्, [ उत्थितं ] सुप्तोत्थितमित्यर्थः ; अत एव [ दानपङ्कप्लुतबहुलशरीरं ] मदकर्दमोक्षितमहाकायं, [ गजपतिम्, एषः ]; अधिरोहतीति [ अधिरोहः ] आरोहणः। पचाद्यच्। [ मृदुचलदपरान्तोदीरितान्दूनिनादं ] मृदु मन्दं, चलता अपरान्तेन पश्चिमपादेन, उदीरित उत्पादितः, अन्दू *-निनादः शृङ्खलारवो यस्मिन् कर्मणि तत् यथा तथा। [ पक्षकव्यत्ययेन ] पक्ष एव पक्षकः, पार्श्वः। 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती। तस्य व्यत्ययेन पार्श्वान्तरेणेत्यर्थः। [ भूयः, शाययति ] शयनं कारयति। "गतिबुद्धि—" (१।४।५२ पा०) इत्यादिना अणिकर्त्तुः कर्मत्वम्। स्वभावोक्तिरलङ्कारः ॥ ७ ॥

द्रुतेति।—[ द्रुततरकरदक्षाः ] द्रुततरकरा अतिलघुहस्तास्ते च ते दक्षाश्च, [एते, वल्लवाः ] गोपालाः। 'आभीरः स्यात् महाशूद्रो गोपालो वल्लवस्तथा' इति वैजयन्ती। [ क्षिप्तवैशाखशैले ] विशाखा प्रयोजनमस्येति वैशाखो मन्थनदण्डः। 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः। "विशाखाऽऽषाढादण् मन्थदण्डयोः" ( ५।१।११० पा० ) इत्यण्प्रत्ययः। वैशाखः शैल इवेत्युपमितसमासः। साहचर्यात्,

---

* अन्द्यते बध्यतेऽनेन इति कूः, ( "अन्दूः स्त्रियां स्यान्निगड़े प्रभेदे भूषणस्य च" इति मेदिनी।

अनुनयमगृहीत्वा व्याजसुप्ता पराची
रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये ।
कथमपि परिवृत्ता निद्रयाऽन्धा किल स्त्री
मुकुलितनयनैवाऽऽश्लिष्यति प्राणनाथम् ॥ ९ ॥
गतमनुगतवीणैरेकतां वेणुनादैः
कलमविकलतालं गायकैर्बोधहेतोः ।

---

त्विषो वैशाखशैलो यस्मिन् तस्मिन्, [ धीरान् ] गम्भीरान्, [ आरवान्, दधति दधनि ] दध्नि। "विभाषा ङिश्योः" ( ६।४।१३६ पा० ) इति विकल्पादल्लोपाभावः। [ वारिणीव, सुरौघाः शशिनमिव, सारं ] नवनीतम्, [ उद्धर्त्तुम् ] उत्कृष्टम्, [उदधिगुर्वीम्] उदधिरिव गुर्वी। "उपमानानि सामान्यवचनैः" ( २।१।५५ पा० ) इति समासः। तां, [ कलशिं ] कुम्भीं, [ लोड़यन्ति ] मथ्नन्ति। एषाऽपि पूर्वतरवत् पूर्णा वाक्यार्थोपमा वाक्यसमासगता इति सङ्कीर्णा च ॥ ८ ॥

अनुनयमिति।—[ अनुनयं ] प्रियप्रार्थनाम्, [ अगृहीत्वा ] नाङ्गीकृत्य, [पराची ] पराङ्मुखी, [ व्याजसुप्ता ] व्याजेन कपटेन सुप्ता, [ स्त्री अथ, कल्ये ] प्रभाते, 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः। [कृकवाकोः] कुक्कुटस्य। 'कृकवाकुस्ताम्रचूड़ः कुक्कुटश्चरणायुधः' इत्यमरः। "कृके वचः कश्च" (उ० १पा, ६सू०) इति उण्प्रत्ययः कत्वञ्च। [तारम्] उच्चैः, [ रुतं ] कूजितम्, [ आकर्ण्य, कथमपि ] गात्रजृम्भणादिव्याजेन, [परिवृत्ता] सम्मुखीभूता, [ निद्रयाऽन्धा किल ] अजानतीव, [ मुकुलितनयनैव ] मीलिताक्षी सत्येव, [ प्राणनाथमाश्लिष्यति ]। एषा कलहान्तरिता ॥ ९ ॥

गतमिति।—[अनुगतवीणैः] अनुसृतवीणैर्वीणासंवादिभिः, [ वेणुनादैः ] वंशस्वरैः, [ एकताम्] एकरूपतां, [गतं, कलम्] अव्यक्तमधुरम्; अविकलोऽविसंवादी तालः कांस्यादितालो यस्य तत् [ अविकलतालं ],

असकृदनवगीतं गीतमाकर्णयन्तः
सुखमुकुलितनेत्रा यान्ति निद्रां नरेन्द्राः ॥१०॥
परिशिथिलितकर्णग्रीवमामीलिताक्षः
क्षणमयमनुभूय स्वप्नमूर्ध्वज्ञुरेव ।
रिरसयिषति भूयः शष्पमग्रे विकीर्णं
पटुतरचपलौष्ठः प्रस्फुरत्प्रोथमश्वः ॥ ११ ॥

---

बोध एव हेतुस्तस्य [ बोधहेतोः ] बोधकारणेन, बोधनार्थमित्यर्थः । फलस्यापि कारणत्वमिच्छाद्वारा स्वर्गादिवत् फलरागस्य तत्साधन-प्रवृत्तिहेतुत्वात् षष्ठी । [ गायकैः ] वैतालिकैः, [ अनवगीतम् ] अग-र्हितम् । 'अवगीतन्तु निर्वादे मुहुर्दृष्टेऽपि गर्हिते' इति विश्वः । गीतञ्च गीयमानं वस्तु, आवृत्तिर्वा गीतशब्दस्य अर्थः । [गीतं] गानं, [ असकृत् आकर्णयन्तो नरेन्द्राः, सुखमुकुलितनेत्राः ] सुखेन गानसुखेन, मुकुलितनेत्रा निमीलिताक्षाः सन्तः, [ निद्रां, यान्ति ] भजन्ति । वृत्त्यनुप्रासोऽलङ्कारः ॥ १० ॥

परीति ।—[ अयमश्वः, परिशिथिलितकर्णग्रीवं ] परिशिथिलित स्रस्तमुक्तं, कर्णग्रीवं कर्णौ च ग्रीवा च यस्मिन् कर्मणि तत् यथा तथा, [आमीलिताक्षः], ऊर्ध्वे जानुनी यस्य सः [ ऊर्ध्वज्ञुः एव ] ऊर्ध्वजानुस्तिष्ठन् इत्यर्थः । 'ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्' इत्यमरः । "ऊर्ध्वाद्विभाषा" (५।४।१३० पा० ) इति जानुशब्दस्य ज्ञुरादेशः । [ क्षणं, स्वप्नं ] निद्राम् [अनुभूय] । उत्तमाश्वलक्षणमेतत् । [ भूयः ] पुनरपि, [पटुतरचपलौष्ठः] पटुतरौ ग्रासग्रहणसमर्थौ, चपलौ चञ्चलौ चौष्ठौ यस्य स सन्, [ प्रस्फुरत् प्रोथं ] प्रस्फुरमाणघोणं यथा तथा । 'घोणा तु प्रोथमस्त्रियाम्' इत्य मरः । [ अग्रे, विकीर्णं ] क्षिप्तं, [ शष्पं ] घासम् । 'शष्पं बालतृण घासः' इत्यमरः । [ रिरसयिषति ] रसयितुमास्वादयितुमिच्छति

उदयमुदितदीप्तिर्याति यः सङ्गतौ मे
पतति न वरमिन्दुः सोऽपरामेष गत्वा ।
स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति
स्फुरति विशदमेषा पूर्वकाष्ठाऽङ्गनायाः ॥ १२ ॥

चिररतिपरिखेदप्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्वते न प्रियाणा-
मशिथिलभुजचक्राऽऽश्लेषभेदं तरुण्यः ॥ १३ ॥

---

रसयतेः सन्नन्तात् लट् । स्वभावोक्तिरलङ्कारः,—'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' ॥ ११ ॥

उदयमिति ।—[ य इन्दुः, मे ] मम, [ सङ्गतौ, उदितदीप्तिः ] प्रवृद्ध-द्युतिः सन्, [उदयम्] उदयाद्रिम्, अभ्युदयञ्च, [याति, सः] इन्दुः, [ एषो-ऽपरां ] पश्चिमाशां, पराङ्गनाञ्च, [ गत्वा, पतति ] अस्तमेति, पातित्यञ्च गच्छति, [न वरम् ] अनर्हम् ? अपि तु वरमेवेत्यर्थः । [इति सद्यः साभ्य-सूयं ] यथा तथा, [ पूर्वकाष्ठाऽङ्गनायाः ] पूर्वकाष्ठा प्राची, सैवाङ्गना, पूर्वनायिका च गम्यते । तस्याः, [ स्मितरुचिः] मन्दहासकान्तिः, [इवैषा प्रभा, विशदं ] निर्मलं यथा तथा, [ स्फुरति ] प्रकाशते । प्राच्यामीष-द्विशदा प्रभा प्रादुरभूदित्यर्थः । अत्र प्राचीगतप्राभातिकप्रभायामिन्दोः पराङ्गनासङ्गहेतुकपातित्यनिमित्ता चेतनधर्मस्मितरुचित्वोत्प्रेक्षा पूर्व-काष्ठाऽङ्गनाया इति रूपकव्यूढेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ १२ ॥

चिरेति ।—[ चरममपि शयित्वा ] पश्चात् सुप्ता अपि, [ पूर्वमेव प्रबुद्धाः *] ,—'सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते । नान्यं कामयते चित्ते सा स्त्री ज्ञेया पतिव्रता ॥' इति स्मरणादिति भावः । तथाऽपि

---

* जागरिताः ।

कृतधवलिमभेदैः कुङ्कुमेनेव किञ्चि-
न्मलयरुहरजोभिर्भूषयन् पश्चिमाऽऽशाम् ।
हिमरुचिररुणिम्ना राजते रज्यमानै-
र्जरठकमलकन्दच्छेदगौरैर्मयूखैः ॥ १४ ॥
दधदसकलमेकं खण्डितामानमद्भिः
श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः ।

---

[ तरुण्यः, अपरिचलितगात्राः ] अस्पन्दवपुष्काः सत्यः, [ चिररतिपरिखेदप्राप्तनिद्रासुखानां ] चिररतिपरिखेदेन प्राप्तनिद्रासुखानां, [ प्रियाणाम्, अशिथिलभुजचक्राऽऽश्लेषभेदम् ] अशिथिलो गाढ़ो यो भुजचक्रेण परस्परभुजवलयेन आश्लेषः तस्य भेदं विश्लेषं विस्रंसनं, [न कुर्वते] किन्त्वाश्लिष्यैव स्थिताः ; अन्यथा तन्निद्राभङ्गः स्यात् । 'शयानं न प्रबोधयेत्' इति निषेधास्कन्दनभयादिति भावः । रतिश्रमोऽत्र सञ्चारी तदनुभावो निद्रा * ॥ १३ ॥

कृतेति ।—[ हिमरुचिः ] चन्द्रः, [अरुणिम्ना] अस्तमयरागेण हेतुना, [ रज्यमानैः ] लोहितायमानैः । रञ्जेर्दैवादिकात् कर्त्तरि शानच् । "अनिदिताम्—" (६।४।२४ पा०) इति नलोपः । लौणि रज्यति राजति लोहितायति चात्मन इति भट्टमल्लः । [ जरठकमलकन्दच्छेदगौरैः ] जरठस्य परिणतस्य, कमलकन्दस्य छेदा इव गौराः शुभ्राः । छेदग्रहणं धावल्यार्थम् । 'गौरः पीते सितेऽरुणे' इति विश्वः । तैः [मयूखैः, कुङ्कुमेन किञ्चित्, कृतधवलिमभेदैः ] कृतो धवलिमभेदो धावल्यभङ्गो येषां तैः, ईषद्भग्नस्वधावल्यैः, [ मलयरुहरजोभिः ] चन्दनरेणुभिः, [इव, पश्चिमाऽऽशां] ; प्रेयसीमिवेति भावः । [भूषयन् राजते] उपमाऽलङ्कारः † ॥१४॥

---

* अत्र सञ्चारिणीः स्वशब्देनोक्तेः रसदोषो,—"रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि" इति लक्षणात् ।

† अत्र एकदेशविवर्त्तिनी उपमेति युक्तं, प्रेयसीमिवेति साम्यस्य गम्यत्वात् ।

कलरवमुपगीते षट्पदौघेन धत्तः
कुमुदकमलषण्डे तुल्यरूपामवस्थाम् ॥ १५ ॥
मदरुचिमरुणेनोद्गच्छता लम्भितस्य
त्यजत इव चिराय स्थायिनीमाशु लज्जाम् ।
वसनमिव मुखस्य स्रंसते सम्प्रतीदं
सितकरकरजालं वासवाऽऽशायुवत्याः ॥ १६ ॥

---

दधदिति ।—[ एकं ] कुमुदषण्डम् [ आनमद्भिः ] मुकुलीभवद्भिः, [ पलाशैः ] दलैः, [ असकलम् ] अर्द्धं, [ खण्डितां ] क्षीयमाणामित्यर्थः । [ श्रियं दधत्, अपरं ] कमलषण्डम्, [ उच्छ्वसद्भिः ] विकसद्भिः, पलाशैः, [अपूर्णां] वर्द्धमानां, श्रियं दधत्, [षट्पदौघेन कलरवं] यथा तथा, [उपगीति], उभे अपीत्यर्थः । [ कुमुदकमलषण्डे ] कुमुदानां कमलानाञ्च षण्डे कदम्बे । 'कदम्बे षण्डमस्त्रियाम्' इत्यमरः । [ तुल्यरूपामवस्थां, धत्तः ] दधाते । अत्र क्षयवृद्ध्योरर्थप्रवृत्तेरैकरूप्ये कस्य क्षयः कस्य वा वृद्धिरिति दुर्ग्रहमिति भावः । अत्रोभयविशेषणानां तुल्यावस्थाधारणं प्रति हेतुत्वात् काव्यलिङ्गम्; तेन द्वयोः क्रमेणोपमानोपमेयभावरूपोपमेयोपमा व्यज्यते ॥ १५ ॥

मदेति ।—[ सम्प्रति, इदं सितकरकरजालं ] सितकरस्येन्दोः, इदं करजालं, कर्त्तृ । [ उद्गच्छता ] उद्यता, [ अरुणेन ] अनूरुणा, [मदरुचिं] तत्तुल्यां रुचिम्, अरुणिमानमित्यर्थः; अत एव निदर्शनाऽलङ्कारः । [लम्भितस्य] प्रापितस्य । लभेर्ण्यन्तात् कर्मणि क्तः, "लभेश्च" ( ७।१।६४ पा० ] इति नुमागमः । अत एव [ चिराय स्थायिनीं लज्जामाशु त्यजत इव] मुखप्रकाशनादियमुत्प्रेक्षा । [ वासवाऽऽशायुवत्याः ] वासवाशा प्राची, तस्या एव युवत्याः, [मुखस्य] प्राग्भागस्य, आननस्य च, [ वसनमिव ] अवगुण्ठनपट इव, [ स्रंसते ] गलति । रक्ताः * स्त्रियः

---

* "रक्ताः" इत्यत्र "मत्ताः" इति पाठो युक्तः ।

अविरतरतलीलाऽऽयासजातश्रमाणा-
मुपशममुपयान्तं निःसहेऽङ्गेऽङ्गनानाम्।
पुनरुषसि विविक्तैर्मातरिश्वाऽवचूर्य्य
ज्वलयति मदनाग्निं मालतीनां रजोभिः ॥१७॥
अनिमिषमविरामा रागिणां सर्वरात्रं
नवनिधुवनलीलाः कौतुकेनातिवीक्ष्य।

पाटलमुखा निर्लज्जाः स्रस्तवस्त्राश्च भवन्तीति भावः। अत्र मुखस्येति प्राग्भागवदनयोरभेदाध्यवसायात् श्लेषमूलाऽतिशयोक्तिः, तया पूर्वोक्त-निदर्शनोत्प्रेक्षाभ्यां चानुगृहीता वसनमिवेत्युत्प्रेक्षेति सङ्करः ॥ १६ ॥

अविरतेति।—[ अविरतरतलीलाऽऽयासजातश्रमाणाम् ] अविरत-रतलीलाऽऽयासेन अविच्छिन्नसुरतक्रीड़ाप्रयासेन, जातश्रमाणाम्, [अङ्ग-नानां] सम्बन्धिनि ; निःसहत इति [ निःसहे ] अक्षमे। पचाद्यच्। [ अङ्गे, उपशममुपयान्तं ] शाम्यन्तं, [ मदनाग्निं ] मदन एवाग्निस्तं, [पुनः, उषसि] कल्ये, [मातरिश्वा] मातरि अन्तरिक्षे श्वयति वर्द्धत इति मातरिश्वा। 'श्वन्नुक्षन्—' (उ०१ पा, १५८सू०) इत्यादिना औणादिको निपातः। [विविक्तैः] अमलैः, अनार्द्रैश्च, [मालतीनां] जातीकुसुमानाम्। 'सुमना मालती जातिः' इत्यमरः। [ रजोभिः ] परागैः ; करीषैरिवेति भावः। [अवचूर्य्य] अवध्वस्य, संयुज्येति भावः। [ज्वलयति] उद्दीपयति। प्राभातिकमालतीवातस्पर्शात् पुनरुद्बुद्धो मदन इत्यर्थः * ॥ १७ ॥

अनिमिषमिति।—[इदं] पुरोवर्त्ति, [अस्फुटाऽऽलोकसम्पत्] अस्फुटा सूर्य्यतेजोऽभिभवान्मन्दायमाना, आलोकसम्पत् प्रकाशसम्पत्तिर्यस्य तत्, अन्यत्र,—निद्राऽभिभवादनुद्बुद्धविषयावधानशक्तिकम् ; दीपस्येदं [दैपम्, अर्चिः] ज्वाला। 'ज्वालाभासोर्न पुंस्यर्चिः' इत्यमरः। सर्वस्यां रात्राविति [सर्वरात्रम्]। "पूर्वकाल—"(२।१।४९ पा०) इत्यादिना समासः। "अहः-

* अत्र रूपकश्लेषावलङ्कारौ, ताभ्यामुपमा व्यज्यते।

इदमुदवसितानामस्फुटालोकसम्प-
न्नयनमिव सनिद्रं घूर्णते दैपमर्चिः ॥ १८ ॥
विकचकमलगन्धैरन्धयन् भृङ्गमालाः
सुरभितमकरन्दं मन्दमावाति वातः ।
प्रमदमदनमाद्यद्यौवनोद्दामरामा-
रमणरभसखेदस्वेदविच्छेददक्षः ॥ १९ ॥

---

सर्व—" ( ५।४।८७ पा० ) इत्यादिना समासान्तः, "रात्राह्नाहाः पुंसि" ( २।४।२९ पा० ) इति पुंलिङ्गता "अत्यन्तसंयोगे द्वितीया" ( २।१।२९ पा०) इति द्वितीया । [अविरामाः] अविच्छिन्नाः, [रागिणां] कामिनां, कामिनीनाञ्च । "पुमान् स्त्रिया" (१।२।६७ पा०) इत्येकशेषः । [ नव-निधुवनलीलाः ] नवाः निधुवनलीलाः सुरतविलासान् । 'व्यवायो ग्राम्यधर्मश्च रतं निधुवनञ्च सः' इत्यमरः । [ कौतुकेन ], न निमिष-तीति [ अनिमिषं ] यथा यथा । पचादित्वादच्, कुटादित्वान्न गुणः । [ अतिवीक्ष्य ], अत एव [ सनिद्रम्, उदवसितानां ] गृहाणां सम्बन्धि । 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्' इत्यमरः । [ नयनमिव ] इत्युत्प्रेक्षा । [ घूर्णते ] भ्रमति ॥ १८ ॥

विकचेति ।—[ प्रमदमदनमाद्यद्यौवनोद्दामरामारमणरभसखेदस्वेद-विच्छेददक्षः ] प्रमदमदनाभ्यां हर्षमन्मथाभ्यां, माद्यन्तीनां यौवनेनोद्दा-मानाञ्च, रामाणां स्त्रीणां, रमणरभसखेदेन सुरतसंरम्भश्रमेण, यः स्वेदः, तस्य विच्छेदे हरणे, दक्षः [ वातः ] प्रभातमारुतः, [ विकचकमलगन्धैः भृङ्गमालाः, अन्धयन् ] अन्धाः कुर्वन्, मोहयन्नित्यर्थः । अन्धयतेः "तत्क-रोति" (ग०) इति ण्यन्ताल्लटः शत्रादेशः । [सुरभितमकरन्दं ] सुरभितः सुरभीकृतः, मकरन्दो यस्मिन् कर्मणि तत् यथा तथा । [मन्दम्, आवाति] प्रचलति । अत्र वृत्त्यनुप्रासोऽलङ्कारः । 'श्लेषः प्रसादः समता माधुर्य्यं

लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा
रजनय इव निद्राक्लान्तनीलोत्पलाक्ष्यः।
तिमिरमिव दधानाः स्रंसिनः केशपाशा-
नवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः॥ २०॥

शिशिरकिरणकान्तं वासरान्तेऽभिसार्य
श्वसनसुरभिगन्धिः साम्प्रतं सत्वरेव।
व्रजति रजनिरेषा तन्मयूखाङ्गरागैः
परिमलितमनिन्द्यैरम्बरान्तं वहन्ती॥ २१॥

---

सुकुमारता। अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः॥' इति आचार्योक्ता दश गुणाः प्रायेणात्र सम्भवन्तीति ते निपुणैः उन्नेयाः॥ १९॥

लुलितेति।—[ लुलितनयनताराः] निद्राकलुषिताक्षिकनीनिकाः, अन्यत्र,—अप्रसन्ननक्षत्राः। 'ऋक्षाक्षिमध्ययोस्तारा' इति विश्वः। [क्षामवक्त्रेन्दुबिम्बाः] वक्त्राणीन्दुबिम्बानीवेत्युपमितसमासः। तिमिरम् इवेत्यादिलिङ्गात्; अन्यत्र,—वक्त्राणीवेन्दुबिम्बानि, तानि क्षामाणि सुरतप्रभाताभ्यां म्लानानि यासां ताः, [निद्राक्लान्तनीलोत्पलाक्ष्यः] निद्रया स्वप्नेन मुकुलीभावेन क्लान्तानि नीलोत्पलानि अक्षीणीव, नीलोत्पलानीव वाऽक्षीणि यासां ताः, [ स्रंसिनः केशपाशान् तिमिरम् इव ], अन्यत्र तु —तानिव तिमिरं, [ दधानाः], अत एव [रजनय इव] स्थिताः [ अमूः, वारवध्वः ] वेश्याः। 'वारस्त्री गणिका वेश्या' इत्यमरः। [ अवनिपतिगृहेभ्यः, यान्ति ] निर्यान्ति। श्लिष्टविशेषणेयमुपमेत्येके; श्लेष एवायम् उभयविषयः, उपमा तु प्रतिभामात्रसारा इत्यन्ये॥ २०॥

शिशिरेति।—[ एषा रजनिः, वासरान्ते ] रात्रौ, [ शिशिरकिरणकान्तं ] शिशिरकिरणश्चन्द्रः तमेव कान्तम्, [ अभिसार्य्य] अभिसृत्य। स्वार्थे णिच्। [ साम्प्रतं, श्वसनसुरभिगन्धिः ] श्वसनैः तत्कालवातैः

नवकुमुदवनश्रीहासकेलिप्रसङ्गा-
दधिकरुचिरशेषामप्युषां जागरित्वा ।
अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः
शिशयिषुरिव पाण्डुं म्लानमात्मानमिन्दुः ॥२२॥
सरभसपरिरम्भारम्भसंरम्भभाजा
यदधिनिशमपास्तं वल्लभेनाङ्गनायाः ।

---

निश्वासैश्च सुरभिगन्धिः सुगन्धिः, [ अनिन्द्यैः ] मनोहरैः, [ तन्मयूखाङ्ग-रागैः] तस्य मयूखैः एवाङ्गरागैः, [परिमलितं ] व्याप्तं, वासितञ्च, [ अम्बरान्तं ] नभःप्रान्तं, वस्त्रान्तञ्च, [ वहन्ती ] भजन्ती, [ सत्वरैव व्रजति ] । अत्रेन्दुतन्मयूखादीनां कान्तत्वाङ्गरागत्वादिरूपणात् रजन्याश्च अभिसारिकात्वरूपणस्य गम्यत्वात् एकदेशविवर्त्ति रूपकम् ॥ २१ ॥

नवेति ।—[अधिकरुचिरयमिन्दुः, नवकुमुदवनश्रीहासकेलिप्रसङ्गात्] नवकुमुदवनश्रियो हासः विकासः परिहासश्च, स एव केलिस्तस्यां प्रसङ्गादासङ्गात्, [ अशेषामपि उषां ] सकलामपि रात्रिम् । 'विभावरी नक्तमुषा शर्वरी' इति विश्वः । "अत्यन्तसंयोगे द्वितीया" (२।१।२९ पा०) इति द्वितीया । [ जागरित्वा ] जागरणं कृत्वा, [ शिशयिषुरिव] शयितुमिच्छुरिव । शेतेः सन्नन्तादुप्रत्ययः । [ स्रस्तहस्तः ] स्रस्तो हस्तो नक्षत्रविशेषः, करश्च, यस्य स सन्, [ अपरदिशः ] पश्चिमदिशः, * [ अङ्के ] समीपे, उत्सङ्गे च, [ पाण्डुं ] पाण्डुवर्णं, [ म्लानं ] क्लान्तम्, [ आत्मानं ] स्वशरीरं, [ मुञ्चति ] । यथा दक्षिणनायकः कयाचित् सह विहृत्य श्रान्तः कस्याश्चित् अङ्के शेते तद्वदिति भावः । अत्र प्रहासकेल्यङ्ककरस्रंसनादिव्यवहारात् इन्दुकुमुदवनश्रीपश्चिमानां नायकत्वप्रतीतेः समासोक्तिः अलङ्कारः । विशेषणसाम्यं तूपलक्षणमित्यलङ्कारसर्वस्वकारः । सा चोत्प्रेक्षासङ्कीर्णा ॥ २२ ॥

---

* अपराङ्गनायाश्च ।

वसनमपि निशान्ते नेष्यते तत् प्रदातुं
रथचरणविशालश्रोणिलोलेक्षणेन ॥ २३ ॥

सपदि कुमुदिनीभिर्मीलितं हा! क्षपाऽपि
क्षयमगमदपेतास्तारकास्ताः समस्ताः ।
इति दयितकलत्रश्चिन्तयन्नङ्कमिन्दु-
र्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ २४ ॥

व्रजति विषयमक्ष्णामंशुमाली न यावत्
तिमिरमखिलमस्तं तावदेवारुणेन ।

---

सरभसेति ।—[ अधिनिशं ] निशायां, विभक्त्यर्थेऽव्ययीभावः । [ सरभसपरिरम्भारम्भसंरम्भभाजा ] सरभसः सत्वरः, परिरम्भ एवारम्भो व्यापारः, तत्र संरम्भस्तद्भाजा, [वल्लभेन, अङ्गनायाः] सम्बन्धि, [यत् वसनम् अपास्तं, तत्] वसनं, [निशान्ते] प्रभाते, [अपि, रथचरणविशालश्रोणिलोलेक्षणेन ] रथचरणं चक्रं तद्वत् विशालायां श्रोणौ लोलं सतृष्णमीक्षणं यस्य तेन वल्लभेन इत्यर्थः, [प्रदातुं नेष्यते]। अत्र वसनाप्रतिदानस्य श्रोणीक्षणलौल्यहेतुकत्वात् काव्यलिङ्गं रथचरणविशालेत्युपमया संसृज्यते ॥ २३ ॥

सपदीति ।—[ सपदि ] सद्यः, [ कुमुदिनीभिः, मीलितम् † ]। भावे क्तः । [ हा ] हन्त !, [क्षपा] रात्रिः, [अपि क्षयमगमत् । ताः, समस्तास्तारकाः अपेता इति, शुचा ] शोकेन, [ चिन्तयन् इव, दयितकलत्रः ] प्रियभार्य्यः, [इन्दुः कृशम्, अशेषं] निःशेषं यथा तथा, [भ्रष्टशोभं] नष्टप्रभम्, [ अङ्कं वहति ] ; कलत्रप्रियस्य युगपत् सकलकलत्रनाशे महान् शोको भवतीति भावः । अत्रेन्दोः प्रभातप्रयुक्ताङ्ककार्श्यशोभाभ्रंशयोर्युगपत् कुमुदिन्यादिसकलकलत्रनाशहेतुकत्वमुत्प्रेक्ष्यते ॥ २४ ॥

---

† मुद्रितम् ।

परपरिभवि तेजस्तन्वतामाशु कर्त्तुं
प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥ २५ ॥
विगततिमिरपङ्कं पश्यति व्योम यावत्
धुवति विरहखिन्नः पक्षती यावदेव ।
रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना
सरिदपरतटान्तादागता चक्रवाकी ॥ २६ ॥

---

व्रजतीति ।—[ अंशुमाली ] सूर्य्यः । व्रीह्यादित्वादिनिप्रत्ययः । [ यावदक्ष्णां, विषयं ] भूमिं, [ न व्रजति ] न दृश्यते इत्यर्थः, [ तावदेव, अरुणेन] अनूरुणा, [अखिलं तिमिरम्, अस्तम्] अपास्तं, * [परपरिभवि] परेषां परिभवि तिरस्कारकम् । "जिदृक्षि" (३।२।१५७ पा०) इत्यादिना इनिप्रत्ययः । [ तेजः ] प्रतापं, [ तन्वतां ] प्रथयताम् ; अग्रे सरतीति [ अग्रेसरः ] पुरःसरः, [ अपि ] । "पुरोऽग्रतोऽग्रेषु सर्त्तेः" ( ३।२।१८ पा० ) इति टप्रत्ययः । [ विपक्षोच्छेदं ] विपक्षस्य शत्रोरुच्छेदं, [ कर्त्तुमाशु, प्रभवति ] शक्नोति, [हि] । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २५ ॥

विगतेति ।—[ विरहखिन्नः ] विरहेण खिन्नः ; रथचरणेन चक्रेण, समाह्वस्तुल्याख्यः, तस्यैव समाह्वा समाख्या यस्येति वा [रथचरणसमाह्वः] चक्रवाक इत्यर्थः । 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः । [विगततिमिरपङ्कं], तिमिरं पङ्कमिवेत्युपमितसमासः । तत् विगतं यस्मात् तत् ; [ व्योम यावत् पश्यति, यावदेव, पक्षती ] पक्षमूले । 'स्त्री पक्षतिः पक्षमूलम्' इत्यमरः । "पक्षात्तिः" ( ५।२।२५ पा० ) इति तिप्रत्ययः । [ धुवति ] उत्पतितुं धुनोति । 'धू विधूनने' इति धातोस्तौदादिकत्वादुवङादेशः । [ तावत् ] एव, उत्पतनात् प्रागेव, [चक्रवाकी] चक्रवाकस्य

---

* निराकृतमित्यर्थः ।

मुदितयुवमनस्कास्तुल्यमेव प्रदोषे
रुचमदधुरुभय्यः कल्पिता भूषिताश्च।
परिमलरुचिराभिर्न्यक्कृतास्तु प्रभाते
युवतिभिरुपभोगान्नीरुचः पुष्पमालाः॥ २७॥

---

स्त्री। "जातेरस्त्रीविषयादयोपधात्" (४।१।६३ पा०) इति ङीष्। [औत्सुक्यनुन्ना] औत्सुक्येन उत्कण्ठया, नुन्ना प्रेरिता सती, [सरिदपरतटान्तात्] सरितोऽपरतटान्तात् परभूमेः सकाशात्, [आगता]। एतेन अनयोरुन्मनस्कता समश्चानुराग इत्युक्तम्। अत्र रागौत्सुक्ययो रसभावयोस्तिर्य्यग्गतत्वेनाभासयोर्निबन्धनादूर्जस्वी नामालङ्कारः,—'रसभावतदाभासप्रशमानां निबन्धने। रसवत्प्रेयऊर्ज्जस्विसमाहितानि' इति लक्षणात्॥ २६॥

मुदितेति।—[प्रदोषे] रात्रौ, * मुदितानि यूनां मनांसि याभिस्ताः [मुदितयुवमनस्काः]। "उरःप्रभृतिभ्यः कप्" (५।४।१५१ पा०) इति समासान्तः कप्। [कल्पिताः] उपभोगाय सम्पादिताः, [भूषिताश्च] वलयवसनादिभिरुपस्कृताश्च, [उभय्यः] उभयविधाः युवतयः पुष्पमालाश्च। "उभादुदात्तो नित्यम्" (५।२।५४ पा०) इति उभस्य अयजादेशः, "टिड्ढाणञ्—" (४।१।१५ पा०) इत्यादिना ङीप्। [तुल्यमेव] अविशेषं यथा तथा, [रुचं] शोभाम्, [अदधुः] धृतवत्यः। धाञो लङ्। [प्रभाते तु उपभोगात्, नीरुचः] निष्प्रभाः, [पुष्पमालाः, परिमलरुचिराभिः] परिमलेन विमर्दगन्धेन, रुचिराभिः उपभोगादधिसुरभिभिः, [युवतिभिः, न्यक्कृताः] त्यक्ताः, अवधीरिताश्च †।

---

* अत एव वाचस्पत्ये,—"प्रदोषो रजनीमुखम् इत्यमरोक्तिः, रात्रेः प्रथमप्रहरप्रथमदण्डचतुष्टयपरत्वाभिप्रायेण, रात्रिमात्रे भक्त्येति बोध्यम्" इत्युक्तम्; एवञ्चात्र प्रदोषशब्दस्य रात्रिपरतया व्याख्यानं न विरुध्यते इति विभाव्यम्।

† शोभया इति भावः।

विलुलितकमलौघः कीर्णवल्लीवितानः
प्रतिवनमवधूताशेषशाखिप्रसूनः ।
क्वचिदयमनवस्थः स्थास्नुतामेति वायु-
र्वधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ २८ ॥
नखपदवलिनाभीसन्धिभागेषु लक्ष्यः
क्षतिषु च दशनानामङ्गनायाः सशेषः ।

---

अत्र पुष्पमालाभ्यो युवतीनां साम्योक्तिपूर्वकविमर्दसहत्वेनाधिक्योक्ते-र्व्यतिरेकः ॥ २७ ॥

विलुलितेति ।—वने वने [ प्रतिवनम् ]। याथार्थ्येऽव्ययीभावः । [ विलुलितकमलौघः ] विलुलिताः व्यालोलिताः, कमलौघा येन सः, [ कीर्णवल्लीवितानः ] कीर्णा विक्षिप्ता, वल्लीनां मालत्यादीनां, वितानाः विस्तारा येन सः, [ अवधूताशेषशाखिप्रसूनः ] अवधूतानि अशेष-शाखिनां वकुलचम्पकादीनां प्रसूनानि येन सः, तथाऽपि [ क्वचित् ] पूर्वोक्तकमलवनादौ कुत्रापि ; नास्त्यवस्था स्थितिरस्येति [ अनवस्थः ] स्थितिमप्राप्तः, [ अयं वायुः, वधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ] वधूनां कुसुमानाञ्च विमर्देन सङ्घर्षेण, उद्गन्धिषु उद्गतगन्धेषु। गन्धस्येत्वम् । वेश्मान्तरेषु गृहान्तरेषु, [स्थास्नुतां] स्थायित्वम्, [एति] ; पूर्वोक्तसर्वो-त्कृष्टसौरभलोभादिति भावः । "ग्लाजिस्थश्च—" (३।२।१३९ पा०) इति क्स्नुप्रत्ययः । वधुशब्दो ह्रस्वोकारान्तोऽप्यस्ति । यद्वा,—"मधुकुसुम—" इति पाठः । मधुयुक्तानि कुसुमानि तेषां विमर्देनेत्यर्थः । अत्र वायो-रस्थायित्वेऽपि स्थायित्वसम्बन्धोक्तेरतिशयोक्तिः ; तया विमर्दगन्धस्य कमलादिगन्धात् आधिक्यरूपव्यतिरेकप्रतीतेः अलङ्कारेणालङ्कारध्वनिः ॥ २८ ॥

नखपदेति । [ नखपदवलिनाभीसन्धिभागेषु ] नखपदेषु नख-

अपि रहसि कृतानां वाग्विहीनोऽपि जातः
सुरतविलसितानां वर्णको वर्णकोऽसौ ॥ २९ ॥
प्रकटमलिनलक्ष्मा मृष्टपत्त्रावलीकै-
रधिगतरतिशोभैः प्रत्युषःप्रोषितश्रीः ।
उपहसित इवासौ चन्द्रमाः कामिनीनां
परिणतशरकाण्डापाण्डुभिर्गण्डभागैः ॥ ३० ॥

---

क्षतेषु, वलिषु त्रिवलिषु, नाभ्यां सन्धिभागेषु कूर्परादिदेहसन्धिस्थानेषु, तथा [ दशनानां क्षतिषु ] दन्तव्रणेषु, [ च, सशेषः ] सावशेषः, किञ्चिद्विद्यमानः इत्यर्थः, अत एव [लक्ष्यः] दृश्यः, [अङ्गनायाः] सम्बन्धी, [असौ]; वर्णयति वर्णङ्करोति रञ्जयतीति [ वर्णकः ] अङ्गरागः, [ वाग्विहीनः ] वागिन्द्रियरहितः [अपि] सन्, [रहसि कृतानामपि, सुरतविलसितानां] सुरतचेष्टितानाम् ; वर्णयति वक्तीति [ वर्णकः ] वक्ता, व्यञ्जक इत्यर्थः । वर्णयतेर्ण्वुल्प्रत्ययः । 'वर्णक्रियायां विस्तारे गुणोक्तौ वर्णनेष्यदः' इति भट्टमल्लः । [जातः] नखक्षतादिष्वेव लक्ष्यमाणोऽङ्गरागः, अन्यत्र,—स्वविलोपाच्चेष्टाविशेषानुमापको जात इत्यर्थः । अत्र वाग्विहीनोऽपि रहस्यकृतानामपि वर्णको वक्तेति विरोधस्य व्यञ्जकत्वलक्षणया परिहाराद्विरोधाभासोऽलङ्कारः ॥ २९ ॥

प्रकटेति ।—[ प्रत्युषःप्रोषितश्रीः ] उषसि प्रत्युषः । विभक्त्यर्थेऽव्ययीभावः । यद्वा,—प्रत्युषः प्रभातम् । उषःप्रत्युषसी अपि' इत्यमरः । तत्र प्रोषितश्रीर्भ्रष्टशोभः ; अत एव [ प्रकटमलिनलक्ष्मा ] स्पष्टदृष्टकलङ्कः, [ असौ चन्द्रमाः, मृष्टपत्त्रावलीकैः ] मृष्टाः प्रमृष्टाः, पत्त्रावल्यः पत्त्रभङ्गा येषां तैः । "नद्यृतश्च" ( ५।४।१५३ पा० ) इति कप् । तथाऽपि [ अधिगतरतिशोभैः ] अधिगता रतिशोभा सम्भोगश्रीर्येषां तैः, [ परिणतशरकाण्डापाण्डुभिः ] परिणताः परिपक्वाः, शरकाण्डाः बाणाख्यतृणकाण्डिकाः । 'शरो बाणे बाणतृणे' इति शब्दार्णवे । तद्वदा-

सकलमपि निकामं कामलीलान्यनारी-
रतिरभसविमर्दैर्भिन्नवत्यङ्गरागे ।
इदमतिमहदेवाश्चर्य्यमाश्चर्य्यधाम्न-
स्तव खलु मुखरागो यन्न भेदं प्रयातः ॥ ३१ ॥
प्रकटतरमिमं मा द्राक्षुरन्या रमण्यः
स्फुटमिति सविशङ्कं कान्तया तुल्यवर्णः ।

---

पाण्डुभिः, [ कामिनीनां, गण्डभागैः ] गण्डस्थलैः, [ उपहसित इव ] इत्युत्प्रेक्षा, पाण्डिमगुणनिमित्ता उपमासंसृष्टा । निष्कलङ्काः सकलङ्कं समानमानिनमुपहसन्तीति भावः ॥ ३० ॥

अथ काचित् खण्डिता नायिका सागसं प्रेयांसं प्रातरागतं पञ्चभिरुपालभते, सकलमित्यादि ।—[ कामलीलान्यनारीरतिरभसविमर्दैः ] कामेन लीलाया अन्यनार्य्याः सपत्न्याः, रतिरभसेषु सुरतसम्भ्रमेषु, विमर्दैः पीड़नैः । रज्यतेऽनेनेति रागः, अङ्गस्य रागोऽङ्गरागः विलेपनं, अङ्गविकाशश्च तस्मिन्, [ अङ्गरागे, सकलं ] निःशेषं यथा तथा, [निकामं, भिन्नवत्यपि] विश्लिष्टवति सत्यपि, [आश्चर्य्यधाम्नः ] सर्वाद्भुतनिधानस्य, [ तव, मुखरागः ] मुखविकासः, [ भेदं ] विश्लेषं, [न प्रयातः] इति [ यत्, इदमेवातिमहदाश्चर्य्यं खलु ]। मुखस्याप्यङ्गत्वेन तद्रागस्याप्यङ्गरागत्वादिति भावः । अत्र विलेपनविकाशाख्ययोरङ्गरागयोरभेदाध्यवसायेन विरोधः, भेदानुसन्धानत्वेनाविरोध इति श्लेषमूलाऽतिशयोक्त्युत्थापितो विरोधाभासोऽलङ्कारः ॥ ३१ ॥

प्रकटेति ।—किञ्च, [ प्रकटतरम् ] अतिस्फुटम्, [ इमम् ] एनं नखविलिखम्, [ अन्याः रमण्यः ] निजसपत्न्यः, [ स्फुटं, मा द्राक्षुः ] न पश्यन्तु । दृशेर्लुङ् "न दृशः" ( ३।१।४७ पा० ) इति क्साभावपक्षे सिचि वृद्धिः । [इति ] बुद्ध्या, [ कान्तया, सविशङ्कं ] यथा तथा, [ तुल्यवर्णः ] लाक्षासमानवर्णः; विवर्णस्य दुरपह्नवत्वादिति भावः ।

चरणतलसरोजाक्रान्तिसङ्क्रान्तयाऽसौ
वपुषि नखविलेखो लाक्षया रक्षितस्ते ॥ ३२ ॥
तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥ ३३ ॥

---

[ असौ, ते ] तव, [ वपुषि, नखविलेखः ] नखव्रणः, [चरणतलसरोजाक्रान्तिसङ्क्रान्तया ] चरणतलं सरोजमिवेत्युपमितसमासः आक्रान्तिलिङ्गात्, तस्य आक्रान्त्या आघातेन सङ्क्रान्तया, [लाक्षया, रक्षितः] गुप्तः, आच्छादित इत्यर्थः । हन्त सा तु पापीयसी लाक्षा स्वयमेव सर्वदुर्वृत्तपिशुनेति भावः । अत्र नखविलेखस्य लाक्षासावर्ण्यात् तदेकतापत्तेः सामान्यालङ्कारः,—'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् ॥ ३२ ॥

तदिति ।—किञ्च, [ मम त्वम् ] एव, [प्रियेति यदवादीः] अवोचः । वदेर्लुङि " वदव्रज—" (७।२।३ पा०) इत्यादिना वृद्धिः । [तत्, अवितथं] सत्यम् । कुतः ? [यत्] यस्मात्, [प्रियजनपरिभुक्तं] प्रियजनेन परिभुक्तं, [दुकूलं] तदीयमित्यर्थः ; [दधानः] धारयन्नित्यर्थः । "दधानः" इत्यत्र "वसानः" इति पाठे,—वसान आच्छादयन् । 'वस आच्छादनार्थात् लटः शानजादेशः । स त्वं [ मदधिवसतिं ] मम निवासम्, [आगाः ] प्राप्तः । "इणो गा लुङि" (२।४।४५ पा०) इति गाऽऽदेशः । युक्तं चैतदित्याह,—[कामिनां मण्डनश्रीः, वल्लभालोकनेन] वल्लभानां प्रेयसीनामालोकनेन, [ सफलत्वं व्रजति हि ]। अप्रिया चेत् कथमीदृशी मे सम्भावनेति भावः ) अर्थान्तरन्यासः ॥ ३३ ॥

नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्प-
न्नवपरिमलगन्धः केन शक्यो वरीतुम् ? ॥ ३४ ॥
इति कृतवचनायाः कश्चिदभ्येत्य बिभ्यद्
गलितनयनवारेर्याति पादावनामम् ।

---

नवेति ।—किञ्च, [ नवनखपदं ] नवानि नखपदानि यस्मिन् तत्, [ अङ्गं ] वपुः, [ अंशुकेन, गोपयसि ] छादयसि । गुपेश्चौरादिकात् स्वार्थे णिच् । [ दन्तदष्टं ] दन्तेन दष्टम्, [ओष्ठं पुनः] ओष्ठन्तु, [पाणिना, स्थगयसि ] छादयसि । स्थगिरपि चौरादिकः । दिशि दिशि [ प्रतिदिशम् ] । विभक्त्यर्थेऽव्ययीभावः । "अव्ययीभावे शरत्प्रभृतिभ्यः" ( ५।४।१०७ पा० ) इति समासान्तः टच्प्रत्ययः । [ विसर्पन् ] प्रसर्पन्, [अपरस्त्रीसङ्गशंसी] स्त्र्यन्तरसङ्गसूचकः ; अन्यप्रभवत्वात् तस्येति भावः । [ नवपरिमलगन्धः ] नवः परिमलाख्यो गन्धः । 'विमर्दोत्थे परिमलः' इत्यमरः । [ केन ] केनोपायेन, [ वरीतुम् ] आच्छादयितुम् । "वॄतो वा" ( ७।२।३८ पा० ) इति इटो दीर्घः । [ शक्यः ? ] न केनापि शक्य इत्यर्थः । अत्र नखदन्तक्षतयोरङ्गोष्ठाच्छादने विसर्पणस्य गन्धानाच्छाद्यत्वे च विशेषणगत्या हेतुत्वात् काव्यलिङ्गद्वये इति सजातीयसङ्करः ॥ ३४ ॥

इतीति ।–[ इति ] पूर्वोक्तश्लोकचतुष्टयरीत्या, [ कृतवचनायाः ] कृतोपालम्भायाः, [ गलितनयनवारेः ] अधैर्य्यान्मुक्ताश्रोः ; प्रेयस्या इति शेषः । [ कश्चित् ] नायकः, [ बिभ्यत् ] त्रस्यन् । "नाभ्यस्ताच्छतुः" (७।१।७८ पा०) इति नुमभावः । [ अभ्येत्य ] आगत्य, [ पादावनामं ] पादयोरवनामम् अवनतिं, [ याति ] प्रणामेन प्रसादयतीत्यर्थः । ननु

करुणमपि समर्थं मानिनां मानभेदे
रुदितमुदितमस्त्रं योषितां विग्रहेषु ॥ ३५ ॥

[ कुलकम् ]

मदमदनविकाशस्पष्टधार्ष्ट्योदयानां
रतिकलहविकीर्णैर्भूषणैरर्चितेषु ।
विदधति न गृहेषूत्फुल्लपुष्पोपहारं
विफलविनययत्नाः कामिनीनां वयस्याः ॥३६॥

---

कथमीदृङ्मार्दवं तथाऽहङ्कारिणस्तस्य रोदनमात्रेण, तत्राह करुणमिति ।—तथा हि, [विग्रहेषु] प्रणयकलहेषु, [योषितां, करुणं] दीनम्, [अपि, रुदितम्] अश्रुमोचनं, [मानिनाम्] अहङ्कारिणां पुंसां, [मानभेदे] अहङ्कारनिरासे, [समर्थं] शक्तम्, [अस्त्रं] साधनम्, [उदितम्] उक्तम् । वदेः कर्मणि क्तः । "वचिस्वपि—"(६।१।१५ पा०) इत्यादिना सम्प्रसारणम् । दीने प्रणयिजने पुंसां कोऽहङ्कार इति भावः । अर्थान्तरन्यासः । एषा च खण्डिता नायिका,—'नीत्वाऽन्यत्र निशां प्रातरागते प्राणवल्लभे । अन्यसम्भोगचिह्नैस्तु खण्डितेर्ष्याकषायिता ॥' इति लक्षणात् । नायकस्तु धृष्टः,—'व्यक्तागा निर्भयो धृष्टः' इति लक्षणात् । न चेह बिभ्यद्विशेषणविरोधः, आगमनकालेऽनिर्भीकताया एव लक्षणोपयोगात् ; अन्यथा वैरं स्यादिति भावः । अयञ्च सहृदयः ; अन्यथा रसाभास इत्याहुः । कुलकम् ॥ ३५ ॥

मदेति ।—[ मदमदनविकाशस्पष्टधार्ष्ट्योदयानां ] मदमदनयोर्विकाशेन विजृम्भणेन, स्पष्टो धार्ष्ट्यस्योदय आविर्भावो यासां तासां, [कामिनीनां, रतिकलहविकीर्णैः ] रतिरेव कलहः * तस्मिन् विकीर्णैः इतस्ततो विक्षिप्तैः, [भूषणैः, अर्चितेषु गृहेषु, वयस्याः] स्निग्धपरिचारिकाः ;

---

* रतौ कलहः इति युक्तम् ।

करजदशनचिह्नं नैशमङ्गेऽन्यनारी-
जनितमिति सरोषामीर्ष्यया शङ्कमानाम् ।
स्मरसि न खलु दत्तं मत्तयैतत् त्वयैव !!
स्त्रियमनुनयतीत्थं व्रीड़मानां विलासी ॥३७॥
कृतगुरुतरहारच्छेदमालिङ्ग्य पत्यौ
परिशिथिलितगात्रे गन्तुमापृच्छमाने ।

---

विनीयन्तेऽस्मिन्निति विनयोऽधिकारः, तत्र यत्नो विफलो यासां ताः [ विफलविनययत्नाः ] निष्फलस्वाधिकारोद्योगाः सत्यः, [ उत्फुल्लपुष्पोपहारं ] उत्फुल्लैः पुष्पैरुपहारं पूजां, [ न विदधति ] न कुर्वन्ति । * अत्र समृद्धवस्तुवर्णनादुदात्तालङ्कारः,—'तदुदात्तं भवेद् यत्र समृद्धं वस्तु वर्ण्यते' इति लक्षणात् । तेन तासां तेषु आभरणेषु भुक्तवस्त्रमाल्यादिवन्निर्माल्यबुद्धिर्ध्वन्यते ॥ ३६ ॥

करजेति ।—विलसनशीलः [विलासी] । "वौ कषलस—"(३।२।१४३ पा०) इत्यादिना घिनुणप्रत्ययः । [अङ्गे] निजाङ्गे, निशायां भवं [नैशम्] । "निशाप्रदोषाभ्याञ्च" (४।३।१४ पा०) इत्यणप्रत्ययः । [ करजदशनचिह्नं ] नखदन्तक्षतम्, [ अन्यनारीजनितं ] सपत्नीकृतम्, [ इति, शङ्कमानां ] विश्वसतीम् ; अत एव [ ईर्ष्यया ] अक्षमया, [ सरोषां, स्त्रियं] निजवधूं, [ मत्तया ] मदमूढ़या, [त्वयैव, एतद्दत्तम्] एवं कृतं, [खलु, न स्मरसि !!] नाभिजानासि किम् ? इति काकुः । [ इत्थम् ] अनेन प्रकारेण, [ व्रीडमानां ] स्वकृतत्वप्रत्यभिज्ञानाल्लज्जितां सतीम्, [ अनुनयति ] अङ्गीकारयति । स्वमौग्ध्याव्याघातो निर्वेदश्च लज्जया व्यज्यते ॥ ३७ ॥

कृतेति ।—[ कृतगुरुतरहारच्छेदं ] कृतः गुरुतरस्य हारस्य छेदो यस्मिन् तद्यथा तथा, [ आलिङ्ग्य, परिशिथिलितगात्रे ] शिथिली-

---

* वैफल्याद् विच्छित्तभूषणैस्तत्सम्पादनाच्चेति भावः ।

विगलितनवमुक्तास्थूलवाष्पाम्बुबिन्दु
स्तनयुगमबलायास्तत्क्षणं रोदितीव ॥ ३८ ॥

बहु जगद पुरस्तात्तस्य मत्ता किलाहं
चकार च किल चाटु प्रौढ़योषिद्वदस्य।
विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य
व्यपगतमदयाऽह्नि व्रीड़ितं मुग्धबध्वा ॥ ३९ ॥

---

कृताङ्गे, [पत्यौ] भर्त्तरि, [ गन्तुम्, आपृच्छमाने ] आमन्त्रयमाणे सति। "आङि नुप्रच्छ्योरुपसंख्यानम्" (वा०) इत्यात्मनेपदम्। कर्त्तरि लटः शानजादेशः। [तत्क्षणं] तस्मिन् क्षणे। अत्यन्तसंयोगे द्वितीया। [अबलायाः,स्तनयुगं] कर्तृ। [विगलितनवमुक्तास्थूलवाष्पाम्बुबिन्दु] विगलिता निःसृता, नवमुक्ता नूतनमौक्तिकान्येव स्थूलवाष्पाम्बुबिन्दवो यस्मिन् कर्मणि तद् यथा स्यात् तथा, [रोदितीव]। विरहासहिष्णुतया रोदनं करोतीव इत्युत्प्रेक्षा रूपकसङ्कीर्णा। "रुदादिभ्यः सार्वधातुके" ( ७।२।७६ पा० ) इतीड़ागमः ॥ ३८ ॥

बह्विति।—[ अह्नि ] दिवसे, [ व्यपगतमदया मुग्धबध्वा, सखीभ्यो विदितं ] रात्रौ त्वयेत्थं कृतमिति सखीभिराख्यातमित्यर्थः ; [ रात्रिवृत्तं ] रात्रौ कृतं स्वचेष्टितमित्यर्थः ; [ मत्ता ] मदमूढ़ा, [ अहं, तस्य ] प्रियस्य, [ पुरस्तात् ] अग्रे, [ बहु ] अनेकं, [ जगद किल ] गदामि स्म, किलेति ऐतिह्ये। अत एव परोक्षे लिट् "णलुत्तमो वा" (७।१।९१ पा०) इति पक्षे णित्त्वाभावाद्वृद्ध्यभावः। [ च ] पुनः, प्रौढ़योषिता तुल्यं [ प्रौढ़योषिद्वत् ] इत्युपमा। "तेन तुल्यं—" ( ५।१।११५ पा० ) इति वतिप्रत्ययः। [ अस्य ] प्रियस्य, [ चाटु ] प्रियवचनं, [ चकार किल ] अकार्षं किल। लिड़ादिपूर्ववद्गुणो विशेषः। [ इति, विचिन्त्य ] विमृश्य, [ व्रीड़ितं ] लज्जितम्। भावे क्तः। निजकार्य्यप्रकाशेन लज्जाऽत्र सञ्चारी भावः। भावनिबन्धनात्प्रेयोऽलङ्कारः ॥ ३९ ॥

अरुणजलजराजीमुग्धहस्ताग्रपादा
बहुलमधुपमालाकज्जलेन्दीवराक्षी ।
अनुपतति विरावैः पत्रिणां व्याहरन्ती
रजनिमचिरजाता पूर्वसन्ध्या सुतेव ॥ ४० ॥
प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामिधेनीरधीत्य ।

---

अरुणेति ।—[ अरुणजलजराजीमुग्धहस्ताग्रपादा ] अरुणजलज-राज्येव रक्तकमलश्रेण्येव, * मुग्धं सुन्दरं, हस्ताग्रपादं हस्तौ च अग्रपादौ च यस्याः सा ; बहुलं मधुपमालाकज्जलं † कज्जलमिव ‡ मधुपमाला ययोस्ते अक्षिणी, § इन्दीवरे इव ¶ यस्याः सा [ बहुलमधुपमालाकज्ज-लेन्दीवराक्षी, पत्रिणां ] पक्षिणां, [ विरावैः, व्याहरन्ती ] आलपन्ती । 'व्याहार उक्तिर्लपितम्' इत्यमरः । [ अचिरजाता ] सद्योभवा, बाला च, [ पूर्वसन्ध्या ] प्रातःसन्ध्या, [ सुतेव ] पुत्रीव, [ रजनिम्, अनुपतति ] अनुधावति, जननीमिवेत्यर्थः । इह विरावैर्व्याहरन्तीति व्यधिकरण-परिणामः तत्सङ्कीर्णेयमेकदेशविवर्त्तिन्युपमा, रूपकन्त्वङ्गम् ॥ ४० ॥

प्रतीति ।—अग्निराहितो यैस्तेषाम् [ अग्न्याहितानाम् ] । ** "वाहिताग्न्यादिषु" ( २।२।३७ पा० ) इति निष्ठायाः वैकल्पिकः पर-निपातः । [ प्रतिशरणं ] प्रतिगृहम् । 'शरणं गृहरक्षित्रोः' इत्यमरः ।

---

* अत्र अरुणजलजराजीव इत्यर्थक "सेव च" अधिक पाठः इति केचित् ।

† मधुपमालेव कज्जलम् इत्येव पाठः इति केचित् ।

‡ च, इत्यधिक पठनीयः इति केचित् ।

§ अत्र "अक्षिणी" इति कैश्चित् न पठ्यते ।

¶ अत्र इवशब्दः कैश्चित् न पठ्यते, प्रत्युत "एव, ते इव च अक्षिणी" इति अधिकश्च पठ्यते इति ।

** आहिताग्नीनामित्यर्थ ।

कृतगुरुदुरितौघध्वंसमध्वर्युवर्यै-
र्हुतमयमुपलीढे साधु सान्नाय्यमग्निः ॥ ८१ ॥

[ अशीर्णज्योतिः ] अक्षतार्चिः, [ अयम्, अग्निः ] आहवनीयः, [ विधि-विहितविरिब्धैः ] विधिना "यज्ञकर्मण्यजपन्यजुः सामसु" इत्यादिशास्त्रोक्तरीत्या विहिता यथायोगमुच्चारिता विरिब्धाः स्वरा एकश्रुत्यादयः चत्वारो यैस्तैः। "क्षुब्धस्वान्त—" (७।२।१८ पा०) इत्यादिना "रेभृ शब्दे" इति धातोः स्वरे विरिब्धशब्दो निष्ठान्तोऽनिट्त्वेन निपातितः। [ अध्वर्युवर्यैः ] ऋत्विक्श्रेष्ठैः, ऋत्विग्विशेष-वाचिना अध्वर्युशब्देन ऋत्विङ्मात्रलक्षणात्; यद्वा,—अध्वर्युः वर्यो मुख्यो येषां तैः, अध्वर्युप्रमुखैः चतुर्भिः ऋत्विग्भिरित्यर्थः। "तस्माद्दर्श-पौर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विजः" इति श्रवणात्। दर्श-श्चायं सर्वत्रैव सान्नाय्यविधानादिति [ सामिधेनीः ] "प्रवोवाजा" इत्यादिका अग्निसमिन्धनीः ऋचः, [ अधीत्य ] पठित्वा। 'ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने' इत्यमरः। सामिधेनी-ग्रहणं याज्यापुरोनुवाक्यादिमन्त्रान्तराणामप्युपलक्षणम्। [ कृतगुरुदुरि-तौघध्वंसम् ] कृतो गुरुतरदुरितानामोघस्य ध्वंसो यस्मिन् कर्मणि तद्‌ यथा तथा, [ साधु ] सम्यक्, [हुतं] देवतोद्देशेन त्यक्तम्; सन्नीयत इति [ सान्नाय्यं ] हविर्विशेषम्। "ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावा-स्यायाम्" इति विहिते दधिपयसी इत्यर्थः। "पाय्यसान्नाय्य-निकाय्य—" (३।१।१२९ पा०) इत्यादिना हविर्विशेषे सम्पूर्वान्नयते-र्ण्यन्तादायादेशोपसर्गदीर्घनिपातः। [ उपलीढे ] आस्वादयति। "लिह आस्वादने" इति धातोः स्वरितेत्त्वाल्लटि तङि टेरेत्वं ढत्वधत्वष्टुत्वढलोपदीर्घाः। अत्राग्नेः सान्नाय्योपलेहनस्योत्तरकालभावि-त्वेऽपि तदुपलक्षितस्य कर्मण उदिते आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमति "प्रागुदयादमावास्यायाः" इति शास्त्रात् तत्कालप्रक्रान्तस्य वर्त्तमानत्वात् तस्यापि वर्त्तमानताव्यपदेशः। एतच्चाहिताग्नित्वमात्रेण कालविशे-

प्रकृतजपविधीनामाऽऽस्यमुद्रश्मिदन्तं
मुहुरपिहितमोष्ठ्यैरक्षरैर्लक्ष्यमन्यैः ।
अनुकृतिमनुवेलं घट्टितोद्घट्टितस्य
व्रजति नियमभाजां मुग्धमुक्तापुटस्य ॥ ४२ ॥
नवकनकपिशङ्गं वासराणां विधातुः
ककुभि कुलिशपाणेर्भाति भासां वितानम् ।

षानादरेणोक्तमिति पूर्वोक्तचन्द्रोदयाद्यविरोधः ; अथवा,—उदिते जुहोत्यनुदिते जुहोति प्रातर्जुहोत्यग्निहोत्रं तत्कालत्वात् सामिधेनी-सानाय्यशब्दयोर्मन्त्रहविर्मात्रपरत्वमाश्रित्याग्निहोत्रपरत्वेन व्याख्येयम् । तस्मादग्निहोत्रस्य यज्ञक्रत्वोः एकर्त्विगित्येकाध्वर्युकत्वे अध्वर्युवर्य्यै-रिति बहुवचनं यजमानबहुत्वादुपपद्यत इत्याहुरित्यलं छान्दसगोष्ठी-व्यसनेन । वृत्त्यनुप्रासोऽलङ्कारः स्पष्ट एव ॥ ४१ ॥

प्रकृतेति ।—[ प्रकृतजपविधीनां ] प्रक्रान्तजपकर्मणां, [ नियम-भाजां ] तपस्विनां सम्बन्धि ; ओष्ठे भवैः [ ओष्ठ्यैः ] । "शरीरावयवाच्च" ( ४।३।५५ पा० ) इति यत्प्रत्ययः । [ अक्षरैः ] वर्णैः, उपूपध्मानीयै-रित्यर्थः । "उपूपध्मानीयानामोष्ठौ" * इत्यनुशासनात् । [ मुहुः, अपिहितम् ] आवृतम्, [ अन्यैः ] अनोष्ठ्यैरक्षरैः, [लक्ष्यं] दर्शनीयम् ; अत एव [ उद्रश्मिदन्तम् ] उद्रश्मय उन्नतांशवो दन्ता यस्य तत्, [ आस्यं ] मुखम्, [ अनुवेलं ] प्रतिक्षणं, [ घट्टितोद्घट्टितस्य ] प्राप्तित्वान्मुहुर्घटित-विघटितस्य । विशेषणसमासः । [ मुग्धमुक्तापुटस्य ] मुग्धं सुन्दरं, यन्मुक्तानां मुक्ताफलानां, पुटं कोटिः, शुक्तिरिति यावत्, तस्य, [ अनु-कृतिं ] साम्यं, [ व्रजति ] । उपमाऽलङ्कारः । एतेन श्लोकद्वयेन बहवः कर्मनिष्ठास्तपोनिष्ठाश्च ब्राह्मणा भगवन्तमनुयान्तीति कथितम् ॥ ४२ ॥

नवेति ।—[ कुलिशपाणेः ] कुलिशं पाणौ यस्य स कुलिशपाणि-

* "तुल्यास्यप्रयत्नं सवर्णम्" ( १।१।९ पा ) इति सूत्रे स्थानप्रयत्नविवेके दीक्षितैरुक्तम् ।

जनितभुवनदाहारम्भमम्भांसि दग्ध्वा
ज्वलितमिव महाब्धेरूर्द्ध्वमौर्वानलार्च्चिः ॥४३॥
विततपृथुवरत्रातुल्यरूपैर्मयूखैः
कलश इव गरीयान् दिग्भिराकृष्यमाणः।
कृतचपलविहङ्गाऽऽलापकोलाहलाभि-
र्जलनिधिजलमध्यादेष उत्तार्य्यतेऽर्कः ॥ ४४ ॥

---

रिन्द्रः। "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" (वा०) इति पाणिः परनिपातः। एतदेवात्र व्यधिकरणबहुव्रीहेश्च ज्ञापकम्। तस्य [ककुभिः] प्राच्यां दिशि, [नवकनकपिशङ्गं] नवकनकवत् पिशङ्गं, * [वासराणां विधातुः] दिनकरस्य, [भासां वितानं] करजालं [महाब्धे-रम्भांसि दग्ध्वा, जनितभुवनदाहारम्भं] कृतजगद्दाहोद्योगं सत्, [ऊर्द्ध्वम्] अब्धेरुपरि, [ज्वलितम्, औौर्वानलार्च्चिः] बड़वानलज्योतिः, [इव भाति] इत्युत्प्रेक्षा ॥ ४३ ॥

विततेति। [विततपृथुवरत्रातुल्यरूपैः] विततामिः प्रसारिताभिः, पृथुवरत्राभिः महारज्जुभिः, तुल्यरूपैः तुल्याकारैः, [मयूखैः] किरणैः, [गरीयान् कलश इवाऽऽकृष्यमाणः] सन्, [एषोऽर्कः, कृतचपलविहङ्गा-लापकोलाहलाभिः] कृतः चपलः सत्वरः, विहङ्गालाप एव कोलाहलः कलकलो याभिस्ताभिः, [दिग्भिः, जलनिधिजलमध्यात्] जलनिधेः जलमध्यात्, [उत्तार्य्यते] उद्ध्रियते। तरतेर्ण्यन्तात् कर्मणि लट्। यथा कुतश्चित् कूपात् कुम्भः पाशैराकृष्य सकलकलं बहुभिः स्त्रीभि-रुद्ध्रियते तद्वदिति भावः। अत्र वरत्रातुल्यरूपैः कलश इवेति चोप-माभ्यां विहङ्गालापकोलाहलेति रूपकेण चोज्जीविता अर्कस्य दिक्कर्तृकोत्तारणोत्प्रेक्षा, व्यञ्जकाप्रयोगात् प्रतीयमानेति सङ्करः ॥ ४४ ॥

---

* इत्युपमा।

पयसि सलिलराशेर्नक्तमन्तर्निमग्नः
स्फुटमनिशमतापि ज्वालया बाड़वाग्नेः ।
यदयमिदमिदानीमङ्गमुद्यन् दधाति
ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥४५॥

अतुहिनरुचिनाऽसौ केवलं नोदयाद्रिः
क्षणमुपरिगतेन क्ष्माभृतः सर्व एव ।
नवकरनिकरेण स्पष्टबन्धूकसून-
स्तवकरचितमेते शेखरं बिभ्रतीव ॥ ४६ ॥

उदयशिखरिशृङ्गप्राङ्गणेष्वेष रिङ्गन्
सकमलमुखहासं वीक्षितः पद्मिनीभिः ।

---

पयसीति।—[ अयं ] च [ विवस्वान्, नक्तं सलिलराशेः पयसि निमग्नोऽन्तर्बाड़वाग्नेर्ज्वालया अनिशम्, अतापि ] तप्तः, [स्फुटम्] इत्युत्प्रेक्षा। कुतः ? [ यदिदानीमुद्यन् इदं, ज्वलितखदिरकाष्ठाङ्गारगौरं ] ज्वलितः प्रज्वलन्, यः खदिरकाष्ठस्याङ्गारस्तद्वद्गौरमरुणम् [ अङ्गं दधाति ]। 'गौरोऽरुणे सिते पीते' इति विश्वः ॥ ४५ ॥

अतुहिनेति।—[ क्षणमुपरिगतेन ] स्थितेन, [ अतुहिनरुचिना ] अर्केण, [ केवलमसौ, उदयाद्रिः ] पूर्वाद्रिः, [ न ]। 'उदयः पूर्वपर्वतः' इत्यमरः। किन्तु [ एते, सर्व एव क्ष्माभृतः ] सर्वेऽपि शैलाः, क्षणमुपरिगतेन अवस्थितेन, [ नवकरनिकरेण, स्पष्टबन्धूकसूनस्तवकरचितं ] स्पष्टैः विकसितैः, बन्धूकसूनस्तवकैः बन्धुजीवककुसुमगुच्छैः, विरचितम्। 'बन्धूको बन्धुजीवकः' इत्यमरः। [ शेखरं ] शिखामाल्यम्। 'शिखास्वापीड़शेखरौ' इत्यमरः। [ बिभ्रतीव ] इत्युत्प्रेक्षा। न केवलमर्केणोदयाद्रिरेव बन्धूकशेखरं बिभर्त्ति, किन्तु तत्करजालेन सर्वेऽपि पर्वतास्तथेत्यर्थः ॥ ४६ ॥

विततमृदुकराग्रः शब्दयन्त्या वयोभिः
परिपतति दिवोऽङ्के हेलया बालसूर्य्यः ॥४७॥

क्षणमयमुपविष्टः क्ष्मातलन्यस्तपादः
प्रणतिपरमवेक्ष्य प्रीतमह्नाय लोकम् ।
भुवनतलमशेषं प्रत्यवेक्षिष्यमाणः
क्षितिधरतटपीठादुत्थितः सप्तसप्तिः ॥ ४८ ॥

---

उदयेति ।—[ एष ] बालः, उदितमात्र इत्यर्थः । बालश्चासौ सूर्य्यश्च [बालसूर्य्यः, उदयशिखरिशृङ्गप्राङ्गणेषु] उदयशिखरिशृङ्गस्य उदयाद्रिशिखरस्य, प्राङ्गणेषु, [रिङ्गन्] सञ्चरन्, [पद्मिनीभिः] नलिनीभिः, स्त्रीविशेषैश्च । 'पद्मिनी स्त्रीविशेषेऽपि' इति विश्वः । [ सकमलमुखहासं ] कमलान्येव मुखानि, तेषां हासेन विकासेन, हास्येन च, सह यस्मिन् कर्मणि तत् यथा तथा, [ वीक्षितः ] सन्, [ वयोभिः ] पक्षिभिः । 'वयः पक्षिणि बाल्यादौ' इति विश्वः । [ शब्दयन्त्याः ] शब्दं कुर्वन्त्याः । "आगच्छागच्छ वत्स !" इति व्याहरन्त्या इत्यर्थः । शब्दशब्दात् "तत्करोति—" ( ग० ) इति ण्यन्तात् लटः शतरि ङीप् । [ दिवः ] अन्तरिक्षस्य, मातुश्च, [ अङ्के ] समीपे, उत्सङ्गे च, [ विततमृदुकराग्रः ] विततानि प्रसृतानि, मृदूनि कराग्राणि किरणाग्राणि, हस्ताग्रे च, यस्य स सन्, [ हेलया] लीलया, [ परिपतति ] । श्लेषमूलाऽतिशयोक्त्यनुगृहीतरूपकम् ॥ ४७ ॥

क्षणमिति ।—[ अयं सप्तसप्तिः ] अर्कः, [ क्षणम्, उपविष्टः ] क्षितिधरपीठमध्यासीनः, [ क्ष्मातलन्यस्तपादः ] प्रणामस्वीकाराय भूतलप्रसारिताङ्घ्रिरित्यर्थः । [ प्रणतिपरं ] नमस्कारं कुर्वाणं, [ प्रीतं ] प्रणामस्वीकारात् सन्तुष्टं, [ लोकं] जनम्, [ अह्नाय ] झटिति, 'साक् झटित्यञ्जसाह्नाय' इत्यमरः । [अवेक्ष्य] रूपावलोकेन सम्भाव्य, [ अशेषं,

परिणतमदिराभं भास्करेणांशुबाणै-
स्तिमिरकरिघटायाः सर्वदिक्षु क्षतायाः ।
रुधिरमिव वहन्त्यो भान्ति बालाऽऽतपेन
च्छुरितमुभयरोधोवारितं वारि नद्यः ॥४९॥
दधति परिपतन्त्यो जालवातायनेभ्य-
स्तरुणतपनभासो मन्दिराभ्यन्तरेषु ।

---

भुवनतलं ] लोकस्वरूपं, [प्रत्यवेक्षिष्यमाणः] अनुसन्धास्यमानः, [ क्षिति-धरतटपीठात् ] क्षितिधरस्य तटं पीठमिव सिंहासनमिव ; अन्यत्र,—तटमिव पीठं तस्मात्, [ उत्थितः ] उदयाद्रिमतिक्रान्त इत्यर्थः । यथा कश्चित् महाराजः सिंहासनोपविष्टः क्षणं प्रणतजनमादृत्य अथ सकल-स्वराष्ट्रप्रत्यवेक्षणाय सहसोत्थाय गच्छति, तद्वदित्यर्थः । अत्र प्रकृतार्क-विशेषण-वैभवादप्रकृत-महाराजप्रतीतिः समासोक्तिः ॥ ४८ ॥

परिणतेति ।—[ नद्यः बालाऽऽतपेन, छुरितं ] रूषितम्, अत एव [ परिणतमदिराभं ] सुपक्वसुरासन्निभम् ; * उभाभ्यां रोधोभ्यां वारि-तम् अवरुद्धम्, [ उभयरोधोवारितम् ] । "उभादुदात्तो नित्यम्" ( ५।२।४४ पा० ) इत्यत्र नित्यग्रहणसामर्थ्यात् वृत्तिविषये उभशब्दस्य स्थाने उभयशब्दप्रयोग इत्युक्तं प्राक् । [ वारि ] जलं, [ भास्करेण ] । कस्कादित्वात् सत्वम् । [ अंशुबाणैः ] अंशुभिरेव बाणैः, [ सर्वदिक्षु, क्षतायाः ] प्रहृतायाः, [ तिमिरकरिघटायाः ] तिमिरमेव करिघटा गजसङ्घः † तस्याः, [ रुधिरमिव ] इत्युत्प्रेक्षा । [ वहन्त्यो भान्ति ] ॥ ४९ ॥

दधतीति ।—[ जालवातायनेभ्यः ] गवाक्षविवरेभ्यः, [ मन्दिरा-

---

* इत्युपमा ।

† इति रूपकम् ।

प्रणयिषु वनितानां प्रातरिच्छत्सु गन्तुं
कुपितमदनमुक्तोत्तप्तनाराचलीलाम् ॥ ५० ॥
अधिरजनि वधूभिः पीतमैरेयरिक्तं
कनकचषकमेतद्रोचनालोहितेन ।
उदयदहिमरोचिर्ज्योतिषाऽऽक्रान्तमन्त-
र्मधुन इव तथैवाऽऽपूर्णमद्यापि भाति ॥ ५१ ॥

---

भ्यन्तरेषु ] मन्दिराणामभ्यन्तरेषु, [ परिपतन्त्यः, तरुणातपनभासः ] बालार्ककिरणाः, [ वनितानां प्रणयिषु प्रातर्गन्तुमिच्छत्सु सत्सु, कुपितमदनमुक्तोत्तप्तनाराचलीलाम् ] कुपितेन मदनेन मुक्तानाम् उत्तप्तानाम् अग्निज्वलिततेजसां, नाराचानां बाणविशेषाणां, लीलां शोभां, [ दधति ]। अत्र लीलेव लीलेति सादृश्याक्षेपात् असम्भवद्वस्तुसम्बन्धो निदर्शनाऽलङ्कारः ॥ ५० ॥

अधीति ।—[ अधिरजनि ] रजन्याम् । विभक्त्यर्थेऽव्ययीभावः । [वधूभिः]। पीतं मैरेयं मद्यं यस्य तत्, अत एव रिक्तं [पीतमैरेयरिक्तम् एतत्, कनकचषकं ] स्वर्णस्य पानपात्रम् । अवयवषष्ठ्या विकारार्थता । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । [ रोचनालोहितेन ] गोरोचनाऽरुणेन, * [ उदयदहिमरोचिर्ज्योतिषा ] उदयत उदयमानस्य, अहिमरोचिषः अर्कस्य, ज्योतिषा तेजसा, [अन्तः] अभ्यन्तरे, [आक्रान्तं] व्याप्तं सत्, [अद्यापि] इदानीम् अपि, [तथैव] पूर्ववदेव, [मधुन आपूर्णम् इव] । सामान्यषष्ठ्या योग्यविशेषपर्यवसाननियमात् "षष्ठी शेषे" ( २।३।५० पा० ) इति सम्बन्धसामान्ये षष्ठी करणस्यापि कारणत्वात् इति । [ भाति ] शोभते । अत्रातपाऽऽक्रान्ते मधुपूर्णत्वोत्प्रेक्षया आतपे मधुभ्रमाद् भ्रान्तिमान् व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ ५१ ॥

---

* इत्युपमा ।

सितरुचि शयनीये नक्तमेकान्तमुक्तं
दिनकरकरसङ्गव्यक्तकौसुम्भकान्ति ।
निजमिति रतिबन्धोर्जानतीमुत्तरीयं
परिहसति सखी स्त्रीमाऽऽददानां दिनादौ ॥५२

प्लुतमिव शिशिरांशोरंशुभिर्यन्निशासु
स्फटिकमयमराजद्राजताद्रिस्थलाभम् ।
अरुणितमकठोरैर्वेश्म काश्मीरजाभः
स्नपितमिव तदेतद्भानुभिर्भाति भानोः ॥ ५३ ॥

सितेति।—[ नक्तं ] रात्रौ, [ शयनीये ] तल्पे, [ एकान्तमुक्तम् ] अत्यन्तत्यक्तं, [ सितरुचि ] शुभ्रवर्णम् ; किन्तु [ दिनादौ ] प्रभाते, [ दिनकरकरसङ्गव्यक्तकौसुम्भकान्ति ] दिनकरकरसङ्गेन अर्कांशुव्यतिकरेण, व्यक्ता कौसुम्भी कुसुम्भस्य रागद्रव्यस्य सम्बन्धिनी कान्तिर्यस्य तत् तथा भासमानं, [ रतिबन्धोः ] प्रियस्य, [ उत्तरीयं, निजम् ] आत्मीयम्, [इति जानतीम्] ; अत एव [आददानां, स्त्रीं] नायिकाम् । "वाम्शसोः" ( ६।४।८० पा० ) इतीयङभावपक्षे "अमि पूर्वः (६।१।१०७ पा० ) इति पूर्वरूपम् । [ सखी परिहसति ]। अत्राकौसुम्भे कौसुम्भभ्रमात् सादृश्यनिबन्धनो भ्रान्तिमदलङ्कारः तद्गुणोत्थापितया निदर्शनया सङ्कीर्य्यते ॥ ५२ ॥

प्लुतमिति।—[ राजताद्रिस्थलाभं ] सुधाधवलितत्वात् कैलासतटसन्निभं, * [ यत् वेश्म निशासु, शिशिरांशोः ] इन्दोः, [ अंशुभिः ] चन्द्रिकाभिः, [ प्लुतं ] धौतं सत्, [ स्फटिकमयं ] स्फटिकविकार [ इव, अराजत् ] रेजे, [ तत्, एतत् ] वेश्म, [ भानोः ] सूर्य्यस्य, [ अकठोरैः ] कोमलैः, [ भानुभिः, † अरुणितम् ] अरुणीकृतं सत्, [ काश्मीरजाम्भः

* इत्युपमा ।　　† अंशुभिः ।

सरसनखपदान्तर्दष्टकेशप्रमोकं
प्रणयिनि विदधाने योषितामुल्लसन्त्यः।
विदधति दशनानां सीत्कृताऽऽविष्कृताना-
मभिनवरविभासः पद्मरागानुकारम् ॥ ५४ ॥
अविरतदयिताऽङ्गाऽऽसङ्गसञ्चारितेन
च्छुरितमभिनवासृक्कान्तिना कुङ्कुमेन।
कनकनिकषरेखाकोमलं कामिनीनां
भवति वपुरवाप्तच्छायमेवातपेऽपि ॥ ५५ ॥

---

स्नपितम्] काश्मीरदेशे जातं काश्मीरजं कुङ्कुमं, तस्याम्भसा स्नपितं सिक्तम्, [इव भाति]। उत्प्रेक्षयोः संसृष्टिः ॥ ५३ ॥

सरसेति।—[प्रणयिनि योषितां, सरसनखपदान्तर्दष्टकेशप्रमोकं] सरसनखपदानाम् आर्द्रनखक्षतानाम्, अन्तः मध्ये, दष्टानां लग्नानां, केशानां शिरोरुहाणां, प्रमोकं प्रमोचनं, [विदधाने] सति, [सीत्कृताऽऽविष्कृतानां] सीत्कृतैः व्यथाऽऽविर्भूतसीत्कारैः, आविष्कृतानां, [दशनानामुल्लसन्त्यः] वैमल्याद्दन्तेषु प्रतिफलन्त्यः, [अभिनवरविभासः, पद्मरागानुकारं] पद्मरागाणाम् अनुकारम् अनुकरणं, [विदधति]। उपमाऽलङ्कारः, रविभासामारुण्यप्रतिपादकाभिनवविशेषणप्रसादलब्ध इति काव्यलिङ्गेन सङ्कीर्णः ॥ ५४ ॥

अविरतेति।—[अविरतदयिताऽङ्गाऽऽसङ्गसञ्चारितेन] अविरतेन अविच्छिन्नेन, दयितानां प्रेयसाम्, अङ्गस्य आसङ्गेन शरीरस्य सम्पर्केण, सञ्चारितेन सङ्क्रामितेन, [अभिनवासृक्कान्तिना] अभिनवस्यासृजो रक्तस्येव कान्तिर्यस्य तेन, [कुङ्कुमेन छुरितं कनकनिकषरेखाकोमलम्] कनकस्य या निकषे निकषोपले, रेखा राजिः, तद्वत्कोमलं मनोहरम्, इत्युपमा। [कामिनीनां वपुरातपेऽपि, अवाप्तच्छायं] लब्धवर्णोत्कर्षमेव,

सरसिजवनकान्तं बिभ्रदभ्रान्तवृत्तिः
करनयनसहस्रं हेतुमाऽऽलोकशक्तेः ।
अखिलमतिमहिम्ना लोकमाऽऽक्रान्तवन्तं
हरिरिव हरिदश्वः साधु वृत्रं हिनस्ति ॥ ५६ ॥

---

[भवति]। स्वतः सुवर्णस्य ततः कुङ्कुमाङ्कितस्य कामिनीगात्रस्य पुनर्बालाऽऽतपव्याप्तिरिति महती वर्णोत्कर्षसामग्रीति भावः। आतपे छाया अनातप इति विरोधाभासे अपिशब्दः। 'छाया त्वनातपे कान्तौ' इत्यमरः। अत्र सङ्क्रान्तकुङ्कुमच्छुरितत्वकनकनिकषरेखाकोमलत्वयोरुपमापेक्षया छायावाप्तिहेतुत्वादुपमासङ्कीर्णं काव्यलिङ्गं तदातपेऽप्यवाप्तच्छायमिति विरोधेन एकवाचकानुप्रवेशेन सङ्कीर्य्यते ॥ ५५ ॥

सरसीति।—[सरसिजवनकान्तं] सरसि जातानि सरसिजानि। "सप्तम्यां जनेर्डः" (३।२।९७ पा०) इति डः। "तत्पुरुषे कृति बहुलम्" (६।३।१४ पा०) इत्यलुक्। तद्वनस्य कान्तं प्रियम्; अन्यत्र,—तद्वत्कान्तं रम्यम्, [आ लोकशक्तेः] लोकलोचनानां विषयग्रहणशक्तेः, [हेतुम्] आलोकान्तरसहकृतानामेव तेषां तत्सामर्थ्यात्; अन्यत्र,—आलोकशक्तेः दर्शनव्यापारस्य, हेतुं, दर्शनसाधनम् इत्यर्थः। करा नयनानीव, अन्यत्र,—करा इव नयनानि, तेषां सहस्रं [करनयनसहस्रं, बिभ्रत्]। अभ्रान्ते नभोमध्ये वृत्तिर्यस्य सः [अभ्रान्तवृत्तिः]; अन्यत्र,—अभ्रान्ते मेघे, वृत्तिर्यस्य सः, मेघवाहन इत्यर्थः। 'अभ्रं नभः स्वर्गबलाहकेषु' इति विश्वः। हरितोऽश्वा यस्य स [हरिदश्वः] अर्कः, [हरिः] इन्द्रः, [इव, अतिमहिम्ना] अतिमहत्तया, स्ववृद्ध्येत्यर्थः। [अखिलं लोकम्, आक्रान्तवन्तं] व्याप्तवन्तम्, एकत्र,—प्रत्यक्षात्, अन्यत्र,—'स इषुमात्रमिषुमात्रं विष्वग्वर्द्धते। स इमान् लोकानावृणोत्' इत्यागमादिति भावः। [वृत्रं] ध्वान्तं, दानवञ्च त्वाष्ट्रं, [साधु, हिनस्ति] हन्ति। 'ध्वान्तारिदानवा वृत्राः' इत्यमरः। उपमा श्लेषो वा मतभेदात् * ॥५६॥

---

* श्लेषानुप्राणिता उपमेत्याधुनिकाः।

अवतमसभिदायै भास्वताऽभ्युद्गतेन
प्रसभमुडुगणोऽसौ दर्शनीयोऽप्यपास्तः।
निरसितुमरिमिच्छोर्यें तदीयाऽऽश्रयेण
श्रियमधिगतवन्तस्तेऽपि हन्तव्यपक्षे ॥ ५७ ॥

प्रतिफलति करौघे सम्मुखावस्थितायां
रजतकटकभित्तौ सान्द्रचन्द्रांशुगौर्य्याम्।
वहिरभिहतमद्रेः संहृतं कन्दरान्त-
र्गतमपि तिमिरौघं घर्मभानुर्भिनत्ति ॥ ५८ ॥

---

अवतमसेति।—[ अवतमसभिदायै ] अवतमसं तिमिरम्। "अवसमन्धेभ्यस्तमसः" (५।४।७९ पा०) इति समासान्तः अच्प्रत्ययः। यद्यपि 'क्षीणेऽवतमसं तमः' इत्युक्तं, तथाऽपीह विरोधात् विशेषानादरेण सामान्यमेव ग्राह्यम्। तस्य भिदायै भेदाय। "षिद्भिदादिभ्योऽङ्" ( ३।३।१०४ पा० ) इत्यङ्। [ अभ्युद्गतेन ] अभ्युदितेन, उद्यतेन च, [ भास्वता ] सूर्य्येण, [ दर्शनीयोऽपि असौ उडुगणः, प्रसभं ] बलात्, [अपास्तः]। तथा हि, [अरिं निरसितुमिच्छोर्यें, तदीयाऽऽश्रयेण] तदीयेनाऽऽश्रयेणाऽऽश्रयणेन, [ श्रियं ] सम्पदं, शोभाञ्च। 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि गद्यते' इति विश्वः। [ अधिगतवन्तः ] प्राप्तवन्तः, [ तेऽपि, हन्तव्यपक्षे ] बध्यकोटावेव; अरिवदरिपक्षा अपि वध्या एवेत्यर्थः। उडुगणोऽपि तमसि शोभते अतस्तत्पक्ष इति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५७ ॥

प्रतीति।—[घर्मभानुः] उष्णांशुः, [सम्मुखावस्थितायां, सान्द्रचन्द्रांशुगौर्य्यां ] सान्द्रचन्द्रांशुवद्गौर्य्यां धवलायामित्युपमा। "षिद्गौरादिभ्यश्च" (४।१।४१ पा०) इति ङीष्। [ रजतकटकभित्तौ ] रजतकटकमेव भित्तिस्तस्यां, [करौघे] स्वकिरणजाले, [प्रतिफलति] सति, [ अद्रेर्वहिरभिहतं,

वहिरपि विलसन्त्यः काममाऽऽनिन्यिरे य-
द्दिवसकररुचोऽन्तं ध्वान्तमन्तर्गृहेषु ।
नियतविषयवृत्तेरप्यनल्पप्रताप-
क्षतसकलविपक्षस्तेजसः स स्वभावः ॥ ५९ ॥

चिरमतिरसलौल्याद्बन्धनं लम्भितानां
पुनरयमुदयाय प्राप्य धाम स्वमेव ।
दलितदलकपाटः षट्पदानां सरोजे
सरभस इव गुप्तिस्फोटमर्कः करोति ॥ ६० ॥

---

कन्दरान्तर्गतं ] कन्दराणां दरीणाम्, अन्तर्गतं, [ संहतं तिमिरौघमपि भिनत्ति ]। पुरोगतरजतभित्तिप्रतिहतस्य निजतेजसः कन्दरान्तःप्रवेशादिति भावः। अत्र करौघस्यान्तःसम्बन्धाभावेऽपि सम्बन्धोक्तेरतिशयोक्तिः, कटकभित्तौ इति रूपकेण उक्तोपमया च संसृज्यते ॥ ५८ ॥

वहिरिति।—[ वहिर्विलसन्त्योऽपि, दिवसकररुचः ] अर्कभासः, [ अन्तर्गृहेषु ] गर्भाऽऽगारेषु, [ कामं ] यथेष्टं, [ ध्वान्तम्, अन्तं ] नाशम्, [ आनिन्यिरे ] प्रापयामासुः, इति [ यत् ]। नयतेर्द्विकर्मकात् कर्त्तरि लिट्। [सः] अन्तर्गृहध्वान्तनिरासः [नियतविषयवृत्तेः अपि] नियतविषये नियतस्थाने, वृत्तिर्यस्य तस्य, नियतदेशवर्त्तिनोऽपीत्यर्थः। "तृतीयादिषु" (७।१।७४ पा०) इति पुंवद्भावः। [ तेजसः, अनल्पप्रतापक्षतसकलविपक्षः ] अनल्पेन, प्रतापेन स्वप्रकाशेन, स्वप्रभावेणेवेत्यर्थः। 'प्रतापौ पौरुषाऽऽतपौ' इति वैजयन्ती। क्षतसकलविपक्षः निरस्तसमस्तप्रतिपक्षः, [ स्वभावः ]। तेजस्विनामेष स्वभावो यत् प्रतापेनैव परोच्छेदनम्, अतो युक्तम् अर्कभासामप्यन्तर्गृहध्वान्तहरणमित्यर्थः। अत्र समर्थ्यसमर्थकयोः सामान्यविशेषभावादर्थान्तरन्यासः ॥ ५९ ॥

चिरमिति।—[ अयमर्कः, पुनः ] भूयोऽपि, [ उदयाय ] स्ववृद्धये,

युगपदयुगसप्तिस्तुल्यसङ्ख्यैर्मयूखै-
र्दशशतदलभेदं कौतुकेनाऽऽशु कृत्वा ।
श्रियमलिकुलगीतैर्लालितां पङ्कजान्त-
र्भवनमधिशयानामाऽऽदरात् पश्यतीव ॥ ६१ ॥
अदयमिव कराग्रैरेष निष्पीड्य सद्यः
शशधरमहरादौ रागवानुष्णरश्मिः ।

---

[ स्वं ] स्वकीयम्, [ एव, धाम ] स्थानं, तेजो वा, [ प्राप्य, अतिरस-लौल्यात् ] अतिमात्रात्, रसेषु मकरन्देषु, विषयेषु च, लौल्यादासक्तेः, [सरोजे चिरं बन्धनं, लम्भितानां, ] प्रापितानां [ षट्पदानां, सरभसः ] सत्वरः, [ दलितदलकपाटः ] दलितं विघट्टितं, दलमेव कपाटं येन, स सन्, [ गुप्तिस्फोटं ] बन्धनमोक्षं, [ करोतीव ] इत्युत्प्रेक्षा । यथा कश्चित् पदभ्रष्टः पुनर्लब्धपदः पूर्ववदात्मबन्धूनागत्य स्वयमेव काराकपाटमुद्घाट्य मोचयति, तद्वदिति भावः * ॥ ६० ॥

युगपदिति ।—अयुगा विषमाः, सप्तयोऽश्वा यस्य सः [ अयुगसप्तिः ] सप्ताश्वः, अर्कः इत्यर्थः । युगशब्दस्य युग्मशब्दस्य च विशेष्यलिङ्गताऽव-गन्तव्या । [युगपत्] एकदैव, [तुल्यसङ्ख्यैः] सहस्रसङ्ख्यैरित्यर्थः, [ मयूखैः ] करैः, [ दशशतदलभेदं ] दश शतानि येषां तानि, दशशतानि, सहस्र-मित्यर्थः, तेषां दलानां, भेदं विघट्टनं, [ कौतुकेनाऽऽशु कृत्वा, अलि-कुलगीतैः ] अलिकुलस्य गीतैः, [ लालितां ] सत्कृतां, [ पङ्कजान्तर्भवन-मधिशयानां ] पङ्कजमेव अन्तर्भवनं गर्भगृहम्, अधिशयानाम् । "अधि-शीङ्स्थासां कर्म" ( १।४।४६ पा० ) इति कर्मत्वम् । [ श्रियमादरात् पश्यतीव ] इत्युत्प्रेक्षा, पङ्कजान्तर्भवनमिति रूपकगूढा । कश्चित् कान्तः कान्तामिवैकान्तगतामिति भावः ॥ ६१ ॥

अदयमिति ।—[ अहरादौ ] प्रभाते, [ रागवान् ] उदयरागवान्,

---

* अत्र श्लेषरूपकोत्प्रेक्षाणां संसृष्टिः ।

अवकिरति नितान्तं कान्तिनिर्यासमब्द-
स्रुतनवजलपाण्डुं पुण्डरीकोदरेषु ॥ ६२ ॥
प्रविकसति चिराय द्योतिताशेषलोके
दशशतकरमूर्त्तावक्षिणीव द्वितीये ।
सितकरवपुषाऽसौ लक्ष्यते सम्प्रति द्यौ-
र्विगलितकिरणेन व्यङ्गितैकेक्षणेव ॥ ६३ ॥

---

पुण्डरीकस्नेहवांश्च, [ एषः, उष्णरश्मिः ] अर्कः, [शशधरं] चन्द्रं, [कराग्रैः] रश्म्यग्रैः, हस्ताग्रैश्च, [ अदयं ] निर्दयं, [ सद्यो निष्पीड्य, अब्दस्रुतनवजल-पाण्डुम् ] अब्दात् मेघात्, स्रुतं स्रस्तं, नवजलमिव पाण्डु शुभ्रं, [ कान्ति-निर्यासं ] लावण्यसारं, [ पुण्डरीकोदरेषु ] पुण्डरीकाणां सिताब्जानाम्, उदरेषु अभ्यन्तरेषु, [नितान्तम्, अवकिरतीव] विक्षिपतीव । अत्र सूर्य्यो-दये चन्द्रस्य कान्तिक्षयात् पुण्डरीकाणां तत्प्रादुर्भावाच्च सूर्य्यश्चान्द्रीमेव कान्तिं पुण्डरीकस्नेहात् तेषु सिञ्चतीवेत्युत्प्रेक्षा ; यथा द्विषन्तं प्रपीड्य तदीयं वसुसारं सुहृदे प्रयच्छति, तद्वदिति भावः * ॥ ६२ ॥

प्रविकसतीति ।—[ द्योतिताशेषलोके ] द्योतितः प्रकाशितः, अशेष-लोको येन तस्मिन् । दश शतानि येषां ते, दशशताः, ते करा यस्याः सा, दशशतकरा सहस्रकरा, मूर्त्तिर्यस्य तस्मिन् [ दशशतकरमूर्त्तौ ] सूर्य्ये, [ द्वितीये, अक्षिणि ] चक्षुषि, [ इव, चिराय प्रविकसति ] सति, [सम्प्र-त्यसौ, द्यौः ] आकाशं, स्त्री च गम्यते । [ विगलितकिरणेन ] निष्प्रका-शेन ; सितकरं शुभ्रकिरणं, वपुर्यस्य तेन [ सितकरवपुषा ] चन्द्रेण ; व्यङ्गितं विकलीकृतम्, एकेक्षणम् एकनेत्रं यस्याः सा [ व्यङ्गितैकेक्षणा ] काणा [ इव लक्ष्यते ] । अत्र दिवः काणत्वमुत्प्रेक्ष्यते ; तच्च काणत्व-

---

* अत्र रागवानित्यभेदरूपातिशयोक्तिः कराग्रैरिति श्लेषस्य नवजलपाण्डुमित्यु-पमायाः क्रियोत्प्रेक्षायाश्च परस्परसापेक्षत्वात् सङ्करः ।

कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ह्री ! विचित्रो विपाकः ॥६४॥

व्रणमतुहिनधाम्नि प्रोष्य भूयः पुरस्ता-
दुपगतवति पाणिग्राहवद्दिग्बधूनाम् ।
द्रुततरमपयाति स्रंसमानांशुकोऽसा-
वुपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः ॥ ६५ ॥

---

मचित्वेनाध्यवसितेन निष्कासितेन चन्द्रेणेति सजातीयसङ्करः। तत्र "येनाङ्गविकारः" (२।३।२० पा०) इति तृतीया ॥ ६३ ॥

कुमुदेति।—[ कुमुदवनम् ], अपगता श्रीर्यस्य तत् [ अपश्रि ] विगत-शोभम्। "गोस्त्रियोरुपसर्ज्जनस्य" (१।२।४८ पा०) इति ह्रस्वत्वम्। [ अम्भोजषण्डं, श्रीमत् ] शोभायुक्तम्, [उलूकः] पेचकः, [ मुदं त्यजति ]; तस्य दिवाभीतत्वादिति भावः। [ चक्रवाकः प्रीतिमान् ]। रजनी-विरहाभावत्वात् तस्येति भावः। * [ अहिमरश्मिः ] उष्णांशुः, [ उदयं याति ; शीतांशुः ] इन्दुः, [ अस्तम् ] अदर्शनं, याति। अस्तमित्यव्ययम्। कथमेतद्वैषम्यं तत्राह, हतेति।—[हतविधिलसितानां] दुष्टदैवचेष्टितानां, [ विपाकः ] परिपाकः, तत्तत्प्राणिकर्मानुरूपफलदानप्रकार इति यावत्। [ विचित्रः ] विविधः, न त्वेकविध इत्यर्थः। [ह्री] इति विस्मये ; 'ह्री ह्री च विस्मये' इत्यमरः। विधिविपाकवैचित्र्याज्जगद्वैचित्र्यं युज्यते इति कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६४ ॥

व्रणमिति।—[ अतुहिनधाम्नि ] उष्णांशौ। दिशो बध्व इवेत्युप-मितसमासः। तासां [ दिग्बधूनां ], पाणिं गृह्णातीति पाणिग्राहः

---

* रजनीविरहात् विरहाभावात् तस्येति भावः) इत्येव युक्तः पाठः।

प्रलयमखिलतारालोकमह्नाय नीत्वा
श्रियमनतिशयश्रीः सानुरागां दधानः ।
गगनसलिलराशिं रात्रिकल्पावसाने
मधुरिपुरिव भास्वानेष एकोऽधिशेते ॥ ६६ ॥

---

निजभर्त्ता, तस्मिन्निव [पाणिग्राहवत्] । "तत्र तस्येव" (५।१।११६ पा०) इति तत्रेवार्थे वतिः । [ चिरं, प्रोष्य ] प्रवासं कृत्वा । प्रपूर्वाद्वसधातोः क्त्वा, तस्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" ( ७।१।३७ पा० ) इति ल्यपि, "वचिस्वपि—" ( ६।१।१५ पा० ) इत्यादिना सम्प्रसारणम् । [ भूयः ] पुनरपि, [पुरस्तात्] पूर्वस्यां दिशि, पूर्व्वमार्गे च, [ उपगतवति ] आगतवति सति, [ असौ चन्द्रः, उपपतिः ] जारः [ इव ] । 'जारस्तूपपति समौ' इत्यमरः । [ संस्रमानांशुकः ] शैषिकः कप्प्रत्ययः । गलद्रश्मिकः, स्रस्तवस्त्रश्च, [ नीचैः ] नम्रः सन्, [ पश्चिमान्तेन ] पश्चिमदिक्कोणेन, केनचिदपरद्वारेण च, [ द्रुततरम्, अपयाति ] अपसरति ; यथा पूर्वद्वारेण निजपतावागते पश्चान्मार्गेणोपपतिरपसरति, तद्वदित्यर्थः । उपमाऽलङ्कारः, श्लेषेण सङ्कीर्य्यते ॥ ६५ ॥

प्रलयमिति ।—[ अखिलतारालोकम् ] अखिलस्तारालोको लोक इव, तारा नक्षत्रं, तम्, अखिलं तारालोकम्, [ अह्नाय ] द्राक्, [प्रलयं] क्षयं, [नीत्वा], अत एव, यतोः, नास्त्यतिशयं सा अनतिशया, सर्वातिशायिनी,श्रीर्महिमा यस्य सः [अनतिशयश्रीः,सानुरागाम्] उदयरागवतीं, [ श्रियं ] शोभाम्, अन्यत्र,—सानुरागाम् अनुरागवतीं, श्रियं, रमाञ्च, [दधानः, एष भास्वानेकः, मधुरिपुः] विष्णुः, [इव], रात्रिः कल्पः * ब्राह्मं दिनम् इव, तस्य अवसानं तस्मिन् [ रात्रिकल्पावसाने ], † गगनं

---

* "दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम्" इत्यमरः ।

† ब्राह्म्यां रात्राविल्यर्थः ।

कृतसकलजगद्विबोधोऽवधूतान्धकारोदयः

क्षयितकुमुदतारकश्रीर्वियोगं नयन् कामिनः।

बहुतरगुणदर्शनादभ्युपेताल्पदोषः कृती

तव वरद! करोतु सुप्रातमह्नामयं नायकः॥ ६७॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये

प्रत्यूषवर्णनं नाम एकादशः सर्गः ॥ ११ ॥

---

सलिलराशिरिव तं [ गगनसलिलराशिम्, अधिशेते ] अधितिष्ठति। * अत्र मधुरिपुरिवेति वाक्यगतोपमैव समासगतोपमानां साधिका, इति सर्वत्रोपमितसमासाऽऽश्रयणमेवोचितम् ॥ ६६ ॥

कृतेति।—[कृतसकलजगद्विबोधः] कृताखिलजगत्प्रबोधः। अवधूतो विक्षिप्तः, अन्धकारस्य उदय उज्जृम्भणं, येन सः [ अवधूतान्धकारोदयः ] इति महागुणोक्तिः। दोषमाह,—[ क्षयितकुमुदतारकश्रीः ] क्षयिता नाशिता, कुमुदानां तारकाणाञ्च श्रीर्येन सः, [ कामिनः ] स्त्रीपुंसान्, [ वियोगं, नयन् ] प्रापयन्, तथाऽपि [बहुतरगुणदर्शनात्] बहुतरगुणस्य पूर्वोक्तमहागुणस्य, दर्शनात्, [अभ्युपेताल्पदोषः] अभ्युपेतो लोकैरङ्गीकृतः, अल्पदोषः पूर्वोक्त एव यस्य सः। 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति न्यायादिति भावः। अत एव [ कृती ] कृतार्थः, [अयमह्नां, नायकः] प्रभुः, सूर्य्यः इत्यर्थः, हे [ वरद ! ] कामद !, [तव, सुप्रातं] सुप्रभातं, [ करोतु ]। "आशिषि लिङ्लोटौ" ( ३।३।१७३ पा० ) इत्याशीरर्थे लोट्। शोभनं प्रातर्यस्येति सुप्रातः शोभनप्रातर्वानुच्यते। "सुप्रातसुश्व—" ( ५।४।१२० पा० ) इत्यादिना बहुव्रीहावच्प्रत्ययान्तो निपातितः। अत्र भावप्रधानो निर्देशः। तव

---

* "यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते ॥" इत्यागमात्।

# द्वादशः सर्गः ।

—○○—

इत्थं रथाश्वेभनिषादिनां प्रगे
गणो नृपाणामथ तोरणाद्बहिः ।
प्रस्थानकालक्षमवेषकल्पना-
कृतक्षणक्षेपमुदैक्षताच्युतम् ॥ १ ॥

---

सुप्रातं सुप्रभातत्वं करोत्वित्यर्थः । महामालिनीवृत्तमेतत्,—"यदिह नयुगलं ततो वेदरेफैर्महामालिनी" इति लक्षणात् ॥ ६७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाऽऽख्ये एकादशः सर्गः ॥ ११ ॥

---

एवं प्रभातं वर्णयित्वा भगवतः प्राभातिकप्रस्थानवर्णनाय प्रक्रमते, इत्थमिति ।—[ इत्थम् ] इत्थम्भूते, पूर्वसर्गोक्तविधे इत्यर्थः । [ प्रगे ] प्रातःकाले । 'सायं साये प्रगे प्रातः' इत्यव्ययेष्वमरः । [ अथ ] सूर्य्योदयानन्तरं, रथाश्वेभे निषीदन्तीति तेषां [रथाश्वेभनिषादिनां] रथेषु अश्वेषु इभेषु च स्थितानामित्यर्थः । [ नृपाणां गणः, तोरणात् ] भगवतः बाह्यद्वारात्, [ बहिः ]; "अपपरिबहिरञ्चवः पञ्चम्याः" ( २।१।१२ पा० ) इति पञ्चमीसमासविधानात् ज्ञापकात् पञ्चमी । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । [ प्रस्थानकालक्षमवेषकल्पनाकृतक्षणक्षेपं ] प्रस्थानकाले प्रयाणकाले, क्षम उचितः, वेषः आकल्पः ; "आकल्पवेषौ नेपथ्यम्' इत्यमरः । तस्य कल्पनया सम्पादनेन, कृतः क्षणक्षेपः क्षणविलम्बो येन तम्, [अच्युतं] हरिम्, [ उदैक्षत ] प्रतीक्षितवानित्यर्थः । अत्राच्युतविलम्बस्य विशेषणगत्या प्रतीक्षणहेतुत्वात्

स्वक्षं सुपत्रं कनकोज्ज्वलद्युतिं
जवेन नागान् जितवन्तमुच्चकैः।
आरुह्य तार्क्ष्यं नभसीव भूतले
ययावनुद्घातसुखेन सोऽध्वना ॥ २ ॥

---

पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। अस्मिन् सर्गे विषमपादयोर्जागत-मिन्द्रवंशा वृत्तम्,—'स्यादिन्द्रवंशा ततजै रसंयुतैः' इति लक्षणात्। समपादयोस्तु जागतमेव वंशस्थं वृत्तम्;—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्। तदेवमुभयमेलनादुपजातिभेदोऽयम्। अत एव त्रिष्टुबिन्द्रवज्रोपेन्द्रवज्रालक्षणानन्तरम्,—'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इत्युक्त्वोक्तम्,—'इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम' इति ॥ १ ॥

स्वक्षमिति।—[ सः ] हरिः, शोभनः अक्षश्चक्रधारणदारुभेदो यस्य तं [ स्वक्षम् ]। 'स्यादक्षश्चक्रधारणे' इति वैजयन्ती। अन्यत्र,—शोभनेन्द्रियम्। 'अथाक्षमिन्द्रिये' इत्यमरः। [ सुपत्रं ] शोभनं पत्रं वाहनं यस्य तं,स्वश्वमित्यर्थः; अन्यत्र,—सुपक्षम्। 'पत्रं वाहनपक्षयोः' इत्यमरः। [ कनकोज्ज्वलद्युतिं ] कनकरचनावन्तम्, अन्यत्र,—कनकवदुज्ज्वलद्युतिं, कनकवर्णमित्यर्थः। [जवेन, नागान्] गजान्, उरगांश्च, [जितवन्तं] ततोऽधिकवेगमित्यर्थः। अन्यत्र,—नागान्तकमित्यर्थः। [ उच्चकैः ] उन्नतं, [ तार्क्ष्यं ] रथं, गरुड़ञ्च। 'तार्क्ष्यः स्यादश्वकर्णाऽऽख्यवृक्षे रथतुरङ्गयोः। तार्क्ष्यं रसाञ्जने तार्क्ष्यो गरुड़े गरुड़ाग्रजे॥' इति विश्वः। [ आरुह्य नभसीव भूतले, अनुद्घातसुखेन ] अनुद्घातेन अप्रतिघातेन, सुखः सुगमः तेन, [अध्वना, ययौ] गरुड़मारुह्य नभसीव, रथमारुह्य भूतलेऽप्यप्रतिहतं ययौ। गरुड़वदेव तद्रथस्यापि सर्वत्राप्रतिहतगतित्वादित्यर्थः। नायं श्लेषः, प्रकृताप्रकृतवादेऽपि तार्क्ष्यमिति विशेष्यश्लेषायोगात् अन्यत्राप्रसङ्गाच्च श्लेषसङ्कीर्णेयमुपमा ॥ २ ॥

हस्तस्थिताखण्डितचक्रशालिनो
द्विजेन्द्रकान्ताः श्रितवक्षसः श्रिया।
सत्यानुरक्ता नरकस्य जिष्णवो-
गुणैर्नृपाः शार्ङ्गिणमन्वयासिषुः ॥ ३ ॥
शुक्लैः सतारैर्मुकुलीकृतैः स्थुलैः *
कुमुद्वतीनां कुमुदाकरैरिव।

---

हस्तेति।—अत्र नृपविशेषणानि शार्ङ्गिण्यपि विभक्तिविपरिणामेन योज्यानि। [हस्तस्थिताखण्डितचक्रशालिनः] हस्तस्थितैरखण्डितैः चक्रैः चक्ररेखाभिः, शालन्त इति तथोक्ताः; अन्यत्र,—चक्रं सुदर्शनं, तच्छालिनम्। [द्विजेन्द्रकान्ताः] ब्राह्मणोत्तमप्रियाः, अन्यत्र,—द्विजेन्द्रश्चन्द्रः। 'तस्मात्सोमराजानो ब्राह्मणाः' इति श्रुतिः। अत एव 'द्विजराजः शशधरः' इत्यमरः। तद्वत् कान्तं सुन्दरं, [श्रिया] शोभया, [श्रितवक्षसः] व्याप्तोरस्काः; अन्यत्र,—रमयाऽधिष्ठितोरस्कम्; [सत्यानुरक्ताः] सत्ये सत्यवचने, अनुरक्ताः; अन्यत्र,—सत्यायां सत्यभामायाम्, अनुरक्तम्। [नरकस्य,† जिष्णवः] जेतारः, अन्यत्र,—नरकासुरस्य जेतारम्। "ग्लाजिस्थश्च" (३।२।१३९ पा०) इति क्स्नुः। 'नरको निरये दैत्ये' इति विश्वः। एवम्भूताः [नृपाः] एवम्भूतं [शार्ङ्गिणं, गुणैः] विनयादिभिर्हेतुना, [अन्वयासिषुः] अनुजग्मुः, गुणैः पूर्वोक्तैरन्वकार्षुश्च। यातेर्लुङि च्लेः सिच्। "यमरम—" (७।२।७३ पा०) इति समागमः सिच इडागमश्च। "सिजभ्यस्त—" (३।४।१०९ पा०)

---

* सर्वत्र दीर्घस्वरमध्यस्य स्थूलशब्दस्य प्रयोगसत्त्वेन, अत्र तु छन्दोऽनुरोधात् केवलं ह्रस्वस्वरमध्यपाठेन तदन्यथाऽऽचरणात् अनुशासनहीनतया च्युतसंस्कारताऽऽख्यदोष इति ज्ञेयं, स्थूलयति बृंहणार्थकस्य चौरादिकस्य कर्त्तरि पचि स्थूलशब्दस्य सिद्धेरिति।

† निरयस्येत्यर्थः।

व्युष्टं प्रयाणञ्च वियोगवेदना-
विदूननारीकमभूत् समं तदा ॥ ४ ॥
उत्क्षिप्तगात्रः स्म विडम्बयन् नभः
समुत्पतिष्यन्तमगेन्द्रमुच्चकैः ।

---

इति श्लेषः । अत्र शार्ङ्गिणो नृपाणाञ्च प्रकृतत्वात् शब्दमात्रसाधर्म्याच्च केवलप्रकृतविषयः शब्दश्लेषः ॥ ३ ॥

शुक्लैरिति ।—[ शुक्लैः ] शुभ्रैः, [ सतारैः ] सरज्जुकैः, सकर्णिकैश्च, [मुकुलीकृतैः] वहनसौकर्य्याय सङ्कोचितैः ; अन्यत्र,—रात्रिविकाशित्वात् मुकुलतां नीतैः, [ स्थूलैः ] दीर्घैः, पटमण्डपैरिति यावत् ; [ कुमुदाकरैः ] कुमुदकन्दैः, [ इव ] उपलक्षितम् ; अन्यत्र,—स्थूलैरिव कुमुदाकरैः उपलक्षितम् ; [ वियोगवेदनाविदूननारीकं ] वियोगवेदनया विरहव्यथया, विदूनाः परितप्ताः ; "ल्वादिभ्यः" ( ८।२।४४ पा० ) इति निष्ठानत्वम् । ता नार्य्यो यस्मिंस्तत् तथोक्तम् । द्वयोरपि वियोगकालत्वादिति भावः । "नद्यृतश्च" ( ५।४।१५३ पा० ) इति कप् । कुमुदान्यासु सन्तीति कुमुद्वत्यः कुमुदप्रायाः भूमयः । 'कुमुद्वान् कुमुदप्राये' इत्यमरः । कैरविण्यो वा । 'कुमुद्वती कैरविण्याम्' इति विश्वः । "कुमुदनडवेतसेभ्यो ड्मतुप्" ( ४।२।८७ पा० ) इति ड्मतुप्प्रत्ययः, "मादुपधायाः—" ( ८।२।९ पा०) इति मकारस्य वत्वम् । तासां [कुमुद्वतीनां ] सम्बन्धे, [ व्युष्टं ] प्रभातम् । 'व्युष्टं प्रभातं प्रत्यूषम्' इत्यभिधानचिन्तामणिः । तत्र किञ्चित्करत्वात् तत्सम्बन्धित्वं [ प्रयाणञ्च] सेनानामिति शेषः । [ तदा ] तस्मिन् काले, [ समम् ] उक्तरीत्या अन्योऽन्यसदृशम्, [ अभूत् ] । व्युष्टप्रयाणयोर्द्वित्वेऽपि समुदायविवक्षायामभूदित्येकवचनम् ; व्युष्टं प्रयाणञ्च द्वयमपि सममभूदित्यर्थः । अत्र वर्ण्यत्वेन प्रकृतस्य प्रयाणस्य प्रकृतव्युष्टसाम्योक्तेरुपमा श्लेषसङ्कीर्णा, तया चोपमेयोपमा व्यज्यते ॥ ४ ॥

उत्क्षिप्तेति ।—[ उत्क्षिप्तगात्रः ] उन्नमितपूर्वकायः, अत एव

आकुञ्चितप्रोहनिरूपितक्रमं
करेणुरारोहयते निषादिनम् ॥ ५ ॥
स्वैरं कृताऽऽस्फालनलालितान् पुरः
स्फुरत्तनून् दर्शितलाघवक्रियाः ।
वङ्क्षावलग्नैकसवल्गपाणय-
स्तुरङ्गमानारुरुहुस्तुरङ्गिणः ॥ ६ ॥

[ नभः ] खं, प्रति * [ समुत्पतिष्यन्तम् ] उत्पतनोद्युक्तम्, [ अगेन्द्रं ] महाद्रिं, [ विडम्बयन् ] अनुकुर्वन्, इत्युत्प्रेक्षा। अभूतोपमेति केचित्। [ उच्चकैः ] उन्नतः, [ करेणुः ] इभः। 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः। [ आकुञ्चितप्रोहनिरूपितक्रमम् ] आकुञ्चितो नमितः, प्रोहः गजाङ्घ्रिः। 'गजाङ्घ्रिः प्रोहः' इति विश्वः। तत्र निरूपितक्रमं कृतपादन्यासं, [ निषादिनं ] यन्तारम्, [ आरोहयते स्म ] स्वयमेव स्वात्मन्यारोहयति स्म इत्यर्थः। रोहिर्गत्यर्थत्वात्, "गतिबुद्धि—"(१।४।५२ पा०) इत्यादिना अणिकर्त्तुर्निषादिनः कर्मत्वम्। अत्र कर्त्रभिप्राये, "णिचश्च" ( १।३।७४ पा० ) इत्यात्मनेपदे सिद्धेऽपि प्रयोगवैचित्र्यस्या-प्यलङ्कारत्वादकर्त्रभिप्रायेऽपि, "णेरणौ यत्कर्म णौ चेत्स कर्त्ताऽनाध्याने" ( १।३।६७ पा० ) इति आत्मनेपदं वदन्ति। अणिकर्मणः करेणोरे-वात्र ण्यन्ते कर्त्तृत्वात् तस्यैव चाणौ कर्मत्वादिति। ननु यत् सग्रह-णमनन्यकर्मार्थमित्युक्तं, तेन कर्ममात्रनिषेधात् कथं निषादिनि कर्मण्या-त्मनेपदम्? सत्यम्। अन्येषां मतम्। भाष्यकारस्य तु "दर्शयते भृत्यान् राजा" इत्युदाहरणादणिकर्तृकर्मव्यतिरिक्तकर्मण एव निषेधो विवक्षित इति कैयटः। तदेतत् सम्यग्विवेचितमस्माभिः किरातार्जुनीयटीकायां घण्टापथे 'स सन्ततं दर्शयते गतस्मयः' ( १म स० १० श्लोकः ) इत्यत्र। स्वभावोक्तिरलङ्कारः ॥ ५ ॥

स्वैरमिति।—[ तुरङ्गिणः ] अश्वारोहाः, [ पुरः ] पूर्वं, [स्वैरं] मन्दं,

* इति शेषः।

अङ्गाय यावन्न चकार भूयसि
निषेदिवानाऽऽसनबन्धमध्वने ।
तीव्रोत्थितास्तावदसह्यरंहसो
विशृङ्खलं शृङ्खलकाः प्रतस्थिरे ॥ ७ ॥
गण्डोज्ज्वलामुज्ज्वलनाभिचक्रया
विराजमानां नवयौवनश्रिया ।

---

[कृताऽऽस्फालनलालितान्] कृतं यत् आस्फालनं पाणितलेनाङ्गसङ्घट्टनं, तेन लालितान् अनुपालितान्, त्याजितोद्वेगानित्यर्थः ; अत एव [स्फुरत्तनून्] कम्पितदेहान्, [तुरङ्गमान्] अश्वान्, [दर्शितलाघवक्रियाः] दर्शितं लाघवं शैघ्र्यं यासु, ताः, क्रियाः उत्पतनकर्माणि येषां ते, [वङ्कावलग्नैकसवल्गपाणयः] वङ्कः पल्याणकोटिः । 'वङ्कः पल्याणभागे स्यात्' इति विश्वः । तत्रावलग्नः सक्तः, एकः एकैकः, * सवल्गः मुखरज्जुसहितः, पाणिर्येषां ते तथोक्ताः सन्तः, [आरुरुहुः] आरूढाः । स्वभावोक्तिरलङ्कारः ॥ ६ ॥

अङ्गायेति ।—[निषेदिवान्] उपर्य्युपविष्टः, निषादीति शेषः । "भाषायां सदवसश्रुवः" (३।२।१०८ पा०) इति क्वसुप्रत्ययः । [भूयसि] दवीयसि, [अध्वने] भूयांसमध्वानं गन्तुमित्यर्थः । "क्रियार्थोपपदस्य—" (२।३।१४ पा०) इति चतुर्थी । [अङ्गाय] झटिति । 'स्राक् झटित्यञ्जसाह्नाय' इत्यमरः । [यावत्, आसनबन्धं] दूराध्वगमनोपयिकमासनविशेषं, [न चकार तावत्, तीव्रोत्थिताः] तीव्रं तीक्ष्णम्, उत्थिताः, [असह्यरंहसः] दुःसहवेगाः, [शृङ्खलकाः] करभाः, उष्ट्रभेदाः इति यावत् । 'करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः' इत्यमरः । [विशृङ्खलम्] अनर्गलं, [प्रतस्थिरे] प्रस्थिताः । "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम् । एषाऽपि स्वभावोक्तिः ॥ ७ ॥

---

* वृत्तिविषये सङ्ख्याशब्दस्य वीप्सार्थत्वं सप्तपर्णादिवत् ।

कश्चित्सुखं प्राप्तुमनाः सुसारथी-
रथीं युयोजाविधुरां वधूमिव ॥ ८ ॥
उत्थातुमिच्छन् विधृतः पुरोबला-
न्निधीयमाने भरभाजि यन्त्रके ।

---

गण्डेति ।—[ सुखम् ] अक्लिष्टं यथा तथा, प्राप्तुं गन्तुं, मनो यस्य सः [ प्राप्तुमनाः ]; अन्यत्र,—सुखम् आनन्दं, लब्धुकामः । "तुङ्काम-मनसोरपि" ( का० ) इति मकारलोपः । शोभनः सारथिर्यस्य सः [ सुसारथिः ]; अन्यत्र,—सुसहायवान् । [ कश्चित् ] कोऽपि रथी, कामी च, [ गण्डोज्ज्वलां ] गण्डैश्चिह्नैः, उज्ज्वलाम् ; अन्यत्र,—कपोलो-ज्ज्वलाम् । 'गण्डः कपोले चिह्ने च' इति विश्वः । उज्ज्वले नाभि-बिलमध्यं ययोस्ते, चक्रे रथाङ्गे यस्यास्तया [ उज्ज्वलनाभिचक्रया ]; अन्यत्र,—उज्ज्वलं नाभिचक्रं नाभिमण्डलं यस्यास्तया । 'नाभिः प्राण्य-ङ्गके चैत्रे चक्राङ्गचक्रवर्त्तिनोः' इति विश्वः । [ नवया ] प्रत्यग्रया, [ उदरश्रिया ] उदुन्नता, अराश्चक्रशलाकाः । 'अरः शीघ्रे च चक्राङ्गे' इति विश्वः । तेषां श्रिया ; अन्यत्र,—उदरस्य मध्यस्य, श्रिया शोभया, [ विराजमानाम्, अविधुरां ] विगता धूरग्रं यस्याः सा विधुरा । 'धूः स्त्री क्लीवे यानमुखम्' इत्यमरः । "ऋक्पूर्" ( ५।४।७४ पा० ) इत्या-दिना समासान्तः । सा न भवतीत्यविधुरा तां, सधुरामित्यर्थः ; अन्यत्र,—अविधुराम् अविकलां, [ रथीं ] शकटीम् । "बह्वादिभ्यश्च" ( ४।१।४७ पा० ) इति विकल्पेन ङीष् । [ वधूमिव, युयोज ] योज-यामास । अत्र शब्दमात्रसाधर्म्यात् सभङ्गाभङ्गपदमिश्रणादुभयगोचर-त्वाच्च प्रकृताप्रकृतगोचरः शब्दार्थश्लेषः ॥ ८ ॥

उत्थातुमिति ।—रौतीति [ रवणः ] उष्ट्रः । 'रु शब्दे' इति धातोः "चलनशब्दार्थादकर्म्मकात् युच्" ( ३।२।१४८ पा० ) इति युच्-प्रत्ययः । भारारोपणाय यन्त्ररूपेण निर्म्मिते [ भरभाजि ] भारयुक्ते,

अर्द्धोज्झितोद्गारविभर्भरस्वरः
स्वनाम निन्ये रवणः स्फुटार्थताम् ॥ ९ ॥
नस्यागृहीतोऽपि धुवन् विषाणयो-
र्युगं ससूत्कारविवर्त्तितत्रिकः ।
गोणीं जनेन स्म निधातुमुद्धृता-
मनुच्चणां नोच्चतरः प्रतीच्छति ॥ १० ॥

---

[यत्रके] गोण्यादौ, [निधीयमाने] सति, [बलात्, उत्थातुमिच्छन्] उत्थाय गन्तुमिच्छन्, अत एव [ पुरः ] सुखभागी, [ विधृतः ] गृहीतः, एवं स्वैर-चारव्याघाततः [ अर्द्धोज्झितोद्गारविभर्भरस्वरः ] अर्द्धोज्झितेनोद्गारे ण स्वजग्धपिचुमर्द्दादिपलरसनेन, विभर्भरो विषमः, स्वरो यस्य सः, रवणः उष्ट्रः, [ स्वनाम स्फुटार्थतां निन्ये ]। रौतीति रवण इति व्युत्पन्नं स्वनाम यथार्थमकरोदित्यर्थः * ॥ ९ ॥

नस्येति।—[ नस्यागृहीतः ] नासिकायां भवा नस्या। दिगादि-त्वात् यत्। † नासिकाया नसादेशः। तस्यां नासिकाप्रोतरज्जौ, गृहीतः [अपि विषाणयोर्युगं, धुवन्] विधुन्वन्, शृङ्गद्वयं कम्पयन् इत्यर्थः। [ ससूत्कारविवर्त्तितत्रिकः ] सूत्कार इति शब्दानुकरणम्, अमर्षजः सशब्दनिश्वासो वा, ससूत्कारं यथा तथा, विवर्त्तितं त्रिकं पृष्ठवंशाधर-सन्धिर्येन। 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः। [ उच्चतरः ] महोच्चः पृष्ठे, [ निधातुं जनेनानुच्चणामुद्धृतां गोणीं, न प्रतीच्छति स्म] न स्वीकृत-वान्, निधातुमवसरं न दत्तवानित्यर्थः ‡ ॥ १० ॥

---

* अद्धत्यादिविशेषणस्य नामस्फुटार्थतानयनं प्रति हेतुत्वात् काव्यलिङ्गमलङ्कारः।

† "दिगादिभ्यो यत्" ( ४।३।५४ पा० )।

‡ स्वभावोक्तिरलङ्कारः।

नानाविधाऽऽविष्कृतसामजस्वरः
सहस्रवर्त्मा चपलैर्दुरध्ययः ।
गान्धर्वभूयिष्ठतया समानतां
स सामवेदस्य दधौ बलोदधिः ॥ ११ ॥

प्रत्यन्यनागं चलितस्त्वरावता
निरस्य कुण्ठं दधताऽन्यमङ्कुशम् ।
मूर्द्धानमूर्द्ध्वायतदन्तमण्डलं
धुवन्नरोधि द्विरदो निषादिना ॥ १२ ॥

---

नानेति ।—[ नानाविधाऽऽविष्कृतसामजस्वरः ] सामजाः गजाः । 'सामजो गजसामोत्थौ' इति शाश्वतः । नानाविधमाविष्कृताः सामजानां स्वराः ध्वनयः, बृंहितानि इति यावत्, यस्मिन् सः, [ सहस्रवर्त्मा ] बहुभिर्मार्गैर्गच्छन् । [ गान्धर्वभूयिष्ठतया ] गन्धर्वा एव गान्धर्वा अश्वाः । 'वाजिवाहार्वगन्धर्व—' इत्यमरः । तैर्भूयिष्ठतया, [ चपलैः ] अस्थिरैः, [ दुरध्ययः ] दुष्प्रापः । 'इण् गतौ' इत्यस्मात् कृच्छ्रार्थे खल् । ईदृशः [ सः बलोदधिः ] सेनासमुद्रः, [ सामवेदस्य, समानतां दधौ ] तत्समोऽभूदित्यर्थः । सामवेदोऽपि बहुधाऽऽविष्कृतबृहद्रथन्तरादिसामोत्थितस्वरः ; सहस्रशाखत्वात् सहस्रवर्त्मा , गान्धर्वगानबहुत्वात् चपलमतिभिः अध्येतुमशक्य इत्यर्थः । 'इङ् अध्ययने' इत्यस्माद्धातोः खलि दुरध्यय इत्येवं रूपम् * ॥ ११ ॥

प्रत्यन्येति ।—[ अन्यनागं प्रति चलितः † ऊर्द्ध्वायतदन्तमण्डलं मूर्द्धानं, धुवन् ] कम्पयन्, [द्विरदः, कुण्ठम्] अतीक्ष्णम्, [ अङ्कुशं निरस्य, अन्यम् ] अकुण्ठम् अङ्कुशं, [ दधता त्वरावता निषादिना, अरोधि ] रुद्धः ‡ ॥ १२ ॥

---

* श्लेषानुप्राणितं रूपकमलङ्कारः । † अत एव ।

‡ लोकानामनिष्टाचरणभयादित्यर्थः ।

सम्मूर्च्छदुच्छृङ्खलशङ्खनिस्वनः
स्वनः प्रयाते पटहस्य शार्ङ्गिणि।
सत्त्वानि निन्ये नितरां महान्त्यपि
व्यथां द्वयेषामपि मेदिनीभृताम् ॥ १३ ॥

कालीयकक्षोदविलेपनश्रियं
दिशद्दिशामुल्लसदंशुमद्युति।
खातं खुरैर्मुद्गभुजां विपप्रथे
गिरेरधः काञ्चनभूमिजं रजः ॥ १४ ॥

---

सम्मूर्च्छदिति।—[सम्मूर्च्छदुच्छृङ्खलशङ्खनिस्वनः]। 'मूर्च्छा मोहसमुच्छाययोः' इति धातुः। सम्मूर्च्छन्नुच्छायं गच्छन्, प्रचुरीभवन् इत्यर्थः, उच्छृङ्खलोऽनर्गलः,सर्वव्यापीत्यर्थः,शङ्खस्य निस्वनो यस्मिन् सः, [शार्ङ्गिणि, प्रयाते] यातुमुपक्रान्ते, [ पटहस्य स्वनः, द्वयेषाम् ] उभयेषाम्, [अपि, मेदिनीभृतां] राज्ञां, पर्वतानाञ्च, [महान्त्यपि, सत्त्वानि] बलानि,भूतानि च,[नितरां व्यथां निन्ये] ; कृष्णस्य पटहश्रवणाद्राज्ञां बलान्यभिभवशङ्कया व्यथितानि आसन्, तथा गिरिस्थिताः सिंहादयो जन्तवश्च किमिदमितिससाध्वसा आसन्नित्यर्थः। 'व्यवसाये स्वभावे च पिशाचादौ गुणे बले। द्रव्यात्मभावयोश्चैव सत्त्वं प्राणिषु जन्तुषु॥' इति शाश्वतः * ॥१३॥

कालीयकेति।—[कालीयकक्षोदविलेपनश्रियं] कालीयं कुङ्कुमम्। 'काश्मीरजन्म घुसृणं कालीयं कुङ्कुमं विदुः' इति शाश्वतः। कालीयकक्षोदैः कुङ्कुमचूर्णैः, कृतविलेपनश्रियं तत्कृतानुलेपनश्रियं, [ दिशां, दिशत् ] ददत्। [ उल्लसदंशुमद्युति ] उद्यदादित्यसमा द्युतिर्यस्य तत्,

---

* अत्र द्वयेषामपि सत्त्वानां प्रकृतत्वात् एकधर्मसम्बन्धात् औपम्यप्रतीतेः तुल्ययोगिताऽलङ्कारः।

मन्द्रैर्गजानां रथमण्डलस्वनै-
र्निजुह्नुवे तादृशमेव बृंहितम् ।
तारैर्बभूवे परभागलाभतः
परिस्फुटैस्तेषु तुरङ्गहेषितैः ॥ १५ ॥

अन्वेतुकामोऽवमताङ्कुशग्रह-
स्तिरोगतं साङ्कुशमुद्वहन् शिरः ।
स्थूलोच्चयेनागमदन्तिकागतां
गजोऽग्रयाताग्रकरः करेणुकाम् ॥ १६ ॥

---

[ मुक्तभुजाम् ] अश्वानां, [खुरैः, खातं] विदारितं, [काञ्चनभूमिजं रजः, गिरेरधः] गुरुत्वाद्गिरेरधस्तादेव, [ विपप्रथे ] विस्तीर्णमभवत् * ॥ १४ ॥

मन्द्रैरिति ।—[ मन्द्रैः ] गम्भीरैः । 'मन्द्रस्तु गम्भीरे' इत्यमरः । [ रथमण्डलस्वनैः, तादृशं ] तद्रूपम्, [ एव, गजानां बृंहितं, निजुह्नुवे ] तिरस्कृतम् । गजध्वनिरेकरूपत्वेन रथशब्दान्न पृथगश्रावीत्यर्थः ; [तारैः] उच्चैस्तरैः ; मन्द्रस्वरविलक्षणैः इत्यर्थः, [ तुरङ्गहेषितैः, परभागलाभतः ] तादृशध्वनिगुणभेदलाभात्, [ तेषु ] गजादिस्वनेषु, [ परिस्फुटैर्बभूवे ] तुरङ्गहेषाः सुव्यक्ता एव शुश्रुविरे इत्यर्थः । 'बृंहितं करिणां शब्दे हेषा ह्रेषा च वाजिनाम्' इति कोषः । बभूवे इति भावे लिट् । निजुह्नुवे इति कर्मणि लिट् † ॥ १५ ॥

अन्वेत्विति ।—[ अन्तिकागतां, करेणुकां] करिणीम्, [अन्वेतुकामः] अनुगन्तुकामः, [अवमताङ्कुशग्रहः] अङ्कुशं गृह्णातीत्यङ्कुशग्रहो ‡ निषादी,

---

* गुरुत्वात् ऊर्द्धं न जगामेत्यर्थः । अत्र निदर्शनोपमयोः संसृष्टिः ।

† अत्र पूर्वार्द्धे सामान्यालङ्कारः ।

‡ गृह्णातीति ग्रहः, अङ्कुशस्य ग्रहः अङ्कुशग्रह इत्येव युक्तम् ; अन्यथा अङ्कुशग्राह इति पदप्रसङ्गात् ।

यान्तोऽस्पृशन्तश्चरणैरिवावनिं
जवात्प्रकीर्णैरभितः प्रकीर्णकैः।
अद्यापि सेनातुरगाः सविस्मयै-
रलूनपक्षा इव मेनिरे जनैः॥ १७॥

ऋज्वीर्दधानैरवतत्य कन्धरा-
श्चलावचूडाः कलघर्घरारवैः।
भूमिर्महत्यप्यविलम्बितक्रमं
क्रमेलकैस्तत्क्षणमेव चिच्छिदे॥ १८॥

सोऽवमतो येन सः, [ साङ्कुशं * तिरोगतम् ] अङ्कुशाऽऽकर्षणेन तिर्य्यग्भूतं, [ शिरः ] मस्तकम्, [उद्वहन् गजः, अग्रयाताग्रकरः ] करिणीग्रहणाय प्रसारितकराग्रो भूत्वा, [स्थूलोच्चयेन] गतिविशेषेण, [अगमत्] जगाम। 'गजमध्यगतौ स्थूलोच्चयः साकल्यपुञ्जयोः' इति रत्नप्रकाशः †॥ १६॥

यान्त इति।—[ जवात्] वेगात्, [ चरणैरवनिमस्पृशन्त इव यान्तः सेनातुरगाः, अभितः प्रकीर्णैः ] उभयतः प्रसृतैः, [ प्रकीर्णकैः] चामरैः। 'चामरन्तु प्रकीर्णकम्' इत्यमरः। कण्ठभूषणचामरैर्हेतुभिः [ अद्यापि अलूनपक्षा इव सविस्मयैर्जनैर्मेनिरे ]। पूर्वं तुरगाणामपि पक्षा आसन्, पश्चात् केनचित् कारणेन देवैः पक्षच्छेदः कारित इति प्रसिद्धिः ‡॥१७॥

ऋज्वीरिति।—[ ऋज्वीः ] अवक्राः, [ चलावचूडाः ] चलितकण्ठभूषणाः। 'शिरःशिखाभूषणेषु चूडा' इति यादवः। चलितशिरस इति वा। [ कन्धराः ] शिरोधराः, [ अवतत्य ] वितत्य, [ दधानैः,

* अत एव।

† अत्र काव्यलिङ्गमलङ्कारः।

‡ अत्र उत्प्रेक्षयोः परस्परसापेक्षत्वात् सजातीयसङ्करः।

तूर्णं प्रणेत्रा कृतनादमुच्चकैः
प्रणोदितं वेसरयुग्यमध्वनि ।
आत्मीयनेमिक्षतसान्द्रमेदिनी-
रजश्चयाऽऽक्रान्तिभयादिवाद्रवत् ॥ १९ ॥
व्यावृत्तवक्त्रैरखिलैश्चमूचरै-
र्व्रजद्भिरेव क्षणमीक्षिताननाः ।
वल्गद्गरीयःस्तनकम्प्रकञ्चुकं
ययुस्तुरङ्गाधिरुहोऽवरोधिकाः ॥ २० ॥

---

कलघर्घरारवैः ]। 'घर्घरा क्षुद्रघण्टी स्यात्' इति कोषः। अथवा घर्घरारव इति शब्दानुकरणम् । [ क्रमेलकैः ] उष्ट्रैः, [ अविलम्बितक्रमं ] क्रमः पादक्षेपः, द्रुतपादक्षेपं यथा तथा, [ महत्यपि भूमिस्तत्क्षणमेव, चिच्छिदे ] अतिक्रान्ता। स्वभावोक्तिरलङ्कारः ॥ १८ ॥

तूर्णमिति।—[ प्रणेत्रा ] सारथिना, [ प्रणोदितं ] गमनाय प्रेरितम् ; अत एव [ उच्चकैः ] उच्चैस्तरां, [ कृतनादं, वेसरयुग्यम् ]। सङ्कराश्वो वेसरः, वेसराभ्यां वाह्यं युग्यं शकटम्, [ आत्मीयनेमिक्षतसान्द्रमेदिनीरजश्चयाऽऽक्रान्तिभयात् ] आत्मीयनेमिः स्वचक्रधारा, तया क्षतस्य सान्द्रस्य मेदिनीरजसश्चयेन समूहेन, या आक्रान्तिः यदाक्रमणं, तद्भयात्, [इव, तूर्णमध्वनि, अद्रवत् ]। आत्मीयनेमिसमुद्भूतधूलिजालेनास्पृष्टं सत् द्रुतमगमदित्यर्थः * ॥ १९ ॥

व्यावृत्तेति।—[ व्यावृत्तवक्त्रैः ] विवृत्तमुखैः, [ व्रजद्भिरेवाखिलैश्चमूचरैः क्षणमीक्षिताननाः, तुरङ्गाधिरुहः ] तुरङ्गानधिरोहन्तीति क्विप्। तुरङ्गाधिरूढाः, [ अवरोधिकाः ] अवरोधस्त्रियः, [ वल्गद्गरीयःस्तनकम्प्र-

---

* अत्र उत्प्रेक्षाऽलङ्कारः।

पादैः पुरः कूवरिणां विदारिताः
प्रकाममाक्रान्ततलास्ततो गजैः ।
भग्नोन्नतानन्तरपूरितान्तरा
बभुर्भुवः कृष्टसमीकृता इव ॥ २१ ॥

दुर्दान्तमुत्प्लुत्य निरस्तसादिनं
सहासहाकारमलोकयज्जनः ।
पर्य्याणतस्रस्तमुरोविलम्बिन-
स्तुरङ्गमं प्रद्रुतमेकया दिशा ॥ २२ ॥

---

कञ्चुकं ] वक्षाङ्गिश्लिष्टैः, गरीयोभिर्गुरुतरैः, स्तनैः कम्प्रः कम्पनशीलः, कञ्चुकः कूर्पासो यस्मिन् कर्मणि तद् यथा तथा, [ ययुः ]। "नमि-कम्पि—" ( ३।२।१६७ पा० ) इत्यादिना रप्रत्ययः * ॥ २० ॥

पादैरिति ।—[ कूवरिणां ] रथानाम् । 'कूवरस्तु युगन्धरः' इत्यमरः । स एषामस्तीति ते रथास्तेषां, [ पादैः ] चक्रैः, [ पुरः ] पूर्वं, [ विदारिताः ततो गजैः प्रकाममाक्रान्ततलाः, भग्नोन्नतानन्तर-पूरितान्तराः] भग्नैरुक्तप्रकारेण पूर्वं भग्नत्वात्, उन्नतैरनन्तरैरुभयभागैः, पूरितान्तराः समीकृतनिम्नप्रदेशाः ; यद्वा,—पूर्वं रथचक्रविदारितत्वात् भग्नोन्नताः, अनन्तरं गजपतिपरिक्रमणेन पूरितानतप्रदेशाः, [ भुवः, कृष्टसमीकृताः ] पूर्वं हलैः कृष्टा, अनन्तरं बीजवपनार्थं समीकृताः, [ इव, बभुः ] शुशुभिरे † ॥ २१ ॥

दुर्दान्तमिति ।—[ उरोविलम्बिनः, पर्य्याणतः ] पल्ययनतः, [स्रस्तम्] अत एव [उत्प्लुत्य, निरस्तसादिनं] स्वपृष्ठात्पातितावरोहम्, [एकया दिशा, प्रद्रुतं ] पलायितं, [ दुर्दान्तं ] दुर्विनीतं, [ तुरङ्गमं, सहासहाकारं ]

---

* स्वभावोक्तिरलङ्कारः ।

† उत्प्रेक्षाऽलङ्कारः ।

भूभृद्भिरप्यस्खलिताः खलून्नतै-
रपह्नुवाना सरितः पृथूरपि ।
अन्वर्थसंज्ञैव परं त्रिमार्गगा
ययावसङ्ख्यैः पथिभिश्चमूरसौ ॥ २३ ॥

त्रस्तौ समासन्नकरेणुसूत्कृता-
न्नियन्तरि व्याकुलमुक्तरज्जुके ।
क्षिप्तावरोधाङ्गनमुत्पथेन गां
विलङ्घ्य लघ्वीं करभौ बभञ्जतुः ॥ २४ ॥

---

हासकृतेन हाकारेण सह यथा तथा, [जनः, अलोकयत्] अवलोकितवान् * ॥ २२ ॥

भूभृद्भिरिति ।—[उन्नतैरपि, भूभृद्भिः] भूधरैः, भूपैश्च, [ अस्खलिताः ] अप्रतिहताः, [पृथूः] महतीः, [अपि, सरितः] यमुनाप्रभृतीर्नदीः, [अपह्नुवाना ] स्वमहिम्नाऽऽच्छादयन्ती ; त्रिभिर्मार्गैर्गच्छतीति [ त्रिमार्गगा ] गङ्गा, [ परम् ] अत्यन्तम्, [ अन्वर्थसंज्ञा ] अन्वर्था अनुगतार्था, संज्ञा त्रिमार्गगेति नामधेयं यस्याः सा , [ एव खलु ] त्रिभिरेव मार्गैर्ययौ, न चतुर्थैरित्यर्थः । [असौ चमूः] तु [असङ्ख्यैः पथिभिर्ययौ] ; अतो गङ्गाया अप्यधिका चमूरिति भावः ; अत एव व्यतिरेकालङ्कारः,—'भेदप्राधान्यसाधर्म्यमुपमानोपमेययोः । अधिकाल्पत्वकथनाद्व्यतिरेकः स उच्यते ॥' इति लक्षणात् ॥ २३ ॥

त्रस्ताविति ।—[ समासन्नकरेणुसूत्कृतात् ] समासन्नस्य प्रत्यासन्नस्य, करेणोः इभस्य, सूत्कृतात्सूत्कारात्, [ त्रस्तौ, करभौ ] वेसरौ । 'करभो वेसरेऽप्युष्ट्रे' इति सज्जनः । [ नियन्तरि ] सारथौ, [व्याकुलमुक्तरज्जुके] व्याकुलं व्यग्रं यथा तथा, मुक्तरज्जुके त्यक्तप्रग्रहे सति, [ क्षिप्तावरोधाङ्-

---

* अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

स्रस्ताङ्गसन्धौ विगताक्षपाटवे
रुजा निकामं विकलीकृते रथे ।
आप्तेन तक्ष्णा भिषजेव तत्क्षणं
प्रचक्रमे लङ्घनपूर्वकः क्रमः ॥ २५ ॥

धूर्भङ्गसङ्क्षोभविदारितोष्ट्रिका-
गलन्मधुप्लावितदूरवर्त्मनि ।

---

नम् ] क्षिप्ताः पातिताः, अवरोधाङ्गना यस्मिन् कर्मणि तद् यथा तथा, [ उत्पथेन ] अपथेन । "ऋक्पूर" ( ५।४।७४ पा० ) इत्यादिना समासान्तः । [ गां ] भूमिं, [विलङ्घ्य] दूरमतीत्य, [लघ्वीं] रथविशेषम् । 'लघ्वी लाघवयुक्तायां प्रभेदे स्यन्दनस्य च' इति हैमः । [ बभञ्जतुः ] भग्नवन्तौ । अत्र लासस्य विशेषणगत्या भञ्जनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं स्वभावोक्त्या सङ्कीर्य्यते ॥ २४ ॥

स्रस्तेति ।—[ स्रस्ताङ्गसन्धौ ] स्रस्ता विश्लिष्टा, अङ्गयोः रथाङ्गयोः, अङ्गानां करचरणादीनाञ्च, सन्धयः सन्धिभागा यस्य तस्मिन्, [विगताक्ष-पाटवे ] विगतमक्षस्य चक्राधारकाष्ठस्य, अक्षाणामिन्द्रियाणाञ्च, पाटवं सामर्थ्यं यस्य तस्मिन्, [रथे] स्यन्दने, शरीरे च । 'रथः स्यात्स्यन्दने काये' इति विश्वः । [ रुजा ] भङ्गेन, रोगेण च, [ निकामं विकलीकृते ] सति, [आप्तेन] हितेन, [ तक्ष्णा ] वर्द्धकिना, आप्तेन [ भिषजा ] वैद्येन, [इव] । 'तक्षा तु वर्द्धकिस्त्वष्टा' इत्यमरः । [ तत्क्षणं ] तस्मिन्नेव क्षणे । अत्यन्तसंयोगे द्वितीया । [ लङ्घनपूर्वकः ] लङ्घनं पादेनाक्रमणम्, उपवासश्च । 'लङ्घनं तूपवासे स्यादृमने प्लवनेऽपि च' इति विश्वः । तत्पूर्वकः, [ क्रमः ] विधिः, [ प्रचक्रमे ] प्रक्रान्तः । प्रायेण ज्वरादि-चिकित्साया लङ्घनपूर्वकत्वादिति भावः । श्लेषालङ्कारः भिषजेवेत्युप-मया सङ्कीर्य्यते ॥ २५ ॥

धूर्भङ्गेति ।—[ स्थाणौ ] कीले । 'स्थाणुः कीले स्थिरे हरे'

स्थाणौ निषङ्गिण्यनसि क्षणं पुरः
शुशोच लाभाय कृतक्रयो वणिक् ॥ २६ ॥

भेरीभिराऽऽक्रुष्टमहागुहामुखो
ध्वजांशुकैस्तर्जितकन्दलीदलः ।
उत्तुङ्गमातङ्गजिताऽलघूपलो
बलैः स पश्चात् क्रियते स्म भूधरः ॥ २७ ॥

---

इति विश्वः । [ निषङ्गिणि ] सक्ते, [ अनसि ] शकटे । 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरः । [ धूर्भङ्गसङ्क्षोभविदारितोष्ट्रिकागलन्मधुप्लावितदूरवर्त्मनि ] धुरोऽक्षस्य, भङ्गेन यः सङ्क्षोभो विपर्य्यासः, तेन विदारिता भिन्ना, या उष्ट्रिका मृन्मयं मद्यभाण्डम् । 'उष्ट्रिका मृत्तिकाभाण्डभेदे करभयोषिति' इति विश्वः । ततो गलता स्रवता, मधुना मद्येन, प्लावितं सिक्तं, दूरवर्त्म दीर्घाध्वा येन तस्मिन्, तथा सति, [ पुरः ] पूर्वं, [ लाभाय, कृतक्रयः ] कृतः क्रयः क्रयणं येन सः, [ वणिक् क्षणं शुशोच ]। अत्र मधुस्रावधनव्यययोर्विशेषणगत्या शोकहेतुत्वात्काव्यलिङ्गभेदः ॥ २६ ॥

भेरीभिरिति ।—[भेरीभिः, आक्रुष्टमहागुहामुखः] आक्रुष्टानि निन्दितानि, महान्ति गुहामुखानि यस्य सः ; भेरीझङ्कारभर्त्सितनितान्तवात्यामुखरमहागुहाद्वार इत्यर्थः । [ ध्वजांशुकैस्तर्जितकन्दलीदलः ] ध्वजांशुकैः तर्जितानि भर्त्सितानि, कन्दलीदलानि गुल्मपलाशानि यस्य सः, [ उत्तुङ्गमातङ्गजिताऽलघूपलः ] उत्तुङ्गैर्मातङ्गैर्जिताः अलघूपलाः स्थूलपाषाणा यस्य सः, [ सः, भूधरः ] रैवतकाद्रिः, [ बलैः ] सैन्यैः, [ पश्चात् क्रियते स्म ] पश्चात्कृतः ; स्वयं दूरगमनेन पृष्ठतः कृत इत्यर्थः । उक्तविशेषणमहिम्ना अधरीकृत इति च प्रतीयते । "लट् स्मे" ( ३।२। ११८ पा० ) इति भूतार्थे लट् । आक्रुष्टेति क्रोशतेः कर्म्मणि क्तः । श्वादित्वात् पत्वे ष्टुत्वम् । अत्र पश्चात्करणस्याक्रुष्टादिपदार्थहेतुक-

वन्येभदानानिलगन्धदुर्द्धराः
क्षणं तरुच्छेदविनोदितक्रुधः ।
व्यालद्विपा यन्तृभिरुन्मदिष्णवः
कथञ्चिदारादपथेन निन्यिरे ॥ २८ ॥
तैर्वैजयन्तीवनराजिराजिभि-
र्गिरिप्रतिच्छन्दमहामतङ्गजैः ।

---

त्वात्काव्यलिङ्गं, तच्चोक्तप्रतीयमानाभेदाध्यवसायादिति श्लेषमूलाऽति-शयोक्तिसङ्कीर्णम् ; तेन बलानां भूधरौपम्यं गम्यत इत्यलङ्कारेणालङ्कार-ध्वनिः ॥ २७ ॥

वन्येभेति ।—[ वन्येभदानानिलगन्धदुर्द्धराः ] वन्येभदानानिलगन्धेन वनगजमदमारुतगन्धाऽऽघ्राणेन, दुर्द्धराः क्रोधान्धाः, दुर्ग्रहाः इति यावत् ; अत एव [ क्षणं, तरुच्छेदविनोदितक्रुधः ] तरुच्छेदेन विनोदितक्रुधः, प्रति-गजासान्निध्ये वृक्षाणां भङ्गेनापनीतक्रोधाः, [ उन्मदिष्णवः ] अत्यन्तमद-शीलाः । "अलङ्कृञ्—" (३।२।१३६ पा०) इत्यादिना इष्णुच् । [ व्यालद्विपाः ] दुष्टगजाः, [ यन्तृभिः ] आधोरणैः, [ कथञ्चित्, आरात् ] दूरात्, [ अपथेन ] अमार्गेण । "पथो विभाषा" ( ५।४।७२ पा० ) इति निषेधविकल्पात् "ऋक्पूः—" ( ५।४।७४ पा० ) इत्यादिना समासान्तः । "अपथं नपुंसकम्" ( २।४।३० पा० ) इति नपुंसकत्वम् । [ निन्यिरे ] नीताः । अत्रापि द्विपविशेषणानां दूरादपथनयनहेतुकत्वात् काव्यलिङ्गं स्वभावोक्त्या सङ्कीर्य्यते ॥ २८ ॥

तैरिति ।—[ वैजयन्तीवनराजिराजिभिः ] वैजयन्त्यः पताकाः, ताः वनराजय इव, ताभिः राजन्तीति तथोक्तैः । [ गिरिप्रतिच्छन्द-महामतङ्गजैः ] गिरीणां प्रतिच्छन्दाः प्रतिनिधयः, तत्सदृशा इत्यर्थः । एतस्मादेव स्पष्टोपमालिङ्गादन्यत्राप्युपमितसमासाऽऽश्रयणम् । ते महा-मतङ्गजा येषु तैः । [ प्रसर्पज्जनतानदीशतैः ] जनता जनसमूहाः, ता

बह्व्यः प्रसर्पज्जनतानदीशतै-
र्भुवो बलैरन्तरयाम्बभूविरे ॥ २९ ॥
तस्थे मुहूर्तं हरिणीविलोचनैः
सदृंशि दृष्ट्वा नयनानि योषिताम् ।
मत्वाऽथ सत्रासमनेकविभ्रम-
क्रियाविकाराणि मृगैः पलाय्यत ॥ ३० ॥

---

नद्य इव, तासां शतानि प्रसर्पन्ति प्रवहन्ति येषु तैः, [तैः बलैः] तथोक्तैः सैन्यैः, [बह्व्यः] बह्वः । "बह्वादिभ्यश्च" (४।१।४७ पा०) इति विकल्पादीकारः । [भुवः] भूमयः, [अन्तरयाम्बभूविरे] अन्तरा दूराः कृता इति, अतिक्रान्ता इत्यर्थः । न केवलं रैवतकाद्रिरेवेति भावः । बलैर्वैपुल्यादाच्छादिता इत्यर्थः । उक्तविशेषणावगतसादृश्यादगृहीतभेदाः कृता इति च गम्यते । एतेनाभेदाध्यवसायादेवाख्याऽऽक्रमणरूपान्तरीकरणस्य बलविशेषणावगतसादृश्यस्य हेतुत्वात् तदङ्गभूतोपमासङ्कीर्णं पदार्थहेतुकं काव्यलिङ्गं, श्लेषमूलाभेदातिशयोक्त्युत्थापितमिति सङ्करः । अन्तरशब्दात् "तत्करोति" (ग०) इति ण्यन्तात् कर्मणि लिट् । आम्प्रत्यये भुवोऽनुप्रयोगः ॥ २९ ॥

तस्थे इति ।—[ हरिणीविलोचनैः, सदृंशि ] सदृशानि । "नपुंसकस्य झलचः" (७।१।७२ पा०) इति नुम् । [ योषितां नयनानि दृष्ट्वा, मृगैः ] कृष्णसारैः, कर्तृभिः । [ मुहूर्तम् ] अल्पकालम् । 'मुहूर्तमल्पकाले स्याद् घटिकाद्वितयेऽपि च' इति विश्वः । [ तस्थे ] स्थितम् । हरिणीविलोचनशङ्कयेति भावः । [ अथ ] अनन्तरम्, [ अनेकविभ्रमक्रियाविकाराणि ] अनेका विभ्रमक्रिया नाना विलासक्रिया एव विकारा येषां तानि, [ मत्वा ] सविलासानि ज्ञात्वेत्यर्थः । [ सत्रासं ] सभयं यथा तथा, [ पलाय्यत ] पलायितम् । हरिणीदुर्लभैर्विलासैर्योषिन्निश्चयादिति भावः ; अत एव निश्चयान्तः संशया-

निम्नानि दुःखादवतीर्य्य सादिभि:
सयत्नमाकृष्टकशाः शनैः शनैः।
उत्तेरुरुत्तालखुरारवं द्रुता:
श्लथीकृतप्रग्रहमर्वतां व्रजाः ॥ ३१ ॥

अध्यध्वमारूढ़वतेव केनचित्
प्रतीक्षमाणेन जनं मुहुर्धृतः।
दाक्ष्यं हि सद्यः फलदं यदग्रत-
श्चखाद दासेरयुवा वनाऽऽवलीः ॥ ३२ ॥

---

लङ्कारः। परापूर्वादयतेर्भावे लङ्। "उपसर्गस्यायतौ" (८।२।१९ पा०) इति लत्वम् ॥ ३० ॥

निम्नानीति।—[ अर्वताम् ] अश्वानाम्। 'वाजिवाहार्वगन्धर्वहय-सैन्धवसप्तयः' इत्यमरः। "अर्वणस्त्रसावनञः" (६।४।१२७ पा०) इति तादेशः। [ व्रजाः ] समूहाः। [ सादिभिः ] अश्वारूढैः, [ सयत्न-माकृष्टकशाः ] दृढ़गृहीतवल्गाः सन्तः। यद्यपि 'अश्वादेस्ताड़नी कशा' इत्यमरः, तथाऽपि अत्र 'ताड़नीवल्गयोः कशा' इति दर्शनादवि-रोधः। [ शनैः शनैः, दुःखात् ] कष्टात्, [ निम्नानि ] निम्नभूप्रदेशान्, [अवतीर्य्य, उत्तालखुरारवम्] उच्चतरशफशब्दं, [ श्लथीकृतप्रग्रहं ] शिथि-लितवल्गञ्च यथा तथा, [ द्रुताः ] सत्वराः सन्तः, [ उत्तेरुः ] उत्पुप्लुविरे। निम्नेषु शनैः अवतीर्य्य दीर्घं धावन्तीत्यश्वानां स्वभाव इति भावः; अत एव स्वभावोक्तिः ॥ ३१ ॥

अध्यध्वमिति।—दक्षस्य भावः [ दाक्ष्यं ] कौशलं, [ सद्यः फलदम् ]। कुतः? [ यत् ] यस्मात्, [ अध्यध्वम् ] अध्वनि। विभक्त्यर्थेऽव्ययी-भावः, "अनश्च" (५।४।१०८ पा०) इति समासान्तोऽच्प्रत्ययः। "नस्त-द्धिते" (५।४।१४४ पा०) इति टिलोपः। [ आरूढ़वतेव ] आरूढेनेव

शौरेः प्रतापोपनतैरितस्ततः
समागतैः प्रश्रयनम्रमूर्त्तिभिः ।
एकातपत्रा पृथिवीभृतां गणै-
रभूद्बहुच्छत्रतया पताकिनी ॥ ३३ ॥
आगच्छतोऽनूचि गजस्य घण्टयोः
स्वनं समाकर्ण्य समाकुलाङ्गनाः ।

---

स्थितेन। "निष्ठा" (३।२।१०२ पा०) इति कर्त्तरि क्तवतुप्रत्ययः। [ जनं ] शनैः पश्चादागच्छन्तं स्वजनं, [ प्रतीक्षमाणेन ] केनचित् पुंसेति शेषः। [ मुहुः, स्थितः]। स्थापितोऽपि, [ दासेरयुवा ] तरुणोष्ट्रः। विशेषणसमासः। [ अग्रतो वनाऽऽवलीश्चखाद ] पुरः पिचुमर्द्दादिकं भक्षयामास इत्यर्थः। न हि कुशलो वृथा कालं यापयतीति भावः। अत्र दाक्ष्यसाफल्यस्य सामान्यस्य, तद्विशेषेण दासेरकौशलेन समर्थनात् विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३२ ॥

शौरेरिति।—[ शौरेः ] कृष्णस्य, [ पताकिनी ] सेना। व्रीह्यादित्वादिनिः। [ प्रतापोपनतैः ] प्रतापेन हरितेजसा, उपनतैः नम्रैः, विधेयैः इत्यर्थः ; अत एव [ इतस्ततः समागतैः ] पार्श्वदेशादागतैः, [ प्रश्रयनम्रमूर्त्तिभिः ] हरिसन्निधौ विनयनम्रविग्रहैः, [ पृथिवीभृतां ] राज्ञां, [ गणैः ], हेतुना। [ बहुच्छत्रतया ] असङ्ख्याऽऽतपत्रवत्तया निमित्तेन ; एकानि केवलानि आतपत्राणि यस्याः सा [एकाऽऽतपत्रा ] केवलाऽऽतपत्रमयी [अभूत्]। आतपत्रातिरिक्तं न किञ्चिदलक्ष्यतेत्यर्थः। 'एके मुख्यान्यकेवलाः' इत्यमरः। बहुच्छत्राऽपि एकच्छत्रेति विरोधभासनात् विरोधाभासोऽलङ्कारः ॥ ३३ ॥

आगच्छत इति।—अन्वञ्चतीत्यन्वङ् तस्मिन् [ अनूचि ] पृष्ठदेशे। "ऋत्विक्—" (३।२।५९ पा०) इत्यादिनाऽञ्चेः क्विन्प्रत्ययः। [ आगच्छतो गजस्य घण्टयोः स्वनं समाकर्ण्य, समाकुलाङ्गनाः ] सम्भ्रान्त-

दूरादपावर्त्तितभारवाहणाः
पथोऽपसस्रुस्त्वरितं चमूचराः ॥ ३४ ॥
ओजस्विवर्णोज्ज्वलवृत्तशालिनः
प्रसादिनोऽनुज्झितगोत्रसंविदः।
श्लोकानुपेन्द्रस्य पुरः स्म भूयसो-
गुणान् समुद्दिश्य पठन्ति वन्दिनः ॥ ३५ ॥

---

बधूकाः, [ चमूचराः दूरात् ] एव [ अपावर्त्तितभारवाहणाः ] अपावर्त्तिता अपसारिताः, भारस्यानादेर्वाहना भारवाहणाः, भारवाहिन उष्ट्रादयोयैस्ते तथा सन्तः। "वाहनमाहितात्" ( ८।४।८ पा० ) इति णत्वम्। वहेर्ण्यन्तात् कर्त्तरि ल्युट्। [ त्वरितं ] शीघ्रं, [ पथः ] मार्गात्, [ अपसस्रुः ] अपजग्मुः। स्वभावोक्तिः ॥ ३४ ॥

ओजस्वीति।—[ वन्दिनः ] स्तुतिपाठकाः। 'वन्दिनः स्तुतिपाठकाः' इत्यमरः। [ ओजस्विवर्णोज्ज्वलवृत्तशालिनः ] ओजस्विवर्णस्य तेजस्विवर्णस्य क्षत्रजातेः, यदुज्ज्वलं वृत्तम् उदग्रव्यापारः, विजयाख्यं तेन शालते इति,ओजस्विवर्णोज्ज्वलवृत्तशाली तस्य ; अन्यत्र,—ओजस्विवर्णैः समासभूयिष्ठाक्षरैः, उज्ज्वलाः, ते च ते वृत्तशालिनः, वसन्ततिलकादिच्छन्दोविशेषशालिनश्च। 'वृत्तं चरित्रच्छन्दसोरपि' इति विश्वः। तान्। प्रसादोऽस्यास्तीति प्रसादी तस्य [ प्रसादिनः ] अनुग्रहशीलस्य ; अन्यत्र,—प्रसादगुणयुक्तान्। 'प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते' इति। [ अनुज्झितगोत्रसंविदः ] अनुज्झितौ गोत्रसंविदौ कुलाऽऽचारौ येन तस्य, यादववंशोत्पन्नस्येत्यर्थः ; अन्यत्र,—कुलनामनो येस्तान्, वंशनामाङ्कितानित्यर्थः। 'संविद् युद्धे प्रतिज्ञायां सङ्केताचारनामसु' इति वैजयन्ती। एवम्भूतस्य [ उपेन्द्रस्य ] हरेः, [ गुणान्, समुद्दिश्य ] अधिकृत्य, [ भूयसः ] बहुलान्, [ श्लोकान् ] स्तुतिपद्यानि, [ पुरः ] अग्रे, [ पठन्ति स्म ]। अत्रोपेन्द्रस्य तच्छ्लोकानाञ्च वर्ण्यत्वेन

निःशेषमाक्रान्तमहीतलो जलै-
श्चलन् समुद्रोऽपि समुज्झति स्थितिम् ।
ग्रामेषु सैन्यैरकरोदवारितैः
किमव्यवस्थां चलितोऽपि केशवः ? ॥ ३६ ॥

कोशातकीपुष्पगुलुच्छकान्तिभि-
र्मुखैर्विनिद्रोल्वणबाणचक्षुषः ।
ग्रामीणवध्वस्तमलक्षिता जनै-
श्चिरं वृतीनामुपरि व्यलोकयन् ॥ ३७ ॥

---

प्रकृतानां श्लेषसाधर्म्यादौपम्यगम्यतायां श्लेषप्रतिभोत्थापिता केवलप्रकृतगोचरा तुल्ययोगिता, श्लेषश्च प्रकृतिषु प्रत्ययेषु नेत्यालङ्कारिकाः ॥ ३५ ॥

निःशेषमिति ।—[ चलन् ] कल्पान्ते क्षुभितः, [ समुद्रोऽपि जलैः निःशेषमाक्रान्तमहीतलः ] सन्, [ स्थितिं ] मर्य्यादां, वेलाऽलङ्घनलक्षणां, [ समुज्झति ] त्यजति । [ केशवः ] तु [ चलितोऽपि ] प्रस्थितोऽपि, [ अवारितैः ] अपरिमितैः, [ सैन्यैः ] निःशेषमाक्रान्तमहीतलः सन्, [ ग्रामेषु, अव्यवस्थाम् ] अमर्य्यादां, [किमकरोत् ?] नाकरोदेवेत्यर्थः । अत्रोपमानात् समुद्रादुपमेयस्य केशवस्य मर्य्यादाऽनतिक्रमेणाऽऽधिक्यकथनात् व्यतिरेकालङ्कारः । लक्षणं तूक्तम् ॥ ३६ ॥

कोशातकीति ।—[ कोशातकीपुष्पगुलुच्छकान्तिभिः ] पटोलीप्रसूनगुच्छसच्छायैः, स्मरपाण्डुरैः इत्यर्थः । 'कोशातकी पटोली स्यात्' इति हलायुधः । [ मुखैः ] उपलक्षिताः, [ विनिद्रोल्वणबाणचक्षुषः ] विनिद्रं विकसितम्, अत एवोल्वणं विपुलं, बाणं नीलसैरेयपुष्पम् इव चक्षुर्यासां ताः । 'नीली झिण्टी द्वयोर्बाणा' इत्यमरः । [ ग्रामीणवध्वः ] ग्रामेषु भवा ग्रामीणाः । "ग्रामादखञौ" ( ४।२।९४ पा० )

गोष्ठेषु गोष्ठीकृतमण्डलासनान्
सनादमुत्थाय मुहुः स वल्गतः ।
ग्राम्यानपश्यत् कपिशं पिपासतः
स्वगोत्रसङ्कीर्त्तनभावितात्मनः ॥ ३८ ॥
पश्यन् कृतार्थैरपि वल्लवीजनो
जनाधिनाथं न ययौ वितृष्णताम् ।

---

इति खश्प्रत्ययः । ताश्च बध्वः स्त्रियः, [ तं ] कृष्णं, ग्रामान्तर्गामिनम् इति भावः । [ जनैः ] चमूचरैः [ अलक्षिताः ], वृतिभिस्तिरोहिता इत्यर्थः । [ चिरं, वृतीनां ] कण्टकशाखाऽऽवरणानाम्, [ उपरि ] उपरितनावकाशे, [ व्यलोकयन् ]। उपमास्वभावोक्त्योः सङ्करः ॥ ३७ ॥

गोष्ठेष्विति ।—[ सः ] कृष्णः, [गोष्ठेषु] गावस्तिष्ठन्त्येष्विति गोष्ठानि गोस्थानानि। 'गोष्ठं गोस्थानकम्' इत्यमरः। "सुपि स्थः" (३।२।४ पा० ) इति कप्रत्ययः "अम्बाम्बगोभूमि—" ( ८।३।९७ पा० ) इत्यादिना षत्वम् । [ गोष्ठीकृतमण्डलासनान् ] गोष्ठीषु वार्त्तासु । 'गोष्ठी सभायामालापे' इति विश्वः । कृतानि,मण्डलासनानि मण्डलाकारेणोपवेशनानि यैस्तान्, [ मुहुः, सनादं ] क्ष्वेलाट्टाट्टहासाद्यारावसहितं यथा तथा, [ उत्थाय, वल्गतः ] उत्प्लवमानान्, [ कपिशं ] मद्यम् । 'कश्यं मद्यञ्च मैरेयं कपिशं कापिशायनम्' इति हलायुधः । [ पिपासतः ] मुहुर्मुहुः पातुमिच्छतः । पिबतेः सन्नन्ताल्लटः शतरि शप् । [ स्वगोत्रसङ्कीर्त्तनभावितात्मनः ] स्वगोत्रसङ्कीर्त्तने स्वनामसङ्कीर्त्तने, भावितात्मनः प्रवर्त्तितचित्तान्, कृष्णनामानि गायत इत्यर्थः । ग्रामेषु भवान् [ ग्राम्यान् ] । घोषजनानित्यर्थः । "ग्रामाद्यखञौ" ( ४।२।९४ पा० ) इति यप्रत्ययः । [अपश्यत्] आलोकितवान् । स्वभावोक्तिः॥ ३८ ॥

पश्यन्निति ।—[ एकान्तमौग्ध्यानवबुद्धविभ्रमैः ] एकान्तमौग्ध्येन

एकान्तमौग्ध्यानवबुद्धविभ्रमैः
प्रसिद्धविस्तारगुणैर्विलोचनैः ॥ ३९ ॥
प्रीत्या नियुक्ताँल्लिहतीः स्तनन्धयान्
निगृह्य पारीमुभयेन जानुनोः ।
वर्द्धिष्णुधाराध्वनि रोहिणीः पय-
श्चिरं निदध्यौ दुहतः स गोदुहः ॥ ४० ॥

---

अत्यन्तमुग्धतया, अनवबुद्धविभ्रमैः अज्ञातविलासैः, किन्तु [प्रसिद्धविस्तार-गुणैः] प्रसिद्धो विस्तार एव गुणो येषां तैः, अतिविशालैः इत्यर्थः, [कृतार्थैः अपि] सकृत् दर्शनात् लब्धविस्तारफलैः इत्यर्थः । [ विलोचनैः, जनाधि-नाथं ] कृष्णं, [ पश्यन्, वल्लवीजनः] गोपाङ्गनाजनः, [वितृष्णतां] तृप्ततां, [ न ययौ]। भूयो भूयः पश्यन् अपि नालम्बुद्धिमवापेत्यर्थः । तृप्तिकारणे दर्शने सत्यपि तृप्तिकार्य्यानुत्पत्तेः विशेषोक्तिः ; सा कृष्णस्य मदनकोटि-लावण्यलक्ष्मीं व्यञ्जयति इत्यलङ्कारेण वस्तुध्वनिः ॥ ३९ ॥

प्रीत्येति ।—[ नियुक्तान् ] वामपादे एव संयतान् ; स्तनं, धयन्ति पिबन्तीति [ स्तनन्धयान्] वत्सान्, "नासिकास्तनयोर्ध्माधेटोः" (३।२।२९ पा० ) इति धेटः खश्प्रत्ययः । [ प्रीत्या, लिहतीः ] जिह्वया स्वादयन्तीः [ रोहिणीः ] गाः । 'अर्जुन्यघ्न्या रोहिणी स्यात्' इत्यमरः । [ पयः ] क्षीरं, [ जानुनोरुभयेन ] जानुद्वयेन, [ पारीं ] दोहनपात्रीम् । 'पारी पात्रीपरागयोः' इति विश्वः । [ निगृह्य ] निरुध्य । [ वर्द्धिष्णुधारा-ध्वनि ] वर्द्धनशीलक्षीरधाराशब्दं यथा भवति तथा, [ दुहतः ] प्रपूर-यतः । दुहेः लटः शतरि शप् । "दुह्याच्"* इति द्विकर्मकत्वम् । गां दुहन्तीति [ गोदुहः ] गोदोहकान् । "सत्सूद्विष—" (३।२६१ पा०)

---

* दुह्याच्पचदण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥" इति कारिका ।

अभ्याजतोऽभ्यागततूर्णतर्णकां
निर्ग्याणहस्तस्य पुरो दुधुक्षतः ।
वर्गाद्गवां हुङ्कृतिचारु निर्यती-
मरिर्मधोरैक्षत गोमतल्लिकाम् ॥ ४१ ॥
स व्रीहिणां यावदपासितुं गताः
शुकान् मृगैस्तावदुपद्रुतश्रियाम् ।

---

इत्यादिना क्विप् । [ सः ] हरिः, [ चिरं, निदध्यौ ] अवलोकयति स्म । 'निध्यानमवलोकनम्' इति वैजयन्ती । स्वभावोक्तिः ॥ ४० ॥

अभ्येति ।—[ अभ्याजतः ] दोग्धुमभिमुखमागच्छतः । अजेर्लटः शत्रादेशः । निर्ग्याणं पादबन्धनं दाम । 'निर्ग्याणं दाम सन्दानं पशूनां पादबन्धने' इति वैजयन्ती । तद्धस्ते यस्य तस्य [ निर्ग्याण-हस्तस्य, दुधुक्षतः ] दोग्धुमिच्छतः, दोग्धुरिति शेषः । दुहेः सन्नन्ताल्लटः शत्रादेशः, घत्वधत्वे । [ पुरः ] अग्रे, [ अभ्यागततूर्णतर्णकाम् ] अभ्यागतोऽभिमुखमागतः, तूर्णः स्तनपाने त्वरमाणः, तर्णकोऽतिबालो वत्सो यस्यास्ताम् । "सद्योजातस्तु तर्णकः" इत्यमरः । [ गवां वर्गात् ] गोव्रजात्, [ हुंकृतिचारु ] हुङ्कारमनोहरं यथा तथा, [ निर्यतीं ] निर्ग-च्छन्तीम् । इणः शतरि ङीप्, इणो यणादेशः । प्रशस्तां गां [ गोमत-ल्लिकाम् ] । "प्रशंसावचनैश्च" ( २।१।६६ पा० ) इति नित्यसमासः । 'मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः । [ मधोररिः ] मधुसूदनः, [ ऐक्षत ] ईक्षितवान् । ईक्षतेर्लङि "आङजादीनाम्" ( ६।४।७२ पा० ) इत्याट्, "आटश्च" ( ६।१।९० पा० ) इति वृद्धिः । स्वभावोक्तिः ॥ ४१ ॥

स इति ।—[ यावत्, शुकान् ] कीरान्, [ अपासितुं गतास्तावन्मृगैः, उपद्रुतश्रियाम् ] उपद्रुतसम्पदां, [ व्रीहिणां ] व्रीहिमताम् । "व्रीह्या-

कैदारिकाणामभितः समाकुलाः
सहासमालोकयति स्म गोपिकाः ॥ ४२ ॥
व्यासेद्धुमस्मानवधानतः पुरा
चलत्यसावित्युपकर्णयन्नसौ ।
गीतानि गोप्याः कलमं मृगव्रजो-
न नूनमत्तीति हरिर्व्यलोकयत् ॥ ४३ ॥

---

दिभ्यश्च" ( ५।२।११६ पा० ) इति इनिप्रत्ययः । [ कैदारिकाणां ] क्षेत्रसमूहानाम् । 'पुंनपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु । कैदारकं स्यात् कैदार्यं क्षेत्रं कैदारिकं गणे ॥' इत्यमरः । "ठञ् कवचिनश्च" ( ४।२।४१ पा० ) इति चकाराट्ठञ्प्रत्ययः । कृद्योगात् कर्मणि षष्ठी । [ गोपिकाः ] गोप्त्रीः, [ अभितः, समाकुलाः ] व्यग्राः, उभयतः समाकृष्यमाणाः सतीरित्यर्थः । [ सः ] हरिः, [ सहासमालोकयति स्म ] । अत्र सहासावलोकनस्य विशेषणगत्या समाकुलपदार्थहेतुकत्वात् काव्यलिङ्गभेदः ॥ ४२ ॥

व्यासेद्धुमिति ।—[ गोप्याः ] शालिगोप्याः । गौरादित्वात् ङीष् । [ गीतानि, उपकर्णयन् ] शृण्वन्, [ असौ मृगव्रजः, नूनं ] निश्चितं, [ कलमं, नात्ति ] न खादति, [ इति ] ; किं कलमभक्षणे गीतश्रवणविशेषः, इत्यतो मृगविशेषणमाह,—[असौ] गोपी, [ अस्मान्, व्यासेद्धुं ] निवारयितुम्, [अवधानतः] गीतैकाग्र्यात्, [पुरा, चलति] चलिष्यति । "यावत्पुरानिपातयोर्लट्" ( ३।३।४ पा० ) इति भविष्यदर्थे लट् । इति इत्थं वितर्कयन्निति शेषः । [ हरिर्व्यलोकयत् ] * अत्र मृगाणां कलमखादननिवृत्तेर्गीताऽऽसक्तिनिमित्तायास्तदाकर्णनसुखभङ्गहेतुकत्वम् उत्प्रेक्ष्यते ॥ ४३ ॥

---

* वाक्यार्थः कर्म ।

लीलाचलत्स्त्रीचरणारुणोत्पल-
स्खलत्तुलाकोटिनिनादकोमलः।
शौरेरुपानूपमपाहरन्मनः
स्वनान्तरादुन्मदसारसारवः ॥ ४४ ॥

उच्चैर्गतामस्खलितां गरीयसीं
तदाऽतिदूरादपि तस्य गच्छतः।
एके समूहुर्बलरेणुसंहतिं
शिरोभिराज्ञामपरे महीभृतः ॥ ४५ ॥

लीलेति।—अनुगता आपो येषु ते अनूपाः जलप्रायदेशाः। 'जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः' इत्यमरः। "प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः" (वा०) इति बहुव्रीहिः, "ऋक्पूः—" (५।४।७४ पा०) इत्यादिना समासान्तः, "ऊदनोर्देशे" (६।३।९८ पा०) इत्यूकारः। तेषां समीपे [उपानूपं]। समीपार्थेऽव्ययीभावः। [लीलाचलत्स्त्रीचरणारुणोत्पलस्खलत्तुलाकोटिनिनादकोमलः] लीलया चलन्ती चलनशीले, स्त्रियाश्चरणे अरुणोत्पले इव तयोः स्खलन्त्यौ ये तुलाकोटी नूपुरौ। 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः, तयोर्निनाद इव कोमलो मधुरः, [उन्मदसारसारवः] मत्तहंसकूजितम्। "चक्राङ्गसारसौ हंसे" इति शब्दार्णवे। [शौरेर्मनः स्वनान्तरात् अपाहरत् *]। अत्र मनोहरणस्य लीलेत्यादिविशेषणार्थहेतुकत्वादुपमासङ्कीर्णं काव्यलिङ्गम् ॥ ४४ ॥

उच्चैरिति।—[तदा] तस्मिन् समये, [अतिदूराद्गच्छतोऽपि, तस्य] हरेः, सम्बन्धिनीम्, [उच्चैर्गताम्] अत्यूर्द्ध्वमुन्नताम्; अन्यत्र,—ऊर्द्ध्वलोकेष्वपि व्याप्ताम्; [अस्खलिताम्] अभङ्गुरां, सत्याञ्च, [गरीयसीम्]

* आचकर्ष।

प्रायेण नीचानपि मेदिनीभृतो
जनः समेनैव पथाऽधिरोहति ।
सेना मुरारेः पथ एव सा पुन-
र्महामहीध्रान् परितोऽध्यरोहयत् ॥ ४६ ॥
दन्ताग्रनिर्भिन्नपयोदमुन्मुखाः
शिलोच्चयानारुरुहुर्महीयसः ।

---

अतिमहतीं, पूज्यां च, [ बलरेणुसंहतिं ] सेनारेणुसङ्घातम्, [ एके ] कतिपये, [ महीभृतः ] पर्वताः, [ आज्ञां ] शासनम्, [ अपरे ] महीभृतो राजानश्च, [ शिरोभिः ] शेखरैः, शीर्षैश्च, [ समूहुः ] संवहन्ति स्म। वहेर्लिटि "झेर्जुस्" (३।४।१०८ पा०) इति झेर्जुसि, "वचिस्वपि—" ( ६।१।१५ पा० ) इत्यादिना सम्प्रसारणम्। अत्र हरिमहिमवर्णनाया-मुभयेषामपि महीभृतां प्रकृतत्वात् केवलप्रकृताऽऽस्पदा तुल्ययोगिता श्लेषप्रतिभोत्थापिता चेति सङ्करः ॥ ४५ ॥

प्रायेणेति।—[ प्रायेण ] प्राचुर्य्येण, [ नीचान् ] कुब्जान्, [ अपि, मेदिनीभृतः ] अद्रीन्, [जनः ] लोकः, [समेन] सुगमेन, [पथा] मार्गेण, [ एव, अधिरोहति ]। [ सा मुरारेः सेना पुनः, पथः ] मार्गान्, [ एव, महामहीध्रान् ] महाद्रीन्, [ परितोऽध्यरोहयत् ]। लोके हि सति सुमेऽध्वनि, तेन शैलारोहणसम्भवः, सेना तु सर्वपथातिरेकिण्यभूत्। पूर्वापराः सहस्रं पन्थानः स्वाऽऽरोहणेन प्रवर्त्तिता इत्यर्थः। रोहतेर्गत्यर्थ-त्वात् "गतिबुद्धि—" (१।४।५२ पा० ) इत्यादिना पथामणिकर्त्तॄणां णौ कर्मत्वम्। महीं धरन्तीति महीध्राः। "कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम्" ( वा० ) इति मूलविभुजादित्वात् कः। अत्र सेनायाः पथां शैलाधिरोहणेनोपमानाज्जनादाधिक्यकथनाद्व्यतिरेकः ॥ ४६ ॥

दन्ताग्रेति।—द्वाभ्यां पिबन्तीति [ द्विपाः ]। "सुपि" ( ३।२।४ पा०) इति योगविभागात् कप्रत्ययः। [ उन्मुखाः ] उन्नमितमुखाः सन्तः,

तिर्य्यक्कटप्लाविमदाम्बुनिम्नगा-
विपूर्य्यमाणश्रवणोदरं द्विपाः ॥ ४७ ॥

श्च्योतन्मदाम्भःकणकेन केनचित्
जनस्य जीमूतकदम्बकद्युता ।
नागेन नागेन गरीयसोच्चकै-
ररोधि पन्थाः पृथुदन्तशालिना ॥ ४८ ॥

भग्नद्रुमाश्चक्रुरितस्ततो दिशः
समुल्लसत्केतनकाननाऽऽकुलाः ।

---

[ दन्ताग्रनिर्भिन्नपयोदं ] दन्ताग्रैः निर्भिन्ना विदारिताः, पयोदाः श्टङ्ग-गता यस्मिन् कर्मणि तद् यथा तथा, [ तिर्य्यक्कटप्लाविमदाम्बुनिम्नगा-विपूर्य्यमाणश्रवणोदरं ] तिर्य्यगूर्द्धमुखत्वात् तिरश्चीनं यथा तथा, कटेभ्यः प्लवन्ते चरन्तीति कटप्लाविनीभिः, मदाम्बुनिम्नगाभिर्मदजलप्रवाहैः, विपूर्य्यमाणानि श्रवणोदराणि यस्मिन् कर्मणि तद्यथा तथा, [ महीयसः ] महत्तरान्, [ शिलोच्चयान् आरुरुहुः ] । स्वभावोक्तिः ॥ ४७ ॥

श्च्योतदिति ।—[श्च्योतन्मदाम्भःकणकेन] श्च्योतन्तः चरन्तः मदाम्भः-कणा यस्य तेन। शैषिकः कप्प्रत्ययः । * [ जीमूतकदम्बकद्युता ] जीमूतकदम्बकस्येव, द्युत् द्युतिर्यस्य तेन † । [ पृथुदन्तशालिना ] पृथुभ्यां दन्ताभ्यां शालत इति तच्छालिना, [ गरीयसा ] गुरुतरेण, [ उच्चकैः ] उन्नतेन, [केनचित्, नागेन] गजेन, [जनस्य, पन्थाः] मार्गः, यथा [ अरोधि । अगेन ] अचलेन, [ न ] तथा अरोधि, रुद्धः । मत्तमातङ्गस्य दुरासदत्वाच्छैलवदनतिक्रमणीयत्वाच्चेति भावः ; अत एवोपमानादगाादुपमेयस्य नागस्याऽऽधिक्याद्व्यतिरेकः ॥ ४८ ॥

---

* "शेषाद् विभाषा" ( ५।४।१५४ पा० ) इति समासान्तः कप्प्रत्ययः ।

† इत्युपमा ।

पिष्टाद्रिपृष्ठास्तरसा च दन्तिन-
श्चलन्निजाङ्गाचलदुर्गमा भुवः ॥ ४९ ॥
आलोकयामास हरिर्महीधरा-
नधिश्रयन्तीर्गजताः परःशताः ।
उत्पातवातप्रतिकूलपातिनो-
रुपत्यकाभ्यो बृहतीः शिला इव ॥ ५० ॥

---

भग्नेति ।—[दन्तिनः] गजाः, [इतस्ततः, भग्नद्रुमाः] स्वभग्नाखिलवृक्षाः, [ दिशः, समुल्लसत्केतनकाननाऽऽकुलाः ] समुल्लसद्भिः केतनैरेव काननैः आकुलाः सङ्कीर्णाः, [ चक्रुः ] ; तथा [तरसा] बलेन, [पिष्टाद्रिपृष्ठाः ] पिष्टानि चूर्णितानि, अद्रिपृष्ठानि यासु ताः, [ भुवः ] भूमीः, [ चलन्निजाङ्गाचलदुर्गमाः ] चलद्भिः निजाङ्गैरेवाचलैः दुर्गमाः दुष्प्रापाः, [ च ] चक्रुः । अत्र केतनेष्वङ्गेषु च काननाचलत्वरूपणाद्रूपकालङ्कारः, तेन गजानां पुरातनसृष्टिसंहारेण सृष्ट्यन्तरप्रवर्त्तनरूपं लोकोत्तरं सामर्थ्यं गम्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ४९ ॥

आलोकेति ।—[ हरिर्महीधरान् अधिश्रयन्तीः, परःशताः ] शतात् पराः, असङ्ख्याता इत्यर्थः । 'परःशताद्यास्ते येषां परा सङ्ख्या शतादिकात्' इत्यमरः । "पञ्चमी" ( २।१।३७ पा० ) इति योगविभागात् समासः, राजदन्ताऽऽदित्वादुपसर्ज्जनस्यापि शतशब्दस्य परनिपातः, * पारस्कराऽऽदित्वात् सुडागमः । [ गजताः ] गजसमूहान् । 'गजाच्चेति वक्तव्यम्' ( वा० ) इति सामूहिकस्तल्प्रत्ययः । [ उपत्यकाभ्यः ] आसन्नभूमिभ्यः । "उपत्यकाद्रेरासन्ना भूमिः" इत्यमरः । "उपाधिभ्यां त्यकन्नासन्नारूढयोः" ( ५।२।३४ पा० ) इति त्यकन्प्रत्ययः । [ उत्पातवातप्रतिकूलपातिनीः ] उत्पातवातेन प्रतिकूलं पतन्तीति तत्पातिनीः,

---

* "राजदन्ताऽऽदिषु परम्" ( २।२।३१ पा० ) इति सूत्रम् ।

शैलाधिरोहाभ्यसनाधिकोद्धुरैः
पयोधरैरामलकीवनाश्रिताः ।
तं पर्वतीयप्रमदाश्चचायिरे
विकासविस्फारितविभ्रमेक्षणाः ॥ ५१ ॥

सावज्ञमुन्मील्य विलोचने सकृत्
क्षणं मृगेन्द्रेण सुषुप्सुना पुनः ।
सैन्यान्न यातः समयाऽपि विव्यथे
कथं सुराजम्भवमन्यथाऽथवा ॥ ५२ ॥

---

ऊर्द्ध्वगामिनीरित्यर्थः । [ बृहतीः शिला इव ] इत्युत्प्रेक्षा । [ आलोकयामास ] ॥ ५० ॥

शैलेति ।—[ शैलाधिरोहाभ्यसनाधिकोद्धुरैः ] शैलाधिरोहाभ्यसनेन पर्वताऽऽरोहणाभ्यासेन, अधिकोद्धुरैः अत्युन्नतैः, [पयोधरैः] स्तनैः, उपलक्षिताः, [ आमलकीवनाऽऽश्रिताः ] धात्रीवनगताः, [पर्व्वतीयप्रमदाः] पर्वतो निवासो येषां ते पर्वतीयाः, किरातादयः । "पर्वताच्च" (४।२।१४३ पा० ) इति छप्रत्ययः । तेषां प्रमदाः । [ विकासविस्फारितविभ्रमेक्षणाः ] विकासेन विस्मयकृतविस्तारेण, विस्फारिता विवर्त्तिताः, विभ्रमा विलासा येषां, तानीक्षणानि यासां ताः, तथा सत्यः, [ तं ] हरिं, [चचायिरे] ददृशुः । 'चायृ पूजानिशामनयोः' इति धातोः कर्त्तरि लिट् । निशामनं दर्शनम् । 'निरीक्षणनिशामने' इति दर्शनपर्य्यायेषु भट्टमल्लः । एतेन हरेर्लोकोत्तरं लावण्यं व्यज्यत इति वस्तुना वस्तुध्वनिः । स्वभावोक्तिवृत्त्यनुप्रासयोः संसृष्टिः ॥ ५१ ॥

सावज्ञमिति ।—[ सावज्ञम् ] अनादरं यथा तथा, [ विलोचने, सकृत् ] एकवारम् । "एकस्य सकृच्च" ( ५।४।१९ पा० ) इति सकृदर्थे निपातः । [ क्षणम्, उन्मील्य ] उन्मिष्य, [पुनः, सुषुप्सुना] स्वप्तुमिच्छुना ।

उत्सेधनिर्धूतमहीरुहां ध्वजै-
र्जनावरुद्धोद्धतसिन्धुरंहसाम् ।
नागैरधिक्षिप्तमहाशिलं मुहु-
र्बलं बभूवोपरि तन्महीभृताम् ॥ ५३ ॥

---

स्वपेः सन्नन्तादुप्रत्ययः । "रुदविद—" (१।२।२८ पा०) इत्यादिना सनः कित्त्वात् "वचिस्वपि—" (६।१।१५ पा०) इत्यादिना सम्प्रसारणम् । [ मृगेन्द्रेण ] सिंहेन, [ समया ] समीपे । 'समयानिकषाशब्दौ समीपे सम्प्रकीर्त्तितौ' इति सज्जनः । [ यातोऽपि ] गच्छतोऽपि । यातेर्लटः शत्रादेशः । [ सैन्यात् ] सेनातः । "भीत्रार्थानां भयहेतुः" (१।४।२५ पा०) इत्यपादानत्वम् । [ न विव्यथे ] न बिभ्ये । 'व्यथ भयसञ्चलनयोः" इति धातोर्भावे लिट् । [ अथवा ] तथा हीत्यर्थः । [ अन्यथा ] भीतत्वे, [ कथं सुराजम्भवं ] सुखेन राज्ञा भूयते, न कथमपीति भावः । राजा चायं मृगाणामिति भावः । "कर्तृकर्मणोश्च भूकृञोः" (३।३।१२७ पा०) इति कर्त्तरि, ईषदादौ चोपपदे भवतेः खल्प्रत्यये, नलोपमुमागमौ । अर्थान्तरन्यासः ॥ ५२ ॥

उत्सेधेति ।—[ नागैः ] गजैः, [अधिक्षिप्तमहाशिलम्] अधिक्षिप्तास्तिरस्कृताः, महाशिला येन तत्, [तद्, बलं] सैन्यं, [ध्वजैः, उत्सेधनिर्धूतमहीरुहाम् ] उत्सेधेन औन्नत्येन, निर्धूता अवगणिताः, महीरुहो येषु तेषाम् । 'उत्सेधश्चोच्छ्रयश्च सः' इत्यमरः । [ जनावरुद्धोद्धतसिन्धुरंहसां ] जनैः अवरुद्धं प्रतिबद्धम्, उद्धतम् उद्वेलं, सिन्धुरंहो नदीवेगो येषु तेषां, [ महीभृतां ] पर्वतानाम्, [ उपरि मुहुर्बभूव ] मार्गवशाद्भूयसो भूधरान् मुहुराक्रोहेत्यर्थः । "हयौघरुद्धः" इति पाठे,—हयौघेन घोटकसमूहेन, रुद्धमित्यादि पूर्ववत् । अत्राऽऽरोहणवदुत्कर्षश्चोपरिभावो विशेषणवैभवात् प्रतीयते इति तदभेदेनोपरिभावस्य बलभूधरविशेषणपदार्थहेतुकत्वात् श्लेषप्रतिभोत्थापितकाव्यलिङ्गविशेषो व्यतिरेकेण सङ्कीर्णः ॥ ५३ ॥

श्मश्रूयमाणे मधुजालके तरो-
र्गजेन गण्डं कषता विधूनिते।
क्षुद्राभिरक्षुद्रतराभिराऽऽकुलं
विदश्यमानेन जनेन दुद्रुवे ॥ ५४ ॥

नीते पलाशिन्युचिते शरीरवद्-
गजान्तकेनान्तमदान्तकर्मणा।
सन्नेरुरात्मान इवापरं क्षणात्
क्षमारुहं देहमिव प्लवङ्गमाः ॥ ५५ ॥

---

श्मश्रूयेति।—[ तरोः ] वृक्षस्य, [ श्मश्रूयमाणे ] श्मश्रुवदाचरति, तद्वदालम्बमान इत्यर्थः। उपमाऽलङ्कारः। श्मश्रुशब्दादाचारे क्यङन्ताल्लटः शानजादेशः "अकृत्सार्वधातुकयोर्दीर्घः" ( ७।४।२५ पा० ) इति दीर्घः। [ गण्डं ] कपोलं, [ कषता ] तरुस्कन्धे कण्डूयमानेन, [ गजेन, मधुजालके] क्षौद्रपटले, [विधूनिते] कम्पिते सति। धूञो ण्यन्तात् कर्मणि क्तः "धूञ्प्रीञोर्नुग्वक्तव्यः" ( वा० ) इति नुगागमः। [ अक्षुद्रतराभिः ] अतिस्थूलाभिः, [ क्षुद्राभिः ] सरघाभिः। 'क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका' इत्यमरः। [ विदश्यमानेन ] चञ्चुभिः* भिद्यमानेन, [जनेन, आकुलं] व्यग्रं यथा तथा, [ दुद्रुवे ] पलायितम्। भावे लिट्। स्वभावोक्तिरुक्तोपमासंसृष्टा ॥ ५४ ॥

नीत इति।—[ उचिते ] परिचिते, [ पलाशिनि ] द्रुमे। 'पलाशी द्रुद्रुमागमाः' इत्यमरः। [ शरीरवत् ] पूर्वशरीरे इव। "तत्र तस्येव" ( ५।१।११६ पा० ) इति वतिप्रत्ययः। [ अदान्तकर्मणा ] दुर्दान्तव्यापारेण। गजोऽन्तक इवेति उपमितसमासः। साहचर्य्यात्, तेन [गजान्तकेन, अन्तं ] नाशं, [नीते ] गमिते सति ; प्लवैर्गच्छन्तीति [ प्लवङ्गमाः ]

---

* "चञ्चुभिः" इत्यसङ्गतं, पक्षिणामिव तत्सत्त्वात्, सरघाणां तदभावाच्च।

प्रह्वानतीव क्वचिदुन्नतिश्रितः
क्वचित् प्रकाशानतिगह्वरानपि ।
साम्यादपेतानिति वाहिनी हरे-
स्तदाऽतिचक्राम गिरीन् गुरूनपि ॥ ५६ ॥
स व्याप्तवत्या परितोऽपथान्यपि
स्वसैनया सर्वपथीनया तया ।

---

कपयः । "गमश्च" (३।२।४७ पा०) इति खच्प्रत्यये मुमागमः । [आत्मानः] जीवाः, [इवापरं चलारुहं देहमिव क्षणात्, सञ्चेरुः] सम्प्रविष्टा इत्यर्थः । अनेकेवशब्दवाक्यार्थोपमा, सा च शरीरवत् इति तद्धितगता, अन्यत्र समासगतेति सङ्करः ॥ ५५ ॥

प्रह्वानिति ।—[क्वचित्, अतीव] नितान्तं, [प्रह्वान्] प्रवणान् । अन्यत्र,—अनुकूलान्, [क्वचित्], उन्नतिं श्रयन्तीति [उन्नतिश्रितः] औन्नत्यभाजः, औद्धत्यभाजश्च । श्रयतेः क्विप् तुक् । क्वचित् [प्रकाशान्] प्रकटान्, अनवगूढवृत्तींश्च । क्वचित् [अतिगह्वरान्, अपि] । अपि श्चार्थे । अप्रवेशान्, अन्यत्र,—गूढांश्च । [इति] इत्थं, [साम्यादपेतान्] विषमरूपान्, विषमवृत्तांश्च । अत एव [गुरूनपि] महतोऽपि, पूज्यानपि, [गिरीन् तदा हरेः, वाहिनी] सेना, [अतिचक्राम] अतीत्य गता, उल्लङ्घिता च । 'गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः । उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥' इति स्मरणादिति भावः । गुरूणामप्यतिक्रम इति विरोधेऽपिशब्दः, स चोक्तवैषम्यदोषोद्घाटनेन परिहृत इति विरोधाभासः; स च गुरूनिति वाच्यप्रतीयमानयोरभेदाध्यवसायात् श्लेषमूलातिशयोक्त्युत्थापित इति सङ्करः ॥ ५६ ॥

स इति ।—[सः] हरिः, [परितः] समन्तात्, [अपथानि] अमार्गान्, [अपि] । "पथो विभाषा" (५।४।७२ पा०) इति निषेधविकल्पात् "ऋक्पूः—" (५।४।७४ पा०) इत्यादिना समासान्तः । "अपथं

अम्भोभिरुल्लङ्घिततुङ्गरोधसः
प्रतीपनाम्नीः कुरुते स्म निम्नगाः ॥ ५७ ॥
यावद्व्यगाहन्त न दन्तिनां घटा-
स्तुरङ्गमैस्तावदुदीरितं खुरैः।
क्षिप्तं समीरैः सरितां पुरः पतज्-
जलान्यनैषीद्रज एव पङ्कताम् ॥ ५८ ॥

---

नपुंसकम्" ( २।४।३० पा० ) इति नपुंसकत्वम्। [ व्याप्तवत्या ] अपि, सर्वान् पथो व्याप्नोतीति सर्वपथीना। "तत्सर्वादेः—" ( ५।२।७ पा० ) इत्यादिना खप्रत्ययः। तया, [सर्वपथीनया तया स्वसेनया ] निमित्तेन, [ अम्भोभिः, उल्लङ्घिततुङ्गरोधसः ] उल्लङ्घितानि युगपदखिलसेनाप्रवेशेन प्रतीपगमनादुपरि आक्रान्तानि, तुङ्गरोधांसि यासां ताः ; निम्नं गच्छन्तीति [ निम्नगाः ] नदीः, [ प्रतीपनाम्नीः कुरुते स्म ] । प्रतिगता उत्तानगाः, आपो यासां ताः प्रतीपाः। "ऋक्पूः—" ( ५।४।७४ पा० ) इत्यादिना समासान्तः। "द्व्यन्तरुपसर्गेभ्योऽप ईत्" ( ६।३।९७ पा० ) इतीकारः। अथ वा,—प्रतीपं निम्नगानामविरुद्धं, नाम उत्तानगा इति नामधेयं, यासां ताः प्रतीपनाम्न्यः। "अन उपधालोपिनोऽन्यतरस्याम्" ( ४।१।२८ पा० ) इति ङीप्। तास्तथा चकारेत्यर्थः। अत्र निम्नगानां प्रतीपनामासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ५७ ॥

यावदिति।—[दन्तिनां घटाः] गजव्रजाः, [यावत्, न व्यगाहन्त] न व्यलोडयन्, [ तावत्, तुरङ्गमैः ] कर्तृभिः। [ खुरैः ] करणैः। [ उदीरितम् ] उत्थापितम् ; अथ [ समीरैः ] मारुतैः, [ क्षिप्तं ] विकीर्णम् ; अत एव, [ पुरः ] गजप्रवेशात् प्रागेव, [ पतत्, रजः ] भूरेणुः, [ एव सरितां जलानि पङ्कताम्, अनैषीत् ] निनाय। नयतेर्द्विकर्मकत्वात् लुङि वृद्धिः। अत्रापि सरितां पङ्कत्वासम्बन्धेऽपि सम्बन्धोक्तेः पूर्ववदतिशयोक्तिः ॥ ५८ ॥

रन्तुं क्षतोत्तुङ्गनितम्बभूमयो-
मुहुर्व्रजन्तः प्रमदं मदोद्धताः ।
पङ्कं करापाकृतशैवलांशुकाः
समुद्रगाणामुदपादयन्निभाः ॥ ५९ ॥
रुग्णोरुरोधःपरिपूरिताम्भसः
समस्थलीकृत्य पुरातनीर्नदीः ।
कूलङ्कषौघाः सरितस्तथाऽपराः
प्रवर्त्तयामासुरिभा मदाम्बुभिः ॥ ६० ॥

---

रन्तुमिति ।—[ रन्तुं ] क्रीड़ितुं, * [ क्षतोत्तुङ्गनितम्बभूमयः ] क्षताः, एकत्र,—विषाणैः, अन्यत्र,—नखैश्च विदलिताः, उत्तुङ्गाः नितम्बभूमयो रोधोभागाः, श्रोणिभागाश्च यैस्ते । 'नितम्बो रोधसि स्कन्धे शिखरेऽपि कटीरके' इति विश्वः । [ मुहुः, प्रमदं ] हर्षं, [ व्रजन्तः, मदोद्धताः ] मदेन दानेन, दर्पेण च, उद्धताः, [ करापाकृतशैवलांशुकाः ] करैर्हस्तैः, अपाकृतानि शैवलानि अंशुकानीवांशुकानि † यैस्ते, [ इभाः ] ; समुद्रं गच्छन्तीति [ समुद्रगाणां ] समुद्रपत्नीनां नदीनाम्, "एकाजुत्तरपदे णः" ( ८।४।१२ पा० ) इति णत्वम् । [ पङ्कं ] कर्दमं, कलुषञ्च, [ उदपादयन् ] । 'पङ्कोऽस्त्री कर्दमैनसोः' इति विश्वः । यथा मदोद्धताः पराङ्गनानां दोषमुत्पादयन्ति तद्वदिति भावः । अत्र प्रस्तुतेभविशेषणादप्रस्तुतस्त्रीसङ्गहणसाहसिकप्रतीतेः समासोक्तिः, स्त्रीपङ्कयोरभेदाध्यवसायादिति श्लेषमूलाऽतिशयोक्त्युत्थापितेति सङ्करः ॥ ५९ ॥

रुग्णेति ।—[ तथा,—इभाः, रुग्णोरुरोधःपरिपूरिताम्भसः ] रुग्णैर्भग्नैः, उरुभिर्महद्भिः, रोधोभिस्तटैः, परिपूरिताम्भसः मृत्क्षेपशोषिताम्भस

---

* विहर्त्तुञ्च ।

† शैवलानि अंशुकानीव, शैवलानीव चांशुकानि इति तु युक्तः पाठः ।

पद्मैरनन्वीतवधूमुखद्युतो-
गता न हंसैः श्रियमातपत्रजाम्।
दूरेऽभवन् भोजबलस्य गच्छतः
शैलोपमाऽतीतगजस्य निम्नगाः॥ ६१॥

स्निग्धाञ्जनश्यामतनूभिरुन्नतै-
र्निरन्तराला करिणां कदम्बकैः।

---

इत्यर्थः। पुरा भवाः [पुरातनीः] "सायंचिरं—" (४।३।२३ पा०) इत्यादिना ट्युप्रत्ययः तुडागमश्च, "टिड्ढाणञ्—" (४।१।१५ पा०) इत्यादिना ङीप्। [नदीः, समस्थलीकृत्य] स्थलसमाः कृत्वा। [मदाम्बुभिः] स्वमदोदकैः, [कूलङ्कषौघाः] कूलं कषन्तीति, कुलङ्कषाः ओघा यासां ताः, उभयकूलप्रवाहिनीः, [अपराः] अन्याः, [सरितः प्रवर्त्तयामासुः]। एतेन गजसम्पत्तिरुक्ता। अत्र नदीनां समस्थलत्वासम्बन्धे मदाम्बूनाञ्च सरित्त्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिद्वयमिति सजातीयसङ्करः॥ ६०॥

पद्मैरिति।—[पद्मैः, अनन्वीतवधूमुखद्युतः] अनन्वीता अप्राप्ता, वधूमुखस्य, द्युत् शोभा याभिस्ताः, वधूमुखशोजितपद्मा इत्यर्थः। अन्वीतेति 'ईङ् गतौ' इति धातोः कर्मणि क्तः। [हंसैः, आतपत्रजां] छत्रजन्यां [श्रियं, न गता] अगताः, आतपत्रशोजितहंसशोका इत्यर्थः, [निम्नगाः] नद्यः, [शैलोपमाऽतीतगजस्य] शैलोपमाम् अतीताः शिलासाम्यम् अतिक्रान्ताः, गजा यस्मिन् तस्य, [गच्छतः, भोजबलस्य] यादवसैन्यस्य, [दूरेऽभवन्] अतिव्यवहिता इत्यर्थः। अपकृष्टाश्चेति गम्यते। तदभेदाध्यवसायेनैव निम्नगानां दूरभवनस्य तद्विशेषणपदार्थहेतुकत्वात् श्लेषमूलातिशयोक्तिसमुत्थापितः काव्यलिङ्गभेदः॥ ६१॥

स्निग्धेति।—[स्निग्धाञ्जनश्यामतनूभिः] स्निग्धाञ्जनमिव श्यामा *

---

* इत्युपमा।

सेना सुधाक्षालितसौधसम्पदां
पुरां बहूनां परभागमाऽऽप सा ॥ ६२ ॥
प्रासादशोभाऽतिशयालुभिः पथि
प्रभोर्निवासाः पटवेश्मभिर्बभुः ।
नूनं सहानेन वियोगविक्लवा
पुरः पुरश्रीरपि निर्ययौ तदा ॥ ६३ ॥
वर्ष्मं द्विपानां विरुवन्त उच्चकै-
र्वनेचरेभ्यश्चिरमाचचक्षिरे ।

---

ताभिस्तनूभिः, [ उन्नतैः करिणां कदम्बकैः, निरन्तराला ] नीरन्ध्रा, [ सा सेना, सुधाक्षालितसौधसम्पदां ] सुधया लेपनविशेषेण, क्षालिता धवलिताः, सौधसम्पदो यासां तासाम् । 'लेपभेदेऽमृते सुधा' इति वैजयन्ती । [ बहूनां, पुरां ] पुरीणां, [ परभागं ] विप्रकृष्टदेशम्, [ आप ] दूरमतीत्य गतेत्यर्थः । वर्णोत्कर्षश्च परभागः । तदभेदाध्यवसायेन परभागाप्तौ विशेषणगत्या श्यामकरिकदम्बकनैरन्तर्यस्य हेतुत्वात् पूर्ववत् काव्यलिङ्गभेदः ॥ ६२ ॥

प्रासादेति ।—[ पथि ] मार्गे, [ प्रभोः ] कृष्णस्य, [निवासाः] सेनानिवेशाः, [ प्रासादशोभाऽतिशयालुभिः ] प्रासादशोभाम् अतिशयालुभिः अतिशायकैः । 'आलुचि शीङो ग्रहणं कर्त्तव्यम्' (वा०) इत्यालुच्प्रत्ययः । [ पटवेश्मभिः ] पटवस्त्रैः * [ बभुः ] । तेनोत्प्रेक्ष्यते । [ तदा ] द्वारकानिर्याणकाले, [ अनेन ] कृष्णेन, [ सह, वियोगविक्लवा ] विरहभीरुः, [ पुरश्रीः ] द्वारकानगरलक्ष्मीः, [अपि, पुरः] अग्रे, [ निर्ययौ ] निर्गता नूनम् । द्वारकातो न भिद्यन्ते अस्य निवासाः शोभयेति भावः ॥६३॥

वर्ष्मेति ।—[ गण्डस्थलाघर्षगलन्मदोदकद्रवद्रुमस्कन्धनिलायिनः ]

---

* पटमण्डपैरित्येव समीचीनः पाठः ।

गण्डस्थलाघर्षगलन्मदोदक-
द्रवद्रुमस्कन्धनिलायिनोऽलयः ॥ ६४ ॥
आयामवद्भिः करिणां घटाशतै-
रधःकृताऽट्टालकपङ्क्तिरुच्चकैः ।
दूष्यैर्जितोदग्रगृहाणि सा चमू-
रतीत्य भूयांसि पुराण्यवर्त्तत ॥ ६५ ॥
उद्धूतमुच्चैर्ध्वजिनीभिरंशुभिः
प्रतप्तमभ्यर्णतया विवस्वतः ।

---

गण्डस्थलानाम् आघर्षेण सङ्घर्षेण, गलता स्रवता, मदोदकेन द्रवेषु आर्द्रेषु, द्रुमस्कन्धेषु, निलीयन्त इति निलायिनः तन्निवासिनः, [उच्चकैः, विरुवन्तः] गुञ्जन्तः, [अलयः, द्विपानां] सेनागजानां, [वर्ष्म] प्रमाणम् । 'वर्ष्म देहप्रमाणयोः' इति विश्वः । [वनेचरेभ्यः] किरातेभ्यः, [चिरम्, आचचक्षिरे] इयन्तो गजा इत्याख्यातवन्त इत्यर्थः । गज-वर्ष्मानुमापकेष्वलिषु विरावयोगादाख्यानम् उत्प्रेक्ष्यते । वाचका-प्रयोगाद्गम्योत्प्रेक्षा ॥ ६४ ॥

आयामेति ।—[आयामवद्भिः] आयामो दैर्घ्यं, सोऽस्ति येषां, तद्वद्भिः, आयतैः इत्यर्थः । [करिणां] सम्बन्धिभिः, [घटाशतैः] व्यूहशतैः । 'करिणां घटना घटा' इत्यमरः । [अधःकृताऽट्टालकपङ्क्तिः] अधःकृताः तिरस्कृताः, अट्टालकपङ्क्तयोऽट्टश्रेण्यो यया सा । 'अट्टस्वट्टा-लकः स्मृतः' इति वैजयन्ती । [सा चमूः, उच्चकैः] उन्नतैः, [दूष्यैः] पटमण्डपैः, [जितोदग्रगृहाणि] जितानि उदग्राणि गृहाणि येषां तानि, [भूयांसि पुराणि, अतीत्य अवर्त्तत] अतिक्रम्य गतेत्यर्थः । शोभया अतिशय्य स्थितेति च गम्यते । तदभेदाध्यवसायेन श्लेषमूलातिशयोक्त्यु-त्थापितं पूर्ववत् पदार्थहेतुकं काव्यलिङ्गम् ॥ ६५ ॥

आह्लादिकह्लारसमीरणाऽऽहते
पुरः पपाताम्भसि यामुने रजः ॥ ६६ ॥
या घर्मभानोस्तनयाऽपि शीतलैः
स्वसा यमस्यापि जनस्य जीवनैः ।
कृष्णाऽपि शुद्धेरधिकं विधातृभि-
र्विहन्तुमंहांसि जलैः पटीयसी ॥ ६७ ॥

---

अथ हरिसेनाः कालिन्दीं प्रत्यासेदुरित्याह, उद्धूतमिति।— [ध्वजिनीभिः] सेनाभिः, [उच्चैरुद्धूतम्] ऊर्द्ध्वं क्षिप्तम्; अत एव, [अभ्यर्णतया] अन्तिकतया। 'उपकण्ठान्तिकाभ्यर्णाः' इत्यमरः। [विवस्वतोऽंशुभिः, प्रतप्तं] प्रतप्तमिवेत्यर्थः; अत एव व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा। [रजः] धूलिः, [आह्लादिकह्लारसमीरणाऽऽहते] आह्लादिनः आह्लादकाः, ये कह्लारसमीरणाः सौगन्धिकमारुताः। 'सौगन्धिकन्तु कह्लारम्' इत्यमरः। तैः आहते कम्पिते, [यामुने] यमुनासम्बन्धिनि, [अम्भसि, पुरः] अग्रे, [पपात]। सन्तप्ता हि सन्तापमसहमानाः पुरो धावित्वा क्वचन शिशिरे पयसि पतन्तीति भावः ॥ ६६ ॥

अथ चतुर्भिर्यमुनां वर्णयति, येत्यादि।—[या] यमुना, [घर्मभानोः] उष्णांशोः,[तनयाऽपि] सती,[शीतलैः]। अपिर्विरोधे; स चोष्णजातायाः शैत्यानुपपत्तेरिति भावः। [यमस्य] अन्तकस्य, [स्वसाऽपि जनस्य, जीवनैः] उज्जीवकैः। अत्राप्येकोदराणां भिन्नक्रियाऽनुपपत्तेर्विरोधः। 'कालिन्दी सूर्य्यतनया' 'यमुना शमनस्वसा' इत्युभयत्राप्यमरः। किञ्च, [कृष्णा] कृष्णवर्णा, मलिना च, तथा, [अपि, शुद्धेः] वैमल्यस्य, [अधिकं, विधातृभिः] सम्पादकैः, [जलैः, अंहांसि] पापानि, [विहन्तुं, पटीयसी] समर्थतरा। अत्र यमुनातज्जलगतत्वेन निर्द्दिष्टयोर्गुणक्रिययोर्विरोधेन

यस्या महानीलतटीरिव द्रुताः
प्रयान्ति पीत्वा हिमपिण्डपाण्डुराः ।
कालीरपस्ताभिरिवानुरञ्जिताः
क्षणेन भिन्नाञ्जनवर्णतां घनाः ॥ ६८ ॥

व्यक्तं बलीयान् यदि हेतुरागमा-
दपूरयत् सा जलधिं न जाह्नवी ।
गाङ्गौघनिर्भर्त्सितशम्भुकन्धरा-
सवर्णमर्णः कथमन्यथाऽस्य तत् ॥ ६९ ॥

---

त्रिषु विरोधिषु संसृष्टेषु तृतीयः कृष्णेति श्लेषप्रतिभोत्थापित इति संक्षेपः * ॥ ६७ ॥

यस्या इति ।—[ हिमपिण्डपाण्डुराः ] हिमसङ्घवत् शुभ्राः, †[ घनाः ] मेघाः, [ द्रुताः ] द्रवीकृताः, [ महानीलतटीः ] इन्द्रनीलस्थलानि, [ इव, कालीः ] कृष्णवर्णाः । "जानपद—" (४।१।४२ पा०) इत्यादिना ङीष् । [ यस्याः ] कालिन्द्याः, [ अपः पीत्वा, ताभिः ] पीताभिः अद्भिः, [ अनुरञ्जिता इव क्षणेन, भिन्नाञ्जनवर्णतां ] स्नेहमर्दितकज्जलवर्णतां, [ प्रयान्ति ]। अत्र तटीरिवानुरञ्जिता इवेति चोत्प्रेक्षाद्वयेन सङ्कीर्णेयं घनानामञ्जनोपमेति संग्रहः ॥ ६८ ॥

व्यक्तमिति ।—[ हेतुः ] युक्तिः, अनुमानमिति यावत् । [ आगमात् ] "गङ्गा सागरपूरणी" इत्यागमप्रमाणात् । [ बलीयान् यदि ] प्रबल-

---

* अत्र विरुद्धधर्माणां वैयधिकरण्यात् विरोधो न सङ्गच्छते इति पद्यमिदं परिवर्त्तितमेवं व्यक्तिविवेककारेण,—"या घर्मभानोस्तनयाऽपि शीतला स्वसा यमस्यापि जनस्य जीवनी । कृष्णाऽपि शुद्धेरधिकं विधायिनी—" एवं सति सामानाधिकरण्यमक्षतमेव ।

† इत्युपमा ।

अभ्युद्यतस्य क्रमितुं जवेन गां
तमालनीला नितरां धृताऽऽयतिः ।
सीमेव सा तस्य पुरः क्षणं बभौ
बलाम्बुराशेर्महतो महाऽपगा ॥ ७० ॥

[ कलापकम् ]

लोलैररित्रैश्चरणैरिवाभितो-
जवाद्व्रजन्तीभिरसौ सरिज्जनैः ।

---

श्येत्, तदा [सा] यमुना, [जलधिमपूरयत्] । जह्नोरपत्यं स्त्री [जाह्नवी, न] अपूरयत् । [ व्यक्तं ] सत्यम् । इत्युत्प्रेक्षा । कुतः ? [अन्यथा] विपर्यये, [ अस्य ] जलधेः, [ तत् ] प्रसिद्धम्, [ अर्णः ] अम्भः । 'अम्भोऽर्णस्तोय-पानीयम्' इत्यमरः । [ गाङ्गौघनिर्भर्त्सितशम्भुकन्धरासवर्णं ] गाङ्गेन गङ्गासम्बन्धिना, ओघेन प्रवाहेण, निर्भर्त्सितायाः निर्भर्त्सीकृतायाः, शम्भुकन्धरायाः हरकण्ठस्य, सवर्णं समानवर्णं, कृष्णवर्णमित्यर्थः [कथम् ?] * । 'ज्योतिर्जनपद—' ( ६।३।८५ पा० ) इत्यादिना समानस्य सभावः । अन्यथा गाङ्गौघस्य धावल्याद्धवलमेव स्यात् । तथा च ग्रावप्लवनवाक्यवदागमोऽप्यन्यथा नेय इति कवेराशयः ॥ ६९ ॥

अभीति ।—[ तमालनीला ] तमालवत् नीला कृष्णा, † [ नितरां धृताऽऽयतिः ] अत्यन्तं कृतदैर्घ्या, [सा, महाऽपगा ] महानदी, यमुना । [ जवेन, गां ] भुवं, [ क्रमितुम् ] आक्रमितुम्, [ अभ्युद्यतस्य ] उद्युक्तस्य, [ तस्य महतः, बलाम्बुराशेः ] सेनासमुद्रस्य, [ पुरः ] अग्रे, [ क्षणं, सीमेव ] वेलेव, [ बभौ ] । इत्युत्प्रेक्षा । क्षणमिति क्षणमात्रनिरोधिकाऽभवत्, अनन्तरमेव तरणादिति भावः ॥ ७० ॥

लोलैरिति ।—[ अभितः ] उभयतः, [ लोलैः ] चलद्भिः, [ अरित्रैः ]

---

* अत्र कृष्णवर्णताप्राप्तौ प्रोक्तार्थादन्यत् किमपि हेत्वन्तरं नास्तीत्यर्थः ।

† इत्युपमा ।

नौभिः प्रतेरे परितः प्लवोदित-
भ्रमीनिमीलल्ललनाऽवलम्बितैः ॥ ७१ ॥
तत्पूर्वमंसद्वयसं द्विपाधिपाः
क्षणं सहेलाः परितो जगाहिरे ।
सद्यस्ततस्तैरनारतस्रुत-
स्वदानवारिप्रचुरीकृतं पयः ॥ ७२ ॥
प्रोथैः स्फुरद्भिः स्फुटशब्दमुन्मुखै-
स्तुरङ्गमैरायतकीर्णवालधि ।

---

कैनिपातकदण्डैः । 'क्षिपणी स्यादरित्रं कैनिपातकः' इत्यमरः । [ चरणैः ] पादैः, [ इव ] । इत्युत्प्रेक्षा । [ जवात्, व्रजन्तीभिः ] गच्छन्तीभिः, [ नौभिः ] साधनैः, [ असौ सरित् ] यमुना, कर्म । [प्लवोदितभ्रमीनिमीलल्ललनाऽवलम्बितैः ] प्लवेनोदिता नौवेगेनोत्पन्ना, भ्रमी भ्रान्तिः, तस्याः तद्भयान्निमीलन्तीभिः भयादक्षिनिमीलनं कुर्वतीभिः, ललनाभिरवलम्बितैः [ जनैः ] कर्तृभिः, [परितः ] सर्वतः । सर्वोभयार्थे वर्त्तमानाभ्यां पर्य्यभिभ्यां तसिविधानात् । [ प्रतेरे ] प्रतीर्णा ॥ ७१ ॥

तत्पूर्वमिति ।—[ द्विपाधिपाः ] महागजाः, [ पूर्वं ] प्रथमम् ; अंसौ प्रमाणमस्य [ अंसद्वयसम् ] अंसप्रमाणम् ; तेषां तथोन्नतत्वादिति भावः । "प्रमाणे द्वयसज—" ( ५।२।३७ पा० ) इति द्वयसच्प्रत्ययः । [ तत् ] तथा गम्भीरं, [ पयः ] यमुनाजलं, [सहेलाः] सावज्ञाः, [परितो क्षणं, जगाहिरे] प्रविशन्ति स्म । [ततः] प्रवेशानन्तरं, [सद्यः] अविलम्बेन, [अनारतस्रुतस्वदानवारिप्रचुरीकृतम्] अनारतम् अविच्छिन्नं,स्रुतेन स्रवता, स्वदानवारिणा स्वमदोदकेन, प्रचुरीकृतं बहुलीकृतं, तत्पयः [ तैः ] तरन्ति स्म । अत्यातिगम्भीरस्याप्यम्भसोऽंसदघ्नत्वातिशयोक्त्या गजानामौन्नत्यं, पुनस्तस्यैव तन्मदाम्बुसम्भेद-तात्पर्य्योक्त्या तेषां मदातिरेकश्च व्यज्यते ॥ ७२ ॥

उत्कर्णमुद्राहितधीरकन्धरै-
रतीर्यताग्रे तटदत्तदृष्टिभिः ॥ ७३ ॥

तीर्त्वा जवेनैव नितान्तदुस्तरां
नदीं प्रतिज्ञामिव तां गरीयसीम् ।
शृङ्गैरपस्कीर्णमहत्तटीभुवा-
मशोभतोच्चैर्नदितं ककुद्मताम् ॥ ७४ ॥

सीमन्त्यमाना यदुभूभृतां बलै-
र्बभौ तरङ्गैर्गवलासितद्युतिः ।

---

प्रोथैरिति ।—[ स्फुटशब्दं] स्पष्टध्वानं यथा तथा, [ स्फुरद्भिः] चलद्भिः, [ प्रोथैः ] घोणाभिः, उपलक्षितैः । 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः । [ उन्मुखैः ] ऊर्ध्वमुखैः, तथा [ उत्कर्णम् ] उन्नमितकर्णं यथा तथा, [ उद्ग्राहितधीरकन्धरैः ] उद्ग्राहिता ऊर्ध्वं प्रसारिताः, धीरा निश्चलाः, कन्धरा ग्रीवाः यैः तैः, [ अग्रे ] पुरः, [तटदत्तदृष्टिभिः] तटे दत्तदृष्टिभिः, [तुरङ्गमैः, आयतकीर्णबालधि] आयताः प्रसारिताः, कीर्णाः विक्षिप्ताः, बालधयो यस्मिन् कर्मणि तद्यथा तथा, [अतीर्यत] अतारि । सरिदिति शेषः । कर्मणि लङि यक् । स्वभावोक्तिः ॥ ७३ ॥

तीर्त्वेति ।—[ नितान्तदुस्तराम् ] अतिमहत्तया अत्यन्ताशक्यतरणां, [ तां ] नदीं, [ गरीयसीम् ] अतिदुस्तरां, [ प्रतिज्ञामिव, जवेन ] वेगेन, [ एव तीर्त्वा, शृङ्गैः ] विषाणैः, [ अपस्कीर्णमहत्तटीभुवाम् ] अपस्कीर्णा आलेखिताः, महत्यः तटीभुवः तीरप्रदेशाः, यैः तेषाम् । "अपाच्चतुष्पाच्छकुनिष्वालेखने" ( ६।१।१४२ पा० ) इति किरतेः कात्पूर्वतः सुडागमः । [ ककुद्मताम् ] उक्ष्णाम्, [ उच्चैः ] उच्चैस्तरं, [नदितं] नादः, [अशोभत ] । उपमासङ्कीर्णा स्वभावोक्तिः ॥ ७४ ॥

सीमन्त्यमानेति ।—[ तरङ्गैः, यदुभूभृतां ] यादवभूपानां, [ बलैः ]

सिन्दूरितानेकपकङ्कणाङ्किता
तरङ्गिणी वेणिरिवाऽऽयता भुवः ॥ ७५ ॥
अव्याहतक्षिप्रगतैः समुच्छ्रिता-
ननुज्झितद्राघिमभिर्गरीयसः ।
नाव्यं पयः केचिदतारिषुर्भुजैः
क्षिपद्भिरूर्मीनपरैरिवोर्म्मिभिः ॥ ७६ ॥

---

सैन्यैः, [ सीमन्त्यमाना ] सीमन्तवती क्रियमाणा । सीमन्तवच्छब्दात् "तत्करोति—"(ग०) इति ण्यन्तात् कर्मणि लटः शानजादेशः, णाविष्ठवद्भावात् "विन्मतोर्लुक्" (५।३।६५ पा०) इति मतुपो लुक् । [गवलासितद्युतिः] माहिषविषाणवत् मेचकप्रभा * । 'गवलं माहिषं शृङ्गम् इत्यमरः । [ सिन्दूरितानेकपकङ्कणाङ्किता ] सिन्दूरिताः सिन्दूरवत्कृताः । सिन्दूरवच्छब्दात् "तत्करोति—" ( ग० ) इति ण्यन्तात् कर्मणि क्तः, णाविष्ठवद्भावात् "विन्मतोर्लुक्" (५।३।६५ पा०) इति मतुपो लुक् । तैः, अनेकपैर्द्विपैः, एव कङ्कणैः शेखरैः, † अङ्किता चिह्निता । 'कङ्कणं शेखरे हस्तसूत्रमण्डनयोरपि' इति विश्वः । [ तरङ्गिणी ] यमुना नदी, [ आयता ] दीर्घा, [ भुवो वेणिरिव बभौ ] इत्युत्प्रेक्षा ॥ ७५ ॥

अव्याहतेति ।—अत्रोर्मीणां भुजानाञ्च विशेषणान्युभयत्र विपरिणामेन योज्यानि । [ केचित् ] जनाः ; नावा तार्य्यं [ नाव्यम् ] । 'नाव्यं त्रिलिङ्गं नौतार्य्ये' इत्यमरः । "नौवयोधर्म—" (४।४।९१ पा०) इत्यादिना यत्प्रत्ययः । [ पयः ] जलम्, [ अव्याहतक्षिप्रगतैः ] अप्रतिहतशीघ्रगमनैः, [ अनुज्झितद्राघिमभिः ] अनुज्झितः, द्राघिमा दैर्घ्यं, यैस्तैः, अतिदीर्घैरित्यर्थः । [समुच्छ्रितान्] उन्नतान्, [गरीयसः] गुरुतरान्, [ऊर्मीन्, क्षिपद्भिः] अपाकुर्वद्भिः, अत एव [ अपरैरूर्मिभिरिव] स्थितैः ।

---

* इत्युपमा ।

† इति रूपकम् ।

विदलितमहाकूलामुक्ष्णां विषाणविघट्टनै-
रलघुचरणाऽऽकृष्टग्राहां विषाणिभिरुन्मदैः ।
सपदि सरितं सा श्रीभर्तुर्बृहद्रथमण्डलैः
स्खलितसलिलामुल्लङ्घ्यैनां जगाम वरूथिनी॥७७॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
प्रयाणवर्णनं नाम द्वादशः सर्गः ॥ १२ ॥

---

इत्युत्प्रेक्षा । [ भुजैः ] बाहुभिः, [ अतारिषुः ] तरन्ति स्म । तरतेर्लुङि, सिचि वृद्धिः इडागमः ॥ ७६ ॥

विदलितेति ।—[ सा ] प्रकृता, [ श्रीभर्त्तुः ] कृष्णस्य, [ वरूथिनी ] सेना, [उक्ष्णाम्] अनडुहां, [विषाणविघट्टनैः] शृङ्गाऽऽघातैः, [विदलितमहाकूलां ] विदलितानि महाकूलानि यस्यास्ताम्, [ उन्मदैः ] उन्नतमदैः, [विषाणिभिः, अलघुचरणाऽऽकृष्टग्राहां] अलघुभिः गुरुभिः, चरणैः पादैः, आकृष्टा वहिर्नीताः,ग्राहा जलग्राहाः,यस्यास्तां, [बृहद्रथमण्डलैः] बृहद्भिः, रथमण्डलैः रथसमूहैः, [स्खलितसलिलां] स्खलितानि व्याकुलीकृतानि, सलिलानि यस्यास्ताम् [एनां सरितं] यमुनां, [सपदि, उल्लङ्घ्य] जित्वा, तीर्त्वेत्यर्थः । भंक्त्वेति गम्यते, विशेषणसामर्थ्यात् । [जगाम] । अत्र जयस्य विशेषणगत्या कूलदलनादिहेतुकत्वात् काव्यलिङ्गभेदः । हरिणी वृत्तम्;—"भवति हरिणी न्सौ म्रौ स्लौ गो रसाम्बुधिविष्टपैः" इति लक्षणात् ॥ ७७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
माघकाव्यव्याख्यायां सर्वङ्कषाऽऽख्यायां द्वादशः सर्गः ॥१२॥

---

## त्रयोदशः सर्गः ।

---

यमुनामतीतमथ शुश्रुवानमुं
तपसस्तनूज इति नाधुनोच्यते ।
स यदाऽचलन्निजपुरादहर्निशं
नृपतेस्तदादि समचारि वार्त्तया ॥ १ ॥
यदुभर्त्तुरागमनलब्धजन्मनः
प्रमदादमानिव पुरे महीयसि ।

---

यमुनामिति ।—[ अथ ] यमुनातरणानन्तरं, [ तपसस्तनूजः ] धर्म-नन्दनः, [ अधुना यमुनामतीतम्, अमुं ] हरिं, [ शुश्रुवान् ] । "भाषायां सदवसश्रुवः" ( ३।२।१०८ पा० ) इति क्वसुप्रत्ययः । [ इति नोच्यते ], किन्तु [ सः ] हरिः, [ यदा निजपुरादचलत् ], तच्चलनम् आदिर्यस्मिन् कर्मणि तत् [ तदादि ] तत्प्रभृति । अहश्च निशा च [ अहर्निशम् ] । समाहारे द्वन्द्वैकवद्भावे अत्यन्तसंयोगे द्वितीया । [ नृपतेः ] धर्मराजस्य, [ वार्त्तया ] इह निविष्टः, इतो निर्गत इति वृत्तान्तेन, [ समचारि ] सञ्चरितम्, आगतमिति यावत् । भावे लुङ् । सन्निहितयमुनातरण-वृत्तान्तवद्व्यवहितसकलदैनन्दिनवृत्तान्तो निजनगरप्रस्थानात् प्रभृति प्रतिक्षणमागत एवेत्यर्थः । अस्मिन् सर्गे मञ्जुभाषिणी वृत्तम् ;—"सजसा जगौ भवति मञ्जुभाषिणी" इति लक्षणात् ॥ १ ॥

यदुभर्त्तुरिति ।—[ ततः ] हरेर्यमुनोत्तरणश्रवणानन्तरं, [सः, वसुधा-ऽधिपः ] धर्म्मराजः, [ यदुभर्त्तुः ] हरेः, [ आगमनलब्धजन्मनः ] आगमनेन, लब्धजन्मनो लब्धोदयात्, जातादित्यर्थः ; [प्रमदात्] हर्षात् ।

सहसा ततः स सहितोऽनुजन्मभि-

र्वसुधाऽधिपोऽभिमुखमस्य निर्ययौ ॥ २ ॥

रभसप्रवृत्तकुरुचक्रदुन्दुभि-

ध्वनिभिर्जनस्य बधिरीकृतश्रुतेः ।

समवादि वक्तृभिरभीष्टसङ्कथा-

प्रकृतार्थशेषमथ हस्तसंज्ञया ॥ ३ ॥

अपदान्तरञ्च परितः क्षितिक्षिता-

मपतन् द्रुतभ्रमितहेमनेमयः ।

---

"प्रमदसम्मदौ हर्षे" (३।३।६८ पा०) इत्यप्प्रत्ययान्तो निपातः। [महीयसि] अतिविपुलेऽपि, [पुरे, अमान् इव], हर्षकृतशरीरवृद्धेः, अपरिमितविकासः सन्निव, इत्युत्प्रेक्षा। [सहसा, अनुजन्मभिः] अनुजैः, [सहितः, अस्य] हरेः, [अभिमुखं, निर्ययौ] नगरात् निर्गत इत्यर्थः ॥ २ ॥

रभसेति।—[रभसप्रवृत्तकुरुचक्रदुन्दुभिध्वनिभिः] रभसो हर्षः। 'रभसो वेगहर्षयोः' इति विश्वः। तेन प्रवृत्तैः, कुरुचक्रदुन्दुभिध्वनिभिः कौरवसेनातूर्य्यघोषैः, [बधिरीकृतश्रुतेः] विकलीकृतश्रोत्रेन्द्रियस्य, [जनस्य] श्रोतृजनस्य, [वक्तृभिः] कथकैः, [अभीष्टसङ्कथाप्रकृतार्थशेषम्] अभीष्टसङ्कथासु इष्टाऽऽलापेषु, प्रकृतस्य वक्तुं प्रक्रान्तस्य, अर्थस्य अभिधेयस्य, शेषं वक्तव्यावशिष्टम्। [अथ] बाधिर्य्यानन्तरं, [हस्तसंज्ञया] हस्तसङ्केतेन, [समवादि] संवादितम्। श्रीकृष्णस्याऽऽगमनसन्तोषात् तथा दुन्दुभीनाजघ्नुः, यथा कण्ठोक्तशेषं करसंज्ञया निष्पाद्यते स्म इत्यर्थः। अत्र बधिरीकरणस्य जनविशेषणद्वारा हस्तसंज्ञया वदनहेतुत्वात् काव्यलिङ्गभेदः ॥ ३ ॥

अपदेति।—[द्रुतभ्रमितहेमनेमयः] द्रुतं शीघ्रं, भ्रमिताः परिवर्त्तिताः, हेमनेमयः कनकचक्रान्ताः, येषां ते। "चक्रधारा प्रधिर्नेमिः" इति

जविमारुताञ्चितपरस्परोपम-
क्षितिरेणुकेतुवसनाः पताकिनः ॥ ४ ॥
द्रुतमध्वननुपरि पाणिवृत्तयः
पणवा इवाश्वचरणक्षता भुवः।
ननृतुश्च वारिधरधीरवारणा-
ध्वनिहृष्टकूजितकलाः कलापिनः ॥ ५ ॥

---

हलायुधः। अत एव [ जविमारुताञ्चितपरस्परोपमक्षितिरेणुकेतुवसनाः ] जविना वेगवता, मारुतेन, अञ्चितानि कम्पितानि, परस्परमुपमान्तीति परस्परोपमानि अन्योऽन्यसदृशानि, क्षितिरेणुकेतुवसनानि स्वोत्थापितभूरेणवः, स्वाऽऽरोपितध्वजपटाश्च, येषां ते ; क्षितिं, क्षियन्ति ईशते, इति क्षितिक्षितः क्षितीशाः ; "क्षि ऐश्वर्य्ये वासे" इति धातोस्तौदादिकात् क्विपि तुक्। "क्षितिपतिश्चैवासौ क्षितिक्षित्" इति भट्टमल्लः। तेषां [क्षितिक्षितां] सम्बन्धिनः, पताकाः सन्ति येषामिति [पताकिनः] रथाः। व्रीह्यादित्वादिनिः। [ परितः ] सर्वतः ; नास्ति पदस्य अन्तरम् अवकाशः यस्मिन् कर्मणि तत् [अपदान्तरं] संसक्तं यथा तथा। 'संसक्ते त्वव्यवहितमपदान्तरमित्यपि' इत्यमरः। [अपतन्] अधावन्, [च]। अत्र राष्ट्रवर्णने रेणूनां केतूनाञ्च प्रकृतत्वात् केवलप्रकृताऽऽस्पदा तुल्ययोगिता ; तथा च परस्परोपमेति विशेषणात् रेणुवत्केतवः, केतुवच्च रेणव इति उपमेयोपमया, के रेणवः ?—के केतवः ?—इति संशयश्च व्यज्यते, इत्यलङ्कारेणालङ्कारध्वनिः ॥ ४ ॥

द्रुतमिति।—[ अश्वचरणक्षताः ] तुरगखुरवट्टिताः, [भुवः]। उपरि पृष्ठभागे, पाणिवृत्तयः पाणिताड़नानि, येषां ते, [ उपरिपाणिवृत्तयः, पणवाः ] वाद्यविशेषाः, [ इव ] इत्युपमा। [ द्रुतं ] द्रुततरमेव, [अध्वनन्] ध्वनन्ति स्म। 'अथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम्' इत्यमरः। [ वारिधरधीरवारणाध्वनिहृष्टकूजितकलाः ] वारिधरशब्देन तद्गर्जितं

व्रजतोरपि प्रणयपूर्वमेकतां
कुकुराधिनाथकुरुनाथसैन्ययोः ।
रुरुषे विषाणिभिरनुक्षणं मिथो-
मदमूढबुद्धिषु विवेकिता कुतः ? ॥ ६ ॥

अवलोक एव नृपतेः स्म दूरतो-
रभसाद्रथादवतरीतुमिच्छतः ।
अवतीर्णवान् प्रथममाऽऽत्मना हरि-
र्विनयं विशेषयति सम्भ्रमेण सः ॥ ७ ॥

---

लक्ष्यते । तद्वत्, धीरैर्गम्भीरैः, वारणध्वनिभिः गजबृंहणैः, हृष्टाः, अत एव कूजितकलाः, कूजिता इत्यर्थः । ततो विशेषणसमासः । कलापाः येषां सन्तीति, [ कलापिनः ] बर्हिणः, [ च, ननृतुः ] नृत्यन्ति स्म । श्लेषोपमयोः संसृष्टिः । वारिधरोपमया, कलापिनां गजबृंहितेषु घनगर्जितभ्रान्तिमन्तरेण नृत्यासम्भवात् भ्रान्तिमदलङ्कारो व्यज्यते, इत्यलङ्कारेणालङ्कारध्वनिः ॥ ५ ॥

व्रजतोरिति ।—तदा [ कुकुराधिनाथकुरुनाथसैन्ययोः ] हरिपार्थसैन्ययोः, [ प्रणयपूर्वं ] स्नेहपूर्वकम्, [ एकताम् ] ऐक्यं, [ व्रजतोः ] गच्छतोः सतोः, [ अपि, विषाणिभिः ] उभयसेनावर्त्तिभिः गजैः, [ अनुक्षणं ] प्रतिक्षणं, [ मिथः ] परस्परं, [ रुरुषे ] चुक्रुधे । भावे लिट् । तथा हि, [ मदमूढबुद्धिषु ] मदेन, मूढबुद्धिषु विपरीतप्रज्ञेषु, [ विवेकिता ] कार्य्याकार्य्यविचारिता, [ कुतः ? ] नास्त्येवेत्यर्थः । अतस्तेषां स्वामिसौहार्देऽपि स्वयं विरोधिता न दोषायेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६ ॥

अवलोक इति ।—[ दूरतः ] दूरात्, [ एव, अवलोके] हरेर्दर्शने एव, [ रभसात् ] हर्षात्, [ रथात्, अवतरीतुम् ] अवरोढुम्, "वृतो वा"

वपुषा पुराणपुरुषः पुरः क्षितौ
परिपुञ्जमानपृथुहारयष्टिना ।
भुवनैर्नतोऽपि विहिताऽऽत्मगौरवः
प्रणनाम नाम तनयं पितृष्वसुः ॥ ८ ॥

---

(७।२।३८ पा० ) इति विकल्पात् दीर्घः। [ इच्छतः, नृपतेः ] धर्म्म-राजात्, [ प्रथमं ] तदवतरणात् पूर्वमेवेत्यर्थः। [ आत्मना ] स्वयमेव। "तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम्" ( वा० ) इति प्रकृत्यादि-त्वात् तृतीया। [ अवतीर्णवान् ] रथादवरूढ़ः सन्। "निष्ठा" (३।२।१०२ पा० ) इति तरतेः क्तवतुप्रत्ययः। "ऋत इद्धातोः" (७।१।१०० पा० ) इतीत्त्वं, "र्वोरुपधाया दीर्घः—" (८।२।७६ पा० ) इति दीर्घे "रदाभ्याम्—" (८।२।४२ पा० ) इति निष्ठानत्वे, "रषाभ्याम्—" (८।४।१ पा० ) इति णत्वम्। [ स हरिः, सम्भ्रमेण ] त्वराविशेषेण, [ विनयं ] मानौद्धत्यं, [ विशेषयति स्म ] अतिशाययति स्म। एतेन हरेः पूज्यविषयो रत्याख्यो भावो ध्वन्यते * ॥ ७ ॥

वपुषेति।—[ पुराणपुरुषः ] हरिः, सर्वलोकज्येष्ठोऽपीति भावः। तथा [ भुवनैः, नतः ] नमस्कृतः, [ अपि, विहितात्मगौरवः ] विहितं सम्पादितम्, आत्मनः, गौरवम् उत्कर्षः, येन स सन्। पूज्येषु नमस्याया औन्नत्यहेतुत्वादिति भावः; अत एवात्र विचित्रालङ्कारः,—"विचित्रं स्वविरुद्धस्य फलस्य स्यात् समुद्यमे" इति लक्षणात्। [ पुरः क्षितौ ] अग्रभूमौ, [ परिपुञ्जमानपृथुहारयष्टिना ] परिपूञ्जमाना परितः पुञ्जी-क्रियमाणा, पृथुः स्थूलः, हारो मुक्तावलिः, यष्टिरिव यस्य तेन, [ वपुषा ] शरीरेण, न त्वञ्जलिमात्रेण, तथाऽस्य पूज्यत्वादिति भावः। पूज्यत्वे हेतुमाह,—[ पितृष्वसुः तनयं ] पितृभगिनीपुत्रं, धर्मराज-मित्यर्थः। "विभाषा स्वसृपत्योः" (६।३।२४ पा० ) इत्यस्य वैकल्पिक-त्वेन षष्ठ्या लुक्। "मातृपितृभ्यां स्वसा" (८।३।८४ पा०) इति षत्वम्।

---

* "रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः। भावः" इति लक्षणात्।

मुकुटांशुरञ्जितपरागमग्रतः
स न यावदाप शिरसा महीतलम् ।
क्षितिपेन तावदनपेक्षितक्रमं
भुजपञ्जरेण रभसादगृह्यत ॥ ९ ॥

न ममौ कपाटतटविस्तृतं तनौ
मुरवैरिवक्ष उरसि क्षमाभुजः ।
भुजयोस्तथाऽपि युगलेन दीर्घयो-
र्विकटीकृतेन परितोऽभिषस्वजे ॥ १० ॥

---

[ नाम ] प्रकाशं, [ प्रणनाम ] प्रणामं कृतवानित्यर्थः । प्रपूर्वान्नमेर्लिट् । "उपसर्गादसमासेऽपि णोपदेशस्य" (८।४।१४ पा०) इति णत्वम् । अत्रापि पूर्ववत् भावध्वनिः । भुवनैर्नतोऽपि हरिर्लोकयात्राऽनुवर्त्ती स्वयमेनं नतवानिति विरोधाभासोऽलङ्कारो विचित्रेणोक्तेन सङ्कीर्णः । नामनामेति वृत्त्यनुप्रासभेदश्च * संसृष्ट इत्याद्यूह्यम् ॥ ८ ॥

मुकुटेति ।—[ सः ] हरिः, [ मुकुटांशुरञ्जितपरागं ] मुकुटांशुभिः, रञ्जितः स्ववर्णमापादितः, परागो रेणुः, यस्य तत्, [ अग्रतः ] पुरतः, [महीतलं शिरसा यावत्, नाऽऽप] नास्पृशदित्यर्थः ; [तावत्, क्षितिपेन] धर्मराजेन, [ अनपेक्षितक्रमम् ] अनपेक्षितः, क्रमः परिपाटी, यस्मिन् कर्मणि तत् तथा, [ भुजपञ्जरेण ] भुजाभ्यामेव पञ्जरेण, इति रूपकम् । [ रभसात् ] वेगात्, [ अगृह्यत ] गृहीतः । प्रणामक्रियासमाप्तेः प्रागेवोत्थाप्याऽऽश्लिक्षदित्यर्थः ॥ ९ ॥

नेति ।—[ कपाटतटविस्तृतं, मुरवैरिवक्षः ] मुरवैरिणो हरेः, वक्षः, [ तनौ ] अल्पे, [ क्षमाभुजः] धर्मराजस्य, [उरसि, न ममौ] न परिमितम् इत्यर्थः ; [तथाऽपि, विकटीकृतेन] विपुलीकृतेन, [दीर्घयोर्भुजयोर्युगलेन,

---

* अत्र छेकानुप्रास एव युक्ततया प्रतिभाति ।

गतया निरन्तरनिवासमध्युरः
परिनाभि नूनमवमुच्य वारिजम्।
कुरुराजनिर्दयनिपीड़नाभयात्
मुखमध्यरोहि मुरविद्विषः श्रिया ॥ ११ ॥

---

परितः] समन्तात्, [अभिषस्वजे] आलिङ्गितम्। वक्षसा भुजाभ्याञ्च कथञ्चित् परिच्छिन्नमभूत्, न तु वक्षसैवेत्यर्थः। "सदिस्वञ्जोः परस्य लिटि" * (८।३।११८ काशिका) इति धातुसकारस्य षत्वनिषेधात्, स्थादित्वेऽप्यभ्यासस्यैव षत्वम्। अत्र हरिवक्षसो वैपुल्यातिशयद्योतनाय तदसम्बन्धेऽपि सम्बन्धरूपा, नृपवक्षःसम्भानेऽप्यसम्भानोक्तेः सम्बन्धे असम्बन्धरूपा चातिशयोक्तिः। अनयोश्च स्वतःसिद्धकविप्रौढ़ोक्तिसिद्धयोरप्यतिशययोरभेदाध्यवसायादुत्थानमिति रहस्यम् ॥ १० ॥

गतयेति।—नाभ्यां [परिनाभि]। विभक्त्यर्थेऽव्ययीभावः। [वारिजं] नाभिकमलमित्यर्थः; [अवमुच्य] विहाय, [अध्युरः] उरसि। विभक्त्यर्थेऽव्ययीभावः। [निरन्तरनिवासं] निरन्तरं सततं, निवासं स्थितिं, [गतया] प्राप्तया, [श्रिया] शोभया, रमया च। नाभिसरोजत्यागेनात्र निवासेन तस्मादपहृतमिति ध्वनितम्। [कुरुराजनिर्दयनिपीड़नाभयात्] कुरुराजस्य या निर्दयनिपीड़ना गाढ़ाऽऽश्लेषरूपा, ततो भयात्, [मुरविद्विषः] मुरवैरिणः, [मुखम्, अध्यरोहि] अधिरूढ़म्। भीता ह्युच्चमारोहन्तीति लोकवेदयोः प्रसिद्धमिति भावः। [नूनम्] इत्युत्प्रेक्षा। अत्र वाच्यायाः सुहृदाश्लेषप्रभवायाः शोभायाः श्रियेति श्लेषमहिम्ना प्रतीयमानया रमया सहाभेदाध्यवसायात् क्रमेण नाभिमुखकमलाऽऽधारसम्ब-

---

* भाष्ये एतत् सूत्रं नास्ति, (८।३।११८) काशिकायामेव दृश्यते; सिद्धान्तकौमुद्यान्तु "सदेः परस्य लिटि" (८।३।११६ पा०) इति सूत्रं पठितम्; अन्यत्र तु "सदेः परस्य लिटीति सूत्रे स्वञ्जेरुपसंख्यानम्" इति वार्त्तिकम् उद्धृतञ्च। एतेनैतदनुमीयते यत् टीकाकृत जयादित्यमतानुवर्त्ती आसीदिति।

शिरसि स्म जिघ्रति मुरारिबन्धने
छलवामनं विनयवामनं तदा ।
यशसेव वीर्य्यविजितामरद्रुम-
प्रसवेन वासितशिरोरुहे नृपः ॥ १२ ॥

सुखवेदनाहृषितरोमकूपया
शिथिलीकृतेऽपि वसुदेवजन्मनि ।
कुरुभर्त्तुरङ्गलतया न तत्यजे
विकसत्कदम्बनिकुरम्बचारुता ॥ १३ ॥

---

न्धाभिधानाच्च श्लेषमूलातिशयोक्त्युत्थापितः पर्य्यायभेदः,—'क्रमेणैकम-नेकस्मिन्नाधारे वर्त्तते यदि । एकस्मिन्नथवाऽनेकं पर्य्यायालङ्कृतिर्मता ॥'' इति लक्षणात् । तदुपजीविता श्रीमुखारोहणस्य भयहेतुकत्व-कथनादुत्प्रेक्षेति अनयोरङ्गाङ्गिभावेन सङ्करः ॥ ११ ॥

शिरसीति ।—[ नृपः ] धर्म्मराजः, [मुरारिबन्धने] पुरा बलिबन्धने, [ छलवामनं ] कपटवामनं, [ तदा ] पार्थोपपत्तिसमये तु, [ विनय-वामनं ] विनयनम्रमित्यर्थः, तं हरिमिति शेषः । [ वीर्य्यविजितामर-द्रुमप्रसवेन ] पारिजातहरणे शौर्य्यलब्धपारिजातकुसुमेन, [ यशसेव ] पारिजातविजयप्रसूतया कीर्त्त्येव, इत्युत्प्रेक्षा । [ वासितशिरोरुहे ] सुरभितकेशे, [ शिरसि जिघ्रति स्म ] । 'प्रवासादेत्य मूर्द्धन्यवघ्राणम्' इति स्मरणात् । पुरा किल भगवान् सत्यभामाप्रीतये बलात् इन्द्र-लोकात् अपहृत्य पारिजातं निजगृहेषु आरोपितवान् इति कथाऽत्रानु-सन्धेया ॥ १२ ॥

सुखेति ।—वसुदेवाज्जन्म यस्य तस्मिन् [ वसुदेवजन्मनि ] वासुदेवे । जन्मोत्तरपदत्वात् व्यधिकरणो बहुव्रीहिर्वामनवचनादित्युक्तं प्राक् । *

---

* ''अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः'' इति ( २अध्या० ५अधि० १९सू० ) इति सूत्रम् ।

इतरानपि क्षितिभुजोऽनुजन्मनः
प्रमनाः प्रमोदपरिफुल्लचक्षुषः।
स यथोचितं जनसभाजनोचितः
प्रसभोद्धृताऽसुरसभोऽसभाजयत् ॥ १४ ॥
समुपेत्य तुल्यमहसः शिलाघनान्
घनपक्षदीर्घतरबाहुशालिनः।

---

[ शिथिलीकृतेऽपि ] विश्लेषिते सत्यपि, [ सुखवेदनाहृषितरोमकूपया ] सुखवेदनया आलिङ्गनसुखानुभवेन, हृषिता उन्नता, रोमकूपा रोममूलानि यस्यां तया। "हृषर्लोमसु" ( ७।२।२९ पा० ) इतीडागमः। [कुरुभर्त्तुः] धर्मराजस्य, [ अङ्गलतया, विकसत्कदम्बनिकुरम्बचारुता ] विकसतः कदम्बनिकुरम्बस्य कदम्बकुसुमसमूहस्य, चारुता कामनीयकं, [न तत्यजे] न त्यक्ता, किन्तु स्वीकृतेत्यर्थः। आश्लेषापगमेऽपि तज्जन्मसुखानुवृत्त्या तत्कार्य्यस्य रोमहर्षस्यानुवृत्तिरिति तात्पर्य्यार्थः। अत एव शिथिलीकृते हृषितरोमकूपयेत्यकारणकार्य्यकथनात् विभावना तदपेक्षया चेयमुत्पन्ना कदम्बनिकुरम्बचारुतानिदर्शना तया सहाङ्गेन सङ्कीर्य्यते ॥ १३ ॥

इतरानिति।—[ जनसभाजनोचितः ] सर्वजनसम्भावनार्हः, [ प्रसभोद्धृताऽसुरसभः] प्रसभेन बलात्, उद्धृता असुरसभा असुरसङ्घो येन सः, [ प्रमनाः ] हृष्टचित्तः, [ स ] हरिः, [ प्रमोदपरिफुल्लचक्षुषः ] हर्षोत्फुल्लनेत्रान्, [इतरान्] भीमादीन्, [अपि, क्षितिभुजः] नृपस्य। अनु पश्चाज्जन्म येषां तान् [अनुजन्मनः] अनुजान्, [यथोचितं] यथाऽर्हम्, [असभाजयत्] सभाजयति स्म। आलिङ्गनादिभिरानन्दयामासेत्यर्थः। 'आनन्दनसभाजने' इत्यमरः। 'सभाज प्रीतिदर्शनयोः' इति धातोश्चौरादिकाल्लङ् ॥ १४ ॥

समिति।—[ तुल्यमहसः ] समतेजस्कान्, [ शिलाघनान् ] शिला इव शिलाभिश्च घनान् दृढान्, [ घनपक्षदीर्घतरबाहुशालिनः ] घनैः

परिशिश्लिषुः क्षितिपतीन् क्षितीश्वराः
कुलिशात्परेण गिरयो गिरीनिव ॥ १५ ॥

इभकुम्भतुङ्गघटितेतरेतर-
स्तनभारदूरविनिवारितोदराः ।
परिफुल्लगण्डफलकाः परस्परं
परिरेभिरे कुकुरकौरवस्त्रियः ॥ १६ ॥

रथवाजिपत्तिकरिणीसमाकुलं
तदनीकयोः समगत द्वयं मिथः ।

---

पक्षैरिव दीर्घतरबाहुभिः, बाहुभिरेव पक्षैश्च शालन्ते इति तथोक्तान् एवम्भूतान्, [ क्षितिपतीन् ] एवम्भूताः [ क्षितीश्वराः, समं ] युगपत्, [ एत्य ] आगत्य। आङ्पूर्वादिणः क्त्वो ल्यपि तुक्। [ कुलिशात्, परेण] परतः, कुलिशक्षतेः पूर्वमित्यर्थः। सम्प्रत्यसम्भवादिति भावः। परेणेति विभक्तिप्रतिरूपकम् अव्ययम्। [ गिरयो गिरीनिव, परिशिश्लिषुः ] आलिङ्गितवन्तः। उपमा ॥ १५ ॥

इभेति।—[ इभकुम्भतुङ्गघटितेतरेतरस्तनभारदूरविनिवारितोदराः ] इभकुम्भा इव ये तुङ्गाः घटिताश्च इतरेतरासां स्तनभारास्तैः दूरे विनिवारितानि अतिकाश्यादस्फुटतया स्थापितानि, उदराणि यासां ताः। "स्वाङ्गाच्च—" ( ४।१।५४ पा० ) इति विकल्पादनीकारः। [ परिफुल्लगण्डफलकाः ] हर्षपुलकितगण्डस्थलाः, [ कुकुरकौरवस्त्रियः ] यादवपाण्डवाङ्गनाः, [ परस्परं, परिरेभिरे ] आश्लिष्टवत्यः। 'परिरम्भः परिष्वङ्ग आश्लेष उपगूहनम्' इत्यमरः। परिफुल्लेति फुल्लतेः पचाद्यजन्तं, न तु फुल्लेति निष्ठान्तम्, 'अनुपसर्गात्' ( ८।२।५५ पा० ) इति कथनविरोधात् ॥ १६ ॥

रथेति।—[ रथवाजिपत्तिकरिणीसमाकुलं ] रथवाजिपत्तिकरि-

दधिरे पृथक्करिण एव दूरतो-
महतां हि सर्वमथवा जनातिगम् ॥ १७ ॥
अधिरुह्यतामिति महीभृतोदितः
कपिकेतुनाऽर्पितकरो रथं हरिः।
अवलम्बितैलविलपाणिपल्लवः
श्रयति स्म मेघमिव मेघवाहनः ॥ १८ ॥

---

णीभिः समाकुलं सङ्कीर्णम्; करिणीग्रहणं पुञ्जव्यावृत्त्यर्थम्; अतो युद्धानर्हतया तासाम् असेनाङ्गत्वात् न द्वन्द्वैकवद्भावः। [तदनीकयोः] सैन्ययोः। 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः। [द्वयं, मिथः] अन्योऽन्यं, [समगत] सङ्गतम्। गमेर्लुङि "समो गम्यृच्छि—" (१।३।२९ पा०) इत्यादिनाऽऽत्मनेपदम्; "वा गमः" (१।२।१३ पा०) इति सिचः कित्त्वात् "अनुदात्तोपदेश—" (६।४।३७ पा०) इत्यादिना अनुनासिकलोपः "ह्रस्वादङ्गात्" (८।२।२७ पा०) इति सकारलोपः। [करिणः] पुञ्जाः, [दूरत एव, पृथक्] असङ्गतं, [दधिरे] धृताः, स्थापिता इत्यर्थः। [अथवा] किमत्र चित्रम् इति भावः। [महतां] महासत्त्वानां सम्बन्धि, [हि, सर्वं] चेष्टितमिति भावः। जनानतिगच्छतीति [जनातिगम्] अतिजनं, सर्वलोकविलक्षणमिति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ १७॥

अधीति।—[हरिः, अधिरुह्यतां] रथे आरुह्यताम्, [इति] एवं, [महीभृता] धर्मराजेन, [उदितः] उक्तः सन्। वदेः कर्मणि क्तः, "वचिस्वपि—" (६।१।१५ पा०) इत्यादिना सम्प्रसारणम्। [कपिकेतुना] अर्जुनेन, [अर्पितकरः] दत्तहस्तः सन्। [अवलम्बितैलविलपाणिपल्लवः] अवलम्बितः अवष्टब्धः, ऐलविलस्य कुबेरस्य, पाणिपल्लवो येन सः, [मेघवाहन] इन्द्रः, [मेघमिव रथं, श्रयति स्म] आरूढवानित्यर्थः। उपमा॥ १८॥

रथमास्थितस्य च पुराभिवर्त्तिन-
स्तिसृणां पुरामिव रिपोर्मुरद्विषः ।
अथ धर्ममूर्त्तिरनुरागभावितः
स्वयमादित प्रवयणं प्रजापतिः ॥ १९ ॥
शनकैरथास्य तनुजालकान्तर-
स्फुरितचपाकरकरोत्कराकृति ।
पृथुफेनकूटमिव निम्नगापते-
र्मरुतश्च सूनुरधुवत् प्रकीर्णकम् ॥ २० ॥

---

रथमिति ।—[अथ] रथारोहणानन्तरं, [रथम्, आस्थितस्य] आरूढस्य, [च] किञ्चेति चार्थः । [पुराभिवर्त्तिनः] इन्द्रप्रस्थाभिवर्त्तिनः, त्रिपुराभिवर्त्तिनश्च, [मुरद्विषः] हरेः, [तिसृणां पुरां रिपोः] त्रिपुरान्तकस्य, [इव]। "न तिसृचतसृ" (६।४।४ पा०) इति नामि दीर्घप्रतिषेधः । [धर्ममूर्त्तिः] धर्मात्मा, [प्रजापतिः] जनेश्वरः, धर्मराजः ब्रह्मा च, [अनुरागभावितः] सन् ; प्रवीयते प्रेर्य्यतेऽनेनेति [प्रवयणं] प्राजनं, प्रतोद इति यावत् । अत एव प्रवयणो दण्डः, 'प्राजनो दण्डः' इति काशिका । अजेः करणे ल्युट् । "वा यौ" (२।४।५७ पा०) इति विकल्पादजेर्वीभावः । "पूर्वपदात्संज्ञायाम्—" (८।४।३ पा०) इति णत्वम् । [स्वयम्, आदित] गृहीतवान्, सारथ्यं कृतवानित्यर्थः । आददातेः कर्त्तरि लुङि तङ् "स्थाघ्वोः—" (१।२।१७ पा०) इतीकारे सिचः कित्त्वे च "ह्रस्वादङ्गात्" (८।२।२७ पा०) इति सलोपः । अत्र त्रिपुरहरणे ब्रह्मा हरस्येव हरेरयं सारथ्यं चकारेत्युपमा ; तस्याः प्रजापतिरिति राजब्रह्मणोः श्लेषमूलाभेदाध्यवसायादतिशयोक्तिनिर्व्यूढेतेति सङ्करः ॥ १९ ॥

शनकैरिति ।—[अथ, अस्य] हरेः, [तनुजालकान्तरस्फुरितचपाकरकरोत्कराकृति] तनुषु सूक्ष्मेषु, जालकान्तरेषु गवाक्षरन्ध्रेषु, स्फुरि-

विकसत्कलायकुसुमासितद्युते-
रलघूडुपाण्डु जगतामधीशितुः ।
यमुनाह्रदोपरिगहंसमण्डल-
द्युतिजिष्णु जिष्णुरभृतोष्णवारणम् ॥ २१ ॥
पवनात्मजेन्द्रसुतमध्यवर्त्तिना
नितरामरोचि रुचिरेण चक्रिणा ।

---

तस्य प्रस्तुतस्य, त्रपाकरोत्करस्य शशिकिरणपुञ्जस्याकृतिरिवाकृतिर्यस्य तत्, [ प्रकीर्णकं ] चामरं, [ निम्नगापतेः ] समुद्रस्य, [ पृथुफेनकूटं ] पृथु विपुलं, फेनकूटं फेनपुञ्जम्, [ इव, मरुतः सूनुः ] भीमसेनः, [च] किञ्चेति चार्थः । [शनकैः, अधुवत्] धुवति स्म । धुवतिरयं तौदादिक इत्युक्तम् । उपमयोः सङ्करः ॥ २० ॥

विकसदिति ।—[ विकसत्कलायकुसुमासितद्युतेः ] विकसत्कलायकुसुमं कालपुष्पम् । "कलायः स्यात् काले" इति वैजयन्ती । तद्वदसितद्युतेर्नीलवर्णस्य, [ जगतामधीशितुः ] जगन्नाथस्य, [जिष्णुः] अर्जुनः, [ अलघूडुपाण्डु ] स्थूलनक्षत्रधवलम् ; अत एव [ यमुनाह्रदोपरिगहंसमण्डलद्युतिजिष्णु ] यमुनाह्रदस्योपरिगम् उपरिगतम् । "अन्यत्रापि दृश्यते" ( वा० ) इति डप्रत्ययः । तस्य हंसमण्डलस्य द्युतिं शोभां, जिष्णु जयशीलम् । "ग्लाजिस्थश्च—" ( ३।२।१३९ पा० ) इति क्स्नुः । [ उष्णवारणम् ] आतपत्रम्, [ अभृत ] भृतवान् । भृञः कर्त्तरि लुङ् । "स्वरितञितः—" ( १।३।७२ पा० ) इत्यात्मनेपदं, "उश्च" ( १।२।१२ पा० ) इति सिचः कित्त्वादगुणता, "ह्रस्वादङ्गात्" (८।२।२७ पा०) इति सकारलोपः । अत्राप्युपमासङ्करः ॥ २१ ॥

पवनेति ।—[ पवनात्मजेन्द्रसुतमध्यवर्त्तिना ] भीमार्जुनमध्यगतेन, [ रुचिरेण, चक्रिणा ] हरिणा, [ उभयग्रहान्तरस्थितिकारितं ] उभयोरन्यग्रहाणाम् अन्यतमयोरन्तरे मध्ये, स्थित्या वासेन, कारितं

दधतेव योगमुभयग्रहान्तर-
स्थितिकारितं दुरुधुराख्यमिन्दुना ॥ २२ ॥
वशिनं क्षितेरयनयाविवेश्वरं
नियमो यमश्च नियतं यतिं यथा ।
विजयश्रिया वृतमिवार्कमारुता-
वनुसस्रतुस्तमथ दस्रयोः सुतौ ॥ २३ ॥

---

सम्पादितम्। वृत्तिविषये उभशब्दस्य स्थानेऽपि उभयशब्दस्यैव प्रयोगो व्याख्यातः। दुरुधुरेत्याख्या यस्य तत् [ दुरुधुराख्यं, योगं दधता ] अर्कान्यग्रहमध्यगतेनेत्यर्थः। [ इन्दुनेव ] इत्युपमा। [ नितराम् ] अतिशयेन। "किमेत्तिङव्ययघादाम्व—" ( ५।४।११ पा० ) इत्यादिनाऽऽमुप्रत्ययः। [ अरोचि ] अशोभि। रोचतेर्भावे लुङ्। स्वभावरमणीयस्यानुरूपान्तरसमायोगाच्छोभाऽतिशयो जायते ; रत्नकाञ्चनयोरिवेति भावः। अत्र भगवानाचार्य्यमिहिरः,—'हित्वाऽर्कं सुनफाऽनफादुरुधुराः स्वान्त्योभयस्थैर्ग्रहैः शीतांशोः—' इति। एतदेव स्पष्टीकृतं कल्याणवर्मणा,—'रविवर्जं द्वादशगैरनफा चन्द्रद्वितीयगैः सुनफा। उभयस्थितैर्दुरुधुरा केमद्रुमसंज्ञकोऽतोऽन्यः॥' इति॥ २२॥

वशिनमिति।—[ अथ ] भीमार्जुनोपवेशनानन्तरं, [ वशिनम् ] इन्द्रियजयवन्तम्, अव्यसनिनमिति यावत्। [ क्षितेः ईश्वरं ] भूपतिम्, [ अयनयौ ] अयः शुभावहो विधिः, नयो नीतिः, तौ, इव ] दैवपुरुषकाराविवेत्यर्थः, [ नियतम् ] आचारनिष्ठं, [ यतिं ] जितेन्द्रियम्। 'यतिनो यतयश्च' इत्यमरः। [ नियमः ] शरीरातिरिक्तदेशकालादिसाधनापेक्षः सन्ध्योपासनजपादिः, [ यमः ] शरीरमात्रसाधनापेक्षोऽहिंसादिः,—'शरीरसाधनापेक्षं नित्यं यत्कर्म तत् यमः। नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम्॥' स च [ यथा ] यमनियमाविवेत्यर्थः। 'इववद्वा यथाशब्दाः' इति दण्ड्यभिधानात्। [ विजय-

मुदितैस्तदेति दितिजन्मनां रिपा-
वविनीयसम्भ्रमविकासिभक्तिभिः।
उपसेदिवद्भिरुपदेष्टरीव तै-
र्ववृते विनीतमविनीतशासिभिः ॥ २४ ॥

श्रिया वृतम्] आसन्नविजयं, विजिगीषुं रिपुमित्यर्थः। [अर्कमारुताविव, दस्रयोः] अश्विनोः, [सुतौ] नकुलसहदेवौ। 'नासत्यावश्विनौ दस्रौ' इत्यमरः। [तं] हरिम्, [अनुसस्रतुः] अनुचेरतुः, पृष्ठोपसर्पणं चक्रतुरित्यर्थः। इह सर्वकर्तृमनोरथानुकूलव्यापारवत्त्वमनुसरणम्। इयं मालोपमा ॥ २३ ॥

मुदितैरिति।—[तदा] तस्मिन् समये, [इति, मुदितैः] हृष्टैः, [अविनीयसम्भ्रमविकासिभक्तिभिः] अविनीयः अकल्कः, अकपट इति यावत्, यः सम्भ्रम आदरः, तेन विकासिनी स्फुटीभवन्ती, भक्तिर्येषां तैः। "विपूयविनीयजित्या मुञ्जकल्कहलिषु" (३।१।११७ पा०) इति कल्कार्थे निपातः। नपुंसकपूर्वपदः स्त्रीलिङ्गपूर्वपदो वा बहुव्रीहिः। [अविनीतशासिभिः] अविनीतं शासतीत्यविनीतशासी तैः दुष्टशिक्षकैः [तैः] पाण्डवैरित्यर्थः, [दितिजन्मनां रिपौ] कृष्णविषये। उप समीपे, सीदन्ति स्म इत्युपसेदिवसः अन्तेवासिनः। "भाषायां सदवसश्रुवः" (३।२।१०८ पा०) इति सदेर्लिटः क्वसुरादेशः। तैः [उपसेदिवद्भिः, उपदेष्टरि] गुरौ, [इव] इत्युपमा। [विनीतम्] अनुद्धतञ्च, [ववृते] वृत्तम्। भावे लिट्। ननु विकासिभक्तिभिरित्यत्र कथं पूर्वपदस्य पुंवद्भावः भक्तिशब्दस्य प्रियादिपाठात् "स्त्रियाः पुंवत्" (६।३।३४ पा०) इति पुंवद्भावसूत्रेऽप्रियादिषु इति निषेधादिति। विकासिशब्दस्याविकासिनीवृत्तिमात्रपरतयाऽस्त्रीत्वस्य विवक्षितत्वात् नपुंसकपूर्वपदो बहुव्रीहिरिति केचित्। तदेतदभिप्रेत्योक्तं वृत्तिकारेण,— 'दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धिः' इति। एतदेव स्पष्टीकृतं गणव्याख्याने;—"दृढं भक्तिर्यस्येति नपुंसकं पूर्व-

गतयोरभेदमिति सैन्ययोस्तयो-
रथ भानुजह्नुतनयाम्भसोरिव ।
प्रतिनादितामरविमानमानकै-
र्नितरां मुदा परमयेव दध्वने ॥ २५ ॥

---

पदम् । धात्वर्थविशेषणमात्रपरे दृढशब्दे लिङ्गविशेषस्यानुपकारक-त्वात् स्त्रीत्वमविवक्षितम्" इति । भोजराजस्तु,—"भक्तौ कर्मसाधनायाम्" इत्यनेन सूत्रेण भज्यते सेव्यते इति कर्म्मार्थत्वेन दृढा भक्ति-रित्यादि भवति, भावसाधनायान्तु "दृढभक्तिर्भवत्येव" इत्याह। तदे-तत्सर्वमस्माभिः कालिदासत्रयसञ्जीविन्यां 'दृढभक्तिरिति ज्येष्ठे' * इत्या-दिषु विवेचितम् । तस्माद्विकासिभक्तिभिरित्यत्रापि मतभेदेन पूर्वपदस्य स्त्रीत्वे नपुंसकत्वे च रूपसिद्धिरस्तीति स्थितम् ॥ २४ ॥

गतयोरिति ।—[इति] इत्थं, [ गतयोः सैन्ययोः, भानुजह्नुतनयाम्भ-सोरिव ] भानुजह्नुतनये यमुनाजाह्नव्यौ, तयोरम्भसी प्रवाहौ, तयोरिव, [ अभेदम् ] ऐक्यं, गतयोः सतोः । "यस्य च भावेन भावलक्षणम्" (२।३। ३७ पा०) इति सप्तमी । एतेन सैन्ययोरवार्य्यत्वमुक्तम् । [ अथ ] सैन्यमेलनानन्तरम्, [ आनकैः ] मङ्गलदुन्दुभिभिः, [ परमया, मुदेव ] हर्षेण इव, इत्युत्प्रेक्षा । [ प्रतिनादितामरविमानं ] प्रतिनादितानि प्रतिध्वनितानि, अमरविमानानि द्रष्टुमागत्याम्बरस्थितानि विमानानि देवयानानि यस्मिन् कर्मणि तद् यथा तथा, [नितरां दध्वने] ध्वनितम् । भावे लिट् ॥ २५ ॥

---

* रघुवंश १२स० १९श्लोके, "दृष्टभक्तिर्भवान्या" इति पूर्वमेव ३७ श्लोके, अपि च शाकुन्तले प्रथमाङ्के राजा "मा खलु विदितभक्तिः मां महर्षये निवेदयिष्यति" इत्यत्र, महाकवेः कालिदासस्य श्रव्यदृश्यकाव्यत्रये द्रष्टव्यम् ; सञ्जीविन्याञ्च "दृढ-भक्तिः" इत्यत्र विशिष्यैतस्य विचारितत्वात् तस्याः पुनः पृथगुपन्यास इति ज्ञेयम् ।

मखमीक्षितुं क्षितिपतेरुपेयुषां
परितः प्रकल्पितनिकेतनं बहिः।
उपरुध्यमानमिव भूभृतां बलैः
पुटभेदनं दनुसुतारिरैक्षत ॥ २६ ॥

प्रतिनादपूरितदिगन्तरः पतन्
पुरगोपुरं प्रति स सैन्यसागरः।
रुरुचे हिमाचलगुहामुखोन्मुखः
पयसां प्रवाह इव सौरसैन्धवः ॥ २७ ॥

---

मखमिति।—[ क्षितिपतेः ] धर्मराजस्य, [ मखं ] क्रतुम्, [ईक्षितुम्, उपेयुषां] ततस्तत आगतानां, [भूभृतां] राज्ञां, [ बलैः ] सैन्यैः, [ बहिः परितः, प्रकल्पितनिकेतनं ] प्रकल्पितानि निर्मितानि, निकेतनानि निवासा यस्य तत्; अत एव [ उपरुध्यमानं] श्नलसेनावेष्ट्यमानम्, [इव] स्थितम्, इत्युत्प्रेक्षा। [ पुटभेदनं ] पत्तनं, मयकृतमिन्द्रप्रस्थम्। 'पत्तनं पुटभेदनम्' इत्यमरः। [ दनुसुतारिः ] दानवारिः, [ ऐक्षत ] पुरोऽपश्यत् ॥ २६ ॥

प्रतीति।—[ प्रतिनादपूरितदिगन्तरः] प्रतिनादैः प्रतिध्वानैः, पूरितं व्याप्तं, दिशाम् अन्तरम् अन्तरालं येन सः, [पुरगोपुरं] पुरद्वारं, [प्रति]। 'गोपुरन्तु पुरद्वारि द्वारमात्रे नपुंसकम्' इति विश्वः। एवञ्च न पुरशब्दस्य पौनरुक्त्यशङ्का। [ पतन् ] धावन्, [ स, सैन्यसागरः ] सेनासमुद्रः, [हिमाचलगुहामुखोन्मुखः] हिमाचलगुहामुखस्योन्मुखोऽभिमुखः; सुरसिन्धोर्गङ्गाया अयं [ सौरसैन्धवः ]। "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" (७।३।१९ पा०) इत्युभयपदवृद्धिः। [ पयसां प्रवाह इव, रुरुचे ] रेजे। उपमाऽलङ्कारः ॥ २७ ॥

असकृद्गृहीतबहुदेहसम्भव-
स्तदसौ विभक्तनवगोपुरान्तरम् ।
पुरुषः पुरं प्रविशति स्म पञ्चभिः
सममिन्द्रियैरिव नरेन्द्रसूनुभिः ॥ २८ ॥

तनुभिस्त्रिनेत्रनयनानवेक्षित-
स्मरविग्रहद्युतिभिरद्युतन्नराः ।
प्रमदाश्च यत्र खलु राजयक्ष्मणः
परतो निशाकरमनोरमैर्मुखैः ॥ २९ ॥

---

असकृदिति ।—[ असकृद्गृहीतबहुदेहसम्भवः ] असकृद्बहुशः, गृहीतो लोकधारणाय स्वीकृतः, बहुषु देहेषु मत्स्यकूर्मादिषु शरीरेषु, सम्भवः प्रादुर्भावो येन सः ; अन्यत्र,—स्वकर्मणा प्राक्तनयोनिसम्बन्धरूपसम्भव इत्यर्थः । [पुरुषः ] पुराणपुरुषो हरिः, जीवश्च, [ विभक्तनवगोपुरान्तरम् ] विभक्तानि नवानि प्रत्यग्राणि, गोपुरान्तराणि द्वारविशेषा यस्य तत्, अन्यत्र,—नवसङ्ख्याकानि गोपुरान्तराणि इन्द्रियद्वारभेदा यस्मिन् तत्, [ पुरं ] पत्तनं, शरीरञ्च । 'पुरं पुरि शरीरे च' इति विश्वः । [ पञ्चभि-रिन्द्रियैः सममिव ] पञ्चभिः [ नरेन्द्रसूनुभिः ] राजपुत्रैः पाण्डवैः सह, [ असौ ] हरिः, [ तत् ] पुरं, [ प्रविशति स्म ] । जीवो हि देहाद्देहान्तरं पूर्वेन्द्रियैः सह प्रविशति, लिङ्गशरीरस्यानपायादिति भावः । श्लेष-सङ्कीर्णेयमुपमा ॥२८॥

तनुभिरिति ।—[ यत्र ] पुरे, [ नराः ] पुरुषाः, [ त्रिनेत्रनयनानवे-क्षितस्मरविग्रहद्युतिभिः ] त्रिनेत्रस्त्र्यम्बकः । "पूर्वपदात्संज्ञायामगः" ( ८।४।३ पा० ) इति णत्वन्तु रघुनाथादिवत् णत्वरहितस्य संज्ञात्वे न प्रवर्त्तते । तस्य नयनेनानवेक्षितस्य स्मरविग्रहस्य द्युतिरिव द्युतिर्यासां ताभिः, [ तनुभिः ] मूर्त्तिभिः । 'स्त्रियां मूर्त्तिस्तनुस्तनूः' इत्यमरः ।

अवलोकनाय सुरविद्विषां द्विषः
पटहप्रणादविहितोपहूतयः।
अवधीरितान्यकरणीयसत्वराः
प्रतिरथ्यमीयुरथ पौरयोषितः॥ ३०॥
अभिवीक्ष्य सामिकृतमण्डनं यतीः
कररुद्धनीविगलदंशुकाः स्त्रियः।

---

[ अद्युतन् ] द्योतन्ते स्म। 'द्युत दीप्तौ'। "द्युद्भ्यो लुङि" (१।३।९१ पा०) इति विकल्पात् परस्मैपदं पुषादिसूत्रेण च्लेरङादेशः। [ प्रमदाः ] स्त्रियः, [ च, राजयक्ष्मणः ] राज्ञश्चन्द्रस्य यक्ष्मा राजयक्ष्मा क्षयरोगः। 'राजानं यक्ष्मा आरत्' इति श्रवणात्। 'राजयक्ष्मा क्षयः शोषः' इत्यमरः। तस्मात्, [ परतः ] पूर्वमित्यर्थः। [ निशाकरमनोरमैः ] निशाकरवत् मनोरमैः, अक्षीणेन्दुसुन्दरैः इत्यर्थः। [ मुखैः ] अद्युतन् [खलु]। 'तत्पुरं प्रविशति स्म' इति पूर्वेणान्वयः। उपमयोः संसृष्टिः ॥ २९ ॥

अवलोकनायेति।—[ अथ ] हरेः पुरः प्रवेशानन्तरं, [ पटहप्रणादविहितोपहूतयः ] पटहप्रणादैर्दुन्दुभिध्वनिभिः, विहितोपहूतयः कृताह्वाना इवेत्यर्थः। पुरे भवाः पौर्य्यस्ता योषितः [ पौरयोषितः ] स्त्रियाः, पुंवद्भावः। [ सुरविद्विषाम् ] असुराणां, [ द्विषः ] हरेरित्यर्थः, [ अवलोकनाय ] दर्शनार्थम्, [ अवधीरितान्यकरणीयसत्वराः ] अवधीरितान्यकरणीयाः त्यक्तान्यकार्य्याः, ताश्च ताः सत्वराश्च ताः सत्यः; रथ्यां प्रति [ प्रतिरथ्यम् ]। यथार्थेऽव्ययीभावः। [ ईयुः ] प्रापुः। एतेन स्त्रीणां हरिविलोकने कालाक्षमत्वलक्षणमौत्सुक्यमुक्तम्। अत्र पौराङ्गनाप्राप्तेः प्रवेशवाद्यश्रवणाऽऽनन्तर्य्यात् तदुपाह्वानोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ३० ॥

अथाष्टादशभिः पौराङ्गनाशृङ्गारचेष्टां वर्णयति, अभीति।—[सामि-

दधिरेऽधिभित्ति पटहप्रतिस्वनैः
स्फुटमट्टहासमिव सौधपङ्क्तयः ॥ ३१ ॥
रभसेन हारपददत्तकाञ्चयः
प्रतिमूर्द्धजं निहितकर्णपूरकाः ।
परिवर्त्तिताम्बरयुगाः समापतन्
वलयीकृतश्रवणपूरकाः स्त्रियः ॥ ३२ ॥

---

कृतमण्डनम् ] अर्द्धविरचितप्रसाधनं यथा तथा, [ यतीः ] गच्छन्तीः । इणः शतरि ङीप् । [ कररुद्धनीविगलदंशुकाः ] कररुद्धनीवीनि कर-गृहीतग्रन्थीनि, गलदंशुकानि स्रंसमानपरिधानानि यासां ताः । लस-दिति पाठान्तरं, तदा लसदुल्लसदित्यर्थः । 'अंशुकं वस्त्रमात्रे स्यात् परि-धानोत्तरीययोः' इति शब्दार्णवे । [ स्त्रियः ] स्त्रीः, [ अभिवीक्ष्य सौधपङ्क्तयः, अधिभित्ति ] भित्तिषु । विभक्त्यर्थेऽव्ययीभावः । [ पटहप्रतिस्वनैः ] तूर्य्यप्रतिध्वनिभिः, [ स्फुटम् ] उन्नतम्, [ अट्टहासम्] उच्चैर्हसितम्, [ इव दधिरे ]। इवेत्युत्प्रेक्षा। विकृतिदर्शनाद्धासो भवतीति भावः। अत्र कुतूहलाख्या चेष्टोक्ता ;—'कुतूहलं रम्यदृष्टौ चापल्यं परिकीर्त्तितम्' इति लक्षणात् ॥ ३१ ॥

रभसेनेति ।—[ रभसेन ] त्वरया, [ हारपददत्तकाञ्चयः ] हारपदे मुक्तादामस्थाने, वक्षसि इत्यर्थः, दत्तकाञ्चयः न्यस्तरशनाः, [ प्रतिमूर्द्धजं ] मूर्द्धजेषु, केशेषु इत्यर्थः । विभक्त्यर्थेऽव्ययीभावः । [ निहितकर्णपूरकाः] निहिताः कर्णपूरकाः कर्णावतंसा याभिस्ताः । [ परिवर्त्तिताम्बरयुगाः ] परिवर्त्तितं विपर्य्यासेन धृतम्, अम्बरयुगं वाससी याभिस्ताः । परिधानी-कृतमुत्तरीयं कुचांशुकञ्च जघने दत्तमित्यर्थः । [ वलयीकृतश्रवणपूरकाः ] वलयीकृताः कङ्कणीकृताः, श्रवणपूरकाः कुण्डलानि याभिस्ताः, [ स्त्रियः, समापतन् ] अधावन् । एतेन विभ्रमाख्या चेष्टोक्ता,—"विभ्रम-

व्यतनोदपास्य चरणं प्रसाधिका-
करपल्लवाद्रसवशेन काचन ।
द्रुतयावकैकपदचित्रितावनिं
पदवीं गतेव गिरिजा हरार्द्धताम् ॥ ३३ ॥

व्यचलन् विशङ्कटकटीरकस्थली-
शिखरस्खलन्मुखरमेखलाऽऽकुलाः ।
भवनानि तुङ्गतपनीयसङ्क्रम-
क्रमणक्वणत्कनकनूपुराः स्त्रियः ॥ ३४ ॥

---

त्वरया काले भूषास्थानविपर्य्ययः" इति लक्षणात् । स च भ्रममूल इति भ्रान्तिमदलङ्कारो व्यज्यते ॥ ३२ ॥

व्यतनोदिति ।—[ काचन ] स्त्री, [ रसवशेन ] हरिवीक्षणपारतन्त्र्येण । 'गुणे रागे द्रवे रसः' इत्यमरः । [ प्रसाधिकाकरपल्लवात् ] प्रसाधिकायाः अलङ्कर्त्र्याः, करपल्लवात्, [चरणम्, अपास्य] असमाप्तावेवाक्षिप्य, [ हरार्द्धतां ] हरस्यार्द्धाङ्गतां, [गता ] । अन्यथैकपादालक्तकासम्भवादिति भावः । [ गिरिजा ] गौरी, [ इव, द्रुतयावकैकपदचित्रितावनिं] द्रुतयावकेन आर्द्रालक्तकेन, एकपदेन, चित्रिता चित्रवर्णीकृता, अवनिर्यस्याः तां, [ पदवीं, व्यतनोत् ] अकरोत् । उपमाऽलङ्कारः । एषा कुतूहलाख्या चेष्टा, रसाद्दिदृक्षाजनितचापलरूपत्वादिति ॥ ३३ ॥

व्यचलन्निति ।—[ विशङ्कटकटीरकस्थलीशिखरस्खलन्मुखरमेखलाऽऽकुलाः ] विशङ्कटानां विशालानां, कटीरकस्थलीनां कटिभागानां, शिखरेषु अग्रेषु, स्खलन्त्यः लुठन्त्यः, अत एव मुखराः शब्दायमानाः, ताभिर्मेखलाभिराकुलाः, [ तुङ्गतपनीयसङ्क्रमक्रमणक्वणत्कनकनूपुराः ] तुङ्गेषु तपनीयसङ्क्रमेषु कनकसोपानेषु, क्रमणेन क्वणन्तः कनकनूपुरा यासां ताः, [ स्त्रियः, भवनानि] हर्म्याणि, [व्यचलन्], तत्र गत्वाऽऽरोढु-

अधिरुक्ममन्दिरगवाक्षमुल्लसत्
सुदृशो रराज मुरजिद्दिदृक्षया ।
वदनारविन्दमुदयाद्रिकन्दरा-
विवरोदरस्थितमिवेन्दुमण्डलम् ॥ ३५ ॥

अधिरूढया निजनिकेतमुच्चकैः
पवनावधूतवसनान्तयैकया ।
विहितोपशोभमुपयाति माधवे
नगरं व्यरोचत पताकयेव तत् ॥ ३६ ॥

---

त्यर्थः । चलेर्गत्यर्थाल्लङ् । एतदपि पूर्ववदतिकुतूहलमेव । वृत्त्यनुप्रासोऽलङ्कारः ॥ ३४ ॥

अधीति ।—[ मुरजिद्दिदृक्षया ] मुरजितो हरेः, दिदृक्षया द्रष्टुमिच्छया । दृशेः सन्नन्तात् "अप्रत्ययात्" ( ३।३।१०२ पा० ) इति स्त्रियामप्रत्यये टाप् । रुक्ममन्दिरस्य कनकहर्म्यस्य, गवाक्षे [ अधिरुक्ममन्दिरगवाक्षम् ]। विभक्त्यर्थेऽव्ययीभावः । [ उल्लसत् ] प्रकाशमानं, [ सुदृशः ] स्त्रियाः, [ वदनारविन्दम्, उदयाद्रिकन्दराविवरोदरस्थितम् ] उदयाद्रेः कन्दराया गुहायाः, विवरस्योदरे मध्ये, स्थितम्, [ इन्दुमण्डलमिव रराज ], इत्युपमा । अत्रापि सुदृशो गवाक्षाक्रमणस्य रम्यदर्शनार्थचापलरूपत्वात् कुतूहलं मुरजिद्दिदृक्षयेत्यादिना व्यक्तमेव ॥ ३५ ॥

अधीति ।—[ उच्चकैः, निजनिकेतं ] स्वसौधम्, [ अधिरूढया ] आरूढवत्या, [ पवनावधूतवसनान्तया ] पवनेनावधूतः कम्पितः, वसनान्तो वस्त्राञ्चलो यस्यास्तया, [ एकया ] कयाचिदङ्गनया, हेतुना [तत् नगरम्] इन्द्रप्रस्थं, [ माधवे, उपयाति ] आगच्छति सति । यातेर्लटः शत्रादेशः । [ पताकया ] वैजयन्त्या, [ विहितोपशोभं ] कृतशोभम्, [इव] अलङ्कृतमिव, इत्युत्प्रेक्षा । [ व्यरोचत ] व्यराजत ।

करयुग्मपद्ममुकुलापवर्जितैः
प्रतिवेश्म लाजकुसुमैरवाकिरन्।
अवदीर्णशुक्तिपुटमुक्तमौक्तिक-
प्रकरैरिव प्रियरथाङ्गमङ्गनाः ॥ ३७ ॥

हिममुक्तचन्द्ररुचिरः सपद्मको
मदयन् द्विजान् जनितमीनकेतनः।
अभवत् प्रसादितसुरो महोत्सवः
प्रमदाजनस्य स चिराय माधवः ॥ ३८ ॥

---

कृत्स्नस्यापि नगरस्य स्वयं पताकेव बभावित्युत्प्रेक्षा। तस्याः सकल-पौराङ्गनाऽतिशायि लावण्यं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः। अत्रापि प्रासादाऽऽरोहणं पूर्ववत् कुतूहलमेव ॥ ३६ ॥

करेति।—[ प्रतिवेश्म ] वेश्मनि। विभक्त्यर्थेऽव्ययीभावः। [अङ्गनाः] पुरन्ध्र्यः। [ करयुग्मपद्ममुकुलापवर्जितैः ] करयुग्मानि अञ्जलयः, तानि पद्ममुकुलानीवेत्युपमितसमासः। तैरपवर्जितैः, अत एव [ अवदीर्ण-शुक्तिपुटमुक्तमौक्तिकप्रकरैः ] अवदीर्णैः विभिन्नैः, शुक्तिपुटैः शुक्तिकोशैः, मुक्ता उत्सृष्टाः, ये मौक्तिकप्रकरा मुक्तानिकरास्तैः, [ इव ] स्थितैरित्यु-त्प्रेक्षा। लाजाः कुसुमानीव तैः [ लाजकुसुमैः ] आचारलाजैरित्यर्थः। प्रियं रथाङ्गं चक्रं यस्य तं [ प्रियरथाङ्गं ] चक्रिणं, हरिमित्यर्थः। [ अवाकिरन् ] छादयामासुः ॥ ३७ ॥

हिमेति।—[ हिममुक्तचन्द्ररुचिरः ] हिममुक्तः शिशिरापगमात् हिमात् निर्मुक्तः, यश्चन्द्रः स इव रुचिरः; अन्यत्र,—तेन रुचिरः। पद्मेन पद्मया च सह वर्त्तत इति सपद्मः, स एव [ सपद्मकः ] पद्महस्तः, सश्रीकश्च। शेषिकः स्वार्थिको वा कप्प्रत्ययः। अन्यत्र,—सपङ्कजः। शेषिकः कप्प्रत्ययः। [ द्विजान् ] ब्राह्मणान्; अन्यत्र,—पक्षिगणान्

धरणीधरेन्द्रदुहितुर्भयादसौ
विषमेक्षणः स्फुटममूर्न पश्यति ।
मदनेन वीतभयमित्यधिष्ठिताः
क्षणमीक्षते स्म स पुरोविलासिनीः ॥३९॥
विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।

कोकिलादीन्, [ मदयन् ] हर्षयन्, [जनितमीनकेतनः] प्रद्युम्नजनकः ; *
अन्यत्र,—मदनोद्दीपकः । [ प्रसादितसुरः ] प्रसादिता अनुगृहीताः,
सुरा देवा येन ; अन्यत्र,—प्रसादिता निर्मलीकृता, सुरा मदिरा
यस्मिन् सः, [सः, माधवः] हरिः, वसन्तश्च । 'माधवस्तु वसन्ते स्यात्
वैशाखे गरुड़ध्वजे' इति विश्वः । प्रमदैव जनस्तस्य [ प्रमदाजनस्य ] ।
जातावेकवचनम् । [ चिराय, महोत्सवोऽभवत् ] । तद्वदानन्दकरोऽभू-
दित्यर्थः । इहाऽऽनन्दकरत्वसाम्येन माधवे महोत्सवरूपणात् रूपक-
सिद्धिः । श्लेषस्तु हरिवसन्तयोरिह नास्त्येव, प्रकृताप्रकृतश्लेषे विशेष्य-
श्लेषायोगात् ; किन्तु शब्दशक्तिमूलो ध्वनिरेव ॥ ३८ ॥

धरणीति ।—[ असौ ] स्वदाहकः, [ विषमेक्षणः ] त्र्यक्षः, [धरणी-
धरेन्द्रदुहितुः ] पार्वत्याः । सपत्नीशङ्किन्या इति भावः । "भीत्रा-
र्थानां भयहेतुः" ( १।४।२५ पा० ) इति पञ्चमी । [भयात् स्फुटम्, अमूः]
पौरयोषितः, [न पश्यति, इति] हेतोः, इति विश्वासादित्यर्थः ; अत एव
गम्योत्प्रेक्षा । [मदनेन वीतभयम्, अधिष्ठिताः] आक्रान्ताः, अत्यारूढ़-
मदना इत्यर्थः । [ पुरोविलासिनीः, सः] हरिः, [क्षणमीक्षते स्म ] ।
सविस्मयमिति भावः ॥ ३९ ॥

विपुलेनेति ।—[ युगक्षये ] कल्पान्ते ; सागरे शेते इति [ सागर-

* पुरा किल हरनेत्रवह्निना भस्मीभूतः कामदेवः श्रीकृष्णगेहे प्रद्युम्नरूपेण
अवततार इति पौराणिकी वार्त्ता ।

मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा ॥ ४० ॥
अधिकोन्नमद्घनपयोधरा मुहुः
प्रचलत्कलापिकलशङ्ककस्वना ।
अभिकृष्णमङ्गुलिमुखेन काचन
द्रुतमेककर्णविवरं व्यघट्टयत् ॥ ४१ ॥

---

शयस्य]। "अधिकरणे शेतेः" (३।२।१५ पा०) इति अच्प्रत्ययः, "शयवासवासिष्वकालात्" (६।३।१८ पा०) इति विकल्पात् अलुगभावः। [यस्य] हरेः, [विपुलेन कुक्षिणा भुवनानि, पपिरे] पीतानि। पिबतेः कर्मणि लिट्। [सः] हरिः, [एकतमया पुरस्त्रिया] कयाचित् पौराङ्गनया, [पुनः, मदविभ्रमासकलया] मदविभ्रमेण मदविकारेण, असकलया असमग्रया, [एकया दृशा, पपे] पीतः, सतृष्णं दृष्ट इत्यर्थः। कुक्षिकोणनिविष्टनिखिलविष्टपस्य हरेर्महतः आधेयस्यात्यल्पतरैककान्ताकटाक्षकोणाऽऽधारत्वोक्त्या चमत्कारादधिकालङ्कारः,—'आधाराऽऽधेययोरानुरूप्याभावोऽधिको मतः' इति लक्षणात्। अयञ्च तात्कालिकविकारात्मा विलासाख्यो भावो यत्कटाक्षवीक्षणम्;—'तात्कालिकविकारः स्यात् विलासोऽङ्गक्रियादिषु' इति दशरूपकात् ॥ ४० ॥

अधिकेति।—[काचन] कान्ता, [अभिकृष्णं] कृष्णाभिमुखम्। आभिमुख्येऽव्ययीभावः। [अधिकोन्नमद्घनपयोधरा] अधिकं भृशोन्नमनादूरम्, उन्नमन् घनः कठिनः,पयोधरः स्तनो यस्याः सा, [मुहुः; प्रचलत्कलापिकलशङ्ककस्वना] प्रचलतो नृत्यतः,कलापिनो बर्हिणः इव, कलो मधुरः, शङ्ककस्वनो बलयध्वनिर्यस्याः सा सती। 'शङ्ककं वलये कम्बौ' इति विश्वः। [अङ्गुलिमुखेन] अङ्गुल्यग्रेण, [एककर्णविवरम्] एकस्य कर्णस्य विवरं रन्ध्रं,[द्रुतं] शीघ्रं, [व्यघट्टयत्] कण्डूविनोदार्थं-

परिपाटलाब्जदलचारुणाऽसकृ-
च्चलिताङ्गुलीकिसलयेन पाणिना ।
सशिरःप्रकम्पमपरा रिपुं मधो-
रनुदीर्णवर्णनिभृतार्थमाह्वयत् ॥ ४२ ॥
नलिनान्तिकोपहितपल्लवश्रिया
व्यवधाय चारु मुखमेकपाणिना ।
स्फुरदङ्गुलीविवरनिःसृतोल्लस-
द्दशनप्रभाङ्कुरमजृम्भतापरा ॥ ४३ ॥

मिवाताडयत् । वस्तुतस्तु भावाविष्करणार्थमेवेति भावः । अयञ्च पूर्ववद्विलास एव । * कलापिकलेत्युपमा ॥ ४१ ॥

परीति ।—[ अपरा ] स्त्री, [ परिपाटलाब्जदलचारुणा ] रक्ताब्जपत्ररुचिरेण, [ असकृत् ] मुहुः, [ चलिताङ्गुलीकिसलयेन ] चलिताऽन्यङ्गुल्यः किसलयानीवाङ्गुलीकिसलयानि यस्य तेन, [पाणिना, सशिरः-प्रकम्पं ] शिरःकम्पयुक्तं यथा तथा, [मधोः रिपुं] हरिम् ; अनुदीर्णवर्णम् अनुच्चारिताक्षरम्, अत एव निभृतार्थं परेषामविदितार्थं यत् तत् [ अनुदीर्णवर्णनिभृतार्थं ] यथा तथा, [ आह्वयत् ] परप्रकाशनभयादव्याहरन्ती चेष्टयैवाह्वानं कृतवतीत्यर्थः । अत्रापि पूर्ववद्विलासोपमे † भावालङ्कारौ ॥ ४२ ॥

नलिनेति ।—[अपरा] स्त्री, [नलिनान्तिकोपहितपल्लवश्रिया] नलिनान्तिके उपहितस्य पल्लवस्य श्रीरिव श्रीर्यस्य तेन ; मुखसन्निधानादिति भावः । [ एकपाणिना, चारु ] निसर्गसुन्दरं, [ मुखं, व्यवधाय ] तिरोधायः, [ स्फुरदङ्गुलीविवरनिःसृतोल्लसद्दशनप्रभाऽङ्कुरं ] स्फुरदङ्गुली-

* मोट्टायितापरनामा ।

† अत्र कुट्टमितम् इति नव्याः ।

वलयार्पितासितमहोपलप्रभा-
बहुलीकृतप्रतनुरोमराजिना।
हरिवीक्षणाक्षणिकचक्षुषाऽन्यया
करपल्लवेन गलदम्बरं दधे ॥ ४४ ॥

निजसौरभभ्रमितभृङ्गपक्षति-
व्यजनानिलक्षयितघर्मवारिणा।

---

विवरनिःसृता उज्ज्वलाङ्गुल्यन्तरालनिर्गताः, अत एवोल्लसन्तः उत्सर्पन्तः, दशनप्रभा एवाङ्कुरा यस्मिन् कर्मणि तत् यथा तथा, [ अजृम्भत ] जृम्भणमास्यविवरणं, तच्च इष्टवस्तुसाक्षात्कारकृतजाड्यानुभावः। * अत्र नलिनपल्लवयोरसम्बन्धयोः सम्भावनया सम्बन्धाभिधानादतिशयोक्तिः ॥ ४३ ॥

वलयेति।—[ हरिवीक्षणाक्षणिकचक्षुषा ] हरिवीक्षणे अक्षणिकचक्षुषा स्थिरदृष्ट्या, विस्मयाऽऽदराभ्यां स्तिमितनेत्रयेत्यर्थः। [ अन्यया ] स्त्रिया, [गलत्] सुखपारवश्यात् स्रंसमानम्, [ अम्बरं, वलयार्पितासितमहोपलप्रभाबहुलीकृतप्रतनुरोमराजिना] वलयेषु अर्पिताः खचिताः, ये असितमहोपला नीलमहामणयः। 'उपलौ मणिपाषाणौ' इति विश्वः। तेषां प्रभाभिः बहुलीकृता सान्द्रीकृता, प्रतनुः सूक्ष्मा, रोमराजिर्यस्य तेन, [ करपल्लवेन, दधे ] धृतम्। अयञ्च तात्कालिकविहारलक्षणविलासः। † अत्र इन्द्रनीलप्रभाणां रोमावलीबहुलीकरणोक्त्या प्रभास्वपि रोमराजित्वप्रतीतेर्भ्रान्तिमदलङ्कारो व्यज्यत इति वस्तुनाऽलङ्कारध्वनिः ॥ ४४ ॥

निजेति।—[ काचित् ] स्त्री, [ निजसौरभभ्रमितभृङ्गपक्षतिव्यजनानिलक्षयितघर्मवारिणा ] निजेन आत्मीयेन, सौरभेण सौगन्ध्येन,

---

* इदं स्मरावेगोत्थचेष्टितं तपनम् इति अर्वाचीनाः।

† आधुनिकसम्मतमिदं विकृतं (विहृतं) नाम सत्त्वजोऽलङ्कारः।

अभिशौरि काचिदनिमेषदृष्टिना
पुरदेवतेव वपुषा व्यभाव्यत ॥ ४५ ॥
अभियाति नः सतृष एष चक्षुषो
हरिरित्यखिद्यत नितम्बिनीजनः ।
न विवेद यः सततमेनमीक्षते
न वितृष्णतां व्रजति खल्वसावपि ॥ ४६ ॥

---

भ्रमितानां भ्रमणं कारितानां, भृङ्गाणां पक्षतयः पक्षमूलानि । 'स्त्री पक्षतिः पक्षमूलम्' इत्यमरः । "पक्षात्तिः" ( ५।२।२५ पा० ) इति तिप्रत्ययः । ता एव व्यजनानि इति रूपकं, स्वेदहरणलिङ्गात् । तासाम् अनिलेन क्षयितं नाशितं, घर्मवारि स्वेदो यस्य तेन, [अभिशौरि] शौरेरभिमुखम् । आभिमुख्येऽव्ययीभावः । [ अनिमेषदृष्टिना ] अनिमेषा दृष्टिर्यस्य तेन, [ वपुषा ] निमित्तेन, [ पुरदेवतेव ] इन्द्रप्रस्थाधिदेवतेव, [ व्यभाव्यत ] विभाविता, तर्कितेति यावत् । अनिमेषत्वञ्च इष्टदर्शनजन्यजाड्यसञ्चार्य्यनुभावः,—'अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः । अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र ॥' इति लक्षणात् । इहाङ्गसौरभानिमेषत्वाभ्यां पुराधिवासाच्च पुराधिदेवतात्वमुत्प्रेक्ष्यते इत्युपात्तगुणनिमित्ता जातिस्वरूपोत्प्रेक्षा ; तया चास्या जात्या पद्मिनीत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः । निजसौरभेत्यनेन 'कमलमुकुलमृद्वी फुल्लराजीवगन्धिः सुरतपयसि यस्याः सौरभं दिव्यमङ्गम्' इत्यादिपद्मिनीलक्षणोपलक्षणादिति । विपुलेनेत्यादिश्लोकोक्ताः षडपि नायिकाः प्रौढ़ाः साधारण्यश्च । तत्र तासासम्भवात् । अन्यथाऽऽसां कृतचेष्टावर्णनानौचित्याच्चेत्यलमतिप्रपञ्चेन ॥ ४५ ॥

अभियातीति ।—[ असौ नितम्बिनीजनः ] स्त्रीजनः, [नः] अस्माकं, [चक्षुषः, सतृषः] सतृष्णस्येव सतः, चक्षुषि सतृष्णे सत्येव, अनादृत्येत्यर्थः ।

अकृतस्वसद्मगमनाऽऽदरः क्षणं
लिपिकर्मनिर्मित इव व्यतिष्ठत ;
गतमच्युतेन सह शून्यतां गतः
प्रतिपालयन् मन इवाङ्गनाजनः ॥ ४७ ॥
अलसैर्मदेन सुदृशः शरीरकैः
स्वगृहान् प्रति प्रतिययुः शनैः शनैः ।

---

"षष्ठी चानादरे" (२।३।३८ पा०) इति षष्ठी । [ एष हरिः, अभियाति] अभिगच्छति, [इति, अखिद्यत] खेदं गतः । खिदेर्दैवादिकात् कर्त्तरि लङ् । अत्रोत्प्रेक्ष्यते, नेति ।—[ यः ] जनः, [एनं] हरिं, [सततमीक्षते] असौ [अपि खलु वितृष्णतां न व्रजति] इति [ न विवेद ] नित्यदर्शनेऽप्यपूर्ववदेव भवतीति नाबुध्यतेत्यर्थः । वेद चेन्नाखिद्यतेति भावः । अत्राखिद्यतेति स्त्रीणां प्रारब्धहरिवीक्षणसुखविच्छेदकृतविषादाख्यसञ्चारिभावनिबन्धनात्प्रेयोऽलङ्कारः, तदुत्थापिता चेयमुक्ता वेदनोत्प्रेक्षेति सङ्करः । 'प्रारब्धकार्य्यासिद्ध्यादेर्विषादः सत्त्वसङ्क्षयः' इति दशरूपके । सत्त्वसङ्क्षयः चित्तभङ्गः ॥ ४६ ॥

अकृतेति ।—[ अङ्गनाजनः अच्युतेन सह गतं मनः, प्रतिपालयन् ] प्रतीक्षमाणः, [इव] इत्युत्प्रेक्षा । [ शून्यतां ] निरोजस्कतां, [गतः, अकृतस्वसद्मगमनाऽऽदरः] निवृत्तनिजगृहप्राप्त्यपेक्षः सन्, [ लिपिकर्मनिर्मितः ] चित्रलिखितः, [ इव ] इत्युत्प्रेक्षा । [ क्षणं, व्यतिष्ठत ] विस्पन्दमास्तेत्यर्थः । "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम् ; अतः शून्यताऽनुभावाच्चिन्ताऽवगम्यते,—'ध्यानं चिन्ता हितानाप्तेः शून्यता श्वासतापकृत्' इति दशरूपके । अत्रोत्प्रेक्षयोः सापेक्षत्वात् सङ्करः॥ ४७ ॥

अलसैरिति ।—[अलघुप्रसारितविलोचनाञ्जलिद्रुतपीतमाधवरसौघनिर्भरैः ] अलघु अधिकं, प्रसारितैर्विलोचनैरेवाञ्जलिभिर्द्रुतं सत्वरम् ।

अलघुप्रसारितविलोचनाञ्जलि-
द्रुतपीतमाधवरसौघनिर्भरैः ॥ ४८ ॥
नवगन्धवारिविरजीकृताः पुरो
घनधूपधूमकृतरेणुविभ्रमाः ।
प्रचुरोद्गतध्वजविलम्बिवाससः
पुरवीथयोऽथ हरिणाऽतिपेतिरे ॥ ४९ ॥

---

'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । पीतो यो माधवो हरिरेव, रसोऽमृतम् ; अन्यत्र,—मधु मद्यं, तत्सम्बन्धि रसो माधुर्य्यं, माधवरसः । 'रसो रागे विषे वीर्य्ये तिक्तादौ पारदे द्रवे । रेतस्यास्वादने हेम्नि निर्य्यासेऽमृत-शब्दयोः ॥' इति वैजयन्ती । तस्यौघः समूहः, तेन निर्भरैर्दुर्भरैः, गुरुभिरिति यावत् ; अत एव [ मदेन, अलसैः ] मन्थरैः, [ शरीरकैः ] शरीरकाणि, अल्पशरीराणीत्यर्थः । "अल्पे" ( ५।३।८५ पा० ) इति परि-माणे कन्प्रत्ययः । तैः उपलक्षिताः, [ सुदृशः शनैः शनैः स्वगृहान् प्रति, प्रतियुः] प्रतिनिर्गताः स्वयम् । लघून्यपि द्रव्याणि रसद्रवभरणाद्गुरूभव-न्तीति भावः । अत्र माधवरसौघनिर्भरत्वविशेषणगत्या शनैः शनैः प्रतियानहेतुत्वात् कार्य्यहेतुकं काव्यलिङ्गं, तच्च माधवरसेनेति श्लेष-मूलातिशयोक्त्युत्थापितमिति सङ्करः ॥ ४८ ॥

नवेति ।—[ अथ ] पुरप्रवेशानन्तरं, [हरिणा, पुरः] पूर्वं, [ नवगन्ध-वारिविरजीकृताः ] नवगन्धवारिभिः गन्धवासितोदकैः, विरजीकृताः अविरजसो विरजसः सम्पद्यमानाः कृताः । "अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च" ( ५।४।५१ पा० ) इत्यभूततद्भावे च्विप्रत्यये सलोपः "अस्य च्वौ" ( ७।४।३२ पा० ) इतीकारः । [ घनधूपधूमकृतरेणुविभ्रमाः ] घनैः सान्द्रैः, धूपानाम् अगुरुधूपानां, धूमैः कृतौ रेणुविभ्रमौ रजोभ्रमौ याभिस्ताः, [प्रचुरोद्गतध्वजविलम्बिवाससः] प्रचुरं बहुलम्, उद्गतेषु उच्छ्रि-तेषु, ध्वजेषु ध्वजस्तम्भेषु, विलम्बीनि विलम्बमानानि, वासांसि पताका

उपनीय बिन्दुसरसो मयेन या
मणिदारु चारु किल वार्षपर्वणम्।
विदधेऽवधूतसुरसद्मसम्पदं
समुपासदत् सपदि संसदं स ताम्॥ ५०॥

---

यासु ताः, [पुरवीथयः, अतिपेतिरे] अतिपातिताः, अतिक्रान्ता इत्यर्थः। पतेः कर्मणि लिट्, एत्वाभ्यासलोपौ। अत्र सादृश्याद्रेणुभ्रान्त्या भ्रान्तिमदलङ्कारः। रेणुविभ्रमशब्देन रजोविलासस्यापि प्रतीतेस्तस्य विरजीकरणेन विरोधाद्विरोधाभासश्चेति अनयोरेकवाचकानुप्रवेशलक्षणः सङ्करः॥ ४९॥

उपनीयेति।—[मयेन] असुरशिल्पिना, वृषपर्वा नाम कश्चिदसुरेश्वरः, वृषपर्वण इदं [वार्षपर्वणम्]। "तस्येदम्" (४।३।१२० पा०) इत्यण्। [चारु] मनोहरं, [मणिदारु] मणिरेव दारु काष्ठं, मणिमयं स्तम्भादिकलापमित्यर्थः, तत् [बिन्दुसरसः] हैमवतात् सरोविशेषात्, [उपनीय] समीपमानीय, [किल] इत्यैतिह्ये। [या] संसत्, [विदधे] निर्मिता। [अवधूतसुरसद्मसम्पदम्] अवधूता अधरीकृता, सुरसद्मसम्पत् इन्द्रभवनलक्ष्मीर्यया सा तां, [तां, संसदं] सभाम्। 'सभासमितिसंसदः। आस्थानी क्लीवमास्थानं स्त्रीनपुंसकयोः सदः' इत्यमरः। [सः] हरिः, [सपदि, समुपासदत्] प्रापत्। सदेर्लुङि पुषादित्वात् च्लेरङादेशः।* पुरा किल खाण्डवदाहे पाण्डवेनाग्निदाहान्मोचितेन मयेन प्रत्युपकारार्थं पूर्वमात्मनैव बिन्दुसरसि गुप्तेन वृषपर्वगृहनिर्माणावशिष्टेन मणिशिलाकलापेन काञ्चनसभा धर्मराजाय निर्मितेति भारते। सभावर्णनाङ्गत्वेनार्जुनमयचरितवर्णनादुदात्तालङ्कारः,—"प्रभूतमहापुरुषचिन्तनञ्च" इति सूत्रम्॥ ५०॥

---

* "पुषादि—" (३।१।५५ पा०) इति सूत्रम्।

अधिरात्रि यत्र निपतन् नभोलिहां
कलधौतधौतशिलवेश्मनां रुचौ ।
पुनरप्यवापदिव दुग्धवारिधि-
क्षणगर्भवासमनिदाघदीधितिः ॥ ५१ ॥

लयनेषु लोहितकनिर्मिता भुवः
शितिरत्नरश्मिहरितीकृतान्तराः ।
जमदग्निसूनुपितृतर्पणीरपो
वहति स्म या विरलशैवला इव ॥ ५२ ॥

---

अथ दशभिः सभां वर्णयति, अधीत्यादि ।—[ अधिरात्रि ] रात्रिषु । विभक्त्यर्थेऽव्ययीभावः । [ यत्र ] सभायां, [ नभोलिहाम् ] अभ्रंलिहाम् । क्विप् । [ कलधौतधौतशिलवेश्मनां ] कलधौतं रौप्यम् । 'कलधौतं रूप्यहेम्नोः' इत्यमरः । तद्वद्धौताः धवलाः, शिला येषां तानि, वेश्मानि स्फटिकभवनानीत्यर्थः, तेषां, [ रुचौ ] प्रभायां, [ निपतन्] प्रविशन्, [ अनिदाघदीधितिः ] अनुष्णरश्मिः, हिमांशुरित्यर्थः, [पुनरपि, दुग्धवारिधिक्षणगर्भवासं ] दुग्धवारिधौ क्षीराब्धौ, क्षणं गर्भवासं, न तु मथनात्प्रागिव चिरगर्भवासमिति भावः । [ अवापत् ] प्रापत्, [इव] इत्युत्प्रेक्षा । तया वेश्मनां चन्द्रमण्डलातिक्रमो व्यज्यते ॥ ५१ ॥

लयनेष्विति ।—[ लयनेषु ] लीयते एष्विति लयनानि तेषु, गृहेषु, [ शितिरत्नरश्मिहरितीकृतान्तराः] शितिरत्नानां नीलमणीनां, रश्मिभिः हरितीकृतानि हरितवर्णीकृतानि, अन्तराणि मध्यानि यासां ताः, [ लोहितकनिर्मिताः ] लोहितमणयो लोहितकाः पद्मरागाः । "लोहितान्मणौ" (५।४।३० पा०) इति कन्प्रत्ययः। तैः निर्मिताः, [भुवः] भूमीः, [ विरलशैवलाः ] विरलाः शैवला यासु ताः, [जमदग्निसूनुपितृतर्पणीः] जमदग्निसूनोः परशुरामस्य, पितॄणां तर्पणीः तृप्तिकरीः, [ अप

विशदाश्मकूटघटिताः क्षपाकृतः
क्षणदासु यत्र च रुचैकतां गताः ।
गृहपङ्क्तयश्चिरमतीयिरे जनै-
स्तमसीव हस्तपरिमर्शसूचिताः ॥ ५३ ॥
निलयेषु नक्तमसिताश्मनाञ्चये-
र्विसिनीवधूपरिभवस्फुटाऽऽगसः ।
मुहुरत्नसङ्गिरपि यत्र गौरवा-
च्छशलाञ्छनांशव उपांशु जघ्निरे ॥ ५४ ॥

---

इव] इत्युपमाः। [ याः] सभा, [ वहति स्म ] । जामदग्न्यः क्षत्रियास्त्रैः पञ्चशो ह्रदानुत्पाद्य ताभिरद्भिः पितॄनतर्पयत्, ताश्च रुधिरप्रकृतिकत्वा-द्रक्तवर्णा एवेति पुराणम् ॥ ५२ ॥

विशदेति ।—[च] किञ्चेति चार्थः । [यत्र] सभायां, [ विशदाश्मकूट-घटिताः ] स्फटिकशिलासङ्घातनिर्मिताः, अत एव [ क्षणदासु, क्षपा-कृतः] निशाकरस्य, [रुचा] चन्द्रिकया, [एकतां] सावर्ण्यादभेदं, [गताः] ; अत एव [ तमसीव, हस्तपरिमर्शसूचिताः ] पाणिस्पर्शैकगम्या इत्यर्थः । [ गृहपङ्क्तयः जनैश्चिरम्, अतीयिरे ] अतिक्रान्ताः । पुरोगतान्यपि स्फटिकभवनानि चन्द्रिकाभ्रमादतीत्य गत्वा पश्चात्करपरामर्शैः कथ-ञ्चित्प्राप्यन्ते इत्यर्थः । अत्र प्रकृतानां स्फटिकवेश्मनां गुणसाम्याद-प्रस्तुतचन्द्रिकैक्योक्त्या सामान्यालङ्कारः,—“सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता” इति लक्षणात् ॥ ५३ ॥

निलयेष्विति ।—[यत्र] सभायां, [निलयेषु, नक्तं] रात्रौ, [ विसिनी-वधूपरिभवस्फुटाऽऽगसः ] विसिन्यो दीर्घिकापद्मिन्यः, ता एव वध्वः, तासां परिभवेण निमीलितेन, दूषणेन च, स्फुटाऽऽगसः स्पष्टापराधाः, [शशलाञ्छनांशवः] चन्द्रपादाः,[अत्नसङ्गिरपि ] अत्रस्यद्भिरपि, निर्दोषैरपि इति चार्थः । ‘त्रासो भीमणिदोषयोः’ इति विश्वः । “वा भ्राश—”

सुखिनः पुरोऽभिमुखतामुपागतैः
प्रतिमासु यत्र गृहरत्नभित्तिषु ।
नवसङ्गमैरबिभरुः प्रियाजनैः
प्रमदं त्रपाभरपराङ्मुखैरपि ॥ ५५ ॥

---

( ३।१।७० पा० ) इत्यादिना श्यनभावपक्षे श्नत्प्रत्ययः । [ असिताश्मनाम् ] इन्द्रनीलमणीनां, [ चयैः ] समूहैः, [ गौरवात् ] स्वयं प्रभूतत्वात्, सम्भावितत्वाच्च । [ उपांशु ] अंशुसमीपे, रहश्च । 'रहश्चोपांशु चालिङ्गे' इत्यमरः । [ मुहुः, जघ्निरे ] तिरोहिता, मारिताश्च । हन्तेः कर्मणि लिट् । समीपगताश्चन्द्रांशवः प्रभूतैः इन्द्रनीलांशुभिः तिरस्कृता इत्यर्थः ; अन्यत्र,—अन्तःपुरद्रोहिणो निर्भीकैरपि सम्भावितैः दुष्कीर्त्तिभयाद्गूढं हन्यन्ते इति भावः । अत्र विसिनीनां वधूत्वरूपणात् तत्परिभाविणां चन्द्रांशूनां धूर्त्तकामुकत्वरूपणप्रतीतेः एकदेशविवर्त्ति रूपकम् ; तच्च गौरवादुपांशु जघ्निरे इति च श्लेषेणात्रसङ्किरपीति विरोधेन च सङ्कीर्य्यते ॥ ५४ ॥

सुखिन इति ।—[ यत्र ] सभायां ; नवः सङ्गमो येषां तैः [ नवसङ्गमैः ] अत एव [ त्रपाभरपराङ्मुखैः ] त्रपाभरेण पराङ्मुखैः विमुखैः, [अपि, गृहरत्नभित्तिषु] गृहाणां रत्नभित्तिषु, [प्रतिमासु] तत्सङ्क्रान्तप्रतिबिम्बेषु, [ पुरः ] अग्रे, [ अभिमुखतामुपागतैः, प्रियाजनैः] कान्ताजनैः, [सुखिनः] भोगिनः, [ प्रमदं ] हर्षम्, [ अबिभरुः ] बिभ्रति स्म । भृञो लङि, "श्लौ" ( ६।१।१० पा० ) इति द्विर्भावे "सिजभ्यस्तविदिभ्यश्च" ( ३।४।१०९ पा० ) इति झेर्जुसादेशः । स्त्रीणां वैमुख्येऽपि तत्प्रतिबिम्बाभिमुख्यात् पुंसां सुखमेव, स्त्रीणान्तु उभयथाऽपि क्लिष्टमित्यर्थः । अत्र वैमुख्येऽप्याभिमुख्यमिति विरोधस्य प्रतिमास्विति निरासाद्विरोधाभासोऽलङ्कारः ॥ ५५ ॥

तृणवाञ्छया मुहुरवाञ्चिताऽऽननान्
निचयेषु यत्र हरिताश्मवेश्मनाम् ।
रसनाऽग्रलग्नकिरणाङ्कुरान् जनो
हरिणान् गृहीतकवलानिवैक्षत ॥ ५६ ॥

विपुलाऽऽलवालभृतवारिदर्पण-
प्रतिमागतैरभिविरेजुरात्मभिः ।
यदुपान्तिकेषु दधतो महीरुहः
सपलाशराशिमिव मूलसंहतिम् ॥ ५७ ॥

---

तृणेति ।—[ यत्र ] सभायां, [ हरिताश्मवेश्मनां ] मरकतमणीनां गृहाणाम् । 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः' इत्यमरः । [ निचयेषु ] सङ्घेषु, [ तृणवाञ्छया ] तृणाऽऽशया, [ मुहुः, अवाञ्चिताऽऽननान् ] नमितमुखान्, अत एव [ रसनाऽग्रलग्नकिरणाङ्कुरान् ] रसनाऽग्रेषु लग्नाः किरणाः अङ्कुरा इव येषां ते तान् ; अत एव [ गृहीतकवलान् ] उपात्ततृणग्रासान्, [ इव ] स्थितान् [ हरिणान् जनः, ऐक्षत ] ईक्षितवान् । ईक्षतेर्लङि "आडजादीनाम्" (६।४।७२ पा० ) इत्याट्, "आटश्च" (६।१।९० पा० ) इति वृद्धिः । अत्र तृणवाञ्छयेति हरिणानां मरकतेषु तृणभ्रान्तेर्भ्रान्तिमदलङ्कारः ; तन्मूला चेयं गृहीतकवलत्वोत्प्रेक्षेति सङ्करः ॥ ५६ ॥

विपुलेति ।—[ यदुपान्तिकेषु ] यस्याः सभायाः, उपान्तिकेषु समीपेषु, [ महीरुहः ] वृक्षाः, [विपुलाऽऽलवालभृतवारिदर्पणप्रतिमागतैः ] विपुलेषु आलवालेषु मूलजलाऽऽधारेषु । 'स्यादालवालमावालम्' इत्यमरः । भृतानि सम्भृतानि, वारीण्येव दर्पणाः, तेषु प्रतिमां प्रतिबिम्बतां, गतैः प्रतिबिम्बितैरित्यर्थः ; [ आत्मभिः ] स्वमूर्त्तिभिरित्यर्थः । [सपलाशराशिं ] सपत्रसन्ततिं, [ मूलसंहतिं, दधत इव ] दधाना इव, [ अभि-

उरगेन्द्रमूर्द्धरुहरत्नसन्निधे-
र्मुहुरुन्नतस्य रसितैः पयोमुचः ।
अभवन् यदङ्गनभुवः समुच्छ्वस-
न्नवबालवायजमणिस्थलाङ्कुराः ॥ ५८ ॥

नलिनी निगूढसलिला च यत्र सा
स्थलमित्यधःपतति या सुयोधने ।

---

विरेजुः ]। स्वाऽऽलवालेषु स्वप्रतिविम्बितैः अधोमुखैः मूलेष्वपि सपत्रा इव रेजुरित्युत्प्रेक्षा ॥ ५७ ॥

उरगेन्द्रेति ।—[ उरगेन्द्रमूर्द्धरुहरत्नसन्निधेः ] उरगेन्द्राणां मूर्द्धसु रुहाणि रूढानि । इगुपधलक्षणः कः । * तेषां रत्नानां सन्निधेः सन्निधानात्, [ मुहुरुन्नतस्य ] यदा यदा तत्सन्निधिः, तदा तदोदितस्येत्यर्थः । [ पयोमुचः ] मेघस्य, [ रसितैः ] स्तनितैः, [ यदङ्गनभुवः ] यस्याः प्राङ्गणप्रदेशाः, [ समुच्छ्वसन्नवबालवायजमणिस्थलाङ्कुराः ] समुच्छ्वसन्तः प्रादुर्भवन्तः, नवाः प्रत्यग्राः, बालवायजमणिस्थलाङ्कुराः वैदूर्य्यभूप्ररोहा यासु ताः तथोक्ताः, [ अभवन् ]। 'वैदूर्य्यं बालवायजम्' इत्यमरः । बालवायो नाम वैदूर्य्यप्रभवो देशविशेषः । उरगेन्द्रमूर्द्धन्यरत्नाङ्कुरैः सहोदितमेघध्वनेर्विदूरभूमिरुद्भिन्नाङ्कुरा भवतीति प्रसिद्धिः ; तदुक्तम्,—उरगमूर्द्धन्यरत्नसन्निधानादकालेऽपि मेघा गर्ज्जन्तीति वार्त्ता । केचित्तु,—यत्रैवोरगरत्नं मेघरसितञ्च, तत्रैव वैदूर्य्यभूमिः । अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारभेदः,—'तदुदात्तं भवेत् यत्र समृद्धं वस्तु वर्ण्यते' इति लक्षणात् ॥ ५८ ॥

नलिनीति ।—[यत्र] सभायां, [च, निगूढसलिला] दलच्छन्नत्वाददृश्यसलिला, [ सा नलिनी ] वर्त्तते इति शेषः । [ या ] नलिनी ; सुष्ठु

---

* "इगुपधज्ञाप्रीकिरः कः" ( ३।१।१३५ पा० ) इति सूत्रम् ।

अनिलाऽऽत्मजप्रहसनाऽऽकुलाखिल-
क्षितिपक्षयाऽऽगमनिमित्ततां ययौ ॥ ५९ ॥
हसितुं परेण परितः परिस्फुरत्-
करबालकोमलरुचावुपेक्षितैः ।
उदकर्षि यत्र जलशङ्कया जनै-
र्मुहुरिन्द्रनीलभुवि दूरमम्बरम् ॥ ६० ॥
अभितः सदोऽथ हरिपाण्डवौ रथा-
दमलांशुमण्डलसमुल्लसत्तनू ।

---

युध्यत इति [ सुयोधने ] दुर्योधने। "भाषायां शासियुधिदृशि-धृषिमृषिभ्यो युज् वक्तव्यः" (वा०) इति युच्। [ स्थलमिति ] भ्रान्त्या, [ अधःपतति ] सति, [ अनिलाऽऽत्मजप्रहसनाऽऽकुलाखिलक्षितिपक्षया-ऽऽगमनिमित्तताम् ] अनिलाऽऽत्मजस्य भीमसेनस्य, प्रहसनेन अट्टहासेन, आकुलानां क्षुभितानाम्, अखिलक्षितिपानां क्षयाऽऽगमे नाशप्राप्तौ, निमित्ततां, [ ययौ ]। नलिनीदलच्छन्नत्वात् सुयोधनस्य जले स्थल-भ्रान्तिः, तया तस्य पातः, तेन भीमसेनप्रहासः, तेन राज्ञां क्षोभः, ततस्तेषां मारणे रणः प्रवृत्त इति परम्परया तत्क्षयकारणत्वं गतेत्यर्थः। अत्र सभावर्णनाङ्गतया भीमसेनादिचरितवर्णनादुदात्ता-लङ्कारभेदः। लक्षणञ्चोक्तम् ॥ ५९ ॥

हसितुमिति ।—[यत्र] सभायां, [परितः, परिस्फुरत्करबालकोमल-रुचौ ] परिस्फुरन्ती करबालकोमला असिश्यामा, रुचिर्यस्यास्तस्याम्, [ इन्द्रनीलभुवि हसितुं, परेण ] जानताऽन्येन जनेन, [उपेक्षितैः ] स्थल-मेतत्, न जलमिति उपदिष्टैः, [जनैः] अज्ञैरागन्तुकजनैः, [ जलशङ्कया ] जलभ्रान्त्या, [ मुहुः दूरम्, अम्बरं ] वस्त्रम्, [उदकर्षि] नितम्बादुद्धृतम्। अत्र इन्द्रनीलस्थलसादृश्यात् सलिलभ्रान्तेर्भ्रान्तिमदलङ्कारः ॥ ६० ॥

अभित इति ।—[ अथ, अमलांशुमण्डलसमुल्लसत्तनू ] अमलांशु-

अवतेरतुर्नयननन्दनौ नभः
शशिभार्गवावुदयपर्वतादिव ॥ ६१ ॥
तदलक्ष्यरत्नमयकुड्यमादरा-
दभिधातरीत इत इत्यथो नृपे ।
धवलाश्मरश्मिपटलाविभावित-
प्रतिहारमाविशदसौ सदः शनैः ॥ ६२ ॥
नवहाटकेष्टकचितं ददर्श सः
क्षितिपस्य वस्त्यमथ तत्र संसदि ।

---

मण्डलेन तेजःपुञ्जेन, समुल्लसन्त्यौ भासमाने, तनू मूर्त्ती ययोस्तौ, [नयननन्दनौ] नेत्राऽऽनन्दकरौ, [हरिपाण्डवौ, सदोऽभितः] सभाऽभिमुखम् । "अभितःपरितः—" (वा०) इति द्वितीया । [रथात्, शशिभार्गवौ] अमलेत्यादिविशेषणविशिष्टौ चन्द्रशुक्रौ, [नभः] अभितः नभोऽभिमुखम्, [उदयपर्वतात्] उदयाख्यात्पर्वतात्, उदयाचलादित्यर्थः, [इव, अवतेरतुः] अवतीर्णवन्तौ । तरतेर्लिट् "तॄफलभजत्रपश्च" (६।४।१२२ पा०) इति एत्वाभ्यासलोपौ । उपमाऽलङ्कारः ॥ ६१ ॥

तदिति ।—[अथो] रथावतरणानन्तरम्, [असौ] हरिः, [नृपे] युधिष्ठिरे, [आदरात्, इत इत इत्यभिधातरि] सति, इत इत आगम्यतामित्यभिदधाने सतीत्यर्थः । [तत्] पूर्वोक्तम्, [अलक्ष्यरत्नमयकुड्यम्] अदृश्यरत्नभित्तिकम्, [धवलाश्मरश्मिपटलाविभावितप्रतिहारम्] धवलेन शुभ्रेण, अश्मरश्मिपटलेन मणिप्रभापुञ्जेन, अविभावितप्रतिहारम् अलक्ष्यद्वारम् । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । [सदः] सभां, [शनैः, आविशत्] प्रविष्टवान् । अत्र कुड्यप्रतीहारयोरलक्ष्यत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६२ ॥

नवेति ।—[अथ] प्रवेशानन्तरं, [सः] हरिः, [तत्र, संसदि]

गगनस्पृशां मणिरुचां चयेन यत्
सदनान्युदस्मयत नाकिनामपि ॥ ६३ ॥
उदयाद्रिमूर्ध्नि युगपच्चकासतो-
र्दिननाथपूर्णशशिनोरसम्भवाम् ।
रुचिमासने रुचिरधाम्नि बिभ्रता-
वलघुन्यथ न्यषदतां नृपाच्युतौ ॥ ६४ ॥

---

सभायां, [नवहाटकेष्टकचितं] नवाभिः हाटकेष्टकाभिः हिरण्येष्टकाभिः, चितम्। 'हिरण्यं हेम हाटकम्' इत्यमरः। "इष्टकेषीकामालानां चिततूलभारिषु" (६।३।६५ पा०) इति ह्रस्वः। पक्वमृत्तिकाविशेष-वाचकस्येष्टकाशब्दस्य तादृशि सुवर्णविकारे सुवर्णघटवदुपचारात्प्रयोगः। [क्षितिपस्य] युधिष्ठिरस्य, [वस्त्यं]* सदनम्। 'निशान्तवस्त्यसदनम्' इत्यमरः। [ददर्श। यत्] सदनं, [गगनस्पृशाम्] उच्चैस्तराणां, [मणिरुचां, चयेन] समूहेन, [नाकिनां] देवानाम्, [अपि सदनानि, उदस्मयत] अहसत्। स्मयतेरुत्पूर्वात् कर्त्तरि लङ्। अत्रापि नृप-सदनस्य सुरसदनादाधिक्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

उदयाद्रीति।—[अथ] नृपसदनदर्शनानन्तरम्, [उदयाद्रिमूर्ध्नि] उदयाद्रेर्मूर्ध्नि शिखरे, [युगपत्, चकासतोः] प्रकाशमानयोः। 'चकासृ दीप्तौ' इति धातोर्लटः शत्रादेशः। [दिननाथपूर्णशशिनोः] सूर्य्य-पूर्णचन्द्रमसोः, [असम्भवां] सम्भवरहितां, तयोस्तथाभूतयोर्यौगपद्या-योगादभूतपूर्वामित्यर्थः। [रुचिं] शोभां, [बिभ्रतौ नृपाच्युतौ, रुचिरधाम्नि] उज्ज्वलतेजसि, [अलघुनि] विपुले, [आसने] सिंहाऽऽसने, [न्यषदताम्] उपविष्टौ। सदेर्लुङि "पुषादि—" (३।१।५५ पा०) इति

---

* "वस्त्यम्" इत्यत्र "पस्त्यम्" इति पाठान्तरम्।

सुतरां सुखेन सकलक्लमच्छिदा
सनिदाघमङ्गमिव मातरिश्वना ।
यदुनन्दनेन तदुदन्वतः पयः
शशिनेव राजकुलमाप नन्दथुम् ॥ ६५ ॥
अनवद्यवाद्यलयगामि कोमलं
नवगीतमप्यनवगीततां दधत् ।

---

चेरङ्गादेशः, "सदिरप्रतेः" (८।३।६६ पा०) इति षत्वम् । अत्र सम्भावनया अर्कपूर्णेन्दुशोभासम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपाऽतिशयोक्तिः ॥ ६४ ॥

सुतरामिति ।—[ तत्, राजकुलं ] कुरुकुलम् । [ सकलक्लमच्छिदा ] सकलदुःखहारिणा, [ यदुनन्दनेन ] कृष्णेन, [ सनिदाघं ] ससन्तापम्, [ अङ्गं, मातरिश्वना ] मातरिश्वा वायुस्तेन, [ इव, उदन्वतः ] उदकान्यस्य सन्तीति उदन्वान् उदधिः । "उदन्वानुदधौ च" (८।२।१३ पा०) इति निपातः । तस्य, [ पयः ] जलं, [ शशिनेव, सुतराम् ] अत्यन्तम् । "किमेत्तिङव्ययघादाम्व—" (५।४।११ पा०) इति आमुप्रत्ययः । [सुखेन] अक्लेशेन, [ नन्दथुम् ] आनन्दम्, [ आप ] । 'स्यादानन्दथुरानन्दः' इत्यमरः । "ट्वितोऽथुच्" ( ३।३।८९ पा० ) इत्यथुच्प्रत्ययः । मालोपमा ॥ ६५ ॥

अनवद्येति ।—सविलासो विलासयुक्तः, लासिकविलासिनीजनः नर्त्तकस्त्रीजनः, [ सविलासलासिकविलासिनीजनः ] । 'नर्त्तकीलासिके समे' इत्यमरः । [अनवद्यवाद्यलयगामि] अनवद्यम् अगर्ह्यं, वाद्यं वंशादि, तस्य लयः साम्यं, गीतस्य समकालत्वमित्यर्थः, तद्गामि द्रुतविलम्बादिमानानुवर्त्तीत्यर्थः । 'तालः कालक्रियामानं लयः साम्यम्' इत्यमरः । नवं गीतं यस्य तत्, [ नवगीतम्, अपि ] तथाऽपि, [ अनवगीततां दधत् ] इति विरोधेऽपिशब्दः ; अगर्हितत्वं दधदित्यविरोधाद्विरोधाभासः । 'अवगीतन्तु निर्वादे मुहुर्गीते च गर्हिते' इति विश्वः । [ स्फुटसात्त्वि-

स्फुटसात्त्विकाऽऽङ्गिकमनृत्यदुज्ज्वलं
सविलासलासिकविलासिनीजनः ॥ ६६ ॥
सकले च तत्र गृहमागते हरौ
नगरेऽप्यकालमहमादिदेश सः ।
सततोत्सवं तदिति नूनमुन्मुदो
रभसेन विस्मृतमभून्महीभृतः ॥ ६७ ॥

---

काऽऽङ्गिकं] सत्त्वमन्तःकरणं, तेन निर्वृत्तं नृत्यं सात्त्विकम्, अङ्गं हस्तादि, तेन निर्वृत्तमाङ्गिकम्। 'निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके' इत्यमरः। ते स्फुटे यस्मिंस्तत्तथोक्तम्। वाचिकस्याप्युपलक्षणमेतत्। यथाऽऽह भगवान् भरतः,—"पदार्थाभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः" इति; अत एव कालिदासोऽपि,—'अङ्गसत्त्ववचनाऽऽश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शयन्' इति। [कोमलं] मधुरनृत्यम्, [उज्ज्वलम्] उद्धतञ्च, [अनृत्यत्]। तथोक्तं दशरूपके,—'भावाऽऽश्रयन्तु नृत्यं स्यान्नृत्यं ताललयाऽऽश्रयम्। आद्यं पदार्थाभिनयो मार्गादेशी तथाऽपरः॥ मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः। लास्यताण्डवरूपेण नाटकाऽऽद्युपचारकम्॥' इति ॥ ६६ ॥

सकल इति।—[च] किञ्चेति चार्थः। [सः] राजा, [हरौ] कृष्णे, [गृहमागते सकले अपि तत्र, नगरे] इन्द्रप्रस्थे, [अकालमहम्] अकाले प्रसिद्धवसन्ताद्यतिरिक्ते काले, महम् उत्सवम्। 'मह उद्धव उत्सवः' इत्यमरः। [आदिदेश] आज्ञापयामास। [नूनम्] अत्रोत्प्रेक्ष्यते। [उन्मुदः] कृष्णाऽऽगमनादुत्कटानन्दस्य, [महीभृतः] धर्मनन्दनस्य, [तत्] नगरम्; सततम् उत्सवा यस्मिन् तत् [सततोत्सवम्, इति] इत्येतत्, [रभसेन] त्वरया, [विस्मृतमभूत्]। अन्यथा कथं कृतकरणोपदेशः? इति भावः॥ ६७ ॥

हरिराकुमारमखिलाभिधानवित्
स्वजनस्य वार्त्तमयमन्वयुङ्क्त च ।
महतीमपि श्रियमवाप्य विस्मयः
सुजनो न विस्मरति जातु किञ्चन ॥ ६८ ॥
मर्त्यलोकदुरवापमवाप्तरसोदयं
नूतनत्वमतिरिक्ततयाऽनुपदं दधत् ।

---

हरिरिति।—[ च ] किञ्चेति चार्थः। अखिलानि अभिधानानि नामानि, वेत्तीति [ अखिलाभिधानवित् ] सकलनामप्रपञ्चाभिज्ञः। 'नामरूपे व्याकरवाणि' इति श्रुतेरिति भावः। 'आख्याऽऽह्वे अभिधानञ्च नामधेयञ्च नाम च' इत्यमरः। [ अयं, हरिः ] कृष्णः ; कुमारमारभ्येति [ आकुमारम् ]। "आङ्मर्य्यादाऽभिविध्योः" ( २।१।१३ पा० ) इत्यभिधानादव्ययीभावः। [ स्वजनस्य ] बन्धुजनस्य। 'बन्धुस्वस्वजनाः समाः' इत्यमरः। [ वार्त्तम् ] अनामयम्, आरोग्यमित्यर्थः। 'वार्त्तं फल्ग्वन्यरोगे च' इत्यमरः। 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्' इति मनुस्मरणात्। [ अन्वयुङ्क्त ] अपृच्छत्। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। युजेः कर्त्तरि लङ्। तथा हि, [ महतीं, श्रियं ] सम्पदम्, [ अवाप्यापि, विस्मयः ] निरहङ्कारः, [ सुजनः ], अत एव [ जातु ] कदाचिदपि, [ किञ्चन ] किमपि, [ न विस्मरति ]। सुजनः सम्पन्नोऽप्यहङ्कारं न करोतीति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६८ ॥

मर्त्येति।—[ उभौ, श्रीपतिः ] कृष्णः, [ असाववनेः पतिः] धर्मसुतः, [ च परस्परं, मर्त्यलोकदुरवापं ] मर्त्यलोकैः मनुष्यलोकैः, दुरवापं दुर्लभम् [ अवाप्तरसोदयं ] प्राप्तरसोत्कर्षं, स्वादूभवदित्यर्थः। [ अतिरिक्ततया अतिस्निग्धतया, [ अनुपदम् ] अनुक्षणं, प्रतिवाक्यञ्च, [ नूतनत्वम् ] अ...

श्रीपतिः पतिरसाववनेश्च परस्परं
सङ्कथाऽमृतमनेकमसिस्वदतामुभौ ॥ ६९ ॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
श्रीशब्दालङ्कृतसर्गान्ते श्रीकृष्णसमागमो
नाम त्रयोदशः सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः।

तं जगाद गिरमुद्गिरन्निव
स्नेहमाहितविकासया दृशा।

---

वंतां, [दधत्, अनेकं] बहुलं, [सङ्कथाऽमृतम्] सङ्कथा सम्भाषणं, चेदिराजजरासन्धादिकार्य्यचिन्तारूपमिति यावत्, तदेवामृतं तत्, [असिस्वदतां] स्वादितवन्तौ। 'आकरः स्वपरभूरिकथानां प्रायशो हि सुहृदोः सहवासः' इति भावः। स्वदतेर्णौ चङ्युपधायाः ह्रस्वः। सङ्कथाऽमृतमिति रूपकालङ्कारः स्वादनलिङ्गात् ॥ ६९ ॥

...ति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां ...काव्यव्याख्यायां सर्वङ्कषाऽऽख्यायां त्रयोदशः सर्गः ॥१३॥

---

...–वदतीति वदः। पचाद्यच्। कुत्सितस्य वदः कद्वदः ...ादी तु कद्वदः' इत्यमरः। "रथवदयोश्च" (६।३।१०२ ...देशः। स न भवतीति [अकद्वदः] साधुवादी, [नृपः] ...] यज्ञानुष्ठाने, [मनः, समादधत्] सम्यगादधत्,

यज्ञकर्मणि मनः समादधद्-
वाग्विदां वरमकद्वदो नृपः ॥ १ ॥
लज्जते न गदितः प्रियं परो
वक्तुरेव भवति त्रपाऽधिका ।
व्रीड़मेति न तव प्रियं वदन्
श्रीमताऽत्रभवतैव भूयते ॥ २ ॥

---

तदेव हृदि निधायेत्यर्थः। [आहितविकासया] कृतप्रसादया, [दृशा] दृष्ट्या, [स्नेहम्, उद्गिरन्] उद्वमन्, [इव] इत्युत्प्रेक्षा। दृष्टिविकासात् प्रकटितस्नेहः सन्नित्यर्थः। [वाग्विदां] वाचो विन्दति, वक्तुं विविक्तञ्च जानन्तीति वाग्विदः वाक्यकोविदाः। "सत्सूद्विष—" (३।२।६१ पा०) इत्यादिना क्विप्। तेषां, [वरं] श्रेष्ठं, [तं] हरिं, [गिरं जगाद]। ब्रूतेरर्थग्रहणात् "दुह्याच्—" (कारि०) इत्यादिना गदेर्द्विकर्मकत्वम्। अत्रोत्प्रेक्षावृत्त्यनुप्रासयोः संसृष्टिः। अस्मिन् सर्गे रथोद्धता वृत्तम्,— 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥ १ ॥

गिरं जगादेत्युक्तं, तामेव गिरं दशभिः प्रपञ्चयति, लज्जत इत्यादिभिः।—[परः] अन्यः कश्चित् पुमान्, [प्रियं गदितः] प्रियवाक्यमुक्तः सन्नित्यर्थः। गदेर्दुहाऽऽदित्वादप्रधाने कर्मणि क्तः। 'अप्रधा[ने] दुहादीनाम्' इति वचनात्। [न लज्जते] तस्योत्सुकत्वादि[...] किन्तु [वक्तुः] स्तोतुः, [एवाधिका त्रपा भवति]; भयाऽऽ[...] वाचकत्वादिति भावः। प्रकृते तु नैवमित्याह।—[तव [...] त्वां स्तुवन्नित्यर्थः। [व्रीड़ं न एति] अनन्तगुणाऽऽधारे[...] प्रियस्य अमिथ्यात्वादिति भावः; किन्तु स्तवने[...] पूज्येन, [एव श्रीमता भूयते], प्रत्युत त्वमेवात्र जि[...] मनुत्सुकत्वादिति भावः। 'पूज्यस्तत्रभवान्' इ[...]

तोषमेति वितथैः स्तवैः पर-
स्ते च तस्य सुलभाः शरीरिभिः।
अस्ति न स्तुति [illegible]ऽन्टतं तव
स्तोत्रयोग्य! न च तेन तुष्यसि ॥ ३ ॥

बह्वपि प्रियमयं तव ब्रुवन्
न व्रजत्यनृतवादितां जनः।
सम्भवन्ति यददोषदूषिते
सार्व! सर्वगुणसम्पदस्त्वयि ॥ ४ ॥

---

भ्योऽपि—" (५।३।१४ पा०) इति सार्वविभक्तिके तल्प्रत्यये सुप्सुपा इति समासः ॥ २ ॥

तोषमिति।—[परः] त्वदन्यः, [वितथैः] असत्यभूतैः, [स्तवैः] स्तोत्रैः। 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः। [तोषम्] उत्सुकताम्, [एति, तस्य] परस्य [ते च] मिथ्यास्तवाः, [शरीरिभिः] प्राणिभिः, [सुलभाः] असम्बद्धप्रलापानां निरर्गलत्वादिति भावः। त्वयि तु नैवमित्याह, अस्तीति।—हे [स्तोत्रयोग्य!] गुणाऽऽकरादिति भावः। अत एव [तव] सम्बन्धि, [स्तुतिवचोऽन्टतं, नास्ति] न भवति, [तेन] स्तुतिवचसा, [न तुष्यसि] न प्रसीदसि। [च]; गम्भीरत्वादिति भावः। अत्र श्लोकद्वये पुरुषान्तरादुपमानभूतादाधिक्यकथनाद्व्यतिरेकालङ्कारः ॥ ३ ॥

बह्वपीति।—[अयं जनः] स्वयमित्यर्थः परामृश्यते। [बह्वपि तव प्रियं, ब्रुवन्] सन्, [अनृतवादितां] मिथ्यावादित्वं, [न व्रजति] न गच्छति। [यत्] यस्मात्, हे [सार्व!] सर्वहितत्वात्सार्वः; तत्सम्बोधने। "सर्वपुरुषाभ्यां णढञौ" (५।१।१० पा०) इति णप्रत्ययः। दोषदूषितो न भवतीति [अदोषदूषिते] सर्वागुणवर्जिते, [त्वयि

सा विभूतिरनुभावसम्पदां
भूयसी तव यदायताऽऽयति ।
एतदूढ़गुरुभार ! ..
वर्षमद्य मम वर्त्तते वशे ॥ ५ ॥

सप्ततन्तुमधिगन्तुमिच्छतः
कुर्वनुग्रहमनुज्ञया मम ।
मूलतामुपगते प्रभो ! त्वयि
प्रापि धर्ममयवृक्षता मया ॥ ६ ॥

---

सर्वगुणसम्पदः सम्भवन्ति ]; अनारोपितगुणवादो भूयानपि न विपर्य्येतीति भावः। अत्रोत्तरवाक्यार्थेन पूर्ववाक्यार्थसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ४ ॥

सेति।—हे [ ऊढ़गुरुभार ! ] विश्वम्भरत्वादिति भावः। [एतत्], भरतस्य राज्ञ इदं [ भारतं ] भारतनामाऽऽख्यं, [ वर्षम् ]। 'वर्षोऽस्त्री भारताऽऽदौ च' इति हैमः। 'लोकोऽयं भारतं वर्षम्' इत्यमरः। [अद्य] इदानीम्, [आयताऽऽयति] बहुतरकालं स्थिरं यथा तथेत्यर्थः। 'उत्तरः काल आयतिः' इत्यमरः। [ मम, वशे ] आयत्ततायाम्। 'वश आयत्ततायाञ्च' इति विश्वः। [ वर्त्तते ] इति [ यत्, सा ] मद्वशवर्त्तनं, विधेयप्राधान्यात् स्त्रीलिङ्गता। [ तव, अनुभावसम्पदां ] सामर्थ्यातिशयानां, [ भूयसी ] महती, [ विभूतिः ] महिमा, कार्य्यमिति यावत्। त्वत्प्रसादलब्धमिदमैश्वर्य्यमित्यर्थः। अत्र निजैश्वर्य्यस्य भगवदनुभावसम्पदं विना सम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ५ ॥

तदेवं स्तुत्वा हरिमभिमुखीकृत्य कृत्यांशमावेदयति, सप्तेति।—सप्त तन्तवः संख्या यस्य तं [ सप्ततन्तुं ] क्रतुम्। "सप्ततन्तुर्मखः क्रतुः" इत्यमरः। [ अधिगन्तुं ] प्राप्तुम्, [ इच्छतः मम, अनुज्ञया ] अनुज्ञा-

सम्भृतोपकरणेन निर्मलां
कर्त्तुमिष्टिमभिवाञ्छता मया।
त्वं समीरण इव प्रतीक्षितः
कर्षकेण बलजान् पुपूषता ॥ ७ ॥
वीतविघ्नमनघेन भाविता
सन्निधेस्तव मखेन मेऽधुना।

---

दानेन, [ अनुग्रहं ] प्रसादं, [ कुरु ], साहाय्यं कुर्वित्यर्थः। स्वतः समर्थस्य किं मदनुग्रहेणेत्याह।—हे [ प्रभो ! त्वयि, मूलतां ] मुख्यकारणताम् अङ्घ्रित्वञ्च, [ उपगते ] सति। [ मया, धर्म्ममयवृक्षता ] धर्मात्मकवृक्षता, [ प्रापि ] प्राप्ता। प्राप्नोतेः कर्म्मणि लुङ्। प्रागपि त्वदनुग्रहादेव धर्म्ममर्जयन् धर्म्मराजोऽहमस्मीति भावः। अत्र नृपस्य धर्म्मवृक्षत्वेन हरेस्तन्मूलत्वेन रूपणात् सावयवरूपकम्; तेन त्वदनुग्रहः सर्वथा प्रार्थनीयो मया धर्मार्थिनेति तात्पर्य्यं व्यज्यते ॥ ६ ॥

सम्भृतेति।—[ निर्मलां ] निर्दोषाम्, [इष्टिं] यागम्। यजेः स्त्रियां क्तिन्, "वचिस्वपि—" (६।१।१५ पा०) इत्यादिना सम्प्रसारणम्। [ कर्त्तुमभिवाञ्छता ] अत एव [ सम्भृतोपकरणेन ] सम्पादितसाधनेन, [ मया, बलजान् ] धान्यराशीन्। 'बलजो धान्यराशिः स्यात्' इति वैजयन्ती। [पुपूषता] पवितुं साधयितुं, निस्तुषीकर्त्तुमित्यर्थः, इच्छता। पुनातेः सन्नन्ताल्लटः शत्रादेशः, "सनि ग्रहगुहोश्च" (७।२।१२ पा०) इति चकारादिटः प्रतिषेधः। [ कर्षकेण ] कृषीवलेन, [ समीरणः ] वायुः, [इव त्वं प्रतीक्षितः]। प्रवाते शूर्पादिना धान्यस्योत्क्षेपः पवनम्। तद्वातं विनेव त्वां विना समाहृतसम्भारेणापि मया यागो दुष्कर इति भावः ॥ ७ ॥

वीतविघ्नमिति।—[ अधुना तव, सन्निधेः ] हेतोः, [ मे, मखेन ] क्रतुना कर्त्रा। [ वीतविघ्नम् ] अविघ्नम्, [ अनघेन ] निर्दोषेण,

को विहन्तुमलमास्थितोदये
वासरश्रियमशीतदीधितौ ? ॥ ८ ॥
स्वापतेयमधिगम्य धर्मतः
पर्य्यपालयमवीवृधञ्च यत् ।
तीर्थगामि करवै विधानत-
स्तज्जुषस्व जुहवानि चानले ॥ ९ ॥

---

[ भाविता ] भविष्यत इत्यर्थः । भावे लुट्, "स्यसिच्सीयुट्—" ( ६।४।६२ पा० ) इत्यादिना लुटि चिण्वद्भावात् वृद्धिः । तथा हि,— [अशीतदीधितौ] उष्णांशौ, [आस्थितोदये] प्राप्तोदये सति, [ कः, वासर-श्रियं ] दिनशोभां, [ विहन्तुम्, अलम् ? ] शक्तः ? न कोऽपीत्यर्थः । अत्र हरिमरीचिमालिनोर्वाक्यभेदात् विम्बप्रतिविम्बतया सन्निहित-द्योतितया समानधर्म्मतया निर्दोषो दृष्टान्तालङ्कारः।—'यत्र वाक्य-द्वये विम्बप्रतिविम्बतयोच्यते । सामान्यधर्म्मवाक्योक्तिः स दृष्टान्तो निग-द्यते' ॥ इति लक्षणात् ॥ ८ ॥

स्वापतेयमिति ।—[ यत् ], स्वपतौ स्वामिनि साधु [ स्वापतेयं ] वित्तम् । "पथ्यतिथिवसतिस्वपतेर्ढञ्" ( ४।४।१०४ पा० ) इति ढञ्-प्रत्ययः । 'द्रव्यं वित्तं स्वापतेयम्' इत्यमरः । [धर्मतः] "क्षत्रियस्य विजि-तम्" इति शास्त्रोक्तप्रकारादित्यर्थः । [ अधिगम्य ] लब्ध्वा । यत्नेन [ पर्य्यपालयं ] पालितवान्, [ अवीवृधं ] वृद्धिं, [ च ] प्रापितवान् । तत् [तीर्थगामि] विप्राधीनं, [विधानतः, करवै] करिष्यामि । 'पालितं वर्द्धयेन्नित्यं वृद्धं पात्रेषु निर्वपेत्' इति स्मरणात्; तच्च पात्रं त्वमेवे-त्याह ।—[तत्] सर्वं, [ जुषस्व ] सेवस्व, सदैव भुङ्क्ष्वेत्यर्थः । 'जुषी प्रीतिसेवनयोः' इति धातोर्लोट् । [ अनले, जुहवानि च ] जुहुयाम् । तन्मुखेनापि तवैव भोक्तृत्वादिति भावः । जुहोतेः सम्प्रश्ने लोटि मेर्निरा-देशः ॥ ९ ॥

पूर्वमङ्ग ! जुहुधि त्वमेव वा
स्नातवत्यवभृथे ततस्त्वयि ।
सोमपायिनि भविष्यते मया
वाञ्छितोत्तमवितानयाजिना ॥ १० ॥

किं विधेयमनया विधीयतां
त्वत्प्रसादजितयाऽर्थसम्पदा ।
शाधि शासक ! जगत्त्रयस्य मा-
माश्रवोऽस्मि भवतः सहानुजः ॥ ११ ॥

---

पूर्वमिति ।—[वा] इति पक्षान्तरे, अथवेत्यर्थः । [अङ्ग !] हे कृष्ण ! 'अथ सम्बोधनार्थकाः । स्युः प्याट्पाडङ्ग हे है भोः' इत्यमरः । [पूर्वं त्वमेव, जुहुधि] यजस्वेत्यर्थः । "हुझल्भ्यो हेर्धिः" (६।४।१०१ पा०) इति हेर्धिरादेशः । [सोमपायिनि त्वयि, अवभृथे] यज्ञे । 'दीक्षाऽन्तोऽवभृथो यज्ञे' इत्यमरः । [स्नातवति] सति, [ततः] अनन्तरं, [मया, वाञ्छितोत्तमवितानयाजिना] वाञ्छितः उत्तमो वितानः राजसूयाऽऽख्यः । 'क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके' इत्यमरः, तेन तथा याजिना, [भविष्यते]। भावे लट् । त्वयि इष्टवति पश्चादहं यक्ष्ये इत्यर्थः । अत्र श्लोकद्वयेन हरेर्यागासम्बन्धे तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ १० ॥

किमिति ।—अथवा, [त्वत्प्रसादजितया] त्वत्प्रसादेन त्वदनुग्रहेण, जितया जयलब्धया, [अनया, अर्थसम्पदा] धनसम्पदा, [किं विधेयं] किमनुष्ठेयम् ? [विधीयतां] त्वयैव क्रियताम् । अहन्तु अस्वतन्त्र इत्याह,— हे [जगत्त्रयस्य शासक !] न तु ममैवेति भावः । [मां, शाधि] शिक्षयेत्यर्थः । शासेर्लोटि "हुझल्भ्यो हेर्धिः" (६।४।१०१ पा०) इति धिरादेशः "झलो झलि" (८।२।२६ पा०) इति सकारलोपः । [सहानुजः] सानुजः सन् । "वोपसर्जनस्य" (६।३।८२ पा०) इति

तं वदन्तमिति विष्टरश्रवाः
श्रावयन्नथ समस्तभूभृतः ।
व्याजहार दशनांशुमण्डल-
व्याजहारशबलं दधद् वपुः ॥ १२ ॥

सादिताखिलनृपं महन्महः
सम्प्रति स्वनयसम्पदैव ते ।
किं परस्य स गुणः समश्नुते
पथ्यवृत्तिरपि यदरोगिताम् ? ॥ १३ ॥

---

सहशब्दस्य सभावविकल्पः । [ भवतः ] तव, [ आश्रवः ] विधेयः, [ अस्मि ] । 'विधेयो विनयग्राही वचनेस्थित आश्रवः' इत्यमरः । अत्रानाश्रवस्याऽऽश्रवत्वसम्बन्धोक्तेरतिशयोक्तिरिति । दशश्लोक्यामाचार्य्यमतेऽतिप्रियतराऽऽख्यानात् प्रेयोऽलङ्कारः ;—'प्रेयः प्रियतराऽऽख्यानम्' इति लक्षणात् । आधुनिकास्तु भावनिवन्धने प्रेयोऽलङ्कार इति लक्षयन्ति । स चोन्नीतस्तत्र तत्रोन्नेष्यते च ॥ ११ ॥

तमिति ।—[ अथ ] अनन्तरं, विष्टराविव श्रवसी यस्य सः [ विष्टरश्रवाः ] । 'विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः' इत्यमरः । [ इति ] एतादृशं, [ तं वदन्तं ] नृपं, [ समस्तभूभृतः ] सर्वान् नृपान्, [श्रावयन्, दशनांशुमण्डलव्याजहारशबलं] दशनांशुमण्डलमिति व्याजोऽपदेशो यस्य तेन, हारेण मुक्ताहारेण, शबलं शारं, [ वपुर्दधत्, व्याजहार ] व्याहृतवान् । अत्र दशनांशुमण्डलस्य व्याजशब्देनासत्यत्वप्रतिपादनात् अपह्नवभेदः ॥ १२ ॥

यदुक्तं 'सा विभूतिः' इत्यादि, तत्रोत्तरमाह, सादितेति ।—[सम्प्रति, ते ] तव, [ महत्, महः ] तेजः, [स्वनयसम्पदैव ] निजनीतिमहिम्नैव, [ सादिताखिलनृपं ] विजितसमस्तराजकम् ; न तु मदनुभावादिति

तत् सुराज्ञि भवति स्थिते पुरः
कः क्रतुं यजतु राजलक्षणम् ? ।
उद्धृतौ भवति कस्य वा भुवः
श्रीवराहमपहाय योग्यता ? ॥ १४ ॥
शासनेऽपि गुरुणि व्यवस्थितं
कृत्यवस्तुषु नियुङ्क्ष्व कामतः ।

---

भावः । तथा हि, [ पथ्यवृत्तिः ] पथ्या हिता, वृत्तिरन्नपानादिक्रिया यस्य सः, [ अपि, अरोगिताम् ] आरोग्यं, [ समश्नुते यदि ] प्राप्नोतीति चेत्, [ सः ] तदारोग्यमित्यर्थः । विधेयप्राधान्यात् पुंलिङ्गता । [परस्य] भिषजः, [ गुणः किम् ? ] नेत्यर्थः । अपथ्यवृत्तेरारोग्यमौषधसाध्यत्वाद्भिषजो गुणोऽस्तु, हितमेध्याग्निनो न तथेत्यर्थः । स्वयमसमर्थः पराधीनसिद्धिरित्युपचार इति भावः । दृष्टान्तालङ्कारः सुगमः ॥१३॥

यदुक्तं 'पूर्वमङ्ग ! जुहुधि त्वमेव' इति, तत्राऽऽह, तदिति ।—[तत्] तस्मात्, उक्तरीत्या तवैवाधिकारित्वादित्यर्थः । [ सुराज्ञि ] विजयप्रजारक्षणाऽऽदिगुणयोगात् शुद्धक्षत्रिये । "न पूजनात्" (५।४।६९ पा०) इति समासान्तप्रतिषेधः । [ भवति ] त्वयि, [ पुरः, स्थिते ] सति, [ कः ] त्वदन्यः क इत्यर्थः । [ राजलक्षणं ] राज्ञः क्षत्रियस्य, लक्षणं चिह्नमसाधारणं यस्य तं, [ क्रतुं ] राजसूयमित्यर्थः [ यजतु ? ] न कोऽपीत्यर्थः । 'राजा राजसूयेन यजेत' इति राजाधिकारताश्रवणाद्राजा त्वमेवेति भावः । सम्भावनायां लोट् । अत्र दृष्टान्तमाह ।—[ भुव उद्धृतौ ] भुव उद्धरणे, [ श्रीवराहम् ] आदिवराहम्, [ अपहाय कस्य, वा ] पुनः, [ योग्यता ] सामर्थ्यं, [ भवति ? ] न कस्यापीत्यर्थः । योगाय प्रभवतीति योग्यः । "योगाच्च" ( ५।१।१०२ पा० ) इति यत्प्रत्ययः । अत्र राजवराहयोः वाक्यभेदेन प्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः ॥ १४ ॥

त्वत्प्रयोजनधनं धनञ्जया-
दन्य एष इति माञ्च माऽवगाः ॥ १५ ॥
यस्तवेह सवने न भूपतिः
कर्म कर्मकरवत् करिष्यति ।
तस्य नेष्यति वपुः कबन्धतां
बन्धुरेष जगतां सुदर्शनः ॥ १६ ॥

---

यच्चोक्तं 'सम्भृतोपकरणेन' इत्यादिना, तत्राऽऽह, शासन इति ।—[ गुरुणि ] अतिदुष्करे, [ अपि, शासने ] नियोगे, [व्यवस्थितं] त्वदाज्ञाकरमित्यर्थः । [ मां, कृत्यवस्तुषु ] कर्त्तव्यार्थेषु, [ कामतः ] यथेच्छं, [ नियुङ्क्ष्व ] प्रेषय । अनुचितमेतन्नियन्तरीति सङ्कोचं वारयन्नाह, त्वदिति ।—[ त्वत्प्रयोजनधनं ] त्वत्प्रयोजनमेव धनं यस्य तं, त्वदर्थैकनिष्ठमित्यर्थः । मां [धनञ्जयात्] धनानि जयतीति धनञ्जयोऽर्ज्जुनः । "संज्ञायां भृतॄवृजिधारिसहितपिदमः" ( ३।२।४६ पा० ) इति खच्प्रत्यये सुमागमः । तस्मात्, [ एषोऽन्यः ] कृष्णः, [इति] मां [ माऽवगाः ] माऽवेहि [ च ] । नियोगसमुच्चयार्थश्चकारः । अवपूर्वादिणो "माङि लुङ्" (३।३।१७५ पा०) इति लुङ् "इणो गा लुङि" (२।४।४५ पा०) इति गाऽऽदेशः, "न माङ्योगे" ( ६।४।७४ पा० ) इत्यट्प्रतिषेधः । उभयोस्तत्कार्य्यनिबन्धनान्नारायणात्मत्वाच्च नाऽऽवयोर्भेदप्रतिपत्तिः कार्येत्यर्थः ; तथा च, तद्वदेव नियोगेऽप्यसङ्कोच उचित इति भावः । अत एवानयोर्वाक्यार्थयोर्हेतुहेतुमद्भावाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ; स च कृष्णयोर्भेदाभेदरूपातिशयोक्तिमूल इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ १५ ॥

यच्चोक्तं 'वीतविघ्नम्' इत्यादि, तत्राभयदानं प्रतिजानीते, य इति ।—[ यः ] भूपतिः, [ तव, इह ] अस्मिन्, [ सवने ] यज्ञे । 'सवनं जने स्नाने सोमे निर्दलनेऽपि च' इति विश्वः । [ कर्मकरवत् ]

इत्युदीरितगिरं नृपस्त्वयि
श्रेयसि स्थितवति स्थिरा मम ।
सर्वसम्पदिति शौरिमुक्तवा-
नुद्वहन्मुदमुदस्थित क्रतौ ॥ १७ ॥
आननेन शशिनः कलां दध-
द्दर्शनक्षयितकामविग्रहः ।

Beginning of the description of ...

त्यवत्, [ कर्म न करिष्यति, तस्य ] भूपतेः, [ वपुः, जगतां बन्धुः ],
मङ्गलत्वादिति भावः, [ एषः, सुदर्शनः ] मच्चक्रम् । 'शङ्खो लक्ष्मीपतेः
ाञ्चजन्यश्चक्रं सुदर्शनः' इत्यमरः । [ कबन्धतां ] शिरःशून्यतां, [नेष्यति]
ापयिष्यति, छेत्स्यामि चक्रेणास्य शिर इत्यर्थः । 'कबन्धं सलिले
ोक्रमपमूर्द्धकलेवरे' इति विश्वः । अतो विघ्नशङ्का न कार्य्येति भावः ।
ल सुदर्शने बन्धुत्वरूपणाद्रूपकालङ्कारः ॥ १६ ॥

इतीति ।—[इति] इत्थम्, [उदीरितगिरम्] उपन्यस्तवाचं, [ शौरिं,
पः ] युधिष्ठिरः, [त्वयि, श्रेयसि] अभ्युदये विषये, [स्थितवति ], त्व
मङ्गरे सतीत्यर्थः, [ मम सर्वसम्पत् स्थिरेत्युक्तवान् । मुदम् उद्वहन्
हायसम्पत्त्या सन्तुष्यन् सन्, [ क्रतावुदस्थित ] क्रतुं कर्त्तुम् उद्युक्त-
ानित्यर्थः । तिष्ठतेर्लुङि "उदोऽनूर्द्ध्वकर्मणि" (१।३।२४ पा०) इत्यादिना
त्मनेपदम् ; "स्थाघ्वोरिच्च" ( १।२।१७ पा० ) इति सिचः कित्त्वादि
ारः, "ह्रस्वादङ्गात्" (८।२।२७ पा०) इति सकारलोपः ॥ १७ ॥

अथ पञ्चविंशता श्लोकैरनेकधा क्रतुं वर्णयति, आननेनेत्यादि ।—
आननेन शशिनः ] कलामिव [ कलां ] कान्तिं, [दधत्] । निदर्शना
ङ्कारः । शशिमुख इत्यर्थः । अन्यत्र,—शशिखण्डधरेत्यर्थः । [ दर्शन
यितकामविग्रहः ] दर्शनेन क्षयितौ नाशितौ, कामविग्रहौ कामक्रोधौ
न सः । अन्यत्र,—दृष्टिदग्धस्मरशरीरा, [विमलैर्जलैः, आप्लुतः ] स्नातः ।
ाबां स्नातीति' दीक्षायां स्नानविधानादिति भावः । अन्यत्र,—

आप्लुतः स विमलैर्जलैरभू-
दष्टमूर्त्तिधरमूर्त्तिरष्टमो ॥ १८ ॥
तस्य साङ्ख्यपुरुषेण तुल्यतां
बिभ्रतः स्वयमकुर्वतः क्रियाः ।
कर्तृता तदुपलम्भतोऽभवद्-
वृत्तिभाजि करणे यथर्त्विजि ॥ १९ ॥

---

गङ्गोदकसिक्ता गङ्गाधरेत्यर्थः । [ सः ] नृपः । अष्टानां पूरणी
[अष्टमो] "तस्य पूरणे डट्" ( ५।२।४८ पा० ) इति डट् प्रत्ययः
"नान्तादसङ्ख्यादेर्मट्" (५।२।४९ पा०) इति मडागमः, 'टिड्ढाणञ्—'
(४।१।१५ पा०) इत्यादिना ङीप् । अष्टानां मूर्त्तीनां समाहारोऽष्टमूर्त्ति ।
"तद्धितार्थो—" (२।१।५१ पा०) इत्यादिना समाहारे द्विगुरेकवचन
नपुंसकत्वञ्च । तस्य धरो धारयिता, अष्टमूर्त्तिधरः शिवः, तस्य मूर्त्ति
[ अष्टमूर्त्तिधरमूर्त्तिरभूत् ] सोमदीक्षितोऽभूदित्यर्थः । तस्याप्यागमे शिव
र्त्तित्वप्रसिद्धेः । अत्र प्रकृताप्रकृतयोः नृपशिवयोः शिवशब्दमात्रसाध
र्याच्छ्लेषालङ्कारः ॥ १८ ॥

तस्येति ।—[ क्रियाः ] कर्माणि होमादीनि ; अन्यत्र,—पुण्य
पापकर्माणि । [स्वयम्, अकुर्वतः] अननुतिष्ठतः ; अन्यत्र,—उदासीनस्य
त एव [ साङ्ख्यपुरुषेण ] साङ्ख्यशास्त्रोक्तेनाऽऽत्मना, [ तुल्यत
बिभ्रतः, तस्य ] राज्ञः, [ करणे ] अन्तःकरणे, [ यथा ], बुद्धाविवेत्यर्थः
ऋतौ यजतीति ऋत्विक् याजकः । 'ऋत्विजो याजकाश्च ते' इत्यमरः
ऋत्विग्दधृग्—" (३।२।५९ पा०) इति निपातः । तस्मिन् [ ऋत्विजि
वृत्तिभाजि ] होमादिव्यापारं कुर्वतीत्यर्थः ; अन्यत्र,—पुण्यपापकारिणि
ति, [तदुपलम्भतः] तस्य ऋत्विग्वृत्तेरुपलम्भात् ममेदमित्यनुसन्धाना
एव, [ कर्तृता ] क्रियाऽनुष्ठातृत्वम्, [ अभवत् ] । तथैव विधिसामर्थ्या
दिति भावः ; अत एवाह भगवान् जैमिनिः,—'अन्या वा स्या

शब्दितामनपशब्दमुच्चकै-
र्वाक्यलक्षणविदोऽनुवाक्यया।
याज्यया यजनकर्मिणोऽत्यजन्
द्रव्यजातमपदिश्य देवताम् ॥ २० ॥

परिक्रिया स्थानात् सत्यप्यात्मनेपदे' इति। अन्यत्र,—तदुपलम्भतः तस्या बुद्धिवृत्तेरुपलम्भात् साक्षित्वेनानुसन्धानादेव कर्तृत्वमभवत्; स्वयं क्रियाभोगरहितोऽपि आत्मा बुद्धेः सन्निधानाद्रक्तस्फटिकवत्तथा भवतीत्यर्थः। उपमाऽलङ्कारः ॥ १९ ॥

शब्दितामिति।—[ वाक्यलक्षणविदः ] मीमांसाशास्त्रज्ञाः, [ यजनकर्मिणः ] यजनव्यापारवन्तः ऋत्विजः। व्रीह्यादित्वादिनिप्रत्ययः। अनूच्यत इति अनुवाक्या तया [ अनुवाक्यया ]। 'अनूच्यया याज्यया जुहोति' इति श्रुतेः। सा च प्रशास्तृपाठ्या, तदभावे होतृपाठ्या देवताह्वानी ऋक्। वचेः "ऋहलोर्ण्यत्" ( ३।१।१२४ पा० ) "चजोः कु घिण्ण्यतोः" ( ७।३।५२ पा० ) इति कुत्वं, शब्दसंज्ञात्वात् "वचोऽशब्दसंज्ञायाम्" ( ७।३।६७ पा० ) इति न प्रतिषेधः। [ उच्चकैः अनपशब्दं ] यथा तथा, [ शब्दितां ] मन्त्रवर्णेनोच्चैः प्रकाशितामित्यर्थः। 'उच्चैः ऋचा क्रियते' इति विधानात्। 'शब्द संशब्दने' इति धातोश्चौरादिकात् कर्मणि क्तः। [ देवताम् ] इन्द्रादिकाम्, [ अपदिश्य, द्रव्यजातं ] पशुपुरोडाशादि हविःसमूहम्। इज्यतेऽनयेति याज्या, सा च होतृपाठ्या यागाङ्गसाधनमृक्। 'याज्यया जुहोति' इति श्रुतेः। पूर्ववत् "ऋहलोर्ण्यत्" (३।१।१२४ पा०) इति करणे ण्यत्, "यजयाचरुचप्रवचर्चश्च" (७।३।६६ पा०) इति कुत्वप्रतिषेधः। तया [याज्यया, अत्यजन्] अयजन्नित्यर्थः। 'देवतोद्देशेन द्रव्यत्यागो यागः' इति लक्षणात्। स च त्यागसामान्यतः 'आहवनीये जुहोति' इति तदाहवनीय इति सामान्यन्यायात् विधानादन्यत्रेति ध्येयम्। द्रव्यत्यागस्याध्वर्युमात्रकर्तृत्वेऽपि याज्यापुरोऽनुवाक्यद्वारा होतृप्रशास्त्रोरपि साहित्यादत्यजन्निति बहुत्वव्यपदेशः;

सप्तभेदकरकल्पितस्वरं
साम सामविदसङ्गमुज्जगौ ।
तत्र सूनृतगिरश्च सूरयः
पुण्यमृग्यजुषमध्यगीषत ॥ २१ ॥

बद्धदर्भमयकाञ्चिदामया
वीक्षितानि यजमानजायया ।

---

तथा च मैत्रावरुणेन पुरोऽनुवाक्यायामनूक्तायां तत्प्रकाशितदेवतोद्देशेनाध्वर्युर्होतृपठितयाज्यान्ते वषट्कारेण सोमादिकं हविरग्नावत्याक्षीदित्यर्थः। स्वभावोक्तिरलङ्कारः ॥ २० ॥

सप्तेति ।—[ तत्र ] क्रतौ। सामानि वेत्तीति [ सामविद् ] उद्गाता, [ सप्तभेदकरकल्पितस्वरं ] सप्तभेदं सप्तप्रकारं यथा तथा, करेण हस्तेन, कल्पिताः सम्पादिताः, स्वरा निषादादयः, यस्य तत्, करविन्यासभेदादिभिर्व्यञ्जितसप्तस्वरमित्यर्थः। 'निषादर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त' इत्यमरः। यद्वा,—स्वराः क्रुष्टादयः। 'क्रुष्टः प्रथमो द्वितीयो मन्द्रो नीचः' इत्यादयः। [ साम ] बृहद्रथन्तरादिकम्, [ असङ्गम् ] अस्खलितम्, [ उज्जगौ ] उदगायत्। [ च ] किञ्च, [ सूनृतगिरः ] प्रियसत्यवाचः। 'प्रियं सत्यञ्च सूनृतम्' इत्यमरः। [ सूरयः ] विद्वांसः होत्राध्वर्य्वादयः, [ पुण्यं ] श्रेयस्करम्। ऋचश्च यजूंषि च तत् [ ऋग्यजुषम् ] 'अग्निमीळे' इत्यादिकम्। द्वन्द्वैकवद्भावः। "अचतुर—" ( ५।४।७७ पा० ) इत्यादिना द्वन्द्वे समासान्तनिपातः। [ अध्यगीषत ]। इङो लुङि "विभाषा लुङ्लृङोः" ( २।४।५० पा० ) इति गाङादेशपक्षे "गाङ्कुटादि—" ( १।२।१ पा० ) इति कुटादित्वात् सिचः ङित्त्वे "घुमा—" ( ६।४।६६ पा० ) इत्यादिना ईत्वम्। अत्र सामसामेत्यादौ वृत्त्यनुप्रासभेदो द्रष्टव्यः ॥ २१ ॥

बद्धेति ।—[ बद्धदर्भमयकाञ्चिदामया ] बद्धं दर्भमयं दर्भविकारं,

शुष्मणि प्रणयनादिसंस्कृते
तैर्हवींषि जुहवाम्बभूविरे ॥ २२ ॥
नाञ्जसा निगदितुं विभक्तिभि-
र्व्यक्तिभिश्च निखिलाभिरागमे ।

काञ्चिदाम रशनागुणो यस्याः तस्याः । आग्नीध्रसन्नद्धया इत्यर्थः, "आशासाना सौमनसम्" इत्युत्तरेण "गार्हपत्यमूर्द्धज्ञुमासीनां पत्नीं सन्नह्य तिष्ठन्तीं वाचयतीत्येके, मौञ्जेन दाम्ना अन्यतरतः पाशेन योक्त्रेण च" इत्यापस्तम्बवचनात् । दामेति ।—"डाबुभाभ्यामन्यतरस्याम्" (४।१।१३ पा०) इति डाप्प्रत्ययः । [ यजमानजायया ] यजमानो यष्टा । "पूङ्यजोः शानन्" (३।२।१२८ पा०) इति यजेः शानन् प्रत्ययः । तस्य जायया पत्न्या, [ वीक्षितानि ] दृष्टानि, [ हवींषि ] आज्यादीनि । 'पत्न्यवेक्षते' इत्याज्यस्य पत्न्यवेक्षणसंस्कारविधानात् अर्थप्रधानत्वात् सर्वेषामाज्यादीनां प्राणभृन्न्यायेन वीक्षितत्वव्यपदेशः । [ प्रणयनादि-संस्कृते] प्रणयनं नाम गार्हपत्यादुद्धृत्य मन्त्रेणायतने सादनम् । आदि-शब्दात् परिस्तरणपरिधानसम्मार्गादिसंस्कारसङ्ग्रहः । तैः प्रणयनादिभिः संस्कृते आहितातिशये, [ शुष्मणि ] अग्नौ । 'वर्हिः शुष्मा कृष्णवर्त्मा' इत्यमरः । अत्रापि 'आहवनीये जुहोति' इति हूयमाने अध्वर्युः कर्त्ता । 'जुहूपात्रव्यापृतया स्रुवाहवनीयं प्रधानम्' इति न्यायवचनात् । [ तैः ] ऋत्विग्भिः, [ जुहवाम्बभूविरे ] । जुहोतेः कर्मणि लिट्, "भीह्री-भृहुवाम्—" (३।१।३९ पा०) इति विकल्पादाम्प्रत्ययः । अत्र विषयस्य योक्त्रस्यानुपादानेन विषयिणः काञ्चीगुणस्यैव तदभेदेन निर्देशाद्भेदे अभेदरूपातिशयोक्तेरनुप्रासेन सङ्करः ॥ २२ ॥

नेति ।—[ तत्र ] तस्मिन्, [ कर्मणि ] यज्ञकर्मणि । अन्यथाश्रुतस्य शब्दस्यान्यथालिङ्गवचनादिभेदेन विपरिणमनमूहः, तत्र कुशलाः [ ऊहकुशलाः ] । प्रयोग एषामस्तीति [प्रयोगिणः] प्रयोक्तारः ऋत्विजः, [ आगमे ] आम्नाये, [ निखिलाभिर्विभक्तिभिः ] प्रथमादिभिः सब-

**तत्र कर्मणि विपर्य्यणीनमन्**

**मन्त्रमूहकुशलाः प्रयोगिणः ॥ २३ ॥**

**संशयाय दधतोः सरूपतां**

**दूरभिन्नफलयोः क्रियां प्रति ।**

---

विभक्तिभिस्तिङ्विभक्तिभिश्च । विभक्तिग्रहणं वचनोपलक्षणम् । [ व्यक्तिभिः ] लिङ्गैः, [च] । अञ्जसा सुखेन, निगदितुं पठितुं, न भवन्त्यशक्यत्वादिति [ नाञ्जसा निगदितुम् ] । "अञ्जस उपसंख्यानम्" ( वा० ) इति अलुक्, नञर्थस्य नशब्दस्य सुप्सुपा इति समासः ; अथवा,—अञ्जसेति तृतीयान्तप्रतिरूपकमव्ययं तत्त्वार्थे । 'अञ्जसा तत्त्वतूर्णयोः' इति विश्वः । अञ्जसा तत्त्वत इत्यर्थः । अस्मिन्पक्षे नैकपद्यनियमः । तं [ मन्त्रं ] कर्माङ्गदेवतारूपवाक्यं, [ विपर्य्यणीनमन् ] विपरिणमयन्ति स्म, विपरिणमितवन्तः इत्यर्थः । विपरिपूर्वकात् ण्यन्तात् णम्धातोः लुङ्, सन्वद्भावे "सन्यतः" ( ७।४।७९ पा० ) इत्यभ्यासस्येत्वम्, "दीर्घो लघोः" ( ७।४।९४ पा० ) इति दीर्घः "उपसर्गादसमासेऽपि णोपदेशस्य" ( ८।४।१४ पा० ) इति णत्वम् । अत्र नाञ्जसेति पाठविशेषणगत्या मन्त्रविपरिणमनहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ २३ ॥

संशयायेति ।—[ संशयाय ] सन्देहोत्पादनाय, [ सरूपतां ] सादृश्यं, [दधतोः] उभयत्र रूपसाम्यादयं समासोऽयं वेति संशयं कुर्वतोरित्यर्थः । यथेन्द्रशत्रुरित्यत्रेन्द्रस्य शत्रुः शासयिता हन्तेति षष्ठीतत्पुरुषः, उतेन्द्रः शत्रुर्यस्येति बहुव्रीहिरिति सारूप्यसंशयः । तत्रानियमे दोषमाह ।—क्रिया प्रकृतं कर्म तां [क्रियां प्रति] तामुद्दिश्येत्यर्थः । दूरभिन्नम् अत्यन्तविलक्षणं फलं ययोः [ दूरभिन्नफलयोः ] तयोरर्थभेदात् कर्मणः फलभेदं प्रतिपादयतोरित्यर्थः । यथेन्द्रशत्रुरित्यत्रैव षष्ठीसमासस्येष्टत्वे वृत्रस्येन्द्रहन्तृत्वं, बहुव्रीहौ तु तस्येन्द्रेण बध्यत्वमिति फलभेद इति भावः । [ समासयोः ] एवंविधयोः प्रसक्तयोः सतोरित्यर्थः । भावलक्षणे सप्तमी ।

शब्दशासनविदः समासयो-
विंग्रहं व्यवसमुः स्वरेण ते ॥ २४ ॥
लोलहेतिरसनाशतप्रभा-
मण्डलेन लसता हसन्निव ।
प्राज्यमाज्यमसकृद्वषट्कृतं
निर्मलीमसमलीढ़ पावकः ॥ २५ ॥

---

[ शब्दशासनविदः ] शब्दशास्त्रज्ञाः । अन्येषामनधिकारादिति भावः । [ ते ] प्रकृता ऋत्विजः, [ स्वरेण ] तत्तत्समासविहितस्वरवशेन, [ विग्रहं ] वाक्येन समर्थाभिधानं, [ व्यवसमुः ] निश्चिक्युः । अस्मिन् स्वरेऽयं समासः, तत्रायं विग्रह इति अन्यतरपक्षावधारणं चक्रुः । यथेन्द्रशत्रु-रित्यत्रैव पूर्वपदे उदात्तत्वेन बहुव्रीहिस्वरेण बहुव्रीहिसमासनिश्चयः, इन्द्रः शत्रुर्यस्येति विग्रहावधारणमित्यर्थः । व्यवपूर्वस्य स्यतेर्लिटि "आदेच—" ( ६।१।४५ पा० ) इत्यात्वे द्विर्वचनादिकार्य्ये भेरुसादेशः । अत्र संशयजनकत्वफले भेदप्रतिपादकपदार्थयोर्विशेषणगत्या 'सन्दिग्धे न्यायः प्रवर्त्तते' इति न्यायेन विग्रहस्य व्यवसायहेतुकत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २४ ॥

लोलेति ।—[ लसता ] प्रकाशमानेन, [ लोलहेतिरसनाशतप्रभा-मण्डलेन ] लोलाश्चला, हेतयो ज्वाला एव, रसना रसज्ञा । 'वह्नेर्द्वयो-र्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्' इति, 'रसज्ञा रसना जिह्वा' इति चामरः । तासां शतानि तेषां प्रभामण्डलेन, [ हसन्निव ] इति रूपकसङ्कीर्णोत्प्रेक्षा । [ पावकः ] वह्निः, [ वषट्कृतं ] वषट्कारेण त्यक्तं, हुतमित्यर्थः । 'हुतं त्रिषु वषट्कृतम्' इत्यमरः । [ निर्मलीमसम् ] अमलिनं, शुद्धमित्यर्थः । 'मलीमसन्तु मलिनम्' इत्यमरः । "ज्योत्स्ना-तमिस्रा—" (५।२।११४ पा०) इत्यादिना मलशब्दात् मत्वर्थे ईमसच्-प्रत्ययान्तो निपातः । [ प्राज्यं ] प्रभूतम्, [ आज्यमसकृत्, अलीढ ]

तत्र मन्त्रपवितं हविः क्रता-
वश्नतो न वपुरेव केवलम् ।
वर्णसम्पदमतिस्फुटां दध-
न्नाम चोज्ज्वलमभूद्धविर्भुजः ॥ २६ ॥
स्पर्शमुष्णमुचितं दधच्छिखी
यद्ददाह हविरद्भुतं न तत् ।

---

आस्वादयत् । लिहेः स्वरितेत्त्वाल्लङि कृते "हो ढः" (८।२।३१ पा०) इति ढत्वम् । "झषस्तथोर्धोऽधः" (८।२।४० पा०) इति धत्वे ष्टुत्वे ढलोपदीर्घौ ॥ २५ ॥

तत्रेति ।—[ तत्र क्रतौ । मन्त्रपवितं ] मन्त्रैः उत्पवनादिमन्त्रैः, पवितं पवित्रितं, शोधितमित्यर्थः । "पूङश्च" (७।२।५१ पा०) इति विकल्पादिडागमः । [ हविः ] आज्यादिकम्, [ अश्नतः ] भुञ्जानस्य । अशेर्भोजनार्थाल्लटः शत्रादेशः । हवींषि भुंक्ते इति [ हविर्भुजः ] अग्नेः सम्बन्धि, [अतिस्फुटाम्] अतिविकसितां, [ वर्णसम्पदं ] रूपसमृद्धिं, [ दधत्, केवलम् ] एकम् । 'केवलं त्वेककृत्स्नयोः' इति शाश्वतः । [वपुरेव, उज्ज्वलम्] ओजिष्ठं, [नाभूत्], किन्तु अतिस्फुटाम् अतिव्यक्तां, वर्णसम्पदम् अक्षरसमुदायं, दधत् । 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे' इत्यमरः । [ नाम ] हविर्भुगिति नामधेयं, [ च ] उज्ज्वलं रूढम्, अभूत् । निरन्तरं हविर्भोजनाद्वपुः पुष्टिमाप । नाम चार्थवदासीदित्यर्थः । अत्र भोजनस्याश्नत इति विशेषणगत्या हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ २६ ॥

स्पर्शमिति ।—[ उचितं ] स्वाभाविकम्, [उष्णम्] उष्णाख्यं, [ स्पर्शं ] स्पर्शनेन्द्रियमात्रग्राह्यं गुणविशेषं, [ दधत् ] दधानः, [ शिखी ] शिखावानग्निः । व्रीह्यादित्वादिनिः । [ हविः ] आज्यादिकं, [ ददाह ]

गन्धतोऽपि हुतहव्यसम्भवात्
देहिनामदहदोघमंहसाम् ॥ २७ ॥
उन्नमन् सपदि धूम्रयन् दिशः
सान्द्रतां दधदधःकृताम्बुदः।
द्यामियाय दहनस्य केतनः
कीर्त्तयन्निव दिवौकसां प्रियम् ॥ २८ ॥

---

भस्मीचकार, इति [ यत्, तत् अद्भुतं न ], उष्णस्पर्शसहकृतस्याग्नेः पार्थिवद्रव्यदहनशक्तेः स्वाभाविकत्वादिति भावः। कुतः?—[ हुतहव्यसम्भवात् ] हुतहवनीयहविर्जन्यात्, [ गन्धतः ] गन्धात्, [ अपि ] सङ्क्रामिकगुणादपीत्यर्थः, [ देहिनां ] गन्धं जिघ्रतां प्राणिनामित्यर्थः, [ अंहसां ] पापानाम्, [ओघम्] अपीति भावः। [अदहत्] भस्मीकृतवान्, नाशितवानित्यर्थः। अदाह्यदहनं त्वाश्चर्य्यमिति भावः। अत्रोष्णस्पर्शधारणस्य शिखिविशेषणभावेनास्य हविर्दाहहेतुत्वात् पदार्थहेतुकं तावदेकं काव्यलिङ्गम्; उत्तरार्द्धे त्वंहसां भस्मीकरणाभावलक्षणदाहविरोधस्य नाशलक्षणया समाधानाद्विरोधाभासो लक्ष्यस्य वाच्याभेदाध्यवसायमूलातिशयोक्तिप्रतिभोत्थापितः, स एवादाह्यदाहकत्वरूपो वाक्यार्थभूतपूर्वोक्तपदार्थहेतुककाव्यलिङ्गसहकृतो हविर्दहनाद्भुतत्वहेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमन्यैः प्राधान्येन सङ्कीर्य्यते ॥ २७ ॥

उन्नमन्निति।—[सपदि] होमक्षणमेव, [ उन्नमन् ] उद्गच्छन्, [ दिशः, धूम्रयन् ] धूम्रवर्णाः कुर्वन्, [ सान्द्रतां ] नीरन्ध्रतां, [ दधत् ], अत एव [ अधःकृताम्बुदः ] शोभयाऽवधीरितमेघः, मेघोपरि गतश्च, [ दहनस्य ] अग्नेः, [ केतनः ] केतुः, धूम इत्यर्थः। द्यौरोको येषां तेषां [ दिवौकसां ] देवानाम्। पृषोदरादित्वात् साधुः। अथवा,—दिवमोको येषामिति विग्रहः। 'दिवं स्वर्गान्तरिक्षयोः' इति विश्वः। तेषां, [ प्रियम् ] इष्टं, [ कीर्त्तयन् ] कथयन्, [ इव ] कीर्त्तनहेतोरिव, कीर्त्तनार्थमिवेत्यर्थः;

निर्जिताखिलमहार्णवौषधि-
स्यन्दसारममृतं ववल्गिरे ।
नाकिनः कथमपि प्रतीक्षितुं
हूयमानमनले विषेहिरे ॥ २९ ॥
तत्र नित्यविहितोपहूतिषु
प्रोषितेषु पतिषु द्युयोषिताम् ।

---

अत एव फलोत्प्रेक्षा। कीर्त्तयन्निति "लक्षणहेत्वोः क्रियायाः" (३।२।१२६ पा०) इति हेत्वर्थे लटः शत्रादेशः। [ द्याम् ] अन्तरिक्षम्, [ इयाय ] प्राप। इणो लिट् ॥ २८॥

निर्जितेति।—नाकः स्वर्गः एषामस्तीति [ नाकिनः ] देवाः, अखिलानां महार्णवौषधीनां महार्णवमन्थनसमये उत्थितानां दिव्यौषधिलतानां, स्यन्दः मन्थनान्निःसृतो रसः, तस्य सारः सृष्टांशः, अमृतमिति यावत्, स निर्जितो येन तत् [ निर्जिताखिलमहार्णवौषधिस्यन्दसारम् ] अमृतादपि स्वाद्वित्यर्थः। [ अमृतं ] हविराख्यातम्। 'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते' इति मेदिनी। [ ववल्गिरे। अभ्यवजह्रुः। 'वल्ग भोजने' कर्त्तरि लिट्। 'वल्गं चाभ्यवहारं प्रत्यवसानञ्च जेमनम्। जग्धिः' इति हलायुधः। तस्यामृताधिक्यं व्यनक्ति।—[ अनले हूयमानं ] दीयमानममृतमिति भावः। [ प्रतीक्षितुं कथमपि, विषेहिरे] सोढ़वन्तः, होमविलम्बं कथञ्चिदसहन्तेत्यर्थः। तृष्णाऽऽतुरः प्रागेव जिघ्रतीति रसातिशयोक्तिः। अत्र हविषोऽमृतमित्यभेदोक्त्याऽभेदरूपातिशयोक्तिस्तद्विशेषणपदार्थस्य वल्गनहेतुत्वात् काव्यलिङ्गभेदः तया सङ्कीर्य्यते। "परिनिविभ्यः सेवसितसयसिवुसह—" (८।३।७० पा०) इत्यादिना सहेः षत्वम् ॥ २९॥

तत्रेति।—[ तत्र ] क्रतौ, [ नित्यविहितोपहूतिषु ] नित्यं विहितोपहूतिषु कृताह्वानेषु, [ पतिषु ] भर्तृषु इन्द्रादिषु, [ प्रोषितेषु ] प्रवासं

गुम्फिताः शिरसि वेणयोऽभवन्
न प्रफुल्लसुरपादपस्रजः ॥ ३० ॥
प्राशुराशु हवनीयमत्र यत्
तेन दीर्घममरत्वमध्यगुः । ग्रुगुः
उद्धतानधिकमेधितौजसो-
दानवांश्च विबुधा विजिग्यिरे ॥ ३१ ॥

गतेषु। वसेः कर्त्तरि क्तः। "वसतिक्षुधो—" (७।२।५२ पा०) इतीडागमः। [ द्युयोषितां ] स्वर्गस्त्रीणां इन्द्राण्यादीनां, [ शिरसि वेणयः ] जटा एव, [ गुम्फिताः ] ग्रथिताः, [ अभवन्। प्रफुल्लसुरपादपस्रजः ] प्रफुल्लाः विकसिताः, सुरपादपस्रजो मन्दारमालाः, [ न ] गुम्फिता अभवन्। अत्र सुरयोषितां वेण्यसम्बन्धेऽपि सम्बन्धोक्तेः स्रक्सम्बन्धेऽप्यसम्बन्धोक्तेश्च सम्बन्धेऽसम्बन्धरूपा असम्बन्धे सम्बन्धरूपा चातिशयोक्तिः; ताभ्याञ्च क्रतोरजसत्वं व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिः ॥ ३० ॥

प्राशुरिति।—[ विबुधाः ] सुराः, [ अत्र ] क्रतौ, [ आशु ] क्षिप्रम्। हूयत इति [ हवनीयं ] हविः, [ यत्, प्राशुः ] प्राशितवन्तः। 'अश भोजने' लिट्, द्विर्वचनादिकार्य्ये "अत आदेः" (७।४।७० पा०) इत्यभ्यासदीर्घः। [ तेन ] हविःप्राशनेन, [ दीर्घं ] चिरभोग्यम्, [ अमरत्वं ] देवत्वम्, [ अध्यगुः ] प्रापुः। "इणो गा लुङि" (२।४।४५ पा०) इति गादेशः। किञ्च, [ अधिकम् ] अत्यन्तम्, [ एधितौजसः ] वर्द्धितबलाः सन्तः, [ उद्धतान् ] उद्दृप्तान्, [ दानवांश्च ] असुरांश्च, [ विजिग्यिरे ] जितवन्तः। विपूर्वाज्जयतेः कर्त्तरि लिट्। "विपराभ्यां जेः" (१।३।१९ पा०) इत्यात्मनेपदम्। अत्र विबुधानां दीर्घामरत्वासुरविजयित्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः, एधितौजस्त्वस्य विशेषणगत्या विजयहेतुत्वात् काव्यलिङ्गं, तदुत्थापितश्चामरत्वासुरविजयक्रियासमुच्चय इति सङ्करः। 'गुणक्रियायौगपद्यं समुच्चयः' इत्यलङ्कारसर्वस्वलक्षणात् ॥ ३१ ॥

नापचारमगमन् क्वचित् क्रियाः
सर्वमत्र समपादि साधनम् ।
अत्यशेरत परस्परं धियः
सत्त्रिणां नरपतेश्च सम्पदः ॥ ३२ ॥

दक्षिणीयमधिगम्य पङ्क्तिशः
पङ्क्तिपावनमथ द्विजव्रजम् ।

---

नापचारमिति ।—[ अत्र ] क्रतौ, [ क्वचित् ] कुत्रापि, [ क्रियाः ] कर्माणि, [ अपचारं ] लोपविषयविपर्य्यासादिदोषं, [ नागमन् ] । गमेर्लुङि "पुषादि—" (३।१।५५ पा०) इत्यादिना च्लेरङादेशः । अनपचारे हेतुमाह ।—अत्र [ सर्वं साधनं, समपादि ] सम्पन्नम् । पद्यतेः कर्त्तरि लुङ्, "चिण् ते पदः" ( ३।१।६० पा० ) इति चिण्प्रत्ययः । कर्म्मणि वा, सम्पादितमित्यर्थः । "चिण् भावकर्म्मणोः" ( ३।१।६६ पा० ) इति चिण्प्रत्ययः । साधनसम्पत्तिमेव व्यनक्ति, अतीति ।—सत्त्रं यज्ञतन्त्रं येषामस्तीति [ सत्त्रिणाम् ] ऋत्विजाम् । 'सत्त्रमाच्छादने यज्ञे' इत्यमरः । [ धियः ] उत्तरोत्तरप्रयोगविज्ञानानि । तदुक्तम्,—'आचतुर्थात्कर्म्मणोऽन्ते समीक्ष्येदं करिष्यामि' इति । तथा [ नरपतेः ] राज्ञः, [ सम्पदः ] पदार्थसमृद्धयः, [ च परस्परम्, अत्यशेरत ] अतिशयितवत्यः, उभयेऽप्यतिसमग्रा इत्यर्थः ; ज्ञानद्रव्ये हि क्रियासाधने तत्सम्पन्नस्य कुतः क्रियाऽपचार इति भावः । अत्रानपचारवाक्यार्थस्य साधनसम्पत्तिवाक्यार्थहेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गं, तस्य परस्परातिशयक्रियारूपधर्म्मसाम्यगम्यौपम्यकेवलप्रकृतधीसम्पद्गोचरया तुल्ययोगितयोज्जीवितत्वेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ३२ ॥

दक्षिणीयमिति ।—[ अथ ] अनन्तरं, [ दक्षिणः ] औदार्य्यवान् । 'दक्षिणः सरलोदारौ' इत्यमरः । [ क्षितिपतिः ] राजा । दक्षिणामर्हतीति दक्षिणीयाः । 'दक्षिणीयो दक्षिणार्हस्तत्र दाक्षिण्य

दक्षिणः क्षितिपतिर्व्यशिश्रणद्
दक्षिणाः सदसि राजसूयकीः ॥ ३३ ॥
वारिपूर्वमखिलासु सत्क्रिया-
लब्धशुद्धिषु धनानि बीजवत् ।
भावि बिभ्रति फलं महद् द्विज-
क्षेत्रभूमिषु नराधिपोऽवपत् ॥ ३४ ॥

---

इत्यपि' इत्यमरः। "कडङ्गरदक्षिणाच्छ च" (५।१।६९ पा०) इति छप्रत्ययः। तं [दक्षिणीयं]। पङ्क्तेः स्वाधिष्ठितायाः, पावनं पावयितारं, [पङ्क्तिपावनम्]। पावयतेः कर्त्तरि ल्युट्। [द्विजव्रजं] ऋत्विग्वर्गमित्यर्थः। [पङ्क्तिशः] पङ्क्त्यनुसारेण, [अधिगम्य] प्राप्य, [सदसि राजसूयकीः] राजसूयकाण्डोक्ता इत्यर्थः। [दक्षिणाः] दक्षिणाशब्दः स्फुटार्थः। राजसूयकीरित्यत्र दक्षिणार्थ एव ढको विधानात्। [व्यशिश्रणत्] विश्राणयति स्म, वितीर्णवानित्यर्थः। 'विश्राणनं वितरणम्' इत्यमरः। 'श्रण दाने' इति धातोर्लुङ् "णौ चङ्युपधाया ह्रस्वः" (७।४।१ पा०) इति ह्रस्वः। वृत्त्यनुप्रासोऽलङ्कारः ॥ ३३ ॥

वारीति।—[नराधिपः] राजा, [सत्क्रियालब्धशुद्धिषु] सत्क्रियाभिः अभिषेकसंस्कारैः, लब्धा शुद्धिः निर्दोषता याभिः तासु, [अखिलासु। द्विजक्षेत्रभूमिषु] द्विजा एव क्षेत्रभूमयः केदारभूमयः, तासु। 'क्षेत्रं गेहे पुरे देहे केदारे योनिभार्य्ययोः' इति वैजयन्ती। [भावि] भविष्यत्, [महत् फलं] स्वर्गादिकं, धान्यादिकञ्च, [बिभ्रति] बिभ्राणानीत्यर्थः। "वा नपुंसकस्य" (७।१।७९ पा०) इति विकल्पानुमागमप्रतिषेधः। [धनानि, बीजवत्] बीजैस्तुल्यं, [वारिपूर्वम्] उदकदानपूर्वकम्, [अवपत्] उप्तवान्, दत्तवानित्यर्थः। अत्र बीजवत् इत्युपमानम्। "तेन तुल्यम्" (५।१।११५ पा०) इति तुल्यार्थे वतेर्विधानात्। तथाऽपि वापक्रियायोगात् द्विजक्षेत्रेति रूपकसमासः,

किं नु चित्रमधिवेदि भूपति-
र्दक्षयन् द्विजगणानपूयत ।
राजतः पुपुविरे निरेनसः
प्राप्य तेऽपि विमलं प्रतिग्रहम् ॥ ३५ ॥

स स्वहस्तकृतचिह्नशासनः
पाकशासनसमानशासनः ।

---

नोपमितसमासः ; किन्तु रूपकस्याङ्गमुपमा तदुत्थापितत्वादिति सङ्करः ॥ ३४ ॥

किमिति ।—[ भूपतिः, अधिवेदि ] वेद्यां, मखवेद्यामित्यर्थः । अत्र विभक्त्यर्थेऽव्ययीभावः । [ द्विजगणान् ] ऋत्विग्गणान्, [ दक्षयन् ] हर्षयन्, दक्षिणाप्रतिग्रहेण सदक्षिणान् कुर्वन्, प्रतिग्राहयन्नित्यर्थः । 'तत्क्षणे दक्षिणां प्रतिगृह्य' इति श्रुतिदर्शनात् । 'दक्ष नैपुण्ये' इति धातोर्ण्यन्ताल्लटः शत्रादेशः । अत एव 'निष्णाते दक्षिणे वापि नैपुण्ये निपुणेऽपि च' इति भट्टः । [ अपूयत ] पूतोऽभवत्, इति कर्मकर्त्तरि लङ् । [ किं नु चित्रं ] दाता पूत इति न चित्रमित्यर्थः ; किन्तु प्रतिग्रहीताऽपि पूत इति चित्रमाह ।—[ ते ] द्विजगणा, [ अपि निरेनसः] निष्पापात्, [ राजतः ] राज्ञः । पञ्चम्यास्तसिल् । [ विमलं ] शुद्धं, [ प्रतिग्रहं प्राप्य, पुपुविरे ] पूता बभूवुः । 'विशुद्धाच्च प्रतिग्रहः' इत्यभिज्ञानादिति भावः । अत्रापि पूञः कर्म्मकर्त्तरि लिट् । प्रतिग्रहीताऽपि शुद्ध इति विरोधः । स एव वाक्यार्थभूतश्चित्रत्वनिषेधहेतुरिति विरोधवाक्यार्थहेतुककाव्यलिङ्गयोरङ्गाङ्गिभावेन सङ्करः ॥ ३५ ॥

स इति ।—[ पाकशासनसमानशासनः ] पाको नाम कोऽपि राक्षसः, तस्य शासनः शासकः, हन्ता इत्यर्थः, पाकशासनः इन्द्रः तेन समानं शासनं तुल्या आज्ञा यस्य स इत्यर्थः । [ स ] राजा, [ स्वहस्तकृतचिह्नशासनः ] स्वहस्तेन कृतं लिखितं, चिह्नं स्वनामलेखनादि-

आ शशाङ्कतपनार्णवस्थिते-
र्विप्रसादकृत भूयसीर्भुवः ॥ ३६ ॥
शुद्धमश्रुतिविरोधि बिभ्रतं
शास्त्रमुज्ज्वलमवर्णसङ्करैः।
पुस्तकैः सममसौ गणं मुहु-
र्वाच्यमानमशृणोद् द्विजन्मनाम् ॥ ३७ ॥

---

लाञ्छनं, येषु तानि शासनानि नियमपत्राणि यस्य सः, दत्तस्वहस्त-लेखाङ्कितशासनः सन्नित्यर्थः। [आ शशाङ्कतपनार्णवस्थितेः] शशाङ्क-तपनार्णवानभिव्याप्य, आकल्पमित्यर्थः। अभिविधावाङ्। "आङ्मर्यादाभिविध्योः" (२।१।१३ पा०) इति विकल्पादसमासः। [भूयसीः, भुवः] देयभूमीः, [विप्रसात्] विप्राधीनाः। "देये त्रा च" (५।४।५५ पा०) इति चकारात् सातिप्रत्ययः। [अकृत] कृतवान्, दत्तवानित्यर्थः। कृञो लुङि तङ्, "उश्च" (१।२।१२ पा०) इति सिचः कित्त्वात् "ह्रस्वादङ्गात्" (८।२।२७ पा०) इति सकारलोपो गुणाभावश्च। पाकशासनसमानशासन इत्युपमाऽनुप्रासयोः संसृष्टिः ॥ ३६ ॥

शुद्धमिति।—[असौ] नृपः, [शुद्धम्] आचारपूतम्; अन्यत्र,—विभक्ति-विपरिणामेन, शुद्धैरकलङ्कैः। श्रुतिविरोधि वेदविरुद्धं, न भवतीति [अश्रुतिविरोधि शास्त्रं, बिभ्रतं] आत्मनि धारयन्तं, सकलवैदिकशास्त्राभिज्ञमित्यर्थः। "नाभ्यस्ताच्छतुः" (७।१।७८ पा०) इति नुम्प्रतिषेधः। अन्यत्र,—श्रुत्यविरोधिभिः पुराणादिभिः। [वाच्यमानम्] अन्वयगुणादि-क्रमेण प्रस्तूयमानम्; अन्यत्र,—वाच्यमानैः द्विजगणेन व्याख्यायमानै-रित्यर्थः। वचेश्चौरादिकात् कर्म्मणि लटः शानजादेशः। [उज्ज्वलं, द्विज-न्मनां] ब्राह्मणानां, [गणम्, अवर्णसङ्करैः] असङ्कीर्णाचारैः; अन्यत्र,—जातिसङ्कररहितमिति विपरिणामः। [पुस्तकैः समं] पुस्तकाक्षरैर्वाक्यैः सह, [अशृणोत्]। दानकाले प्रत्येकं ब्राह्मणानां गुणान् गोष्ठीश्च श्रुतवान्

तत् प्रणीतमनसामुपेयुषां
द्रष्टुमाहवनमग्रजन्मनाम् ।
आतिथेयमनिवारितातिथिः
कर्त्तुमाश्रमगुरुः स नाश्रमत् ॥ ३८ ॥

---

इत्यर्थः । मुखस्थविद्यानामपि पुस्तकधारणाद्विलक्षणत्वेनोक्तमित्यदोषः । अत्र पुस्तकैः समं द्विजगणम् अश्रणोदिति सम्बन्धिभेदे भिन्नयोः श्रवणयोरभेदाध्यवसायाद् भेदे अभेदरूपातिशयोक्तिचमत्कारिणी, द्विजानां प्रकृतत्वात् पुस्तकानीव द्विजानिति वैवक्षिकोपमानोपमेयभावपर्य्यवसायिनी श्लेषसङ्कीर्णसहोक्तिरलङ्कारः । 'सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः । कल्पितौपम्यपर्य्यन्ता सा सहोक्तिरिहेष्यते ॥' इति लक्षणात् । केचित् पुस्तकैः समं वाच्यमानमिति योजयित्वा पुस्तकेषु द्विजगणान्, लिख्येषु पठ्यमानानिति व्याचक्षते । तैः पुस्तकेषु शास्त्रभरणासम्भवाद्वर्णसङ्करेति श्लिष्टविशेषणावगतप्रकृतश्लेषभङ्गः पुस्तकानां वाचनकरणत्वात् समादिशब्दवैयर्थ्यमुक्तसहोक्त्यलङ्कारभ्रंशश्चेति एवमादयो दोषा दुस्तराः, इत्यलं विस्तरेण ॥ ३७ ॥

तदिति ।—[ अनिवारितातिथिः ] अनिवारिताः अप्रत्याख्याताः, अतिथयो येन सः,[आश्रमगुरुः] आश्रमाणां ब्रह्मचर्य्यादीनां,गुरुर्नियन्ता, [ सः ] राजा, [तत्] ; आ समन्तात्, जुहोत्यस्मिन् इति [ आहवनं ] यागम् । जुहोतेर्ल्युट् । [ द्रष्टुम्, उपेयुषाम् ] आगतानाम् ; अत एव [प्रणीतमनसां] सत्कर्म्मदर्शनात् हृष्टचित्तानाम्,[अग्रजन्मनाम्] । अतिथिषु साधु [ आतिथेयम् ] अतिथिसत्कारम् । "पथ्यतिथि—" ( ४।४।१०४ पा० ) इत्यादिना ढञ्प्रत्ययः । [ कर्त्तुं, नाश्रमत् ] न श्रान्तः । श्राम्यतेः पुषादित्वाल्लुङि च्लेरङादेशः । अत्रानिवारितातिथित्वस्य विशेषणगत्या श्रमनिषेधहेतुत्वात् काव्यलिङ्गं, तदनुप्रासेन संसृज्यते ॥ ३८ ॥

मृग्यमाणमपि यद् दुरासदं
भूरिसारमुपनीय तत् स्वयम् ।
आसतावसरकाङ्क्षिणो बहि-
स्तस्य रत्नमुपदीकृतं नृपाः ॥ ३९ ॥

एक एव वसु यद्ददौ नृप-
स्तत् समापकमतर्क्यत क्रतोः ।
त्यागशालिनि तपःसुते ययुः
सर्वपार्थिवधनान्यपि क्षयम् ॥ ४० ॥

---

मृग्यमाणमिति ।—[ यत् ] रत्नं, [ मृग्यमाणम् ] अन्विष्यमाणम्, [ अपि, दुरासदं ] दुर्लभं, [ भूरिसारं ] महासारम्, [ उपदीकृतम् ] उपायनीकृतं, मनसा यथासङ्कल्पितमित्यर्थः । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । [ तत्, रत्नं ] श्रेष्ठवस्तु । 'रत्नं श्रेष्ठे मणावपि' इति विश्वः । [ नृपाः स्वयमुपनीय, तस्य ] राज्ञः, [ अवसरकाङ्क्षिणः ] सेवाऽवसरं प्रतीक्षमाणाः, [ बहिः, आसत ] स्थिताः, इत्यैश्वर्य्यातिशयोक्तिः । अत्र रत्ने उपदात्वस्याऽऽरोप्यमाणस्य प्रकृतोपयोगात् परिणामालङ्कारः ॥ ३९ ॥

एक इति ।—[ एक एव नृपो यत्, वसु ] धनं, [ ददौ ], उपायनमिति भावः । [ तत् ] धनमेव, [ क्रतोः, समापकं ] सम्पूरकम्, [ अतर्क्यत ] दक्षिणादानादिसर्वक्रतुव्ययपर्य्याप्ततया तर्कितमित्यर्थः । [ तपःसुते ] धर्म्मपुत्रे, [ त्यागशालिनि ] सति, [ सर्वपार्थिवधनान्यपि, क्षयं ] व्ययं, [ ययुः ] । अत्रैकपार्थिवधनस्य सर्वपार्थिवधनानाञ्च क्रतुसमापकत्वक्षयोपगतत्वयोरसम्बन्धेऽपि तत्सम्बन्धोक्तेः अतिशयोक्ती ; तयोश्च सापेक्षत्वात् सजातीयसङ्करः ॥ ४० ॥

प्रीतिरस्य ददतोऽभवत् तथा
येन तत्प्रियचिकीर्षवो नृपाः ।
स्पर्शितैरधिकमागमन् मुदं
नाधिवेश्म निहितैरुपायनैः ॥ ४१ ॥
यं लघुन्यपि लघूकृताहितः
शिष्यभूतमशिषत् स कर्मणि ।

---

प्रीतिरिति ।—[ ददतः ] दानं कुर्वतः, [ अस्य ] राज्ञः, [ तथा ] तेनैव प्रकारेण, राजोपायनानाम् अर्थिसात्करणेनैव, [प्रीतिः, अभवत्] आसीत्, न तु कोशगृहार्पणेनेत्यर्थः । कुतः ?—[ येन ] प्रकारेण, [ तत्-प्रियचिकीर्षवः ] तस्य राज्ञः, प्रियं चिकीर्षवः प्रियं कर्त्तुमिच्छवः । मधुपिपासुप्रभृतित्वात् द्वितीयासमासः । [ नृपाः, स्पर्शितैः ] प्रतिपादितैः । 'स्पर्शनं प्रतिपादनम्' इत्यमरः । [ उपायनैः ] उपहारैः, [ अधिकं ] यथा तथा, [मुदम्, आगमन् ] प्राप्ताः । तथैव प्रभुप्रीतिसिद्धेः सोपायनानां सिद्धिनियोगलाभाच्चेति भावः । [ अधिवेश्म ] वेश्मनि, [ निहितैः ] उपायनैर्मुदं [ न ] आगमन् ; तथोक्तप्रयोजनासिद्धेरिति भावः । येनैव राज्ञां मोदः स्वस्य च महान् धर्म्मलाभः, तेनोपायनानामर्थिसात्करणादेव राज्ञः प्रीतिरासीत्, न कोशगृहार्पणादित्यर्थः ; अत एव दानसङ्ग्रहयोः प्रकृतयोः प्रीतिः सङ्ग्रहपरिहारेण दाने एव नियमनात् परिसङ्ख्याऽलङ्कारः,—'एकस्यानेकत्र प्राप्तावेकत्र नियमनं परिसङ्ख्या' इति लक्षणात् । एतेन सर्वस्वदानं व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिः ॥ ४१ ॥

यमिति ।—लघूकृता अल्पीकृताः, अहिताः शत्रवो येन सः [ लघूकृताहितः ] । [ सः ] राजा, शिष्येण तुल्यं [ शिष्यभूतम् ] । 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः' इति विश्वः । "सह सुपा" ( २।१।४ पा० ) इति नित्यसमासः । [ यं ] नृपं, [ लघुनि ] अल्पे,

सस्पृहं नृपतिभिर्नृपोऽपरै-
गौरवेण ददृशेतरामसौ ॥ ४२ ॥
आद्यकोलतुलितां प्रकम्पनैः
कम्पितां मुहुरनीदृगात्मनि।
वाचि रोपितवताऽमुना महीं
राजकाय विषया विभेजिरे ॥ ४३ ॥

---

[अपि, कर्मणि] यज्ञीयपशुरक्षणादिकर्मणि, [अशिषत्] आज्ञापितवान्। "सर्तिशास्त्यर्तिभ्यश्च" (३।१।५६ पा०) इति लुङि च्लेरङादेशः "शास इदङ्हलोः" (६।४।३४ पा०) इतीकारः। [असौ] कर्मकरः, [नृपः, अपरैः] ततोऽन्यैः, [नृपतिभिः, सस्पृहम्] अहो सम्मानः!! इति साभिलाषं, [गौरवेण, ददृशेतराम्] अतिशयेन दृष्टः। दृशेः कर्मणि लिट्; "तिङश्च" (५।४।५६ पा०) इति तरप्प्रत्यये "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" (५।४।११ पा०) इत्यामुप्रत्ययः "तद्धितश्चासर्वविभक्तिः" (१।१।३८ पा०) इत्यव्ययसंज्ञा। अत्र कर्मकरनृपस्येतरनृपकर्तृकविशिष्टदर्शनकर्मत्वासम्बन्धेऽपि सम्बन्धोक्तेः अतिशयोक्तिः, तया राज्ञो निरङ्कुशाज्ञत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः॥ ४२॥

आद्येति।—[आद्यकोलतुलिताम्] आद्यकोलः आदिवराहः। 'वराहः शूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः। तेन तुलितां कल्पाऽऽदौ उद्धृताम्। तथाऽपि [प्रकम्पनैः] प्रक्षोभकैर्हिरण्याक्षप्रमुखैः, [कम्पितां] क्षोभितां, [महीम्, अनीदृगात्मनि] अनेवंरूपायां, केनापि अकम्पितायाम्, अस्खलितायामित्यर्थः, [वाचि, रोपितवता] स्थापितवता, स्थिरेण रोपणेन स्थिरीकुर्वतेत्यर्थः। [अमुना] राज्ञा, [राजकाय] राज्ञां समूहाय। "गोत्रोक्ष—" (४।२।३९ पा०) इत्यादिना वुञ्प्रत्ययः। [विषयाः] देशाः। 'नीवृज्जनपदो देशविषयौ तूपवर्त्त-

आगताद्व्यवसितेन चेतसा
सत्त्वसम्पदविकारिमानसः ।
तत्र नाभवदसौ महाऽऽहवे
शालवादिव पराङ्मुखोऽर्थिनः ॥ ४४ ॥

---

नम्' इत्यमरः । [ विभेजिरे ] अस्यायमिति विभक्ताः ; प्राक् विजयोद्धृतान् राज्ञः पुनः पदेषु स्थापयामासेत्यर्थः । अत्राऽऽदिवराहो महीमुद्धृतवानेव, वाचैवासौ तु निरातङ्कं स्थापितवांश्चेति उपमानादुपमेयस्याऽऽधिक्यकथनाद् व्यतिरेकालङ्कारः ॥ ४३ ॥

आगतादिति ।—[ सत्त्वसम्पदविकारिमानसः ] सत्त्वसम्पदा गुणाऽऽधिक्येन, अविकारिमानसो लोभाभिभवाभ्याम् अनुपप्लुतचित्त इत्यर्थः । 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति विश्वः । [ असौ ] राजा, [ तत्र ] तस्मिन् ; आ समन्तात् जुह्वति अस्मिन् इत्याहवो यागः । 'ऋदोरप्' ( ३।३।५७ पा० ) इति जुहोतेरप्प्रत्यये गुणावादेशौ । आह्वयन्ते शत्रवो यस्मिन् इत्याहवो युद्धम् । 'आङि युद्धे' ( ३।३।७३ पा० ) इति ह्वयतेराङ्पूर्वादप्प्रत्ययः, सम्प्रसारणम् । 'आहवो यागयुद्धयोः' इति विश्वः । महांश्चासौ स च महाऽऽहवस्तस्मिन् [ महाहवे, व्यवसितेन ] निश्चितेन, धनलाभं निश्चितवता ; अन्यत्र,—शत्रोर्मृत्युरेवेति निश्चितवतेत्यर्थः । व्यवपूर्वात् स्यतेः सकर्म्मकत्वादप्यविवक्षिते कर्म्मकर्त्तरि क्तः । 'प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया' इति वचनात् । [ चेतसा आगतात् ] चेतसा स्वयं निश्चित्याऽऽगतादित्यर्थः । [ अर्थिनः ] याचकात् । शत्रुरेव शात्रवः । स्वार्थेऽण्प्रत्ययो राक्षसवत् । तस्मात् [ शात्रवात्, इव पराङ्मुखो नाभवत् ] । 'आहवेष्वनिवर्त्तित्वं प्रजानाञ्चैव पालनम् । शुश्रूषा ब्राह्मणानाञ्च राज्ञां श्रेयस्करं परम् ॥' इति मनुस्मरणात् इति भावः । श्लेषसङ्कीर्णेयमुपमा ॥ ४४ ॥

नैच्छतार्थिनमवज्ञया मुहु-
र्याचितस्तु न च कालमाक्षिपत् ।
नादिताल्पमथ न व्यकत्थयद्-
दत्तमिष्टमपि नान्वशेत सः ॥ ४५ ॥

निर्गुणोऽपि विमुखो न भूपते-
र्दानशौण्डमनसः पुरोऽभवत् ।

---

नैच्छतेति ।—[सः] राजा, [अर्थिनं] याचकं, [मुहुः, अवज्ञया] अनादरेण, [नैच्छत]। तर्हि विलम्बितं किम् ? नेत्याह ।—[याचितस्तु] प्रार्थित एव, [कालं, नाक्षिपत्] न यापयामास [च]। याचकबहुत्वात्, तर्ह्यल्पदाता ?—नेत्याह ।—[अल्पमथ] अल्पमपि, * [नादित] न ददौ, किन्तु यथाऽर्थिकाममिति भावः। ददातेर्लुङि तङि "स्थाध्वोरिच्च" (१।२।१७ पा०) इतीकारः "ह्रस्वादङ्गात्" (८।२।२७ पा०) इति सलोपः। तर्हि विकत्थनः किम् ?—नेत्याह ।—[न व्यकत्थयत्] आत्मश्लाघां न चकार। 'कत्थ श्लाघायाम्'। किञ्च, [इष्टं] प्रियम्, [अपि, दत्तं] वस्तु, [नान्वशेत] नानुतप्तवान् ; दत्तानुतापस्यातिप्रत्यवायहेतुत्वादिति भावः। अत्रार्थिसन्दोहयाच्ञाऽऽदिबाहुल्यरूपकारणसामग्र्यऽपि विलम्बाऽऽदिकार्य्यानुत्पत्तेः विशेषोक्तिरलङ्कारः,—'तत्सामग्र्यादनुत्पत्तिर्विशेषोक्तिर्निगद्यते' इति लक्षणात्। तथा दातुः सात्त्विकं व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिः ॥ ४५ ॥

निर्गुण इति ।—[दानशौण्डमनसः] दानशूरचित्तस्य, बहुप्रदस्येत्यर्थः। 'स्थूलदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे।' 'मत्ते शौण्डोत्कटक्षीवा' इति चामरः। [भूपतेः, पुरः] अग्रे, [निर्गुणः] तपोविद्याऽऽदिगुण-

---

* अत्र अथशब्दोऽप्यर्थे समुच्चयरूपे, तथा च मेदिनी,—"अथाथो संशये स्याताम् अधिकारे च मङ्गले। विकल्पानन्तरप्रश्नकार्त्स्न्याऽऽरम्भसमुच्चये ॥" इति।

वर्षुकस्य किमपः कृतोन्नते-
रम्बुदस्य परिहार्य्यमूषरम् ? ॥ ४६ ॥
प्रेम तस्य न गुणेषु नाधिकं
न स्म वेद न गुणान्तरञ्च सः ।
दित्सया तदपि पार्थिवोऽर्थिनं
गुणयगुण्य इति न व्यजीगणत् ॥ ४७ ॥

---

हीनः, [ अपि, विमुखः ] निष्फलः, [ नाभवत् ] ; किन्तु पूर्णकाम एवाभवत् । भूरिदाने सर्वस्यापि पात्रत्वादिति भावः ; अत एव तेनापात्रवर्षदोषोऽपि न कृतवृत्तेरित्याशयेन दृष्टान्तमाह, वर्षुकस्येति ।—[ अपः ] जलानि । "न लोक—" ( २।३।६९ पा० ) इत्यादिना षष्ठीप्रतिषेधः । [ वर्षुकस्य ] वर्षणशीलस्य । "लषपत—" ( ३।२।१५४ पा० ) इत्यादिना उकञ्प्रत्यये लघूपधगुणः । [ कृतोन्नतेः ] कृतोदयस्य, अम्बुदस्य ] अम्बुदेनेत्यर्थः । "कृत्यानां कर्त्तरि वा' ( २।३।७१ पा० ) इति षष्ठी । 'स्यादूषः क्षारमृत्तिका' इत्यमरः । तद्वत्स्थलम् [ऊषरम्] । 'ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली' इत्यमरः । "ऊषसुषिमुष्कमधो रः" ( ५।२।१०७ पा० ) इति रप्रत्ययः । [ परिहार्य्यं ] त्याज्यं, [ किम् ? ] नेत्यर्थः । अत्र पर्जन्यभूपालयोर्वाक्यभेदेन बिम्बप्रतिबिम्बतया समानधर्माभिधानात् दृष्टान्तालङ्कारः ॥ ४६ ॥

प्रेमेति ।—[ तस्य ] राज्ञः, [ गुणेषु अधिकं प्रेम न ] इति, [ न ] । किन्तु अस्त्येवेत्यर्थः । [ सः ] राजा, [ गुणान्तरं ] गुणविशेषं, [ न वेद ] न वेत्ति, [ स्म ] इति, [ न च ] किन्तु वेदैवेत्यर्थः । "लट् स्मे" ( ३।२।११८ पा० ) इति भूतार्थे लट् "विदो लटो वा" ( ३।४।८३ पा० ) इति णलादेशः । 'सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ' (५अधि० १म अध्या० ९सू०) इति वामनः । सम्भावितयोरविमर्शादेवागुणप्रीतिज्ञानयोर्निषेध इति भावः । [तदपि] तथाऽपि, पृथिव्या ईश्वरः [पार्थिवः] ।

दर्शनानुपदमेव कामतः
स्वं वनीयकजनेऽधिगच्छति।
प्रार्थनाऽर्थरहितं तदाऽभवद्-
दीयतामिति वचोऽतिसर्जने ॥ ४८ ॥

---

"सर्वभूमिपृथिवीभ्यामणञौ" (५।१।४१ पा०) इत्यञ्प्रत्ययः। [दित्सया] दातुमिच्छया, सर्वपालदानकौतुकेनेत्यर्थः। "सनि मीमा—" (७।४।५४ पा०) इत्यादिना इसादेशः, "अत्र लोपोऽभ्यासस्य" (७।४।५८ पा०) इत्यभ्यासलोपः। [अर्थिनं] याचकं, [गुणी] गुणवान्, [अगुण्यः] नायं गुणवान्, [इति, न व्यजीगणत्] न गणयति स्म। गुणप्रियोऽपि गुणज्ञोऽपि दानशौण्डोऽर्थितया गुण्यगुण्यौ न गणयामासेत्यर्थः। गणेर्णौ चङि "ई च गणः" [७।४।९७ पा०) इत्यभ्यासस्य विकल्पादीकारः। अत्र गुणप्रियत्वगुणज्ञत्वरूपकारणसामग्र्येऽपि गुणागुणविमर्शरूपकार्य्यानुत्पत्तेः दित्सयेत्युक्तनिमित्ता विशेषोक्तिरुक्तलक्षणात् ॥ ४७ ॥

दर्शनेति।—[वनीयकजने] अर्थिजने। 'वनीयको याचनको मार्गणो याचकार्थिनौ" इत्यमरः। [दर्शनानुपदं] राजविलोकनानन्तरम्, [एव], प्रार्थनामकृत्वेत्यर्थः। [कामतः] यथेच्छं, [स्वं] धनम्, [अधिगच्छति] लभमाने सति। [तदा, दीयतामिति वचः] दीयतामित्येतत् पदं, [प्रार्थनाऽर्थरहितं] प्रार्थना याच्ञा, मह्यं दीयतामिति वाञ्छा, सैवार्थस्तेन रहितं शून्यं सत्, तदा [अतिसर्जने] त्यागे, [अभवत्] अवर्त्तत; मह्यं दीयतामिति अर्थिवाक्याभावादस्मै दीयतामिति दातृवाक्यमेवान्वर्थमभूदित्यर्थः। अर्थिनामागमनमेव याचनमिति विवेकिनां किं याच्ञादैन्यदर्शनचापलेनेति भावः। अत्र दीयतामिति वचसः प्रार्थनार्थवर्जनेन तेनातिसर्जनार्थताकथनादेकस्यानेकत्वप्रसक्तावेकत्र नियमनाऽऽख्या परिसङ्ख्या ॥ ४८ ॥

नानवाप्तवसुनाऽर्थकाम्यता
नाचिकित्सितगदेन रोगिणा ।
इच्छताऽशितुमनाशुषा न च
प्रत्यगामि तदुपेयुषा सदः ॥ ४९ ॥

स्वादयन् रसमनेकसंस्कृत-
प्राकृतैरकृतपात्रसङ्करैः ।
भावशुद्धिसहितैर्मुदं जनो
नाटकैरिव बभार भोजनैः ॥ ५० ॥

---

नेति ।—[ अर्थकाम्यता ] अर्थमात्मन इच्छता, धनार्थिना इत्यर्थः । "काम्यच्च" ( ३।१।९ पा० ) इति काम्यच्प्रत्यये सनाद्यन्तत्वेन धातुत्वाल्लटि शत्रादेशः । [ तत् सदः, उपेयुषा ] प्राप्तवता पुरुषेण, [अनवाप्तवसुना ] अलब्धधनेन, [ न प्रत्यगामि ] न प्रत्यावर्त्ति । [ रोगिणा ] उपेयुषा [ अचिकित्सितगदेन ] अशमितरोगेण । 'रोगव्याधिगदामयाः' इत्यमरः । [ न ] प्रत्यगामि । [ अशितुं ] भोक्तुम्, [ इच्छता ] उपेयुषा, [अनाशुषा च] अनश्नितेन,अभुक्तवतेत्यर्थः । "उपेयिवाननाश्वाननूचानश्च" ( ३।२।१० पा० ) इति क्वसुप्रत्ययान्तो निपातः । [ न ] प्रत्यगामि ; किन्तु सर्वेणापि पूर्णकामेनैव प्रत्यगामीत्यर्थः । गमेर्भावे लुङ् । अत्रार्थिरोगिक्षुधितानां प्रकृतानामेव पूर्णकामत्वसाम्याद्गम्यौपम्यत्वात् केवलप्रकृतविषया तुल्ययोगिता ; तथा च यो यत्काम आगतः, स तत्सर्वमेवास्मादलभतेति व्यज्यते ॥ ४९ ॥

स्वादयन्निति ।—[अनेकसंस्कृतप्राकृतैः] अनेकानि बहूनि, संस्कृतानि हिङ्गुमरीचादिना कृतसंस्काराणि, प्राकृतानि प्रकृतिसिद्धानि, संस्कारं विना स्वादूनि कृतानि फलादीनि च येषु तैः ; अन्यत्र,—अनेकविचित्रसंस्कृतप्राकृतौ भाषाविशेषौ येषु तैः ; [ अकृतपात्रसङ्करैः ] अकृतः

रक्षितारमिति तत्र कर्मणि
न्यस्य दुष्टदमनक्षमं हरिम् ।
अक्षतानि निरवर्त्तयत्तदा
दानहोममयजनानि भूपतिः ॥ ५१ ॥

---

पात्राणां भाजनानाम्; अन्यत्र,—भूमिकानाञ्च सङ्करो व्यतिकरो येषु तैः । [ भावशुद्धिसहितैः ] भावशुद्धिः पदार्थानां स्पष्टता ; अथ वा,—भावशुद्धिः गर्हाविरहः, तत्सहितैः ; अन्यत्र,—भावाः स्थायिनो रत्यादयः, तेषां शुद्धिः सजातीयविजातीयातिरस्कृतरूपकम्,—"सजातीयैर्विजातीयैरतिरस्कृतमूर्त्तिमान् । यावद्रसं वर्त्तमानः स्थायी भाव उदाहृतः ॥" इति लक्षणात् । तत्सहितैः [भोजनैः] अभ्यवहारैः, [नाटकैः इव] रूपकविशेषैरिव, [ रसं ] मधुरादिकं, शृङ्गारादिकञ्च, [ स्वादयन् ] अनुभवन्, [ जनः ] भोक्तृजनः, सामाजिकजनश्च, [ मुदम् ] आनन्दं, [ बभार ] । श्लेषसङ्कीर्णेयमुपमा * ॥ ५० ॥

रक्षितारमिति ।—[ तदा, इति ] इत्थं, [भूपतिः] युधिष्ठिरः, [ तत्र कर्म्मणि ] राजसूयाध्वरे, [ दुष्टदमनक्षमं ] दुष्टानां दमने मर्दने, क्षमं समर्थं, [ हरिं, रक्षितारं ] विघ्नेभ्यस्त्रातारं, [न्यस्य] निधाय, [अक्षतानि] अविहतानि, [दानहोमयजनानि, निरवर्त्तयत्] अन्वतिष्ठत् ; स्वकीयस्य द्रव्यस्य स्वस्वत्वनिवृत्तिपरस्वत्वोत्पादनं दानं, देवतोद्देशेनाग्नौ हविषः प्रक्षेपो होमः, हुतस्य देवतोद्देशेन वाङ्मनसाभ्यां न ममेति त्यागो यागः । अत्र दुष्टदमनक्षमत्वस्य विशेषणगत्या हरेः रक्षाऽधिकारहेतुन्यासहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ५१ ॥

---

* अस्य श्लोकस्य वीराऽऽचारसम्पन्नमहाकौलानां तान्त्रिकाणां पञ्चमकाराणां व्याख्यान्तरं कर्त्तुं शक्यते । तच्च गोपनीयत्वात् नास्माभिः लिखितं, परं सुधीभिः अनुधातव्यम्, तेन ग्रन्थकारस्य तद्धर्मावलम्बिता व्यज्यते इति प्रत्नतत्त्ववेदिभिरपि विवेचनीयम् ।

एक एव सुसखैष सुन्वतां
शौरिरित्यभिनयादिवोच्चकैः ।
यूपरूपकमनीनमद्भुजं
भूश्चषालतुलिताङ्गुलीयकम् ॥ ५२ ॥

इत्थमत्र विततक्रमे क्रतौ
वीक्ष्य धर्ममथ धर्मजन्मना ।
अर्घदानमनु चोदितो वचः
सभ्यमभ्यधित शान्तनोः सुतः ॥ ५३ ॥

एक इति ।—[ सुन्वतां ] सोमाभिषवं कुर्वताम् । सोमयाजिनामित्यर्थः । सुनोतेर्लटः शत्रादेशः । [ सुसखा ] सत्सहायः । "न पूजनात्" ( ५।४।६९ पा० ) इति समासान्तप्रतिषेधः । [ एष शौरिः एक एवेति, अभिनयादिव] तद्व्यञ्जकचेष्टां कृत्वेव, इत्युत्प्रेक्षा । 'व्यञ्जकाभिनयौ समौ' इत्यमरः । [ भूः ] देवयजनभूमिः । [ चषालतुलिताङ्गुलीयकम् ] चषालेन यूपकटकेन । 'चषालो यूपकटकः' इत्यमरः । तेन तुलितं समीकृतमित्यर्थः । तुलयतेः, "तत्करोति—"(ग०) इति ण्यन्तात्कर्म्मणि क्तः । तदङ्गुलीयकमूर्म्मिका यस्य तम्, अङ्गुलीयकोपमानचषालमित्यर्थः । 'अङ्गुलीयकमूर्म्मिका' इत्यमरः । "जिह्वामूलाङ्गुलेश्छः" (७।३।६२ पा०) इति भावे छप्रत्ययः । [ उच्चकैः ] उन्नतं, [ यूपरूपकं ] यूपं पशुबन्धनदारुविशेषः, रूपकं स्वरूपं यस्य तं, [भुजम्, अनीनमत्] उन्नमितवती । नमेर्णौ चङि सन्वत्कार्य्यम् । अत्र सापेक्षत्वादुपमोत्प्रेक्षयोः सङ्करः ॥५२॥

इत्थमिति ।—[ इत्थमत्र क्रतौ, विततक्रमे ] विस्तृतानुष्ठाने सति, [ अथ ] अनन्तरं, धर्मात् जन्म यस्य तेन [ धर्म्मजन्मना ] धर्मात्मजेन । जन्माद्युत्तरपदो बहुव्रीहिर्व्यधिकरणे इति वामनः । * [ धर्म्मं वीक्ष्य ],

* "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः" ( ५अधि० २ अध्या० १९ सू० ) ।

"आत्मनैव गुणदोषकोविदः
किं न वेत्सि करणीयवस्तुषु ? ।
यत्तथाऽपि न गुरून्न पृच्छसि
त्वं क्रमोऽयमिति तत्र कारणम् ॥ ५४ ॥
स्नातकं गुरुमभीष्टमृत्विजं
संयुजा च सह मेदिनीपतिम् ।

---

धर्म्मशास्त्रमनुसृत्येत्यर्थः । [ अर्घदानं ] पूजादानम्, [ अनु ], सदस्य-पूजामुद्दिश्येत्यर्थः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । [ चोदितः ] कस्मै देयमिदमिति पृष्टः, [ शान्तनोः सुतः ] भीष्मः । [ सभ्यं ] सभायां साधु । "सभाया यः" ( ४।४।१०५ पा० ) इति यप्रत्ययः । [ वचः ] वाक्यम्, [ अभ्यधित ] अभिहितवान् । दधातेर्लुङि तङि "स्थाघ्वो-रिच्च" ( १।२।१७ पा० ) इति इत्त्वे, "ह्रस्वादङ्गात्" ( ८।२।२७ पा० ) इति सकारलोपः । वृत्त्यनुप्रासः ॥ ५३ ॥

अथासर्गसमाप्तेः भीष्मवचःप्रपञ्चमेव सफलं दर्शयति, आत्मनेति ।—तत्रात्मनो बहुमानकरणात् प्रीतस्तत्रभवान् भीष्मो राजानं तावत् उत्साहार्थमेकेनोपश्लोकयति ।—[ गुणदोषकोविदः ] वेत्तीति विदो ज्ञाता । इगुपधलक्षणः कप्रत्ययः । ओकसो विद्यास्थानस्य विदः कोविदः । गुणदोषयोः कोविदो विवेक्ता । [ करणीयवस्तुषु ] कर्त्तव्यार्थेषु, [ आत्मनैव ] स्वयमेव, परोपदेशानपेक्षयैवेत्यर्थः । प्रकृत्यादित्वात् तृतीया । [ किं न वेत्सि ? ] सर्वं जानासीत्यर्थः । [ तथाऽपि त्वं ] ज्ञाताऽपि, [ गुरून्न पृच्छसि ] इति [ न ], किन्तु पृच्छस्येवेति [ यत् ] । ज्ञानप्रसक्तं न पृच्छसीति वारणाय नञ्द्वयम् । [ तत्र ] गुर्वनुयोगे, [अयं क्रमः] इति न्यायः, सदाचारपरिपाटि, [इति] एतदेव, [कारणं], न त्वज्ञानमित्यर्थः । अत्र कर्त्तव्यार्थप्रश्नस्याज्ञानहेतुकत्ववारणेनापरहेतु-कत्वे नियमनात् पूर्वोक्तलक्षणपरिसङ्ख्यानम् ॥ ५४ ॥

अर्घभाज इति कीर्त्तयन्ति षट्
ते च ते युगपदागताः सदः ॥ ५५ ॥
शोभयन्ति परितः प्रतापिनो
मन्त्रशक्तिविनिवारिताऽऽपदः ।
त्वन्मखं मुखभुवः स्वयम्भुवो
भूभुजश्च परलोकजिष्णवः ॥ ५६ ॥

---

एवं राजानमुपश्लोक्य प्रश्नस्योत्तरमाह, स्नातकमिति।—[ स्नातकं ] स्नातको गृहस्थविशेषस्तं, [ गुरु ] पित्रादिकम्, [ अभीष्टम् ] इष्टबन्धुम्, [ ऋत्विजं ] याजकं, [ संयुजा ] संयुज्यत इति संयुक् सम्बधी, जामाता इति यावत्, तेन, [सह, मेदिनीपतिं] राजानं, [ च ] तव मेदिनीपतिं चेत्यर्थः। [ षट् ] षड़ेतान्, [ अर्घभाजः ] पूजार्हाः, [ इति ] इतिशब्दे-नाभिहितत्वान्न कर्मणि द्वितीया; यथाऽऽह वामनः,—"निपाते-नाप्यभिहिते कर्मणि न कर्मविभक्तिः, परिगणनस्य प्रायिकत्वात्" इति (५ अधि० २ अध्या० २२ सू०)। [ कीर्त्तयन्ति ] कथयन्ति, वृद्धा इति शेषः। न च ते दूरा इत्याह।—[ ते च ] षडपि, [ ते ] तव, [ सदः ] सभां, [ युगपत्, आगताः ] प्राप्ताः। अत्र स्नातकादीनां प्रकृतानामेवार्घभाक्त्वसाधर्म्यादौपम्यावगमात् तुल्ययोगिताभेदः ॥ ५५ ॥

शोभयन्तीति।—किञ्च, प्रतापयितुं शीलं येषां ते [ प्रतापिनः ] शत्रुतापकाः। ताच्छील्ये णिनिः। अन्यत्र,—तेजस्विनः। 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः। "अत इनिठनौ" (५।२। ११५ पा०) इति इनप्रत्ययः। [ मन्त्रशक्तिविनिवारिताऽऽपदः ] मन्त्र-शक्त्या वेदमहिम्ना; अन्यत्र,—विचारसामर्थ्येन, विनिवारिताः आपदो दैवमानुषविपत्तयो यैस्ते। 'वेदवादे गुप्तमन्त्रे मन्त्रः' इत्यमरः। [ पर-लोकजिष्णवः ] परलोकस्य लोकान्तरस्य, शत्रुजनस्य च, जिष्णवो जय-शीलाः; [ स्वयम्भुवः ] ब्रह्मणः, [ मुखभुवः ] मुखजाता ब्राह्मणाः;

आभजन्ति गुणिनः पृथक् पृथक्
पार्थ ! सत्कृतिमकृत्रिमाममी ।
एक एव गुणवत्तमोऽथ वा
पूज्य इत्ययमपीष्यते विधिः ॥ ५७ ॥
अत्र चैष सकलेऽपि भाति मां
प्रत्यशेषगुणबन्धुरर्हति ।

---

'ब्राह्मणोऽस्य मुखमासीत्' (शुक्लयजुः ३१ अध्या० ११ मन्त्रः) इति श्रुतेः। [भूभुजः] राजानः, [च, त्वन्मखं] तव क्रतुं, [परितः, शोभयन्ति] परिष्कुर्वन्ति, सर्वेऽप्यागत्य वसन्तीत्यर्थः। अत्र राज्ञां ब्राह्मणानाञ्च प्रकृतानामेव प्रतापादिसाधर्म्येणोपमानात्तुल्ययोगिताभेदः, साधर्म्यञ्च श्लेषनिबन्धनमिति सङ्करः ॥ ५६ ॥

आभजन्तीति।—हे [पार्थ!] पृथापुत्र! "तस्येदम्" (४।३।१२० पा०) इत्यण्। सामान्यस्य योग्यविशेषपर्य्यवसाननियमादपत्यार्थलाभः; अन्यथा "स्त्रीभ्यो ढक्" (४।१।१२० पा०) इति ढक् स्यात्। [गुणिनः] गुणाढ्याः, [अमी] पूर्वश्लोकद्वयोक्ताः स्नातकादयः, [पृथक् पृथक्] प्रत्येकम्, [अकृत्रिमाम्] अकपटां, [सत्कृतिं] सत्कारम्, [आभजन्ति] अर्हन्ति; सममेषां प्रत्येकं पूजा कार्य्येत्यर्थः। अथ स्वाभिमतं पक्षान्तरमाह, अथ वेति।—[अथ वा, गुणवत्तमः] अतिगुणवान्, [एक एव पूज्य इत्ययमपि, विधिः] शास्त्रम्, अनुष्ठानं वा, [इष्यते]; वृद्धैरिति शेषः। अत्र स्नातकादीनां पूज्यत्वे गुणो विशेषणगत्या हेतुरिति काव्यलिङ्गभेदः; तदपेक्षया गुणवत्तमत्वमेकस्यैव पूज्यत्वे तथैव हेतुरिति काव्यलिङ्गान्तरमिति सजातीयसङ्करः ॥ ५७ ॥

अत्र कस्तथा सर्वोत्तरः पुमानस्ति? इत्याकाङ्क्षायां कोऽन्यो हरिं विनेत्याह, अत्रेति।—[अत्र] अस्मिन्, [च सकलेऽपि, भूमिदेवनरदेवसङ्गमे] भूमिदेवा ब्राह्मणाः, नरदेवा राजानः, तेषां सङ्गमे, ब्राह्मण-

भूमिदेवनरदेवसङ्गमे
पूर्वदेवरिपुरर्हणां हरिः ॥ ५८ ॥

मर्त्यमात्रमवदीधरद्भवान्
मैनमानमितदैत्यदानवम् ।
अंश एष जनताऽतिवर्त्तिनो
वेधसः प्रतिजनं कृतस्थितेः ॥ ५९ ॥

ध्येयमेकमपथे स्थितं धियः
स्तुत्यमुत्तममतीतवाक्पथम् ।

---

क्षत्रियसमवाये इत्यर्थः ; [ अशेषगुणबन्धुः ] अशेषगुणानां बन्धुः सुहृत्, सर्वगुणाढ्य इत्यर्थः । असाधारणगुणानाह, पूर्वेति ।—[ पूर्वदेवरिपुः ] पूर्वदेवाः सुरद्विषः, तेषां रिपुर्हन्ता, [एषः, हरिः] कृष्णः, [अर्हणां] पूजां, [अर्हति] प्राप्नोति, इति [मां, प्रति] अधिकृत्य [भाति] मम प्रतिभातीत्यर्थः ; अन्ये तु नार्हन्तीत्यपि सिद्धमिति भावः । अत्र तत्रान्येषु च प्रसक्तायां पूजायां हरावेव नियमात् परिसंख्याऽलङ्कारः ;—'एकस्य वस्तुनः प्राप्तावनेकत्रैकधा यदा । एकत्र नियमः सा हि परिसंख्या निगद्यते ॥' इति लक्षणात् ॥ ५८ ॥

ननु तस्मिन् ब्राह्मणक्षत्रियसमूहे कथमस्यैव पूज्यत्वम् ? इत्याशङ्क्य सर्वोत्तमत्वादित्याशयेनाऽऽसर्गसमाप्तेरेनं स्तौति, मर्त्येत्यादि ।—[ आनमितदैत्यदानवम् ] आनमिताः प्रह्वीकृताः, दैत्याः दितिसुताः, दानवाः दनुसुताश्च येन तम्, [ एनं ] हरिं, [ भवान्, मर्त्यमात्रं ] मनुष्यमात्रं, [ माऽवदीधरत् ] न जानीयात् । "शेषे प्रथमः" ( १।४।१०८ पा० ) इति प्रथमपुरुषः ; कुतः ?—[ एषः ] कृष्णः, [ जनताऽतिवर्त्तिनः ] सर्वलोकातीतस्य, [ प्रतिजनं कृतस्थितेः ] सर्वभूतान्तर्यामिण इत्यर्थः । [ वेधसः ] परमात्मनः, [ अंशः ] कला ; अतो न मर्त्यमात्रमित्यर्थः ; अत एव वाक्यहेतुकं काव्यलिङ्गम् ॥ ५९ ॥

आमनन्ति यमुपास्यमादरा-
द्दूरवर्त्तिनमतीव योगिनः ॥ ६० ॥
पद्मभूरिति सृजन् जगद्रजः
सत्त्वमच्युत इति स्थितिं नयन् ।
संहरन् हर इति श्रितस्तम-
स्त्रैधमेष भजति त्रिभिर्गुणैः ॥ ६१ ॥

---

पुनरपि अमानुषत्वमेव व्यनक्ति, ध्येयमिति ।—[ योगिनः ] नारदादयः, [ एकम् ] अद्वितीयम्, [ उत्तमं ] सर्वोत्तमं, [ यम् ] एनं, [ ध्येयं ] ध्यातव्यम् । एकार्थगोचरात्मधारणं ध्यानं, तदर्हमित्यर्थः । तथाऽपि [ धियः ] ज्ञानस्य, [ अपथे ] अमार्गे, [ स्थितं ]; तदगोचरमित्यर्थः । "पथो विभाषा" ( ५।४।७२ पा० ) इति समासान्तः, "अपथं नपुंसकम्" ( २।४।३० पा० ) इति नपुंसकम् । [ आमनन्ति ] कथयन्ति । "पाघ्रा—" ( ७।३।७८ पा० ) इत्यादिना म्नाधातोर्मनादेशः । [ स्तुत्यं ] स्तोतुमर्हं, तथाऽपि [ अतीतवाक्पथं ] अतीतो वाक्पथो येन तम्, अवाङ्मनसगोचरमित्यर्थः । 'यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सह' ( तैत्ति० उप० २ वल्ली० ४।९ अनु० १ मन्त्रः ) इति श्रुतेः । आमनन्ति । [ आदरात् ] आस्थया, [ उपास्यं ] सेव्यम् । तथाऽपि [ अतीव ] अत्यन्तम् । अतीवेति निपातसमुदायोऽत्यन्तार्थेऽव्ययम् । [ दूरवर्त्तिनम् ] आमनन्ति । यमेनमचिन्त्यरूपमामनन्ति, तमेनं मर्त्त्यमात्रं माऽवदीश्वरदिति पूर्वेणान्वयः । अवाङ्मनसगोचरत्वदूरवर्त्तित्वानां ध्येयत्वस्तुत्यत्वोपास्यत्वैः सह विरोधस्य हरेरचिन्त्यमहिमत्वेन समाधानाद्विरोधाऽऽभासोऽलङ्कारः ॥ ६० ॥

ननु हरिहरहिरण्यगर्भास्त्रयो देवाः सर्वोत्तरमहिमानः सन्ति, एनं न जानीमः ? इत्यतः आह, पद्मभूरिति ।—[ एषः ] हरिः, [ रजः ] रजोगुणं, [ श्रितः जगत् सृजन्, पद्मभूः ] ब्रह्मा, [ इति, सत्त्वं ]

सर्ववेदिनमनादिमास्थितं
देहिनामनुजिघृक्षया वपुः ।
क्लेशकर्मफलभोगवर्जितं
पुंविशेषममुमीश्वरं विदुः ॥ ६२ ॥

---

सत्त्वगुणं, श्रितः जगत् [ स्थितिं नयन् ] स्थापयन्, [ अच्युतः ] विष्णुः, [ इति, तमः ] तमोगुणं, श्रितः जगत् [ संहरन् हर इति, त्रिभिः गुणैः ] सत्त्वरजस्तमोभिः, [ त्रैधं ] त्रैविध्यं, [ भजति ]। "द्वित्र्योश्च धमुञ्" ( ५।३।४५ पा० ) इति विधार्थे धमुञ्प्रत्ययः। अस्यैव गुणभिन्नास्तास्तिस्रोऽपि मूर्त्तयः, इत्ययमेव सर्वोपास्य इति भावः। अत्र सत्त्वादिगुणयोगस्य सृष्ट्यादिगुणयोगस्य च विशेषणगत्या त्रैविध्यहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ६१ ॥

तर्हि कीदृशमस्य स्वरूपम् ?—कुतो वा मानुषविग्रहः ? इत्यपेक्षायामुभयं निरूपयन्नाह, सर्वेति ।—[अमुं] कृष्णं, [सर्ववेदिनं] सर्वज्ञमित्यर्थः ; अत एव [ अनादिम् ] आदिरहितम्, अनादिनिधनमित्यर्थः ; तथाऽपि [ देहिनां ] प्राणिनाम्, [ अनुजिघृक्षया ] अनुग्रहीतुमिच्छया, भूभारावतरणार्थमित्यर्थः। ग्रहेः सन्नन्तात् स्त्रियाम् "अप्रत्ययात्" ( ३।३।१०२ पा० ) इति अप्रत्यये टाप्। [ वपुराश्रितं ] मानुषविग्रहमाश्रितं, न कर्माऽऽरब्धशरीरभाजमित्यर्थः ; अत एव [ क्लेशकर्मफलभोगवर्जितं ] क्लेशाः पञ्च क्लेशाः, अविद्याऽस्मितारागद्वेषाभिनिवेशाख्याः, कर्माणि पुण्यपापानि, तेषां फले सुखदुःखे, तयोर्भोगोऽनुभवः तेन, क्लेशैश्च वर्जितं, तैरसंस्पृष्टमित्यर्थः। [ ईश्वरम् ] ईश्वरशब्दितं, [ पुंविशेषं ] जीवलक्षणं पुरुषविशेषं, परमपुरुषं वा, [ विदुः ] विदन्ति, सन्त इति शेषः। "विदो लटो वा" (३।४।८३ पा०) इति झेरुसादेशः। अत्राकर्माऽऽरब्धत्वात् नित्यज्ञानत्वादिविरोधसमर्थनाद्विरोधाऽऽभासोऽलङ्कारः ; तेषामेव गुणानां विशेषणगत्या पुंविशेषहेतुत्वात् काव्यलिङ्गमिति सङ्करः ॥६२॥

भक्तिमन्त इह भक्तवत्सले
सन्ततस्मरणरीणकल्मषाः।
यान्ति निर्वहणमस्य संसृति-
क्लेशनाटकविड़म्बनाविधेः॥ ६३ ॥

ग्राम्यभावमपहातुमिच्छवो
योगमार्गपतितेन चेतसा।
दुर्गमेकमपुनर्निवृत्तये
यं विशन्ति वशिनं मुमुक्षवः॥ ६४ ॥

---

एवं हरेः स्वरूपं निरूप्य तदुपासनात् फलं युग्मेनाह, भक्तिमन्त इति।—[ भक्तवत्सले ] भक्तप्रिये, [ इह ] अस्मिन् हरौ, [ भक्तिमन्तः ] अनुरागवन्तो जनाः। पूज्येषु अनुरागो भक्तिः। [ अस्य ] अनुभूयमानस्य कृष्णस्य, [ सन्ततस्मरणरीणकल्मषाः ] सन्ततं सततं, तत्स्मरणेन निरन्तरध्यानेन, रीणकल्मषाः क्षीणपापाः सन्तः। 'रीङ् क्षये'। "ल्वादिभ्यः" ( ८।२।४४ पा० ) इति निष्ठानत्वम्। [ संसृतिक्लेशनाटक-विड़म्बनाविधेः ] संसृतिः संसारः, तस्य क्लेशः दुःखं, तदेव नाटकम्, इति रूपकम्। तस्य विड़म्बनाविधिरभिनयस्तस्य, [ निर्वहणं ] समाप्तिं, [ यान्ति ], मुच्यन्ते इत्यर्थः। "तमेवं विद्वानमृत इह भवति" इति श्रुतेरिति भावः॥ ६३ ॥

ग्राम्येति।—[ ग्राम्यभावं ] ग्रामे भवाः ग्राम्याः प्राकृताः, मूढ़ा इति यावत्। "ग्रामाद्यखञौ" (४।२।९४ पा०) इति यप्रत्ययः। तेषां भावस्तम्, [अपहातुं] मोक्तुम्, [ इच्छवः, मुमुक्षवः ] मोक्षार्थिनः, [ अपुन-र्निवृत्तये ] अपुनरावृत्तये, पुनरावृत्त्यभावाय इत्यर्थः, मोक्षाय इति यावत्। * दुःखेन गम्यते इति [ दुर्गं ] दुष्प्रापम्, [ एकम् ] एवाद्वितीयं,

---

* "एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते" (छान्दो० ४अध्या० १५ख०

आदितामजननाय देहिना-
मन्ततां दधतेऽनपायिने ।
बिभ्रते भुवमधः सदाऽथ च
ब्रह्मणोऽप्युपरि तिष्ठते नमः ॥ ६५ ॥

v. imp. केवलं दधति कर्तृवाचिनः
प्रत्ययानिह न जातु कर्मणि ।

---

[ वशिनं ] स्वतन्त्रं, [ यं ] हरिं, [योगमार्गपतितेन] ध्यानमार्गनिविष्टेन । 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । [ चेतसा विशन्ति ], ध्यायन्तीत्यर्थः । यं विशन्ति इह भक्तिमन्तः इति पूर्वेणान्वयः ॥ ६४ ॥

अथ भक्त्युद्रेकान्नमस्करोति, आदितामिति ।—[देहिनां] प्राणिनाम्, [ आदितां ] कारणताम् । अन्तोऽन्तकरो नाशहेतुः । "तत्करोति—" ( ग० ) इति ण्यन्तादन्तयतेः पचाद्यच् । तस्य भावस्तत्ताम् [ अन्ततां च दधते ] । 'यतो वा इमानि भूतानि जायन्ते' ( तैत्ति० उप० ३ वल्ली० १ अनु० ) इत्यादि श्रुतेः । स्वयम् [ अजननाय ] जन्मरहिताय । अपायोऽस्यास्तीत्यपायी, स न भवतीत्यनपायी तस्मै [ अनपायिने ] नाशरहिताय च, कालतोऽपरिच्छिन्नायेत्यर्थः । देशतोऽपि तथेत्याह ।—[ सदा, अधः ] पाताले, [ भुवं, बिभ्रते ] कूर्मरूपेण दधते इत्यर्थः, [ अथ च ] तथैव, [ ब्रह्मणः ] लोकस्य, [अप्युपरि तिष्ठते], सर्वव्यापिने इत्यर्थः । तस्मै हरये इति शेषः । [ नमः ] नमस्कारः । "नमःस्वस्ति—" ( २।३।१६ पा० ) इत्यादिना चतुर्थी । अत्र हरेरनादिनिधनत्वेन तद्वतः पुरुषान्तरादाधिक्यवर्णनाद्व्यतिरेकालङ्कारः ॥ ६५ ॥

imp. केवलमिति ।—सृजतिश्च संहा च शास्तिश्च [ सृजतिसंहृशास्तयः ] । 'सृज विसर्गे' । 'हृञ् हरणे' सम्पूर्वोऽयम् ; 'शासु अनुशिष्टौ' इत्येते

---

६मन्त्रः ) इति, "तेषामिह न पुनरावृत्तिः" ( बृह० ६अध्या० १ब्रा० १८मन्त्रः ) इति च श्रुतिः ।

धातवः सृजतिसंहृशास्तयः,
स्तौतिरत्र विपरीतकारकः ॥ ६६ ॥
पूर्वमेष किल सृष्टवानप-
स्तासु वीर्य्यमनिवार्य्यमादधौ ।

---

त्तय इत्यर्थः। "इक्श्तिपौ धातुनिर्देशे" (वा०) इति वचनादेवं निर्देशः। [धातवः] "भूवादयो धातवः" (१।३।१ पा०) इत्युक्त-लक्षणाः शब्दविशेषाः। [इह] अस्मिन् भगवति विषये, [केवलम्] अन्ययोगव्यवच्छिन्नं यथा तथा, [कर्तृवाचिनः] कर्तृकारकवाचकान्, [दधति] तदन्ता एव भवन्तीत्यर्थः। [जातु] कदाचित्, [कर्म्मणि प्रत्ययान्] कर्मार्थविहितान् यगादीन्, [न] दधति, न तदन्ता भवन्ती-त्यर्थः। सर्वकर्तृत्वात् नियन्तृत्वाच्च सृजति स्रष्टा, संहरति संहर्त्ता, शास्ति शासितेत्यादिभिः कर्तृत्वेन निर्दिश्यते, न कदाचित् सृज्यते, संह्रियते, शिष्यते इत्यादिभिः कर्म्मत्वेन; अनादिनिधनत्वादनियम्य-त्वाच्चेति भावः। किञ्च, [अत्र] भगवति, [स्तौतिः]। 'ष्टुञ् स्तुतौ' इति धातुः। विपरीतं कारकं यस्य सः [विपरीतकारकः] स्तूयते स्तुत्य इत्यादिकर्मप्रत्ययान्त एव, न तु कदाचित् स्तौति स्तोता इत्यादिकर्तृप्रत्य-यान्तः; सकललोकस्तुत्यस्य तस्य स्तुत्यान्तराभावादित्यर्थः। अत्र शब्दानां कर्म्मकर्तृप्रत्ययविधिनिषेधद्वारा विभक्त्यन्तरेण सर्वकर्तृत्व-सर्वोपास्यत्वादिसूक्ष्मार्थबोधपरत्वात् सौक्ष्म्याख्यो गुणः;—'अन्तः सङ्कल्प-रूपत्वं शब्दानां सौक्ष्म्यमुच्यते' इति लक्षणात्। अत्र भगवतः सृष्ट्या-दिकर्तृकर्मत्वोभयप्राप्तावेकत्रैकनियमात् परिसङ्ख्या। तत्र जातु कर्म्मणीति शब्दादेव कर्म्मत्वनिषेधादितरनिवृत्तिः स्तौतिशब्दात् स्तुतौ कर्तृत्वनिवृत्तिरार्थीति भेदद्वयसंसर्गः; अनया च भगवतः पुरुषा-न्तराधिक्यप्रतीतेर्व्यतिरेकश्च प्रतीयते इत्यलङ्कारेणालङ्कारध्वनिः ॥६६॥

पूर्वमिति।—[एषः] हरिः, [पूर्वं] प्रथमम्, [अपः सृष्टवान्। किल] इत्यैतिह्ये। [तासु] अप्सु, [अनिवार्य्यं, वीर्य्यं] रेतः। 'शुक्रं तेजो-

तच्च कारणमभूद्धिरण्मयं
ब्रह्मणोऽसृजदसाविदं जगत् ॥ ६७ ॥
मत्कुणाविव पुरा परिप्लवौ
सिन्धुनाथशयने निषेदुषः ।
गच्छतः स्म मधुकैटभौ विभो-
र्यस्य नैद्रसुखविघ्नतां क्षणम् ॥ ६८ ॥

---

रेतसी च बीजवीर्य्येन्द्रियाणि च' इत्यमरः। [ आदधौ ] आहितवान्, [ तत् ] वीर्य्यं, [च] तु ; हिरण्यस्य स्वर्णस्य विकारः [हिरण्मयम्]। "दाण्डिनायन—" ( ६।४।२७४ पा० ) इत्यादिना निपातः। [ ब्रह्मणः ] चतुर्मुखस्य, [ कारणमभूत् ] ब्राह्ममण्डं जातमित्यर्थः। [ असौ ] तदुत्पन्नो ब्रह्मा, [ इदं जगदसृजत् ]; सर्वस्यापि प्रपञ्चस्यायमेव मूलकारणमिति भावः। अत्र मनुः,—"अप एव ससर्ज्जाऽऽदौ तासु बीजमवासृजत्॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥" इति (१म अध्या० ८।९ श्लोकौ)। अत्र वीर्य्यमनिवार्य्यमिति वृत्त्यनुप्रासः॥ ६७॥

अथैनं त्रिभिः विशिनष्टि, मत्कुणाविवेत्यादिना।—[ पुरा ] पूर्वं, [ परिप्लवौ ] चञ्चलौ, मुहुरितस्ततश्चलन्तावित्यर्थः। 'चञ्चलं चपलं तूर्णं पारिप्लवपरिप्लवे' इत्यमरः। [ मधुकैटभौ ] असुरविशेषौ, [ मत्कुणौ] सुप्तासृक्पायिनो मलोद्भवौ कीटविशेषौ, तौ [ इव ] इत्युपमा। [ सिन्धुनाथशयने ] सिन्धुनाथः सरित्पतिः, स एव शयनं तत्र, [ निषेदुषः ] निषण्णस्य, समुद्रशायिन इत्यर्थः। "भाषायां सदवसश्रुवः" ( ३।२।१०८ पा० ) इति लिटः क्वसुरादेशः। [ विभोः ] प्रभोः, [ यस्य ] हरेः, [ क्षणं, नैद्रसुखविघ्नतां ] निद्रायाः सम्बन्धिनः आगतं वा नैद्रं, यत् सुखं, तस्य विघ्नतां विघातं कर्त्तुमित्यर्थः, [ गच्छतः स्म ] गतौ। तादृशा-

श्रौतमार्गसुखगानकोविद-
ब्रह्मषट्चरणगर्भमुज्ज्वलम् ।
श्रीमुखेन्दुसविधेऽपि शोभते
यस्य नाभिसरसीसरोरुहम् ॥ ६९ ॥

सत्यवृत्तमपि मायिनं जगद्-
वृद्धमप्युचितनिद्रमर्भकम् ।
जन्म बिभ्रतमजं नवं बुधा
यं पुराणपुरुषं प्रचक्षते ॥ ७० ॥

---

वपि महाऽसुरौ मत्कुणाविव क्षणमात्रेण प्रनष्टाविति भगवतः प्रभावातिशयोक्तिः । एषां त्रयाणां पूर्वेण अन्वयः ॥ ६८ ॥

श्रौतेति ।—[ श्रौतमार्गसुखगानकोविदब्रह्मषट्चरणगर्भं ] श्रौतमार्गस्य सुखं सुखकरं, यद्गानं तस्य कोविदोऽभिज्ञः । कोविदो व्याख्यातः । * स चासौ ब्रह्मा च, स एव षट्चरणः, स गर्भे यस्य तत्, [ उज्ज्वलं ] निर्मलं, [यस्य] हरेः, [नाभिसरसीसरोरुहं] नाभिरेव सरसी सरः । 'कासारः सरसी सरः' इत्यमरः । तस्यां सरोरुहं पद्मं, [ श्रीमुखेन्दुसविधे ] श्रियो मुखमिवेन्दुस्तस्य सविधे सन्निधौ, समीपे इत्यर्थः, [ अपि शोभते ], इति विरोधः ; स च श्रीमुखस्य इन्दुत्वरूपणायत्त इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ६९ ॥

सत्येति ।—[ यं ] हरिं, [ सत्यवृत्तम् ] अकपटचरितम्, [ अपि, मायिनं ] मायाविनं, कपटवन्तमित्यर्थः, इति विरोधः । माया नाम शक्तिः तद्वन्तमित्यविरोधः । व्रीह्यादित्वादिनिप्रत्ययः । [ जगद्वृद्धं ] सर्वलोकपितामहत्वात् स्थविरम्, [अपि] । 'प्रवयाः स्थविरो वृद्धः' इत्यमरः । [ उचितनिद्रं ] परिचितयोगनिद्रम्, [ अर्भकं ] डिम्भम् । 'वटस्य

---

* अस्मिन्नेव सर्गे ५४ संख्यकश्लोकस्य व्याख्या द्रष्टव्या ।

स्कन्धधूननविसारिकेशर-
च्छिन्नसागरमहाप्लवामयम् ।
उद्धृतामिव मुहूर्त्तमैक्षत
स्थूलनासिकवपुर्वसुन्धराम् ॥ ७१ ॥

---

पलस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि' इत्यागमवचनादिति भावः। 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः। [ अजं ] न जायत इत्यजो जन्मरहितः। "अन्येभ्योऽपि दृश्यते" * इति जनेर्डप्रत्ययः। तमपि, [ जन्म बिभ्रतम् ]। कामवशात् कृष्णादिजन्मभाजमित्यर्थः। [नवं] रमणीयत्वादभिनवं, तथाऽपि [ पुराणपुरुषं ] पुराणं प्राचीनम्, अनादिञ्च, पुरुषं, [ प्रचक्षते बुधाः ] इति वाक्यं सर्वत्र सम्बध्यते। सर्वेऽपि विरोधा हरेरचिन्त्यमहिमत्वेन आभास्या इति विरोधाऽऽभासचतुष्टयसंसृष्टिः ॥ ७० ॥

अथ षोड़शभिः अवतारान् वर्णयिष्यन् वराहावतारं तावदेकेनाह, स्कन्धेति।—[ स्थूलनासिकवपुः ] वराहमूर्त्तिः, [ अयं ] हरिः, [ स्कन्धधूननविसारिकेशरच्छिन्नसागरमहाप्लवां ] स्कन्धस्य कन्धरायाः, धूननेन कम्पनेन, विसारिभिरुत्सर्पिभिः, केशरैः सटाभिः, छिन्नोऽवकीर्णः, सागरस्य महाप्लवो महापूरः यस्यास्ताम् ; जलापसारेण प्रकाशितामित्यर्थः। [वसुन्धरां] भुवं, [मुहूर्त्तं] क्षणमात्रम्। 'मुहूर्त्तमल्पकालेऽपि' इति शब्दार्णवे। [ उद्धृताम् ] अनावृतत्वात् सागरादुत्क्षिप्ताम्, [ इव, ऐक्षत ] प्रेक्षितवान्, इत्युत्प्रेक्षा। ईक्षतेर्लङि "आड़जादीनाम्" ( ६।४।७२ पा० ) इत्याट्, "आटश्च" ( ६।१।९० पा० ) इति वृद्धिः ॥ ७१ ॥

---

* अत्र "अन्येष्वपि दृश्यते" (३।२।१०१ पा०) इति सूत्रेणैव डप्रत्ययः सङ्गतः ; "अन्येभ्योऽपि दृश्यते" इति पाठस्तु प्रामादिकः ; यतः पूर्वसूत्रे सप्तमीनिर्देशात् उपपदान्तरमाश्रितं "अजम्" इत्यत्र तस्यैव उपयोगः पञ्चमीनिर्देशेन धात्वन्तरमाश्रितम्, अत्र तु तदनुपयोगः इति।

दिव्यकेशरिवपुः सुरद्विषो-
नैव लब्धश्रममायुधैरपि।
दुर्निवाररणकण्डु कोमलै-
र्वक्ष एष निरदारयन् नखैः ॥ ७२ ॥

वारिधेरिव कराग्रवीचिभि-
र्दिग्गतङ्गजमुखान्यभिघ्नतः।
यस्य चारुनखशुक्तयः स्फुर-
न्मौक्तिकप्रकरगर्भतां दधुः ॥ ७३ ॥

---

द्वाभ्यां नृसिंहावतारमाह, दिव्येति।—[ दिव्यकेशरिवपुः ] दिव्यसिंहमूर्त्तिः। [ एषः ] हरिः, [ आयुधैः ] वज्रादिभिः, [ अपि, नैव लब्धश्रमम् ] अप्राप्तश्रान्ति, [ दुर्निवाररणकण्डु ] दुर्निवारा दुर्जया, रणकण्डूर्यस्य तत्, रणव्यसनीत्यर्थः। "गोस्त्रियोरुपसर्जनस्य" ( १।२।४८ पा० ) इति ह्रस्वः। [ सुरद्विषः ] हिरण्यकशिपोः, [ वक्षः कोमलैर्नखैः, निरदारयत् ] अभिनत्। वज्राद्यभेद्यस्य कोमलनखविदार्य्यत्वं भगवत्प्रभावादिति विरोधाभासोऽलङ्कारः ॥ ७२ ॥

वारिधेरिति।—[ कराग्रवीचिभिः ] कराग्राणि वीचय इवेत्युपमितसमासः। वारिधेरिवेति लिङ्गात्। ताभिः कराग्रवीचिभिः, दिगन्तवितताभिरिति भावः; अत एव [ दिग्गतङ्गजमुखानि ] दिग्गतङ्गजानां मुखानि, [ अभिघ्नतः ] रोषातिरेकात् प्रहरतः, [ यस्य ] सिंहमूर्त्तेर्हरेः, [ वारिधेरिव, चारुनखशुक्तयः ] चारुनखाः शुक्तय इव। पूर्ववत् उपमितसमासः। [ स्फुरन्मौक्तिकप्रकरगर्भतां ] स्फुरन्मौक्तिकप्रकरो दिग्गजकुम्भसम्भूतमुक्ताव्रातः, गर्भेऽन्तरगतो यासां तासां भावस्तत्ता तां, [ दधुः ]। एष निरदारयदिति पूर्वेण अन्वयः। एतेन नरहरिक्रोधस्य महाऽसुरेऽपि न पर्य्याप्तिरिति व्यज्यते इति वस्तुना वस्तुध्वनिः। उपमाऽलङ्कारः ॥ ७३ ॥

दीप्तिनिर्जितविरोचनादयं
गां विरोचनसुतादभीप्सतः ।
आत्मभूरवरजाखिलप्रजः
स्वर्पतेरवरजत्वमाययौ ॥ ७४ ॥

किं क्रमिष्यति किलैष वामनः !!
यावदित्थमहसन् न दानवाः ।
तावदस्य न ममौ नभस्तले
लङ्घितार्कशशिमण्डलः क्रमः ॥ ७५ ॥

---

अथ चतुर्भिर्वामनावतारमाह, दीप्तीत्यादि ।—आत्मना भवतीति [ आत्मभूः ] स्वयम्भूरपि । [ अवरजाखिलप्रजः ] अवरजाश्चरमजाः, अखिलाः प्रजा जना यस्य सोऽपि, सर्वज्येष्ठोऽपि इत्यर्थः ; [ अयं ] हरिः, [दीप्तिनिर्जितविरोचनात्] ज्योतिर्विजितमार्त्तण्डात्, [ विरोचनसुतात् ] विरोचनः प्रह्लादपुत्रः । 'विरोचनोऽर्के दहने चन्द्रे प्रह्लादनन्दने' इत्युभयत्रापि विश्वः । तस्य सुतात्, बलेरित्यर्थः, [गां] भुवम्, [अभीप्सतः] प्राप्तुमिच्छतः, अभ्याहर्त्तुमिच्छतः इत्यर्थः । सनन्तादाप्नोतेर्लटः शत्रादेशः ॥ [ स्वर्पतेरवरजत्वम्] इन्द्रानुजत्वम्, [आययौ] । बलिध्वंसनार्थमिति शेषः । लोकानुग्रहार्थिनः किं न कुर्वन्ति ? इति भावः । अत्राजत्वावरजत्वसामानाधिकरण्यविरोधो भगवत्प्रभावादाभासीकृत इति विरोधाऽऽभासोऽलङ्कारः ॥ ७४ ॥

किमिति ।—[ एषः, वामनः ] खर्वः । 'खर्वो ह्रस्वश्च वामनः' इत्यमरः । [ किं क्रमिष्यति किल !! इत्थम् ] अनेन प्रकारेण, [ दानवा यावत् नाहसन्, तावत् ] ततः प्रागेव, [लङ्घितार्कशशिमण्डलः] लङ्घिते अतिक्रान्ते, अर्कशशिमण्डले येन सः, [अस्य] हरेः, [ क्रमः ] पादविक्षेपः, [ नभस्तले, न ममौ ] न परिमाणं गतवान् ; यथा न माति तथा ववृधे

गच्छताऽपि गगनाग्रमुच्चकै-
र्यस्य भूधरगरीयसाऽङ्घ्रिणा।
क्रान्तकन्धर इवाबलो बलिः
स्वर्गभर्त्तुरगमत् सुबन्धताम् ॥ ७६ ॥

क्रामतोऽस्य ददृशुर्दिवौकसो
दूरमूरुमलिनीलमायतम्।
व्योम्नि दिव्यसरिदम्बुपद्धति-
स्पर्द्धयेव यमुनौघमुत्थितम् ॥ ७७ ॥

---

इत्यर्थः। अत्राऽऽधारात् नभस्तलादाधेयस्य क्रमस्य आधिक्यकथना-दधिकालङ्कारभेदः ;—'आश्रयाऽऽश्रयिणोराधिक्यमधिकम्' इति लक्षणात् ॥ ७५ ॥

गच्छतेति।—[ गगनाग्रं ] गगनोपरिभागं, [ गच्छताऽपि ] इति विरोधः। [भूधरगरीयसा] भूधरवद्गरीयसा, इत्युपमा। [यस्य] वामनस्य, [ उच्चकैः ] उन्नतेन, [ अङ्घ्रिणा, क्रान्तकन्धरः ] अवष्टब्धकण्ठः, [ इव, अबलः] दुर्बलः, [बलिः] वैरोचनिः, [स्वर्गभर्त्तुः] इन्द्रस्य, [सुबन्धतां] सुखेन बध्यते इति सुबन्धः। "ईषद्दुःसुषु—" ( ३।३।१२६ पा० ) इत्यादिना खल्प्रत्ययः। तत्ताम्, [अगमत्] ; गुरुद्रव्यावष्टब्धकण्ठो हि सुखेन बध्यते इति भावः। "न लोका—" (२।३।६९ पा०) इत्यादिना कृद्योगलक्षणाया एव षष्ठ्या निषेधात् स्वर्गभर्त्तुरिति शेषे षष्ठी। अत्र क्रान्तकन्धर इवेत्युत्प्रेक्षाया भूधरगरीयसेत्युपमासापेक्षत्वात् सङ्करः। विरोधेन त्वनपेक्षिता संसृष्टिः ॥ ७६ ॥

क्रामत इति।—[ क्रामतः ] पादं विक्षिपतः, [ अस्य ] सम्बन्धिनं, [ दूरमायतम्, अलिनीलं ] भृङ्गश्यामम्, [ ऊरुं ] सक्थि, [ दिवौकसः ] देवाः, [ व्योम्नि, दिव्यसरिदम्बुपद्धतिस्पर्द्धया ] दिव्यसरितो मन्दा-

यस्य किञ्चिदपकर्त्तुमक्षमः
कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाऽऽकृतिं कृती
राहुरिन्दुमधुनाऽपि बाधते ॥ ७८ ॥
सम्प्रदायविगमादुपेयुषो-
रेष नाशमविनाशिविग्रहः ।

---

किन्याः, अम्बुपद्धत्या जलप्रवाहेण, * स्पर्द्धया, [ उत्थितम् ] ऊर्द्ध्वतः प्रवृत्तं, [ यमुनौघं ] यमुनाप्रवाहम्, [ इव ददृशुः ] इत्युत्प्रेक्षेयमुपमासङ्कीर्णा ॥ ७७ ॥

अवतारान्तरमाह, यस्येति ।—[ कायनिग्रहगृहीतविग्रहः ] कायनिग्रहेण अमृतविभागकाले देहच्छेदेन, गृहीतविग्रहो बद्धवैरः, [ कृती ] कुशली, [राहुः, यस्य] हरेः, [किञ्चिदपकर्त्तुमक्षमः] सन्, [कान्तवक्त्रसदृशाऽऽकृतिं] कान्तं रम्यं, यद्वक्त्रं हरिमुखं, तेन सदृशी आकृतिर्यस्य तम् ; तत्सुहृदमित्यर्थः । [इन्दुम् अधुनाऽपि, बाधते ] पीड़यति ; उपरागमिषेणेति भावः । * अत्र साक्षात्प्रतिपक्षहरिनिग्रहाशक्त्या राहोस्तदीयेन्दुनिग्रहोक्त्या प्रत्यनीकालङ्कारः । तथा च सूत्रम् ;—'प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकम्' इति ॥ ७८ ॥

दत्तात्रेयावतारमाह, सम्प्रदायेति ।—[ अविनाशिविग्रहः ] अनपायस्वरूपः, अत एव [ अप्रतिहतस्मृतिः ] अप्रतिहता स्मृतिः स्मरण-

---

* "स्पर्द्धते जयति द्वेष्टि" इति काव्यादर्शोक्तेः स्पर्द्धाशब्दस्य सादृश्यवाचकत्वात् "पूर्वसदृशसमोनार्थ—" ( २।१।३१ पा॰ ) इति सूत्रेण तृतीयासमासः ।

* पुरा किल मथितसमुद्रात् उत्थितेऽमृते, कलहायमानेषु देवासुरेषु असुरान् वञ्चयित्वा देवान् अमृतं पाययता मोहिनीमूर्त्तिधारिणा नारायणेन शशिदिवाकरप्रदर्शितस्य देवसङ्घमध्यगतस्य देवतारूपधारिणो राहोः शिरः छेदयाञ्चक्रे इति पौराणिकी वार्त्ता ।

स्मर्त्तुमप्रतिहतस्मृतिः श्रुती-
र्दत्त इत्यभवदत्रिगोत्रजः ॥ ७९ ॥
रेणुकातनयतामुपागतः
शातितप्रचुरपत्त्रसंहति।
लूनभूरिभुजशाखमुज्झित-
च्छायमर्जुनवनं व्यधादयम् ॥ ८० ॥

---

शक्तिर्यस्य सः, [ एषः ] हरिः, [ सम्प्रदायविगमात् ] सम्प्रदायः उपदेश-परम्परा, तस्य विगमात् अपायात्, [ नाशं ] कालदोषादध्ययनविच्छेदम्, [ उपेयुषीः ] प्राप्ताः। "उगितश्च" ( ४।१।६ पा० ) इति ङीप्। [ श्रुतीः ] वेदान्। 'श्रुतिः स्त्री वेद आम्नायः' इत्यमरः। [ स्मर्त्तुं ], श्रुतिसम्प्रदायं प्रवर्त्तयितुमित्यर्थः; [ दत्त इति ] विख्यात इति शेषः। अत्रिगोत्रे जातः [ अत्रिगोत्रजोऽभवत् ]; दत्तात्रेयोऽभूदित्यर्थः। अत्रानपायित्वस्मृत्यप्रतिघातयोर्विशेषणगत्या श्रुतिस्मृतिहेतुत्वोक्त्या काव्यलिङ्गम् ॥ ७९ ॥

परशुरामावतारमाह, रेणुकेति।—[ अयं ] हरिः, [रेणुकातनयतां] परशुरामत्वम्, [ उपागतः ] सन्, [ अर्जुनवनम् ] अर्जुनः कार्त्त-वीर्य्यार्जुनः। 'अर्जुनः ककुभे पार्थे कार्त्तवीर्य्यमयूरयोः' इत्यनेकार्थेऽपि रेणुकेयविरोधित्वात् निश्चयः। तदुक्तं हरिणा,—'संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः। सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः'॥ इति। स एव वनं तत्, [ शातितप्रचुरपत्त्र-संहति ] शातिता छिन्ना, प्रचुरा प्रभूता, पत्त्रसंहतिः वाहनसमूहः, पर्ण-सङ्घातश्च यस्य तत्। 'पत्त्रं स्याद्वाहने पर्णे' इति विश्वः। [ लूनभूरि-भुजशाखं ] लूनाश्छिन्नाः, भूरयः प्रचुराः, भुजा एव शाखा यस्य तत्, [ उज्झितच्छायम् ] उज्झिता छाया कान्तिः, अनातपश्च यस्य तत्, तथा

एष दाशरथिभूयमेत्य च
ध्वंसितोद्धतदशाननामपि
राक्षसीमकृत रक्षितप्रज-
स्तेजसाऽधिकविभीषणां पुरीम् ॥ ८१ ॥

निष्प्रहन्तुममरेशविद्विषा-
मर्थितः स्वयमथ स्वयम्भुवा ।
सम्प्रति श्रयति सूनुतामयं
कश्यपस्य वसुदेवरूपिणः ॥ ८२ ॥

---

[ व्यधात् ] विहितवान् । दधातेर्लुङि "गातिस्था—" ( २।४।७७ पा० ) इत्यादिना सिचो लुक् । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । अत्र समस्तवस्तुविषयं सावयवं रूपकं व्यक्तं, तच्च छायेति पत्नेति च श्लेषप्रतिभोत्थापिताभेदातिशयोक्त्याऽनुप्राणितमिति सङ्करः ॥ ८० ॥

रामावतारमाह, एष इति ।—[च] किञ्चेति चार्थः । [ रक्षितप्रजः, एषः] हरिः ; दशरथस्यापत्यं पुमान् दाशरथी रामः । "अत इञ्" (४।१।९५ पा०) । तस्य भावः [दाशरथिभूयं] रामत्वम् । "भुवो भावे" ( ३।१।१०७ पा० ) इति क्यप् । [एत्य] प्राप्य । [ध्वंसितोद्धतदशाननां] ध्वंसितो हतः, उद्धतो दृप्तः, दशाननो रावणो यस्यां ताम्, [ अपि, राक्षसीं ] रक्षःसम्बन्धिनीं, [पुरीं] लङ्कां, [तेजसा] स्ववीर्य्येण, [अधिकविभीषणाम्] अत्यन्तभीषणाम्, [अकृत], इति विरोधः ; भयहेतोरुद्धतस्य रावणस्य ध्वंसनात् अधिको महान्, विभीषणो रावणानुजो यस्यां ताम्, इत्यविरोधः ; अत एव विरोधाऽऽभासोऽलङ्कारः ॥ ८१ ॥

अथ पञ्चभिः प्रस्तुतं कृष्णावतारमाह, निष्प्रहन्तुमिति ।—[ अथ ] रामावतारानन्तरम्, [ अयं ] हरिः, [ अमरेशविद्विषां निष्प्रहन्तुं ]

तात ! नोदधिविलोड़नं प्रति
त्वद्विनाऽथ वयमुत्सहामहे।
यः सुरैरिति सुरौघवल्लभो
वल्लवैश्च जगदे जगत्पतिः॥ ८३ ॥

नाऽऽत्तगन्धमवधूय शत्रुभि-
श्छायया च शमितामरश्रमम्।

---

चैद्यादीन् इन्द्रशत्रून् हन्तुमित्यर्थः। "जासिनिप्रहण—" (२।३।५६ पा०) इत्यादिना कर्मणि षष्ठी। [स्वयम्भुवा] ब्रह्मणा, [स्वयम्] आत्मनैव, [अर्थितः] प्रार्थितः सन्, [सम्प्रति] इदानीं, [वसुदेवरूपिणः] वसुदेवमूर्त्तिधरस्य, [कश्यपस्य, सूनुतां] पुत्रतां, [अयति,] व्रजति ; कृष्णरूपेणेति भावः। अत्र स्वयम्भूप्रार्थनाया विशेषणगत्या वसुदेवपुत्रताप्राप्तिहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ८२ ॥

तातेति।—[सुरौघवल्लभः] सुरगणप्रियः, [जगत्पतिः, यः] हरिः, [सुरैः] देवैः, [वल्लवैः] गोपैः, [च], हे [तात !] जनक ! [न] इति छेदे,—[उदधिविलोड़नं] समुद्रमन्थनं, [प्रति], नो इति छेदे,—दधिविलोड़नं दधिमन्थनञ्च, प्रति, [त्वद्विना] त्वां विहायेत्यर्थः। "पृथग्विना—" (२।३।३२ पा०) इत्यादिना विकल्पात् पञ्चमी। [अथ वयं] न, नो वा, [उत्सहामहे] न क्षमामहे, [इति, जगदे] गदितम्। अत्र हरिवर्णनाङ्गत्वेन सुराणां वल्लवानाञ्च प्रकृतानामेव नोदधिशब्दमूलाभेदाध्यवसायलब्धदध्युदधिविलोड़नक्षमत्वकर्म्मसाम्याद्गम्यौपम्यत्वात् तुल्ययोगिताभेदः, तेन च हरेर्दधिमन्थनकलावदुदधिमन्थनमपीति वस्तु व्यज्यते इति अलङ्कारेण वस्तुध्वनिः ॥ ८३ ॥

नाऽऽत्तगन्धमिति।—[च] किञ्चेति चार्थः। [यः] हरिः, [शत्रुभिः, अवधूय] अभिभूय, [नाऽऽत्तगन्धम्] अनाघ्रातसौरभमनभिभूतञ्च। 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः। नञर्थस्य नशब्दस्य "सह सुपा"

योऽभिमानमिव वृत्रविद्विषः
पारिजातमुदमूलयद्दिवः ॥ ८४ ॥
यं समेत्य च ललाटलेखया
बिभ्रतः सपदि शम्भुविभ्रमम् ।
चण्डमारुतमिव प्रदीपव-
च्चेदिपस्य निरवाद्विलोचनम् ॥ ८५ ॥
यः कोलतां वल्लवतांश्च बिभ्रद्
दंष्ट्रामुदस्याऽऽशु भुजांश्च गुर्वीम् ।

---

(२।१।४ पा०) इति समासः। [छायया] अनातपेन,पालनेन च। 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कर्षयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्॥' इति विश्वः। [शमितामरश्रमं] निवारितसुरखेदं, [ पारिजातं, वृत्रविद्विषः ] शक्रस्य, [ अभिमानम् ] अहङ्कारम्, [ इव, दिवः ] स्वर्गात्, [ उदमूलयत् ] उन्मूलितवान्, इति पारिजातहरणोक्तिः। श्लेषसविशेषणेयमुपमेति केचित्, श्लेषवच्चान्ये ॥ ८४ ॥

यमिति।—[च] किञ्चेति चार्थः। ललाटमेव लेखा तया [ ललाटलेखया ] ललाटदेशेन, [शम्भुविभ्रमं] शम्भोः विभ्रमं सौन्दर्य्यं, ललाटलोचनमित्यर्थः। [ बिभ्रतः, चेदिपस्य ] शिशुपालस्य, [विलोचनं] तृतीयनेत्रम्। कर्त्तृ। [ यं ] हरिमेव, [चण्डमारुतं] चण्डमारुतम् [इव समेत्य, प्रदीपवत् ] प्रदीपेन तुल्यम्। "तेन तुल्यम्—" ( ५।१।११५ पा० ) इति वतिप्रत्ययः। [ सपदि, निरवात् ] निर्वाति स्म, नष्टमित्यर्थः। निरपूर्वाद्वाधातोर्लङ्। 'निरवाप' इति क्वाचित्कः पाठः, स न सम्यक्, वातेः प्रक्रियाविरोधादाप्नोतेरसङ्गतार्थत्वादिति। अनेकार्थेयमुपमा ॥ ८५ ॥

य इति।—[ यः ] हरिः, [ कोलतां ] वराहत्वम्। 'वराहः शूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः। [ वल्लवतां ]

मग्नस्य तोयापदि दुस्तरायां
गोमण्डलस्योद्धरणं चकार ॥ ८६ ॥
धन्योऽसि यस्य हरिरेष समक्ष एव
दूरादपि क्रतुषु यज्वभिरिज्यते यः ।
दत्त्वाऽर्घ्यमत्रभवते भुवनेषु यावत्
संसारमण्डलमवाप्नुहि साधुवादम् ॥ ८७ ॥

---

गोपालत्वं, [ च बिभ्रत् । आशु गुर्वीं दंष्ट्रां भुजाञ्च ]; यथासङ्ख्य-मिति भावः । [ उदस्य ] उद्यम्य, [ दुस्तरायां, तोयापदि] जलसङ्कटे, एकत्र,—समुद्रकृतायाम्, अन्यत्र,—वर्षकृतायाञ्च, [मग्नस्य, गोमण्डलस्य] भूगोलस्य धेनुवृन्दस्य च, [ उद्धरणं चकार ]। अत्र कोलत्ववल्लवत्वयोः प्रकृतयोरेव श्लेषमूलाभेदाध्यवसायेन गोमण्डलोद्धरणस्य दंष्ट्राभुजोद्यमनस्य च साम्यादौपम्यगम्यतायां तुल्ययोगिता सती यथासङ्ख्येन सङ्कीर्य्यते । इन्द्रवज्रा वृत्तम् ;—'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणात् ॥ ८६ ॥

एवं देवं स्तुत्वा अनन्तरं कर्त्तव्यमुपदिशति,धन्योऽसीति ।—धनं लब्धः [ धन्यः ] पुण्यवान्, [ असि ]। 'सुकृती पुण्यवान् धन्यः' इत्यमरः । "धनगणं लब्धा" ( ४।४।८४ पा० ) इति यत्प्रत्ययः । [ यस्य ] ते, [ एषः हरिः, समक्ष एव ] अक्ष्णोः समीपे एव, पुरत एवेत्यर्थः ; स्थित इति शेषः । सामीप्येऽव्ययीभावः, "अव्ययीभावे शरत्प्रभृतिभ्यः" ( ५।४।१०७ पा० ) इति समासान्तः ; अत एव "तृतीयासप्तम्योर्बहुलम्" ( २।४।८४ पा० ) इति सप्तम्या अमभावः । अन्यत्र को विशेषः ? तत्राऽऽह ।—[ यः ] हरिः, [ दूरादपि ] परोक्षेऽपि, [ क्रतुषु ] यागेषु, [ यज्वभिः ] विधिवदिष्टवद्भिः । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । "सुयजोर्ङ्वनिप्" ( ३।२।१०३ पा० ) इति ङ्वनिप्प्रत्ययः । [ इज्यते] पूज्यते ; स ते प्रत्यक्ष इति धन्यस्त्वमित्यर्थः । फलितमाह ।—[ अत्र-

भीष्मोक्तं तदिति वचो निशम्य सम्यक्
साम्राज्यश्रियमधिगच्छता नृपेण ।
दत्तेऽर्घे महति महीभृतां पुरोऽपि
त्रैलोक्ये मधुभिदभूदनर्घ एव ॥ ८८ ॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
श्रीकृष्णार्घदानं नाम चतुर्दशः सर्गः ॥ १४ ॥

---

भवते ] पूज्यायेत्यर्थः । 'पूज्यस्तत्रभवान्' इति सज्जनः । "इतराभ्यो-ऽपि दृश्यन्ते" ( ५।३।१४ पा० ) इति सार्वविभक्तिके त्रल्प्रत्यये सुप्सुपा इति समासः । [ अर्घं ] पूजां, [ दत्त्वा यावत् संसारमण्डलं ] वर्त्तते तावदिति शेषः । [ भुवनेषु ], साधुर्वादः शब्दस्तं [ साधुवादं ] साधुसमाख्याम्, [ अवाप्नुहि ] लभस्वेत्यर्थः । अत्र राज्ञो धन्योऽसीति विशेषणगत्या यस्येत्यादिवाक्यार्थहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । वसन्ततिलका वृत्तम् ॥ ८७ ॥

भीष्मेति ।—[ साम्राज्यश्रियं ] 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः । सम्राजो भावः साम्राज्यं, तदेव श्रीस्तां श्रियम्, [ अधिगच्छता ] भजता, [ नृपेण ] युधिष्ठिरेण, [ इति ] इत्थं, [ भीष्मोक्तं तद्वचः सम्यक्, निशम्य ] श्रुत्वा, [ महीभृतां ] राज्ञां, [ पुरः ] अग्रे, [ महति, अर्घे ] पूजायां, [ दत्तेऽपि, मधुभित् ] हरिः ; त्रयो लोकास्त्रैलोक्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः । तत्र [ त्रैलोक्ये], कृष्णः, [अनर्घः] पूजारहितः, [एव अभूत्], इति विरोधः । अमूल्य एवाभूदित्यविरोधः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । अत्रार्घयोरभेदाध्यवसायाद्विरोधः, तदध्यवसायादविरोधः, इति विरोधाऽऽभासोऽलङ्कारः । प्रहर्षिणी वृत्तम् ॥ ८८ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
माघकाव्यव्याख्यायां सर्वङ्कषाऽऽख्यायां चतुर्दशः सर्गः ॥१४॥

## पञ्चदशः सर्गः ।

अथ तत्र पाण्डुतनयेन
सदसि विहितं मधुद्विषः ।
मानमसहत न चेदिपतिः
परवृद्धिमत्सरि मनो हि मानिनाम् ॥ १ ॥

पुर एव शार्ङ्गिणि सवैर-
मथ पुनरमुं तदर्चया ।
मन्युरभजदवगाढतरः
समदोषकाल इव देहिनं ज्वरः ॥ २ ॥

---

अथेति ।—[ अथ ] हरिपूजाऽनन्तरं, [ चेदिपतिः ] शिशुपालः, [ तत्र, सदसि ] सभायां, [ पाण्डुतनयेन ] युधिष्ठिरेण, [ विहितं, मधुद्विषः ] हरेः, [ मानं ] पूजां, [ नासहत ], ईर्ष्यां चकारेत्यर्थः । 'परोत्कर्षाक्षमेर्ष्या स्याद्दौर्जन्यान्मन्युतोऽपि च' इति लक्षणात् । तथा हि,—[ मानिनाम् ] अहङ्कारिणां, [ मनः, परवृद्धिमत्सरि ] परवृद्धौ मत्सरि, [ हि ]; परशुभद्वेषि खल्वित्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । अस्मिन् सर्गे उद्गता वृत्तम् ;—'सजसादिमे सलघुकौ च, नसजगुरुकेष्वथोद्गता । त्र्यङ्घ्रिगतभनजला गयुताः, सजसा जगौ चरममेकतः पठेत् ॥' इति लक्षणात् ॥ १ ॥

पुर इति ।—[ पुरः ] पूर्वम्, [ एव शार्ङ्गिणि, सवैरं ] सक्रोधम्, [ अमुं ] चैद्यम्, [ अथ पुनः ] अतः परं, [ तदर्चया ] हरिपूजया, [ अवगाढतरः ] निविडतरः, [ मन्युः ] क्रोधः ; रौद्ररसस्य स्थायी भाव इति

अभितर्जयन्निव समस्त-
न्नृपगणमसावकम्पयत् ।
लोलमुकुटमणिरश्मि शनै-
रशनैः प्रकम्पितजगत्त्रयं शिरः ॥ ३ ॥
स वमन् रुषाऽस्रु घनघर्म-
विगलदुरुगण्डमण्डलः ।

भावः ; [ देहिनं ] शरीरिणं, [ समदोषकालः ] समौ तुलितौ, दोषः अपथ्यसेवा, कालः कर्मविपाकश्च यस्य सः, [ ज्वर इवाभजत् ]। उपमाऽलङ्कारः ॥ २ ॥

अथाष्टभिरस्य गालाऽऽरब्धक्रोधचेष्टां प्रपञ्चयति, अभीत्यादि ।—[असौ] चैद्यः, [समस्तन्नृपगणमभितर्जयन्निव], इत्युत्प्रेक्षा । 'तर्ज भर्त्सने' चौरादिकस्यानुदात्तत्वेन प्राप्तस्य आत्मनेपदस्य चक्षिङादेशस्य * ख्याञः स्थानिवद्भावानादरेण पुनर्ङित्करणसामर्थ्यादनित्यत्वज्ञापनात् परस्मैपदम् ; अत एव 'तर्जयतीत्यपि दृश्यते कविषु' इति भट्टमल्लः । [अशनैः] अतिमात्रं, प्रकम्पितं जगत्त्रयं येन तत् [ प्रकम्पितजगत्त्रयं ] त्रैलोक्यभीषणं, [ शिरः शनैः, लोलमुकुटमणिरश्मि ] लोलाश्चपलाः, मुकुटमणिरश्मयो यस्मिन् कर्मणि तत् यथा तथा, [अकम्पयत्]; क्रोधातिरेकादिति भावः ॥ ३ ॥

स इति ।—[ रुषा ] रोषेण, [अस्रु, वमन्] मुञ्चन्, [ घनघर्मविगल-

* ख्याञो ञित्त्वस्योभयपदसिद्ध्यर्थं कृतत्वेन ज्ञापकत्वमसङ्गतम् । वस्तुतस्तु विचक्षणः इत्यत्र युजयमावश्यकेन चक्षिङ इकारेणैवानुदात्तेनात्मनेपदं सिद्धे पुनः ङित्करणमनुदात्तत्वनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनार्थमित्येव वक्तव्यम् । तथा च वामनः,—"चक्षिङोऽनुबन्धकरणम्" ( १ अधि० २ अ० ४ सू० ) इत्यस्य वृत्तौ,—"चक्षिङ इकारेणैवानुदात्तेन सिद्धमात्मनेपदं, किमर्थं ङित्करणम् ?—तत्क्रियते अनुदात्तनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनार्थम् । एतेन वेदि-भर्त्सि-तर्जिप्रभृतयो व्याख्याताः, आवेदयति-भर्त्सयति-तर्जयति इत्यादीनां प्रयोगाणां दर्शनात्" इति ।

स्वेदजलकणकरालकरो
व्यरुचत् प्रभिन्न इव कुञ्जरस्त्रिधा ॥ ४ ॥
स निकामघर्मितमभीक्ष्ण-
मधुवदवधूतराजकः ।
क्षिप्तबहुलजलबिन्दु वपुः
प्रलयार्णवोत्थित इवाऽऽदिशूकरः ॥ ५ ॥

---

दुरुगण्डमण्डलः] घनेन सान्द्रेण, घर्मेण क्रोधोष्मणा, विगलत् स्रवत्, उरु महत्, गण्डमण्डलं यस्य सः, स्विद्यत्कपोल इत्यर्थः । [स्वेदजलकण-करालकरः] स्वेदजलकणैः स्वेदबिन्दुभिः, करालकरो दन्तुरहस्तः, [सः] चैद्यः, [त्रिधा] नेत्रकपोलहस्तदेशैः, [प्रभिन्नः] मदस्रावी, मत्तः इत्यर्थः । 'प्रभिन्नो मत्तः स्यात्' इति वैजयन्ती । [कुञ्जर इव व्यरुचत्] । रुचेः "द्युद्भ्यो लुङि" (१।३।९१ पा०) इति विकल्पात् परस्मैपदम् । एतेन स्वेदाख्यः सात्त्विकभावः उक्तः । उपमाऽलङ्कारः ॥ ४ ॥

स इति ।—[अवधूतराजकः] राज्ञां समूहो राजकम् । "गोत्रोक्ष—" (४।२।३९ पा०) इत्यादिना वुञ्प्रत्ययः । तदवधूतमभिभूतं येन स तथोक्तः, [सः] चैद्यः, [निकामघर्म्मितं] निकामं घर्मितं सञ्जातघर्मम्, उद्भवत्स्वेदमित्यर्थः । 'घर्मः स्यादातपे ग्रीष्म उष्णस्वेदाम्भसोरपि' इति विश्वः । तारकादित्वादितच्प्रत्ययः । [वपुः, प्रलयार्णवोत्थितः प्रलये अर्णवस्तस्मादुत्थितः, [आदिशूकर इव, क्षिप्तबहुलजलबिन्दु क्षिप्ताः प्रेरिताः, बहुलाः सान्द्राः, जलबिन्दवो यस्मिन् कर्म्मणि तत् यथा तथा, [अभीक्ष्णम्, अधुवत्] क्रोधाद्धुवति स्म । "धूञ् विधूनने" इति धातोस्तौदादिकात् लङ् । अत्रापि स्वेदः सात्त्विक एवोक्तः । उपमाऽलङ्कारः ॥ ५ ॥

स्तम्भमाऽऽश्लिषद्घटितशैल-
शिखरकठिनांसमण्डलः ।
स्तम्भमुपहितविधूतिमसा-
वधिकावधूनितसमस्तसंसदम् ॥ ६ ॥

कनकाङ्गदद्युतिभिरस्य
गमितमरुचत् पिशङ्गताम् ।
क्रोधमयशिखिशिखापटलैः
परितः परीतमिव बाहुमण्डलम् ॥ ७ ॥

---

स्तम्भमिति ।—[ घटितशैलशिखरकठिनांसमण्डलः ] घटितं सुसंहितं, यच्छैलशिखरं तद्वत् कठिनमंसमण्डलं यस्य सः, [असौ] चैद्यः, [ उपहित-विधूतिम् ] उपहिता अवगाहिता, आरोपितेत्यर्थः, विधूतिः कम्पो यस्मिंस्तम्, [अधिकावधूनितसमस्तसंसदम्] अधिकमत्यन्तम्, अवधूनिता कम्पिता, समस्ता सकला, संसत् सभा येन तं, [स्तम्भं स्तम्भम्, आश्लिषत्] श्लिष्टवान्, तेनांसमण्डलेनाहतवानित्यर्थः ; अत एव कठिनांसमण्डल इति विशेषणञ्च। पुषादित्वात् च्लेरङादेशः। आलिङ्गनार्थत्वे तु "श्लिष आलिङ्गने" इति क्सादेशः स्यात्। क्रोधान्धाः किमु न कुर्वन्तीति भावः। अत्रांसकाठिन्यस्य विशेषणगत्या स्तम्भाऽऽश्लेषहेतुत्वात् काव्य-लिङ्गं शैलशिखरोपमया सङ्कीर्य्यते ॥ ६ ॥

कनकेति ।—[ कनकाङ्गदद्युतिभिः ] कनकस्याङ्गदयोः केयूरयोः, द्युतिभिः, [ पिशङ्गतां ] पिङ्गलवर्णतां, [ गमितं ] प्रापितमिति तद्गुणा-लङ्कारः । [ अस्य ] चैद्यस्य, [ बाहुमण्डलं, क्रोधमयशिखिशिखापटलैः ] क्रोधाग्निज्वालाजालैः, [ परितः, परीतं ] परिवृतम्, [ इवारुचत् ] इत्युत्प्रेक्षा । "द्युद्भ्यो लुङि" (१।३।९१ पा० ) इति परस्मैपदम् ॥ ७ ॥

कृतसन्निधानमिव तस्य
पुनरपि तृतीयचक्षुषा।
क्रूरमजनि कुटिलभ्रु गुरु-
भ्रुकुटीकठोरितललाटमाननम्॥ ८॥
अतिरक्तभावमुपगम्य
कृतमतिरमुष्य साहसे।
दृष्टिरगणितभयाऽसिलता-
मवलम्बते स्म समया सखीमिव॥ ९॥

कृतेति।—कुटिले भ्रुवौ यस्य तत् [कुटिलभ्रु]। उपसर्जनस्य ह्रस्वः। [गुरुभ्रुकुटीकठोरितललाटं] गुर्व्या भ्रुकुट्या भ्रूभङ्ग्या, कठोरितं भीषणीकृतं, ललाटं यस्य तत्, [तस्य] चैद्यस्य, [आननं पुनरपि तृतीय-चक्षुषा, कृतसन्निधानं] कृतसंसर्गम्, [इव] इत्युत्प्रेक्षा। [क्रूरमजनि] भयङ्करमभूत्। जनिः कर्त्तरि लुङ्, "दीपजन—" (३।१।६१ पा०) इत्यादिना विकल्पात् चिण्प्रत्ययः॥ ८॥

अतिरक्तेति।—[अमुष्य] चैद्यस्य, [दृष्टिः], अतिरक्तस्य भावस्तम् [अतिरक्तभावं] रोषातिरेकादत्यरुणताम्, अन्यत्र,—कर्मातिरेकादत्यनु-रागिताम्, [उपगम्य] प्राप्य, [साहसे] कृष्णादिवधरूपे, अन्यत्र,—युद्धे, * [कृतमतिः], सर्वथा हनिष्यामि गमिष्यामि इति च कृतनिश्चया अर्थनिर्द्धारणमतिरिति यावत्, [अगणितभया] अगणितम् अविचारितं, भयं शत्रोर्गुरुजनाच्च यया सा सती, [समया] समीपे, [असिलतां सखीमिव, अवलम्बते स्म] साधनत्वेन स्वीचकार। क्रोधाज्जि-घांसया खड्गमग्राक्षीदित्यर्थः। अत्र प्रस्तुतदृष्टिविशेषणसाम्यादप्रस्तुत-नायिकाप्रतीतेः समासोक्तिरुपमासङ्कीर्णा॥ ९॥

* नायिकानायकयोः परस्परमिलने इत्यर्थः।

करकुड्मलेन निजमूरु-
मुरुतरनगाश्मकर्कशम् ।
त्रस्तचपलचलमानजन-
श्रुतभीमनादमयमाहतोच्चकैः ॥ १० ॥

इति चुक्रुधे भृशमनेन
ननु महदवाप्य विप्रियम् ।
याति विकृतिमपि संवृतिमत्
किमु यन्निसर्गनिरवग्रहं मनः ? ॥ ११ ॥

---

करेति ।—[ अयं ] चैद्यः, [उरुतरनगाश्मकर्कशम्] उरुतरो महत्तरः, नगाश्मवत् शैलशिलेव, कर्कशः, इत्युपमा । तं, [ निजम् ] आत्मीयम्, [ ऊरुं ] सक्थि । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । [ करकुड्मलेन] करः कुड्मल इवेत्युपमितसमासः । तेन, संहतप्रसारिताङ्गुलिना, पाणितलेनेत्यर्थः । [त्रस्तचपलचलमानजनश्रुतभीमनादं ] त्रस्तो भीतः, अत एव चपलं चञ्चलं, चलमानेन जनेन श्रुतो भीमनादो भयङ्करध्वनिर्यस्मिन् कर्मणि तत् यथा तथा, [उच्चकैः, आहत] आहतवान् । अलब्धलक्ष्याः क्रोधान्धाः स्वात्मानमेव घ्नन्तीति भावः । आङ्पूर्वाद्धन्तेर्लङ्, "आङो यमहनः" ( १।३।२८ पा० ) इति अकर्मकाधिकारेऽपि "स्वाङ्गकर्मकाच्चेति वक्तव्यम्" ( वा० ) इत्यात्मनेपदे "अनुदात्तोपदेश—" ( ६।४।३७ पा० ) इत्यादिनाऽनुनासिकलोपः ॥ १० ॥

इतीति ।—[इति] इत्थम्, अनेन प्रकारेण इत्यर्थः, [ अनेन ] चैद्येन, [ भृशं, चुक्रुधे ] क्रुद्धम् । भावे लिट् । [संवृतिमदपि] संवृतिर्विकारगुप्तिः तद्वदपि, धीरमपीत्यर्थः । [ मनो महत्, विप्रियं ] अप्रियम्, [ अवाप्य, विकृतिं ] विकारं, [ याति ननु ] प्राप्नोति खलु । [ यत् ] मनः, [निसर्गनिरवग्रहं] निसर्गात् स्वभावात्, निरवग्रहं चपलमित्यर्थः । ग्रहैः

प्रथमं शरीरजविकार-
क्कृतमुकुलबन्धमव्यथी।
भाविकलहफलयोगमसौ
वचनेन कोपकुसुमं व्यचीकसत् ॥ १२ ॥

ध्वनयन् सभामथ सनीर-
घनरवगभीरवागभीः।
वाचमवददतिरोषवशा-
दतिनिष्ठुरस्फुटतराक्षरामसौ ॥ १३ ॥

---

अप्प्रत्ययः। तदिति शेषः। [किमु?] विकृतिं यातीति किमु वक्तव्यमित्यर्थः; चपलचित्तश्चायं चैद्य इति भावः। अत्र चैद्यक्रोधस्य नन्वित्यादिवाक्यार्थहेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ११ ॥

एवं गात्राऽऽरब्धविकारानुक्त्वा वागाऽऽरब्धान् वक्तुमुपोद्घातयति, प्रथममिति।—न व्यथते बिभेतीति [अव्यथी] निर्भयः। "जिदृक्षि" (३।२।१५७ पा०) इत्यादिना नञ्पूर्वाद्व्यथतेरिनिः। [असौ] चैद्यः, [प्रथमं, शरीरजविकारकृतमुकुलबन्धं] शरीरजैर्विकारैः पूर्वोक्तैः शिरःकम्पनादिभिः कृतो मुकुलबन्धो मुकुलप्रादुर्भावो यस्य तत्, [भाविकलहफलयोगं] भाविकलहस्य रणस्यैव, फलस्य योगो यस्य तत्। 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः। [कोपकुसुमं] कोप एव कुसुमं तत्, [वचनेन] 'यदपूपुजः' इत्यादि-वक्ष्यमाणवाक्येन, [व्यचीकसत्] विकासयति स्म। कसेः "णौ चङ्युपधाया ह्रस्वः" (७।४।१ पा०) इति उपधाया ह्रस्वत्वे "दीर्घो लघोः" (७।४।९४ पा०) इत्यभ्यासदीर्घः। अत्र विकारकलहवचन-कोपेषु मुकुलफलविकासकुसुमत्वरूपणात् समस्तवस्तुवर्त्तिसावयवरूपकम् ॥ १२ ॥

ध्वनयन्निति।—[अथ, सनीरघनरवगभीरवाक्] सजलमेघगर्जित-

यदपूपुजस्त्वमिह पार्थ !
मुरजितमपूजितं सताम् ।
प्रेम विलसति महत्तदहो !!
दयितं जनः खलु गुणीति मन्यते ॥ १४ ॥
यदराज्ञि राजवदिहार्घ्य-
मुपहितमिदं मुरद्विषि ।

---

गम्भीरस्वर इत्यर्थः । [ अभीः ] निर्भीकः, [ असौ ] चैद्यः, [ सभाम् ] आस्थानं, [ ध्वनयन् अतिरोषवशात्, अतिनिष्ठुरस्फुटतराक्षराम् ] अतिनिष्ठुराणि अतिपरुषाणि, स्फुटतराणि चाक्षराणि यस्यास्तां, [ वाचमवदत् ]। घनरवगभीरेत्युपमाऽलङ्कारः ॥ १३ ॥

वाचमवददित्युक्तम्, अथ तामेव प्रपञ्चयन् पञ्चभिः पाण्डवोपालम्भमाह, यदित्यादि ।—हे [ पार्थ ! ] पृथापुत्रेति मातृप्राधान्येनाऽऽमन्त्रणं मर्म्मोद्घाटनार्थम् । [ सतामपूजितं ] सद्भिरपूज्यमानमित्यर्थः । "मतिबुद्धिपूजार्थेभ्यश्च" ( ३।२।१८८ पा० ) इति वर्त्तमाने क्तः । "क्तस्य च वर्त्तमाने" ( २।३।६७ पा० ) इति षष्ठी । [ मुरजितं ] कृष्णं, [ इह ] सदसि, [यत्] यस्मात्, [त्वम्, अपूपुजः] पूजयसि स्म । "णौ चङ्युपधाया ह्रस्वः" ( ७।४।१ पा० ) इत्युपधाया ह्रस्वः । [ तत् ] तस्मात्, [ महत् प्रेम, विलसति] स्फुरति ; अन्यथा कथमपूज्ये पूज्यत्वाभिमानः ? इत्यभिप्रेत्याह ।—[ जनः, ] लोकः, [ दयितं ] प्रियं जनं, [ गुणीति मन्यते खलु ], अगुणिनमपीत्यर्थः । [ अहो !! ] आश्चर्य्यम् । कृष्णः प्रेम्णा पूजितः, न गुणादिति भावः । अत्र प्रेमविलसितस्योत्तरवाक्यार्थहेतुकं काव्यलिङ्गम् ॥ १४ ॥

यदिति ।—[ अराज्ञि ] अभिषेकादिराजगुणविरहिणीत्यर्थः । "नञस्तत्पुरुषात्" ( ५।४।७१ पा० ) इति समासान्तप्रतिषेधः । [ इह ] अस्मिन्, [ मुरद्विषि ] कृष्णे । अपात्रत्वद्योतनार्थमसम्प्रदानविभक्ति-

ग्राम्यमृग इव हविस्तदयं
भजते ज्वलत्सु न महीशवह्निषु ॥ १५ ॥
अनृतां गिरं न गदसीति
जगति पटहैर्विघुष्यसे।
निन्द्यमथ च हरिमर्चयत-
स्तव कर्मणैव विकसत्यसत्यता ॥ १६ ॥
तव धर्मराज इति नाम
कथमिदमपष्ठु पठ्यते ?।

---

निर्देशः। राजानमर्हतीति [राजवत्] राजार्हम्। "तदर्हम्" (५।१।११७ पा०) इति वतिप्रत्ययः। "तद्धितश्चासर्वविभक्तिः" (१।१।३८ पा०) इत्यव्ययत्वम्। [यदिदम्, अर्घ्यम्] अर्घार्थं द्रव्यम्, अर्हणमित्यर्थः। [उपहितम्] अर्पितं, [तत्] अर्घ्यम्, [अयं] कृष्णः; महीशा अवनीपाः, वह्नय इव, इत्युपमितसमासः तेषु [महीशवह्निषु, ज्वलत्सु] सत्सु, अन्यत्र,—महीशा इव वह्नयः तेषु ज्वलत्सु सत्स्वित्यर्थः; [ग्राम्यमृगः] शुनकः, [हविरिव, न भजते] न प्राप्नोति। उपमाऽलङ्कारः ॥ १५ ॥

अनृतामिति।—हे पार्थ! [अनृताम्] असत्यां, [गिरं, न गदसि] न वदसि, [इति, जगति] लोके, [पटहैः] वाद्यविशेषैः कर्त्तृभिः। [विघुष्यसे] उद्घोष्यसे, [अथ च] तथाऽपि, [निन्द्यं हरिमर्चयतस्तव, कर्म्मणा] अपूज्यपूजाकरणेन, [एव, असत्यता] सत्यहीनता, [विकसति] प्रकाशते। अत्रासत्यप्रसिद्धसत्याऽऽचरणयोर्विरूपयोर्घटनाद्विरूपघटनारूपो विषमालङ्कारः ॥ १६ ॥

तवेति।—हे पार्थ! [तवेदं धर्म्मराज इति नाम कथम्, अपष्ठु] असत्यमेव, [पठ्यते ?]। "अपदुःसुषु स्थः" (उणा० १पा० २६सू०)

भौमदिनमभिदधत्यथवा
भृशमप्रशस्तमपि मङ्गलं जनाः ॥ १७ ॥
यदि वाऽर्चनीयतम एष
किमपि भवतां पृथासुताः ! ।
शौरिरवनिपतिभिर्निखिलै-
रवमाननाऽर्थमिह किं निमन्त्रितैः ? ॥ १८ ॥
अथवा न धर्ममसुबोध-
समयमवयात बालिशाः ।

---

इत्यौणादिकः कुप्रत्ययः । "अम्बाम्बगोभूमि—" ( ८।३।९७ पा० ) इत्यादिना षत्वम् । यद्वा युक्तमेव तदित्याह ।—[ अथवा जनाः भृशम्, अप्रशस्तमपि भौमदिनम् ] अङ्गारकवारं, [ मङ्गलम्, अभिदधति ] व्यपदिशन्ति, तद्वदिदमपीत्यर्थः । लोकैरप्रशस्तं प्रशस्तशब्देन विरुद्धार्थेनापि व्यपदिश्यते तदुच्चारणदोषात्, तद्वद्धर्म्मराजस्यापि ते धर्म्मराजव्यपदेश इति भावः । अत्र धर्म्मराजभौमदिनयोर्निरपेक्षवाक्यद्वये प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः ॥ १७ ॥

यदि वेति ।—हे [ पृथासुताः ! ] कौन्तेयाः ! [ एषः, शौरिर्वा ] शौरिरेवेत्यर्थः । 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्वः । [ किमपि ] कथमपि, [भवताम्, अर्चनीयतमो यदि] पूज्यश्चेत् ? तर्हीति शेषः । [ अवमाननाऽर्थम् ] अवमानस्तिरस्कारः, तस्मै तदर्थमेव । "अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या" । (वा०) क्रियाविशेषणम् । [ निमन्त्रितैः] आहूतैः, [निखिलैः अवनिपतिभिरिह, किम् ?] कोऽर्थः साध्यः ? इत्यर्थः । अत एव साधनक्रियाऽपेक्षया करणत्वे तृतीया । अत्र गम्यमानक्रियाऽपेक्षयाऽपि कारकवृत्तिरिति न्यासद्योते । अत्र सकलराजनिषेधस्य पूर्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गभेदः ॥ १८ ॥

कामममयमिह वृथापलितो
हतबुद्धिरप्रणिहितः सरित्सुतः ॥ १९ ॥
स्वयमेव शान्तनुतनूज !
यमपि गणमर्घ्यमभ्यधाः ।
तत्र मुररिपुरयं कतमो
यमनिन्द्यवन्दिवदभिष्टुषे वृथा ? ॥ २० ॥

---

अथ त्रिभिर्भीष्मोपालम्भमाह, अथेत्यादि,—[ अथवा इह, बालिशाः ] मूर्खाः, यूयमिति शेषः ; [असुबोधसमयं] सुबोधो न भवतीत्यसुबोधो दुर्बोधः, समय आचारो यस्य तं, [धर्मं, न अवयात] न जानीत। अवपूर्वादयाधातोर्लोटः "तस्थस्थ—" ( ३।४।१०१ पा० ) इत्यादिना थस्य तादेशः। किन्तु वृथा निष्फलं, पलितं यस्य सः [ वृथापलितः ] वृथापरिणत इत्यर्थः। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। वृथात्वे हेतुः,—[ हतबुद्धिः ] नष्टमतिः, [ अयं, सरित्सुतः ] भीष्मोऽपि, [कामम्, अप्रणिहितः ] अनवहितः, प्रमत्तः इत्यर्थः। बालाः पार्था न जानन्तु, हन्त !! वृद्धोऽपि न जानातीति चित्रमित्यर्थः ; अत एव सत्यपि कारणे कार्य्यानुदयाद्विशेषोक्तिरलङ्कारः ; तथा बालिशत्वधर्मदुर्बोधत्वयोर्विशेषणगत्या धर्मज्ञानाहेतुत्वात् काव्यलिङ्गं चेत्यनयोः सापेक्षत्वात् सङ्करः ॥ १९ ॥

स्वयमेवेति ।—हे [शान्तनुतनूज ! ] भीष्म ! [स्वयमेव] त्वमेवेत्यर्थः। [यमपि, गणं] वर्गम्, [अर्घ्यम्] अर्घार्हं, पूज्यमित्यर्थः। "दण्डादिभ्यः" ( ५।१।६६ पा०) इति यत्प्रत्ययः। [ अभ्यधाः ] अवोचः, 'स्नातकं गुरुम्' ( १४ स० ५५ श्लोक० ) इत्यादि श्लोक इति भावः। धाधातोर्लुङि "गातिस्था—" ( २।४।७७ पा० ) इत्यादिना सिचो लुक्। [ तत्र ] स्नातकादिगणे, [ अयं मुररिपुः कतमः ? ] न कोऽपीत्यर्थः। मास्तु अस्तु वा, अस्मदुपालम्भे को हेतुः ? अत आह, यमिति।—[ यं ]

अवनीभृतां त्वमपहाय
गणमतिजडः समुन्नतम् ।
नीचि नियतमिह यच्चपलो
निरतः स्फुटं भवसि निम्नगासुतः ॥ २१ ॥

प्रतिपत्तुमङ्ग ! घटते च
न तव नृपयोग्यमर्हणम् ।
कृष्ण ! कलय ननु कोऽहमिति
स्फुटमापदां पदमनात्मवेदिता ॥ २२ ॥

---

मुररिपुम्, [ अनिन्द्यवन्दिवत् ] प्रगल्भवैतालिकवत्, इत्युपमा । [ वृथा अभिष्टुषे ] मिथ्या स्तौषि ; अतस्त्वमेवोपालभ्यसे इति भावः । "उपसर्गात् सुनोति—" ( ८।३।६५ पा० ) इत्यादिना षत्वम् ॥ २० ॥

अवनीति ।—[अतिजडः] अतिमूढः, अतिशीतश्च, [चपलः] अस्थिरः, सत्वरश्च, [ त्वं, समुन्नतम् ] उन्नतम्, [ अवनीभृतां ] राज्ञां, भूधराणाञ्च, [ गणमपहाय ] ; न्यञ्चतीति न्यङ् तस्मिन् [ नीचि ] नीचवृत्ते, निम्ने च । "अचः" ( ६।४।१३८ पा० ) इत्यकारलोपे "चौ" ( ६।३।१३८ पा० ) इति दीर्घः । [ इह ] अस्मिन् कृष्णे, [ यत् ] यस्मात्, [ नियतं ] नित्यं, [ निरतः ] अनुरक्तः, प्रवणश्च, स इति शेषः । [ निम्नगासुतः ] निम्नं नीचं, गच्छतीति निम्नगा नदी । "अन्यत्रापि दृश्यते" ( वा० ) इति डप्रत्ययः । तस्याः सुतः, [ भवसि, स्फुटं ] व्यक्तम् ; नीचनिरतत्वादिधर्मसङ्क्रमादिति भावः । उक्तञ्च,—'न पितॄनमनुवर्त्तन्ते मातृकं द्विपदाः' इति । अत्र चतुर्थपादार्थस्य पूर्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गभेदः ॥ २१ ॥

अथ सप्तदशभिः कृष्णोपालम्भं करोति, प्रतिपत्तुमिति ।—हे [ अङ्ग ! तव, नृपयोग्यं ] राजार्हम्, [ अर्हणं ] पूजनं, [ प्रतिपत्तुं ]

असुरस्त्वया न्यवधि कोऽपि
मधुरिति कथं प्रतीयते ?।
दण्डदलितसरघः प्रथसे
मधुसूदनस्त्वमिति सूदयन्मधु ॥ २३ ॥
मुचुकुन्दतल्पशरणस्य
मगधपतिशातितौजसः।

---

स्वीकर्त्तुं, [ न च घटते ] न युज्यते। ननु अहमपि राजैव, कथमर्हणां मे न युक्तम् ? तत्राऽऽह, कृष्णेति।—हे [कृष्ण ! अहं कः ? इति कलय], अहं राजा न वेति निजस्वरूपमालोचयेत्यर्थः। अनालोचनेऽनर्थमाह,—[ अनात्मवेदिता ] अनात्मज्ञत्वम्, [ आपदां, पदं ] स्थानं, [ स्फुटं, ननु] खलु, सत्यमित्यर्थः ; आत्मा च कंसकिङ्करस्तस्य पशुपालकत्वादिति भावः। अतो निजस्वरूपं चिन्त्यमिति हेतुमद्भावात् काव्यलिङ्गमिति ॥ २२ ॥

असुर इति।—[ मधुरिति कोऽप्यसुरस्त्वया, न्यवधि ] हतः। "आत्मनेपदेष्वन्यतरस्याम्" ( २।४।४४ पा० ) इति हन्तेर्लुङि विकल्पाद्वधादेशः। इति [ कथं, प्रतीयते ? ] विश्वस्यते ? न कथञ्चिदित्यर्थः। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। किन्तु [ दण्डदलितसरघः ] दण्डेन दलिता ध्वस्ता, सरघा मधुमक्षिका, येनेदृशः, [त्वम्]। 'सरघा मधुमक्षिका' इत्यमरः। अत एव [ मधु ] क्षौद्रं, [ सूदयन् ] पीड़यन्, [ मधुसूदन इति, प्रथसे ] प्रथितोऽसि ; मक्षिकासूदनमेव मधुसूदनसंज्ञाप्रवृत्तिनिमित्तं, न तु मधुनाम्नो दैत्यस्य सूदनमित्यर्थः। अत्र मधुसूदनसंज्ञायां प्रसिद्धार्थनिषेधस्योत्तरवाक्यस्यान्यथा व्युत्पादनहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ २३ ॥

मुचुकुन्देति।—हे [ अबल ! ] बलहीन ! कुतः ?—[ मुचुकुन्दतल्पशरणस्य ] मुचुकुन्दो नाम कश्चिद्राजा, यस्यासुरविजयश्रान्त्या निद्राय-

सिद्धमबल ! सबलत्वमहो !!
तव रोहिणीतनयसाहचर्य्यतः ॥ २४ ॥
छलयन् प्रजास्त्वमनृतेन
कपटपटुरैन्द्रजालिकः ।
प्रीतिमनुभवसि नग्नजितः
सुतयेष्टसत्य इति सम्प्रतीयसे ॥ २५ ॥
धृतवान्न चक्रमरिचक्र-
भयचकितमाहवे निजम् ।

---

माणस्य देवतावरप्रसादात् निद्राविघातकारी दृष्टिपाताद्भस्मीभवति ; तस्य तल्पं शय्या, तदेव शरणं रक्षकं यस्य तस्य ; कालयवनविद्रावितस्येति भावः । तथा [ मगधपतिशातितौजसः ] मगधपतिना जरासन्धेन, शातितौजसः अष्टादशकृत्वो नष्टवीर्य्यस्य, [तव, रोहिणीतनयसाहचर्य्यतः] रोहिणीतनयस्य बलापरनाम्नो बलभद्रस्य, साहचर्य्यतः साहचर्य्यात्, [ सबलत्वं सिद्धम् ] ; न तु स्वबलसम्पत्त्येत्यर्थः । [ अहो !! ] कारणं विना कार्य्योदयादाश्चर्य्यम् ; अत एव विभावनाऽलङ्कारः । पुण्यैर्यशो लभ्यते इति भावः ॥ २४ ॥

छलयन्निति ।—इन्द्रजालं वेत्तीति [ ऐन्द्रजालिकः ], अत एव [कपटपटुः] वञ्चनाकुशलः, [त्वम्, अनृतेन ] असत्येन, [ प्रजाः, छलयन् ] वञ्चयमानः, इष्टं सत्यं यस्य सः [इष्टसत्यः] प्रियसत्यः, [इति, सम्प्रतीयसे] सम्यक् ख्यायसे । 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः' इत्यमरः । [ नग्नजितः ] नग्नजिन्नाम्नो राज्ञः, [ सुतया ] सत्याऽऽख्यया इत्यर्थः, [ प्रीतिम् ] आनन्दम्, [ अनुभवसि ] ; सत्यायोगादिष्टसत्यः, न तु सत्ययोगादिति भावः । अत्र हरेः सत्यसम्बन्धेऽपि तदसम्बन्धोक्तेः सम्बन्धे असम्बन्धरूपाऽतिशयोक्तिः ॥ २५ ॥

धृतवानिति ।—[ आहवे ] युद्धे, [ अरिचक्रभयचकितम् ] अरि-

चक्रधर इति रथाङ्गमदः
सततं बिभर्षि भुवनेषु रूढये ॥ २६ ॥
जगति श्रिया विरहितोऽपि
यदुदधिसुतामुपायथाः।
ज्ञातिजनजनितनामपदां
त्वमतः श्रियः पतिरिति प्रथामगाः ॥ २७ ॥

---

चक्रादरिसैन्यात्, भयेन चकितं सम्भ्रान्तम्। 'चकितं भयसम्भ्रमः' इति सज्जनः। [निजम्] आत्मीयं, [चक्रं] सैन्यं, [न धृतवान्] नावलम्बितवान्, न रक्षितवान् इत्यर्थः। किन्तु [चक्रधर इति भुवनेषु, रूढये] प्रसिद्धये, [अदः] इदं, [रथाङ्गं] चक्रापराऽऽख्यं, [सततं, बिभर्षि] दधासि ; वृथाभारमिति भावः। 'चक्रं सैन्यरथाङ्गयोः' इति हैमसज्जनौ। अयोविकारधरः चक्रधरो भवान्, अरिभीतचक्राधारकत्वादित्यर्थः। अत्र हरौ भगवति चक्रधारणसम्बन्धेऽप्यसम्बन्धोक्तेः अतिशयोक्तिः ॥ २६ ॥

जगतीति।—[श्रिया] राजलक्ष्म्या, [विरहितोऽपि]; यदूनां ययातिशापाद्राज्यानधिकारित्वादिति भावः। [ज्ञातिजनजनितनामपदां] ज्ञातिजनेन बन्धुजनेन, जनितं प्रवर्त्तितं, नामपदं श्रीरिति पारिभाषिकसंज्ञाशब्दो यस्यास्ताम्, [उदधिसुताम्] अब्धिकन्यां, [यत्] यस्मात्, [उपायथाः] उदूढवानित्यर्थः। 'विवाहोपयमौ समौ' इत्यमरः। "उपाद्यमः स्वकरणे" (१।३।५६ पा०) इत्यात्मनेपदम्। "तनादिभ्यस्तथासोः" (२।४।७९ पा०) इति सिचो लुक्। "अनुदात्तोपदेश—" (६।४।३७ पा०) इत्यादिना अनुनासिकलोपः। [अतस्त्वं जगति श्रियः पतिरिति, प्रथां] ख्यातिम्, [अगाः] प्राप्तवानसि। "इणो गा लुङि" (२।४।४५ पा०) इति गाऽऽदेशः। न राजान्तरवद्राजलक्ष्मीयोगात्तव श्रीपतित्वम्; किन्तु श्रीसंज्ञिकायाः कस्याश्चिद्वराक्याः परिग्रहादिति भावः। अतोग्रसेनस्याभिषेकसंस्कारेऽपि

अभिशत्रु संयति कदाचि-
दविहितपराक्रमोऽपि यत् ।
व्योम्नि कथमपि चकर्थ पदं
व्यपदिश्यसे जगति विक्रमीत्यतः ॥ २८ ॥

पृथिवीं बिभर्थ यदि पूर्व-
मिदमपि गुणाय वर्त्तते ।
भूमिभृदिति परहारितभू-
स्त्वमुदाह्रियस्व कथमन्यथा जनैः ॥ २९ ॥

---

त्रैलोक्यप्रतिष्ठापकस्य हरेरेव सकलराज्यश्रीधुरन्धरत्वसम्बन्धेऽप्य-सम्बन्धोक्तेरतिशयोक्तिः ॥ २७ ॥

अभीति ।—[ संयति ] युद्धे, [ कदाचित् ] कदाऽपि, [ अभिशत्रु ] शत्रुमभिव्याप्य । आभिमुख्येऽव्ययीभावः । [ अविहितपराक्रमः ] अकृत-पौरुषः, [ अपि, यत् ] यस्मात्, [ कथमपि ] महता प्रयत्नेन, [ व्योम्नि, पदं ] पादक्षेपं, [ चकर्थ ] कृतवानसि । "ऋतो भारद्वाजस्य" ( ७।२। ६३ पा० ) इति इट्प्रतिषेधः, पित्त्वेनाकित्त्वाद्गुणः । [ अतो जगति, विक्रमी ] विक्रमवान्, [ इति, व्यपदिश्यसे ] व्यवह्रियसे, न तु पराक्रम-योगादित्यर्थः । अत्रापि पराक्रमसम्बन्धेऽपि असम्बन्धोक्तेरति-शयोक्तिः ॥ २८ ॥

पृथिवीमिति ।—[पूर्वं] प्रागपि, सम्प्रत्सम्भवेऽपीति भावः । [पृथिवीं, बिभर्थ यदि ] भृतवांश्चेत् । भृञो लिटि भारद्वाजीयेट्प्रतिषेधः, पित्त्वेनाकित्त्वाद्गुणः । [ इदं ] भूधारणम्, [ अपि, गुणाय ] उत्कर्षाय, [वर्त्तते] । भूतपूर्वगत्याऽपि व्यपदेशत्वात्, तदपि नास्तीति भावः । प्रत्युत [ परहारितभूः ] परैः शत्रुभिः, हारितभूः परिहारितभूमिकः । जरा-सन्धेन मथुरानगरान्निष्कासितत्वादिति भावः । अत्र हर्त्तुरवहरण-

तव धन्यतेयमपि सर्व-
नृपतितुलितोऽपि यत् त्वम् ।
क्लान्तकरतलधृताचलकः
पृथिवीतले तुलितभूभृदुच्यसे ॥ ३० ॥

त्वमशक्नुवन्नशुभकर्म-
निरत ! परिपाकदारुणाम् ।
जेतुमकुशलमतिर्नरकं
यशसेऽधिलोकमजयः सुतं भुवः ॥ ३१ ॥

---

त्वमत्वमेव हारयितृत्वमिति शिजर्थोपपत्तिः। [त्वं जनैः कथम्, अन्यथा] अर्थवैपरीत्येन, [भूमिभृदिति, उदाक्रियस्व] उदाक्रियेथाः। सम्भावनायां लोट्। असम्भावितमेवेत्यर्थः। अत्रापि भूधरणसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ २९ ॥

तवेति।—[तवेयं, धन्यता] पुण्यवत्ता ; कथम् ? [सर्वनृपतितुलितः] सर्वैर्नृपतिभिस्तुलितोऽवधूतः, [अपि] तिरस्कृतोऽपीत्यर्थः। [त्वं, क्लान्तकरतलधृताचलकः] क्लान्ते भारवत्तयैव श्रान्ते, करतले धृतः अचलकोऽल्पाचलो येन सः सन्, [पृथिवीतले, तुलितभूभृत्] उद्धृतराजकश्च, [उच्यसे] इति [यत्] इयम् [अपि] अपरा ते धन्यतेत्यर्थः। गोवर्द्धनाऽऽख्यक्षुद्रभूधरतोलनात्तुलितभूभृत्त्वं भवति, न मादृशामिव महावीरातितुलनादिति भावः। अत्र सर्वनृपतितुलितोऽपि तत्तोलक इति विरोधो भूभृदिति श्लेषमूलाभेदाध्यवसायोत्थापित इति विरोधातिशयोक्त्योः सङ्करः ; तेन गोवर्द्धनोद्धरणमपि नातीवाद्भुतं बाहुबलशालिनामिति वस्तु व्यज्यते ॥ ३० ॥

त्वमिति।—हे [अशुभकर्मनिरत !] पापाऽऽचारपर ! अत एव [अकुशलमतिः] दुर्बुद्धिः, [त्वं, परिपाकदारुणां] परिपाके फलकाले,

सकलैर्वपुः सकलदोष-
समुदितमिदं गुणैस्तव ।
त्यक्तमपगुण ! गुणत्रितय-
त्यजनप्रयासमुपयासि किं मुधा ? ॥ ३२ ॥
त्वयि पूजनं जगति जाल्म !
कृतमिदमपाकृति गुणैः ।

---

दारुणं, विचित्रपापयातनामयत्वाद्भयङ्करमित्यर्थः । [ नरकं ] निरयम् । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । [ जेतुमशक्नुवन् ]; पापिष्ठैर्दुर्जयत्वादिति भावः । [ अधिलोकं ] लोके । विभक्त्यर्थेऽव्ययीभावः । [ यशसे ] नरकविजयीति प्रसिद्धये, [ भुवः सुतं ] नरकाऽऽख्यम्, [ अजयः ] जितवानसि ; परलोकप्रतारणमात्रपरः, न परलोकबाध्योऽसीति भावः । अत्र निरयापराऽऽख्यनरकविजयाशक्ते-र्विशेषणगत्या तज्जयस्यार्थिनो हरेर्नरकासुरविजयप्रकृतिहेतुकत्वात् पदार्थहेतुकं काव्यलिङ्गम् ; तच्च नरकयोः श्लेषमूलाभेदात् तदुत्थापित-मिति सङ्करः ॥ ३१ ॥

सकलैरिति ।—हे [अपगुण !] निर्गुण ! [सकलदोषसमुदितं] सकलैः सर्वैः, दोषैः समुदितं युक्तं, [ तवेदं वपुः सकलैः, गुणैः ] शौर्यादिभिः, [त्यक्तं], सर्वगुणान्निवर्त्तितमेवेत्यर्थः । एवञ्च सति [गुणत्रितयत्यजनप्रयासं] गुणत्रितयस्य गुणत्रयस्य, त्यजने त्यागे, यः प्रयासः तं, [मुधा] वृथा, [किं] किमर्थम्, [ उपयासि ? ] ; मुमुक्षयेति भावः । यत्र सकलगुणानां त्यागः, तत्र गुणत्रयस्य त्यागोऽन्तर्गत्या सिद्ध एव, अन्यथा साकल्यव्याघातादि-त्यर्थः । स्वभावतो निर्गुणस्य परवस्तुनः कुतो गुणत्रयचिन्ता ? इति ध्वनिः । गुणत्रयत्यागनिषेधस्य सकलैरित्यादिवाक्यार्थहेतुकत्वात् काव्य-लिङ्गभेदः ॥ ३२ ॥

त्वयीति ।—हे [ जाल्म ! ] असमीक्ष्यकारिन् ! 'जाल्मोऽसमीक्ष्य-

हासकरमघटते नितरां
शिरसीव कङ्कतमपेतमूर्द्धजे ॥ ३३ ॥
मृगविद्विषामिव यदित्थ-
मजनि मिषतां पृथासुतैः ।
अस्य वनशुन इवापचितिः
परिभाव एष भवतां भुवोऽधिपाः ! ॥ ३४ ॥

---

कारी स्यात्' इत्यमरः । [ गुणैः, अपाकृते ] निरस्ते, गुणैर्हीने इत्यर्थः, [त्वयि पूजनं कृतम् । जगति, हासकरं] परिहासजनकम्, [इदं] पूजनम् । [ ऽपेतमूर्द्धजे ] अपगतकेशे, [ शिरसि, कङ्कतं] दारुदन्तादिमयः केशप्रसाधनविशेषः ;—'प्रसाधनं कङ्कतिका' इति विश्वामरौ । कङ्कतमेव कङ्कतिका । 'कङ्कणम्' इति पाठे,—शेखरमित्यर्थः,—'कङ्कणं शेखरे हस्तसूत्रमण्डनयोरपि' इति विश्वः । तत्, [ इव नितराम्, अघटते ] न सङ्गच्छते इत्यर्थः । "नञो नलोपस्तिङि क्षेपे" (वा०) इत्युपसङ्ख्यानम् इति निन्दायां तिङ्योगेऽपि नलोपः । उपमाऽलङ्कारः ॥ ३३ ॥

सम्प्रति राज्ञां रोषमुत्पादयन्नाह, मृगेति ।—हे [ भुवोऽधिपाः ! ] राजानः ! [ मृगविद्विषां ] सिंहानाम्, [ इव भवतां, मिषतां ] पश्यतां, मिषतो युष्मान् अनादृत्येत्यर्थः । "षष्ठी चानादरे" ( २।३।३८ पा० ) इति विकल्पाद्भावलक्षणे षष्ठी । [ इत्थं, पृथासुतैः ] कौन्तेयैः । पितरमेतेषां न वेद्मीति भावः । [ अस्य ] कृष्णस्य, [ वनशुनः ] वनशुनकस्य, [ इव ], जम्बुकस्येवेति यावत्, [ अपचितिः ] पूजा, [ अजनि ] जनिता, कृतेत्यर्थः, इति [यत्] । जनेर्ण्यन्तात् कर्म्मणि लुङ् । [ एषः ] भवतां [ परिभावः ] परिभवः । "परौ भुवोऽवज्ञाने" ( ३।३।५५ पा० ) इति विभाषया घञ्प्रत्ययः ॥ ३४ ॥

अवधीज्जनङ्गम इवैष
यदि हतवृषो वृषं ननु ।
स्पर्शमशुचिवपुरर्हति न
प्रतिमाननां तु नितरां नृपोचिताम् ॥३५॥
यदि नाङ्गनेति मतिरस्य
मृदुरजनि पूतनां प्रति ।
स्तन्यमघृणमनसः पिबतः
किल धर्मतो भवति सा जनन्यपि ॥ ३६ ॥

---

अवधीदिति ।—[ हतवृषः ] हतसुकृतः । 'सुकृतं वृषभे वृषे' इति विश्वः । [ एषः ] कृष्णः, [ जनङ्गमः ] चाण्डालः, [ इव ] । 'चाण्डालप्लवमातङ्गदिवाकीर्त्तिजनङ्गमाः' इत्यमरः । "गमेश्च" ( ३।२।४७ पा० ) इति संज्ञायां जनपूर्वाद्गमधातोः खच्प्रत्ययः, "अरुर्द्विषत्—" ( ६।३।६७ पा०) इत्यादिना मुमागमः । [वृषं] वृषभरूपिणम् अरिष्टाऽऽख्यमसुरम्, [अवधीत् यदि] हतवांश्चेत् । "लुङि च"(२।४।४३ पा०) इति हनो वधाऽऽदेशः । अत एव [ अशुचिवपुः ] अशुद्धात्मा, [ स्पर्शं नार्हति ननु । नृपोचितां ] राजार्हां, [ प्रतिमाननां ] पूजां, [ तु नितरां ] नार्हति । स्पर्शायोग्यो गोघ्नः कथं पूज्यः ? इत्यर्थः । उपमा ॥ ३५ ॥

यदीति ।—[ अस्य ] कृष्णस्य, [ मतिः, पूतनां ] पूतना नाम बालग्रहविशेषः तां, [प्रति अङ्गना, इति ] हेतोः, [मृदुः] कृपा, दया इत्यर्थः, [ नाजनि यदि ] न जाता चेत्, माऽस्त्विति शेषः । जनेः कर्त्तरि लुङ् "दीपजन—" ( ३।१।६१ पा० ) इत्यादिना चिण्प्रत्ययः । [ अघृणमनसः ] निर्घृणचित्तस्य, स्तने भवं [ स्तन्यं ] पयः । "शरीरावयवाच्च" ( ४।३।५५ पा० ) इति यत्प्रत्ययः । [ पिबतः ] अस्य [ सा ] पूतना, [ धर्मतः ] शास्त्रतः, [ जनन्यपि ] माता च, [ भवति, किल ] खलु ।

शकटव्युदासतरुभङ्ग-
धरणिधरधारणादिकम् ।
कर्म यदयमकरोत्तरलः
स्थिरचेतसां क इव तेन विस्मयः ? ॥ ३७ ॥

अयमुग्रसेनतनयस्य
नृपशुरपरः पशूनवन् ।
स्वामिवधमसुकरं पुरुषैः
कुरुते स्म यत्परममेतदद्भुतम् !! ॥ ३८ ॥

---

स्त्रीति कृपाऽभावेऽपि मातेति जुगुप्साऽप्यस्य नास्तीत्यहो !! न केवलं स्त्रीहन्ता, किन्तु मातृहन्ता चायम्; स्तनप्रदायाः उपमातृत्वादिति भावः। अत्र स्तनपानस्य विशेषणगत्या जननीत्वहेतुत्वात् काव्यलिङ्गम् ॥ ३६ ॥

शकटेति।—[ तरलः ] चपलः, [ अयं ] कृष्णः, [ शकटव्युदासतरुभङ्गधरणिधरधारणादिकं ] शकटव्युदासः शकटासुरमर्दनं, तरुभङ्गो यमलार्जुनभञ्जनं, धरणिधरधारणं गोवर्द्धनोद्धरणं, तान्यादिर्यस्य तत् तथोक्तं, [ यत् कर्म्म अकरोत्, तेन ] कर्मणा, [ स्थिरचेतसां ] धीरचित्तानां, [ क इव विस्मयः ? ] न कोऽपीत्यर्थः। अत्र स्थिरचेतस्कताया विशेषणगत्या विस्मयनिषेधहेतुत्वात् काव्यलिङ्गं वृत्त्यनुप्रासेन संसृज्यते ॥ ३७ ॥

अयमिति।—[ अपरः ] अन्यः, [ नृपशुः ] ना पशुरिवेति नृपशुरित्युपमितसमासः। कार्य्याकार्य्यविवेकशून्यत्वादेवेति भावः, [ अयं ] कृष्णः, [ उग्रसेनतनयस्य ] कंसस्य, [पशून् अवन्] गाः पालयन्, [पुरुषैः, असुकरं ] लोकवेदविगीतत्वात् दुष्करं, [ स्वामिवधं यत्, कुरुते स्म ] चकारेति यावत्। [ एतत् परममद्भुतम् !! ] अभूतपूर्वादिति भावः। अत्र पशवनस्य विशेषणगत्या कंसकृष्णयोः स्वामिभृत्यभावहेतुत्वात् काव्यलिङ्गम् ॥ ३८ ॥

अष्टत्रिंशच्छ्लोकादूर्ध्वमेते चतुस्त्रिंशच्छ्लोकाः प्रक्षिप्ताः सन्ति, ते चाटीकाविषया इति मूलभूता एवेह प्रदश्यन्ते—

**ननु सर्व एव समवेक्ष्य कमपि गुणमेति पूज्यताम्।**
**सर्वगुणविरहितस्य हरेः परिपूजया कुरुनरेन्द्र! को गुणः? ॥१॥**

---

## शिशुपालवधस्य १५ सर्गप्रक्षिप्तश्लोकव्याख्या।

ये चतुस्त्रिंशत् श्लोकाः प्रक्षिप्ता इति मन्यमानेन मल्लिनाथेन न गृहीताः, ते च निन्दास्तुतिरूपोभयार्थाः इति अस्माभिरुभयथा व्याख्याय प्रदश्यन्ते। तत्र निन्दार्थस्यैव मुख्यतया प्रथमं निन्दार्थो यथा,—

जगति गुणवन्तः एव पूज्यन्ते, न तु सदोषा इत्यत आह, नन्विति।—[ननु] आमन्त्रणे। 'प्रश्नावधारणानुज्ञाऽनुनयाऽऽमन्त्रणे ननु' इत्यमरः। अमर्षे इति केचित्। [कुरुनरेन्द्र!] हे कुरुराज! [सर्व्व एव] सकललोक एव, [कमपि] अल्पमपि, [गुणं] शौर्यादिकान्यतमं, [समवेक्ष्य] दर्शयित्वा, [पूज्यतां] वन्दनीयत्वम्, [एति] प्राप्नोति; [सर्व्वगुणविरहितस्य] सर्वैः निखिलैः, गुणैः दयाऽऽदिभिः, विरहितस्य वर्ज्जितस्य, सदोषस्य इत्यर्थः, [हरेः] वानरस्य, तस्माद्भ्यात् 'अग्निर्माणवकः' इत्यादिवत् विवक्षया वानरतुल्यस्य कृष्णस्येत्यर्थः, [परिपूजया] अर्चनेन, [को गुणः?] कश्चिदपि गुणः नास्ति इति भावः। अयं परुषोऽर्थः।

चतुरश्चेदिपतिः सदसि निन्दाप्रकटनस्य असाधुतामपराधञ्च मन्यमानः, सोढुमक्षमस्य श्रीकृष्णं निन्दितुमेव कृतमतिः, स्तुतिनिन्दोभयार्थतया स्वाभिप्रायं प्रकटितवान्; तत्र स्तुतिरूपार्थो यथा।— [ननु] हे, [कुरुनरेन्द्र! सर्व्व एव] जनः, [कमपि गुणं, समवेक्ष्य] दृष्ट्वा, अवस्थितानां जनानाम् इति शेषः; अध्याहृतावस्थितक्रियया 'रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते' इत्यादिवत् एककर्तृकत्वेन अवेक्ष्य इत्यत्र ल्यप्। [पूज्यतां] वन्दनीयत्वम्, [एति] प्राप्नोति। एवं स्थितेऽपि भगवति विशेषं दर्शयति, सर्व्वेत्यादि।—[सर्वगुणविरहितस्य] सर्वैः त्रिभिः, गुणैः सत्त्वरजस्तमोभिः, विरहितस्य परित्यक्तस्य, निर्गुणस्येत्यर्थः, "निर्गुणो हि पुरुषः" इति साङ्ख्यमतम्; "साक्षी चेता केवलो निर्गुणश्च" (श्वेता० उप० ६ अध्या० ११ मन्त्रः) इति श्रुतिश्च। [हरेः] परमात्मनः विष्णोः, [परिपूजया] अर्च्चनेन, [कः] कोऽपि, अपूर्व इत्यर्थः, परमपदप्राप्तिरूप इति भावः, ; [गुणः] फलमित्यर्थः, अस्तीति शेषः; यद्वा,—[कः अगुणः?] कोऽप्रशस्तगुणः? अपि तु

**न महानयं न च बिभर्त्ति गुणसमतया प्रधानताम्।**
**स्वस्य कथयति चिराय पृथगजनतां जगत्यनभिमानतां दधत् ॥२॥**

स्वर्गादिरूप: प्रशस्तगुण: एव भवेत्, न तु सामान्यगुण इत्याशय:। अत्र प्रतीयमानस्तुत्यर्थमपि चैद्यवचनं वक्तृप्रकरणादिपर्य्यालोचनया स्तुत्यर्थे बाधितं सत् निन्दायामेव पर्य्यवसितं, ततश्च स्तुत्या निन्दाया गम्यत्वेन व्याजस्तुतिरलङ्कार: ;—"उक्ता व्याजस्तुति: पुन:। निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयो: ॥" इति दर्पणवचनात् ॥ १ ॥

पूर्व्वोक्तं निर्गुणत्वमेव विशेषेण दर्शयितुमाह, न महानिति।—[ अयं ] पुरत: दृश्यमान: कृष्ण: इत्यर्थ:। सर्व्वनाम सर्व्वत्र प्रत्यक्षनिर्द्देशे। [न महान्] श्रेष्ठो जनो न, भवतीति शेष:। श्रेष्ठजनानां गुणैस्तुल्यता चेत् कस्मिन्नपि वर्त्तते, तदा सोऽपि पूज्य:, इह तु साऽपि नास्ति, इत्यत आह, न चेति।—[ गुणसमतया ] गुणानां शौर्य्यादीनां, समतया तुल्यतया, [ च, प्रधानतां ] महत्त्वं, विख्यातकीर्त्तित्वेन पूजार्हत्वमित्यर्थ:, [ न बिभर्त्ति ] न धारयति। येन पुन: जन: पूजनं लभेत, तादृशप्राधान्यं तु इह नास्त्येव इति भाव: ; सर्व्वथा पूजनायोग्यत्वमेव एतस्मिन्नस्ति इत्याह, स्वस्येति।—[ जगति] पृथिव्याम्, [अनभिमानतां] निरहङ्कारत्वम्, आत्मोत्कर्षबोधाभावत्वमित्यर्थ:, [दधत्] धारयन्, दधाते: लट: शत्रादेश:, "नाभ्यस्ताच्छतु:" ( ७।१।७८ पा० ) इति नुमभाव:। अयमित्यनुषङ्ग:, [ स्वस्य ] आत्मन:, [ पृथगजनतां ] नीचजनत्वं, सर्व्वजनावज्ञेयत्वमित्यर्थ:। 'विवर्ण: पामरो नीच: प्राकृतश्च पृथग्जन:' इत्यमर:। [ चिराय ] चिरकालं, [ कथयति ] प्रकटयति, सूचयतीत्यर्थ:।

स्तुतिपक्षे तु।—[ अयं, न महान् ] न महत्तत्त्वं, भवतीति शेष:, बुद्धेरेव तथात्वात् ; तथा [ गुणसमतया ] गुणानां सत्त्वरजस्तमसां, समतया साम्यावस्थया, [ प्रधानतां, न च बिभर्त्ति ] न च धारयति, नाप्ययं प्रधानं भवतीत्यर्थ:। प्रधानशब्देनात्र अनुभूतविक्रियाणि प्रकृतिस्थानि सत्त्वरजस्तमांस्याहु:। तथा [ अनभिमानताम् ] अनहङ्कारत्वं, [ दधत् ] धारयन्, न वाऽयमहङ्कार इत्यर्थ:, [ जगति ] पृथिव्यां, [ स्वस्य ] परमात्मन:, [ पृथगजनतां] जनव्यतिरिक्तत्वम् ; यद्वा,—पृथग्भूता: जना: पञ्चतन्मात्राणि यस्मात् स पृथगजन: तस्य भावस्तां, [ चिराय, कथयति ] प्रकटयति ; चतुर्व्विंशतितत्त्ववाह्य: पञ्चविंशकोऽयं पुरुष: इति भाव: ; तथा च तत्त्वकौमुद्यां,—"प्रकृतेर्महांस्ततोऽहङ्कार:" इत्यादि २२ सङ्ख्यककारिका। पूर्व्ववदलङ्कार: ॥ २ ॥

**रहितं कलाभिरखिलाभिरकृतरसभावसंविदम् ।**
**चैत्रविदमुपदिशन्ति जनाः पुरबाह्यमेनमगतं विदग्धताम् ॥ ३ ॥**

---

आस्तामस्य पूजनं, प्रत्युत सभास्थितिरपि न शोभते इत्याह, रहितमिति ।—[ अखिलाभिः ] सकलाभिः, [ कलाभिः ] शिल्पादिभिः । 'कला स्यान्मूलविवृद्धौ शिल्पादावंशमात्रके' इति मेदिनी । [ रहितं ] त्यक्तं, सर्व्वविधशिल्पादिज्ञान-शून्यमित्यर्थः ; यद्वा,—सर्व्वविधसामर्थ्यहीनम् । 'कला विभूतौ सामर्थ्ये च' इति शब्दस्तोमः । अथवा,—सर्व्वाभिः कलाभिः गीतवाद्यादिभिः, विरहितम् ; कर्षका हि गीतवादित्राद्यनभिज्ञाः भवन्तीति भावः ; तथा [ अकृतरसभावसंविदं ] रसाः शृङ्गारादयः, भावाः रत्यादयः, रसाश्च भावाश्च रसभावाः, अकृता न विहिता, रसभावानां संविद् ज्ञानं यस्मिन् तम् । 'संवित् स्त्रियां प्रतिज्ञायामाचारज्ञानसङ्गरे' इति मेदिनी । सर्व्वथा रसभावादिज्ञानशून्यमित्यर्थः ; विदग्धशास्त्राणां सङ्केतमपि यः सम्यक् न वेत्ति तथाविधमिति यावत् ; यद्वा,—रसाः कट्वादयः । 'रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्य्ये तिक्तादौ द्रवरागयोः ॥' इति मेदिनी । भावाः लोकाना-मभिप्रायाः । 'भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु । क्रियालीलापदार्थेषु विभूति-बुधजन्तुषु ॥ रत्यादौ च—' इति मेदिनी । तेषां संवित् ज्ञानं, न कृता यस्मिन् तं, कट्वादिबोधरहितं, लोकचित्तानभिज्ञञ्च इत्यर्थः ; अत एव [ विदग्धतां ] पाण्डित्यम्, [ अगतम् ] अप्राप्तं, मूर्खमित्यर्थः, तथा [ चैत्रविदं ] चैत्रं कलत्रं केदारं वा, वेत्ति सारतया जानाति इति तथोक्तं, स्त्रीपरतन्त्रं कर्षकं वा इत्यर्थः । 'चैत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः' इति मेदिनी । [ एनं ] कृष्णं, [ जनाः ] सदसद्विवेकवन्तो लोकाः, [ पुरबाह्यं ] पुरात् नगरात्, बाह्यं बहिःस्थं, ग्राम्यमित्यर्थः ; कार्षिकाः हि प्रायशः नगरात् बहिर्वसन्तीति भावः ; यद्वा,—पुरस्य नगरस्य, बाह्यं वाहनीयं, नगराश्रयोपजीवितया पुरायत्तम् इत्यर्थः ; [ उपदिशन्ति ] कथयन्ति ।

स्तुतिपक्षे तु ।—[ जनाः ] लोकाः, [ एनं ] श्रीकृष्णम्, [ अखिलाभिः ] समग्राभिः, [ कलाभिः ] अवयवैः, [ रहितं ] निष्कलमित्यर्थः, तथा [ अकृतरसभाव संविदं ] अकृतरसा असञ्जातानुरागा, भावसंवित् पदार्थज्ञानं यस्य तं, पुरुषः साक्षिभूततया सर्व्वान् पदार्थान् जानाति, न तु तत्र रसज्ञतां भजते, निर्लिप्तत्वात्, इति साङ्ख्यसिद्धान्ताभिप्रायेणोक्तम् ; "न स ह तैराचरन् पाप्मना लिप्यते" (छान्दो० उप० ५ अध्या० १० खण्ड १० मन्त्रः) इत्यादि श्रुतिश्च ; यद्वा,—अविद्यमानाः

अतिभूयसाऽपि सुकृतेन दुरुपचर एष शक्यते।
भक्तिशुचिभिरुपचारपरैरपि न ग्रहीतुमभियोगिभिर्नृभिः॥ ४॥

---

कृतरसभावाः कृतं कर्म्म, रसः अनुरागः, भावः उत्पत्तिः, कर्म्मरागोत्पत्तयः इत्यर्थः, यस्य स चासौ संवित् चिद्रूपः तम्; तथा [ पुरबाह्यं ] पुरात् देहात्, बाह्यं विलक्षणम्, आत्मस्वरूपमित्यर्थः, प्रकृतिवियुक्तमिति यावत्, कूटस्थमित्याशयः। "असङ्गो ह्ययं पुरुषः" (बृह० उप० ४अध्या० ३ब्रा० १५मन्त्रः) इति श्रुतेः; तथा [विदग्धतां] विशेषेण दाह्यत्वम्, [ अगतम् ] अप्राप्तं, दहनायोग्यमित्यर्थः, "नैनं दहति पावकः" इति (२अध्या० २३श्लोकः) गीतोक्तत्वादिति भावः। [ क्षेत्रविदं ] क्षेत्रज्ञम्, आत्मानमित्यर्थः, ब्रह्मभूतमिति यावत, [ उपदिशन्ति ] कथयन्ति॥ ३॥

सर्वथा सर्वेषामवश्य एवायम् इति दर्शयितुमाह, अतिभूयसेति।—[ अतिभूयसाऽपि ] अतिबहुलेनापि, [ सुकृतेन ] शुभकर्म्मणा, हितकरणेनेति यावत्। 'सुकृतं तु शुभे पुण्ये क्लीवं सुविहिते त्रिषु' इति मेदिनी। [ दुरुपचरः ] दुःखेन सेवितुं क्षमः, नीचस्वभावत्वादिति भावः; [ एषः ] दुःशीलः कृष्ण इत्यर्थः, [ भक्तिशुचिभिः ] भक्त्या अनुरागेण, शुचिभिः शुद्धैः, विशिष्टानुरागवद्भिरित्यर्थः, [ उपचारपरैः ] उपचारः सेवा एव, परं प्रधानं येषां तैः, सेवायां लब्धप्रतिष्ठैः इत्यर्थः, [ अभियोगिभिः ] अभियोग आग्रहः अस्ति एषां तैः, आग्रहवद्भिरित्यर्थः। 'अभियोगः आग्रहे शपथे उद्योगे च' इति शब्दस्तोमः। [ नृभिः ] नरैः, [ अपि, ग्रहीतुं ] वशमानेतुम्, आवर्जयितुमित्यर्थः, [ न शक्यते ] न पार्य्यते। अयमेतावान् दुःशीलः यत्,—महताऽप्युपकारेण प्रबलभक्त्या सेवया वा कैरपि शोधयितुं न शक्य इति समुदितार्थः, सर्वथा अकृतज्ञोऽयमिति भावः॥

स्तुतिपक्षे तु।—[ एषः ] परमात्मा, [ अभियोगिभिः ] अभ्यस्तयोगक्रियैः, [ भक्तिशुचिभिः ] भक्तिविशुद्धैः, [ उपचारपरैरपि ] निरन्तरसेवनपरैरपि, [ नृभिः ] नरैः, [ अतिभूयसा ] प्रबलेन, [ सुकृतेन अपि ] पुण्येन कर्म्मणा अपि, यज्ञदानादिना इत्यर्थः; [ दुरुपचरः ] दुराराधः, भक्तिगम्यत्वात् न सुखसेव्यः इत्यर्थः; अत एव [ ग्रहीतुं ] ज्ञातुं, [ न शक्यते ] न पार्य्यते, आत्मतत्त्वस्य दुर्ज्ञानतया "नाहं वेदैर्न तपसा" (गीता० ११ अध्या० ५३ श्लोकः) इत्यादि स्मरणादिति भावः; केवलं ज्ञानमूलिकाभिः भक्तिभिरेवायमधिगम्यते इत्याशयः॥ ४॥

**व्रजति स्वतामनुचितोऽपि सविनयमुपासितो जनैः ।**
**नित्यमपरिचितचित्ततया पर एव सर्वजगतस्तथाऽप्ययम् ॥ ५ ॥**
**उपकारिणं निरुपकारमनरिमरिमप्रियं प्रियम् ।**
**साधुमितरमबुधं बुधमित्यविशेषतः सततमेष पश्यति ॥ ६ ॥**

व्रजति इति ।—[ अयं ] कृष्णः, [ अनुचितोऽपि ] अनुपयुक्तोऽपि, [ स्वतां व्रजति ] जन्मना स्वजनत्वम् अधिगच्छति, शिशुपालस्य असमोऽपि तत्स्वजन इति प्रकटयति इत्यर्थः । ननु यद्ययम् ईदृशः अयोग्यः, तर्हि जनाः कथममुं नियतं सेवन्ते ? इत्याशङ्कानिरासार्थमाह, सविनयमित्यादि ।—[ तथा, जनैः ] लोकैः, [ अपरिचितचित्ततया ] अज्ञातहृदयत्वेन, कपटपटूनां चित्ताभिप्रायं कथमपि ज्ञातुमशक्यत्वादिति भावः ; [ सविनयं ] सानुनयं, [नित्यं] चिरम्, [उपासितोऽपि ] सेवितोऽपि, [ सर्वजगतः ] निखिललोकस्य, [ पर एव ] शत्रुरेव ; अतीवायम-कृतज्ञ इति भावः ।

स्तुतिपक्षे तु ।—[ अनुचितोऽपि ] केनापि स्वबुद्ध्या बोद्धुमशक्योऽपि, अयोगयुक्तै-रपरिज्ञातोऽपीत्यर्थः, अस्य सच्चिदानन्दरूपत्वादिति भावः ; [ अयं ] परमात्मा, श्रीकृष्णः इत्यर्थः, [जनैः] योगिभिः, [सविनयम्] सानुनयं, प्रणामादिपूर्वकमित्यर्थः, [उपासितः ] आराधितः, [ स्वताम् ] आत्मत्वम् । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः । [व्रजति] अधिगच्छति ; [तथा, नित्यं] चिरम्, [ अपरिचितचित्ततया ] अपरिचितम् अज्ञातम्, असङ्गतं वा, चित्तं मनः बुद्धिर्वा यस्य तस्य भावस्तत्ता तया, साधारणजनानां हि कार्य्यदर्शनेन चित्ताभिप्रायादिकमवबुध्यते जनैः, अस्य तु अवाङ्मनसगोचरस्य केनापि किमपि न ज्ञायते इति भावः । [ सर्वजगतः अपि ] सर्वस्मात् जगतः, व्यक्तादित्यर्थः, [ परः एव ] विलक्षणः एव, प्रधानभूत इत्यर्थः ॥ ५ ॥

उपकारिणमिति ।—[ एषः ] कृष्णः, [ उपकारिणं ] हितकारिणं, जनमिति शेषः, [ निरुपकारं ] निर्न विद्यते, उपकारः हितं यस्मात् तम, अहितं, शत्रुमित्यर्थः, तथा [ अनरिं ] मित्रम, [ अरिं ] रिपुं, तथा [ अप्रियं ] प्रणयिताहीनं, [ प्रियं ] बन्धुं, [ साधुं ] सच्छीलम, [ इतरम् ] असाधुं, तथा [ अबुधं ] मूर्खञ्च, [ बुधं ] पण्डितम्, [इति] इत्थं, [सततं] निरन्तरमेव, [अविशेषतः] समतया, विशेषमविविच्यै-वेत्यर्थः, [पश्यति] अवलोकयति ; अयं पुनरेतावान् मूढ़ः, यत्—कस्तावत् शत्रुः ?—को वा मित्रम् ?—को वा मूर्खः ?—को वा पण्डितः ? एतद्विवेक्तुमपि न शक्नोति इत्यभिप्रायः । इति निन्दा ।

**उपकारकस्य दधतोऽपि बहुगुणतया प्रधानताम्।**
**दुःखमयमनिशमाप्नुवतो न परस्य किञ्चिदुपकर्त्तुमिच्छति ॥७॥**

स्तुतिपक्षे तु।—अयमेतावान् श्रेष्ठ: यत्,—उपकारिणमपकारिणञ्च शत्रुं मित्रञ्च सर्व्वमेव तुल्यत्वेन पश्यति; निर्गुणपुरुषस्य सर्वत्र समदृष्टिरिति भाव: ;—"अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत:" (छान्दो० उप० ८ अध्या० १२ खण्ड० १मन्त्र:) इत्यादि श्रुते:)। अत्र उपकारवत्त्वादिषु निरुपकारत्वादे: योगस्तु सर्व्वथा असम्भवित एव, निरुपकारत्वादे: उपकाराभाववत्त्वार्थकतया ग्राह्याभावावगाहित्वेन तत्प्रतिबन्धकत्वादिति विरोध:, परन्तु भगवत: प्रभावस्यातिशयितत्वादेव सर्वत्र सर्वं सुघटते एवेति तत्समाधानात् विरोधाऽऽभासोऽलङ्कार: ॥ ६ ॥

न केवलमयमुपकारापकारादिज्ञानहीन:, अपि तु निरतिशयाकृतज्ञोऽपि इति दर्शयन्नाह, उपकारकस्येति।—[ अयं ] कृष्ण:, [ उपकारकस्यापि ] हितं विदधतोऽपि ; परश्चेत् अपकारो भवेत्, तदा तस्य उपकाराकरणे नास्ति कश्चिद्दोष:, किन्त्वयमुपकारकस्यापि नोपाकरोति इत्यपिशब्दार्थ:। तथा [ बहुगुणतया ] गुणाऽऽतिशय्येन, श्रुतशौर्य्यादिगुणशतसद्भावेनेत्यर्थ:, [ प्रधानतां ] श्रेष्ठतां, [ दधत: ] धारयत: ; परश्चेदुपकारी प्राकृतजनो भवेत्, तदा तस्य प्रत्युपकाराकरणेऽपि न तथा लज्जा भवेत्, किन्तु बहुगुणवत: महत: उपकारकस्य प्रत्युपकारस्तु अवश्यमेव करणीय इति भाव: ; तथा [ अनिशं ] निरन्तरं, [ दुःखं ] क्लेशम्, [ आप्नुवत: ] प्राप्नुवत:, उपकारकरणादेवेति भाव:। [ परस्य ] अन्यस्य, जनस्येति शेष:, [ किञ्चित् ] किमपि, मनागपीति भाव:। [ उपकर्त्तुं ] हितं विधातुं, [ नेच्छति ] नाभिवाञ्छति, नीचतया प्रत्युपकारप्रवृत्तिविरहादिति भाव:। इति निन्दा ॥

स्तुतिपक्षे तु।—[ अयं ] पुरुष:, [ उपकारकस्य ] पुरुषप्रवृत्तिद्वारेण उपकृतिं विदधत:, [ बहुगुणतया ] बहव: सत्त्वरजस्तमोरूपत्वेन त्रिविधा:, गुणा: तेषां भावस्तत्ता तया, [प्रधानतां] प्रकृतित्वम्। 'प्रधानं स्यात् महामात्रे प्रकृतौ परमात्मनि' इति मेदिनी। [ दधत: ] धारयत:, तथा [ अनिशं ] सर्व्वदा, [ दुःखं ] क्लेशं, जननमरणादिकमित्यर्थ:, [ आप्नुवत: ] अनुभवत:, बुद्धि: सर्वमनुभवति, न पुरुष:, इति साङ्ख्यमतम्। [ परस्य ] बुद्धितत्त्वस्य, प्रधानसंज्ञकस्येत्यर्थ:, [किञ्चिदपि] मनागपि, [ उपकर्त्तुम् ] उपकारं विधातुं, [ न इच्छति ] नाभिलषति ; पुरुष: द्रष्टा, न तु सक्रिय: ;—"असङ्गो ह्ययं पुरुष:" (वृह० उप० ४ अध्या० ३ ब्रा० १५ मन्त्र: ) इत्यादि श्रुतेरिति भाव: ॥ ७ ॥

स्वयमक्रियः कुटिलमेष तृणमपि विधातुमक्षमः।
भोक्तुमविरतमलज्जतया फलमीहते परकृतस्य कर्मणः॥ ८॥
य इमं समाश्रयति कश्चिदुदयविपदोर्निराकुलम्।
तस्य भवति जगतीह कुतः पुनरुद्भवो विकरणत्वमीयुषः? ॥ ९॥

---

निर्लज्जत्वं प्रतिपादयितुमाह, स्वयमिति।—[ एषः ] कृष्णः, [ स्वयम् ] आत्मना, [ अक्रियः ] नास्ति क्रिया यस्य सः, असमर्थतया स्वयम् अलसः। कदाचित् ऐश्वर्य्य-वशादेवं स्यादित्याह, तृणमिति।—[ तृणमपि ] अतिलघु यत्किञ्चिदपीत्यर्थः, [ कुटिलं ] वक्रं, द्विखण्डीकरणाय नतमित्यर्थः, [ विधातुं ] कर्त्तुम्, [ अक्षमः ] असमर्थः, तथा [ अलज्जतया ] लज्जाहीनतया, [ परकृतस्य ] अन्यैः सम्पादितस्य, [ कर्म्मणः ] कार्य्यस्य, [ फलं ] लाभं, तत्कार्य्यजन्यलभ्यमित्यर्थः। 'फलं जातीफले प्राप्ये हेतूत्थे व्युष्टलाभयोः' इति मेदिनी। [ भोक्तुं ] लब्धुम्, [ अविरतं ] सदा, [ ईहते ] चेष्टते, वाञ्छतीत्यर्थः। कार्य्याक्षमस्तु अन्यदत्तेन पिण्डेनोपजीवति, अन्यैरेव च कार्य्यं सम्पादयतीति भावः। इति निन्दा॥

स्तुतिपक्षे तु।—[ एषः ] भगवान्, साङ्ख्योक्तपुरुषस्वरूपः इत्यर्थः। [ स्वयम् ] आत्मना, [ अक्रियः ] क्रियारहितः, निष्कर्म्मा इत्यर्थः; तथा [ तृणमपि ] अतिलघु वस्तु अपि, [ कुटिलं, विधातुं ] कर्त्तुम्, [ अक्षमः ] अनीशः,—"अवशं प्रकृतेर्वशात्" (गीता० ९अध्या० ८श्लोकः) इत्यनुशासनात् पुरुषस्य प्रकृतिसह-कारित्वाभावेन क्रियाऽभावादिति भावः। [ अलज्जतया ] अलेपत्वेन, गुणातीतत्वा-दिति भावः। [ परकृतस्य ] स्वभिन्नेन सम्पादितस्य, बुद्धिकृतस्येत्यर्थः, [ कर्म्मणः ] शुभाशुभरूपस्य, [ फलं ] सुखदुःखात्मकं परिणामम्, [ अविरतं ] निरन्तरं, [ भोक्तुम् ] अनुभवितुम्, [ ईहते ] इच्छति। आत्मनः फलभाक्त्वादिति भावः; तथा चोक्तं कारिकायां,—'सङ्घातपरार्थत्वात् त्रिगुणादिविपर्य्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥' इति (साङ्ख्य० का० १७ सू०)॥ ८॥

य इति।—[ यः कश्चित् ] मूर्खः इत्यर्थः, [ उदयविपदोः ] अभ्युदयावनत्योः, सम्पदि विपदि च इत्यर्थः, [ निराकुलं ] निश्चिन्तम्, अतिमूढमित्यर्थः, नीतिज्ञाना-भावात् स्वाभ्युदयविधाने आपत्प्रतीकारसाधने च उदासीनमिति भावः। [ इमं ] श्रीकृष्णं, [ समाश्रयति ] अवलम्बते, अत एव [ विकरणत्वं ] निरिन्द्रियत्वं, मृतिमित्यर्थः। 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः। उपादानवैपरीत्य-

गुणवन्तमप्ययमपास्य जनमखिलमव्यवस्थितैः ।
याति सुचिरमतिबालतया धृतिमेक एव परिवारितो जडैः ॥१०॥

---

मित्यर्थौ वा, [ ईयुषः ] प्राप्तवतः । 'इण गतौ' इत्यस्मात् क्वसुप्रत्ययेन सिद्धात् ईयिवस्शब्दात् षष्ठ्येकवचनम् । [ तस्य ] मूर्खस्येत्यर्थः, [ इह ] अस्मिन्, [ जगति ] लोके, [ पुनरुद्भवः ] पुनरभ्युदयः, पुनरुत्थानमित्यर्थः, [ कुतः ] कथं, [ भवति ? ] नैव सम्भवतीत्यर्थः । एतदाश्रयणात् स मूढः मृत एव, कदाचित् स्वाभ्युदयं साधयितुं न प्रभवतीति भावः ; अत एवासौ कृष्णः सदैव सर्वैः परिवर्ज्जनीय इत्याशयः । इति निन्दा ॥

स्तुतिपक्षे तु ।—[ यः कश्चित् ] पुण्यवान् इत्यर्थः, [ उदयविपदोः ] सम्पदापदोः, [निराकुलम्] अव्यग्रं, कूटस्थतया समावस्थमित्यर्थः, अक्रियत्वादिति भावः, [ इमं ] परमात्मानं, [ समाश्रयति ] अवलम्बते, [ विकरणत्वं ] विगतानि करणानि इन्द्रियाणि यस्य स विकरणः नष्टेन्द्रियः, तस्य भावः तत्त्वम्, [ ईयुषः ] प्राप्तवतः, [ तस्य ] पुण्यवतः, योगिनः इत्यर्थः, [ इह, जगति ] पृथिव्यां, [ पुनरुद्भवः ] पुनरुत्पत्तिः, [ कुतः भवति ? ] नैवेति भावः ; "ब्रह्म वेद ब्रह्मैव भवति" ( मुण्ड० उप० ३मु० २ख० ९मन्त्रः ) इति श्रुतेः परममहत् परिमाणस्य परमात्मनः स्वरूपत्वेनास्य एतादृशमहत्समाश्रयणेन मुक्तिरेव भवेत् इति फलितम् ॥ ९ ॥

गुणवन्तमिति ।—[ अयं ] श्रीकृष्णः, [ अखिलं ] सकलं, [ गुणवन्तमपि ] गुणशीलमपि, [ जनम्, अतिबालतया] शिशुस्वभावतया, अतिचापल्येन इत्यर्थः, [अपास्य] त्यक्त्वा, [ अव्यवस्थितैः ] चञ्चलमतिभिः शास्त्रविधिलङ्घनेन स्वेच्छाचारिभिरित्यर्थः, [ जडैः ] मूर्खैः जनैः, [ परिवारितः ] वेष्टितः, [ एक एव ] नान्य इत्यर्थः, [ सुचिरं ] निरन्तरं, [ धृतिम् ] आनन्दं, [ याति ] अधिगच्छति, प्रीयते इति यावत् ; एतद्व्यतिरिक्तः नान्यः कोऽपि विबुधलोकं परित्यज्य इत्थं गोपमध्ये रमते इति भावः । गुणवत्परित्यागेन असाधुजनसमालम्बनं चपलस्यैव लक्षणमिति तात्पर्य्यम् । इति निन्दा ॥

स्तुतिपक्षे तु ।—[ अयं ] भगवान्, [ गुणवन्तमपि ] सत्त्वादिगुणशालिनमपि, [ अखिलं जनं ] सर्व्वलोकम् [ अपास्य ] क्षिप्त्वा, सर्व्वं जनं संहृत्य इत्यर्थः, [ एक एव, अव्यवस्थितैः ] लङ्घितमर्यादैः, भरितसकलभुवनैरित्यर्थः, [ जडैः ] जलैः । अत्र डलयोरैक्यत्वम् । [परिवारितः ] आवृतः, [ अतिबालतया ] बालक-

**सुकृतोऽपि सेवकजनस्य बहुदिवसखिन्नचेतसः ।**
**सर्वजनविहितनिर्विदयं सकृदेव दर्शनमुपैति कस्यचित् ॥११॥**

---

रूपी भवन्, [ सुचिरं ] निरन्तरं, [ धृतिम् ] आनन्दं, तव शयनेन इति भावः। [ याति ] प्राप्नोति ; प्रलये जगन्ति समाकृष्य सलिलशायी ह्ययं रमते इति भावः। उक्तञ्च,— "संभक्ष्य सर्व्वभूतानि कृत्वा चैकार्णवं जगत्। बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ॥" इति ( महा० शान्ति० प० ४७ अध्या० ५७ श्लोकः ) ॥ १० ॥

सुकृत इति ।—[ सर्वजनविहितनिर्वित् ] सर्वजनानां सकललोकानां, विहिता सम्पादिता, निर्वित् अनुतापः, दुःखमित्यर्थः येन सः, निखिलजनदुःखप्रदः, जगदुत्पीड़क इति यावत्, [अयं] कृष्णः, [बहुदिवसखिन्नचेतसः] बहुदिवसैः खिन्नं क्लिष्टं, सेवायाः फलप्राप्त्यभावादिति भावः, चेतः यस्य तथोक्तस्य, चिरकालसेवीद्विग्नचित्तस्येत्यर्थः, किमस्मभीः सेवनादित्याशयः। शोभनं करोति यस्तस्य, [ सुकृतोऽपि ] उपकारकस्यापि। सुपूर्वकात् करोतेः क्विप्। [ कस्यचित् सेवकजनस्य ] भृत्यस्य, न तु सर्वेषामिति भावः, [ दर्शनम ] अवलोकनं, [सकृदेव] एकवारमेव, न तु सर्व्वदा इति भावः, [ उपैति ] लभते ; सर्वेषां समुत्पीड़कतया अतीव निर्दयं दुष्प्रसमं कृष्णं चिरं सेवित्वा कोऽपि भृत्यः कदाचिदेवानुग्रहं लभते, न तु सर्व्वदेति भावः। इति निन्दा ॥

स्तुतिपक्षे तु ।—[ अयं ] परमात्मा श्रीकृष्णः इत्यर्थः, [ सर्वजनविहितनिर्वित ] सर्वेषां जनानां विहिता कृता, निर्वित निर्वेदः, निर्वाणहेतुभूतं वैराग्यमित्यर्थः, येन सः, निखिलजनमुक्तिप्रद इत्यर्थः ; यद्वा,—सर्वेषु जनेषु वि विगते, हितनिर्विदौ प्रियाप्रियभावौ यस्य सः, नास्य कश्चित् प्रियो वा, द्वेष्यः वा, सर्वेषु समभावसम्पन्न इति भावः ; अथवा,—सर्वे जना यत्र स सर्वजनः, वि विगते, हितनिर्विदौ सुखदुःखे यस्य स विहितनिर्वित्, ततश्च सर्वजनश्चासौ विहितनिर्विच्चेति सर्वजनविहितनिर्विदिति विशेषणकर्मधारयः। तथा च सर्वेषामाश्रयः स्वयं सुखदुःखातीतश्चेत्यर्थः। तथा [सुकृतः अपि] पुण्यवतः अपि, सत्कार्य्यशीलस्यापि वा। 'सुकृत् कृतपुण्ये धार्म्मिके जने' इति शब्दस्तोमः। [ बहुदिवसखिन्नचेतसः ] बहुभिः दिवसैः दीर्घेण कालेन, खिन्नं खेदं गतं, क्लिष्टमित्यर्थः, चेतः मनो यस्य ; प्रबलतपसा क्लान्तमनसः, न हि अयोगिलभ्य ईश्वर इति भावः। [ कस्यचित्, सेवकजनस्य ] भक्तजनस्येत्यर्थः, [ सकृदेव ] एकवारमेव, [ दर्शनं ] दृष्टिविषयताम्, [ उपैति ]

स्वजने सखिष्वनुगतेषु नियतमनुरागवत्स्वपि ।
स्नेहमम्रदुहृदयः क्षपयन् निरपेक्ष एष समुपैति निर्वृतिम् ॥१२॥
क्षणमेव राजसतयेव जगदुदयदर्शितात्मकः ।
सत्वहितकृतमतिः सहसा तमसा विनाशयति सर्वमावृतः ॥१३॥

---

अधिगच्छति ; सकृद्दर्शनेनैव सुदुर्लभाया मुक्तेर्जायमानतया, न तु सर्वस्य सर्वदा चैवासोऽयं दृष्टिविषयतामुपैति इति भावः ॥ ११ ॥

स्वजने इति ।—[ अम्रदुहृदयः ] अम्रदु अनृजु, कुटिलमित्यर्थः, हृदयं मानसं यस्य सः, क्रूरचित्त इत्यर्थः, तथा [ निरपेक्षः] भेदज्ञानविरहितः, सदसद्विवेकरहित इत्यर्थः, [ एषः ] कृष्णः, [ नियतं ] निरन्तरम्, [ अनुरागवत्सु अपि ] प्रियत्वयुक्तेषु अपि, अविरक्तेषु अपि इत्यर्थः, [ स्वजने ] ज्ञातौ, [ सखिषु ] समप्राणेषु बन्धुषु इत्यर्थः, तथा [ अनुगतेषु ] आश्रितेषु जनेषु च, [ स्नेहं ] प्रीतिं, [ क्षपयन् ] अपाकुर्वन्, सर्वत्र वैरायमाण इत्यर्थः, [ निर्वृतिं ] सुखं, [ समुपैति ] लभते । इति निन्दा ॥

स्तुतिपक्षे तु ।—[ एषः ] परमात्मा, श्रीकृष्ण इत्यर्थः । [ अनुरागवत्सु अपि ] भक्तिप्रवणेषु अपि, [ स्वजने ] निजजने, तथा [ सखिषु ] बन्धुषु, तथा [ नियतं ] निरन्तरम्, [ अनुगतेषु ] आश्रितेषु च, सेवकजनेषु इत्यर्थः, [ स्नेहं ] प्रेम, आसक्तिमिति यावत्, [ क्षपयन् ] निरस्यन्, तेषां तनूकुर्वन् इत्यर्थः, [ अम्रदु-हृ[illegible] ] [illegible] दुर्ज्ञेयमित्यर्थः, हृदयं स्वरूपं यस्य सः, तथा [ निरपेक्षः] उदासीनः, अनासक्तः सन्नित्यर्थः, [ निर्वृतिं ] सुखं, [ समुपैति ] लभते ; अखिलयदुवंशपरिहृतोऽप्ययम् अनासक्तः मुक्तपुरुषः इति भावः ॥ १२ ॥

क्षणमिति ।—[ एषः ] कृष्णः, [ राजसतयैव ] चपलतया एव, [ क्षणं ] कियत् कालं, [ जगदुदयदर्शितात्मकः ] जगतां लोकानाम्, उदये हितसाधने, अभ्युदयविधाने वा, द[illegible]तः, नियोजित इत्यर्थः, आत्मा स्वं येन तथाविधः । ['जगदु[illegible]' इति पाठे,—जगदुदये दर्शिता उद्यतिः उद्योगः येन तथाविधः ] [illegible]तीति शेषः ; राजसिकत्वेन क्षणं जगतामुपकारं विदधातीति भावः । [ सत्त्वहितकृतमतिः ] सत्त्वानां जन्तूनां, 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । हिते मङ्गलविधाने, कृता विहिता, मतिः येन तथाविधोऽपि, [ सहसा ] झटिति, [ तमसा ] मोहेन, [ आवृतः ] व्याप्तः सन्, [ सर्वं ] निखिलम् ; यद्वा,—[ तमसा ]

**अभिहन्यते यदभिहन्ति परितपति यच्च तप्यते ।**
**नास्य भवति वचनीयमिदं ? चपलात्मिका प्रकृतिरेव हीदृशी॥१४॥**

---

मोहेन, [ आवृतस्तु ] व्याप्तः सन्नेव, आवृतः पुनरित्यर्थः। तु अत्र भिन्नक्रमे प्रयुक्तः। [ अहितकृतमतिः ] अहिते जगतामुपद्रवविधाने इत्यर्थः, कृता विहिता, मतिः बुद्धिः येन तथाविधः सन्नित्यर्थः, [ सर्वं ] निखिलं, [ सत् ] सुकृतं, [ विनाशयति ] हन्ति ; अयन्तु रजोगुणोपहितः पूर्वं यत्किञ्चित् जगतामुपकृतवान्, पश्चात् तत् सर्वमेव तमसा आच्छन्नः सन् विनाशयतीत्यर्थः ; अव्यवस्थितचित्तस्य अस्य तु सर्वं जगदुपकृतिविधानं परिणामविरसमेवेति भावः। इति निन्दा॥

स्तुतिपक्षे तु।—एष एव परमात्मा गुणत्रयेण मूर्तित्रयं परिगृह्य सृष्टिस्थितिविनाशादिकं साधयति इति दर्शयति, क्षणमिति।—[ एषः ] परमात्मा, त्रिमूर्त्ति-रित्यर्थः, [ क्षणं ] कदाचित्, [ राजसतया एव ] रजोगुणाऽऽश्रयेण, ब्रह्मरूपेणेति भावः, [ जगदुदयदर्शितात्मकः ] जगतः उदये उत्पत्तौ, सर्जनकर्मणीत्यर्थः, दर्शितः आत्मा स्वं येन तथाभूतः ; [ 'जगदुदयदर्शितोद्यतिः' इति पाठे तु,—जगदुदये दर्शिता उद्यतिः उद्योगः येन तथाविधः ] भवतीति शेषः, प्रजासर्गं विदधातीति भावः ; तथा [ सत्त्वहितकृतमतिः ] सत्त्वेन सत्त्वगुणेन, हिते जगतां पालने इत्यर्थः, कृता मतिः बुद्धिर्येन सः, विष्णुरूपेण प्रजारक्षां करोतीति भावः, [ तमसा ] तमोगुणेन च, [आवृतः] आश्रितः, तमोगुणमवलम्ब्य इत्यर्थः, [सहसा] हठात्, [सर्वं विनाशयति] निखिलं जगत् हन्तीत्यर्थः, रुद्ररूपेणासौ सर्वेषां संहारं करोतीत्यर्थः।

अभिहन्यते इति।—[ अभिहन्यते ] ताड्यते, अन्येन एष हरिः इति शेषः, तथा [ अभिहन्ति ] नाशयति, अन्यानिति शेषः, इति [ यत्, परितपति ] बाधते, लोकानिति शेषः ; तथा [तप्यते] दह्यते, अन्येन स्वयमिति शेषः ; इति [च यत्, अस्य] कृष्णस्य, [इदं] पूर्वोक्तं कर्म, [वचनीयं] निन्दनीयं, [न भवति ?] इति काकुः, अपि तु भवत्येवेत्यर्थः। उक्तमर्थं समर्थयति, चपलेति।—[ हि ] [illegible]स्मात्, [ चपलात्मिका ] अविनीता, [ प्रकृतिः ] स्वभावः, [ ईदृशी एव ] एवम्प्रकारा [illegible] इति शेषः। अयं कृष्णः अतिचपलस्वभावसम्पन्नः, तेन हि असौ निरन्तर सर्वेषामुप[illegible]दिकं करोति, स्वयमपि नियतं तिरस्क्रियते सर्वैरिति भावः। इति निन्दा॥

स्तुतिपक्षे तु।—[ यत्, अभिहन्यते ] अन्येन असौ विनाश्यते, तथा [अभिहन्ति] नाशयति, एषः परमात्मा इति शेषः, तथा [ यच्च, परितपति ] जनान् पीडयति,

अतिसत्त्वयुक्त इति पुम्भिरयमतिशयेन वर्ण्यते।
सूक्ष्ममतिभिरथ चापगते समुपैति नाल्पमपि सत्वसङ्गरम् ॥१५॥

---

मानसं दुःखं ददातीत्यर्थः; तथा [ तप्यते ] स्वयमनुतप्तो भवति, [अस्य] परमात्मनः, [ इदं ] पूर्वोक्तं, [ वचनीयं ] वचनार्हं, [ न भवति ] एतद्वचनमस्मिन् नैव प्रवर्त्तते इत्यर्थः। पुरुषस्य निर्गुणत्वात् एष हन्ति, हन्यते, तपति, तप्यते, नैतद्वाच्यमिति निष्कर्षः। चेदयमेवं न स्यात्, तदा कस्यायम्? इत्याह, चपलेति :—[ हि ] यतः, [प्रकृतिरेव ] बुद्धिरेव, [ ईदृशी ] एवम्प्रकारा, [ चपलात्मिका ] अनेकरूपा, नानाश्रयेत्यर्थः, न तु एष परमात्मस्वरूपः श्रीकृष्ण एवंविध इत्यभिप्रायः। उक्तञ्च,—"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतः नायं हन्ति न हन्यते॥" इति (गीता० २ अध्या० १९ श्लोकः)। अत एवासौ पुरुषः न बध्यते न मुच्यते नापि च संसरति, केवलं नानाऽऽश्रया प्रकृतिरेव बध्यते मुच्यते संसरति चेति भावः॥ १४॥

कृष्णस्य पौरुषाभावं दर्शयितुमाह, अतिसत्त्वेति।—[ सूक्ष्ममतिभिः ] सूक्ष्मा क्षीणा, अल्पेति यावत्, मतिः बुद्धिः येषां तैः, स्वल्पज्ञानैरित्यर्थः, [ पुम्भिः ] नरैः, [ अयं ] कृष्णः, [ अतिसत्त्वयुक्तः ] अतिसत्त्वेन महता बलेन, युक्तः, [ इति, अतिशयेन ] सुष्ठुतया, [ वर्ण्यते ] कीर्त्यते। [अथ] पक्षान्तरे, किन्तु इत्यर्थः, [ चापगते] गृहीतचापे, कस्मिंश्चित् युद्धाय धनुर्दधति सति इत्यर्थः, [ अल्पमपि ] स्तोकमपि, [ सत्वसङ्गरं ] सत्वसंमिश्रणं, बलयोगमित्यर्थः, पौरुषलेशमिति यावत्, [न समुपैति] न लभते। गृहीतधन्वानं पुमांसं दृष्ट्वैव युद्धस्थलात् पलायनादिति भावः। ये पुनरमुं बलशालिनं मन्यन्ते, ते तु नितरामज्ञा एव; बुद्धिमन्तस्तु युद्धादौ वीरत्वाभावमस्य समीक्ष्य दुर्बलोऽयमित्येवाभिजानन्ति इति तात्पर्यम्। इति निन्दा॥

स्तुतिपक्षे तु।—[ पुम्भिः ] पुरुषैः, योगिभिरित्यर्थः, [ अयं ] पुरुषः, श्रीकृष्णः इत्यर्थः, [ अतिसत्त्वयुक्तः ] सबीजनिर्बीजसमाधौ अत्यधिकं सत्त्वेन गुणेन युक्तः, [इति, अतिशयेन वर्ण्यते ] सम्यक्तया कथ्यते, [ अथ च ] विस्मये, एवं सत्यपीत्यर्थः, [ सूक्ष्ममतिभिः] कुशाग्रीयबुद्धिभिः, बहुदर्शिभिः इत्यर्थः, [ अपगते ] ज्ञाते सति, [ अल्पमपि] लेशतोऽपि, [ सत्त्वसङ्गरं ] सत्त्वगुणसम्बन्धं, निर्बीजसमाधाविति भावः, [न समुपैति] ; पुरुषस्य निर्गुणत्वादिति भावः। यो हि अतिसत्त्वयुक्तः, स कथं सत्त्वसङ्गरं न समुपैति? इति आपाततः विरोधः, भगवतः अपारमहिमशालित्वात तत्परिहारात् विरोधाऽऽभासोऽलङ्कारः॥ १५॥

प्रलयं परस्य महतोऽपि नियतमिह निःसुखे गुणाः ।
यान्ति जगदपि सदोषमदः स्वरुचैव पश्यति गुणान् द्विषन्नयम्॥१६॥
क्षितिपीठमम्भसि निमग्नमुदहरत् यः परः पुमान् ।
एष किल स इति कैरबुधैरभिधीयमानमपि तत्प्रतीयते ? ॥१७॥

---

प्रलयमिति ।—[इह] अस्मिन्, [निःसुखे] निर्गतं अविद्यमानं वा सुखं यस्मात् तस्मिन्, कृष्णे इत्यर्थः, तादृशदुर्जनात् कस्यापि सुखसम्भावनाऽभावादिति ; अनेन कस्यापि गुणस्वीकाराकरणात् कुतः तेषां सुखमिति वा भावः ; [महतः अपि] मुख्यस्यापि, सौन्दर्यादिभिः श्रेष्ठस्यापि इत्यर्थः, [परस्य] अन्यस्य, [गुणाः] सौन्दर्यादयः, [नियतं] सततं, [प्रलयं] नाशं, [यान्ति] प्राप्नुवन्ति, कस्यापि गुणान् अयं न स्वीकरोति इत्यर्थः ; अत एव [गुणान् द्विषन्] परगुणाग्राहीत्यर्थः, [अयं] कृष्ण इत्यर्थः, [स्वरुचैव] आत्मेच्छयैव, [अदः जगदपि] इदं विश्वमपि, [सदोषं] दोषयुक्तं, [पश्यति] ईक्षते, गुणविद्वेषी अयं निर्दोषान् अन्यानपि सदोषान् वेत्ति इत्यर्थः । इति निन्दा ॥

स्तुतिपक्षे तु ।—[निःसुखे] सुखवर्जिते, आत्मनः विकाराभावादिति भावः, [इह] परमात्मनि, [परस्य] बुद्धितत्त्वस्य, [महतः अपि] महत्तत्त्वस्यापि, [गुणाः] सत्त्वरजस्तमांसि, [नियतं] निरन्तरं, [प्रलयं] नाशं, [यान्ति] प्राप्नुवन्ति ; पुरुषं प्राप्य गुणा निवर्त्तन्ते इत्यर्थः । अतः [गुणान्] सत्त्वरजस्तमांसि, [द्विषन्] अस्पृहयन्, अस्पृशन् इति यावत्, [अयं, स्वरुचा एव] आत्मभावेनैव, [अदः] इदं, [जगत् अपि] प्रकृतिमित्यर्थः । [सदोषं] क्लेशयुक्तं, जन्मनिधनत्त्वादिति भावः, [पश्यति] ईक्षते ॥ १६ ॥

क्षितिपीठमिति ।—[यः, परः] अन्यः, साधारणेतरः इत्यर्थः, श्रेष्ठ इति यावत् । 'परः श्रेष्ठारिदूरान्योत्तरे क्लीवन्तु केवले' इति मेदिनी । [पुमान्] पुरुषः, [अम्भसि] जले, [निमग्नम्] अन्तर्हितं, [क्षितिपीठं] पृथिवीमण्डलम्, [उदहरत्] उद्धृतवान् । [एषः किल सः इति] स एवायमिति निश्चितत्वेन, [कैरपि, अबुधैः] मूर्खैः, [अभिधीयमानं] कथ्यमानं, [तत्, प्रतीयते ?] ज्ञायते ? किमेतत्सत्यतया प्रतीतिर्भवति ? इत्यर्थः । इति काकुः । नैवेत्यर्थः । मूर्खाः एव वराहरूपेण भूमण्डलोद्धरणकारी महापुरुषः एवायं सत्यमित्यवगच्छन्ति, सुधियस्तु नैव तत् सत्यं मन्यन्ते इति समुदितार्थः । इतिः निन्दा ॥

**नरसिंहमूर्त्तिरयमेव दितिसुतमदारयन्नखैः।**
**आप्तजनवचनमेतदपि प्रतिपत्तुमोमिति जनोऽयमर्हति ॥ १८ ॥**
**अपहाय तुङ्गमपि मानमुचितमवलम्ब्य नीचताम्।**
**स्वार्थकरणपटुरेष पुरा बलिना परेण सह संप्रयुज्यते ॥ १९ ॥**

---

स्तुतिपक्षे तु।—[ कैः ] कैश्चित् प्राज्ञैः, [ अभिधीयमानं तत्, अबुधैरपि ] मूर्खैरपि, का कथा पण्डितानाम्? इति काकुः। सर्वैरेव स एवायं वराहरूपी भगवानिति सत्यं ज्ञायते इत्यर्थः। अन्यत् समानम् ॥ १७ ॥

नरसिंहेति।—[ अयमेव ] कृष्ण एव, [ नरसिंहमूर्त्तिः ] नरस्य सिंहस्य च मूर्त्तिरिव काय इव, शरीरमिव इत्यर्थः, मूर्त्तिः शरीरं यस्य सः। 'मूर्त्तिः कायकाठिन्ययोः स्त्रियाम्' इति मेदिनी। [दितिसुतं] दैत्यं, हिरण्यकशिपुमित्यर्थः, [ नखैः ] कररुहैः, [ अदारयत् ] वक्षो विदीर्य्य प्राणानपाहरत्, इति [ आप्तजनवचनम् ] आप्तजनानां प्रमापुरुषाणाम्, अथ च, आप्तजनानाम् आत्मीयानां, वचनं वाक्यम्, [ एतदपि ] अयं कृष्ण एव पुरा नरसिंहमूर्त्तिं परिगृह्य हिरण्यकशिपुं जघानेति वाक्यमित्यर्थः, [ अयं जनः ] भीष्मादिक एवेत्यर्थः, [ ओमिति ] एवमिति। 'ओमेवं परमं मते' इत्यमरः। [ प्रतिपत्तुं ] स्वीकर्त्तुम्, [ अर्हति ] स्वजनमन्तरेण न कश्चिदेतत् श्रद्दधाति इत्यर्थः ; मूर्खेतरैः कैरपि एतत् सत्यमिति नाङ्गीक्रियते इत्याशयः। इति निन्दा ॥

स्तुतिपक्षे तु।—[ अयमेव ] एष भगवान् कृष्ण एव, नान्य इत्यर्थः, [ दितिसुतं ] हिरण्यकशिपुं, [नरसिंहमूर्त्तिः] नृसिंहरूपधारी सन्, [ नखैः, अदारयत् ] विदारितवान्, [ एतदपि ] इत्थमेव, [ आप्तजनवचनं ] शिष्टजनवाक्यम्, अवितथवादिभिः व्यासादिभिरुक्तमित्यर्थः ; [ अयं जनः ] मनीषी जनः, [ ओमिति, प्रतिपत्तुम् ] अङ्गीकर्त्तुम्, [ अर्हति ] शक्नोति ; पण्डिता एव आप्तवाक्यं सत्यमिति विदन्ति, नान्ये इत्यर्थः ॥ १८ ॥

अपहायेति।—[ स्वार्थकरणपटुः ] स्वार्थस्य आत्मप्रयोजनस्य, करणे सम्पादने, पटुः चतुरः, [ एषः ] कृष्णः, [ उचितं ] न्याय्यं, [ तुङ्गमपि ] उन्नतमपि, [ मानम् ] अहङ्कारम्, [ अपहाय ] त्यक्त्वा, [ नीचतां ] पृथग्जनताम्, [ अवलम्ब्य ] स्वीकृत्य, [ बलिना ] बलवता, [ परेण सह ] रिपुणा सार्द्धं, [ पुरा ] निकटमेव, अचिरमेवेत्यर्थः। 'स्यात् प्रबन्धे चिरातीते निकटाऽऽगामिके पुरा' इत्यमरः। [सम्प्रयुज्यते]

**क्रमते नभो रभसयैव विरचयति विश्वरूपताम्।**
**सर्वमतिशयगतं कुरुते स्फुटमिन्द्रजालमिदमेष मायया ॥ २० ॥**

---

सम्प्रयुज्यते ; शत्रुर्बलवानिति जानाति चेत् आत्मविनाशभयात् तमेव शरणं याति इति भावः। इति निन्दा ॥

स्तुतिपक्षे तु।—[ एषः ] भगवान् श्रीकृष्णः, [ स्वार्थकरणपटुः ] स्वस्य स्वानेः, इन्द्रस्य इत्यर्थः, ( वामनावतारे अदितिगर्भात् प्रादुर्भूतत्वात् इन्द्रावरजत्वेन भगवतः इन्द्रभ्रातित्वम् ) अर्थः प्रयोजनं, शत्रुपराभवरूप इत्यर्थः,तस्य करणे साधने, पटुः दक्षः ; अत एव [ उचितं ] समुपयुक्तं, स्वाभाविकमित्यर्थः, [ तुङ्गम् ] उन्नतं, [ मानं ] प्रमाणं, शरीरदैर्घ्यमित्यर्थः, [ अपि, अपहाय ] त्यक्त्वा, [ नीचतां ] खर्व्वत्वं, वामनरूपमित्यर्थः, [ अवलम्ब्य ] आश्रित्य, [ परेण ] श्रेष्ठेण, [ बलिना ] वैरोचनिना, [ सह ] सार्द्धं, [ पुरा ] पूर्वं, [ सम्प्रयुज्यते ] सम्प्रयुयुजे, इन्द्रानुरोधात् वामनरूपमाश्रित्य पूर्व्वमेव भगवान् बलिं वबन्ध इत्यर्थः। 'सम्प्रयुज्यते' इत्यत्र "पुरि लुङ् चास्मे" ( ३।२।१२२ पा० ) इति पुराशब्दयोगे भूतानद्यतने वैभाषिको लट्प्रयोगः ॥ १९ ॥

क्रमत इति।—[ एषः ] कृष्णः, [ रभसयैव ] अतिमहत्या एव, [मायया] छलेन करणेन, युद्धस्थलादिति भावः। रभस् इति शब्दस्यात्र महदर्थकत्वात् स्त्रीत्वं, निघण्टौ महदर्थकत्वे विषु व्यवहारस्य प्रदर्शितत्वात्। [ नभः ] गगनं, [ क्रमते ] आरोहति, युद्धस्थलात् त्वरितपदं पलायते भयादिति भावः। "अनुपसर्गाद्वा" (१।३।४३ पा०) इत्यात्मनेपदम्। तथा [ विश्वरूपतां ] सकलाऽऽकृतिं, नानारूपम् इत्यर्थः। 'विश्वा त्वतिविषायां स्त्री जगति स्यान्नपुंसकम्। न ना शण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु ॥' इति, 'रूपं स्वभावे सौन्दर्य्ये नामगे पशुशब्दयोः। ग्रन्थाऽऽवृत्तौ नाटकादावाकारश्लोकयोरपि ॥' इति च मेदिनी। [ विरचयति ] प्रकटयति, सर्वेषां वञ्चनार्थं बहुरूपो भूत्वा भुवि विचरतीति भावः ; यद्वा,—विश्वरूपतां—विः पक्षी, च श्वा कुक्कुरश्च, रूपं पशुश्च तानि विश्वरूपाणि पक्षिकुक्कुरपशव इत्यर्थः, तेषां भावस्तत्ता ता, विरचयति ; अयं हि पतगादिविग्रहधृक् भूत्वा जनान् वञ्चयते इति वा भावः। [ सर्व्वं ] निखिलं कर्म्म, [अतिशयगतं] विलक्षणतां प्राप्तं, सर्व्वजनातिरिक्तमित्यर्थः, [कुरुते] विदधाति ; [इदं] पूर्व्वोक्तं कर्म्म, [ स्फुटं ] निश्चितं, [ इन्द्रजालम् ] इन्द्रेण कौशलाद्यैश्वर्य्येण,जालं द्रष्टुः नेत्राऽऽवरणं,मन्त्रौषधादिना यथास्थितपदार्थस्य अन्यथाभूतत्वेन दर्शनसाधनमित्यर्थः, मिथ्याऽद्भुतमिति यावत् ; नात्र कश्चित्तात्त्विको व्यवहारः अस्ति, केवलं

किल रावणारिरयमेव किमिदमियदेव कथ्यते ?।
सत्त्वमधिबलमधिद्युति यत्तदशेषमेष इति धृष्टमुच्यताम् ॥ २१ ॥

---

मायया सर्व्वान् विमोहयति इति भावः; तथा चोक्तम् इन्द्रजालतन्त्रे,—"अथातः सम्प्रवक्ष्यामि इन्द्रजालमनुत्तमम्। महाकालस्य बीजानि प्रस्थमेकं समाहरेत्। धात्रीरसेन देवेशि! सप्तवारान् विभावयेत्। कृत्वा गुटिकाला तु मुखे निक्षिप्य पार्व्वति!॥ अचिरेणैव कालेन स्वयं पारावतो भवेत्॥" इति निन्दा॥

स्तुतिपक्षे तु।—[ एषः ] भगवान्, [ रभसया ] रभसमौत्सुक्यं करोतीति रभसा तया। "तत्करोति तदाचष्टे" ( ग० ) इति णिचि, "नन्दिग्रहि—" (३।१।१०४ पा०) इति कर्त्तरि अचि टापि च सिद्धम्। [ मायया एव] शक्त्या एव, [ इन्द्रजालं ] तादृश-भ्रममित्यर्थः, [ स्फुटं, कुरुते ] जनयति, तथा हि,—[ नभः क्रमते ], बलिबन्धनार्थ-मिति शेषः, [ विश्वरूपतां ] सर्व्वदेवमयत्वं, [ विरचयति ] प्रकटयति, [ इदं, सर्व्वं ] सकलं जगत्, [ अतिशयगतं ] प्राप्तविशेषरूपं, करुते ॥ २० ॥

लोकानां स्तुतिवादस्यालीकतामुपदर्शयितुमाह, किलेति।—[ अयं ] हरिः इत्यर्थः, [ रावणारिः किल ] दशाननरिपुः एव, इति [ इदं ] दशाननोऽनेन हतः इत्यादिकं मिथ्याभाषणमित्यर्थः, [ इयदेव ] एतन्मात्रमेव, एतादृक् स्वल्पमात्रक-मित्यर्थः, [ किं ] कथं, [ कथ्यते ? ] उच्यते ? मृषा वक्तव्ये बहुलमेव तत् उच्यताम्; अयं रावणारिरिति ईदृक् स्वल्पमात्रमेव कथमुच्यते ? इति भावः। किं तत् वक्तव्यम् ? इत्याह, सत्त्वमिति।—[ यत्, सत्त्वं ] प्राणी। 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः। [ अधिबलं ] बलाधिकं, महा-शक्तिसम्पन्नमित्यर्थः, [ अधिद्युति ] अधिका द्युतिर्यस्य तत्, महातेजश्च इत्यर्थः, [ तदशेषं ] तत्सर्व्वमेव, [ एषः ] हरिः, [ एव इति, धृष्टं ] निःशङ्कं, निर्लज्ज-मिति यावत्, [ उच्यतां ] कथ्यताम्। अत्रायमाशयः,—यदि असत्यवचोभिः हरिं प्रशंसितुमिच्छुः, स रावणारिः इत्येतावन्मात्रमेव कथं भाषसे ?—"पितॄणा-मर्य्यमा चास्मि यमः संयमतामहम्। मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम्॥" ( गीता० १० अध्या० २९ श्लोकः ) इत्याद्युक्तरूपेण यत्किञ्चित् सत्त्वं श्रीमत्, विभूतिमत्, ऊर्जितम्, अतिबलं, महासत्त्वञ्च, तत्सर्वमयमेव इति कृत्वा पूर्व्वोक्तादपि अधिकमस्य प्रशंसावादं यथेच्छं कुरु, यतः अलीकवचनस्यान्तो नास्ति इति। एतेन हरिणा किमपि न कृतमिति सूचितम्। इति निन्दा॥

**चलतैष पादयुगलेन गुरु शकटमीषदस्पृशत् ।**
**दैवकलितमथ चोदलसद्दलितोरुभाण्डचयमात्मनैव तत् ॥ २२ ॥**

---

स्तुतिपक्षे तु ।—[ अयं ] श्रीकृष्णः, [ रावणारिः ] रावणमात्रस्यैव हन्ता, [ इदम्, इयत् एव ] एतावत् स्वल्पमात्रमेव प्रशंसावचनमित्यर्थः, [ किं कथ्यते ? ] कथम् अभिधीयते ? अस्य भूयसी प्रशंसा क्रियतामित्याशयेनाह, सत्त्वमिति ।—[ यत् सत्त्वम्, अधिबलं] महाशक्ति, [ अधिद्युति ] महातेजश्च, [ तदशेषम् एष एव ] तन्मयमेवेत्यर्थः, [ किल ] प्रसिद्धौ, शास्त्रे एवमेव उक्तमस्तीत्यर्थः ; अतः [ इति, धृष्टं ] निःशङ्कं यथा तथा, [ उच्यतां ] कथ्यताम् ; विश्वरूपस्यास्य भगवतः यत्किञ्चित्प्रशंसावादेन गुणानामियत्ता न भवति इति भावः। उक्तञ्च,— "यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोऽंश-सम्भवम् ॥" इति ( गीता० १० अध्या० ४१श्लोकः ) ॥ २१ ॥

यत्किञ्चित् विस्मयकरं शैशवे वयसि कृतमनेन, सर्वमेव तदसत्यमिति दर्शयितुमाह, चलतेति ।—[ एषः ] हरिः, [ चलता ] प्रसारितेन, [ पादयुगलेन ] चरणद्वयेन, [गुरु] महत्, बृहदित्यर्थः, [ शकटं ] यानम्, [ ईषत् ] किञ्चित्, [ अस्पृशत् ] स्पृष्टवान् ; [ अथ ] स्पर्शनानन्तरं, [ तच्च, दलितोरुभाण्डचयं ] दलितः चूर्णितः, उरुः महान्, भाण्डानां दधिक्षीरघृतघटादिकानां, चयो राशिर्यत्र तत्, तथा [ दैवकलितं ] दैवेन अदृष्टेन, कलितं सम्पादितं सत्, [ आत्मनैव ] स्वयमेव, [ उदलसत् ] अपतदित्यर्थः। एतेन नास्य किञ्चित् पौरुषमस्ति इत्युक्तम्। इति निन्दा ॥

स्तुतिपक्षे तु ।—[एषः] भगवान्, [चलता पादयुगलेन, गुरु] महत्, [ शकटम् ] अनः। 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरः। [ ईषत् ] किञ्चिन्मात्रम्, [ अस्पृशत् ] अस्प्राक्षीत, [अथ च] विस्मयाऽऽवहमेतत्, यत् तेनैव ; अथ शब्दोऽत्र विस्मये। [दलितोरुभाण्डचयं ] चूर्णीकृतदधिघृतादिपात्रराशि, [ तत् ] शकटं, [ दैवकलितं ] भगवत्सम्पादितं सत्, [ आत्मना ] स्वयम्, [ एव, उदलसत् ] अपतत्। भगवच्छक्तिमन्तरेण तादृशबालकस्य ईषत्पादस्पर्शनमात्रेण तत्पतनमसम्भवमेव इति भावः। बाल्ये खलु भगवान् मात्रा गृहाभ्यन्तरे शायितः क्षुधार्तः रुरोद, कर्मान्तरव्यापृता तु तज्जननी रोदनं न श्रुतवती ; ततः कृष्णः गृहाभ्यन्तरे अत्यूर्ध्व-

**स्नुवताऽमुना स्तनयुगेन जनितजननीजनाऽऽदरा ।**
**स्त्रीति सदयमविधाय मनस्तदकारि साधु यदघाति पूतना?॥ २३॥**
**अभनक् तरू कथमिवैष कृतधरणिरिङ्गणः क्षणात् ? ।**
**वाढ़मिदमपि न बालकृतं ननु देवताविधिरयं विजृम्भते ॥ २४ ॥**

रचितं शकटं क्रमवर्द्धितेन पादयुगलेन पस्पर्श, ततश्च भूमौ पतितः स बभञ्ज, तेन च तत्रावस्थितः दधिक्षीरादीनां भाण्डचयोऽपि भग्नीभूत इति पौराणिकी वार्त्ता अत्रानुसन्धेया ॥ २२ ॥

किं बहुना ? अयं पुनर्मातृहन्ताऽपि इति वक्तुम् आह, स्नुवतेति ।—[ अमुना ] हरिणा, [ स्नुवता ] क्षीरं स्रवता, [ स्तनयुगेन ] पयोधरयुग्मेन, [ जनितजननी-जनाऽऽदरा ] जनितः कृतः, जननीजनाऽऽदरो मातृस्नेहः यया सा, [पूतना] तदाख्य-राक्षसी, [ स्त्री इति ] अबलाजातिरिति कृत्वा, [ मनः ] चित्तं, [ सदयं ] दयायुक्तम्, [ अविधाय ] अकृत्वा, [ यत्, अघाति ] हता, [ तत्, साधु ] युक्तम्, [ अकारि ? ] विहितम ? इति काकुः, नैतद्युक्तं कृतमित्यर्थः ; अयं खलु मातृघाती इति भावः । इति निन्दा ॥

स्तुतिपक्षे तु ।—[ अमुना ] हरिणा, [ स्नुवता स्तनयुगेन, जनितजननी-जनाऽऽदरा] कृतमातृस्नेहाऽपि, [पूतना] तन्नाम्नी राक्षसी, [ स्त्री इति, मनः ] चित्तं, [ सदयं ] दयापरवशम्, [अविधाय] अकृत्वा, [यत्, अघाति] हता, [ तत्, साधु ] भद्रम्, [ अकारि ] अक्रियत ; यद्ययं मे स्तन्यपायी स्यात्, तदा नूनं विषाक्तस्तन-सम्पर्कात् मरिष्यति इति बुद्ध्या पूतनायाः तन्मारणार्थमागतत्वादिति भावः । अकारण-वधोद्यताया अस्याः वधे नास्ति धर्म्महानिः, सर्वथा वधोऽस्या विधेय एव इत्यभि-प्रायः ॥ २३ ॥

अभनगिति ।—[कृतधरणिरिङ्गणः] कृतं विहितं, धरण्यां पृथिव्यां, रिङ्गणं स्खलनं, हस्तपादेन चलनमित्यर्थः, येन सः । 'रिङ्गणस्खलने समे' इत्यमरः । [ एषः ] कृष्णः, [ क्षणात् ] कियता कालेनैव, [ तरू ] अर्जुनाख्यौ वृक्षौ, [कथमिव ] केन प्रकारेण, [ अभनक् ? ] बभञ्ज ? भनक्तेः लङि रूपम् । नैतत् सम्भवति इत्यर्थः ; शिशुः कृष्ण एव वृक्षद्वयस्य भङ्क्ता इति सर्व्वे मन्यन्ते, तन्न सत्यमिति भावः । नो चेदभिमतमेतद्-भवतां, तत् कथं भग्नौ ? इत्याह, वाढ़मिति ।—[ वाढं ] दृढं, ध्रुवं वदामीत्यर्थः । 'वाढं दृढ़प्रतिज्ञयोः' इति मेदिनी । [ इदं ] वृक्षभञ्जनं, [ न बालकृतं ] शिशु-कर्म्म न एव, [ अयमपि ] तरुभङ्गोऽपि, न केवलं शकटभङ्गः इत्यपेरर्थः । [ देवता-

**विहरन् वने विजन एव महति दधदेष गोपताम् ।**
**नाम जगति मधुसूदन इत्यगमद्धतेन मधुना महीयसा ॥ २५ ॥**
**अविमृश्य गोवधसमुत्थमघमयममोमरद्रुषा ।**
**रिष्टमुपगु समुपोढमदं यदसौ किलासुर इति प्रमार्ष्टि तत् ॥२६॥**

---

विधिः ] कस्यचिददृष्टस्य दैवस्य विधानमित्यर्थः, [ विजृम्भते ] प्रतीयते, प्रकाशते इति यावत् । [ ननु ] इत्यवधारणम् । ननुशब्दः अत्रावधारणे । 'ननुशब्दो विनिग्रहे । अनुप्रश्ने परक्तावधिकारे च सम्भ्रमे । आमन्त्रणेऽप्यनुनये प्रश्नानुज्ञाऽवधारणे' इति मेदिनी । यो हि गतिशक्तिविरहितः, स कथमेवं लोकातीतं कर्म कर्त्तुं प्रभवति ? इति भावः । इति निन्दा ॥

स्तुतिपक्षे तु ।—[ एषः ] श्रीकृष्णः, [ कृतधरणिरिङ्गणः ] बालवेशधृक् इत्यर्थः, यत् [ क्षणात्, कथमिव ] असारवस्तुवत् इत्यर्थः, [ तरू ] अर्जुनौ, [ अभनक् । इदमपि, न बालकृतं ] न शिशुकर्म्म । तर्हि किम् ? इत्याह, वाढमिति ।—[ वाढं ] निश्चितम् ; [ अयं, दैवताविधिः ] दैवव्यापारः, [ विजृम्भते ननु ] प्रकाशते एव, विलसतीति यावत् ; तत्त्वतः नायं बालः, किन्तु बालरूपधृक् दैव एव ; ततश्च दैवत्वमाश्रित्य सर्व्वमेतदद्भुतं कर्म्म कृतवानिति हृदयम् ॥ २४ ॥

विहरन्निति ।—[ एषः ] कृष्णः, [ महति ] विशाले, [ विजने ] जनशून्ये, [ वने एव ] अरण्ये एव, [ गोपतां ] गोपालत्वं, [ दधत् ] धारयन्, [विहरन्] विचरन् सन्, वनाद्वनान्तरमिति शेषः ; [ महीयसा ] वृहता, [ मधुना ] माक्षिकपटलेन, मधुकोषेणेत्यर्थः, [ हतेन ] विनाशितेन, [ जगति ] पृथिव्यां, [ मधुसूदन इति नाम अगमत्] तदाख्यां लेभे ; न पुनः मधुदैत्यं हत्वा तादृशाभिधानमधिगतवानिति भावः । इति निन्दा ॥

स्तुतिपक्षे तु ।—[ एषः एव ] कृष्ण एव, [ महति ] सर्व्वलोकव्यापिनि, [ विजने] जनशून्ये, कल्पान्ते सर्वजनसंहारादिति भावः, [ वने ] जले । 'सलिलं कमलं जलम् । ···जीवनं भुवनं वनम् ।' इत्यमरः । [गोपतां] गां पृथिवीं, पाति रक्षति इति गोपस्तस्य भावस्तां, जगत्पालकत्वमित्यर्थः, [ दधत् ] धारयन्, [ विहरन्, महीयसा ] प्रबलेन, [ मधुना ] तदाख्यदैत्यविशेषेण, [ हतेन ] नाशितेन सता, [ जगति, मधुसूदन इति नाम अगमत् ] तन्नाम प्राप्तवान् ॥ २५ ॥

न केवलमयं साधारणपापी, परन्तु गोवधकारी अपि, अत एव न क्षमाऽर्हः इति

**मुखकन्दरान्तरगतोऽपि विकटदशनेन केशिना।**
**नास्य सपदि यदखादि भुजस्तदहो !! तिरश्चि सहजैव मूढ़ता ॥२७॥**

---

दर्शयितुमाह, अविमृश्येति।—[ अयं ] कृष्णः, [ गोवधसमुत्थं ] गोवधेन जनितम्, [ अघं ] पापम्, [ अविमृश्य ] अगणयित्वा, [ रुषा ] कोपेन, [ उपगु ] गवां समीपे, [ समुपोढ़मदं ] सञ्जातहर्षं, गाः कामयमानमित्यर्थः, [ रिष्टं ] तदाख्यं वृषभं, [ यत्, अमीमरत् ] अवधीत्। 'म्रियते' इत्यस्य धातोः णिचि लुङि रूपम्। [ असौ ] पापी कृष्ण इत्यर्थः, [ असुर इति ] दैत्य इति उक्त्वा ; यद्वा,— असौ असुर इति वृषभरूपी दैत्योऽयमिति उक्त्वा, [ किल ] इत्यलीके ; वस्तुतस्तु गौरेवायं, न त्वसुरः, गोघ्नश्चायमित्यर्थः, [ तत् ] प्रसिद्धं गोवधपातकं, [ प्रमार्ष्टि ] मया असुरः हतः, न तु गौरिति लोकसमीपे कथयन् परिशुध्यति। मैथुनप्रवृत्तगोवधकारी न क्षमाऽर्होऽयम् इति फलितम्। इति निन्दा॥

स्तुतिपक्षे तु।—[ अयं ] श्रीकृष्णः, [ अविमृश्यगोवधसमुत्थम् ] अविमृश्यः चिन्तयितुमशक्यः। "ऋदुपधात्—" ( ३।१।११० पा० ) इति क्यप्। यो गोवधः, तत्र समुत्था समुत्थानम्, उद्यम इति यावत्, यस्य तं, गाः समाक्रान्तवन्तमित्यर्थः, अत एव [ अघं ] पापरूपम् ; यद्वा,—अघमस्यास्तीत्यर्थे "अर्श आदिभ्योऽच्" ( ५।२।१२७ पा० ) इति मत्वर्थे अच्प्रत्ययः ; अघवन्तमिति तदर्थः, पापिनमिति यावत्, [ उपगु ] गवां समीपे। इत्यव्ययीभावः, तेन च "गोस्त्रियोरुपसर्जनस्य" (१।२।४८ पा०) इति ह्रस्वत्वम्। [समुपोढ़मदं] जातदर्पं, [रिष्टं] तदाख्यं वृषरूपधारिणं दैत्यं, [रुषा] कोपेन, [ यत्, अमीमरत् ] अवधीत्, [ तत्, किल ] सत्यम्, [ असौ असुरः इति प्रमार्ष्टि ] सत्य एवायमसुर इति जानता भगवता मायया धृतवृषरूपोऽपि स हत इत्यर्थः ; गोवधसमुद्यतस्य पापिनः दर्पिष्ठस्य दानवस्य वधात् भगवतः स्तुतिप्रतीतिः। पुरा किल श्रीकृष्णबलरामवधाय कंसेन प्रेषितः कश्चिदसुरः महावृषभरूपमाश्रित्य कृष्णं निहन्तुं गच्छन् गाः कामयमानः कृष्णेन हत इति पौराणिकी कथाऽत्रानुसन्धेया॥ २६॥

मुखेति।—[ विकटदशनेन ] विकटानि भीषणानि, दशनानि दन्ता यस्य तेन, [ केशिना ] तदाख्यतुरगवदनदानवेन, [ मुखकन्दरान्तरगतः अपि ] मुखमध्यप्रविष्टः अपि, [ अस्य ] कृष्णस्य, [ भुजः ] बाहुः, [ यत्, सपदि ] तत्क्षणात्, मुखे प्रविशमानम् इति यावत्। [ न अखादि ] न भक्षितः, [ तत्, अहो !! ] चित्रम् !!

**यदुदस्य बाहुमयमेकमधृत गिरिमद्भुतं न तत्।**
**भूरि सलिलमविषह्यमियं जलदे विमुञ्चति गवां सभाग्यता ॥२८॥**

---

[ तिरश्चि ] पश्वादौ, [ सहजा एव ] उत्पत्तिकालजातैव, स्वाभाविकी एव इत्यर्थः, [ मूढता ] मूर्खता, मुखाभ्यन्तरप्रविष्टोऽपि कृष्णभुजः तिर्यक्त्वादेव तेन भीषण-दन्तुरमुखेन मूर्खेण अश्ववदनदानवेन न भक्षितः, न मूढश्चेदसौ अश्वः, तदा का शक्तिः कृष्णस्य स्वभुजरक्षणे ? इति भावः। अत्र सामान्येन तिरश्चां मूर्खत्वेन विशेषस्य कृष्णभुजाभक्षणस्य समर्थनात् अर्थान्तरन्यासोऽलङ्कारः। इति निन्दा ॥

स्तुतिपक्षे तु।—पूर्वोक्तार्थस्यैव काक्वा स्तुतिरूपत्वं बोध्यम्।—[ केशिना ] तदाख्यदैत्येन, [ अस्य ] कृष्णस्य, [भुजौ यत्र, अखादि] भक्षितं, [तत्] किं [ तिरश्चि सहजा, मूढता एव ? ] मूर्खता एव ? न तु तत्, अपि तु अलौकिकशक्तेर्बालस्य भगवतः माहात्म्यात् असौ असुरः तद्भुजं भक्षितुमसमर्थ इत्यर्थः। [ अहो ! ] अद्भुतमस्य माहात्म्यमित्यर्थः। शेषन्तु समानमेव ॥ २७ ॥

यदुदस्येति।—[जलदे] मेघे, [अविषह्यम् ] असहनीयं, [भूरि] प्रभूतं, [सलिलं] जलं, [ विमुञ्चति ] वर्षति सति, [ अयं ] कृष्णः, [ एकं, बाहुं ] भुजम्, [ उदस्य ] उत्क्षिप्य, [ यत्, गिरिं ] गोवर्द्धनपर्व्वतम्, [ अधृत ] दध्रे, [ तत् ] गिरिधारणं, [ न अद्भुतं ] न चित्रम्। यत् सर्वेषामसाध्यं, तत् कथं नाद्भुतम् ? इत्याह, गवामिति।—[ इयं, गवां ] लोकरक्षानिदानतया मातृभूतानां, धर्म्मक्रियाहेतुतया देवानुग्रहमधिगतानाञ्च गोसमूहानामित्यर्थः, [ सभाग्यता ] पुण्यवत्त्वम् ; गवां पुण्यवत्त्वेनैव एतत् सम्भूतं, केनचिद्देवेन वा कृतमिदं, न तु कृष्णेन स्वशक्त्येति भावः। इति निन्दा ॥

स्तुतिपक्षे तु।—[ जलदे ] मेघे, देवेन्द्रस्याज्ञयेति भावः, [ अविषह्यं ] गोकुल-वासिभिः सोढुमशक्यं, [ भूरि ] प्रभूतं, [ सलिलं ] जलं, [ विमुञ्चति ] अविरलधारं वर्षति सतीत्यर्थः, [ अयं ] श्रीकृष्णः, [ एकं बाहुम् ] एकं भुजम्, [ उदस्य ] उत्क्षिप्य, [यत्, गिरिं] गोवर्द्धनपर्वतम्, [अधृत] धृतवान्, [ तत् न अद्भुतम् ? ] अपि तु अद्भुत-मेवेत्यर्थः। तथा च [ इयं गवां सभाग्यता ? ] इति काकुः, अपि तु नैव इति तदर्थः ; अलौकिकशक्तिमता भगवता स्वयं सर्वमेवतत् स्वमहिम्ना सम्पादितमिति भावः। पुरा हि भगवता श्रीकृष्णेन महेन्द्रपूजायां निषिद्धाः, तेनैव प्रचोदिताश्च गोकुलवासिनः गिरेः गोवर्द्धनस्य पूजां प्रक्रमितुमारेभिरे, तद्दृष्ट्वा भगवते प्रकुप्य

किमिवात्र चित्रमयमन्नमचलमहकल्पितं यदि ? ।
प्राश निखिलमखिलेऽपि जगत्युदरङ्गते बहुभुजोऽस्य न व्यथा॥२९॥
अमुना करेण पृथुदन्तमुसलमुदखानि दन्तिनः ।
तेन यदवधि स एव पुनर्बलशालिनां क इव तत्र विस्मयः ? ॥३० ॥

---

खावमानमसहमानः देवेन्द्रः अनियतं सप्त वासरान् रात्रीश्च प्रभूतं पानीयं ववर्ष, येन गोकुलं प्लावितमभूत् ; तद्दृष्ट्वा च भगवान् गोवर्द्धनपर्वतं करेण छत्ररूपतया विधृत्य गोकुलं तद्वासिनश्च ररक्षेति पौराणिकी वार्त्ता अत्रानुसन्धेया ॥ २८ ॥

अस्य आत्मम्भरित्वं दर्शयति, किमिवेति ।—[ अयं] कृष्णः, [ अचलमहकल्पितं ] गोवर्द्धनपर्वतोत्सवसम्पादितं, [ निखिलं ] समग्रम्, [ अन्नं ] भक्ष्यं, गोवर्द्धनपर्वतपूजार्थं सकलगोकुलवासिजनैरुपस्थापितमित्यर्थः, [ प्राश ] भक्षितवान्, [ यदि ] निन्दितं तदित्यर्थः । 'यदि गर्हाविकल्पयोः' इति मेदिनी । यद्वा ;— प्राश यदि भुक्तवांश्चेत्, तदा [ अत्र ] प्रभूतभक्ष्यभक्षणे, [ चित्रं ] विस्मयकारणमित्यर्थः, [किमिव ?] न किञ्चिदित्यर्थः । कथं न चित्रम् ? इत्याह, अखिले इति ।—[बहुभुजः] प्रचुरभक्षकस्य, उदरपरायणस्येत्यर्थः, [अस्य ] कृष्णस्य, [ अखिले] समग्रे, [ जगति ] भुवने, [उदरं] जठरं, [ गतेऽपि] प्राप्तेऽपि, जागतिकं निखिलवस्तु खादित्वाऽपीत्यर्थः, [ व्यथा ] पीड़ा, [ न ] नास्ति, जीर्णाभावादित्यर्थः ; लोभपरतन्त्रः बहुभोजी तु अविमृश्य यदेव प्राप्नोति, तदेव भुङ्क्ते, न च असौ बहुभोजनं दुःखं गणयति इति भावः । सर्वथा उदरम्भरिः विवेकहीनश्चायमिति निष्कर्षः । इति निन्दा ॥

स्तुतिपक्षे तु ।—[ अखिले ] समग्रे, [ जगति ] विश्वे, [ उदरं गतेऽपि ] कुक्षिप्राप्तेऽपि, [बहुभुजः] बहु प्रभूतं, भुनक्ति पालयति इति बहुभुक् तस्य, जगत्पालकस्येत्यर्थः । 'भुज पालने' इति पालनार्थकात् रुधादिगणीयपरस्मैपदिनो भुजधातोः क्विप् । [ अस्य ] श्रीकृष्णस्य, [ न व्यथा ] न दुःखम्, अतः [ अयं ] श्रीकृष्णः, [ यदि ] चेत्, [ अचलमहकल्पितं ] पर्वतोत्सवार्थं स्थापितं, [ निखिलं ] कृत्स्नं, बहुलमित्यर्थः, [ अन्नं ] भक्ष्यं, [ प्राश ] भक्षितवान्, [ अत्र, किमिव चित्रम् ? ] अत्र कोऽपि विस्मयः नास्त्येव इति काक्वर्थः ; कुक्षिस्थाखिलभुवनस्य जगदाधारस्य किञ्चिदन्नभक्षणं नैव चित्रमित्यभिप्रायः ॥ २९ ॥

अमुनेति ।—[ अमुना ] कृष्णेन, [ दन्तिनः ] कुवलयापीड़ाख्यस्य गजस्य, [ पृथुदन्तमुसलं ] पृथुः विशालः, दन्तः दशनं, मुसलम् अयोऽग्रमिव । 'अयोऽग्रं मुसलो-

**शिशुरेव शिक्षितनियुद्धकरणमकृतक्रियः स्वयम् ।**
**मल्लमलघुकठिनांसतटं न्यवधीद् यदेष तददृष्टकारितम् ॥ ३१ ॥**

---

ऽस्त्री स्यात्' इत्यमरः । [ करेण ] हस्तेन, [ यत्, उदखानि ] उत्पाटितं, [ तेन ] उत्खातदशनेन, [स एव] गज एव, यत् [अवधि] निहतः, [तव पुनः, बलशालिनां ] शक्तिमतां, [ क इव विस्मयः ? ] तत्र विस्मयो न युक्त इत्यर्थः ; मर्म्मणि आहत्य शिशुरपि प्रबलं मारयितुं शक्नोति, तत्र दुर्बलप्रबलविचारणाया अवकाशो नास्ति, अतः हरेः न भवति बलीयस्त्वे हेतुः कुवलयवध इति फलितार्थः । इति निन्दा ॥

स्तुतिपक्षे तु ।—[ अमुना ] श्रीकृष्णेन, [ दन्तिनः ] विशालाऽऽकृतेः महाबलशालिनः कुवलयापीड़ाख्यस्य कंसगजस्य इत्यर्थः, [ पृथुदन्तमुसलं ] पृथुः विशालः, दन्तः मुसलमिव, मुसलवदतिकठिनदशनमित्यर्थः, [करेण] हस्तेन, न पुनर्दूरादस्त्रादिनेति भावः ; [ उदखानि ] अक्लेशं समुत्पाटितं, [ तेन यत्, स एव ] महागज एव, [ अवधि ] हतः । हन्तेः कर्म्मणि लुङि रूपम् । [ तव पुनः, बलशालिनां ] महाबलानामपि, [ क इव ] अदृष्टपूर्वं इव, [ विस्मयः ] आश्चर्य्यम् ; यं दृष्ट्वा वीरा अपि दूरात् पलायामासुः, तस्य गजस्य समीपमुपगम्य दशनोत्पाटनं, तेन तस्य हननञ्च सर्वेषामेव विस्मयकरमिति भावः ; यदुक्तम्,—"एकः क्रुद्धो गजो हन्ति षट्सहस्राणि वाजिनाम्" इति ॥ ३० ॥

शिशुरिति ।—[ स्वयम्, अकृतक्रियः ] न कृता न शिक्षिता, क्रिया किमपि युद्धादि कार्य्यं येन सः, अज्ञ इत्यर्थः, [ एषः ] कृष्णः, [ शिशुरेव ] बालक एव, [ यत्, अलघुकठिनांसतटम् ] अलघु पीनं, कठिनं दृढम्, अंसतटं स्कन्धदेशो यस्य तं, तथा [ शिक्षितनियुद्धकरणं ] शिक्षितानि अभ्यस्तानि, नियुद्धकरणानि बाहुयुद्धक्रियाः येन तम् । 'नियुद्धं बाहुयुद्धे' इत्यमरः । [ मल्लं ] चाणूराख्यं दानवं, [न्यवधीत्] हतवान् । निपूर्वकात् हन्तेः कर्त्तरि लुङि रूपम् । [ तत् ] हननम्, [अदृष्टकारितम्] अदृष्टेन दैवेन, कारितं विहितं, न खलु तादृशः शिशुः महाबलशालिनं मल्लं हन्तुं शक्नोति, दैवेनैव सम्पादितमेतदित्यर्थः । इति निन्दा ॥

स्तुतिपक्षे तु ।—पूर्ववदत्रापि काका बोध्यम् । [ तत् अदृष्टकारितं ? ] नैव हि एतत् दैवविहितम्, अपि तु भगवतः श्रीकृष्णस्यैव माहात्म्यमिदमित्यर्थः । अन्यत् समानम् ॥ ३१ ॥

**यदयुध्यमानमपि सन्तमुपहितसुरौघसाध्वसम्।**
**कंसमभयमयमभ्यभवत् समुदा जनेन तदपि प्रशस्यते ?॥ ३२॥**
**इति निन्दितुं कृतधियाऽपि वचनममुना यदाददे।**
**स्तोतुमनिशमुचितस्य परैः स्तुतिरेव सा मधुनिघातिनोऽभवत्॥ ३३॥**

---

अयं पुनरगृहीतास्त्रस्य स्वजनस्यापि हन्ता इति दर्शयितुमाह, यदिति।—[अयं] कृष्णः, [अयुध्यमानम्] अकृतसमरक्रियं, निरस्त्रमित्यर्थः, तथा [उपहितसुरौघसाध्वसम्] उपहितं जनितं, सुरौघाणां देवसमूहानां, साध्वसं भयं येन तं, महाबलमित्यर्थः, [अभयं] नास्ति भयं यस्य तं, भयहीनमित्यर्थः, [सन्तं] साधुं, निर्दोषमित्यर्थः, [कंसं] तदाख्यं स्वमातुलम्, [अपि यत्, अभ्यभवत्] आचक्राम, आजघानेत्यर्थः, [तदपि] वीरानुचितं हननमपि, [समुदा] सानन्देन, [जनेन, प्रशस्यते ?] अभिनन्द्यते किम् ? इति काकुः; यद्वा,—अपि प्रश्ने, जनेन, समुदा सानन्देन सता, तत् वीरविगर्हितम् आक्रमणं, प्रशस्यते ? नैव तत् प्रशस्यते इत्यर्थः; वीरा हि निरस्त्रं न घ्नन्ति, तथाविधहननस्य निन्दाकरत्वादिति भावः। इति निन्दा॥

स्तुतिपक्षे तु।—[अयं] श्रीकृष्णः, [उपहितसुरौघसाध्वसं] जनितदेवगणभयम्, [अभयं] स्वयं त्रासरहितं, महावीरमित्यर्थः, [अयुध्यमानमपि, सन्तं] तिष्ठन्तं, [कंसं यत्, अभ्यभवत्] अहन्, [तदपि] तादृशनिरस्त्रहननमपि, [समुदा] सन्तोषवता, [जनेन, प्रशस्यते] स्तूयते एव; स खलु कण्टकभूतः कंसः जनान् एवमुत्पीडयामास यत्, सर्वेऽपि जनाः तद्विनाशेन प्रहृष्टाः भगवन्तं प्रशंसन्ति स्म इत्यर्थः॥ ३२॥

पूर्वोक्तश्लोकसमूहानां निन्दास्तुत्युभयार्थकत्वं ख्यापयन् उपसंहरति, इतीति।—[अमुना] चैद्येन, [इति] पूर्वोक्तप्रकारेण, [निन्दितुं] गर्हितुं, कृष्णमिति शेषः, [कृतधियाऽपि] कृता धीः बुद्धिर्येन तथाभूतेनापि सता, [यत्, वचनं] वाक्यम्, [आददे] ऊचे। "आङो दोऽनास्यविहरणे" (१।३।२० पा०) इति आङ्पूर्वात् ददातेः मुखविकसनादन्यत्रार्थे वर्त्तमानत्वादात्मनेपदम्। [परैः] शत्रुभिरपि, [अनिशं] सर्वदा, [स्तोतुम्] अभिनन्दितुम्, [उचितस्य] योग्यस्य, [मधुनिघातिनः] मधुरिपोः, कृष्णस्य इत्यर्थः। "कर्म्मणि हनः" (३।२।८६ पा०) इति हन्तेः कर्त्तरि णिनिः। [सा] निन्दार्थमुपन्यस्ता उक्तिः, [स्तुतिरेव] नुतिरेव, [अभवत्] अजायत। अत्र प्रक्षिप्तेषु सर्वेष्वेव श्लोकेषु पूर्ववदलङ्कारः ज्ञातव्यः॥ ३३॥

यदुवाच दुष्टमतिरेष परिविवदिषुर्मुरद्विषम् ।
द्व्यर्थमपि सदसि चेदिपतेस्तदतोऽपराधगणनामगाद्वचः ॥३४॥

इति प्रक्षिप्तश्लोकाः ।

---

इति वाचमुद्धतमुदीर्य्य
सपदि सह वेणुदारिणा ।
सोढरिपुबलभरोऽसहनः
स जहास दत्तकरतालमुच्चकैः ॥ ३९ ॥

---

यदिति ।—[ दुष्टमतिः ] हीनबुद्धिः, दुर्जन इत्यर्थः, [एषः] चेदिपः, [ मुरद्विषं ] मुरारिं, [परिविवदिषुः] निन्दितुमिच्छुः सन्, [सदसि] सभायां, [यत्, वचः] वाक्यम्, [ उवाच ] बभाषे, [तत्] वचः, [ द्व्यर्थमपि ] निन्दास्तुतिरूपोभयार्थकमपि, [ अतः ] अस्मादेव कारणात्, तस्य दुष्टमतित्वात् सततं मुरारिं विनिनिन्दिषुत्वादेवेत्यर्थः, [ चेदिपतेः ] शिशुपालस्य, [ अपराधगणनाम् अगात् ] अपराधमध्ये गणितमित्यर्थः ; यतोऽसौ दुष्टमतिः सर्वदा मुरारिनिन्दापर आसीत्, तेन हि तदुक्तवचनजातस्य निन्दास्तुतिरूपोभयार्थकतया उभयार्थप्रतिपादने तुल्यबलस्यापि भगवता श्रीकृष्णेन प्राधान्येन निन्दापरत्वमेव निर्द्धारितमित्याशयः । अत्र उवाचेत्यनेनैव विवक्षितार्थलाभात् 'वचः उवाच' इति वचःपदमधिकमिति अधिकपदता दोषः ॥ ३४ ॥

---

इतीति ।—[ सोढरिपुबलभरः ] सोढः क्षान्तः, रिपूणां बलभरो वीर्य्यातिशयो येन सः ; न सहत इति [ असहनः ] असहिष्णुः, [ सः ] चैद्यः, [ इति ] इत्थम्, [ उद्धतं ] निष्ठुरं यथा तथा, [ वाचम् उदीर्य्य सपदि, वेणुदारिणा ] नरकाऽऽत्मजेन, [ सह, दत्तकरतालं ] दत्तः करतालः परस्परपाणिताड़नं यस्मिन् कर्म्मणि तद्‌यथा तथा, [ उच्चकैः ] तारं, [ जहास ]। कृष्णदोषोद्घाटनहर्षादट्टहासं चकारेत्यर्थः। स्वभावोक्तिः ॥ ३९ ॥

कटुनाऽपि चैद्यवचनेन
विकृतिमगमन्न माधवः ।
सत्यनियतवचसं वचसा
सुजनं जनाश्चलयितुं क ईशते ? ॥ ४० ॥

न च तं तदेति शपमान-
मपि यदुनृपाः प्रचुक्रुधुः ।
शौरिसमयनिगृहीतधियः
प्रभुचित्तमेव हि जनोऽनुवर्त्तते ॥ ४१ ॥

---

कटुनेति ।—[ माधवः कटुनाऽपि चैद्यवचनेन विकृतिं नागमत् ] । गमेर्लुङि "पुषादि—" ( ३।१।५५ पा० ) इति च्लेरङादेशः । तथा हि, [ सत्यनियतवचसं ] सत्ये नियतवचसम् अस्खलितवचसं, सत्यसन्ध-मित्यर्थः, [सुजनं के जनाः, वचसा] । तीव्रेणापीति भावः ; [चलयितुम्, ईशते ? ] शक्नुवन्ति ? न केऽपीत्यर्थः । 'सहिष्ये शतमागांसि' इति प्रतिज्ञाभङ्गभयादसहतेति भावः । सामान्येन विशेषसमर्थनरूपो-ऽर्थान्तरन्यासः ॥ ४० ॥

न चेति ।—[च] किञ्चेति चार्थः । [ तदा ] तत्काले, [ इति ] इत्थं, [ शपमानम् ] आक्रोशन्तम्, [अपि] । 'शपतेराक्रोशे' इति भट्टमल्लः । [ तं ] चैद्यं, [ यदुनृपाः ] यादवाः, [ शौरिसमयनिगृहीतधियः ] शौरेः कृष्णस्य, समयेन सङ्केतेन, निगृहीतधियो निरुद्धबुद्धयः सन्तः, [न प्रचुक्रुधुः ] । "क्रुधद्रुहोरुपसृष्टयोः कर्म" (१।४।३८ पा०) इति कर्मत्वम् । [ हि ] तथा हि, [ जनः ] लोकः, [ प्रभुचित्तमेव अनुवर्त्तते ] । शौरि-सङ्केतनिरुद्धबुद्धेर्यदुविशेषणगत्या क्रोधाभावहेतुत्वात् काव्यलिङ्गमर्था-न्तरन्यासेन सङ्कीर्य्यते ॥ ४१ ॥

विहिताऽऽगसो मुहुरलङ्घ्य-
निजवचनदामसंयतः ।
तस्य कतिथ इति तत्प्रथमं
मनसा समाख्यदपराधमच्युतः ॥ ४२ ॥

स्मृतिवर्त्म तस्य न समस्त-
मपकृतमियाय विद्विषः ।
स्मर्तुमधिगतगुणस्मरणाः
पटवो न दोषमखिलं खलूत्तमाः ॥ ४३ ॥

---

विहितेति ।—[ अलङ्घ्यनिजवचनदामसंयतः ] अलङ्घ्येन निजवचनदाम्ना स्वप्रतिज्ञापाशेन, संयतो बद्धः, [अच्युतः, मुहुर्विहिताऽऽगसः] पूर्वं सहस्रशः कृतापराधस्यापि, [ तस्य ] चैद्यस्य, [ अपराधं ] स एव प्रथमो यस्मिन् कर्मणि [ तत्प्रथमं ] यथा तथा, [ कतिथः ] कतीनां पूरणः, [इति]। "तस्य पूरणे डट्" ( ५।२।४८ पा० ) इति डट्प्रत्ययः । "षट्कतिकतिपयचतुरां थुक्" ( ५।२।५१ पा० ) इति थुगागमः, [ मनसा, समाख्यत् ] गणनां चकार । "अस्यतिवक्तिख्यातिभ्योऽङ्" ( ३।१।५२ पा० ) इति च्लेरङादेशः । अत्र प्रतिज्ञापाशबन्धनस्य विशेषणगत्या प्राचीनापराधाऽऽनन्त्येऽपि तात्कालिकापराधगणनाहेतुत्वात् काव्यलिङ्गभेदः ॥ ४२ ॥

स्मृतीति ।—[ विद्विषः ] चैद्यस्य सम्बन्धि, [ समस्तमपकृतम् ] अपकारजातम् । नपुंसके भावे क्तः । [तस्य] हरेः, कृष्णस्येत्यर्थः, [स्मृतिवर्त्म ] स्मृतिपथं, [ नेयाय ] न प्राप, न तमपकारं सस्मारेत्यर्थः । अर्थान्तरं न्यस्यति ।—[ अधिगतगुणस्मरणाः] परिचितोपकारस्मृतयः, [ उत्तमाः ] सज्जनाः, [ अखिलं, दोषम् ] अपकारं, [स्मर्तुं, न पटवः खलु] नालं

नृपतावधिक्षिपति शौरि-
मथ सुरसरित्सुतो वचः ।
स्माह चलयति भुवं मरुति
क्षुभितस्य नादमनुकुर्वदम्बुधेः ॥ ४४ ॥
अथ गौरवेण परिवाद-
मपरिगणयंस्तमात्मनः ।
प्राह मुररिपुतिरस्करण-
क्षुभितः स्म वाचमिति जाह्नवीसुतः ॥४५॥

---

भवन्तीत्यर्थः । "पर्य्याप्तिवचनेष्वलमर्थेषु—" (३।४।६६ पा०) इति तुमुन्-प्रत्ययः । उपकारमेव स्मरन्ति साधवः, नापकारमित्यर्थः ॥ ४३ ॥

नृपताविति ।—[ अथ, नृपतौ ] चैदिपे, [ शौरिं ] हरिम्, [अधिक्षिपति ] सति, [ सुरसरित्सुतः ] भीष्मः, [ मरुति ] प्रलयमारुते, [ भुवं, चलयति ] कम्पयति सति, [ क्षुभितस्य ] उद्वेलस्य, [ अम्बुधेर्नादम् अनुकुर्वत् ] तद्वद् गभीरं, [वचः, आह स्म] उवाच । "लट् स्मे" (३।२।११८ पा० ) इति भूतार्थे लट् । "ब्रुवः पञ्चानामादित आहो ब्रुवः" (३।४।८४ पा०) इति णल्याहाऽऽदेशः । यद्यपि 'न पादाऽऽदौ खल्वादयः' (५ अधि १ अ० ५ सू०) इत्याह वामनः, तथाऽपि कविप्रोक्त्या स्मशब्दस्य पादाऽऽदौ प्रयोगः । उपमाऽलङ्कारः ॥ ४४ ॥

उक्तमेवार्थं वक्तुराशयाऽऽविष्कारार्थमाह, अथेति ।—[ अथ ] शिशुपालप्रलापानन्तरं, [ मुररिपुतिरस्करणक्षुभितः ] मुररिपुतिरस्करणेन हरिनिन्दया, क्षुभितः कलुषमनाः, [ जाह्नवीसुतः ] गाङ्गेयः, [गौरवेण] धैर्य्येण, [तमात्मनः परिवादं] 'काममयं' 'वयःपलित' इत्यादि स्वनिन्दाम्, [ अपरिगणयन्, इति ] वक्ष्यमाणप्रकारेण, [ वाचं, प्राह स्म ] प्रोक्तवान् । गतमेतत् । धीराः स्वनिन्दामेव सहन्ते, न गुरुदेवादि-

विहितं मयाऽद्य सदसीद-
मपमृषितमच्युतार्चनम् ।
यस्य नमयतु स चापमयं
चरणः कृतः शिरसि सर्वभूभृताम् ॥ ४६ ॥

इति भीष्मभाषितवचोऽर्थ-
मधिगतवतामिव क्षणात् ।
क्षोभमगमदतिमात्रमथो
शिशुपालपक्षपृथिवीभृतां गणः ॥ ४७ ॥

---

निन्दामिति भावः। अत्र क्षोभस्य विशेषणगत्या वचनहेतुत्वात् काव्यलिङ्गभेदः ॥४५॥

विहितमिति ।—[ मया अद्य, सदसि ] सभायां, [ विहितं ] कृतम्, [ इदम् अच्युतार्चनं यस्य, अपमृषितम्] अतितिक्षितम्, असोढमित्यर्थः। 'मृष तितिक्षायाम्' इति धातोः कर्मणि क्तः, उपसर्गवशाद्विपरीतार्थता; अत एव मृषिः तितिक्षायामेव किल्वनिषेधादतितिक्षार्थत्वान्न गुणः। "मतिबुद्धिपूजार्थेभ्यश्च" ( ३।२।१८८ पा० ) इति चकाराद्वर्त्तमानार्थता, "क्तस्य च वर्त्तमाने" ( २।३।६७ पा० ) इति षष्ठी। [ सः ] अपमर्षा पुरुषः, [चापं, नमयतु] आरोपयतु, [ सर्वभूभृताम् ]; मिषतामिति भावः। [ शिरसि अयं चरणः, कृतः ] न्यस्तः। अयमिति भूमौ पात्यमानस्य चरणस्य हस्तेन निर्देशः। अयं कोपामर्ष इत्यनुसन्धेयम् ॥ ४६ ॥

इतीति ।—[अथो, इति] इत्थं, [भीष्मभाषितवचोऽर्थं] भीष्मेण भाषितस्योक्तस्य, वचसोऽर्थमभिधेयं, शिरसि पादन्यासरूपमित्यर्थः, [ क्षणात्, अधिगतवतां ] प्राप्तवताम्, [इव] सतामित्यर्थः, [ शिशुपालपक्षपृथिवीभृतां ] शिशुपालस्य पक्षा ये पृथिवीभृतो राजानः तेषाम्, असौ [ गणोऽतिमात्रं, क्षोभं ] क्रोधं, विकारमिति यावत्, [ अगमत् ]।

शितितारकाऽनुमितताम्र-
नयनमरुणीकृतं क्रुधा ।
बाणवदनमुददीपि भिये
जगतः सकीलमिव सूर्य्यमण्डलम् ॥ ४८ ॥

प्रविदारितारुणतरोग्र-
नयनकुसुमोज्ज्वलः स्फुरन् ।
प्रातरहिमकरताम्रतनु-
र्विषजद्रुमोऽपर इवाभवद् द्रुमः ॥ ४९ ॥

---

एतेनैषाम् आत्मविनाशावसायी रौद्रस्थायी क्रोधः प्रादुरभूदित्युक्तम् । उत्प्रेक्षा ॥ ४७ ॥

अथैषां दशभिर्गात्राऽऽरम्भान् क्रोधानुभावानाह, शितीत्यादि ।—[क्रुधा] क्रोधेन, [अरुणीकृतम्], अत एव [शितितारकाऽनुमितताम्रनयनं] शिती श्यामे, ये तारके कनीनिके, ताभ्याम् अनुमिते अनुमापिते, ताम्रे नयने यस्य तत् । 'तारकाऽक्ष्णः कनीनिका' इत्यमरः । सर्वमुखस्य रक्तत्वादिति भावः । [बाणवदनं] बाणो नृपस्तस्य वदनं, [सकीलं] कीलाऽऽकारच्छायासहितं, परिधियुक्तमिति यावत्; [सूर्य्यमण्डलमिव जगतः, भिये] भयाय, [उददीपि] प्रजज्वाल । दीप्यतेः कर्त्तरि लुङि "दीपजन—" (३।१।६१ पा०) इत्यादिना चिण्प्रत्यये तलुक् । अत्र नयनयोः स्वधावल्यत्यागेनारुण्यस्वीकारात् तद्गुणः । तत्सापेक्षत्वादौत्पातिकसूर्य्यमण्डलोपमासङ्करः ॥ ४८ ॥

प्रवीति ।—[प्रविदारितारुणतरोग्रनयनकुसुमोज्ज्वलः] प्रविदारिते अतिविकासिते, अरुणतरे क्रोधादतिरक्ततरे, अत एवोग्रे भयङ्करे, ये नयने, ते एव कुसुमे, ताभ्यामुज्ज्वलो दीप्तः, [स्फुरन्] स्वतेजसा दीप्यमानः, [प्रातरहिमकरताम्रतनुः] प्रभातार्कारुणविग्रहः, [द्रुमः] प्रसिद्धः

अनिशान्तवैरदहनेन
विरहितवताऽन्तरार्द्रताम् ।
कोपमरुदभिहतेन भृशं
नरकाऽऽत्मजेन तरुणेव जज्वले ॥ ५० ॥
अभिधित्सतः किमपि राहु-
वदनविकृतं व्यभाव्यत ।
ग्रस्तशशधरमिवोपलसत्-
सितदन्तपङ्क्ति मुखमुत्तमौजसः ॥ ५१ ॥
कुपिताऽऽकृतिं प्रथममेव
हसितमशनैरसूचयत् ।

---

द्रुमाऽऽख्यो नृपः, [ अपरो विषजद्रुम इवाभवत् ]। इत्युत्प्रेक्षा रूपकसङ्कीर्णा ॥ ४९ ॥

अनिशान्तेति ।—[ अनिशान्तवैरदहनेन ] अनिशान्तोऽनिर्वाणः, वैरदहनो विरोधाग्निर्यस्य तेन, अत एव [अन्तः ] अभ्यन्तरे, [ आर्द्रतां ] सारस्यं, [ विरहितवता ] त्यक्तवता। रहयतेः क्तवतुप्रत्ययः। [ कोपमरुदभिहतेन ] कोपो मरुदिव, तेनाभिहतः प्रज्वलितः तेन, [ नरकाऽऽत्मजेन ] वेणुदारिणा, [ तरुणा ] वृक्षेण, [ इव भृशं, जज्वले ] ज्वलितम्। भावे लिट्। उपमाऽलङ्कारः ॥ ५० ॥

अभीति ।—[ किमपि, अभिधित्सतः ] अभिधातुमिच्छतः। दधातेः सन्नन्ताल्लटः शत्रादेशः। [ उत्तमौजसः ] नाम राज्ञः सम्बन्धि, [ राहुवदनविकृतं ] व्यात्तत्वाद्राहुवक्त्रवत् करालम्, [ उपलसत्सितदन्तपङ्क्ति ] उपलसन्ती लक्ष्यमाणा, सिता दन्तपङ्क्तिर्यस्य तत्, [ मुखं, ग्रस्तशशधरमिव ] सन्दष्टचन्द्रमिव, [ व्यभाव्यत ] अतर्क्यत। इत्युत्प्रेक्षा ॥ ५१ ॥

क्रुद्धमशनिदलिताद्रितट-
ध्वनि दन्तवक्रमरिचक्रभीषणम् ॥ ५२ ॥
प्रतिघः कुतोऽपि समुपेत्य
नरपतिगणं समाश्रयत् ।
यामिहरणजनितानुशयः
समुदाचचार निज एव रुक्मिणः ॥ ५३ ॥

---

कुपितेति ।—[ प्रथमं ] प्राक्, [एव] अकुपितावस्थायामपीत्यर्थः । [कुपिताऽऽकृतिं ] कुपितस्येवाकृतिर्मुखरागो यस्य, इत्युपमा ; तम् । [ अरिचक्रभीषणं ] परबलभयङ्करं, [दन्तवक्रं] दन्तवक्रनामानं राजानम्, [अशनिदलिताद्रितटध्वनि ] अशनिदलितस्य वज्राऽऽहतस्य, अद्रितटस्य ध्वनिरिव ध्वनिर्यस्य तत्, इत्युपमा । न शनैः [ अशनैः ] उच्चैः, [ हसितम् ] अट्टहासः, [ क्रुद्धमसूचयत् ] । सर्वदा मुखरागस्य विशेषणादनुभावान्तरवेद्यः क्रुद्ध इत्यर्थः । अत्र कोपव्यञ्जकसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरुपमासङ्कीर्णा ॥ ५२ ॥

प्रतिघ इति ।—[ प्रतिघः ] कोपः । 'कोपक्रोधामर्षरोषप्रतिघाः' इत्यमरः । [ कुतोऽपि, समुपेत्य ] आगत्य, [ नरपतिगणं ] राजमण्डलं, [ समाश्रयत् ] समाविशत् । [ रुक्मिणः ] तु [यामिहरणजनितानुशयः ] यामिः स्वसा । 'यामिः स्वसृकुलस्त्रियोः' इत्यमरः । तस्या रुक्मिण्याः, हरणेन जनितोऽनुशयः 'हा ! कष्टमापन्नं ! कदा निर्यातयामि ?' इति अनुतापो यस्मिन् सः । 'अथानुशयो दीर्घद्वेषानुतापयोः' इत्यमरः । [निजः] नित्यः, [ एव ] प्रतिघः । 'निजमात्मीयनित्ययोः' इति विश्वः । [ समुदाचचार ] समुद्दिदीपे । भीष्मवाक्यमन्येषां कोपोत्पादकमासीत् ; रुक्मिणस्तु प्रागेवावरूढकोपस्योद्दीपकमासीदित्यर्थः । अत्रानुशयस्य विशेषणगत्या कोपोद्दीपनहेतुत्वात् काव्यलिङ्गभेदः ॥ ५३ ॥

चरणेन हन्ति सुबलः स्म
शिथिलितमहीध्रबन्धनाम् ।
तीरतरलजलराशिजला-
मवभुग्नभोगिफणमण्डलां भुवम् ॥ ५४ ॥

कुपितेषु राजसु तथाऽपि
रथचरणपाणिपूजया ।
चित्तकलितकलहाऽऽगमनो
मुदमाहुकिः सुहृदिवाधिकां दधौ ॥ ५५ ॥

---

चरणेनेति ।—[ सुबलः ] सुबलो नाम राजा, [ शिथिलितमहीध्रबन्धनां ] महीं धारयन्तीति महीध्राः पर्वताः । "कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम्" (वा०) इति कप्रत्ययः । शिथिलितानि विश्लेषितानि, महीध्राणां बन्धनानि सन्धयो यस्यास्ताम् । [ तीरतरलजलराशिजलां ] तीरेण तरलानि भूकम्पाच्चलितानि, जलराशेरम्बुधेः, जलानि यस्यास्ताम् । [अवभुग्नभोगिफणमण्डलाम्] अवभुग्नं कुटिलम्, अतिभारादित्यर्थः, भोगिनां फणिनां, फणमण्डलं फणसमूहो यस्यास्तां, [ भुवं चरणेन, हन्ति स्म ] जघान । "लट् स्मे" ( ३।२।११८ पा० ) इति भूतार्थे लट् । अत्र पादाऽऽघाताद्भुवः कम्पासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ५४ ॥

कुपितेष्विति ।—[ रथचरणपाणिपूजया ] रथचरणपाणेश्चक्रपाणेः, पूजया, [ राजसु तथा कुपितेष्वपि, चित्तकलितकलहाऽऽगमनः ] चित्ते कलितं निश्चितं, कलहाऽऽगमनं युद्धलाभो येन सः, [आहुकिः] आहुकिर्नाम राजा ; शोभनं हृदयं यस्य सः [ सुहृत् ] मित्रम्, [इव] कृष्णपक्षपातीवेत्यर्थः । "सुहृद्दुर्हृदौ मित्रामित्रयोः" ( ५।४।१५० पा० ) इति निपातः । [अधिकां, मुदं दधौ ] सन्तोषं धृतवान् । सुहृदःसद्दोऽपि

गुरुकोपरुद्धपदमाप-
दसितयवनस्य रौद्रताम् ।
व्यात्तमशितुमिव सर्वजग-
द्विकरालमास्यकुहरं विवक्षतः ॥ ५६ ॥

विवृतोरुबाहुपरिघेण
सरभसपदं निधित्सता ।
हन्तुमखिलनृपतीन् वसुना
वसने विलम्बिनि निजे विचस्खले ॥ ५७ ॥

---

कृष्णोत्कर्षः कलहकण्डूलबाहोराहुकेर्मोदहेतुरासीदित्यर्थः । उपमाऽलङ्कारः ॥ ५५ ॥

गुर्विति ।—[ विवक्षतः ] किमपि वक्तुमिच्छतः । वचेः सन्नन्ताल्लटः शत्रादेशः । [ असितयवनस्य ] कालयवनस्य राज्ञः सम्बन्धि, [ सर्वजगत्, अशितुम् ] अत्तुम्, [ इव, व्यात्तं ] विवृतम्, अत एव [ विकरालम् ] अतिविकृतम् । 'करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च' इति वैजयन्ती । [ गुरुकोपरुद्धपदं ] गुरुणा कोपेन रुद्धपदं प्रतिबद्धवचनम्, [ आस्यकुहरं ] वक्त्रविवरं, [रौद्रतां] भयङ्करताम्, [आपत् ] । अत्राशितुमिवेति फलोत्प्रेक्षा व्यादानक्रियानिमित्ता ॥ ५६ ॥

विवृतेति ।—[ अखिलनृपतीन् हन्तुं, विवृतोरुबाहुपरिघेण ] विवृतः प्रसारितः, उरुबाहुरेव परिघ आयुधविशेषो येन तेन । 'परिघः प्रतिघातेऽस्त्री' इति हैमः । [ सरभसपदं ] सरभसं सत्वरं, यत् पदं तत्, [ निधित्सता] निधातुमिच्छता । दधातेः सन्नन्तात् लटः शत्रादेशः । [ वसुना ] तन्नाम्ना राज्ञा, [ विलम्बिनि ] उत्पातवेगात् विस्रंसिनि, [ निजे वसने ] स्वाम्बरे, [ विचस्खले ] स्खलितम् ; तच्चास्य दुर्निमित्तमिति भावः । भावे लिट् । अत्र वस्त्रस्रंसनस्य विशेषणगत्या स्खलनहेतुत्वात् काव्यलिङ्गं तच्चाहुपरिघेति रूपकेण संसृज्यते ॥ ५७ ॥

इति तत्तदा विकृतरूप-
मभजत्तदभिन्नचेतसम् ।
मारबलमिव भयङ्करतां
हरिबोधिसत्त्वमभि राजमण्डलम् ॥ ५८ ॥

रभसादुदस्थुरथ युद्ध-
मनुचितभियोऽभिलाषुकाः ।
सान्द्रमुकुटकिरणोच्छलित-
स्फटिकांशवः सदसि मेदिनीभृतः ॥ ५९ ॥

---

इतीति ।—[ इति ] इत्थं, [ तदा ] तस्मिन् काले, [ विकृतरूपं ] रोषभीषणाऽऽकारं, [तत्तत् राजमण्डलं, मारबलमिव ] मदनसैन्यमिव । 'मदनो मन्मथो मारः' इत्यमरः । [ अभिन्नचेतसम् ] अविकृतचित्तम् । बोधिसत्त्वो बुद्धः । 'बुद्धस्तु श्रीघनः शास्ता बोधिसत्त्वो विनायकः' इति वैजयन्ती । स हरिरिवेत्युपमितसमासः । तं [ हरिबोधि-सत्त्वम् अभि] तत्समक्षमित्यर्थः । "अभिरभागे" (१।४।९१ पा०) इत्यभेः कर्मप्रवचनीयत्वात् तद्योगे द्वितीया । [ भयङ्करतां ] भयं करोतीति भयङ्करः । "मेघर्तिभयेषु कृञः" (३।२।४३ पा०) इति खच्प्रत्यये मुमागमः । तस्य भावस्तत्ताम्, [ अभजत् ] । उपमाऽलङ्कारः । तेन भगवतो बुद्धस्य समाधिभङ्गाय प्रवृत्तं मारबलं यथा तेन भग्नं, तथा राजमण्डलमपि हरिणा भज्यत इति वस्तु व्यज्यते ॥ ५८ ॥

रभसादिति ।—[ अथ ] अनन्तरम्, [ अनुचितभियः ] अनभ्यस्त-साध्वसाः । 'अभ्यस्तेऽप्युचितम्' इति यादवः । अत एव [ युद्ध-मभिलाषुकाः ] युद्धार्थिनः । "लषपत—" ( ३।२।१५४ पा० ) इत्यादिना उकञ्प्रत्यये "न लोका—" ( २।३।६९ पा० ) इत्यादिना षष्ठी-प्रतिषेधः । [ सदसि मेदिनीभृतः] सदसि स्थिताः चैद्यपक्षीया राजानः,

स्फुरमाणनेत्रकुसुमोष्ठ-

दलमभृत भूभृदङ्घ्रिपैः।

धूतपृथुभुजलतं चलितै-

र्द्रुतवातपातवनविभ्रमं सदः॥ ६०॥

हरिमप्यमंसत तृणाय

कुरुपतिमजीगणन्न वा।

---

[सान्द्रमुकुटकिरणोच्छलितस्फटिकांशवः] सान्द्रैर्मुकुटकिरणैरुच्छलिताः स्फटिकांशवः सभाभित्तिस्फटिकमणिमयूखाः यैस्ते तथोक्ताः सन्तः, [रभसात्] वेगात्, [उदस्थुः] उत्थिताः। "उदोऽनूर्द्ध्वकर्मणि" (१।३।२४ पा०) इत्यस्य प्रत्युदाहरणमेतत्। अत्र युद्धाभिलाषुकस्य विशेषणगत्योत्थानहेतुत्वात् काव्यलिङ्गभेदः॥ ५९॥

स्फुरमाणेति।—[स्फुरमाणनेत्रकुसुमोष्ठदलं] स्फुरमाणानि नेत्राण्येव कुसुमानि, ओष्ठा एव दलानि च यस्मिन् कर्म्मणि तद्यथा तथा, [धूतपृथुभुजलतं] धूताः कम्पिताः, पृथवो भुजा एव लताः शाखा यस्मिन् कर्म्मणि तद् यथा तथा, [चलितैः, भूभृदङ्घ्रिपैः] भूभृतो राजानः, त एव अङ्घ्रिपाः पादपास्तैः, [सदः] सभामण्डपं, [द्रुतवातपातवनविभ्रमं] द्रुतः शीघ्रः, वातपातो वायुप्रचारो यस्य तस्य, वनस्य विभ्रमं शोभाम्। 'विभ्रमः संशये भ्रान्तौ शोभायाञ्च' इति वैजयन्ती। [अभृत] बभार। भृञो लुङि तङ्। "उश्च" (१।२।१२ पा०) इति सिचः कित्त्वाद्गुणाभावः, "ह्रस्वादङ्गात्" (८।२।२७ पा०) इति सलोपः। अत्र वनविभ्रममिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना नेत्रकुसुमेत्यादिरूपकोत्थापितेति सङ्करः॥ ६०॥

हरिमिति।—[मानतुलितभुवनत्रितयाः] अहङ्कारात् धारितजगत्त्रयाः, * [भूभृतः] चैद्यपक्षा राजानः, [हरिमपि, तृणायामंसत]

---

* अत्र "अहङ्कारावधीरितजगत्त्रयाः" इति पाठान्तरम्।

मानतुलितभुवनत्रितयाः
सरितः सुतादबिभयुर्न भूभृतः ॥ ६१ ॥
गुरु निःश्वसन्नथ विलोल-
सदवथुवपुर्वचोविषम् ।
कीर्णदशनकिरणाग्निकणः
फणवानिवैष विससर्ज चेदिपः ॥ ६२ ॥

---

तृणसमम् अमन्यन्त ; तथा लघुं मेनिरे, इति अनादरोक्तिः । मन्यतेः कर्त्तरि लुङि च्लेः सिच् । अनुदात्तत्वादिट्प्रतिषेधः "मन्यकर्मणि—" (२।३। १७ पा० ) इति चतुर्थी । [ कुरुपतिं, वा ] च, [नाजीगणत्] न धर्मराजं गणयन्ति स्मेत्यर्थः । गणेर्णौ चङि "ई च गणः" ( ७।४।९७ पा० ) इत्यभ्यासस्येकारः । [ सरितः सुतात् ] भीष्मादपि, [ न अबिभयुः ] न भीताः । बिभेतेर्लङि "श्लौ" ( ६।१।१० पा० ) इति द्विर्भावे "सिजभ्यस्तविदिभ्यश्च" (३।४।१०९ पा०) इति झेर्जुसादेशः, "जुसि च" ( ७।३।८३ पा० ) इति गुणः । अत्र राजसु ह्यर्यवमानाख्यनेकक्रियायोगपद्यात् समुच्चयः इति सर्वस्वकारमतम् ॥ ६१ ॥

गुर्विति ।—[ अथैष चेदिपः, फणवान् ] फणी, [ इव, गुरु ] अधिकं, [ निःश्वसन् ] फूत्कुर्वन् ; विलोलं, सदवथु ससन्तापम् । 'सन्तापो दवथुरित्यनेकार्थात्' इति सज्जनः । तद्वपुर्यस्य सः [ विलोलसदवथु वपुः ] । "ट्वितोऽथुच्" ( ३।३।८९ पा० ) इति अथुच्प्रत्ययः । [ कीर्णदशनकिरणाग्निकणः ] कीर्णा विक्षिप्ताः, दशनकिरणा अग्निकणा इव यस्य सः, तथा सन् ; वचो विषमिव तत् [ वचोविषं विससर्ज ] विषप्रायं वच उज्जगारेत्यर्थः । अतः फणवानिवेति व्यस्तोपमालिङ्गात् सर्वलोपमितसमासाऽऽश्रयणम् ॥ ६२ ॥

किमहो !! नृपाः ! सममभीभि-
रुपपतिसुतैर्न पञ्चभिः।
बध्यमभिहत भुजिष्यममुं
सह चानया स्थविरराजकन्यया ? ॥ ६३ ॥

अथवाऽऽध्वमेव खलु यूय-
मगणितमरुद्गणौजसः।
वस्तु कियदिदमयं न मृधे
मम केवलस्य मुखमीक्षितुं क्षमः ॥ ६४ ॥

---

अथैतद्वचोविषमेव चतुर्भिराह, किमित्यादि।—हे [ नृपाः ! अमीभिः पञ्चभिः, उपपतिसुतैः समं ] जारजैः सह। पाण्डवानां चैल-जत्वादित्थं प्रलापः। [ अनया, स्थविरराजकन्यया ] वलियाङ्गनया, [ च सह ]। "कन्या कुमारिकानार्य्योः" इति विश्वः। भीष्मस्योर्द्ध-रेतस्कत्वेन निन्दा। [ बध्यं ] बधार्हम्, अराज्ञो राजार्हणाग्रहणापराधा-दिति भावः। अराजत्वं व्यनक्ति।—[अमुं, भुजिष्यं] किङ्करम् ; कंसपशु-पालनादिति भावः। 'भुजिष्यः किङ्करो मतः' इति हलायुधः। [ किं नाभिहत ? ] किमिति न मारयत ? किन्तु अभिहतेत्यर्थः। हन्तेर्बधार्थे लोट्, "लोटो लङ्वत्" ( ३।४।८५ पा० ) इति थस्य ताऽऽदेशः। "अनु-दात्तोपदेश—" (६।४।३७ पा०) इत्यादिना अनुनासिकलोपः। [ अहो !! ] अतिबध्योऽपि न हन्यत इत्याश्चर्य्ये। अत्रामर्षानुभावो वागारम्भः ;— 'क्रोधः कृतापराधेषु स्थिरोऽमर्ष इतीर्य्यते' इति क्रोधलक्षणात् ॥ ६३ ॥

अथवेति।—[ अथवा, अगणितमरुद्गणौजसः ] अवधीरितसुरसङ्घ-सत्त्वाः, [यूयम्, आध्वमेव] तूष्णीं तिष्ठतैव, [खलु]। आस्तेर्लोटि "धि च" (८।२।२५ पा०) इति सकारलोपः। [इदं] कृष्णहननं, [ कियद्वस्तु ? ] कियत्कार्य्यम् ? अल्पमित्यर्थः। कुतः ?—[अयं] कृष्णः, [मृधे] युद्धे। 'मृध-

विदतुर्यमुत्तममशेष-
परिषदि नदीजधर्मजौ ।
यातु निकषमधियुद्धमसौ
वचनेन किं ? भवतु साध्वसाधु वा ॥ ६५ ॥

अचिरात् मया सह गतस्य
समरमुरगारिलक्ष्मणः ।
तीक्ष्णविशिखमुखपीतमसृक्
पततां गणैः पिबतु सार्द्धमुर्वरा ॥ ६६ ॥

---

माक्रन्दनं सङ्ग्रम्' इति युद्धपर्य्यायेष्वमरः । [ केवलस्य ] एकाकिनः, [ मम ] एव, [ मुखमीक्षितु न क्षमः ] युष्माकं का वार्त्ता ? इति भावः । एतेनास्य बलगर्वो व्यज्यते,—“आत्मोत्कर्षोऽन्यधिक्कारो यल्लावण्य-विभूतिभिः” इति लक्षणात् ॥ ६४ ॥

विदतुरिति ।—किञ्च [ नदीजधर्मजौ ] भीष्मयुधिष्ठिरौ, [ अशेष-परिषदि ] समग्रसंसदि । 'परिषत् संसत्' इति विश्वः । [ यं ] कृष्णम्, [ उत्तमं, विदतुः ] विदितवन्तावित्यर्थः । “विदो लटो वा” ( ३।४। ८३ पा० ) इति तसोऽतुसादेशः । [ असौ ] कृष्णः, [ अधियुद्धं ] युद्धे । विभक्त्यर्थेऽव्ययीभावः । [ निकषं ] निकषणं, [ यातु ], परीक्ष्यता-मित्यर्थः । ततः [ साधु ] उत्कर्षः, [ असाधु ] अनुत्कर्षः, [ वा भवतु ], व्यक्तमस्त्वित्यर्थः । [ वचनेन किम् ? ] वृथा वाग्वीर्य्यैरलमित्यर्थः । अत्रापि गर्वामर्षौ व्यज्येते ॥ ६५ ॥

अचिरादिति ।—किञ्च [ मया सह समरं गतस्य, उरगारिलक्ष्मणः ] गरुड़ध्वजस्य सम्बन्धि, [ तीक्ष्णविशिखमुखपीतं ] तीक्ष्णैर्विशिखमुखैः पीतं मद्बाणोच्छिष्टमित्यर्थः । [ असृक् ] रक्तम्, [ उर्वरा ] भूमिः । 'उर्वरा सर्वशस्याऽऽढ्यभूमौ स्याद्भूमिमात्रके' इति विश्वः । [ पततां गणैः ]

अभिधाय रूक्षमिति मा स्म
गम इति पृथासुतेरिताम्।
वाचमनुनयपरां स ततः
सहसाऽवकर्ण्य निरियाय संसदः ॥ ६७ ॥

गृहमागताय कृपया च
कथमपि निसर्गदक्षिणाः।
क्षान्तिमहितमनसो जननी-
स्वसुरात्मजाय चुकुपुर्न पाण्डवाः ॥ ६८ ॥

---

पक्षिसमूहैः। 'पतत्पत्ररथाण्डजाः' इत्यमरः। [ सार्द्धमचिरात् पिबतु ], अद्यैवाहमेनं हनिष्यामीत्यर्थः। अत्रापि अमर्ष एवेति भावः ॥ ६६ ॥

अभिधायेति।—[सः] चैद्यः, [इति] इत्थं, [ रूक्षं ] परुषम्, [ अभिधाय ततः, पृथासुतेरितां ] पृथासुतैः पार्थैः, ईरिताम् उक्ताम्, [ अनुनयपरां, मा स्म गमः ] न गच्छ, [ इति वाचम् ]। "स्मोत्तरे लङ् च" (३।३।१७६ पा०) इति चकाराद्गमेराशिषि लुङि, पुषादि—" (३।१।५५ पा०) इति च्लेरङादेशः, "न माङ्योगे" ( ६।४।७४ पा० ) इत्यड़भावः। [ अवकर्ण्य ] अनादरेण श्रुत्वा, [ सहसा, संसदः ] सदसः, [ निरियाय ] निर्ययौ ; अमर्षादेवेति भावः ॥ ६७ ॥

गृहमिति।—[ निसर्गदक्षिणाः ] स्वभावतो दाक्षिण्यसम्पन्नाः, परच्छन्दानुवर्त्तिन इत्यर्थः। 'त्रिषु वाक्कुशलावामपरच्छन्दानुवर्त्तिषु। दक्षिणा—' इति वैजयन्ती। किञ्च [क्षान्तिमहितमनसः] क्षान्त्या क्षमया, महितमनसः पूजितचित्ताः, क्षमावन्तः इत्यर्थः, [ पाण्डवाः ]। किञ्च [ गृहमागताय ] अभ्यागतायेत्यर्थः। किञ्च [ जननीस्वसुः ] मातृष्वसुः, [ आत्मजाय ] शिशुपालाय, [ कृपया च, कथमपि ] असह्यापराधेऽपीत्यर्थः, [ न चुकुपुः ] न चुक्रुधुः। सद्यो वध्यस्यापि तस्याभ्यागतत्वात्,

चलितं ततोऽनभिहतेच्छ-
मवनिपतियज्ञभूमितः ।
तूर्णमथ ययुमिवानुययु-
र्दमघोषसूनुमवनीशसूनवः ॥ ६९ ॥

विशिखाऽन्तराण्यतिपपात
सपदि जवनैः स वाजिभिः ।
द्रष्टुमलघुरभसाऽऽपतिता
वनिताश्चकार न सकामचेतसः ॥ ७० ॥

---

मातृबन्धुत्वात्, स्वयं क्षान्तत्वात्, दाक्षिण्यात्, कृपया च कथमपि जिघांसां न चक्रुरित्यर्थः । "क्रुधद्रुह—" ( १।४।३७ पा० ) इत्यादिना सम्प्रदानत्वात् चतुर्थी । अलाभ्यागतत्वादिविशेषणानां साभिप्राय-त्वादकोपहेतुत्वाच्च परिकरः, काव्यलिङ्गे सति सापेक्षत्वात् सङ्कीर्यते ॥ ६८ ॥

चलितमिति ।—[ अथ ] चैद्यनिर्य्याणानन्तरम्, [ अवनीशसूनवः ] तद्गणराजपुत्राः, [ ततः ] तस्याः, [ अवनिपतियज्ञभूमितः ] अवनिपते-र्युधिष्ठिरस्य, यज्ञभूमितो यज्ञभूमेः, देवयजनात् इति यावत् । पञ्चम्यास्त-सिल् । [ अनभिहतेच्छम् ] अप्रतिहतमनोरथं यथा तथा, [ चलितं ] प्रस्थितं, [ दमघोषसूनुं ] शिशुपालम् । याति परलोकमिति ययुः, परलोकप्रापकोऽश्वमेधीयोऽश्वः । 'ययुरश्वोऽश्वमेधीयः' इत्यमरः । "यो द्वे च" ( उणा० १ पा० २२ सू० ) इति यातेरौणादिक उकः, द्वित्वञ्च । तं [ ययुमिव तूर्णमनुययुः ] ययुरपि राजकैः राजपुत्रैरन्वीयते । "चतुःशता रक्षन्ति" इति श्रुतेः । अश्वमेध्याश्वोपमया चैद्यस्य बध्यत्वं व्यज्यत इति अलङ्कारेण वस्तुध्वनिः ॥ ६९ ॥

विशिखाऽन्तराणीति ।—[सः] चैद्यः, [सपदि, जवनैः] वेगशालिभिः,

त्वगमौच्चितः पथि जनेन
किमिदमिति जल्पता मिथः।
प्राप्य शिविरमविशङ्किमनाः
समनीनहद्द्रुतमनीकिनीमसौ ॥ ७१ ॥

त्वरमाणशाङ्खिकसवेग-
वदनपवनाभिपूरितः।
शैलकटकतटभिन्नरवः
प्रणनाद सान्नहनिकोऽस्य वारिजः ॥ ७२ ॥

---

[ वाजिभिः ] अश्वैः, [ विशिखाऽन्तराणि ] रथ्याऽन्तराणि। 'रथ्या प्रतोली विशिखा' इत्यमरः। [ अतिपपात ] अतिचक्राम ; अत एव [ द्रष्टुम्, अलघुरभसाऽऽपतिताः ] अलघुरभसेनातिवेगेन, आपतिताः आधावन्तीः, [वनिताः] ; सकामानि साभिलाषाणि, चेतांसि चित्तवृत्तयो यासां ताः [ सकामचेतसः ] सफलमनोरथा इत्यर्थः। [ न चकार ], अतिशीघ्रलङ्घनात् न दर्शनावकाशस्तासामासीदित्यर्थः। अत एव वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ७० ॥

त्वगमिति।—[असौ] चैद्यः, [पथि, किमिदम् ? इति मिथः जल्पता] कोऽयमनर्थः संवृत्तः ? इति परस्परमालपता, [जनेन त्वगमौच्चितः] सन्, [शिविरं] स्वकटकं, [प्राप्य, अविशङ्किमनाः] निःशङ्कचित्तः, [द्रुतं] शीघ्रम्, [ अनीकिनीं ] सेनां, [ समनीनहत् ] सन्नाहयति स्म। नह्यतेः सम्पूर्व-कात् लुङि "णौ चङ्युपधाया ह्रस्वः" ( ७।४।१ पा० ) इति उपधायाः ह्रस्वत्वम्, अभ्यासदीर्घश्च। शिविरं शकटमिति केचित्। एतेन अस्य रौद्रस्थायिनः कोपस्य प्ररूढत्वं वेदितव्यम् ॥ ७१ ॥

त्वरमाणेति।—शङ्खः शिल्पमस्येति शाङ्खिकः। तदस्य "शिल्पम्" ( ४।४।५५ पा० ) इति ठक्। [त्वरमाणशाङ्खिकसवेगवदनपवनाभि-

जगदन्तकालसमवेत-
विषदविषमेरितारवम् ।
धीरनिजरवविलीनगुरु-
प्रतिशब्दमस्य रणतूर्यमावधि ॥ ७३ ॥
सहसा ससम्भ्रमविलोल-
सकलजनतासमाकुलम् ।

---

पूरितः ] त्वरमाणस्य जवमानस्य, शाङ्खिकस्य यः सवेगः वदनपवनो मुखमारुतः, तेनाभिपूरितः प्रध्मातः, [ शैलकटकतटभिन्नरवः ] शैलानां कटकतटेषु नितम्बप्रदेशेषु, भिन्नरवो मूर्च्छितप्रतिध्वनिः, [ अस्य ] चैद्यस्य सम्बन्धि; सन्नहनं प्रयोजनमस्येति [ सान्नहनिकः ] योधानां रणसन्नाहप्रवर्त्तक इत्यर्थः। तदस्य "प्रयोजनम्" ( ५।१।१०९ पा० ) इति ठक्। [वारिजः] शङ्खः। 'वारिजः शङ्खपद्मयोः' इति विश्वः। [प्रणनाद ] दध्वान; सन्नहनशङ्खं दध्मावित्यर्थः। "उपसर्गादसमासेऽपि णोपदेशस्य" ( ८।४।१४ पा० ) इति णत्वम्। एतेन अस्य महानुत्साहो वीररसस्थायी व्यज्यते ॥ ७२ ॥

जगदिति।—[ जगदन्तकालसमवेतविषदविषमेरितारवं ] जगदन्तकाले कल्पान्ते, समवेता मिलिताः, ये विषदास्तोयदाः, पुष्कराऽऽवर्त्तकादयो मेघाः इति यावत्। 'विषं तु गरले तोये' इति विश्वः। तैर्विषमं दारुणं यथा तथा, ईरित उत्पादितः, य आरवः, स इवाऽऽरवो यस्य तत्, [ धीरनिजरवविलीनगुरुप्रतिशब्दं ] धीरे गम्भीरे, निजरवे विलीना अन्तर्गताः, गुरवः प्रतिशब्दाः शब्दान्तराणि यस्य तत्, [ अस्य ] चैद्यस्य, [ रणतूर्य्यं ] रणदुन्दुभिः, [ आवधि ] आहतम्। आहन्तेः कर्मणि लुङ्, "आत्मनेपदेषु अन्यतरस्याम्" ( २।४।४४ पा० ) इति हनो वधादेशः। अत्रापि उत्साहो व्यज्यते। उपमाऽलङ्कारः ॥ ७३ ॥

सहसेति।—[ अथ ] रणदुन्दुभिताड़नानन्तरं, [ सहसा ] झटिति,

स्थानमगमदथ तत्परित-
स्खलितोडुमण्डलनभःस्थलोपमाम् ॥ ७४ ॥
दधतो भयानकतरत्व-
मुपगतवतः समानताम् ।
धूमपटलपिहितस्य गिरेः
समवर्मयन् सपदि मेदिनीभृतः ॥ ७५ ॥

---

[ ससम्भ्रमविलोलसकलजनतासमाकुलं ] ससम्भ्रमं सव्यग्रं यथा तथा, विलोलया चलन्त्या, सकलया समग्रया, जनतया जनसमूहेन, समाकुलं सङ्कीर्णं, [ तत् स्थानं परितः, चलितोडुमण्डलनभःस्थलोपमां ] चलितं प्रस्थितम्, उडुमण्डलं ज्योतिश्चक्रं यस्मिन् तस्य, नभःस्थलस्य उपमां सादृश्यम्, [अगमत्]। अत्र उडुमण्डलस्य चलनासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेः अतिशयोक्तिः। उपमा तु तदुज्जीविता प्रतीतिमात्रसारा तदङ्गं, तत्रैव चमत्कारस्फुरणात्। 'पुष्पं प्रवालोपहितं यदि स्यात्' इत्यादिवत् ॥ ७४ ॥

दधत इति।—[ मेदिनीभृतः ] राजानः, [ धूमपटलपिहितस्य ] धूमपटलेन पिहितस्य छादितस्य, अत एव [ भयानकतरत्वम् ] अतिभयङ्करत्वम्, [उपगतवतो गिरेः, समानतां] सादृश्यं, [दधतः] दधानाः, [ सपदि, समवर्मयन् ] संवर्मयन्ति स्म; सम्यग्वर्मणाऽनह्यन्नित्यर्थः। "सत्यापपाश—" ( ३।१।२५ पा० ) इत्यादिना णिच्। उपमाऽलङ्कारः * ॥ ७५ ॥

---

* अत्रापि पूर्ववत् गिरेः धूमपटलपिहितत्वासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेः असम्बन्धे सम्बन्धरूपेयमतिशयोक्तिरिति तु नाऽऽशङ्कनीयम्; पर्वतो वह्निमान् धूमादित्यादिन्यायान्तर्गतप्रतिज्ञायां परार्थानुमानावसरेऽवतारितायां ततः "व्याप्यो धूमः अत्र वर्त्तते न वा?" इति प्रश्ने,—"वह्निव्याप्यधूमवांश्चायम्" इत्युपनयवाक्यस्यावतारणादर्शनात् धूमपटलवत्त्वस्यास्य प्रसिद्धत्वेन उपमैवेति वेदितव्यम्।

परिमोहिणा परिजनेन
कथमपि चिरादुपाहृतम् ।
वर्म करतलयुगेन महत्-
तनुचूर्णपेषमपिषद्रुषा परः ॥ ७६ ॥

रणसम्मदोदयविकासि
बलकलकलाऽऽकुलीकृते ।
शारिमशकदधिरोपयितुं
द्विरदे मदच्युति जनः कथञ्चन ॥ ७७ ॥

---

परिमोहिणीति।—[परः] अन्यो नृपः, [परिमोहिणा] परिमुह्यतीति परिमोही। "सम्पृचा—" (३।२।१४२ पा०) इत्यादिना घिनुण्प्रत्ययः। तेन, खेदयुक्तेन इत्यर्थः। [परिजनेन] सेवकजनेन, [कथमपि] विलम्बेन, कष्टसृष्ट्या इत्यर्थः, [चिरात्, उपाहृतम्] आनीतं, [महत्, वर्म] सन्नाहं, [रुषा, करतलयुगेन] पाणितलद्वयेन, [तनुचूर्णपेषं] तनुचूर्णं पिष्ट्वा। "शुष्कचूर्णरूक्षेषु पिषः" (३।४।३५ पा०) इति णमुल्प्रत्ययः। [अपिषत्] चूर्णितवान्; तच्च जिगीषोर्दुर्निमित्तमिति भावः। "कषादिषु यथाविध्यनुप्रयोगः" (३।४।४६ पा०) इत्यनुप्रयोगः। पिषेर्लुङि, "पुषादि—" (३।१।५५ पा०) इति च्लेरङादेशः। अत्र वर्मणः पेषणासम्बन्धेऽपि तत्सम्बन्धोक्तेः अतिशयोक्तिः; तया च अमानुषं वीर्य्यमस्य व्यज्यते ॥ ७६ ॥

रणेति।—[रणसम्मदोदयविकासिबलकलकलाऽऽकुलीकृते] रणेन रणाऽऽरम्भेण, यः सम्मदो हर्षः। "प्रमदसम्मदौ हर्षे" (३।३।६८ पा०) इति निपातः। तस्य उदयेन जन्मना, विकासिभिर्विस्तारिभिः, बलकलकलैः सैन्यकोलाहलैः, आकुलीकृते सङ्क्षोभिते, अत एव, मदं च्योततीति [मदच्युति] मदस्राविणि। क्विप्। [द्विरदे] गजे, [जनः]

परितश्च धौतमुखरुक्म-
विलसदहिमांशुमण्डलाः।
तेनुरतनुवपुषः पृथिवीं
स्फुटलक्ष्यतेजस इवाऽऽत्मजाः श्रियः ॥७८॥

प्रधिमण्डलोद्धतपराग-
घनवलयमध्यवर्त्तिनः।
पेतुरशनय इवाशनकै-
र्गुरुनिःस्वनव्यथितजन्तवो रथाः ॥ ७९ ॥

---

परिजनः, [ शारिं ] पर्य्याणम्। 'ना पर्य्याणे विहङ्गे स्त्री शारिर्द्यूतगुड़े नपुम्' इति वैजयन्ती। 'शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकाऽन्तरे। युद्धार्थं गजपर्य्याणे व्यवहारान्तरे क्वचित् ॥' इति विश्वप्रकाशश्च। [अधिरोपयितुम् ] आरोपयितुं, [ कथञ्चन ] कृच्छ्रात्, [ अशकत् ] शशाक। शकेर्लुङि "पुषादि—" (३।१।५५ पा०) इति च्ले रङादेशः। अत्र विशेषणगत्या सेनाकलकलस्य मदहेतुत्वान्मदस्य शारिदुरारोपत्वहेतुत्वाच्च काव्यलिङ्गद्वयं तत्सापेक्षत्वात् सङ्कीर्य्यते ॥ ७७ ॥

परित इति।—[ च ] किञ्चेति चार्थः। [ धौतमुखरुक्मविलसदहिमांशुमण्डलाः ] धौतेषु शोधितेषु, मुखरुक्मेषु मुखस्य रुक्माऽऽभरणेषु, विलसत् प्रत्येकं प्रतिफलत्, अहिमांशुमण्डलमर्कविम्बं येषां ते तथोक्ताः ; अत एव [स्फुटलक्ष्यतेजसः] स्फुटलक्ष्यमन्तर्गत्वा बहिः स्फुरितं, तेजोऽन्तःसारो येषां ते, [ इव ] स्थिता इत्युत्प्रेक्षा। तेजो व्याख्यातं "तेजोनिरोध—" (५सर्ग० १०म श्लोकः ) इत्यत्र। [अतनुवपुषः] महाकायाः, [ श्रियः आत्मजाः ] अश्वाः। 'लक्ष्मीपुत्रोऽश्व आढ्ये च' इति वैजयन्ती। [ परितः पृथिवीं, तेनुः ] व्याप्तवन्तः ॥ ७८ ॥

प्रधीति।—[ प्रधिमण्डलोद्धतपरागघनवलयमध्यवर्त्तिनः ] 'चक्रधारा

दधत: शशाङ्कितशशाङ्क-

रुचि लसदुरश्छदं वपु: ।

चक्रुरथ सह पुरन्ध्रिजनै-

रयथार्थसिद्धि सरकं महीभृत: ॥ ८० ॥

दयिताय सासवमुदस्त-

मपतदवसादिन: करात् ।

---

प्रधिर्नेमि:' इति हलायुध: । प्रधिमण्डलैर्नेमिवलयै:, उद्धता उत्थापिता:, परागा: पांशव एव, घना मेघा:, तेषां वलयानि मण्डलानि, तेषां मध्य-वर्त्तिन:, [गुरुनि:स्वनव्यथितजन्तव: ] गुरुभिर्नि:स्वनै: स्वघोषै:, व्यथिता भीषिता:, जन्तव: प्राणिनो यैस्ते, [ रथा:, अशनय: ] वज्रा:, [ इव, अशनकै: पेतु: ] तीव्रमधावन् । अत्र रथानामशनित्वेनोत्प्रेक्षा परागाणां घनत्वरूपणसापेक्षेति सङ्कर: * ॥ ७९ ॥

दधत इति ।—[ अथ, लसदुरश्छदं ] लसन् उरश्छद: कवचो यस्मिन् कर्मणि तद्यथा तथा । 'उरश्छद: कङ्कटकोऽजगर: कवचोऽस्त्रियाम्' इत्यमर: । अत एव [ शशाङ्कितशशाङ्करुचि ] शशाङ्कितो मृगलाञ्छित:, य: शशाङ्क: इन्दु:, तस्य रुचिरिव रुचिर्यस्य, इत्युपमा । तत्, [ वपु:, दधत: ] दधाना:, [ महीभृत: ] राजान:, [ पुरन्ध्रिजनै: ] अङ्गनाजनै:, [ सह, अयथार्थसिद्धि] अयथार्था असत्या, सिद्धिर्मदकार्य्योत्पत्ति: यस्मिन् तत्, यथार्थसिद्धिरहितम्, अनिर्वृतचित्तत्वादमादकमित्यर्थ: ; [सरकं] मधुपानं, [ चक्रु: ] ; उत्साहवर्द्धनार्थमिति भाव: । 'मणौ शीधौ शीधु-पाने सरकं मधुभाजनम्' इति वैजयन्ती ॥ ८० ॥

अथाऽऽसर्गसमाप्ते: प्रायाणिकाऽऽमन्त्रणाय प्रियासङ्गतानां भटाना-मागामिशुच: सूचिकास्तात्कालिकचेष्टा: वर्णयति, दयितायेत्यादि ।—[ दयिताय ] प्रेयसे, [ उदस्तं ] पानार्थमुत्क्षिप्तं, [ सासवं ] समद्यम्,

---

* परम्परितरूपकसङ्कीर्णेयमुत्प्रेक्षा ।

कांस्यमुपहितसरोजपत-
द्भ्रमरौघभारगुरु राजयोषितः ॥ ८१ ॥
भृशमङ्गसादमरुणत्व-
मविशदृशः कपोलयोः ।
वाक्यमसकलमपास्य मदं
विदधुस्तदीयगुणमात्मना शुचः ॥ ८२ ॥

---

अत एव [ उपहितसरोजपतद्भ्रमरौघभारगुरु ] उपहिते वासनार्थं निहिते, सरोजे पतन् भ्रमरौघ एव भारः, तेन गुरु दुर्भरम् । 'गुरुस्तु वाक्पतौ श्रेष्ठे तुङ्गे पितरि दुर्भरे' इति शब्दार्णवे । [ कांस्यं ] पानभाजनम् । 'कांस्योऽस्त्री पानभाजनम्' इत्यमरः । "वृतृवदिहनिकमिकषिभ्यः सः" ( उणा० ३पा० ६२सू० ) इति कमेर्धातोरौणादिकः सप्रत्ययः । तस्मै हितं कंसीयं लोहविशेषः । "प्राक्क्रीताच्छः" ( ५।१।१ पा०) इति छप्रत्ययः । तस्य विकारः कांस्यं पानपात्रम् । "कंसीयपरशव्ययोर्यञञौ लुक्च" ( ४।३।१६८ पा० ) इति यञ्प्रत्यये छस्य लुक् । [ राजयोषितः ] कस्याश्चिद्राजवध्वाः सम्बन्धिनः, [ अवसादिनः ] शैथिल्यभाजः, [ करादपतत् ] ; तच्च दुर्निमित्तमिति भावः । एतेनास्या भाविविरहशोकादेवाप्रसन्नदृष्टेः काचित् चिन्ता व्यज्यते । अत्रावसादभारगौरवयोर्विशेषणगत्या पात्रपातहेतुत्वात् काव्यलिङ्गम् ॥ ८१ ॥

भृशमिति ।—[ शुचः ] भाविविरहभावनाप्रसूताः शोकाः, [ अविशदृशः ] शोकादेवाप्रसन्नदृष्टेः, कस्याश्चित् इति शेषः । [ मदमपास्य ] तदुत्पत्तिं प्रतिरुध्य, [ तदीयगुणं ] तदीयं गुणं, तद्धर्मं, मदकार्य्यभूतमित्यर्थः । [ अङ्गसादम् ] अङ्गशैथिल्यं, [ कपोलयोररुणत्वम्, असकलम्] असमाप्तं, [वाक्यं] च, [आत्मना] स्वयम् । "प्रकृत्यादिभ्य उपसङ्ख्यानम्" (वा०) इति तृतीया । [भृशं विदधुः ], करणेन शृङ्गार-

सुहृदः समीकगमनाय
युवभिरथ सम्बभाषिरे ।
शोकपिहितगलरुद्धगिर-
स्तरसाऽऽगताश्रुजलकेवलोत्तराः ॥ ८३ ॥

विपुलाचलस्थलघनेन
जिगमिषुभिरङ्गनाः प्रियैः ।
पीनकुचतटनिपीडदल-
द्वरवारबाणमुरसाऽऽलिलिङ्गिरे ॥ ८४ ॥

---

स्तिरस्कृत इत्यर्थः । अत्र मदाभावेऽपि तत्कार्योदयात् तस्यावलोकन-निमित्तकत्वोक्त्या उक्तनिमित्ताख्यो विभावनाभेदः ॥ ८२ ॥

सुहृद इति ।—[ अथ ] अस्मिन् अवसरे, [युवभिः, समीकगमनाय ] युद्धगमनाय । 'समीकं साम्परायिकम्' इत्यमरः । [सुहृदः, शोकपिहित-गलरुद्धगिरः ] शोकपिहिते शोकाऽऽवृते, गले कण्ठे, रुद्धगिरः प्रतिबद्धो-त्तरवाचः, तथाऽपि [तरसा] वेगेन, [आगताश्रुजलकेवलोत्तराः] आगत-मश्रुजलमेव केवलं निर्णीतम्, उत्तरं यासां ताः । 'निर्णीतं केवलं चोक्तम्'इति विश्वः । [सम्बभाषिरे] सम्भाषिताः ; 'योद्धुं गच्छामः' इत्या-मन्त्रिता 'हा कष्टम् !! इदमेवान्तिमदर्शनम्' इति वाक्यभेदेऽपि अश्रु-पातेनैवानन्तरं दत्तोत्तराश्वासन्नित्यर्थः । अत्रापि अश्रुपातो दुर्निमित्त-मिति भावः । एतेन 'गन्तव्यं चेत् गम्यतां, वयञ्च युष्मल्लालोक्यकामा' इत्यनिष्टविध्याभासरूपाऽऽक्षेपालङ्कारो व्यज्यते । "अनिष्टविध्याभासश्च" इति सूत्रेणेष्टनिषेधाऽऽभासवदस्यापि लक्षणात् ॥ ८३ ॥

विपुलेति ।—[ जिगमिषुभिः ] युद्धाय गन्तुमिच्छुभिः, [ प्रियैः ] कर्तृभिः । [ अङ्गनाः, विपुलाचलस्थलघनेन ] विपुलं यदचलस्य स्थलं, तद्वद्घनेन दृढेन, [ उरसा ] निजवक्षसा करणेन । [ पीनकुचतट-

**न मुमोच लोचनजलानि**
**दयितजयमङ्गलैषिणी ।**
**यातमवनिमवसन्नभुजात्**
**न गलद्विवेद वलयं विलासिनी ॥ ८५ ॥**

**प्रविवत्सतः प्रियतमस्य**
**निगड़मिव चक्षुरक्षिपत् ।**
**नीलनलिनदलदामरुचि**
**प्रतिपादयुग्ममचिरोढ़सुन्दरी ॥ ८६ ॥**

---

निपीड़दलद्वरवारवाणं ] पीने कुचतटे निपीड़ो नितरां पीड़नं, तेन दलन्तो विदीर्य्यमाणाः, वराः श्रेष्ठाः, वारवाणाः कञ्चुका यस्मिन् कर्मणि तत् यथा तथा । 'कञ्चुको वारवाणोऽस्त्री' इत्यमरः । [आलिलिङ्गिरे] आलिङ्गिताः । अत्र वारवाणानां दलनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ८४ ॥

नेति ।—[ दयितजयमङ्गलैषिणी ] दयितस्य जयमङ्गलं तदर्थमङ्गलमित्यर्थः । अश्वघासादिवत् तदर्थे षष्ठीसमासः । तदिच्छतीति तदैषिणी, [ विलासिनी ] काचिदङ्गना, [लोचनजलानि ] अश्रूणि,[ न मुमोच ] ; अश्रुपातस्यामङ्गलत्वादिति भावः । अमङ्गलं तदन्यतः प्रवृत्तमेवेत्याह, यातमिति ।—[ अवसन्नभुजात् ] शोकशिथिलात्करात्, [ गलत् ] भ्रश्यदेव, [ अवनिं ] भुवं, [ यातं ] प्राप्तं, [ वलयं ] कङ्कणं, [ न विवेद ] ; अवश्यम्भाविनां को निवारकः ? इति भावः । एषा च दैन्यचिन्तेति । अत्रावसादस्य विशेषणगत्या वलयपातहेतुत्वात् काव्यलिङ्गम् ॥ ८५ ॥

प्रेति ।—[ अचिरोढसुन्दरी ] काचिन्नवोढा स्त्री, [ प्रविवत्सतः ] प्रवासं कर्त्तुमिच्छतः । वसेः सन्नन्ताल्लटः शत्रादेशः । [ प्रियतमस्य, प्रतिपादयुग्मं ] पादयुग्मे । विभक्त्यर्थेऽव्ययीभावः । [ नीलनलिन-

व्रजतः क्व तात ! वजसीति
परिचयगतार्थमस्फुटम् ।
धैर्य्यमभिनदुदितं शिशुना
जननीनिभर्त्सनविवृद्धमन्युना ॥ ८७ ॥
शठ ! नाकलोकललनाभि-
रविरतरतं रिरंससि ।

---

दलदामरुचि ] नीलोत्पलमालासच्छायम् ; इत्युपमा । [ निगड़मिव ] शृङ्खलमिव, [ चक्षुः ] नेत्रम्, [ अक्षिपत् ] प्रेरयदित्यर्थः ; चक्षुषो दूरे पदमपि गन्तुं न शशाकेत्यर्थः, तच्च दुर्निमित्तमिति भावः । प्रयाणे स्त्र्यवलोकननिषेधात् । उक्तोपमासापेक्षा चक्षुषो निगड़त्वोत्प्रेक्षेति सङ्करः ॥ ८६ ॥

व्रजत इति ।—[ जननीनिभर्त्सनविवृद्धमन्युना ] जनन्याः अपशकुनभीतायाः मातुः, निभर्त्सनाद्विवृद्धमन्युना प्रवृद्धकोपेन, [शिशुना] बालकेन, हे [ तात ! ] जनक ! । 'तातस्तु जनकः पिता' इत्यमरः । [ क्व वजसि ? ] कुत्र व्रजसि ? [ इत्यस्फुटम्, उदितम् ] उक्तम् । वदेः कर्मणि क्तः । "वचिस्वपि—"(६।१।१५ पा०) इत्यादिना सम्प्रसारणम् । व्रजसीति सरेफपदमपाटवादरेफमुच्चारितमित्यर्थः । तथाऽपि [ परिचयगतार्थं ] परिचयादभ्यासपाटवात्, गतार्थं पितृभ्यां केवलावगताभिधेयं, वचनमिति शेषः । [ व्रजतः ] प्रस्थातुः, [ धैर्य्यं ] प्रयाणोत्साहम्, [ अभिनत् ] ; गमनकारिणो दुर्निमित्तत्वादिति भावः । उक्तं च योगयात्रायाम् ;— 'यानात् पुरा निपतनं व्रुवतीव काचित् गर्भेण भारव्रहती स्वपुरःस्थिता स्त्री । आगच्छ तिष्ठ कुत इत्यलमर्थवाचिशब्दाश्च राजगमने प्रतिषेधकाः स्युः ॥' इति । अत्र दम्पत्योर्दैन्यविषादचिन्ताशङ्कादयः सञ्चारिणोऽनुसन्धेयाः ॥ ८७ ॥

शठेति ।—[अपरा] स्त्री, [रणरागिणां] युद्धोत्साहिनं, [रमणम्] ; हे

तेन वहसि मुदमित्यवदत्
रणरागिणां रमणमीर्ष्ययाऽपरा ॥ ८८ ॥
भ्रियमाणमप्यगलदस्रु
चलति दयिते नतभ्रुवः।
स्नेहमकृतकरसं दधता-
मिदमेव युक्तमतिमुग्धचेतसाम् ॥ ८९ ॥

---

[ शठ ! ] वञ्चक ! [ नाकलोकललनाभिः ] अप्सरोभिः सहेत्यर्थः। "सहयुक्तेऽप्रधाने" ( २।३।१९ पा० ) इति सहार्थे तृतीया, "वृद्धो यूना" इतिवत्। [ अविरतरतम् ] अविच्छिन्नसुरतं यथा भवति तथा, [ रिरंससे ] रन्तुमिच्छसि। रमेः सन्नन्ताल्लट्, "पूर्ववत्सनः" ( १।३।६२ पा० ) इत्यात्मनेपदम्। [ तेन ] अप्सरोरिरंसाकरणेन, [ मुदं वहसीति, ईर्ष्यया ] सापत्न्याक्षमया, [ अवदत् ]। अर्थाद्विरहासहनया प्रस्थान-प्रतिषेधपरया व्याहृतमिदमेवास्य मरणशंसिनी दुरुपश्रुतिरिति भावः। ईर्ष्याऽत्र कण्ठोक्त एव सञ्चारी ॥ ८८ ॥

भ्रियमाणमिति।—[ दयिते, चलति ] प्रतिष्ठमाने सति, [नतभ्रुवः] वध्वाः, [ अस्रु, भ्रियमाणम् ] अमङ्गलभिया धार्य्यमाणम्, [अपि ]। धरतेः कर्मणि लटः शानजादेशः। [ अगलत् ] अस्रवत्; शोकातिरे-काद्धारयितुमशक्यमासीदित्यर्थः। तथा हि [अकृतकरसम्] अकृत्रिमरागं, [ स्नेहं ] प्रेम, [ दधताम् ]; अत एव [ अतिमुग्धचेतसाम् ] अत्यन्ता-कपटबुद्धीनाम्, [ इदमेव ] असंवरणं, [युक्तम्]; अन्यथा स्नेहव्याघातेन तत्कालविरुद्धमस्रुमोचनं नानुचितमिति भावः। रसस्नेहयो रागप्रेमा-परनाम्नोरवस्थाभेदात् भेदः;—'रागस्तत्सम्बन्धी प्रेम तद्वियोगा-सहिष्णुता' इति रससागरे। सामान्येन विशेषसमर्थनरूपोऽर्थान्तर-न्यासः ॥ ८९ ॥

सह कज्जलेन विरराज
नयनकमलाम्बुसन्ततिः ।
गण्डफलकमभितः सुतनोः
पदवीव शोकमयकृष्णवर्त्मनः ॥ ८० ॥

चणमावरोधि चलितेन
कतिपयपदं नतभ्रुवः ।
स्रस्तभुजयुगगलद्वलय-
स्वनितं प्रति च्युतमिवोपशुश्रुवे ॥ ८१ ॥

---

सहेति ।—[ सुतनोः ] शुभाङ्ग्याः, [ गण्डफलकमभितः ] गण्डस्थलयोरित्यर्थः । "अभितःपरितः—" ( १।४।४८ पा० ) इत्यादिना द्वितीया । [ नयनकमलाम्बुसन्ततिः ] अश्रुधाराः, [ कज्जलेन ] अञ्जनेन, [ सह, शोकमयकृष्णवर्त्मनः ] शोक एव शोकमयस्तस्य, कृष्णवर्त्मनः शोकाग्नेः, [ पदवी ] निःसरणमार्गः, [ इव, विरराज ] शुशुभे । येन वर्त्मना अग्निर्गच्छति, तत् कृष्णं भवतीति कृष्णवर्त्मा । अलाप्यश्रुपात एव दुर्निमित्तमिति भावः ॥ ८० ॥

चणेति ।—[ कतिपयपदं ] कतिपयञ्च तत् पदञ्च तत् । जातावेकवचनम् । कतिचित्पदानीत्यर्थः । पदशब्दस्य तदवच्छिन्नदेशवाचित्वादत्यन्तसंयोगे द्वितीया । [ चलितेन ] प्रस्थितेन, केनचिदिति शेषः । [ चणमावरोधि ] चणमात्रप्रतिबन्धकम् ; प्राणदानैकजीविनामवसरे सत्यधिकं स्थातुमनौचित्यादिति भावः । [ नतभ्रुवः, स्रस्तभुजयुगगलद्वलयस्वनितं] स्रस्तानाम् अङ्गसादेन झटिति प्रकोष्ठाग्रे पतितानां, भुजयुगगलद्वलयानां हस्तद्वयचलत्कङ्कणानां, स्वनितं रणत्कारं, [प्रति] प्रतिमुखं, [ च्युतमिव, उपशुश्रुवे ] उपश्रुतम् । 'स्त्री चुत्क्षुतं चवः पुंसि' इत्यमरः । रणत्कारे चुतभ्रान्त्या निवृत्तं, चणमात्रं स्थितमित्यर्थः । अचुते चुतभ्रान्त्या भ्रान्तिमदलङ्कारः । दैन्यविषादाख्याः सञ्चारिणः ॥ ८१ ॥

अभिवर्त्म वल्लभतमस्य
विगलदमलाऽऽयतांशुका।
भूमिनभसि रभसेन यती
विरराज काचन समं महोल्कया॥ ९२॥
समरोन्मुखे नृपगणेऽपि
तदनुमरणोद्यतैकधीः।
दीनपरिजनकृताश्रुजलो
न भटीजनः स्थिरमना विचक्रमे॥ ९३॥

---

अभीति।—[वल्लभतमस्य] प्रियतमस्य, [अभिवर्त्म] अभिमार्गं, [विगलदमलाऽऽयतांशुका] विगलत् अङ्गसादात् स्रंसमानम्, अमलमायतं चांशुकं वस्त्रं यस्याः; अन्यत्र,—विगलन्तो विशीर्य्यमाणाः, अमला उज्ज्वलाः, आयता दीर्घीभूताः, अंशवो रश्मयो यस्याः सा। शैषिकः कप्रत्ययः। भूमिर्नभ इव तस्मिन् [भूमिनभसि, रभसेन] वेगेन, [यती] यान्ती। इणः शतरि "उगितश्च" (४।१।६ पा०) इति ङीप्। [काचन] अङ्गना, [महोल्कया, समं] सदृशं, [विरराज]। अत्र प्रस्थातुरग्रे स्वकान्ताया महोल्कासादृश्यभवनमेव दुर्निमित्तमिति भावः। उपमाऽलङ्कारः॥ ९२॥

समरेति।—[नृपगणे समरोन्मुखेऽपि, तदनुमरणोद्यतैकधीः] तस्य नृपगणस्य, अनुमरणे सहमरणे, उद्यतोद्युक्ता, अत एवैका मुख्या, धीर्यस्य सः, [दीनपरिजनकृताश्रुजलः] दीनेनाप्यशोच्येन परिजनेन कृताश्रुजलो मुक्तवाष्पः, दासीमुक्ताश्रुबिन्दुरित्यर्थः; तथाऽपि स्वयं [स्थिरमनाः] अचलितचित्तः, [भटीजनः] भटस्त्रीलोकः। जातावेकवचनम्। "पुंयोगादाख्यायाम्" (४।१।४८ पा०) इति ङीप्। [न विचक्रमे] न तत्रास; सहमृत्युप्रियाणां कुतः सन्त्रासः? इति भावः। अत्र मरणोद्योगस्य विशेषणगत्या अक्लैव्यहेतुत्वात् काव्यलिङ्गभेदः॥ ९३॥

विदुषीव दर्शनममुष्य
युवतिरतिदुर्लभं पुनः ।
यान्तमनिमिषमविह्वलमनाः
पतिमीक्षते स्म भृशमा दृशः पथः ॥ ९४ ॥

सम्प्रत्युपेयाः कुशली पुनर्युधः
सस्नेहमाशीरिति भर्त्तुरीरिता ।
सद्यः प्रसह्य द्वितयेन नेत्रयोः
प्रत्याचचक्षे गलता भटस्त्रियाः ॥ ९५ ॥

---

विदुषीति ।—[ युवतिः ] काचिदङ्गना, [ अमुष्य ] पत्युः, [ दर्शनं, पुनः ] पश्चात्, [ अतिदुर्लभम् ] ; तस्यापुनरावृत्तेरिति भावः । [विदुषी] जानती, [इव], इत्युत्प्रेक्षा । "विदेः शतुर्वसुः" ( ७।१।३६ पा० ) इति वस्वादेशः, "उगितश्च" ( ४।१।६ पा० ) इति ङीप् । [ अविह्वलमनाः ] अविह्वलचित्ता सती, [ यान्तं ] योद्धुं गच्छन्तं, [ पतिं ] भर्त्तारम्, [ आ दृशः पथः ] आ दृष्टिपथात्, दृष्टिपथातिक्रमपर्य्यन्तमित्यर्थः । "आङ् मर्य्यादाऽभिविध्योः" ( २।१।१३ पा० ) इति विकल्पादाङो न समासः । [ भृशम्, अनिमिषं ] निमेषरहितं यथा तथा, [ ईक्षते स्म ] ॥ ९४ ॥

सम्प्रतीति ।—[ सम्प्रति ] इदानीमेव, [ कुशली ] अक्षतः सन्, [ युधः ] युद्धात्, [ पुनः उपेयाः ] प्रत्यावर्त्तस्व, [ इति सस्नेहं, भर्त्तुरीरिता ] भर्त्रे प्रयुक्ता, [ आशीः ] आशीर्वादः, [ सद्यः, प्रसह्य ] बलात्, [गलता] गलदम्भसा, स्रवदश्रुणा इत्यर्थः, तस्याः [भटस्त्रियाः] तस्य वध्वा एव । अस्त्रीति प्रतिषेधान्नदीत्वादाडागमः । [नेत्रयोर्द्वितयेन, प्रत्याचचक्षे] प्रत्याख्याता, निराकृतेत्यर्थः । अमङ्गलेनाश्रुपातेन निष्फलीकृतेत्यवश्यं भवितव्यं भवत्येवेति भावः । "वा लिटि" ( २।४।५५ पा० ) इति विकल्पान्न चक्षिङः ख्याञादेशः । अलाश्रुपातस्य नेत्रविशेषणद्वारा आशीःप्रत्याख्याने हेतुत्वात् काव्यलिङ्गभेदः ॥ ९५ ॥

काचित्कीर्णा रजोभिर्दिवमनुविदधे भिन्नवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिदिशमपरा भूमिवत्कम्पमापुः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्य्यः शशंसुः ॥९६॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
पञ्चदशः सर्गः ॥ १५ ॥

---

काचिदिति ।—[ काचित् ] स्त्री, [ रजोभिः ] आर्त्तवैः, अङ्गसंस्कार-त्यागात् पांशुभिर्वा, [ कीर्णा ]। 'स्याद्रजः पुष्पमार्त्तवम्' इति 'पांशुर्ना न द्वयो रजः' इति चामरः । दिवस्त्वौत्पातिकपांशुवर्षणाद्रजः-कीर्णता । वक्त्रमिन्दुरिव ; अन्यत्र,—वक्त्रमिवेन्दुः, भिन्नास्तस्य लक्ष्मी यस्याः सा [ भिन्नवक्त्रेन्दुलक्ष्मीः ]। बहुवचनान्तो बहुव्रीहिः । एवमपि एकवचनान्तस्यैव लक्ष्मीशब्दस्योरःप्रभृतिषु पाठान्न तन्निमित्तः कप्प्रत्ययः, शेषिकस्तु वैभाषिकः इत्यविरोधः । काचित् नारी, [ दिवम्, अनुविदधे ] अनुचकार । [ काश्चित् ] नार्य्यः, [ दिश इव, अश्रीकाः ] वीतशोभाः, [ उद्भ्रान्तसत्त्वाः ] उद्भ्रान्तचित्ताः, उद्भ्रान्तजन्तुकाश्च सत्यः । [ अन्तः ] आत्मनि, मध्ये च, [ दाहं ] सन्तापम् ; अन्यत्र,—औत्पातिकं प्रज्वलनं, [ दधिरे ] दधुः । [ अन्याः ] नार्य्यः, [ वात्या इव ] वातसमूहा इव । "पाशादिभ्यो यः" ( ४।२।४९ पा० ) इति यप्रत्ययः । [ प्रतिदिशं ] * दिशि दिशि । "अव्ययीभावे शरत्प्रभृतिभ्यः" ( ५।४।१०७ पा० ) इति समासान्तः टच्प्रत्ययः । [ भ्रेमुः ] बभ्रमुः । "वा जॄभ्रमुत्रसाम्" ( ६।४।१२४ पा० ) इति विकल्पादेत्वाभ्यासलोपौ । [ अपराः ] नार्य्यः ; भूम्या तुल्यं [ भूमिवत्

---

* "प्रतिदिशम्" इत्यत्र "प्रतिपदम्" इति पाठे,—नार्य्यः प्रतिपदं पदे पदे इति वीप्सायामव्ययीभावः, प्रतिपदविक्षेपमित्यर्थः, भ्रेमुः, पार्थिवानां युद्धप्रयाणसमये तत्पत्नीनां भाव्यशुभसंसूचकः सम्मोहोऽजनि, येन तेषां स्त्रीणां पिशाचोपहतानामिव निर्हेतुकः सञ्चारोऽजायतेति भावः ।

# षोडशः सर्गः ।

—•—

दमघोषसुतेन कश्चन
प्रतिशिष्टः प्रतिभानवानथ ।
उपगम्य हरिं सदस्यदः
स्फुटभिन्नार्थमुदाहरद्वचः ॥ १ ॥

---

कम्पमापुः, इति ] इत्थं, [ पार्थिवानां, प्रस्थाने ] प्रयाणे, [ नार्यः भावि, अशिवम्] अशुभं, [पुरः] पूर्वं, [शशंसुः] सूचयामासुरित्यर्थः । अत्र नारीणां भाव्यशुभसूचनस्य रजोदाहादिवाक्यार्थहेतुकं काव्यलिङ्गम् । तत्र नारीणां क्षुदिणाद्युपमाभिस्तद्रजोदाहादिवत् नारीरजोदाहादीनाम् अशुभसूचकत्वमित्युपमाकाव्यलिङ्गयोरङ्गाङ्गिभावेन सङ्करः । सञ्चारिणश्च पूर्ववद्विषादादयः सुगमाः । अत्र 'काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्भिन्नवक्त्रेन्दुलक्ष्मी निश्रीकाः काश्चिन्' इति पाठे,—'काचित्कीर्णा' इत्येकवचनप्रक्रमभङ्गे दोषो नास्ति । न चैवमुपमानोपमेययोर्भिन्नवचनत्वदोषः, लोकेषु चन्द्रादिष्वेकत्व नियतेषु दोषबुद्ध्यनुदयात् । यथाऽऽह दण्डी,—'न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा । उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥' इति (२परि० ५१श्लोकः) । स्रग्धरा वृत्तम्,—'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्' इति लक्षणात् ॥ ८६ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये पञ्चदशः सर्गः ॥१५॥

---

अथानन्तरसर्गे हरैश्चैद्यदूतसंवादं वर्णयति, दमघोषेत्यादि ।—

अभिधाय तदा तदप्रियं
शिशुपालोऽनुशयं परं गतः।
भवतोऽभिमनाः समीहते
सरुषः कर्त्तुमुपेत्य माननाम् ॥ २ ॥

[ अथ ] सन्नाहानन्तरं, [ दमघोषसुतेन ] शिशुपालेन, [ प्रतिशिष्टः ] प्रहितः ; प्रतिभानमस्यास्तीति [ प्रतिभानवान् ] अवसरोचितोत्तर-स्फुरणशक्तिमानित्यर्थः। [कश्चन] कश्चित् दूतः, [हरिं] कृष्णम्, [उपगम्य] प्राप्य, [ सदसि ] सभायाम् ; स्फुटौ भिन्नार्थौ पृथगर्थौ प्रियाप्रियरूपौ इति यावत्, यस्मिंस्तत् [स्फुटभिन्नार्थं] युगपदुभयार्थाभिधायकमित्यर्थः। तथैव वक्ष्यति,—'उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते' ( १६श सर्गः ४२ श्लोकः ) इति। [ अदः ] इदं, वक्ष्यमाणमिति यावत्, [ वचः उदाहरत् ] व्याहरत्। अस्मिन् सर्गे वैतालीयाख्यं मात्रावृत्तम्,—'षड्विषमेऽष्टौ समे कला लाश्च समे स्युर्नो निरन्तराः। न समाऽत्र पराऽऽश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥' इति लक्षणात् ॥ १ ॥

'स्फुटभिन्नार्थमुदाहरद्वचः' इत्युक्तं, तदेव चतुर्दशभिः श्लोकैरभिधत्ते अभिधायेत्यादि।—[ शिशुपालः, तदा ] अर्घस्वीकारकाले, [ तत् ] तादृशम्, [ अप्रियमभिधाय परम्, अनुशयम् ] अनुतापं, [ गतः, अभिमनाः ] उत्कण्ठितचित्तः सन्, [ उपेत्य ] आगत्य, [ सरुषः ] समन्योः, [ भवतः ] तव, [ माननां ] पूजां, [ कर्त्तुं, समीहते ] अनुनेतुमिच्छतीत्यर्थः। अयं मधुरोऽर्थः। परुषस्तु,—[ शिशुपालस्तदा तदप्रियमभिधाय परम्, अनुशयं ] केवलं न शमव्यः, किन्तु हन्तव्यश्चेति दीर्घद्वेषं, [ गतः ] प्राप्तः। 'रन्ध्रे शब्देऽथानुशयो दीर्घद्वेषानुतापयोः' इत्युभयत्रापि अमरः। अत एवनास्ति भीर्यस्येत्यभि निर्भीकं, मनो यस्य सः [ अभिमनाः ] * निःशङ्कचित्तः सन्, [ उपेत्य ]

* बिभेतेः भावे क्विपि क्लीवे च "भि" इति पदं सिध्यति, अभिमना इत्यत्र समासेऽपि भी इति दीर्घान्तशब्दस्यापि ह्रस्वत्वम् ; क्लीवे ह्रस्वावेव ह्रस्वः स्यात्, न तु निमित्तान्तरापेक्षा तत्रास्तीति वेदितव्यम्।

विपुलेन निपीड्य निर्दयं
मुदमायातु नितान्तमुन्मनाः ।
प्रचुराधिगताङ्गनिर्वृतिं
परितस्त्वां खलु विग्रहेण सः ॥ ३ ॥

---

स्वयमागत्य, [ सरुषः ] सकोपस्य, [ भवतः, माननां ] हननं, [ कर्तुं समीहते ]। 'मानना हनने माने' इत्युभयत्रापि केशवः। भवन्तं हन्तुमिच्छतीत्यर्थः। 'मन स्तम्भे' इति धातोश्चौरादिकात् ल्युट् णिचो लुक्। अत्र चतुर्दशश्लोक्यां परहृदयपरीक्षापराणां दूतानां प्रियाप्रिये द्वे अपि वक्तव्ये चमत्काराय तु श्लेषभङ्ग्याऽभिधीयेते इति प्रियाप्रिययोर्द्वयोरपि प्रकृतत्वादभिधेयत्वाच्छब्दमात्रसाधर्म्याच्च केवलप्रकृतगोचरः श्लेषः ;—'प्रकृताप्रकृतोभयमुक्तं चेच्छब्दमात्रसाधर्म्यं श्लेषोऽयम्' इति लक्षणात्। न च उभयगतः, निन्दास्तुत्योरन्यतरगम्यतया तदुत्थापनात्, इह "उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते' ( १६श सर्गः ४२ श्लोकः ) इति वक्ष्यमाणलिङ्गादुभयोर्वाच्यत्वावगमादित्यलं प्रपञ्चेन ॥ २ ॥

विपुलेनेति ।—[ उन्मनाः ] उत्सुकचेताः, [ सः ] चैद्यः, [ परितः, प्रचुराधिगताङ्गनिर्वृतिं ] प्रचुरं प्रभूतं यथा तथा, अधिगता प्राप्ता, अङ्गनिर्वृतिः सुहृत्स्पर्शकृतमङ्गसुखं येन तं, [ त्वां, विपुलेन ] विशिष्टपुलकेन। 'पुलः स्यात पुलके नाऽपि पुलं तु विपुलेऽन्यवत्' इति विश्वः। [ विग्रहेण ] वपुषा, [ निर्दयं ] गाढं, [ निपीड्य ] आलिङ्ग्य, [ नितान्तं मुदमायातु खलु ]। परुषस्तु,—[ उन्मनाः ] मनस्वी, [ सः ] चैद्यः, [ परितः, प्रचुराऽऽधिगताङ्गनिर्वृतिं ] प्रचुरेण आधिना मनोव्यथया, गताङ्गनिर्वृतिं विगतशरीरसौख्यं, [ त्वां, विपुलेन ] महता, [ विग्रहेण ] समरेण। 'विग्रहः समरे काये' इति विश्वः। [ निर्दयं ] निष्कृपं, [निपीड्य] हत्वा, [ नितान्तं मुदमायातु खलु ] ॥ ३ ॥

प्रणतः शिरसा करिष्यते
सकलैरेत्य समं धराऽधिपैः ।
तव शासनमाशु भूपतिः
परवानद्य यतस्त्वयैव सः ॥ ४ ॥

अधिवह्निपतङ्गतेजसो
नियतस्वान्तसमर्थकर्मणः ।
तव सर्वविधेयवर्त्तिनः
प्रणतिं बिभ्रति के न भूभृतः ? ॥ ५ ॥

---

प्रणत इति ।—[ भूपतिः ] चैद्यः, [ सकलैर्धराऽधिपैः, समं ] सह, [एत्य] आगत्य, [शिरसा प्रणतः] प्रणामं कृतवान् । कर्त्तरि क्तः । [ आशु तव, शासनम् ] आज्ञां, [ करिष्यते ] त्वदाज्ञाकरो भविष्यति ; कुतः ?—[यतः, सः] चैद्यः, [अद्य] अस्मिन् अवसरे, [त्वयैव परवान्] त्वदेकपरतन्त्रः । पक्षस्तु,—[शिरसा प्रणतः] नमस्कृतः, नराधिपैरिति भावः । कर्मणि क्तः । [भूपतिस्तव, शासनं] शास्तिं, शिक्षामित्यर्थः, [करिष्यते यतस्त्वयैव, परवान्] शत्रुवान् ; त्वमेक एवास्य शत्रुरवशिष्ट इति भावः । अन्यत् समम् । 'शासनं राजदत्तोर्व्यां लेखाऽऽज्ञाशास्त्रशास्तिषु' इति विश्वः ॥४॥

प्रणामे हेतुमाह, अधीति ।—[ अधिवह्निपतङ्गतेजसः ] अधिगतं वह्निपतङ्गयोरग्निभान्वोरिव, तेजो येन तस्य, तत्तुल्यतेजस इत्यर्थः । [ नियतस्वान्तसमर्थकर्मणः ] नियतस्वान्तो नियतचित्तः, स चासौ समर्थकर्मा च । खञ्जकुब्जवद्विशेषणसमासः । तस्य तथोक्तस्य, [सर्वविधेय-वर्त्तिनः ] सर्वे विधेयवर्त्तिनः वशवर्त्तिनः, कर्मकरा इत्यर्थः, यस्य तस्य, [ तव के भूभृतः, प्रणतिं ] नतिं, [ न बिभ्रति ? ] सर्वेऽपि बिभ्रतीत्यर्थः । पक्षस्तु,—प्रणामे हेतुमाह ।—[ अधिवह्निपतङ्गतेजसः ] अधिवह्नि अग्नौ, पतङ्गस्य शलभस्य एव, तेजः पौरुषं यस्य तस्य । 'पतङ्गः शलभे

जनतां भयशून्यधीः परै-
रभिभूतामवलम्बसे यतः ।
तव कृष्ण ! गुणास्ततो नरै-
रसमानस्य दधत्यगण्यताम् ॥ ६ ॥
अहितादनपत्रपस्त्वस-
न्नतिमात्रोज्झितभीरनास्तिकः ।

---

भानौ इति विश्वः । [ नियतस्वान्तसमर्थकर्मणः ] नियते अव्यभिचारे, स्वान्ते स्वविनाशे, समर्थं हेतुभूतं, कर्म यस्य तस्य । सर्वेषां विधेये वर्त्तते विधेयं वर्त्तयति वा तस्य [ सर्वविधेयवर्त्तिनः ] सर्वकिङ्करस्य, निष्पौरुषस्य इति यावत्, [ तव, केन ] गुणेन, [ भूभृतः प्रणतिं बिभ्रति ? ] न केनापि इत्यर्थः ॥ ५ ॥

जनतामिति ।—हे [कृष्ण ! ] हे हरे ! [भयशून्यधीः] निर्भीकचित्तः सन्, [परैः] शत्रुभिः, [अभिभूतां, जनतां] जनसमूहम् । "ग्रामजन—" ( ४।२।४३ पा० ) इत्यादिना समूहे तल्प्रत्ययः । [ यतः, अवलम्बसे ] परिगृह्णासि, रक्षसीत्यर्थः । [ततः] हेतोः, [नरैः, असमानस्य] सर्वोत्कृष्टस्य, [ तव, गुणाः ] आर्त्तभरणादयः, [ अगण्यताम् ] असङ्ख्येयतां, [ दधति ] । परुषस्तु,—हे [ कृष्ण ! ] मलिनात्मक ! [ भयशून्यधीः ] मूढबुद्धिः, [ परैः ] त्वदन्यैः । 'परं दूरान्यमुख्येषु परोऽरिपरमात्मनोः' इत्युभयत्रापि वैजयन्ती । [ अभिभूताम् ] अवधीरितां, [ जनतां ] पशुपालनपारतन्त्र्यादिना पृथग्जनत्वम् । भावेऽर्थे तल्प्रत्ययः । [ यतः, अवलम्बसे ] आश्रयसि, [ ततः, नरैरसमानस्य ] ततोऽपि हीनस्येत्यर्थः, [ तव गुणाः ]; लेशतः स्वभावतोऽपीति भावः । [ अगण्यताम् ] अनादरणीयतां, [ दधति ] ॥ ६ ॥

अहितादिति ।—[ त्वया सदृशोऽन्यः, गुणवान् ] गुणाढ्यः, [कुतः ?] न कुत्रापीत्यर्थः । कुतः ?—त्वम् [ अहितात् ] अनर्थात्, [त्वसन् ] अधर्म-

विनयोपहितस्त्वया कुतः
सदृशोऽन्यो गुणवानविस्मयः ? ॥ ७ ॥

कृतगोपवधूरतेर्घ्नतो
वृषमुग्रे नरकेऽपि सम्प्रति।
प्रतिपत्तिरधःकृतैनसो
जनताभिस्तव साधु वर्ण्यते ॥ ८ ॥

---

भीरुरित्यर्थः। अपत्रपो निस्त्रपो न भवतीति [ अनपत्रपः ] त्रपावान्, अकार्य्यजुगुप्सुरित्यर्थः। [अतिमात्रोज्झितभीः] अतिमात्रम् अत्यन्तम्, उज्झितभीः त्यक्तारिभय इत्यर्थः। न अस्ति मतिरस्येति नास्तिकः नास्तिपरलोकः। "अस्तिनास्तिदिष्टं मतिः" (४।४।६० पा०) इति ठक्। स न भवतीति [ अनास्तिकः ] आस्तिक इत्यर्थः। [विनयोपहितः] विनयेन अनौद्धत्येन, उपहितो विशिष्टः, विनयवानित्यर्थः। विस्मयो विशिष्टगर्वो न भवतीति [ अविस्मयः ] अगर्वः। परत्र,—[ त्वया सदृशोऽन्यः ], गुणवान् न भवतीति [ अगुणवान् ] निर्गुणः, [कुतः ?] कुत्र ? न कुत्रापीत्यर्थः। कुतः ?—त्वम् [ अहितात् ] शत्रोः, [ त्रसन् ] भीरुः। नास्ति अपत्रपा लज्जाविशेषो यस्येति [ अनपत्रपः ] निर्लज्जः। 'लज्जा साऽपत्रपाऽन्यतः' इत्यमरः। [ नतिमात्रोज्झितभीः ] नतिमात्रेण प्रणामेनैव, उज्झितभीः अपाकृतारिभयः ; न तु पराक्रमेणेति भावः। अस्ति मतिरस्येत्यास्तिकोऽस्तिपरलोकः। पूर्ववत् ठक्। स न भवतीति [अनास्तिकः] नास्तिक इत्यर्थः। [ विनयः ] नयातीतः, [ अपहितः ] हितादपेतः। विस्मयो विगर्वो न भवतीति [ अविस्मयः ] गर्वी, गर्वयुक्त इत्यर्थः। अत्राहितादित्यर्थश्लेषः। अन्यत्र,—शब्दश्लेष इत्यनयोः सङ्करः ॥ ७ ॥

कृतेति।—[ कृतगोपवधूरतेः ] गोप्य एव वध्वो गोपवध्वः। "स्त्रियाः पुंवत्—" ( ६।३।३४ पा० ) इत्यादिना पुंवद्भावः। तासु रतिः कृता येन तस्य, गोपीजनवल्लभस्येत्यर्थः। [ वृषं ] वृषभरूपिणम् अरिष्टा-

विहितापचितिर्महीभृता
द्विषतामाहितसाध्वसो बलैः ।
भव सानुचरस्त्वमुच्चकै-
र्महतामप्युपरि क्षमाभृताम् ॥ ९ ॥

---

ख्यम् असुरं, [ घ्नतः ] मारयतः । हन्तेर्लटः शत्रादेशः । [अधःकृतैनसः] निरस्तकल्मषस्य, [ तव, उग्रे ] भयङ्करे, [ नरके ] नरकासुरे, [ प्रतिपत्तिः ] प्रवृत्तिः, पुरुषकार इति यावत् ; [ सम्प्रति अपि, जनताभिः ] जनसमूहैः, [ साधु वर्ण्यते ] अहो ! महद्दुष्करं कृत-मित्युपश्लोक्यते । परुषस्तु,—[ कृतगोपवधूरतेः ] गोपानां वधूषु रतिः कृता येन तस्य, पारदारिकस्य इत्यर्थः, [ वृषं ] धर्मं, वृषभं वा, [घ्नतः] । 'सुकृते वृषभे वृषः' इति विश्वः । अत एव [कृतैनसः] पापकृतः, [ तव, उग्रे ] दारुणे, [ नरके ] निरये, [ अधःप्रतिपत्तिः ] अधःप्राप्तिः । "प्रतिपत्तिः पदप्राप्तौ पौरुषे गौरवेऽपि च" इति विश्वः । [ जनताभिः सम्प्रत्यपि साधु वर्ण्यते ] दुस्तरोऽस्य पापिष्ठस्य नरकपात इत्युद्घोष्यते इत्यर्थः । अत्र गोपपरदारिकोऽप्यधःकृतैना इति विरोधाभासः श्लेषेण सङ्कीर्य्यते ॥ ८ ॥

विहितेति ।—सहानुचरः [ सानुचरः ] सभृत्यः, [ महीभृता ] चैद्येन, [ विहितापचितिः ] कृतपूजः ; लोकवेदयोः सानुचरस्यैव राज्ञः पूज्यत्वप्रसिद्धेरिति भावः । अत एव [ बलैः ] सैन्यैः, [द्विषतां] शत्रूणाम्, [ आहितसाध्वसः ] जनितभयः सन्, [महतामपि, क्षमाभृतां] राज्ञाम्, [ उपरि, उच्चकैः ] उन्नतः, [ त्वं भव ] सर्वोत्कर्षेण वर्त्तस्व । परुषस्तु,— [ महीभृता ] चैद्येन, [ विहितापचितिः ] कृतहानिः । 'भवेदपचितिः पूजाव्ययहानिषु निष्कृतौ' इति विश्वः । अत एव [ द्विषतां बलैः, आहितसाध्वसः ] भीषितः सन्, [ महतां, क्षमाभृतां ] भूधराणाम्, [ उपरि त्वम् उच्चकैः ] ; सानुषु चरतीति [ सानुचरः ] स [ भव ] । "चरेष्टः" (३।२।१६ पा०) इति टप्रत्ययः । अत्रापि शब्दार्थश्लेषसङ्करः ॥९॥

घनजालनिभैर्दुरासदाः
परितो नागकदम्बकैस्तव।
नगरेषु भवन्तु वीथयः
परिकीर्णा वनजैर्मृगादिभिः ॥ १० ॥

सकलापिहितस्वपौरुषो
नियतव्यापदवर्द्धितोदयः।
रिपुरुन्नतधीरचेतसः
सततव्याधिरनीतिरस्तु ते ॥ ११ ॥

---

घनेति।—[ तव नगरेषु, वीथयः ] रथ्याः, [ घनजालनिभैः ] मेघसमूहकल्पैः, [वनजैः] वनभवैः, [मृगादिभिः] मृगप्रभृतिभिः, भद्रो मन्द्रो मृगश्चेत्येवं त्रिविधैरपीत्यर्थः। [ नागकदम्बकैः ] गजवृन्दैः, [ परितः, परिकीर्णाः ] व्याप्ताः ; अत एव [ दुरासदाः ] दुष्प्रवेशाः, [ भवन्तु ]। राज्ञा सन्धाने महैश्वर्य्यञ्च ते भविष्यतीत्यर्थः। परुषस्तु,—[ तव नगरेषु वीथयः, घनजालनिभैः ] सान्द्राऽऽनायतुल्यैः। 'आनायः पुंसि जालं स्यात्' इत्यमरः। [ नागकदम्बकैः ] सर्पसङ्घैः, [ वनजैर्मृगादिभिः ] मृगव्यालपुलिन्दप्रभृतिभिः ; अथवा,—मृगादिभिः मृगभक्षकैः शार्दूलादिभिः, [ परितः परिकीर्णा ] अत एव [ दुरासदा भवन्तु ] राजविग्रहादरण्यप्रायङ्गता भवन्त्वित्यर्थः ॥ १० ॥

सकलेति।—[ उन्नतधीरचेतसः ] उन्नतम् उदारं, धीरम् अविकारं, चेतो यस्य तस्य, [ते] तव, [रिपुः, सकलापिहितस्वपौरुषः] सकलैरपिहितं तिरस्कृतं, स्वपौरुषं यस्य सः, [ नियतव्यापत् ] नियता नित्याः, व्यापदो विशिष्टापदो यस्य सः, [ अवर्द्धितोदयः ] असम्पूरिताभ्युदयः, [ सततव्याधिः ] सततरोगः, [ अनीतिः ] नीतिरहितः, एवंविधः [ अस्तु ]। परुषस्तु,—[ अचेतसः ] अमनस्विनः, [ते, रिपुः] चैद्यः, [ सकलापिहित-

विकचोत्पलचारुलोचन-
स्तव चैद्येन घटामुपेयुषः ।
यदुपुङ्गव ! बन्धुसौहृदात्
त्वयि पाता समुरो नवाऽऽसवः ॥ १२ ॥

---

स्वपौरुषः ] सकलैरपिहितस्वपौरुषः अतिरस्कृतात्मविक्रमः । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" ( का० ) इत्यलोपे नञ्समासः । [ नियतव्यापत् ] नियतं नित्यं, व्यापत् विगतापत्, [ अवर्द्धितोदयः ] अच्छिन्नोदयः । 'वृधु छेदने वृद्धो' इति धातोः कर्मणि क्तः । [उन्नतधीः] उदारबुद्धिः, [ सततव्याधिः ] सततं विगताधिः, मनोव्यथारहितः इत्यर्थः, [ अनीतिः ] ईतिबाधारहितः, [ अस्तु ] । 'अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः' । अत्र सर्वत्र पदभङ्गेनार्थद्वयप्रतिपादनाज्जतुकाष्ठवदेकशब्दप्रतीतिः शब्दश्लेषः ॥ ११ ॥

विकचेति ।—[ यदुपुङ्गव ! ] पुमान् गौरिव पुङ्गवः पुरुषर्षभः । उपमितसमासः । "गोरतद्धितलुकि" ( ५।४।९२ पा० ) इति समासान्तष्टच्प्रत्ययः । यदुषु पुङ्गव यदुश्रेष्ठ ! 'श्रेष्ठोत्तमौ तु पुङ्गवौ' इति वैजयन्ती । [ चैद्येन ] कर्त्रा । [ घटां ] घनसन्धिम्, [ उपेयुषस्तव ] सम्बन्धीनि [ विकचोत्पलचारुलोचनः ] विकचोत्पलानि वासनार्थं-विहितानि, तान्येव चारुलोचनानि यस्य सः । सह सुरया माध्व्या गौड्या वा [ ससुरः ] । 'गौडी पैष्टी च माध्वी च विज्ञेया सा सुरा त्रिधा' इति वचनात् । अत्र राजन्यवैश्ययोः पैष्ट्यामेव निषेधः । [नवाऽऽसवः] नवमद्यं, नालिकेरादिकमिति सुराऽऽसवयोर्न पौनरुक्त्यम् । [ त्वयि बन्धुसौहृदात् ] बन्धौ त्वयि स्नेहात्, [पाता] पास्यते । त्वद्गृहे सह पानं करिष्यते, सम्प्रति ते सत्प्रतिपक्षत्वादिति भावः । पिबतेः कर्मणि लुट् । परुषस्तु,—हे [ यदुपुङ्गव ! ] यादवबलीवर्द !, [ चैद्येन ]

चलिताऽऽनकदुन्दुभिः पुरः
सबलस्त्वं सह सारणेन तम् ।
समितौ रभसादुपागतः *
सगदः सम्प्रतिपत्तुमर्हसि ॥ १३ ॥

---

सह, [ घटाम् उपेयुषः ] समराभियोगं गतस्य, [ तव विकचोत्पलचारु-लोचनः, ससुरः ] सदेवः, [ वासवः ] अपि [ त्वयि बन्धुसौहृदात् ] उपेन्द्रे त्वयि सौभ्रात्रादित्यर्थः । [ पाता ] त्राता, [ न ] । किं पुनर्भवत्का भीष्मादयः ? इति भावः । पातेस्तृच् । सुहृदयस्य भावः सौहृदमिति विग्रहः, युवादित्वादण्प्रत्ययः । "हृदयस्य हृल्लेख—" ( ६।३।५० पा० ) इति हृद्भावविधानसामर्थ्यान्न "हृद्भग—" ( ७।३।१९ पा० ) इत्युभय-पदवृद्धिः । अत एव 'सौहृददौहृदशब्दावपि हृद्भावात्' ( २ अध्या० ५म अधि० ८४ सू० ) इति वामनः । सुहृदस्तु सौहार्दमेव । शब्दार्थश्लेषसङ्करः ॥ १२ ॥

चलितेति ।—[ रभसात् ] हर्षात्, [ उपागतः ] प्राप्तः, [ तं ] चैद्यं, [ त्वं, पुरश्चलिताऽऽनकदुन्दुभिः ] पुरोगतवसुदेवः । 'वसुदेवोऽस्य जनकः स एवाऽऽनकदुन्दुभिः' इत्यमरः । [ सबलः ] बलभद्रसहितः, [सारणेन] सारणाख्येन पुत्रेण, [सह, सगदः] गदाख्येन अनुजेन सहितः, [समितौ] सभायां, [ सम्प्रतिपत्तुं ] सम्भावयितुम्, [ अर्हसि ], सर्वबन्धुसमेतः प्रत्येतुमर्हसीत्यर्थः । पक्षस्तु,—[ समितौ ] समरे, [ रभसात् ] वेगात्, [ उपागतः ] । 'रभसो वेगहर्षयोः' 'समितिः समरे साम्ये सभायामपि

---

* "उपागतः" इति कृष्णविशेषणत्वेन प्रयुक्तस्य पदस्य "उपागतम्" इति चैद्यविशेषणत्वेन योजनैव समीचीनेति विभावयामः ; यतः द्वितीयश्लोके "भवती-ऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम्" इत्यनेन चैद्यस्यैव आगमनं प्रदर्शितम् । अत्र पुनः कृष्णस्यागमनं पूर्ववचनविरोधितया न समीचीनम् । टीकाकृद्भिरपि यथा अन्वयः कृतः, तेन तेषामपि चैद्यविशेषणमेवेदं पदमित्यभिप्रायम् अवगच्छामः ।

समरेषु रिपून् विनिघ्नता
शिशुपालेन समेत्य सम्प्रति ।
सुचिरं सह सर्वसात्वतै-
र्भव विश्वस्तविलासिनीजनः ॥ १४ ॥
विजितक्रुधमीक्षतामसौ
महतां त्वा महितं महीभृताम् ।

---

सङ्गता' इत्युभयत्रापि विश्वः । [ तं ] चैद्यं, [त्वं, पुरः] पुरतः, [ चलिता-ऽऽनकदुन्दुभिः ] चलिता आनकाः पटहाः, दुन्दुभयो भेर्य्यश्च यस्य सः । 'आनकः पटहोऽस्त्री स्याद्भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । [ सबलः ] ससैन्यः, [ सगदः ] गदया कौमोदक्या सहितः सन्, [ सहसा ] झटिति, [ रणेन ] युद्धेन, [ सम्प्रतिपत्तुम् ] अभियोक्तुम्, [ अर्हसि ] । अत्रापि शब्दार्थश्लेषसङ्करः ॥ १३ ॥

समरेष्विति ।—किञ्च, [ समरेषु रिपून् विनिघ्नता ], अतिशूरेणेत्यर्थः । [ शिशुपालेन, समेत्य ] ऐक्यं प्राप्य, [ सम्प्रति, सुचिरं ] बहुकालम् । सत्वतः अपत्यानि पुमांसः सात्वता यादवाः । "उत्सादिभ्यो-ऽञ्" (४।१।८६ पा०) इत्यञ् । तैः सर्वैः [ सर्वसात्वतैः सह, विश्वस्तविलासिनीजनः ] शिशुपालभयनिवृत्तिविश्रब्धविलासिनीजनः, [ भव ] । 'समौ विस्रम्भविश्वासौ' इत्यमरः । परमस्तु,—[सुचिरं, रिपून् विनिघ्नता] रिपुघातिना, [शिशुपालेन] सह, [ समरेषु, समेत्य ] सङ्गत्य, [सम्प्रति] एव [ सर्वसात्वतैः सह विश्वस्तविलासिनीजनो भव ] । 'विश्वस्ताविधवे समे' इत्यमरः । "आदितश्च" (७।२।१६ पा०) इति चकारादनुक्तसमुच्चयार्थाच्छ्वसेर्निष्ठायामिट्प्रतिषेधः । शिशूनामनुद्धतानामेवायं पालयिता, नोद्धतानामिति सर्वथा यादवानद्यैव हनिष्यतीति भावः ॥ १४ ॥

विजितेति ।—[ असौ महीपतिः ] चैद्यः, [मुदितः] सन्, [ विजितक्रुधं ] मैत्रीबन्धान्निरस्तक्रोधं, [ महतां, महीभृतां ] राज्ञां, [ महितं ]

असकृज्जितसंयतं पुरो
मुदितः सप्रमदं महीपतिः ॥ १५ ॥
इति जोषमवस्थितं द्विषः
प्रणिधिं गामभिधाय सात्यकिः।
वदति स्म वचोऽथ चोदित-
चलितैकभ्रु रथाङ्गपाणिना ॥ १६ ॥

---

पूजितम्। "मतिबुद्धि—" (३।२।१८८ पा०) इत्यादिना वर्त्तमाने क्तः, तद्योगे षष्ठी। [असकृत्] बहुशः, [जितसंयतं] जिताः संयतः, आजयो येन स तम्। 'समुदायः स्त्रियां संयत्समित्याजिसमिद्युधः' इत्यमरः। [सप्रमदं] सहर्षं, [त्वा] त्वाम्। "त्वामौ द्वितीयायाः" (८।१।२३ पा०) इति त्वादेशः। [पुरः] अग्रे, [ईक्षतां] पश्यतु। परुषस्तु,—[विजितक्रुधं] सन्त्यक्तक्रोधं, [महतां, महीभृतां] चैद्यादीनाम्, [अहितम्] अरिम्, [असकृज्जितसंयतम्] असकृज्जितश्चासौ संयतश्च। स्नातानुलिप्तवत् "पूर्वकालैक—" (२।१।४९ पा०) इति समासः। 'बद्धो नद्धश्च संयतः' इति वैजयन्ती। [सप्रमदं] सस्त्रीकं, [त्वाम्], इति पदच्छेदः। असकृत् [ईक्षताम्]। अन्यत् समानम् ॥ १५ ॥

इतीति।—[इति] इत्थम्भूतां, [गां] वाचम्। 'अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौर्मता' इति विश्वः। [अभिधाय जोषमवस्थितम्]। 'तूष्णीं जोषं भवेन्मौने' इति वैजयन्ती। [द्विषः, प्रणिधिं] दूतं, [सात्यकिः] शैनेयः, [अथ] दूतवाक्यानन्तरम्। रथाङ्गं चक्रं, पाणौ यस्य तेन [रथाङ्गपाणिना] हरिणा। "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" (वा०) इति पाणेः परनिपातः। [चलितैकभ्रुः] चलिता प्रेरिता, एका भ्रूर्यस्मिन् कर्मणि तत्। "गोस्त्रियोरुपसर्ज्जनस्य" (१।२।४८ पा०) इति ह्रस्वः। [चोदितः] अस्योत्तरं

मधुरं बहिरन्तरप्रियं
कृतिनाऽवाचि वचस्तथा त्वया ।
सकलार्थतया विभाव्यते
प्रियमन्तर्बहिरप्रियं यथा ॥ १७ ॥

अतिकोमलमेकतोऽन्यतः
सरसाम्भोरुहवृन्तकर्कशम् ।
वहति स्फुटमेकमेव ते
वचनं शाकपलाशदेश्यताम् ॥ १८ ॥

---

देहीति भ्रूसंज्ञया प्रेरितः सन्नित्यर्थः । [ वचः, वदति स्म ] अवादीत् ॥ १६ ॥

किं तद्वचः, तदेकविंशतिश्लोकैराह, मधुरमित्यादि ।—[ कृतिना ] कुशलेन, [ त्वया, बहिः ] प्रकाशे, [ मधुरं ] प्रियम्, [ अन्तः ] गर्भे, [ अप्रियं वचः, तथा ] तेन प्रकारेण, [ अवाचि ] उक्तम् । वचेः कर्मणि लुङि चिणि वृद्धिः । [ यथा ] येन प्रकारेण, [ सकलार्थतया ] सम्पूर्णो-भयार्थतया हेतुना, [ अन्तः प्रियं बहिरप्रियं, विभाव्यते ] अवधार्य्यते, अप्रियगर्भं प्रियं यदुक्तं, तदस्माकं तु प्रियगर्भमप्रियमेव प्रतीयते इत्यर्थः । इदमुक्तिचातुर्य्यं तवैव इत्यभिप्रेत्योक्तं कृतिनेति ; अतो न श्रद्धेयमिदं वच इति भावः ॥ १७ ॥

अथ वा बहिरेव प्रियम्, अन्तरेव अप्रियं, तथाऽपि न ग्राह्य-मित्युपमया व्यनक्ति, अतीति ।—[ एकतः ] बहिः, [ अतिकोमलम्, अन्यतः ] अन्तः, [ सरसाम्भोरुहवृन्तकर्कशं ] सरसम् आर्द्रं, यदम्भोरुहस्य वृन्तं प्रसवबन्धनं, तदिव कर्कशं परुषम्, [ एकमेव, ते ] तव, [ वचनं, शाकपलाशदेश्यताम् ] ईषदसमाप्तं शाकपलाशं महापलाख्यतरुपत्रं, तत्तुल्यम् । 'शाकः पलाशसारः स्याद्वरदारुः करच्छदः । महापत्रो

प्रकटं मृदु नाम जल्पतः

परुषं सूचयतोऽर्थमन्तरा ।

शकुनादिव मार्गवर्त्तिभिः

पुरुषादुद्विजितव्यमीदृशात् ॥ १९ ॥

हरिमर्चितवान् स भूपति-

र्यदि राज्ञस्तव कोऽत्र मत्सरः ? ।

व्यसनाय ससौरभस्य क-

स्तरुसूनस्य शिरस्यसूयति ? ॥ २० ॥

---

महाशाकः स्थिरदारुहंनोटकः ॥' इत्यभिधानरत्नमालायाम् । "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" ( ५।३।६७ पा० ) इति देश्यप्रत्ययः । कल्पदेश्यदेशीयानि सादृश्यवाचकानीति दण्डी । तस्य भावस्तत्ता तां, [ स्फुटं वहति ] । अन्तःपरुषस्य वहिर्माधुर्य्यं शाकपलाशवदिति भावः । अत्र शाकपलाशोपमायाः पद्मदृष्टान्तोपमासापेक्षत्वात् सङ्करः ॥ १८ ॥

नन्वप्रियगर्भेऽपि वाक्ये गुणग्राहिभिः प्रियमेव गृह्यतां, 'हंसैः क्षीरमिवाम्भसि' इत्याशङ्क्याऽऽह, प्रकटमिति ।—[प्रकटं] प्रकाशं, [ मृदु नाम ] मृदुकल्पं, [ जल्पतः ] कथयतः, [ अन्तरा ] अन्तः, [ परुषम् ] अनिष्टम्, [अर्थं सूचयतः, ईदृशात्] अन्तःशुद्धिशून्यात्, [पुरुषात्], ईदृशः [ शकुनादिव ] वहिः शुभङ्करं कुर्वतोऽन्तरा परुषं सूचयतः पिङ्गलादिपक्षिण इव, [ मार्गवर्त्तिभिः ] सन्मार्गवर्त्तिभिरध्वगैश्च, [उद्विजितव्यम्]; न चांशतोऽपि ग्राह्यं, विषसम्पृक्तान्नवदखिलस्यानर्थहेतुत्वादिति भावः । "विज इट्" (१।२।२ पा० ) इतीटः कित्त्वात् न गुणः ॥ १९ ॥

एवं दूतं निर्भर्त्स्य, अथ चैद्यं तद्दोषोद्घाटनपूर्वकं भर्त्सयति, हरिमित्यादि ।—[ स भूपतिः] युधिष्ठिरः, [हरिम्, अर्चितवान् यदि] पूजि-

सुकुमारमहो ! लघीयसां
हृदयं तद्गतमप्रियं यतः ।
सहसैव समुद्गिरन्त्यमी
क्षपयन्त्येव हि तन्मनीषिणः ॥ २१ ॥

---

तवांश्चेत् । [ अत्र ] स्पर्द्धने, [ तव, राज्ञः ] चैद्यस्य, [ मत्सरः कः ? ], निरर्थक इत्यर्थः । [ ससौरभस्य ] परिमलयुक्तस्य, [ तरुसूनस्य ] । तरुग्रहणं सूनस्य साधारणताद्योतनार्थम् । [ शिरसि, न्यसनाय ] अर्पणाय,[कोऽसूयति ?] नो कोऽपीत्यर्थः । "क्रुधद्रुह—"(१।४।३७ पा०) इत्यादिना सम्प्रदानसंज्ञा । सर्वत्र गुणवद्वस्तु गुणज्ञैर्बहु मन्यते, तटस्थानां किमत्र वृथा सन्तापेन ? इति भावः । अत्र हरितरुसूनयोर्वाक्यद्वये बिम्ब-प्रतिबिम्बभावेनार्चाशिरोधारणरूपसमानधर्मनिर्देशात् दृष्टान्तालङ्कारः ॥ २० ॥

अथ कथं महान् महतः पूजां सहते ? इत्याशङ्का हरिचैद्ययोर्महदन्तरं मनसि निधाय, सामान्यतः सुजनदुर्जनयोरन्तरं चतुर्भिराह, सुकुमार-मित्यादि ।—[लघीयसाम्] अल्पीयसां,[हृदयं, सुकुमारं] तनु * । कुतः ?—[यतः, अमी] लघीयांसः, [तद्गतं] हृदयगतम्, [ अप्रियं, सहसैव] झटित्येव, [ समुद्गिरन्ति ] समुच्चारयन्ति । [ मनीषिणः, हि ] तु, [ तत् ] अप्रियं, कथञ्चित् सम्भाव्यमानमपीति शेषः । अन्तः [ एव, क्षपयन्ति ] जरयन्ति, न तूद्गिरन्तीत्यर्थः । [ अहो ! ] इत्याश्चर्य्ये, चैद्यश्चोद्गिरति, नैवं हरिरिति अहो !! महदन्तरमनयोरिति भावः । अत एवाप्रस्तुतात् सामान्यात् प्रस्तुतविशेषप्रतिपत्तिरूपोऽयमप्रस्तुतप्रशंसाभेदः,—'अप्रस्तुतस्य कथनात् प्रस्तुतं यत्र गम्यते । अप्रस्तुतप्रशंसेयं सारूप्यादिनियन्त्रिता ॥' इति

---

* तुच्छमिति व्याख्यानान्तरं सुकुमारपदस्य दृश्यते ; अगरीयसां हि हृदयं यतः सुकुमारं तनु, लघु इत्यर्थः, अत एव तत् गाम्भीर्य्यशून्यमेवेति तुच्छमिति यावत्, तथा च उभयत्रापि एक एवार्थः ।

उपकारपरः स्वभावतः
सततं सर्वजनस्य सज्जनः ।
असतामनिशं तथाऽप्यहो !
गुरुहृद्रोगकरी तदुन्नतिः ॥ २२ ॥

परितप्यत एव नोत्तमः
परितप्तोऽप्यपरः सुसंवृतिः ।
परवृद्धिभिराहितव्यथः
स्फुटनिर्भिन्नदुराशयोऽधमः ॥ २३ ॥

---

लक्षणात् । आदिशब्दात् सामान्यविशेषसङ्ग्रहः । एवमुत्तरश्लोकत्रयेऽपि द्रष्टव्यं, विशेषन्तु वक्ष्यामः ॥ २१ ॥

उपकारेति ।—किञ्च, [ सज्जनः स्वभावतः सततं सर्वजनस्योपकारपरः ], भवति इति शेषः ; न तूपाधिवशात् कदाचित् कस्यचिदेवेति भावः । [तथाऽपि] सर्वोपकारित्वेऽपि, [तदुन्नतिः] तस्य सज्जनस्योत्कर्षः, [असताम्] असाधूनाम्, [ अनिशं, गुरुहृद्रोगकरी ] अत्यन्तहृदयसन्तापकारिणी, [ अहो ! ] आश्चर्य्यम् । "कृञो हेतु—" ( ३।२।२० पा० ) इत्यादिना ताच्छील्ये टप्रत्यये "टिड्ढाणञ्—" ( ४।१।१५ पा० ) इत्यादिना ङीप् । हरिचैद्यावेवम्भूताविति सैवाप्रस्तुतप्रशंसा ॥ २२ ॥

परितप्यत इति ।—किञ्च, [ उत्तमः परवृद्धिभिः, न परितप्यते ] न व्यथते, [ एव ] ; उत्तमस्यापरशुभद्वेष एव नास्तीत्यर्थः । [ अपरः ] मध्यम एवेत्यर्थः । [ परितप्तोऽपि ] । शोभना संवृतिः परितापगोपनं यस्य सः [ सुसंवृतिः ], सन्तमपि परशुभद्वेषं न प्रकाशयतीत्यर्थः । [ अधमः ] तु परवृद्धिभिः [आहितव्यथः] उत्पादितसन्तापः, तथा [स्फुटनिर्भिन्नदुराशयः ] स्फुटं निर्भिन्नः प्रकाशितः, दुराशयः परशुभद्वेष-

अनिराकृततापसम्पदं
फलहीनां सुमनोभिरुज्झिताम् ।
खलतां ख-लतामिवासतीं
प्रतिपद्येत कथं बुधो जनः ? ॥ २४ ॥
प्रतिवाचमदत्त केशवः
शपमानाय न चेदिभूभुजे ।

---

लक्षणो दुरभिप्रायो यस्य सः, परशुभद्वेषं प्रकाशयत्येवेत्यर्थः । चैद्यश्चाधमो हरिस्तूत्तम इति प्रतीतिः पूर्वोक्त एवालङ्कारः ॥ २३ ॥

ननु मानिनां परोत्कर्षे परद्वेषो भूषणमेवेत्याशङ्का, नेत्याह, अनिराकृतेति ।—[ अनिराकृततापसम्पदम् ] अनिराकृता अनिवारिता, तापसम्पत् तापातिशयो यया ताम्, एकत्र,—सन्तापजननैकस्वभावात्, अपरत्र,—असतश्छायाविरहाच्चेति भावः । तथा [ फलहीनाम् ] एकत्र, —इहामुत्र चोपकारशून्यां, प्रत्युतोभयत्राप्यनर्थकरीञ्चेति भावः । अन्यत्र, —सर्वार्थरहितां, [सुमनोभिः] बुधैः, [उज्झिताम्], अन्यत्र,—पुष्पैर्वर्जिताम् । 'सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्' इति वैजयन्ती । [ असतीं ] दुष्टाम्, अन्यत्र,—निरुपाख्याम् ; खलस्य भावः खलता तां [ खलतां] दुर्जनत्वम् । खस्य लता तां [ख-लतां] गगनलतिकाम्, [इव, बुधो जनः ] सदसद्विवेककुशलो जनः, [ कथं प्रतिपद्येत ?] अवलम्बेत ? न कथमपीत्यर्थः । वृथा मत्सरी न कस्यापि गुण इति भावः । तथाऽपि स खलतां प्रतिपद्यते, न चैवं हरिरिति प्रतीतिः सैवाप्रस्तुतप्रशंसा ख-लतामिवेत्युपमया सङ्कीर्य्यते । 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायादसत्या अपि ख-लतिकायाः प्रतीतिसत्यतया खलतोपमत्वप्रसिद्धिः ॥ २४ ॥

नन्वेवं महानुभावो हरिः किमर्थं तथा सदसि राज्ञा निर्भर्त्स्यमानो मौनमाश्रितः ? इत्याशङ्का सत्यम्, अनादरात्, न तु कातर्य्यादित्याह,

अनुहुङ्कुरुते घनध्वनिं
न हि गोमायुरुतानि केशरी ॥ २५ ॥
जितरोषरया महाधियः
सपदि क्रोधजितो लघुर्जनः ।
विजितेन जितस्य दुर्मते-
र्मतिमद्भिः सह का विरोधिता ? ॥ २६ ॥
वचनैरसतां महीयसो
न खलु व्येति गुरुत्वमुद्धतैः ।

---

प्रतीति ।—[ केशवः, अपमानाय ] क्रोशते । स्वरितेत्त्वादात्मनेपदम् । [ चेदिभूभुजे ] । क्रियाग्रहणात् सम्प्रदानत्वम् । [ प्रतिवाचं ] प्रत्युत्तरं, [ नादत्त । केशरी ] सिंहः, [ घनध्वनिम्, अनुहुङ्कुरुते ] प्रतिगर्जति, [ गोमायुरुतानि] शिवारुतानि, [न] अनुहुङ्कुरुते । [हि] । 'स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तकाः' इत्यमरः । महतामधमेष्ववज्ञैव नीतिरिति भावः । दृष्टान्तालङ्कारः ॥ २५ ॥

किञ्च, राज्ञो हरिणा विरोधोऽपि न योग्य इत्याह, जितेति ।—[ महाधियः ] सुधियः, [ जितरोषरयाः] जितो रोषरयो यैस्ते तथोक्ताः । [ लघुः ] अल्पः, [ जनः ] तु [ सपदि क्रोधजितः ]; एवं [ विजितेन जितस्य] जितक्रोधेन, जितस्येत्यर्थः । [ दुर्मतेः ] मूर्खस्य, [ मतिमद्भिः ] पण्डितैः, [ सह, विरोधिता ] स्पर्द्धा, [ का ? ] मूर्खपण्डितयोर्मैत्रीव स्पर्द्धाऽपि न सङ्गतेत्यर्थः । मूर्खश्चायं चैद्य इति अप्रस्तुतात् सामान्यात् विशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ २६ ॥

नापि चैद्यप्रलापैः कृष्णस्य किञ्चिल्लाघवमित्याशयेनाऽऽह, वचनैरिति ।—[ उद्धतैः ] निष्ठुरैः, [ असतां ] दुर्जनानां, [ वचनैः, महीयसः ]

किमपैति रजोभिरौर्वरै-
रवकीर्णस्य मणेर्महार्घता ? ॥ २७ ॥
परितोषयिता न कश्चन
स्वगतो यस्य गुणोऽस्ति देहिनः ।
परदोषकथाभिरल्पकः
स्वजनं तोषयितुं किलेच्छति ॥ २८ ॥
सहजान्धदृशः स्वदुर्नये
परदोषेक्षणदिव्यचक्षुषः ।

---

महत्तमस्य, [ गुरुत्वं ] गौरवं, [ न व्येति ] नापैति, [ खलु । और्वरैः ] भौमैः । 'उर्वरा सर्वसस्याऽऽढ्यभूमौ स्याद्भूमिमात्रके' इति विश्वः । [ रजोभिः, अवकीर्णस्य ] छन्नस्य, [ मणेः, महार्घता ] महामूल्यत्वम् । 'मूल्ये पूजाविधावर्घः' इत्यमरः । [ अपैति किम् ? ] नापैत्येवेत्यर्थः । अत्र मणिमहीयसोर्वाक्यभेदेन प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः । महीयस इति सामान्याद्धरेरिति विशेषप्रतीतेरप्रस्तुतप्रशंसा चेति सङ्करः ; हरिमण्योरुपमाध्वनिश्च ॥ २७ ॥

युक्तञ्चैतत्पारुष्यं दुरात्मनामित्याह, परीति ।—[ यस्य, देहिनः ] जन्तोः, [ परितोषयिता ] परेषामानन्दयिता, [ स्वगतो गुणः, कश्चन ] कश्चिदपि, [ नास्ति, अल्पकः ] तुच्छः, स इति शेषः, यत्तदोर्नित्यसम्बन्धात् । [ परदोषकथाभिः ] अन्यजनदोषोक्तिभिः, [ स्वजनम् ] ; न तु मध्यस्थमिति भावः । [ तोषयितुम्, इच्छति किल ] ईहते खलु ; चैद्यस्यापि निर्गुणत्वात् परदूषणं युक्तमिति, अत एवाप्रस्तुतप्रशंसाभेदः ॥ २८ ।

नन्वात्मनो निर्दोषत्वाभिमानादित्थं विजृम्भणमित्याशङ्क्याऽऽह, सहजेति ।—[ असाधवः ] खलाः, [ स्वदुर्नये ] स्वदोषे, महत्यपीति भावः ;

स्वगुणोच्चगिरो मुनिव्रताः
परवर्णग्रहणेष्वसाधवः ॥ २९ ॥
प्रकटान्यपि नैपुणं महत्-
परवाच्यानि चिराय गोपितुम् ।
विवरीतुमथात्मनो गुणान्
भृशमाकौशलमार्य्यचेतसाम् ॥ ३० ॥

---

[ सहजान्धदृशः ] सहजा स्वाभाविकी, अन्धा अपश्यन्ती, दृग् येषां ते, जात्यन्धा इत्यर्थः । [ परदोषेक्षणदिव्यचक्षुषः ] परदोषाणां, सूक्ष्माणामपीति भावः ; ईक्षणे दर्शने, दिव्यचक्षुषोऽप्रतिहतदृष्टयः । किञ्च, [ स्वगुणोच्चगिरः ] स्वगुणेषूच्चगिरः, आत्मप्रशंसायाम् अतिप्रगल्भवाच इत्यर्थः । [ परवर्णग्रहणेषु ] परस्तुतिवचनेषु । 'स्तुतौ वर्णन्तु वाऽक्षरे' इत्यमरः । [ मुनिव्रताः ] मौनव्रतिनः । "अर्श आदिभ्योऽच्" (५।२।१२७ पा० ) । * चैद्यश्चैवंविध इति प्रतीतेरप्रस्तुतप्रशंसा ॥ २९ ॥

साधवस्तु नैवमित्याह, प्रकटानीति, ।—[ आर्य्यचेतसां ] सुमनसां, [प्रकटान्यपि, परवाच्यानि] परदूषणानि, [चिराय, गोपितुं ] गोपायितुं, संवरीतुमित्यर्थः । "आयादय आर्द्धधातुके वा" ( ३।१।३१ पा० ) इति विकल्पादायप्रत्ययाभावः । [ महत्, नैपुणं ] कौशलम् । अथेति वाक्यारम्भे । [ अथात्मनो गुणान्, विवरीतुं ] प्रकटयितुम्, आत्मप्रशंसां कर्त्तुमित्यर्थः । [ भृशमाकौशलम् ] अत्यन्तमकौशलम् ; साधवो न परान् निन्दन्ति, न वा आत्मानं प्रशंसन्ति,—'आत्मप्रशंसां परगर्हामिव वर्जयेत्' इत्यापस्तम्बीये निषेधस्मरणादिति भावः । "नञः शुचीश्वरक्षेत्रज्ञ-

---

* मुनेः व्रतमिव व्रतं येषां ते मुनिव्रताः, निर्वाच इत्यर्थः, इत्यौपम्यगर्भबहुव्रीहिसमासेन "अर्श आदिभ्यः" इत्यच्प्रत्ययं विनैवास्य सङ्गतिः भवितुमर्हतीति ज्ञेयम् ।

किमिवाखिललोककीर्त्तितं

कथयत्यात्मगुणं महामनाः ? ।

वदिता न लघीयसोऽपरः

स्वगुणं तेन वदत्यसौ स्वयम् ॥ ३१ ॥

विसृजन्त्यविकत्थिनः परे

विषमाऽऽशीविषवन्नराः क्रुधम् ।

दधतोऽन्तरसाररूपतां

ध्वनिसाराः पटहा इवेतरे ॥ ३२ ॥

---

कुशलनिपुणानाम्" (७।३।३० पा०) इति विकल्पात् नञ्पूर्वपदस्यापि वृद्धिः। कृष्णश्चैवम्भूत इति विशेषप्रतीतेरप्रस्तुतप्रशंसैव ॥ ३० ॥

किमिति ।—किञ्च, [ महामनाः ] महात्मा, [ अखिललोककीर्त्तितं] स्वत एव सर्वैर्लोकैः प्रख्यातम्, [आत्मगुणं,किमिव] किमर्थं, [कथयति ?] एव ; स्वत एव सर्वैः लोकैः कीर्त्यमानत्वादित्यर्थः । [ लघीयसः ] तुच्छस्य तु, [ स्वगुणं, वदिता ] वक्ता । वदेस्तृच्प्रत्ययः, अत एव "न लोका—" ( २।३।६९ पा० ) इत्यादिना षष्ठीप्रतिषेधः । [अपरः] अन्यः, [न], अस्ति इति शेषः,[तेन] कारणेन, [असौ] लघीयान्, स्वगुणं [स्वयम्] एव, [वदति]। न केवलं निषेधात्, किञ्च, प्रयोजनाभावादपि महान् आत्मप्रशंसां न करोति, तुच्छस्तु वक्त्रन्तरासम्भवात् स्वयमेव तां प्रलपतीत्यर्थः। पूर्वार्द्धे पदार्थहेतुकं काव्यलिङ्गम्, उत्तरार्द्धे वाक्यार्थहेतुकं चोन्नेयम्। कृष्णचैद्यौ चैवंविधाविति विशेषप्रतीतेरप्रस्तुतप्रशंसा चेति सङ्करः ॥ ३१ ॥

किञ्च महात्मानः क्रुद्धाः काले पराक्रमन्ति, दुरात्मानस्तु केवलं प्रलपन्तीत्याह, विसृजन्तीति ।—[परे नराः] सत्पुरुषाः, [ विषमाऽऽशीविषवत् ] क्रूरसर्पवत्, इत्युपमा । [ अविकत्थिनः ] अनात्मश्लाघिन एव, [ क्रुधं ] क्रोधं, [ विसृजन्ति ] वमन्ति, पराक्रमन्तीत्यर्थः । [ अन्तरसार-

नरकच्छिदमिच्छतीप्सितुं
विधिना येन स चेदिभूपतिः ।
द्रुतमेतु न हापयिष्यते
सदृशं तस्य विधातुमुत्तरम् ॥ ३३ ॥
समनद्ध किमङ्ग ! भूपति-
र्यदि सन्धित्सुरसौ सहामुना ? ।

---

रूपताम् ] अन्तरभ्यन्तरे, असाररूपतां निःसाररूपतां, [ दधत ] दधानाः । "नाभ्यस्ताच्छतुः" ( ७।१।७८ पा* ) इति नुमभावः । [ इतरे ] जनाः, दुर्जनाः इत्यर्थः, [ पटहा इव ] । ध्वनिरेव सारो बलं येषां ते [ ध्वनिसाराः ] वाक्शूरा एव, न तु बाहुबलशालिन इति भावः । अत्रापीदृशौ कृष्णचैद्यावित्यप्रस्तुतसामान्यात् प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ ३२ ॥

'अभिधाय तदा तदप्रियम्' (१६स० २श्लोकः) इत्यादिना यद्दूतेन युगपत्प्रियाप्रिये अभिहिते, तत्रोत्तरमाह, नरकेति ।—[सः] महीपतिः, [ चेदिभूपतिः, येन विधिना ] येन प्रकारेण, सन्धिना विग्रहेण वा इत्यर्थः, [ नरकच्छिदं ] नरकस्यान्तकं, किमन्येषामशक्तानाम् ? इति भावः । [ ईप्सितुम् इच्छति, तस्य ] विधेः, [सदृशमुत्तरं] प्रतिक्रिया, स्नेहो विरोधो वा इत्यर्थः, [विधातुं न हापयिष्यते] अविलम्बेन विधास्यत इत्यर्थः । जहातेर्ण्यन्तात् कर्मणि लृट् । विधानक्रियया अनभिधानेऽपि प्रधानभूतक्रियया अभिहितत्वादुत्तरमिति न कर्मणि द्वितीया । [द्रुतं] शीघ्रम्, [ एतु ] आगच्छतु ; आगमने स्वयमेव हीयत इति भावः ॥३३॥

नन्वभिधायेत्यादौ मया सान्त्वमेव विवक्षितं, न विग्रहः, तत् किमुभयाभ्यनुज्ञया ? इत्याशङ्क्याऽऽह, समनद्धेति ।—[अङ्ग !] इति आमन्त्रणे । [असौ भूपतिः] चैद्यः, [अमुना] हरिणा,[सह, सन्धित्सुर्यदि] सन्धातुमिच्छु-

हरिराक्रमणेन सन्नतिं
किल बिभ्रीत भियेत्यसम्भवः ॥ ३४ ॥
महतस्तरसा विलङ्घयन्
निजदोषेण कुधीर्विनश्यति ।
कुरुते न खलु स्वयेच्छया
शलभानिन्धनमिद्धदीधितिः ॥ ३५ ॥
यदपूरि पुरा महीपतिः
न मुखेन स्वयमागसां शतम् ।

---

श्वेत् । दधातेः सन्नन्तादुप्रत्ययः । [ किं समनद्ध ? ] किमर्थं सन्नद्धवान् ? ततो नायं सन्धित्सुरिति भावः । नह्यतेः स्वरितेत्त्वात् कर्त्तरि लुङि तङ्, "झलो झलि" ( ८।२।२६ पा० ) इति सकारलोपः । कृष्ण-भीषणार्थं सनाह इत्यत आह ।—[ हरिः ] सिंहः कृष्णश्च, [ किल, आक्रमणेन] अभिभवेन, या भीस्तया [भिया, सन्नतिं] नम्रतां, [बिभ्रीत] बिभृयात्, [ इति, असम्भवः ] सम्भवो नास्ति खलु इत्यर्थः ॥ ३४ ॥

अथाऽऽक्रमणेऽनिष्टमाचष्टे, महत इति ।—[कुधीः] आसन्नविनाश-त्वाद्विपरीतबुद्धिमान्, [ महतः ] महाऽनुभावान्, [ तरसा ] बलेन । 'तरसी बलरंहसी' इति विश्वः । [ विलङ्घयन् ] आक्रामन्, [ निज-दोषेण ] स्वापराधेनैव, उल्लङ्घनरूपेण इत्यर्थः, [ विनश्यति ] । तथा हि, [ इद्धदीधितिः ] दीप्तार्चिः, अग्निः इत्यर्थः, [ स्वया ] निजया, [इच्छया, शलभान्] पतङ्गान् । 'समौ पतङ्गशलभौ' इत्यमरः । [इन्धनं] दाह्यं, [न कुरुते खलु ] । किन्तु ते एव निजौद्धत्यान्निपत्य दह्यन्त इत्यर्थः ; इतः परं न क्षम्यत इति भावः । दृष्टान्तालङ्कारः ॥ ३५ ॥

नन्वसहने शार्ङ्गिणः शतापराधसहनप्रतिज्ञाभङ्गः स्यादित्यलाऽऽह, यदिति ।—[ पुरा ] पूर्वं, [ महीपतिः ] चैद्यः, [ मुखेन ] स्ववाचा, [यत्,

अथ सम्प्रति पर्य्यपूपुरत्
तदसौ दूतमुखेन शार्ङ्गिणः ॥ ३६ ॥
यदनर्गलगोपुराऽऽनन-
स्त्वमितो वक्ष्यसि किञ्चिदप्रियम्।
विवरिष्यति तच्चिरस्य नः
समयोद्वीक्षणरक्षितां क्रुधम् ॥ ३७ ॥

---

आगसाम् ] अपराधानां, [ शतम् ]। 'आगोऽपराधो मन्तुश्च' इत्यमरः। [ शार्ङ्गिणः ] कृष्णस्य, [ स्वयं, नापूरि ] नापूरयदित्यर्थः। पूरयतेः कर्त्तरि लुङ्, "दीपजन—" ( ३।१।६१ पा०) इत्यादिना विकल्पात् चिण्प्रत्यये "चिणो लुक्" (६।४।१०४ पा०) इति तनो लुक्। [ अथ ] स्वप्रलापानन्तरं, [ सम्प्रति ] इदानीम्, [ असौ ] चैद्यः, [ दूतमुखेन ] दूतवाचा, [ तत् ] आगसां शतं, [ पर्य्यपूपुरत् ] परिपूरयामास। दूतमुखत्वात् राज्ञां, तेन कृष्णक्रोधावसरदानेन महदुपकृतमायुष्मतेति भावः। पूरयतेर्लुङि "णौ चङ्युपधाया ह्रस्वः" ( ७।४।१ पा० ) इति ह्रस्वः, "दीर्घो लघोः" (७।४।९४ पा०) इति अभ्यासदीर्घः ॥ ३६ ॥

निगमयन् फलितमाह, यदिति।—[ अनर्गलगोपुराऽऽननः ] अनर्गलम् अविष्कम्भं, विवृतमिति यावत्। 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः। यद्गोपुरं पुरद्वारं, तदिवाननं यस्य सः, वाच्यावाच्यविवेकशून्य इत्यर्थः; [ त्वम्, इतः ] इतः परं, [ यत्किञ्चिदप्रियं वक्ष्यसि, तत् ] अप्रियं, [ चिरस्य ] चिरात्प्रभृति। 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यव्ययेष्वमरः। [समयोद्वीक्षणरक्षितां] समयोद्वीक्षणेन संवित्प्रतीक्षणेन, रक्षितां रुद्धामित्यर्थः। 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः। [ नः, क्रुधं ] क्रोधं, [ विवरिष्यति ]। "वॄतो वा" ( ७।२।३८ पा० ) इति दीर्घविकल्पः। इतः परं त्वमपि दण्ड्य एवेति भावः ॥ ३७ ॥

निशमय्य तदूर्जितं शिने-
र्वचनं नप्तुरनाप्तुरेनसाम् ।
पुनरुज्झितसाध्वसं द्विषा-
मभिधत्ते स्म वचो वचोहरः ॥ ३८ ॥

विविनक्ति न बुद्धिदुर्विधः
स्वयमेव स्वहितं पृथग्जनः ।
यदुदीरितमप्यदः परै-
र्न विजानाति तदद्भुतं महत् !! ॥ ३९ ॥

विदुरेष्यदपायमात्मना
परतः श्रद्दधतेऽथवा बुधाः ।

---

निशमय्येति ।—[ एनसाम्, अनाप्तुः ] असंस्प्रष्टुः ; सत्यवादिन इति भावः । आप्नोतेस्तृच् । [ शिनेः ] तन्नाम्नः कस्यचिद्यादवस्य, [ नप्तुः ] पौत्रस्य ; सात्यकेरिति भावः । [तत्, ऊर्जितम्] अर्थयुक्तं, [वचनं, निशमय्य ] श्रुत्वा । "ल्यपि लघुपूर्वात्" ( ६।४।५६ पा० ) इति णेरयादेशः । [ पुनः ] भूयोऽपि, [ उज्झितसाध्वसं ] त्यक्तभयं यथा तथा, [द्विषाम्] । वचो हरतीति [ वचोहरः ] दूतः । "हरतेरनुद्यमनेऽच्" (३।२।९ पा०) इति अच् । [ वचः, अभिधत्ते स्म ] अभिहितवान् ॥ ३८ ॥

विविनक्तीति ।—[ बुद्धिदुर्विधः ] बुद्ध्या दुर्विधो दरिद्रः, बुद्धिशून्य इत्यर्थः । 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः । [ पृथग्जनः ] पामरजनः, [ स्वयमेव ] परोपदेशं विनैव, [ स्वहितम् ] आत्महितं, [ न विविनक्ति ] ; तद्युक्तमेवेति भावः । किन्तु [ परैः, उदीरितम् ] उपदिष्टम्, [ अपि, अदः ] हितं, [ न विजानाति ] इति [यत् तन्महदद्भुतम् !!] ; यतः सूक्तं न गृह्णातीति भावः ॥ ३९ ॥

न परोपहितं न च स्वतः
प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥ ४० ॥
कुशलं खलु तुभ्यमेव तद्
वचनं कृष्ण ! यदभ्यधामहम् ।
उपदेशपराः परेष्वपि
स्वविनाशाभिमुखेषु साधवः ॥ ४१ ॥

---

अथ किमद्भुतं मूर्खेष्वित्याशयेनाऽऽह, विदुरिति।—[ बुधाः ] बुद्धिमन्तः, [ एष्यदपायम् ] एष्यन्तम् आगामिनम्, अपायम् अनर्थम्, [आत्मना] स्वयमेव। "प्रकृत्यादिभ्य उपसङ्ख्यानम्" (वा०) इति तृतीया। [ विदुः ] विदन्ति। "विदो लटो वा" ( ३।४।८३ पा० ) इति विकल्पाज्झेर्जुसादेशः। [ अथवा, परतः ] अन्यस्मादाप्तात्, [ श्रद्दधते ] विश्वसन्ति, आप्तोक्तं गृह्णन्तीत्यर्थः। "श्रदन्तरोरुपसर्गवद्वृत्तिः" (वा०) इति उपसर्गसंज्ञोपसङ्ख्यानाद्धातोः प्राक्प्रयोगः। [ अल्पधीः ] मूढ़स्तु, [ अनुभवादृते] स्वानुभवं विना। "अन्यारादितरर्त्ते—" (२।३।२९ पा०) इति पञ्चमी। [ स्वतः न परोपहितं च, न प्रमिमीते ] न जानाति; अधमस्तु स्वानुभवैकप्रमाण इत्यर्थः; अधमस्त्वमिति भावः। अत एवाप्रस्तुतसामान्यात् प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ ४० ॥

अतः प्रस्तुते किमायातम्? तत्राऽऽह, कुशलमिति।—हे [कृष्ण ! अहं यत् वचनम्, अभ्यधाम् ] अभिधाय इत्यादिना राज्ञां सन्धिर्गुणाय, विग्रहस्त्वनर्थायेत्येवमवोचमित्यर्थः; [ तत् ] वचनं, [ तुभ्यमेव, कुशलं ] हितम्। "चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः" (२।३।७३ पा०) इति चतुर्थी। नन्वहितेषु हितोपदेशात् प्रत्ययः कथम्? इत्याशङ्कामर्थान्तरन्यासेन परिहरति।—[ साधवः ] सुजनाः, [ स्वविनाशाभिमुखेषु ] प्रबलविरोधादात्मविनाशहेतुभूतकर्मप्रवृत्तेष्वित्यर्थः, [ परेषु ] शत्रुषु, [ अपि, उपदेशपराः खलु ] उपदिशन्त्येव; कृपालुतयेति भावः ॥ ४१ ॥

उभयं युगपन्मयोदितं
त्वरया सान्त्वमथेतरच्च ते ।
प्रविभज्य पृथङ्मनीषया
स्वगुणं यत् किल तत् करिष्यसि ॥ ४२ ॥

अथवाऽभिनिविष्टबुद्धिषु
व्रजति व्यर्थकतां सुभाषितम् ।
रविरागिषु शीतरोचिषः
करजालं कमलाऽऽकरेष्विव ॥ ४३ ॥

अनपेक्ष्य गुणागुणौ जनः
स्वरुचिं निश्चयतोऽनुधावति ।

---

तथाऽपि अर्थद्वये त्वद्वाक्ये किं ग्राह्यम् ? तत्राऽऽह, उभयमिति ।—[मया, सान्त्वं] सामादि, [अथ] इति पक्षान्तरे, [इतरत्] असान्त्वं, विग्रहः इत्यर्थः, [च युगपदुभयं ते उदितं]; त्वं तु [मनीषया] बुद्ध्या, [पृथक्] भेदेन, [प्रविभज्य] विविच्य, [यत् स्वगुणं] तत्र द्वयेऽपि यच्छुभोदर्कं, [त्वरया तत् करिष्यसि, किल] खलु ; 'हंसः क्षीरमिवाम्भसि' इति भावः ॥ ४२ ॥

अथवा सुजनस्वभावात् कृतोऽपि हितोपदेशो मूर्खेषु निष्फल इत्याह, अथवेति ।—[अथवा, अभिनिविष्टबुद्धिषु] दुराग्रहग्रस्तचित्तेषु विषये, [सुभाषितं] हितोपदेशवचनं, [रविरागिषु कमलाऽऽकरेषु, शीतरोचिषः] शीतभानोः, [करजालमिव, व्यर्थकतां] निरर्थकतां, [व्रजति] । तस्मादलमेव त्वयि हितोपदेशचिन्तयेति भावः ॥ ४३ ॥

नन्वभिनिविष्टोऽपि सुजनैर्बलादपि हिते प्रवर्त्तयितव्य इत्याशङ्क्य न शक्यत इत्याह, अनपेक्ष्येति ।—[जनः] त्वादृशः पृथग्जनः,

अपहाय महीशमार्चिचत्
सदसि त्वां ननु भीमपूर्वजः ॥ ४४ ॥
त्वयि भक्तिमता न सत्कृतः
कुरुराजा गुरुरेव चेदिपः ।
प्रियमांसमृगाधिपोज्झितः
किमवद्यः करिकुम्भजो मणिः ? ॥ ४५ ॥

---

[ गुणागुणौ ] गुणदोषौ । "विप्रतिषिद्धञ्चानधिकरणवाचि" ( २।४।१३ पा० ) इति विभाषया न द्वन्द्वैकवद्भावः । [ अनपेक्ष्य ] अविमृष्य, [ निश्चयतः ] स्वनिश्चयादेव, [ स्वरुचिं ] स्वेच्छाम्, [ अनुधावति ], न तु स्वहितमनुसरतीत्यर्थः । तत्र पार्थ एव प्रमाणमित्याह ।—[ भीमपूर्वजः ] भीमाग्रजो युधिष्ठिरः, मूर्खाग्रणीरिति भावः । [ महीशं ] चेदिपम्, [ अपहाय सदसि त्वाम्, आर्चिचत् ननु ], अर्चितवान् खलु । अर्चयतेर्णौ चङि "अजादेर्द्वितीयस्य" ( ६।१।२ पा० ) "नन्द्राः संयोगादयः" ( ६।१।३ पा० ) इति रेफवर्जितस्यैकाचो द्विर्भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४४ ॥

पार्थानादरादेव राज्ञो लाघवं ज्ञेयमित्याशङ्का परिहरति, त्वयीति ।—हे कृष्ण ! [ त्वयि, भक्तिमता ] प्रेमवता । कुरूणां राट्, "सत्सूद्विष—" (३।१।६१ पा०) इत्यादिना क्विप् । तेन [ कुरुराजा ] कुरुराजेन पार्थेन, [न सत्कृतः] नार्चितः, [चेदिपः, गुरुरेव] पूज्य एव । तथा हि,—[ प्रियमांसमृगाधिपोज्झितः ] प्रियं मांसं यस्य तेन, मांसगृध्नुना, मृगाधिपेन सिंहेन, उज्झितस्त्यक्तः । [ करिकुम्भजो मणिः ] मुक्तामणिः, [ अवद्यः ] गर्ह्यः, [ किम् ? ] अनवद्य एवेत्यर्थः । मूर्खानादरान्न महतां किञ्चिल्लाघवमित्यर्थः । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः

क्रियते धवलः खलूच्चकै-
र्धवलैरेव सितेतरैरधः ।
शिरसौघमधत्त शङ्करः
सुरसिन्धोर्मधुजित् तमङ्घ्रिणा ॥ ४६ ॥

अबुधैः कृतमानसंविद-
स्तव पार्थैः कुत एव योग्यता ? ।
सहसि प्लवगैरुपासितं
न हि गुञ्जाफलमेति सोष्मताम् ॥ ४७ ॥

---

समाः' इत्यमरः। "अवद्यपण्य—" ( ३।१।१०१ पा० ) इत्यादिना निपातः। दृष्टान्तालङ्कारः ॥ ४५ ॥

विदुषान्तु पूज्य एव चैद्य इत्याशयेनाऽऽह, क्रियत इति।—[धवलः] निर्मलः, [ धवलैरेव ] निर्मलैरेव, [ उच्चकैः ] उन्नतः, [ क्रियते खलु। सितेतरैः ] मलिनैः, [ अधः ] क्रियते। तथा हि,—[ शङ्करः ] शिवः, [ सुरसिन्धोरोघं ] मन्दाकिनीपूरं, [ शिरसा अधत्त ]; उभयोर्नैर्मल्या-दिति भावः। [ मधुजित् ] मधुशत्रुर्विष्णुस्तु, [ तम् ] ओघम्, [अङ्घ्रिणा] अधत्त, स्वयं मलिनत्वादिति भावः। अतो विशेषविदुषां राजा पूज्य एवेति भावः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः* ॥ ४६ ॥

किञ्च यथा पार्थानादराद्राज्ञो न किञ्चिल्लाघवं, तथा तदादराच्च न ते किञ्चिद्गौरवमित्याह, अबुधैरिति।—[अबुधैः] अज्ञैः, [ पार्थैः, कृत-मानसंविदः ] कृते मानसंविदौ पूजातोषणे यस्य तस्य। 'संवित् स्त्रियां

---

* अत्राप्रस्तुतेन धवलेन प्रस्तुतस्य चैद्यस्य तथा अप्रस्तुतैः सितेतरैः प्रस्तुतस्य युधिष्ठिरस्य च प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारश्चैतयोः परस्परसापेक्षतया सङ्करः।

अपराधशतक्षमं नृपः
क्षमयाऽत्येति भवन्तमेकया ।
हृतवत्यपि भीष्मकात्मजां
त्वयि चक्षाम समर्थ एव यत् ॥ ४८ ॥
गुरुभिः प्रतिपादितां वधू-
मपहृत्य स्वजनस्य भूपतेः ।

---

प्रतिज्ञायां सङ्केताचारनामसु । सम्भाषणे तोषणे च' इति विश्वः । [ तव योग्यता, कुत एव ? ]न कुतोऽपीत्यर्थः । तथा हि, [सहसि] मार्गशीर्षे । 'मार्गशीर्षे सहा मार्गः' इत्यमरः । [ प्लवगैः, उपासितं ] सेवितं, [ गुञ्जाफलं ] काकफलानि । जातावेकवचनम् । 'काकचिञ्चीगुञ्जे तु कृष्णला' इत्यमरः । [ सोष्मताम् ] उष्मतां, [ नैति हि ] ; न हि पुंसां मूढपरिग्रहापरिग्रहौ गौरवागौरवयोः प्रयोजकावित्यर्थः । अत्र कृष्णगुञ्जाफलयोविशेषयोरेव वाक्यभेदेन प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः ॥ ४७ ॥

यदपूरीत्यादिना यत् सात्यकिना शतापराधक्षमत्वमुक्तं, तत्रोत्तरमाह, अपराधेति ।—[ नृपः ] चैद्यः, [ अपराधशतक्षमम् ] अपराधस्य शतक्षमं, राज्ञः शतापराधसहिष्णुं, [ भवन्तम्, एकया क्षमया ] एकापराधसहनेनेत्यर्थः ; [ अत्येति ] अतिक्रामति ; अपराधकोटीनामपि तदंशेनापि साम्यासम्भवादिति भावः । तामेव क्षमां दर्शयति ।— [ त्वयि, भीष्मकात्मजां ] रुक्मिणीं, [हृतवत्यपि, समर्थः] प्रतीकारक्षमः, [एव] सन्नपि, [चक्षाम] क्षाम्यति स्मेति [यत्] तया क्षमयेत्यर्थः * ॥४८॥

'राक्षसः क्षत्रियस्यैवम्' इति स्मरणात् राक्षसोद्वाहस्य क्षात्रधर्मत्वात्

---

* अत्र पूर्वार्द्धगतवाक्यार्थं प्रति परार्द्धगतवाक्यार्थस्य हेतुतया उपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

जनकोऽसि जनार्दन ! स्फुटं
हतधर्म्मार्थतया मनोभुवः ॥ ४९ ॥
अनिरूपितरूपसम्पद-
स्तमसो वाऽन्यभृतच्छदच्छवेः ।
तव सर्वगतस्य सम्प्रति
क्षितिपः क्षिप्नुरभीशुमानिव ॥ ५० ॥

---

रुक्मिणीहरणे कोऽस्माकमपराधः ? राज्ञो वा काऽत्र क्षमा ? इत्याकाङ्क्षायामाह, गुरुभिरिति ।—हे [ जनार्दन !, गुरुभिः ] पित्रादिभिः, [ प्रतिपादितां ] राज्ञे दत्ताम्, अत एव [ स्वजनस्य ] बन्धोः, [ भूपतेः] महाराजस्य, [ बधूं ] जायाम्, [ अपहृत्य ] ; हतौ धर्मार्थौ येन तत्तया हेतुना [ हतधर्मार्थतया स्फुटं, मनोभुवः ] कामस्य, [ जनकोऽसि ], धर्मार्थबाधेन काममात्रनिष्ठोऽसीत्यर्थः । नायं राक्षसो विवाहः,—'हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं तथा । प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥' इति कन्याहरणस्य राक्षसत्वलक्षणात् । अयन्तु परदारापहरणे बन्धुद्रोहो राजद्रोहश्चेत्यहो ! पापिष्ठस्य कामान्धस्य ते परमसाहसिकत्वमिति भावः ॥ ४९ ॥

सत्यमीदृगेवाहं, ततः किम् ? इत्याशङ्क्य किमन्यद्दधात् ? इत्याह, अनिरूपितेति ।—[अनिरूपितरूपसम्पदः] शैलूषवद् बहुरूपधारित्वादज्ञातरूपविशेषस्य, अवाङ्मनसगोचररूपवैभवस्येति च गम्यते ; अन्यत्र,—आरोपितकृष्णरूपं तमः, तेजोविशेषाभावस्तम इति च मतद्वयेऽपि प्रमाणानवधृतरूपसम्पद इत्यर्थः । [ अन्यभृतच्छदच्छवेः ] कोकिलपक्षकान्तेः, [तव, तमसो वा] तिमिरस्येव । 'वा स्यात् विकल्पोपमयोः' इति विश्वः । [ सर्वगतस्य, क्षितिपः] चेदिपः, [ अभीशुमान् ] अंशुमान् [ इव, सम्प्रति ] इदानीमेव, [ क्षिप्नुः ] क्षेप्ता, आहन्तेत्यर्थः, शास्ताऽसौ दुरात्मनामिति भावः । "त्रसिगृधिधृषिक्षिपेः क्नुः" ( ३।२।१४० पा० )

क्षुभितस्य महीभृतस्त्वयि
प्रशमोपन्यसनं वृथा मम ।
प्रलयोल्लसितस्य वारिधेः
परिवाहो जगतः करोति किम् ? ॥ ५१ ॥

प्रहितः प्रधनाय माधवा-
नहमाकारयितुं महीभृता ।
न परेषु महौजसश्छला-
दपकुर्वन्ति मलिम्लुचा इव ॥ ५२ ॥

---

इति क्तप्रत्ययः । "न लोका—" ( २।३।६९ पा० ) इत्यादिना क्तद्योगे षष्ठ्या निषेधे तवेति शेषे षष्ठी, पर्य्यवसानात् तु कर्मत्वलाभः । 'अभीषुः प्रग्रहे रश्मौ' इत्यमरः । विश्वप्रकाशादयः सर्वेऽप्याभिधानिका मूर्द्धन्यान्तेषु पेठुः, लोकवेदयोस्तालव्यान्तो दृश्यते,—"अभीशूनां महिमानम्" इत्यादि ॥ ५० ॥

तर्हि अस्मदर्थं त्वया राजा सान्त्वयितव्यः, इत्याशङ्क्य नेत्याह, क्षुभितस्येति ।—[त्वयि] विषये, [ क्षुभितस्य ] अतिक्रुद्धस्य, [ महीभृतः ] राज्ञः, [मम, प्रशमोपन्यसनं] शान्तोपदेशः, [वृथा] निष्फलः । तथा हि,—[प्रलयोल्लसितस्य ] कल्पान्तक्षुभितस्य, [वारिधेः, जगतः परिवाहः ] जगत्कृतो जलनिर्गममार्गः, [ किं करोति ? ] न किञ्चित् इत्यर्थः । दृष्टान्तालङ्कारः ॥ ५१ ॥

तर्हि असन्धित्सुना राज्ञा किमर्थं भवानिह प्रहितः ? तत्राऽऽह, प्रहित इति ।—[ प्रधनाय ] युद्धाय, [ माधवान् ] यादवान्, [आकारयितुम् ] आह्वातुम् । 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्' 'हूतिराकारणाह्वानम्' इति चामरः । [ महीभृता ] राज्ञा, [ अहं, प्रहितः ]

तदयं समुपैति भूपतिः
पयसां पूर इवानिवारितः ।
अविलम्बितमेधि वेतस-
स्तरुवन्माधव ! मा स्म भज्यथाः ॥ ५३ ॥

---

प्रेरितः । ननु रन्ध्रे हन्तव्याः शत्रवो नाह्वातव्या इत्यत आह, नेति ।—[ महौजसः ] महावीराः, [ परेषु ] अरिषु, [ मलिम्लुचाः ] पाटच्चराः, [ इव ] । 'पाटच्चरमलिम्लुचाः' इत्यमरः । [ छलात् ] कपटात्, [ नापकुर्व्वन्ति ] । तस्मादाह्वानं कर्त्तव्यमिति वाक्यार्थहेतुकं काव्यलिङ्गमुपमाऽलङ्कारसङ्कीर्णम् ॥ ५२ ॥

तदेवागमनप्रयोजनमुक्त्वा हितमुपदिशति, तदयमिति ।—[ तत् ] तस्मात्, युद्धार्थत्वादित्यर्थः, [अयं, भूपतिः] चैद्यः, [ पयसां, पूरः ] प्रवाहः, [इवानिवारितः समुपैति] । हे [माधव !, अविलम्बितं] शीघ्रं, [वेतसः, एधि ] भव, तद्वत् नम्रम् आत्मानं रचेत्यर्थः । अस्तेर्लोट् सिपि हेर्धिः, "घ्वसोरेद्धावभ्यासलोपश्च" ( ६।४।११९ पा० ) इति एत्वं, "धि च" (८।२।२५ पा० ) इति सकारलोपः । * माधव, त्वं [ तरुवत् ] महावृक्षवत्, [ मा स्म भज्यथाः ] मा भज्यस्व ; अतः आत्मानं न विनाशयेत्यर्थः । भजेः कर्मण्याशिषि लिङर्थे "स्मोत्तरे लङ् च" ( ३।३।१७६ पा० ) इति लङ्, "न माङ्योगे" ( ६।४।७४ पा० ) इत्यडभावः । उपमाऽलङ्कारः † ॥ ५३ ॥

---

* "घ्वसोरे—" ( ६।४।११९ पा० ) इति सूत्रेण अस्तेः सकारस्यैव एत्वे च, "श्नसो—" ( ६।४।१११ पा० ) इति सूत्रेण अस्तेरकारलोपे, "एधि" इति पदसिद्धौ सत्यां, "धि च" ( ८।२।२५ पा० ) इति सूत्रं सकारलोपार्थं कैश्चित् प्रमादादेव सन्निवेशितमिति मन्यामहे ।

† अत्र परार्द्धं प्रति पूर्वार्द्धस्य हेतुतयोपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, पयःपूरेणोपमानेन भूपतेरुपमेयस्य अनिवारितत्वरूपावैधर्म्यसाम्यप्रतिपादनाज्जायमानेनोपमाऽलङ्कारेणासौ सङ्कीर्य्यते ।

परिपाति स केवलं शिशू-
निति तन्नामनि मा स्म विश्वसीः ।
तरुणानपि रक्षति क्षमी
स शरण्यः शरणाऽऽगतान् द्विषः ॥ ५४ ॥
न विदध्युरशङ्कमप्रियं
महतः स्वार्थपराः परे कथम् ? ।

---

ननु राज्ञि शिशुपाले यथानामफलमित्याशङ्क्याऽऽह, परिपातीति ।—[ सः ] शिशुपालः, [ केवलम् ] इत्यवधारणे क्रियाविशेषणम् । [ शिशून् परिपातीति ] शिशूनेव पालयतीति, [ तन्नामनि ] तस्य शिशुपालसंज्ञायां, [ मा स्म विश्वसीः ] मा विश्वासं कुर्वित्यर्थः । श्वसेः "स्मोत्तरे लङ् च" ( ३।३।१७६ पा० ) इति लङि "रुदश्च पञ्चभ्यः" ( ७।३।९८ पा० ) इति ईडागमः, चकाराल्लुङि वा तत्र "अस्तिसिचोऽपृक्ते" ( ७।३।९६ पा० ) इति ईडागमः, "ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्" ( ७।२।५ पा० ) इति वृद्धिप्रतिषेधः, "न माङ्योगे" ( ६।४।७४ पा० ) इत्यडभावस्तूभयत्र । किन्तु [ क्षमी ] क्षमावान् । व्रीह्यादित्वादिनिः । शरणे रक्षणे साधुः [ शरण्यः ] रक्षणक्षमः । "तत्र साधुः" ( ४।४।९८ पा० ) इति यत्प्रत्ययः । [ सः ] शिशुपालः, [शरणाऽऽगतान्] शरणं रक्षितारम्, आगतान् प्राप्तान् । 'शरणं गृहरक्षित्रोः' 'शरणं रक्षणे गृहे' इत्युभयत्रापि विश्वः । [ द्विषः ] शत्रून्, [ तरुणान् ] यूनः, [ अपि रक्षति ], अतो निःशङ्कं शरणमागच्छेत्यर्थः ॥ ५४ ॥

ननु वयं द्रोग्धारः, सोऽप्यतिक्षुभितः किल, कथं नः पालयेत् ? इत्याशङ्क्याऽऽह, नेति ।—[स्वार्थपराः] स्वार्थनिष्ठाः, [परे] शत्रवः, [ महतः ]

भजते कुपितोऽप्युदारधी-
रनुनीतिं नतिमात्रकेण सः ॥ ५५ ॥
हितमप्रियमिच्छसि श्रुतं
यदि सन्धत्स्व पुरा न नश्यसि ।
अनृतैरथ तुष्यसि प्रियै-
र्जयताज्जीव भवावनीश्वरः ॥ ५६ ॥

---

अधिकस्य, [ कथम्, अप्रियम् ] अपकारम्, [ अशङ्कं ] यथा तथा, [ न विदध्युः ?] कुर्य्युरेव, कार्य्यवशादित्यर्थः । किन्तु [ उदारधीः ] महामतिः । 'उदारो दातृमहतोः' इत्यमरः । [ सः ] राजा, [ कुपितोऽपि, नतिमात्रकेण ] प्रणतिमात्रकेण, [ अनुनीतिम् ] अनुनयं, [भजते] अनुग्रहीष्यतीत्यर्थः । 'प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम्' इति भावः * ॥ ५५ ॥

किं बहुना, तवायं हितोपदेशसङ्ग्रह इत्याशङ्क्याऽऽह, हितमिति ।— [ श्रुतम् अप्रियं हितमिच्छसि यदि ] अप्रियं हितं श्रुतमाशादाकर्णितं ग्रहीतुमिच्छसि चेदित्यर्थः । [ सन्धत्स्व ] राज्ञा सन्धेहि, [ पुरा न नश्यसि ] अन्यथा विनङ्क्ष्यसीत्यर्थः । "यावत् पुरानिपातयोर्लट्" ( ३।३।४ पा० ) इति भविष्यदर्थे लट् । [ अथ ] इति पक्षान्तरे । [ अनृतैः ] असत्यैः, [ प्रियैस्तुष्यसि ] यदि [ जयतात् ] जयतु । "तुह्योस्तातङाशिष्यन्यतरस्याम्" ( ७।१।३५ पा० ) इति तोस्तातङादेशः । [जीव, अवनीश्वरः ] सार्वभौमः, [भव] । ततः किमेभिः प्रियालापैः, अप्रियमपि हितमेव गृहाणेति भावः ॥ ५६ ॥

---

* अत्र स्वार्थपरेभ्यः परेभ्यः अपकारपरायणेभ्यः नतिमात्रत एव कुपितस्यापि अनुनीतिभाजः राज्ञः आधिक्यप्रतीतेः व्यतिरेकालङ्कारः, स चाप्रस्तुतात् सामान्यात् प्रस्तुतस्य विशेषस्य चैद्यस्य प्रतीतेः जायमानया अप्रस्तुतप्रशंसया सङ्कीर्य्यते ।

प्रतिपक्षजिदप्यसंशयं
युधि चैद्येन विजेष्यते भवान्।
ग्रसते हि तमोऽपहं मुहु-
र्ननु राह्वाह्वमहर्पतिं तमः॥ ५७॥

अचिराज्जितमीनकेतनो
विलसन् वृष्णिगणैर्नमस्कृतः।
क्षितिपः क्षयितोद्धतान्धको
हरलीलां स विडम्बयिष्यति॥ ५८॥

---

ननु कंसाद्यनेकविजयी कृष्णः कथं विजेष्यते राज्ञा? इत्याशङ्क्याऽऽह, प्रतिपक्षेति।—[प्रतिपक्षजित्] अनेकारिहन्ता, [अपि भवान्, असंशयं] संशयो नास्ति। अर्थाभावेऽव्ययीभावः। [युधि] सङ्ग्रामे, [चैद्येन] शिशुपालेन, [विजेष्यते]। जयतेः कर्मणि लृट्, शेषे प्रथमः। तमांस्यप हन्तीति [तमोऽपहं] सर्वतमोऽपहारिणम्। "अपे क्लेशतमसोः" (३।२।५० पा०) इति हन्तेर्डप्रत्ययः। अह्नां पतिम् [अहर्पतिं] सूर्य्यम्। "अहरादीनां पत्यादिषूपसङ्ख्यानं कर्त्तव्यम्" (वा०) इति वैकल्पिको रेफादेशः। [राह्वाह्वं] राह्वाख्यं, [तमः]। 'आख्याह्वे अभिधानञ्च' इत्यमरः [मुहुः, ग्रसते ननु] गिलति, [हि]। अत्र हरि-सूर्य्ययोः राहुचैद्ययोश्च वाक्यभेदेन प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः॥ ५७॥

किञ्च न भवानेक एव विजेष्यते, किन्तु सर्वैर्यादवैः सहेत्याह, अचिरादिति।—[सः, क्षितिपः] राजा। [अचिरात्] अविलम्बितमेव, [जितमीनकेतनः] जितो मीनकेतनः कार्ष्णिः प्रद्युम्नः स्मरश्च येन सः। [वृष्णिगणैः] वृष्णयो यादवभेदास्तेषां गणैरोघैः, [नमस्कृतः]

निहतोन्मददुष्टकुञ्जरा-
द्दधतो भूरि यशः क्रमार्जितम् ।
न बिभेति रणे हरेरपि
क्षितिपः का गणनाऽस्य वृष्णिषु ? ॥ ५९ ॥
न तदद्भुतमस्य यन्मुखं
युधि पश्यन्ति भिया न शत्रवः ।

---

भीत्या प्रणतः सन्, अत एव [ विलसन् ] दीप्यमानः ; अन्यत्र,—वृष्णीति पदच्छेदः । वृषि उच्चणि, विलसन् वृषारूढ इत्यर्थः, गणैः प्रमथैः, नमस्कृतः । 'गणाः प्रमथसङ्घौघाः' इति 'वृषा महेन्द्रे वृषभे' इति च वैजयन्ती । [क्षयितोद्धतान्धकः] क्षयिता नाशिता, उद्धता दृप्ता, अन्धका यादवभेदाः ; अन्यत्र,—अन्धकः असुरो येन सः ; [ हरलीलां ] शम्भुविभ्रमं, [ विडम्बयिष्यति ] अनुकरिष्यति । अत्र हरलीलामिति सादृश्याऽऽक्षेपान्निदर्शना श्लेषसङ्कीर्णा ॥ ५८ ॥

ननु देवासुरैरप्यजय्या यादवाः कथं राज्ञा जेष्यन्ते ? तत्राऽऽह, निहतेति ।—[ क्षितिपः ] चेदिपः, [निहतोन्मददुष्टकुञ्जरात् ] निहत उन्मदो दुष्टः, कुञ्जरः कुवलयापीड़ाऽऽख्यो येन तस्मात् ; अन्यत्र,—हतानेकमत्तमातङ्गात् ; अत एव [ क्रमार्जितं भूरि यशः दधतः, हरेः ] कृष्णात्, सिंहाच्चेति ध्वनिः । [ अपि रणे न बिभेति । अस्य] एतादृशश्चैद्यस्य, [ वृष्णिषु ] यादवेषु मेषेषु च । 'वृष्णिस्तु यादवे मेषे' इति विश्वः । [ का गणना ? ] । कृष्णमगणयतो यादवाः के ? इत्यर्थः । अत्र कुञ्जरघातिनः सिंहस्य का कथा मेषेषु ? इत्यर्थान्तरप्रतीतिध्वनिरेव, न श्लेषः ; हरेर्वृष्णिविशेषस्यापि श्लिष्टत्वात् प्रकृताप्रकृतश्लेषे तदनङ्गीकारादित्युक्तं प्राक् ॥ ५९ ॥

हरेरपि न बिभेति इत्युक्तं, तदेव सम्भावयितुं तस्य पराक्रमाना-

द्रवतां ननु पृष्ठमीक्षते
वदनं सोऽपि न जातु विद्विषाम् ॥ ६० ॥
प्रतनूल्लसिताचिरद्युतः
शरदं प्राप्य विखण्डिताऽऽयुधाः।
दधतेऽरिभिरस्य तुल्यतां
यदि नाऽऽसारभृतः पयोभृतः ॥ ६१ ॥

---

सर्गसमाप्तेर्वर्णयति, नेति।—[ युधि शत्रवो भियाऽस्य मुखं न पश्यन्ति ] इति [यत्तन्नाद्भुतम्]। कुतः? [सोऽपि न ईक्षते, ननु] खलु, [द्रवतां] भयात् पलायमानानां, [विद्विषां, पृष्ठं] कायपार्श्वाङ्गम्, ईक्षते। [जातु] कदाचित्, [वदनं] न ईक्षते ननु, खलु। द्वयोरन्यतरमुखेष्वन्योऽन्यस्य मुखविलोकनासम्भवात् स्वयं विमुखानां विद्विषाम् अभिमुखस्याप्यस्य मुखादर्शनादद्भुतमित्यर्थः। अत एव वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ६० ॥

प्रतन्विति।—[ शरदम् ] ऋतुं, [प्राप्य विखण्डिताऽऽयुधाः ] खण्डितेन्द्रचापाः; अन्यत्र,—शरान् ददातीति शरदस्तं शरदं शरवर्षिणं, प्राप्य विखण्डिताऽऽयुधाः खण्डितशस्त्राः, [ प्रतनूल्लसिताचिरद्युतः ] अल्पस्फुरितविद्युतः; अन्यत्र,—प्रतनूल्लसिताः स्वल्पोल्लसितास्ता एव अचिरद्युतः अस्थिरद्युतः। [ पयोभृतः ] मेघाः, [ आसारभृतः ] वृष्टिमन्तः, [ न यदि], शरदि वृष्टिशून्यत्वादिति भावः; अन्यत्र,—सुहृद्बलशून्या इत्यर्थः। 'आसारः स्यात् प्रसरणे वेगवृष्टौ सुहृद्बले' इति वैजयन्ती। [ अस्यारिभिस्तुल्यतां दधते ]। अत्र पयोभृतामुपमानानामुपमेयभावोक्तेः प्रतीपालङ्कारः, तेषामासारसम्बन्धेऽपि सम्भावनया तदसम्बन्धोक्तेः अतिशयोक्तिभेदश्चेति सङ्करः ॥ ६१ ॥

मलिनं रणरेणुभिर्मुहु-
र्द्विषतां क्षालितमङ्गनाऽश्रुभिः ।
नृपमौलिमरीचिवर्णकैः
खलु यस्याङ्घ्रियुगं विलिप्यते ॥ ६२ ॥
समराय निकामकर्कशं
क्षणमाकृष्टमुपैति यस्य च ।
धनुषा सममाशु विद्विषां
कुलमाशङ्कितभङ्गमानतिम् ॥ ६३ ॥

---

मलिनमित्यादि ।—[ मुहुः ] असकृत्, [ रणरेणुभिर्मलिनम् ], अत एव [ द्विषतामङ्गनाऽश्रुभिः क्षालितम् ]; नाहत्वाऽरीन् रणान्निवर्त्तिन इति भावः । [ यस्य, अङ्घ्रियुगं ] चरणयुगलम् । अथ [ नृपमौलिमरीचिवर्णकैः ] रेणुक्षालितानां नृपाणां प्रणतानां राज्ञां, मौलिमरीचयो मुकुटमणिरश्मयस्तैरेव वर्णकैर्विलेपनैः, चन्दनैरित्यर्थः । 'चन्दने चापि वर्णकम्' इति विश्वः । [ विलिप्यते ] विशिष्यते, [खलु] । अत्राङ्घ्रियुगस्य विशेषणमहिम्ना स्नातानुलिप्तपुरुषसाम्यप्रतीतेः समासोक्तिः * ॥ ६२ ॥

समरायेति ।—[च] किञ्चेति चार्थः । [निकामकर्कशम्] अतिकठिनं, दुर्द्धर्षमित्यर्थः । [ समराय ] सम्प्रहाराय, [ आकृष्टम् ] आहतमावर्ज्जितञ्च, [क्षणम्, आशङ्कितभङ्गं] मनसोत्प्रेक्षितस्वपराजयम्; अन्यत्र,—अतिकर्षणात् सम्भावितदलनं, [ यस्य विद्विषां कुलम् आशु धनुषा

---

* अत्र मौलिमरीचिषु वर्णकतादात्म्याध्यासात् निरङ्गं रूपकम्, अपि च अङ्घ्रियुगस्य वर्णकयोगासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेः असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिश्चेति सङ्करः ।

तुहिनांशुममुं सुहृज्जना:
कलयन्त्युष्णकरं विरोधिन: ।
कृतिभि: कृतदृष्टिविभ्रमा:
स्रजमेके भुजगं यथाऽपरे ॥ ६४ ॥

दधतोऽसुलभक्षयाऽऽगमा-
स्तनुमेकान्तरतामनानुषीम् ।
भुवि सम्प्रति न प्रतिष्ठिता:
सदृशा यस्य सुरैररातय: ॥ ६५ ॥

---

समम्, आनतिं ] नम्रताम्, [ उपैति ] । अत्र धनुर्नमनकार्य्यस्य द्विषन्नमनस्य तत्सहभावोक्ते: कार्य्यकारणयो: पौर्वापर्य्यविपर्य्ययनिमित्तरूपातिशयोक्तिमूला सहोक्तिरलङ्कार: ॥ ६३ ॥

तुहिनेति ।—[ अमुम् ] एवंविधं चैद्यं, [ सुहृज्जना:, तुहिनांशुं कलयन्ति ] आह्लादकत्वात् चन्द्रं मन्यन्ते । [ विरोधिन:, उष्णकरं ] तपनं, कलयन्ति । एकस्यानेकप्रतीतिमुपमिमीते, कृतिभिरिति ।—[ कृतिभि: ] कुशलैरैन्द्रजालिकादिभि:, [ कृतदृष्टिविभ्रमा: ] जनितदृष्टिविपर्य्यया:, [ एके ] नरा:, [ यथा, स्रजं ] मालां, कलयन्ति, [ अपरे ] तु [भुजगं] कलयन्ति ; एकमेव रज्ज्वादिकमिति शेष: । उपमाऽलङ्कार: । स चैकस्य निमित्तवशादग्रहीतैनैदन्ताऽदस्ताऽनेकधोल्लिखनात्मकेनोल्लेखेन सङ्कीर्य्यते ॥ ६४ ॥

दधत इति ।—[ असुलभक्षयागमा: ] दुर्लभगृहप्राप्तय: ; अन्यत्र,— अमरत्वात् दुर्लभनाशयोगा: । 'निलयापचयौ क्षयौ' इत्यमर: । [ एकान्तरतां ] भयाद्विजनस्थाने निरताम्, [ अमानुषीं ] कार्श्यमालिन्यादिना पिशाचादिवत् प्रतीयमानाम् ; अन्यत्र,— एकान्तरतां

अतिविस्मयनीयकर्मणो
नृपतेर्यस्य विरोधि किञ्च न ।
यदमुक्तनयो नयत्यसा-
वहितानां कुलमक्षयं क्षयम् ॥ ६६ ॥
चलितोर्द्ध्वकबन्धसम्पदो
मकरव्यूहनिरुद्धवर्त्मनः ।

---

नियतसुरतां, नित्यभोगामिति यावत्, अमानुषीं दिव्यां, [तनुं, दधतः] दधानाः, [ भुवि, सम्प्रति ] ; क्वचन, [ न प्रतिष्ठिताः] राज्यभ्रंशात् क्वापि स्थितिमप्राप्ताः ; अन्यत्र च— भुवं न स्पृशन्तीत्यर्थः । देवत्वात् । [ यस्य अरातयः सुरैः सदृशाः ] । अत्राप्यमुमिति पूर्वेण सम्बन्धः । श्लिष्टविशेषणेयमुपमा । श्लेष एवेत्यन्ये ॥ ६५ ॥

अतीति ।—[ अतिविस्मयनीयकर्मणः ] अत्यन्तविस्मितपौरुषस्य । स्मयतेरनीयरप्रत्ययः । [ यस्य, नृपतेः ] चैद्यस्य, [ विरोधि ] चेष्टितं द्वेषिरूपं, [ किञ्च न ] न किञ्चिदस्तीत्यर्थः । [ यत् ] यस्मात्, [ अमुक्तनयः ] अत्यक्तनीतिमार्गः, [ असौ, अक्षयम् ] अविनाशि, पूर्वं केनापि क्षयं न नीतमित्यर्थः । [ अहितानां कुलं ] शत्रुजातं, [ क्षयं ] नाशं, [ नयति ] ; नीतिपौरुषाभ्यां द्विषन्निर्मूलयितुरस्य का विरोधिवार्त्ता ? इति भावः । अक्षयमपि क्षयं नयतीति विरोधस्य नेतृभेदेन परिहाराद्विरोधाऽऽभासोऽलङ्कारः * ॥ ६६ ॥

चलितेति ।—[ असौ ] चैद्यः, [ चलितोर्द्ध्वकबन्धसम्पदः ] चलिताः प्रवृत्ता, ऊर्द्ध्वा उत्थिताः, कबन्धसम्पदः शिरोहीनकलेवरसम्पद एव

---

* पूर्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुतयोपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारस्येति सङ्करः ।

अतरत् स्वभुजौजसा मुहु-
र्महतः सङ्गरसागरानसौ ॥ ६७ ॥
न चिकीर्षति यः स्मयोद्धतो
नृपतिस्तच्चरणोपगं शिरः।
चरणं कुरुते गतस्मयः
स्वमसावेव तदीयमूर्द्धनि ॥ ६८ ॥

---

कबन्धसम्मर्द उदकसम्मर्द्दयो येषु तान्। श्लिष्टरूपकम्। 'कबन्धं सलिले प्रोक्तमपमूर्द्धकलेवरे' इति वैजयन्ती। [मकरव्यूहनिरुद्ध-वर्त्मनः] मकरव्यूहाः मकराकारसैन्यविन्यासाः, त एव मकरव्यूहा इति श्लिष्टरूपकम्। 'व्यूहौ समूहविन्यासौ' इति वैजयन्ती। तैः निरुद्धवर्त्मनो निरुद्धप्रवेशमार्गान्; अत एव [महतः] दुस्तरान्, [सङ्गरसागरान्] समरसमुद्रान्, [स्वभुजौजसा] निजभुजबलेनैव, [मुहुः] असकृत्, [अतरत्]। भुजेनाब्धितरणमदृष्टचरमत्यद्भुतमिति भावः। अत्र कबन्धा एव कबन्धाः मकरव्यूहा एव कच्छपादिव्यूहा इति श्लिष्टरूपकस्य सङ्गरेषु सागररूपणहेतुत्वात् केवलं श्लिष्टपरम्परित-रूपकम् ॥ ६७ ॥

नेति।—[स्मयोद्धतः] गर्वेण दुर्विनीतः, [नृपतिः, शिरः] निजो-त्तमाङ्गं, तस्य शिशुपालस्य चरणमुपगच्छतीति [तच्चरणोपगं] तत्पादगतं, [यः, न चिकीर्षति] कर्त्तुं नेच्छति, [तदीयमूर्द्धनि] तदीये तस्य नृपतेः सम्बन्धिनि मूर्द्धनि, [गतस्मयः] विगर्वः, [असौ] शिशुपालः, [एव स्वं चरणं, कुरुते] निधत्त इत्यर्थः। अनम्रान् सद्यो नमयति नम्रानवतीति तात्पर्य्यम् ॥ ६८ ॥

स्वभुजद्वयकेवलाऽऽयुध-
श्चतुरङ्गामपहाय वाहिनीम् ।
बहुशः सह शक्रदन्तिना
स चतुर्दन्तमगच्छदाहवम् ॥ ६९ ॥

अविचालितचारुचक्रयो-
रनुरागादुपगूढयोः श्रिया ।
युवयोरिदमेव भिद्यते
यदुपेन्द्रस्त्वमतीन्द्र एव सः ॥ ७० ॥

---

स्वेति ।—[सः] चैद्यः ; चत्वार्य्यङ्गानि हस्त्यादीनि यस्यास्तां [चतुरङ्गां, वाहिनीं] सेनाम्, [अपहाय, स्वभुजद्वयकेवलाऽऽयुधः] स्वभुजद्वयं केवलमेकमायुधं यस्य सः सन्, [शक्रदन्तिना] ऐरावतेन, [सह]; चत्वारो दन्ता यस्मिन् तं [ चतुर्दन्तम्, आहवं ] रणं, [ बहुशोऽगच्छत् ], चतुर्दन्तेन शक्रदन्तिना दोर्द्वयेन योद्धुं चैद्यं विना कोऽन्यः शक्तः ? इति भावः। दन्तिनोराहवश्चतुर्दन्त इत्युक्तं, न तु मनुष्यदन्तिनोरिति विरोधः। स च शक्रदन्तिनेति परिहृतः, तस्य चतुर्दन्तत्वादिति विरोधाऽऽभासः ॥ ६९ ॥

अविचालितेति ।—[ अविचालितचारुचक्रयोः ] अविचालितं परैरपर्य्यासितम्, अत एव चारु शोभनं, चक्रं सुदर्शनं राष्ट्रञ्च ययोस्तयोः। 'चक्रं राष्ट्ररथाङ्गयोः' इति विश्वः। [ श्रिया ] कमलया सम्पदा च, [ अनुरागात्, उपगूढयोः] आश्लिष्टयोः, [युवयोः] तव तस्य च। "त्यदादीनि सर्वैर्नित्यम्" ( १।२।७२ पा० ) इत्येकशेषः। [ इदमेव, भिद्यते ] विशेष्यते। कर्मकर्त्तरि लट्। किं तत् ? इत्यत्राऽऽह।—[यत् त्वम्] ; इन्द्रमुपगतः [ उपेन्द्रः ] इन्द्रानुजः ; तदनुचर इति यावत्। [सः] तु इन्द्रमतिक्रान्तः [अतीन्द्रः] इन्द्रविजयीति यावत्, [एव]। इदमेव भिद्यते इति

भृतभूतिरहीनभोगभाग्-
विजितानेकपुरोऽपि विद्विषाम् ।
रुचिमिन्दुदले करोत्यजः
परिपूर्णेन्दुरुचिर्महीपतिः ॥ ७१ ॥
नयति द्रुतमुद्धतिश्रितः
प्रसभं भङ्गमभङ्गुरोदयः ।

---

सम्बन्धः ; इन्द्रकिङ्करेन्द्रजयिनोः का साम्यकथा ? इति भावः । अत्रोपमानात् कृष्णादुपमेयस्य चैद्यस्याधिक्याद्भेदप्राधान्यसाधर्म्योक्तेर्व्यतिरेकालङ्कारः ॥ ७० ॥

किञ्च, त्वत्तोऽप्यधिको राजा, इत्यवाच्योऽयमर्थः, यदीश्वरादप्यधिक इत्याह, भृतेति ।—भृता भूतिर्भस्म सम्पच्च येन सः [ भृतभूतिः ]। 'भूतिर्भस्मनि सम्पदि' इत्यमरः । अहीनां भोगिनामिनोऽहीनः शेषः तस्य भोगं कायं भजतीति [ अहीनभोगभाक् ] शेषभूषण इत्यर्थः ; अन्यत्र,—अहीनमन्यूनं भोगं सुखानुभवं भजतीति अहीनभोगभाक् । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । [विद्विषां विजितानेकपुरः] विजितानेकविद्विट्पुर इत्यर्थः ; एकत्र,—त्रिपुरविजयात्, अन्यत्र,—शत्रुनगरविजयाच्चेति भावः । सापेक्षत्वेऽपि गमकत्वात् समासः । एवम्भूतः [ अपि, अजः ] हरः । 'अजा विष्णुहरच्छागाः' इत्यमरः । [इन्दुदले] चन्द्रखण्डे विषये, [रुचिम्] अभिलाषं, [करोति] ; इन्दुदले या रुचिः शोभा तां करोति दधातीति चार्थः । सामान्यशब्देन विशेषलक्षणा । [महीपतिः] तु ; परिपूर्णेन्दो रुचिरिव रुचिः शोभा यस्य सः, तस्मिन् रुचिरभिलाषो यस्येति च [ परिपूर्णेन्दुरुचिः]। 'रुचिर्मयूखे शोभायामभिषङ्गाभिलाषयोः' इति विश्वः । अत्र हरः खण्डेन्दुरुचिः, राजा पूर्णेन्दुरुचिरिति व्यतिरेकः । स च रुच्योरभेदाश्रयादिति श्लेषमूलाभेदातिशयोक्त्या सङ्कीर्णः ॥ ७१ ॥

गमयत्यवनीतलस्फुर-
द्भुजशाखं भृशमन्यमुन्नतिम् ॥ ७२ ॥
अधिगम्य च रन्ध्रमन्तरा
जनयन्मण्डलभेदमन्यतः ।
खनति क्षतसंहति क्षणा-
दपि मूलानि महान्ति कस्यचित् ॥ ७३ ॥

---

अथ कलापकमाह, नयतीति।—यः तटद्रुमैः सरितामुदकस्य पूर इव भूभृतां गणैः क्रीड़तीति चतुर्थे वक्ष्यति, तत् क्रीड़ाप्रकारं त्रिभिर्वर्णयति।—[ अभङ्गुरोदयः ] स्थिरवृद्धिः, यः [ उन्नतिश्रितः ] औद्धत्यभाजः, अनम्रानिति यावत्। श्रयतेः क्विप्। नृपान् द्रुमांश्चेत्यर्थः, [ द्रुतं ] शीघ्रं, [ प्रसभं ] प्रसह्य, [ भङ्गं नयति ; अवनीतल-स्फुरद्भुजशाखम् ] अवनीतले स्फुरन्त्यौ भुजौ शाखे इव भुजशाखे यस्य तं, भुजौ प्रसार्य्य प्रणिपतितमित्यर्थः ; [ अन्यं ] नृपं द्रुमञ्च वेतसादिकं, [ भृशमुन्नतिं गमयति ] ॥ ७२ ॥

अधिगम्येति।—[च] किञ्चेति चार्थः। [ अन्तरा] मण्डलमध्ये आल-वालमध्ये च, [ रन्ध्रम् ] अवकाशं शुषिरं च, [ अधिगम्य। अन्यतः, मण्डलभेदं ] मण्डलस्य अमात्यादिचक्रस्य, भेदम् उपजापं, [ जनयन् ] ; अन्यत्र,—मण्डलभेदं मण्डलस्य आधारदेशस्य, भेदं विदारणं, जनयन् कुर्वन्नित्यर्थः। [क्षतसंहति] क्षता संहतिरैकमत्यं, मूलानामाश्लेषश्च यस्मिन् कर्मणि तत् यथा तथा, [क्षणात्, कस्यचित्] राज्ञः द्रुमस्य च, [ महान्ति मूलानि ] मुख्यान् जनान्, [अपि खनति] तापयति ; अन्यत्र,—महान्ति मूलानि, अद्रीन्, अपि, खनति अवदारयति ॥ ७३ ॥

घनपत्त्रभृतोऽनुगामिन-
स्तरसाऽऽकृष्य करोति कांश्चन ।
दृढमप्यपरं प्रतिष्ठितं
प्रतिकूलं नितरां निरस्यति ॥ ७४ ॥

इति पूर इवोदकस्य यः
सरितां प्रावृषिजस्तटद्रुमैः ।
क्वचनापि महानखण्डित-
प्रसरः क्रीड़ति भूभृतां गणैः ॥ ७५ ॥

कलापकम् ।

---

घनेति ।—घनानि सान्द्राणि, पत्त्राणि वाहनानि पर्णानि च, बिभ्रतीति [ घनपत्त्रभृतः, कांश्चन ] नृपान् द्रुमांश्च, [ तरसा ] बलेन वेगेन च । 'तरसी बलरंहसी' इति विश्वः । [ आकृष्य, अनुगामिनः ] अनुचरान्, [ करोति ; दृढं ] यथा तथा, [ प्रतिष्ठितं ] प्रतिष्ठां गतम्, [ अपि, प्रतिकूलं ] प्रातिकूल्यभाजम्, [ अपरं ] नृपं द्रुमञ्च, [ नितरां, निरस्यति] उत्पाट्यान्यतः क्षिपति ; द्रुमपक्षे,—प्रतिकूलं कूले, निरस्यति क्षिपतीति चार्थः ॥ ७४ ॥

इतीति ।—[इति] इत्थं, [क्वचनापि अखण्डितप्रसरः] सर्वत्राखण्डित-प्रवृत्तिरित्यर्थः, [ महान्, यः ] शिशुपालः ; प्रावृषि जातः [ प्रावृषिजः ]। "सप्तम्यां जनेर्डः" ( ३।२।९७ पा० ) इति डप्रत्ययः । "प्रावृट्शरत्कालदिवां जे" ( ६।३।१५ पा० ) इत्यलुक् । "प्रावृषिकः" इति पाठे,—तत्र जातः इत्यर्थे "प्रावृषष्ठप्" ( ४।३।२६ पा० ) इति ठप् प्रत्ययः, "ठस्येकः" ( ७।३।५० पा० ) इतीकादेशः । [ सरितामुदकस्य पूरस्तटद्रुमैरिव, भूभृतां ] राज्ञां, [ गणैः ] साधनैः,

अलघूपलपङ्क्तिशालिनीः
परितो रुद्धनिरन्तराम्बराः ।
अधिरूढनितम्बभूमयो
न विमुञ्चन्ति चिराय मेखलाः ॥ ७६ ॥
कटकानि भजन्ति चारुभि-
र्नवमुक्ताफलभूषणैर्भुजैः ।

[ क्रीडति ]। 'महतः कुकुरा—' इत्यागामिश्लोके स 'महीपतिः' इत्यनेनास्य सम्बन्धः * ॥ ७५ ॥

अथ विशेषकमाह, अलघ्वित्यादि।—यस्यारिस्त्रियः सम्पद्यनुभूतमापद्यप्यनुभवन्तीति वक्ष्यति, तत्प्रकारमेवाऽऽह ।—[ अधिरूढनितम्बभूमयः ] उन्नतश्रोणिभागाः, [ अलघूपलपङ्क्तिशालिनीः ] अलघुभिः उपलानां मणीनां पाषाणानाञ्च, पङ्क्तिभिः शालन्त इति तच्छालिनीः। 'उपलौ मणि-पाषाणौ' इति विश्वः। [ परितः, रुद्धनिरन्तराम्बराः] रुद्धमावृतं, निरन्तरं सान्द्रं सन्निहितञ्च, अम्बरं वस्त्रमाकाशञ्च याभिस्ताः, अधिरूढनितम्बभूमीः आक्रान्तश्रोणिभागाः प्राप्तकटकाश्चेति विभक्तिविपरिणामः। [ मेखलाः ] रशनाः पर्वतमध्यभूमीश्च, [ चिराय न विमुञ्चन्ति ]। अत्र सम्पदादिविषयत्वेनोभयेषामपि मेखलादीनां वर्ण्यत्वेन प्रकृतत्वात् केवलप्रकृतगोचरः श्लेषः ॥ ७६ ॥

कटकानीति।—किञ्च [ नवमुक्ताफलभूषणैः ] नवमुक्ताफलानि

* अत्र यच्छब्दवाच्यस्य चेद्यस्य उदकपूरेण सार्द्धं, तथा उपमानभूतैः तटद्रुमैः सह उपमेयभूतानां भूभृतां गणानामवैधर्म्यसाम्यप्रतीतेः पूर्वोक्तेन च श्लोकद्वयेन भङ्गनयन-मूलखननादिरूपसामान्यधर्मस्य श्लेषमहिम्ना विशिष्याभिधानात् औपम्यवाचकादेश्च वाच्यत्वात् श्लेषानुप्राणितेयं पूर्णोपमाऽलङ्कारः ।

नियतं दधते च चित्रकै-
रवियोगं पृथुगण्डशैलत: ॥ ७७ ॥
इति यस्य ससम्पद: पुरा
यदवापुर्भवनेष्वरिस्त्रिय: ।
स्फुटमेव समस्तमापदा
तदिदानीमवनीध्रमूर्द्धसु ॥ ७८ ॥
विशेषकम् ।

नूतनमौक्तिकानि, भूषणानि येषां तै:, [ चारुभि: भुजै:, कटकानि ] वलयानि, [ भजन्ति ]; अन्यत्र,—नवमुक्ताफलभूषणै: नवमुक्तानि अचिरत्यक्तानि, अत: अफलानि वध्यान्निष्फलानि, भूषणानि आभरणानि यैस्तै:, भुजै: उपलक्षिता:, कटकानि तटानि, भजन्ति। [च] किञ्चेति चार्थ:। [ पृथुगण्डशैलत: ] पृथुगण्डस्थलेषु, [चित्रकै:] पत्ररचनाभि:, [नियतम्, अवियोगं] सम्पर्कं, [दधते]; अन्यत्र,—पृथुगण्डशैलत: च्युतस्थूलोपलेषु, चित्रकै: मृगविशेषै:, नियतम् अवियोगं सह वासं, दधते। अत्रापि प्रकृतगोचर: श्लेष: * ॥ ७७ ॥

इतीति।—[यस्यारिस्त्रिय:, पुरा] पूर्वं, [ससम्पद:] सश्रीका:, [ भवनेषु ] सदनेषु, [ यदवापु: ] मेखलादिकमनुबभूवु: ; [ समस्तम् ] अशेषं, [ तदिदानीमापदा, अवनीध्रमूर्द्धसु ] शैलशृङ्गेषु, [ इति ] इत्थं, [ स्फुटमेव] अवापु:। न ह्यस्य वैरिणां जीविताऽऽशेति भाव:। अत्रापि यदर्थस्योत्तरश्लोकेनान्वय: † ॥ ७८ ॥

* अत्र चित्रमृगविशेषै: सह वासासम्बन्धेऽपि सम्भावनया अरिस्त्रीणां तत्सम्बन्धकथनादतिशयोक्तिमूलकश्लेषानुप्राणित: सहोक्त्यलङ्कार:।

† अत्रारिस्त्रीणां शैलशिखरेषु तत्तद्गृहोचितद्रव्यसम्भारप्राप्तेरसम्बन्धेऽपि सम्भावनया तल्लाभसम्बन्धकथनात् असम्बन्धे सम्बन्धरूपातिशयोक्त्यलङ्कार:।

महत: कुकुरान्धकद्रुमा-
नतिमात्रं दववद्दहन्नपि ।
अतिचित्रमिदं महीपति-
र्यदकृष्णामवनीं करिष्यति ॥ ७९ ॥

परित: प्रमिताक्षराऽपि सर्वं
विषयं प्राप्तवती गता प्रतिष्ठाम् ।
न खलु प्रतिहन्यते कुतश्चित्
परिभाषेव गरीयसी यदाज्ञा ॥ ८० ॥

---

महत इति ।—यत्तदोर्नित्यसम्बन्धात् । स: [ महीपति:, महत: ] अधिकान्, [ कुकुरान्धकद्रुमान् ] कुकुराश्चान्धकाश्च यादवभेदा:, तानेव द्रुमान्, [ अतिमात्रं, दववत् ] दवाग्निवत् । 'दवदावौ वनारण्यवह्नी' इत्यमर: । [ दहन्नपि अवनीम्, अकृष्णाम् ] अश्यामां, [करिष्यति], इति [यत्, इदम्, अतिचित्रं ] विरुद्धमित्यर्थ: ; कृष्णरहितामित्यविरोध:, अत एव विरोधाऽऽभासोऽलङ्कार: ; कुकुरान्धकै: सह कृष्णं हनिष्यतीति श्लेषार्थ: ॥ ७९ ॥

अथ युग्मेनाऽऽह, परित इति ।—[प्रमिताक्षराऽपि] प्रकर्षेण मिताक्षराऽपि ; एकत्र,—मितभाषितत्वात्, अन्यत्र तु,—सूत्रत्वाच्चाल्पाक्षराऽपि, [सर्वं, विषयं ] राष्ट्रकार्यं देशञ्च, [ परित:, प्राप्तवती ] व्याप्तवती, सर्वत्र प्रवृत्तेत्यर्थ: । [ प्रतिष्ठां ] प्रामाण्यं स्थितिञ्च, [ गता, गरीयसी ] भूयिष्ठार्था, [यदाज्ञा] यस्य राज्ञ: शासनं, [ परिभाषा ] अनियमनिवारको न्यायविशेष:, सा [इव, कुतश्चित्] कुत्रापि, [ न प्रतिहन्यते खलु ] न बाध्यते हि । परिभाषा ह्येकदेशे स्थिता सर्वशास्त्रमभिज्वलयति इति भाष्यकार: । "इको गुणवृद्धी" ( १।१।३ पा० ) इत्यादिका

यामूढ़वानूढ़वराहमूर्त्ति-
र्मुहूर्त्तमादौ पुरुषः पुराणः।
तेनोह्यते साम्प्रतमक्षतैव
क्षतारिणा सम्यगसौ पुनर्भूः॥ ८१ ॥

---

परिभाषा ; "सिचि वृद्धिः—" (७।२।१ पा०) इत्यादिर्विषयः। उपमा-ऽलङ्कारः। * औपच्छन्दसिकं वृत्तम्॥ ८०॥

यामिति।—[ यां ] भुवम्, [ आदौ ] पूर्वं, [ पुराणः पुरुषः ] विष्णुः, [ ऊढ़वराहमूर्त्तिः ] धृतवराहशरीरः, स च न तु स्वरूपेणेति भावः ; [ मुहूर्त्तं ] क्षणमात्रम्, [ ऊढ़वान् ] धृतवान् ; [क्षतारिणा ] संहृतसकलविपक्षेण, [ पुनः, तेन ] राज्ञा, अविकृतेनेति भावः ; [ अक्षतैव ] विपक्षैरनुपद्रुतैव, [ असौ भूः, साम्प्रतम् ] अद्यापि, न तु मुहूर्त्तमिति भावः ; [ सम्यक् ] यथाशास्त्रम्, [ उह्यते ] धार्य्यते। वहेः कर्मणि लट्। "वचिस्वपि—" (६।१।१५ पा०) इत्यादिना सम्प्रसारणम्। अत्र राज्ञो विष्णोराधिक्यकथनाद्व्यतिरेकः। अत्र ध्वनिः,—कश्चिद्वृद्धः, स चोढ़वराहमूर्त्तिः यामविकृतामादौ प्रथमं मुहूर्त्तमूढ़वान् परिणीतवानिति, अत एव अक्षता पूर्वेण अक्षतयोनिका ; अत एवासौ भूर्वोढ़ः क्षतारिणा शौर्य्यादिगुणाढ्येनेत्यर्थः ; तेन केनचिद्यूना साम्प्रतं पुनरुह्यते पुनः परिणीयते ;—'सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हति' इति स्मरणादिति भावः। 'सा पुनर्भूरुच्यते' इति योज्यम्। 'पुनर्भूर्दिधिषूरूढ़ा द्विस्तस्या दिधिषुः पतिः' इत्यमरः। अत्राभिधायाः प्रकृतार्थ एव नियन्त्रणादप्रकृतार्थप्रतीतिर्ध्वनिरेव॥ ८१॥

---

* अत्र श्लिष्टविशेषणमहिम्ना शास्त्रकारीयसङ्केतविशेषरूपया परिभाषया सार्द्धं चैद्याऽऽदेशस्यावैधर्म्यसाम्यप्रतीतेः श्लेषानुप्राणितेयमुपमाऽलङ्कारः।

भूयांसः क्वचिदपि काममस्खलन्त-
स्तुङ्गत्वं दधति च यद्यपि द्वयेऽपि ।
कल्लोलाः सलिलनिधेरवाप्य पारं
शीर्य्यन्ते न गुणमहोर्मयस्तदीयाः ॥ ८२ ॥

लोकाऽऽलोकव्याहतं घर्मरश्मेः
शालीनं वा धाम नालं प्रसर्त्तुम् ।
लोकस्याग्रे पश्यतो धृष्टमाशु
क्रामत्युच्चैर्भूभृतो यस्य तेजः ॥ ८३ ॥

---

भूयांस इति ।—[ द्वयेऽपि ] समुद्रोर्म्मयो गुणोर्मयश्चेति द्वितया अप्यूर्मय इति । द्वेस्तयप् तस्य "द्वितिभ्याम्—" ( ५।२।४३ पा० ) इत्यनेन अयजादेशः, "प्रथमचरम—" ( १।१।३३ पा० ) इत्यादिना जसि विभाषया सर्वनामसंज्ञा । [ भूयांसः ] बहुतराः, [क्वचिदपि, अस्खलन्तः] अप्रतिहतप्रसरा इत्यर्थः ; [ कामं तुङ्गत्वञ्च, दधति यद्यपि ] दधत्येव । 'यद्यपीत्यवधारणे' इति केशवः । तथाऽपीति शेषः । [ सलिलनिधेः ] समुद्रस्य, [ कल्लोलाः] महोर्मयः । 'अथोर्मिषु । महत्सूल्लोलकल्लोलौ' इत्यमरः । [ पारं ] तीरम्, [ अवाप्य, शीर्य्यन्ते ] विलीयन्ते । शीर्य्यतेर्दैवादिकात् कर्त्तरि लट् । [तदीया गुणमहोर्मयः] तु पारमवाप्य [न] शीर्य्यन्ते । अत्र गुणमहोर्मीणां भूयस्त्वादिति साधर्म्येण गुरुत्वेन समुद्रस्याधिक्याद्व्यतिरेकः ; अनेन राज्ञोऽपि समुद्राधिक्यं व्यज्यते । प्रहर्षिणी वृत्तम् ॥ ८२ ॥

अथ युग्मेनाऽऽह, लोकाऽऽलोकेत्यादि ।—[लोकाऽऽलोकव्याहतं] लोक्यते आलोक्यते च पार्श्वान्तरेणेति लोकाऽऽलोकः । 'लोकाऽऽलोकश्चक्रवालः' इत्यमरः । विशेषणसमासः । तेन व्याहतं निरुद्धप्रसारं, लोकस्या-

विच्छित्तिर्नवचन्दनेन वपुषो भिन्नोऽधरोऽलक्तकै-
रच्छाच्छे पतिताञ्जने च नयने श्रोण्योऽलसन्मेखलाः।
प्राप्तो मौक्तिकहारमुन्नतकुचाऽऽभोगस्तदीयद्विषा-
मित्थं नित्यविभूषणा युवतयः सम्पत्सु चापत्स्वपि ॥ ८४ ॥

---

ऽऽलोकेन चक्षुःप्रकाशेन, व्याहतमित्यपि स्फुरति ; अत एव [ शालीनम् ] अधृष्टं, लज्जया भग्नधार्ष्ट्यमित्यर्थः। "शालीनकौपीने अधृष्टाकार्य्ययोः" (५।२।२० पा०) इति निपातः। [वा] इवार्थे वा शब्दः, तद्वदुत्प्रेक्षा। [ घर्मरश्मेः, धाम ] तेजः, [ पश्यती लोकस्याग्रे उच्चैः, भूभृतः ] पर्वतान् राज्ञश्च, [ प्रसर्त्तुं ] व्याप्तुं, [ नालं ] न समर्थम्। लोकाऽऽलोकव्याप्तस्य लोकाग्रे सञ्चरत्वादित्यर्थः। [ यस्य ] राज्ञस्तु, [ तेजः ] पश्यतो लोकस्य, अग्रे अग्रत एव, [ धृष्टं ] केनापि अव्याहतत्वात् प्रगल्भं सत्, उच्चैः, भूभृतः राज्ञः पर्वतांश्च, [आशु, क्रामति] व्याप्नोति। अत्राप्रतिहत-प्रतापत्वेन राज्ञः सूर्य्यादाधिक्यात् व्यतिरेकः ; स च द्वयोर्लोकाऽऽलोकयोर्द्वयानां भूभृताम् अभेदाध्यवसायात् श्लेषमूलातिशयोक्त्युत्थापितया शालीनत्वोत्प्रेक्षया सङ्कीर्य्यते। शालिनी वृत्तमेतत् ॥ ८३ ॥

विच्छित्तिरिति।—[ वपुषो नवचन्दनेन, विच्छित्तिः ] वियोगः, आपदि इति भावः ; अन्यत्र,—चन्दनाऽऽलेपनमिति यावत्, [ अधरः ] अधरोष्ठः, [ अलक्तकैः] लाक्षारागैः, [भिन्नः] वियुक्तः ; अन्यत्र,—युक्तः ; [ नयने च, पतिताञ्जने] गलितकज्जले ; अत एव [अच्छाच्छे] अच्छप्रकारे। "प्रकारे गुणवचनस्य" (८।१।१२ पा०) इति द्विर्भावः। "कर्मधारयवत्—" ( ८।१।११ पा० ) इति सुपो लुक्। अन्यत्र,— अच्छाच्छे नयने, पतिताञ्जने प्राप्ताञ्जने ; [ श्रोण्यः ] नितम्बाः ; लसन्मेखला न भवन्तीति [अलसन्मेखलाः ] निर्मेखला इत्यर्थः ; अन्यत्र,—लसन्मेखला इति पदच्छेदः। [ उन्नतकुचाऽऽभोगः ] उन्नतः कुचाऽऽभोगः कुचविस्तारः, [ मौक्तिकहारं ] मौक्तिकानां हारं हरणं, [प्राप्तः] ; अन्यत्र,—मुक्तादाम प्राप्तः। [ इत्थम् ] उक्तरीत्या, [ तदीयद्विषां युवतयः सम्पत्सु चापत्स्वपि

विनिहत्य भवन्तमूर्जितश्री-
युधि सद्यः शिशुपालतां यथार्थाम् ।
रुदतां भवदङ्गनागणानां
करुणान्तःकरणः करिष्यतेऽसौ ॥ ८५ ॥

इति श्रीमाघकृते शिशुपालवधे महाकाव्ये
षोडशः सर्गः ॥ १६ ॥

---

नित्यविभूषणाः ]। अत्राऽऽपत्सम्पदोः प्रकृताप्रकृतयोः युवतिविशेषण-द्वारा वर्णनात् श्लेषः। शार्दूलविक्रीडितं वृत्तम्। लक्षणमुक्तम् ॥ ८४ ॥

सत्यमीदृशस्ते राजा, ततः किम् ? इत्याशङ्क्य तर्हि तत्त्वमाकर्णये-त्याह, विनिहत्येति।—[ ऊर्जितश्रीः ] अधिकैश्वर्य्यः, [ असौ ] राजा, [युधि भवन्तं सद्यः, विनिहत्य] हत्वा, [ रुदतां ] क्रन्दतां, [ भवदङ्गना-गणानां, करुणान्तःकरणः] कृपाऽऽविष्टचित्तः सन्, [शिशुपालतां यथार्थां करिष्यते ] * अङ्गनागणान् प्रति तच्छिशुपालनेन निजां शिशुपालसंज्ञा-मन्वर्थां करिष्यतीत्यर्थः। अत्र रोदनकरुणापदार्थयोर्विशेषणगत्या क्रमात् करुणाशिशुपालनहेतुकत्वात् काव्यलिङ्गयोः सङ्करः। औप-च्छन्दसिकं वृत्तम् ॥ ८५ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये षोडशः सर्गः ॥१६॥

---

* करिष्यते इत्यस्य "विभाषोपपदेन प्रतीयमाने" (१।३।७७ पा०) इति सूत्रेण क्रियाफलस्य कर्तृगामित्वादेवात्मनेपदं प्रयुक्तमित्यवधेयम्।

## सप्तदशः सर्गः ।

—(०*०)—

इतीरिते वचसि वचस्विनाऽमुना
युगक्षयक्षुभितमरुद्गरीयसि ।
प्रचुक्षुभे सपदि तदम्बुराशिना
समं महाप्रलयसमुद्यतं सदः ॥ १ ॥

सरागया स्रुतघनघर्मतोयया
कराऽऽहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविखण्डितोष्ठया-
रुषा नृपाः प्रियतमयेव भेजिरे ॥ २ ॥

---

इतीति ।—[इति] इत्थम्, [ अमुना, वचस्विना ] वाग्मिना । "मनस्विना" इति पाठे,—मनस्विना धीरेण, दूतेन इति शेषः, [ युगक्षयक्षुभितमरुद्गरीयसि] युगक्षये कल्पान्ते, क्षुभित उद्धतः, मरुत्तद्वद्गरीयसि, [वचसि ईरिते] सति, [ तदम्बुराशिना ] युगक्षयवर्द्धिना, [ समं ] तुल्यं यथा तथा, [ सदः ] हरेरास्थानं, [ महाप्रलयसमुद्यतं ] महाप्रलये सर्वसंहारे, समुद्यतम् उद्युक्तं सत्, [ सपदि, प्रचुक्षुभे ] प्रचुकोप । कल्लोद्धतमहामारुतेन महार्णव इव तद्वचनेन तत् सदः क्षुभितमासीदित्यर्थः । उपमा । रुचिरा वृत्तम् ;—'चतुर्ग्रहैरिह रुचिरा जभस्जगाः' इति लक्षणात् ॥ १ ॥

अथाष्टादशभिः सभाक्षोभं वर्णयति, सरागयेत्यादि ।—[नृपाः] राजानः ; सह रागेण पाटलिम्ना अनुरागेण च [ सरागया ] । "तेन

अलक्ष्यत क्षणदलिताङ्गदे गदे
करोदरप्रहितनिजांसधामनि ।
समुल्लसच्छकलितपाटलोपलैः
स्फुलिङ्गवान् स्फुटमिव कोपपावकः ॥ ३ ॥
अवज्ञया यदहसदुच्चकैर्बलः
समुल्लसद्दशनमयूखमण्डलः ।
रुषाऽरुणीकृतमपि तेन तत्क्षणं
निजं वपुः पुनरनयन्निजां रुचिम् ॥ ४ ॥

---

सहेति तुल्ययोगे" (२।२।२८ पा०) इति बहुव्रीहिः। [स्रुतघनघर्मतोयया] स्रुतं घनं सान्द्रं, घर्मतोयं स्वेदोदकं यस्यां सा तया, [कराऽऽहतिध्वनितपृथूरुपीठया] कराऽऽहत्या पाणितलाऽऽस्फालनेन, ध्वनितं पृथु महत्, ऊरुः पीठमिव ऊरुपीठं यस्यां तया, [मुहुर्मुहुः, दशनविखण्डितोष्ठया] दन्तदष्टाधरया, [रुषा प्रियतमयेव भेजिरे], आविष्टोऽनाविष्टश्च रौद्रस्थायी क्रोधः प्रादुर्भूत इत्यर्थः। उपमाऽलङ्कारः ॥ २ ॥

अथ सप्तदशभिः राज्ञां क्रोधानुभावानाह, अलक्ष्यतेत्यादि।—[करोदरप्रहितनिजांसधामनि] करोदरप्रहितं पाणितलाऽऽस्फालितं, निजमंसधाम स्वांसप्रदेशो येन तस्मिन्, अत एव [क्षणदलिताङ्गदे] क्षणात् दलिताङ्गदे भग्नकेयूरे, [गदे] गदाख्ये कृष्णानुजे, [समुल्लसच्छकलितपाटलोपलैः] समुल्लसद्भिः उत्पतद्भिः, शकलितैः शकलीकृतैः, दलदङ्गदगलितैरित्यर्थः, पाटलोपलैः पद्मरागैः, [कोपपावकः स्फुलिङ्गवानिव, स्फुटं] व्यक्तम्, [अलक्ष्यत] इत्युत्प्रेक्षा। 'विषु स्फुलिङ्गोऽग्निकणः' इत्यमरः ॥ ३ ॥

अवज्ञयेति।—[बलः] बलभद्रः, [समुल्लसद्दशनमयखमण्डलः]

यदुत्पतत्पृथुतरहारमण्डलं
व्यवर्त्तत द्रुतमभिद्रुतमुल्मुकः।
वृहच्छिलातलकठिनांसघट्टितं
ततोऽभवद्भ्रमितमिवाखिलं सदः ॥ ५ ॥

प्रकुप्यतः श्वसनसमीरणाऽऽहति-
स्फुटोष्मभिस्तनुवसनान्तमारुतैः।
युधाजितः कृतपरितूर्णवीजनं
पुनस्तरां वदनसरोजमस्विदत् ॥ ६ ॥

---

समुल्लसत् समन्ततः प्रसरत्, दशनमयूखमण्डलं दन्तरश्मिपटलं यस्य स सन्, [ अवज्ञया ] अनादरेण, [ उच्चकैः ] उच्चैः, [ अहसत् ] इति [यत्, तेन] हासेन, [रुषाऽरुणीकृतमपि निजं वपुः, तत्क्षणं] तस्मिन् क्षणे। "अत्यन्त-संयोगे च" ( २।१।२९ पा० ) इति द्वितीया। [पुनर्निजां, रुचिं] धावल्य-मेव, [ अनयत् ]। अत्र वपुषः स्वधावल्यत्यागेन दन्तधावल्यस्वीकारात् तद्गुणालङ्कारः ;—'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाऽऽश्रयः' इति लक्षणात् ॥ ४ ॥

यदिति।—[ उल्मुकः ] नाम राजा, [ उत्पतत्पृथुतरहारमण्डलम् ] उत्पतत् उल्लुठत्, पृथुतरं हारमण्डलं मुक्ताकलापो यस्मिन् कर्मणि तद्-यथा तथा, [अभिद्रुतं] द्रुताभिमुखं, [द्रुतं, व्यवर्त्तत] विवृत्तः, इति [यत्, ततः] विवर्त्तनात्, [ अखिलं सदः, वृहच्छिलातलकठिनांसघट्टितं ] वृहता शिलातलकठिनेन अंसेन स्कन्धेन, घट्टितं, [भ्रमितमिवाभवत्]। विवर्त्तवेगवशोत्थादंसघट्टनाद् भ्रमितमिवाभूत्, इत्युत्प्रेक्षा ॥ ५ ॥

प्रकुप्यत इति।—[ प्रकुप्यतः ] अतिक्रुध्यतः, [ युधाजितः ] नाम राज्ञः, [वदनसरोजं, श्वसनसमीरणाऽऽहतिस्फुटोष्मभिः] श्वसनसमीरणस्य निःश्वासमारुतस्य, आहतिभिः स्फुटः प्रकटः, ऊष्मा उष्णत्वं येषां तैः,

प्रजापतिक्रतुनिधनार्थमुत्थितं
व्यतर्कयज्ज्वरमिव रौद्रमुद्धतम् ।
समुद्यतं सपदि वधाय विद्विषा-
मतिक्रुधं निषधमनौषधं जनः ॥ ७ ॥

---

[तनुवसनान्तमारुतैः] सूक्ष्मवस्त्राञ्चलवातैः, [कृतपरितूर्णवीजनं] कृतं परितूर्णवीजनं शीघ्रविधूननं यस्य तत्, अतिशीघ्रं वीज्यमानमपीत्यर्थः, [पुनस्तरां] पुनरत्यन्तम् । अव्ययादामुप्रत्ययः । [अखिदत्] खिद्यति स्म । खिदेर्लुङि पुषादित्वादङ्प्रत्ययः । अतोऽमविशेषणगत्या खेदहेतुत्वात् काव्यलिङ्गं, वीजनेऽपि खेद इति विरोधः । वीजिरयं चुरादिषु अन्वेषणीयः ॥ ६ ॥

प्रजेति ।—[जनः सपदि विद्विषां वधाय, समुद्यतम्] उद्युक्तम्, [उद्धतं] तीव्रम्, अत एव [अतिक्रुधम्] अधिकक्रोधम्, [अनौषधम्] अप्रतीकारमित्यर्थः, [निषधं] निषधाऽऽख्यं नृपं, [प्रजापतिक्रतुनिधनार्थं] दक्षाध्वरध्वंसनार्थम्, [उत्थितम्]; रुद्रस्येमं [रौद्रं] रुद्रसम्बन्धिनं, [ज्वरमिव] वीरभद्ररूपिणमित्यर्थः, * [व्यतर्कयत्] । अत्र राज्ञोऽपि प्रजापतित्वात् पुनः प्रजापतिक्रतुनिधनार्थमुत्थितः साक्षाद्दक्षाध्वरविध्वंसी वीरभद्र इवायमिति उत्प्रेक्षितवानित्यर्थः । † उपमा ॥७॥

---

* दक्षाध्वरविध्वंसी ज्वरस्तु निदाने रुद्रस्य निश्वासात्, वाग्भटे च तस्योर्द्ध्वनयनात् सम्भूत इत्युक्तम्; तस्य मल्लिनाथीना वीरभद्रसंज्ञा तु—'महावीरोऽसि रे भद्र ! मम सर्वगणेष्विह । वीरभद्राख्यया हि त्वं प्रथितिं परमां व्रज ॥ कुरु मे सत्वरं कर्म दक्षयज्ञक्षयं नय ॥" इति काशीखण्डोक्त (८९ अ०) प्रमाणादवगन्तव्या ।

† उत्प्रेक्षितवानित्यस्य ज्वरसदृशतया समालोचितवानित्यर्थत्वेन स्फुटतया सादृश्यावगमादत्रोपमाऽलङ्कारः । निषधस्य ज्वरसदृशत्वे तवत्यजनस्य वितर्कभावप्रतीतेः ज्वररूपेण तत्सदृशरूपेण च सम्भावनाया अप्रतीतेश्च नैवोत्प्रेक्षाऽलङ्कारावसरः । उत्प्रेक्षावाचकपदानामुपादानेऽपि यत्रोत्कटैककोटिकत्वेन सम्भावना न प्रतीयते, न तत्रोत्प्रेक्षा । उक्तञ्च तदलङ्कारोपसंहारप्रसङ्गे दर्पणे,—'यदेतत्' इत्यादि श्लोकावसाने "इत्यत्र 'मन्ये'-शब्दप्रयोगेऽपि उक्तरूपायाः सम्भावनायाः अप्रतीतेर्वितर्कभावं, नास्यापङ्क्तिरुत्प्रेक्षा" इति ।

परस्परं परिकुपितस्य पिंषतः
क्षतोर्मिकाकनकपरागपङ्किलम् ।
करद्वयं सपदि सुधन्वनो निजै-
रनारतस्रुतिभिरधाव्यताम्बुभिः ॥ ८ ॥

निरायतामनलशिखोज्ज्वलां ज्वल-
न्नखप्रभाकृतपरिवेषसम्पदम् ।
अविभ्रमद्भ्रमदनलोल्मुकाऽऽकृतिं
प्रदेशिनीं जगदिव दग्धुमाहुकिः ॥ ९ ॥

---

परस्परमिति ।—[ परिकुपितस्य ] अतिक्रुद्धस्य, अत एव [ परस्परं, पिंषतः] पीडयतः, करद्वयमित्यर्थः, [सपदि, सुधन्वनः] राज्ञः, [क्षतोर्म्मिकाकनकपरागपङ्किलं ] क्षतानां पिष्टानाम्, ऊर्मिकाणाम् अङ्गुलीयकानां, कनकपरागेण सुवर्णचूर्णेन, पङ्किलं पङ्कवत् । पिच्छादित्वात् मत्वर्थीय इलच्प्रत्ययः । 'अङ्गुलीयकमूर्मिका' इत्यमरः । [ करद्वयं ] पाणियुग्मं , [निजैः] करद्वयजन्यैरेव, [अनारतस्रुतिभिः ] अविरतस्रावैः, [ अम्बुभिः ] स्वेदोदकैः, [ अधाव्यत ] अक्षाल्यत । "धावु गतिशुद्ध्योः" इति धातोः कर्मणि लङ् । अत्रोर्मिकाणां करद्वयस्य च परागत्वपङ्किलत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्ती, तयोः सङ्करः ॥ ८ ॥

निरिति ।—[ आहुकिः ] नाम राजा, [ निरायतां ] प्रसारिताम्, [ अनलशिखोज्ज्वलां ] अनलशिखा अग्निज्वाला, तद्वत् उज्ज्वलां, [ ज्वलन्नखप्रभाकृतपरिवेषसम्पदं ] ज्वलन्तीभिर्नखप्रभाभिः कृता परिवेषसम्पत् परिधिशोभा यस्यास्ताम्, अत एव [ भ्रमदनलोल्मुकाऽऽकृतिं] भ्रमतोऽनलोल्मुकस्य अलातस्येव, आकृतिः संस्थानं यस्यास्ताम् । 'अङ्गारोऽलातमुल्मुकम्' इत्यमरः । [प्रदेशिनीं जगद्दग्धुमिव] इत्युत्प्रेक्षा ।

दुरीक्षतामभजत मन्मथस्तथा
यथा पुरा परिचितदाहधार्ष्ट्यया ।
ध्रुवं पुनः सशरममुं तृतीयया
हरोऽपि न व्यसहत वीक्षितुं दृशा ॥ १० ॥

विचिन्तयन्नुपनतमाहवं रसा-
दुरः स्फुरत्तनुरुहमग्रपाणिना ।
परामृशत् कठिनकठोरकामिनी-
कुचस्थलप्रमुषितचन्दनं पृथुः ॥ ११ ॥

---

[अविभ्रमत्] भ्रमयति स्म । भ्रमेर्णौ चङ् । दूतसन्तर्जनाय भ्राम्यमाण-नखप्रभापटला तर्जनी जगद्दाहाय भ्राम्यमाणालातचक्रवदलक्ष्यतेत्यर्थः ॥ ९ ॥

दुरीक्षतामिति ।—[ मन्मथः ] प्रद्युम्नावतारः कामः, [ तथा, दुरीक्षतां ] दुर्दर्शनत्वम् । ईक्षतेः खलन्तात् तल्प्रत्ययः । [ अभजत यथा हरोऽपि, पुरा] पूर्वजन्मनि, [परिचितदाहधार्ष्ट्यया] परिचितम् अभ्यस्तं, दाहधार्ष्ट्यं दहनसाहसं यस्यास्तया, [तृतीयया दृशा सशरम्, अमुं] मन्मथं, [ ध्रुवं पुनर्वीक्षितुं, न व्यसहत ] न शक्तः । "परिनिविभ्यः सेवसित-सयसिवुसहसुट्स्तुस्वञ्जाम्" ( ८।३।७० पा० ) "सिवादीनां वाड्व्यवायेऽपि" ( ८।३।७१ पा० ) इति विकल्पात् न षत्वम् । अनयोत्प्रेक्षया रुद्रस्यापि भीषणः, किमुतान्येषाम् ? इति वस्तु व्यज्यते ॥ १० ॥

विचिन्तयन्निति ।—[ पृथुः ] नाम राजा, [ उपनतं ] प्राप्तम्, [ आहवं ] युद्धं, [ रसात् ] रणरागात्, [ विचिन्तयन् ] करेति ध्यायन्, [ कठिनकठोरकामिनीकुचस्थलप्रमुषितचन्दनं ] कठिनेन कर्कशेन, कठोरेण प्रवृद्धेन, कामिन्याः कुचस्थलेन प्रमुषितमपहृतं, चन्दनं यस्य तत् । एतेनास्य सुरतसमरयोः समरसत्वं व्यज्यते ; अत एव [ स्फुर-

विलङ्घितस्थितिमभिवीक्ष्य रूक्षया
रिपोर्गिरा गुरुमपि गान्दिनीसुतम् ।
जनैस्तदा युगपरिवर्त्तवायुभि-
र्विवर्त्तिता गिरिपतयः प्रतीयिरे ॥ १२ ॥
विवर्त्तयन् मदकलुषीकृते दृशौ
कराऽऽहतक्षितिकृतभैरवाऽऽरवः ।

---

तनुरुहम्] उदञ्चत्पुलकम्, [उरः] । अग्रश्चासौ पाणिश्चेति समानाधिकरणसमासः । अत एव "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात्"(२अ० ५म अधि० २०सू०) इति वामनः । तेन [ अग्रपाणिना ] पाणितलेन, [ परामृशत् ] परामृष्टवान्, रणकण्डूलपाणित्वादिति भावः ; अत एव यदन्येषां रोषजनकं दूतवाक्यं, तदागामिरणकारणतयाऽस्य हर्षहेतुरिति श्लोकार्थः ॥ ११ ॥

विलङ्घितेति ।—[ गुरु ] स्वभावतो धीरम्, [अपि] सन्तं, [रूक्षया] परुषया, [ रिपोर्गिरा ] दूतवाचा, [ विलङ्घितस्थितिम् ] उल्लङ्घितमर्य्यादं, क्रोधादुन्मर्य्यादं विकुर्वाणमित्यर्थः ; [ गान्दिनीसुतम् ] अक्रूरम्, [ अभिवीक्ष्य जनैः, तदा ] अक्रूरविक्रियाऽऽलोकनसमये, [ युगपरिवर्त्तवायुभिः] कल्पान्तवातैः, [विवर्त्तिताः] स्थानादुच्चालिताः, [गिरिपतयः] अद्रयः, [ प्रतीयिरे ] विश्वश्वसिरे ; अक्रूरविक्रियादर्शनाद्गिरिचलनमपि युगान्ते सम्भावितमेवेति जनैर्विश्वस्तमित्यर्थः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । प्रतिपूर्वादिणः कर्मणि लिट् । अत्र कल्पान्ते गिरिचलनविक्रियाकल्पेयमक्रूरविक्रियेति वाक्यभेदेन सादृश्याऽऽक्षेपान्निदर्शनाऽलङ्कारः ; तेनाक्रूरस्य लोकोत्तरं धैर्य्यं नैसर्गिकमिति वस्तु व्यज्यते ॥ १२ ॥

विवर्त्तयन्निति ।—[ मदकलुषीकृते ] मदो मद्यविकारो दानञ्च ।

क्रुधा दधत्तनुमतिलोहिनीमभूत्
प्रसेनजिद्गज इव गैरिकारुणः ॥ १३ ॥
सकुङ्कुमैरविरलमम्बुबिन्दुभि-
र्गवेषणः परिणतदाड़िमारुणैः ।
स मत्सरस्फुटितवपुर्विनिःसृतै-
र्बभौ चिरं निचित इवासृजां लवैः ॥ १४ ॥

---

'मदो मद्येभदानयोः' इति विश्वः। तेन कलुषीकृते आकुलीकृते, [ दृशौ, विवर्त्तयन् ] घूर्णयन्, [ कराऽऽहतक्षितिकृतभैरवाऽऽरवः ] करेण पाणिना शुण्डादण्डेन च, आहतायां क्षितौ भूमौ, कृतो भैरवाऽऽरवो भयङ्करध्वनिर्येन सः, क्रोधात् सध्वानं करेण क्षितिमाघ्नन्नित्यर्थः ; [क्रुधा ] क्रोधेन, [ अतिलोहिनीम् ] अतिलोहिताम्। "वर्णादनुदात्तात्तोपधात्तो नः" ( ४।१।३९ पा० ) इति विकल्पात् ङीष्, तकारस्य च नकारः । [ तनुं ] वपुः, [ दधत्, प्रसेनजित् ] नाम राजा, [ गैरिकारुणः ] धातु-रक्तः, [ गज इवाभूत् ], तद्वदलक्ष्यतेत्यर्थः * ॥ १३ ॥

सकुङ्कुमैरिति ।—[ सः ] प्रसिद्धः, [ गवेषणः ] नाम राजा, [ सकु-ङ्कुमैः ] सर्वाङ्गीणकश्मीरजलेपैरित्यर्थः ; अत एव [ परिणतदाड़ि-मारुणैः ] परिपक्वदाड़िमबीजरक्तैः, [अम्बुबिन्दुभिः ] क्रोधसात्त्विकैः स्वेदबिन्दुभिरित्यर्थः ; [ मत्सरस्फुटितवपुर्विनिःसृतैः ] मत्सरेणान्तः-सम्भृतेनात्युत्कटवैरेण, स्फुटितात् निर्भिन्नात्, वपुषो विनिःसृतैः, [ असृजां लवैः ] असृग्बिन्दुभिः, [ अविरलं ] निरन्तरं, [ निचितः ] व्याप्तः, [ इव चिरं बभौ ]। उत्प्रेक्षा ॥ १४ ॥

---

* अत्र वप्रक्रीड़ारततया गैरिकारुणेन गिरिजेन गजेन सह प्रसेनजितः राज्ञः अवैधर्म्यसाम्यप्रतीतेरुपमाऽलङ्कारः ।

ससम्भ्रमं चरणतलाभिताड़न-
स्फुटन्महीविवरवितीर्णवर्त्मभिः ।
रवेः करैरनुचिततापितोरगं
प्रकाशतां शिनिरनयद्रसातलम् ॥ १५ ॥

प्रतिक्षणं विधुवति शारणे शिरः
शिखिद्युतः कनककिरीटरश्मयः ।
अशङ्कितं युधमधुना विशल्वमी
क्षमापतीनिति निरराजयन्निव ॥ १६ ॥

---

ससम्भ्रममिति ।—[ शिनिः ] सात्यकेः पितामहः, [ ससम्भ्रमं ] ससत्वरं, [ चरणतलाभिताड़नस्फुटन्महीविवरवितीर्णवर्त्मभिः ] चरणतलाभिताड़नेन पादतलाभिघातेन, स्फुटन्त्या दलन्त्याः, मह्या विवरैः छिद्रैः, वितीर्णवर्त्मभिः दत्तमार्गैः, तत्प्रसरणैरित्यर्थः ; [ रवेः करैः, अनुचिततापितोरगम् ] अनुचितं पूर्वमपरिचितमिदं यथा तथा, तापिताः सन्तापं गमिताः, उरगा यस्मिन् तत्, [रसातलं, प्रकाशतां] प्रकटत्वम्, [ अनयत् ]। अत्र महीरविकरोरगरसातलानां क्रमेण स्फुटनान्तःप्रवेशतापप्रकाशनैरसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः। पादाहननैरमानुषीं तीव्रतां व्रजति स्मेति ध्वनिः ॥ १५ ॥

प्रतीति ।—[ शारणे ] नाम राज्ञि, [ प्रतिक्षणं शिरः, विधुवति ] क्रोधात् कम्पयति सति। धुवेस्तौदादिकाल्लटः शत्रादेशः, "अचि श्नुधातु—" (६।४।७७ पा०) इत्यादिना उवङादेशः। शिखिवत् द्योतन्त इति [ शिखिद्युतः ] अग्निप्रभाः। क्विप्। [ कनककिरीटरश्मयः ] नीराजनकर्त्तारः, [अमी] भूपाः, [अधुना, अशङ्कितं ] निःशङ्कं, [ युधम्] आजिम्। 'समित्याजिसमिद्युधः' इत्यमरः। [ विशन्त्विति क्षमा-

दधौ चलत्पृथुरसनं विवक्षया
विदारितं विततबृहद्भुजालतः ।
विदूरथः प्रतिभयमास्यकन्दरं
चलत्फणाधरमिव कोटरं तरुः ॥ १७ ॥

समाकुले सदसि तथाऽपि विक्रियां
मनोऽगमन्न मुरभिदः परोदितैः ।
घनाम्बुभिर्बहुलितनिम्नगाजलै-
र्जलं न हि व्रजति विकारमम्बुधेः ॥ १८ ॥

---

पतीन्, निरराजयन्निव ] नीराजयन्ति स्मेव, इत्युत्प्रेक्षा । 'नीराजनात् स्याद्विजयः' इत्यागमः ॥ १६ ॥

दधाविति ।—[ विततबृहद्भुजालतः ] वितते विस्तृते, बृहत्यौ भुजे लते इव यस्य सः, [ विदूरथः ] नाम राजा, [ विवक्षया ] किमपि वक्तुमिच्छया, [ विदारितं ] व्यात्तम् ; अत एव [ चलत्पृथुरसनं ] चलन्ती पृथुर्महती, रसना जिह्वा यस्मिन् तम् । 'रसज्ञा रसना जिह्वा' इत्यमरः । [ प्रतिभयं ] भयङ्करम्, [ आस्यकन्दरम् ] आस्यं कन्दर इवास्यकन्दरस्तम् । 'दरी तु कन्दरो वा स्त्री' इत्यमरः । [ तरुः, चलत्फणाधरं ] चलन् फणाधरः फणी यस्मिन् तत्, [ कोटरमिव ] । 'निष्कुहः कोटरं वा ना' इत्यमरः । [ दधौ ] । श्रौती पूर्णोपमा ॥ १७ ॥

समाकुल इति ।—[ परोदितैः ] परवाक्यैः, [ सदसि ] आस्थाने, [ तथा, समाकुले ] क्षुभिते, [अपि, मुरभिदः] हरेः, [ मनः, विक्रियां ] क्षोभं, [नागमत् । हि] तथा हि, [ बहुलितनिम्नगाजलैः ] बहुलितानि बहुलीकृतानि, क्षोभितानि इत्यर्थः, निम्नगाजलानि यैस्तैः, [घनाम्बुभिः] मेघोदकैः, [ अम्बुधेर्जलं विकारं न व्रजति ] ; यथा वर्षोदकैर्नद्यः क्षुभ्यन्ति, न समुद्रस्तद्वदिति भावः । दृष्टान्तालङ्कारः ॥ १८ ॥

परानमी यदपवदन्त आत्मनः
स्तुवन्ति च स्थितिरसतामसाविति ।
निनाय नो विकृतिमविस्मितः स्मितं
मुखं शरच्छशधरमुग्धमुद्धवः ॥ १९ ॥
निराकृते यदुभिरिति प्रकोपिभिः
स्पशे शनैर्गतवति तत्र विद्विषाम् ।
मुरद्विषः स्वनितभयानकाऽऽनकं
बलं चणादथ समनह्यताऽऽजये ॥ २० ॥

---

परानिति।—[असौ] खलाः, [परान्] अन्यान्, [अपवदन्ते] निन्दन्ति। "अपाद्वदः" (१।३।७३ पा०) इत्यात्मनेपदम् । [आत्मनः] स्वानि, [स्तुवन्ति च] इति [यत् असौ, असतां] खलानां, [ स्थितिः ] प्रकृतिः, [इति] इति मत्वेत्यर्थः। गम्यमानार्थत्वादप्रयोगः, अन्यथा पौनरुक्त्यमित्यालङ्कारिकाः। विस्मितो न भवतीति [ अविस्मितः ] दूतप्रलापैर्विस्मयं न गतः, [ उद्धवः, स्मितं ] स्मेरम् । उभयत्र कर्त्तरि क्तः । अत एव [ शरच्छशधरमुग्धं ] शरदिन्दुसुन्दरम्, इत्युपमा । [ मुखं विकृतिं, नो निनाय ] न प्रापयामास। न हि महतां निन्दा स्तुतिर्वा विकारकारणमिति भावः ॥ १९ ॥

निराकृत इति।—[ तत्र ] सदसि, [ इति ] इत्थं, [ प्रकोपिभिः ] अतिक्रुद्धैः, [ यदुभिः विद्विषां, स्पशे ] चरे। 'अपसर्पश्चरः स्पशः' इत्यमरः। [ निराकृते ] धिक्कृते, [ शनैः, गतवति ] गच्छति सति, सागसोऽपि दूतस्यावध्यत्वादिति भावः ; [अथ] दूतगमनानन्तरं, [ स्वनितभयानकाऽऽनकं ] स्वनितेन ध्वनिना, भयानकाः भयङ्कराः, आनकाः

मुहुः प्रतिस्खलितपराऽऽयुधा युधि
स्थवीयसीरचलनितम्बनिर्भराः ।
अदंशयन्नरहितशौर्यदंशना-
स्तनूरयं नय इति वृष्णिभूभृतः ॥ २१ ॥
दुरुद्वहाः क्षणमपरैस्तदन्तरे
रणाश्रवादुपचयमाशु बिभ्रति ।
महीभुजां महिमभृतां न सम्ममु-
र्मुदोऽन्तरा वपुषि बहिश्च कञ्चुकाः ॥ २२ ॥

---

पटहा यस्मिन् तत्, [मुरद्विषो बलं क्षणात्, आजये] युद्धाय, [समनह्यत] सन्नद्धम् ॥ २० ॥

मुहुरिति ।—[ वृष्णिभूभृतः ] यादवनरेन्द्राः, [ मुहुः ] असकृत्, [ युधि, प्रतिस्खलितपराऽऽयुधाः ] भग्नप्रतिपक्षाऽऽयुधाः, [स्थवीयसीः] स्थूलतराः, पराक्रमानुरूपप्रकर्षवतीरित्यर्थः । "स्थूलदूर—" ( ६।४।१५६ पा० ) इत्यादिना पूर्वस्य गुणलोपौ । [ अचलनितम्बनिर्भराः ] अद्रिकटकनिविड़ाः, अन्तःसारवतीरित्यर्थः ; [ अरहितशौर्य्य-दंशनाः ] अरहितम् अव्यक्तं, शौर्य्यमेव दंशनं वर्म यासां ताः, [ तनूः ] देहान्, [ अयं नय इति ] वर्मधारणं नीतिरिति हेतोः, न तु भयादिति भावः ; [ अदंशयन् ] अवर्मयन् । दंशेरनुदात्तेत्त्वात् परस्मैपदं चिन्त्य-मित्याहुः ; अत एव भट्टमल्लः,—"संवर्म्मयति सन्नह्यत्यात्मनि सज्जयी-त्यमी । सन्दंशति दंशयते सनाहे पदपञ्चकम् ॥" इति । केचित्तु चुरा-दिषूभयपदेषु पठन्ति । अत्र साभिप्रायविशेषणत्वात् परिकरा-लङ्कारः ॥ २१ ॥

दुरुद्वहा इति ।—[ महिमभृताम् ] ऐश्वर्य्यवतां, [ महीभुजां ] राज्ञां

सकल्पनं द्विरदगणं वरूथिन-
स्तरङ्गिणो जयनयुजश्च वाजिनः ।
त्वरायुजः स्वयमपि कुर्वतो नृपाः
पुनःपुनस्तदधिकृतानतत्वरन् ॥ २३ ॥
युधे परैः सह दृढबद्धकक्षया
कलक्वणन्मधुपकुलोपगीतया ।

---

सरस्विनि, [ रणश्रवात् ] युद्धश्रवणात्, [ आशु ] शीघ्रम्, [ उपचयं ] वृद्धिं, [ बिभ्रति ] बिभ्राणे, [ वपुषि, अपरैः ] अन्यैः, [ क्षणं ] क्षणमपि, [ तदन्तरे, दुरुद्वहाः ] दुर्भराः, [ मुदः ] सन्तोषाः, [ अन्तरा ] अन्तराले, [ न सम्ममुः वहिः कञ्चुकाश्च ] न सम्ममुः न मान्ति स्म ; नावर्त्तन्तेत्यर्थः। पूर्वत्र आधेयाऽऽधिक्यादुत्तरत्राऽऽधाराऽऽधिक्यादिति विवेकः । अत्र मुदां कञ्चुकानाञ्च प्रकृतानामेव विशेषणसाम्यादौपम्यगम्यतायां केवलप्रकृता-ऽऽस्पदा तुल्ययोगिता ॥ २२ ॥

सकल्पनमिति ।—[ द्विरदगणं ], सह कल्पनया [ सकल्पनं ] यथोचितसन्नाहसहितम् । 'कल्पना सज्जना समे' इत्यमरः । वरूथो रथगुप्तिरेषामस्तीति [ वरूथिनः ] रथान् । 'रथगुप्तिर्वरूथो ना' इत्यमरः । [ तुरङ्गिणः ] अश्वयुक्तान् । [ वाजिनः ] अश्वान्, [ च, जयनयुजः ] पल्ययनादिसंयुक्तान् । सम्पदादिभ्यः क्विप् । 'जयनः स्यात्तुरङ्गादिसन्नाहे विजयेऽपि च' इति विश्वः । [ स्वयं त्वरायुजः ] त्वरायुक्तान् स्वतः, [कुर्वतोऽपि], स्वतः एव त्वरया कुर्वाणानपीत्यर्थः, [ तदधिकृतान्] हस्त्यादिषु नियुक्तपुरुषान्, [नृपाः पुनः पुनः, अतत्वरन्] त्वरयन्ति स्म ; तेषां तथा रणौत्सुक्यादिति भावः । त्वरेर्णौ चङि "अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्" ( ७।४।९५ पा० ) इत्यभ्यासस्याकारः ॥ २३ ॥

युध इति ।—[ अथ परैः सह, युधे ] युद्धाय, [ दृढबद्धकक्षया ]

अदीयत द्विपघटया सवारिभिः
करोदरैः स्वयमथ दानमक्षयम् ॥ २४ ॥
सुमेखलाः सिततरदन्तचारवः
समुल्लसत्तनुपरिधानसम्पदः ।
रणैषिणां पुलकभृतोऽधिकन्धरं
ललम्बिरे सदसिलताः प्रिया इव ॥ २५ ॥

---

दृढबद्धा कक्षा मध्यबन्धनं यस्यास्तया। 'कक्षा बृहतिकायां स्यात् काञ्च्यां मध्येभबन्धने' इति विश्वः। अन्यत्र,—दृढोद्योगयेत्यर्थः ; [कलक्वणन्मधुपकुलोपगीतया] कलं क्वणता मधुपकुलेनालिगणेन, उपगीतया ; वन्दिमागधस्तुतया चेति गम्यते। [ द्विपघटया ]। कर्त्री। [ स्वयं, सवारिभिः ] सोदकैः, [ करोदरैः ] पुष्कराग्रैः पाणितलाग्रैश्च, [ अक्षयम् ] अपरिमितं, [दानं ] मदः, [अदीयत] ; दानं द्रव्यञ्च, अदीयत दत्तम्। अत्र प्रस्तुतगजघटाविशेषणसाम्येनाप्रस्तुतदानकर्तृप्रतीतिः समासोक्तिरलङ्कारः ॥ २४ ॥

सुमेखला इति।—शोभना मेखला बन्धनसूत्राणि काञ्च्यश्च यासां ताः [सुमेखलाः]। 'मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः' इति विश्वः। [ सिततरदन्तचारवः ] सिततरैः दन्तैर्दन्तमयतनुभिर्दशनैश्च, चारवः, [ समुल्लसत्तनुपरिधानसम्पदः ] समुल्लसन्त्यः तनवः सूक्ष्माः, परिधानसम्पदः कोशसम्पदो वस्त्रसम्पदश्च यासां ताः, [ पुलकभृतः ] छायाभृतः रोमाञ्चधारिण्यश्च, [ सदसिलताः ] चारुखड्गवल्ल्यः, [ प्रिया इव, रणैषिणां ] रणाऽऽकाङ्क्षिणाम् ; कन्धरासु [ अधिकन्धरम् ] अधिकण्ठम्। विभक्त्यर्थेऽव्ययीभावः। [ ललम्बिरे ] लग्ना इत्यर्थः। श्लेषः श्लिष्टोपमा वा मतभेदात् ॥ २५ ॥

मनोहरैः प्रकृतिमनोरमाऽऽकृति-
भयप्रदैः समितिषु भीमदर्शनः।
सदैवतैः सततमथानपायिभि-
र्निजाङ्गवन्मुरजिदसेव्यताऽऽयुधैः॥ २६॥

अवारितं गतमुभयेषु भूरिशः
क्षमाभृतामथ कटकान्तरेष्वपि।
मुहुर्युधि क्षतसुरशत्रुशोणित-
प्लुतप्रधिं रथमधिरोहति स्म सः॥ २७॥

उपेत्य च स्वनगुरुपक्षमारुतं
दिवस्त्विषा कपिशितदूरदिङ्मुखः।

---

मनोहरैरिति।—[ अथ, प्रकृतिमनोरमाऽऽकृतिः ] स्वभावसुन्दर-मूर्त्तिः, [ समितिषु ] युद्धेषु, भीमं दर्शनं यस्य सः [ भीमदर्शनः, मुरजित् ] हरिः, [ मनोहरैः ] प्रकृतिमनोहरैः, समितिषु [ भयप्रदैः, सदैवतैः [ अधिदेवतायुक्तैः, [ सततम् अनपायिभिः, आयुधैः ] शार्ङ्गादिभिः, [ निजाङ्गवत् ] पृथगवस्थितैः शरीरैरिव, इत्युत्प्रेक्षा। [ असेव्यत ] सेवितः॥ २६॥

अवारितमिति।—[ अथ ] आयुधसन्निधानानन्तरं, [ सः ] हरिः, [ उभयेषु ] द्वयेषु, द्विविधेष्वित्यर्थः ; [ क्षमाभृतां ] राज्ञां गिरीणाञ्च, [ कटकान्तरेष्वपि ] शिविराभ्यन्तरेषु नितम्बावकाशेषु च, [ भूरिशः ] बहुशः, [ अवारितम् ] अप्रतिहतं, [ गतं ] प्रस्थितं, [ मुहुः ] असकृत्, [ युधि, क्षतसुरशत्रुशोणितप्लुतप्रधिं ] क्षतानां सुरशत्रूणाम् असुराणां, शोणितैः प्लुताः सिक्ताः, प्रधयो नेमयो यस्य तम्। 'चक्रधारा प्रधि-र्नेमिः' इति हलायुधः। [ रथम्, अधिरोहति स्म ] आरुरोह॥ २७॥

प्रकम्पितस्थिरतरयष्टि तत्क्षणं
पतत्पतिः पदमधिकेतनं दधौ ॥ २८ ॥
गभीरताविजितमृदङ्गनादया
स्वनश्रिया हतरिपुहंसहर्षया ।
प्रमोदयन्नथ मुखरान् कलापिनः
प्रतिष्ठते नवघनवद्रथः स्म सः ॥ २९ ॥

---

उपेत्येति ।—[च] किञ्चेति चार्थः । [पतत्पतिः] अण्डजमण्डलेश्वरः, गरुड इत्यर्थः । 'पतत्पत्त्ररथाण्डजाः' इत्यमरः । [त्विषा] कान्त्या, [कपिशितदूरदिङ्मुखः] कपिशितानि कपिलीकृतानि, दूराणि दिङ्मुखानि येन सः, [स्वनगुरुपक्षमारुतं] स्वनेन गुरुर्महान्, पक्षमारुतो यस्मिन् कर्मणि तत्तथा, [दिवः] स्वर्गात्, [उपेत्य] आगत्य, [तत्क्षणं] तस्मिन् क्षणे, [प्रकम्पितस्थिरतरयष्टि] प्रकम्पिता स्थिरतरा निश्चला, यष्टिरावासस्तम्भो यस्मिन् तत्तथा, [अधिकेतनं] केतने । विभक्त्यर्थेऽव्ययीभावः । [पदं, दधौ] निहितवान् ॥ २८ ॥

गभीरतेति ।—[अथ] गरुडागमनानन्तरं, [स रथः, नवघनवत्] नवघनेन नवाम्बुदेन तुल्यम् । "तेन तुल्यम्—" (५।१।११५ पा०) इति वतिप्रत्ययः । [गभीरताविजितमृदङ्गनादया] गभीरतया गाम्भीर्येण, विजितो मृदङ्गनादो यया तया, [हतरिपुहंसहर्षया] हतो रिपुहंसानां हंसानामिव रिपूणां, हर्षो यया तया, [स्वनश्रिया] ध्वनिसम्पदा, [मुखरान्] कूजतः, [कलापिनः] मयूरान्, [प्रमोदयन्, प्रतिष्ठते स्म] प्रतस्थे । "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम् । "लट् स्मे" (३।२।११८ पा०) इति भूते लट् । तद्धितगता श्रौती पूर्णोपमा ॥ २९ ॥

निरन्तरस्थगितदिगन्तरं ततः
समुच्चलद्बलमवलोकयन् जनः।
विकौतुकः प्रकृतमहाप्लवेऽभवत्
विशृङ्खलं प्रचलितसिन्धुवारिणि ॥ ३० ॥

वबृंहिरे गजपतयो महाऽऽनकाः
प्रदध्वनुर्जयतुरगा जिहेषिरे।
असम्भवद्भिरिवरगह्वरैरभूत्
तदा रवैर्दलित इव स्व आश्रयः ॥ ३१ ॥

---

निरन्तरेति।—[ ततः ] रथप्रस्थानानन्तरं, [ निरन्तरस्थगितदिगन्तरं] निरन्तरं नीरन्ध्रं, स्थगितानि आच्छादितानि, दिगन्तराणि येन तत्, [ समुच्चलत् ] प्रतिष्ठमानं, तत् [ बलं ] सैन्यम्, [ अवलोकयन्, जनः ] लोकः, [ प्रकृतमहाप्लवे ] प्रकृतः प्रक्रान्तः, महाप्लवो महापूरः, जगत्संप्लवरूप इत्यर्थः, येन तस्मिन्, [विशृङ्खलम्] अप्रतिघातं, [प्रचलितसिन्धुवारिणि] प्रचलितं क्षुभितं, यत् सिन्धोरब्धेः, वारि तस्मिन्, [विकौतुकः] निवृत्तकौतूहलः, [अभवत्] ; कल्पान्तक्षुभितवारिधिवारिवच्च तद्बलं सकलजगत्संहारशङ्कया अलक्ष्यतेत्यर्थः। अलान्यदर्शनादन्यदिदृक्षानिवृत्तेर्बलवारिधिवारिणोरैकत्वाऽऽक्षेपे बाधात् साहश्याऽऽक्षेपात् वाक्यभेदेन प्रतिबिम्बकरणात् निदर्शनाऽलङ्कारः ॥ ३० ॥

वबृंहिर इति।—[गजपतयः, वबृंहिरे] वबृंहुः, बृंहणं चक्रुरित्यर्थः। 'बृहि बृद्धौ शब्दे च' आत्मनेपदं चिन्त्यम् ; * अत एव भट्टमल्लः,—

---

* कर्मव्यतीहारे शब्दार्थानामात्मनेपदमनुशिष्टं, व्यतिपूर्वकत्वाभावेऽपि "प्रियामुखं किम्पुरुषश्चुचुम्बे" इत्यादिकुमारप्रयोगवदस्य साधुत्वं सम्पादनीयम्, एतदेवात्र चिन्ताबीजमिति।

अनारतं रसति जयाय दुन्दुभौ
मधुद्विषः फलदलघुप्रतिस्वनैः ।
विनिष्पतन्मृगपतिभिर्गुहामुखै-
र्गताः परां मुदमहसन्निवाद्रयः ॥ ३२ ॥

जडीकृतश्रवणपथे दिवौकसां
चमूरवे विशति सुराद्रिकन्दराः ।
अनर्थकैरजनि विदग्धकामिनी-
रतान्तरक्वणितविलासकौशलैः ॥ ३३ ॥

---

'हेषते ह्रेषतेऽश्वानां हस्तिनां बृंहतीति च' इति । [ महाऽऽनकाः प्रदध्वनुः], जयशीलास्तुरगाः [जयतुरगाः, जिहेषिरे] हेषां चक्रुरित्यर्थः । 'हेषृ ह्रेषृ अव्यक्ते शब्दे' । [ तदा ] तस्मिन् काले, [ असम्भवद्गिरिवरगह्वरैः] असम्भवन्ति अन्तर्धातुमपर्याप्नुवन्ति, गिरिवरगह्वराणि येषां तैः, गिरिवरगह्वरेषु अमाद्भिः, अवर्त्तमानैरित्यर्थः ; [ रवैः ] बृंहणादिघोषैः, [ स्व आश्रयः ] स्वसमवायिकारणमाकाशः, [ दलित इव ] विदारित इव, [अभूत्] इत्युत्प्रेक्षा । तया तेषामतितीव्रत्वं व्यज्यते ॥ ३१ ॥

अनारतमिति ।—[ मधुद्विषः ] हरेः, [ दुन्दुभौ ] रणभेर्य्यां, [ जयाय, अनारतम्] अश्रान्तं, [रसति] ध्वनति सति, [ फलदलघुप्रतिस्वनैः ] फलन्तः सङ्क्रामन्तः, अलघवो महान्तः, प्रतिस्वनाः प्रतिध्वनयो येषु तैः, [ विनिष्पतन्मृगपतिभिः ] विनिष्पतन्तः क्षोभान्निर्गच्छन्तः, मृगपतयः सिंहा येभ्यस्तैः, [ गुहामुखैः ] गुहाभिरेव मुखैः, [ अद्रयः परां मुदं गताः ] सन्तः, [ अहसन्निव ]। सिंहानां धावल्यात् ध्वनियोगाच्च हसनोत्प्रेक्षा ॥ ३२ ॥

जडीकृतेति ।—दिवमोको येषां तेषां [ दिवौकसां ] देवानां, कन्दरान्तर्गतानामित्यर्थः ; [ जडीकृतश्रवणपथे ] बधिरीकृतश्रोत्र-

अरातिभिर्युधि सहयुध्वनो हतान्
जिघृक्षवः श्रुतरणतूर्य्यनिःस्वनाः।
अकुर्वत प्रथमसमागमोचितं
चिरोज्झितं सुरगणिकाः प्रसाधनम् ॥३४॥
प्रचोदिताः परिचितयन्तृकर्मभि-
र्निषादिभिर्विदितयताङ्कुशक्रियैः।

---

मार्गे। सापेक्षत्वेऽपि गमकत्वात् समासः। [ चमूरवे ] सेनाघोषे, [ सुराद्रिकन्दराः ] मेरुगह्वराणि, [ विशति ] सति, [ विदग्धकामिनीरतान्तरक्वणितविलासकौशलैः ] विदग्धकामिनीनां प्रौढाङ्गनानां, रतान्तरे सुरतमध्ये, क्वणितविलासाः कूजितसम्पदः, तासु यानि कौशलानि तैः, [ अनर्थकैः, अजनि ] जातम् ; प्रेयसां बाधिर्य्यादिति भावः। अत्र शैलजाड्यस्य विशेषणगत्या क्वणितानर्थक्यहेतुत्वात् काव्यलिङ्गम् ; तदुपजीवितेन क्वणितानामानर्थक्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ३३ ॥

अरातिभिरिति।—सह युध्यत इति तान् [ सहयुध्वनः ]। “सहे च” ( ३।२।९६ पा० ) इति क्वनिप्। अत एव [ अरातिभिर्युधि हतान्, जिघृक्षवः ] ग्रहीतुमिच्छवः, स्वयंवरणकामाः इत्यर्थः। ग्रहेः सन्नन्तादुप्रत्ययः। [ सुरगणिकाः ] अप्सरसः, [ श्रुतरणतूर्य्यनिःस्वनाः ] सत्यः, [चिरोज्झितं] ; प्रायेण प्रवीरसंवादाभावादिति भावः। [ प्रथमसमागमोचितम् ] अतिमोहनमित्यर्थः ; प्राथम्यञ्च पुंसामिदं प्रथमत्वादिति भावः ; [ प्रसाधनम् अकुर्वत ] परिष्कृतवत्य इत्यर्थः। ‘प्रतिकर्म प्रसाधनम्’ इत्यमरः। अत्र स्वयंवरणतूर्य्यश्रवणयोर्विशेषणगत्या प्रसाधनहेतुत्वात् काव्यलिङ्गम् ॥ ३४ ॥

प्रचोदिता इति।—[ परिचितयन्तृकर्मभिः ] परिचितं यन्तकर्म

गजाः सकृत्करतललोलनालिका-
हता मुहुःप्रणदितघण्टमाऽऽययुः ॥ ३५ ॥
सविक्रमक्रमणचलैरितस्ततः
प्रकीर्णकैः क्षिपत इव क्षिते रजः ।
व्यरंसिषुर्न खलु जनस्य दृष्टय-
स्तुरङ्गमादभिनवभाण्डभारिणः ॥ ३६ ॥

---

सादिकृत्यं यैस्तैः, स्वभ्यस्तगजशास्त्रैरित्यर्थः; अत एव [ विदितयताङ्कुशक्रियैः ] विदिते यताङ्कुशक्रिये यतयाताख्ये पदाङ्कुशकर्मणी यैस्तैः । 'पादकर्म यतं प्रोक्तं यातमङ्कुशवारणम्' इति हलायुधः । [ निषादिभिः ] यन्तृभिः, [ प्रचोदिताः ] प्रेरिताः, [ गजाः, सकृत्करतललोलनालिकाहताः] सकृदेकवारमेव, करतललोलाभिः पाणितलचलिताभिः, नालिकाभिरन्तर्नाड़िकाभिः, हतास्ताड़िताः, तथाऽपि [ मुहुःप्रणदितघण्टं ] मुहुः प्रणदिता असकृत ध्वनन्तो, घण्टा यस्मिन् कर्मणि तत् तथा, [ आययुः ] प्रस्थातुमागताः । स्वभावोक्तिः ॥ ३५ ॥

सविक्रमेति ।—[ सविक्रमक्रमणचलैः ] सविक्रमेण साङ्घ्रिविन्यासविशेषेण, क्रमणेन गमनेन, चलैः, [ प्रकीर्णकैः ] चामरैः । 'चामरन्तु प्रकीर्णकम्' इत्यमरः । [क्षितेः, रजः] स्वखुरोद्गतम्, [ इतस्ततः, क्षिपतः ] निरस्यतः, [इव], स्थितादित्युत्प्रेक्षा । [अभिनवभाण्डभारिणः] प्रत्यग्राऽऽभरणधारिणः । 'स्याद्भाण्डमश्वाऽऽभरणे' इत्यमरः । [ तुरङ्गमात् ] तुरङ्गमेभ्यः । जातावेकवचनम् । "जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्" (वा०) इत्यपादानत्वम् । [ जनस्य दृष्टयः, न व्यरंसिषुः ] न विरताः, [खलु] । रमेर्लुङि "व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम् । "यमरमनमातां सक्च" ( ७।२।७३ पा० ) इति सगिडागमौ, इटि "नेटि" ( ७।२।४ पा० ) इति वृद्धिप्रतिषेधः ॥ ३६ ॥

चलाङ्गुलीकिसलयमुद्धतैः करै-
रनृत्यत स्फुटकृतकर्णतालया ।
मदोदकद्रवकटभित्तिसङ्गिभिः
कलस्वरं मधुपगणैरगीयत ॥ ३७ ॥

असिच्यत प्रशमितपांसुभिर्मही
मदाम्बुभिर्धृतनवपूर्णकुम्भया ।
अवाद्यत श्रवणसुखं समुन्नमत्-
पयोधरध्वनिगुरु तूर्य्यमाऽऽननैः ॥ ३८ ॥

---

अथ विशेषकेणाऽऽह, चलेत्यादि ।—[ स्फुटकृतकर्णतालया ] स्फुटं कृतः कर्णतालः कर्णताड़नं यया तया, द्विपघटया कर्त्र्या । [ चलाङ्गुलीकिसलयं ] चलाङ्गुल्य एव किसलया यस्मिन् कर्मणि तत्तथा, [ उद्धतैः, करैः ] हस्तैः, [ अनृत्यत ] अनर्त्ति । भावे लङ् । तथा [मदोदकद्रवकटभित्तिसङ्गिभिः ] मदोदकेन द्रवासु आर्द्रासु, कटभित्तिषु गण्डस्थलेषु, सङ्गिभिः आसक्तैः, [ मधुपगणैः ] भ्रमरगणैः, [ कलस्वरं ] मधुरस्वरम्, [ अगीयत ] गीतम् । भावे लङ् ॥ ३७ ॥

असिच्यतेति ।—[ धृतनवपूर्णकुम्भया ] धृतौ नवौ पूर्णकुम्भौ शिरःपिण्डकलशौ यया तया, द्विपघटया कर्त्र्या । 'कुम्भौ घटेभमूर्द्धांशौ' इत्यमरः । [ प्रशमितपांसुभिः मदाम्बुभिः मही, असिच्यत ] सिक्ता ; [ आननैः ] मुखैः, करणैः । [ श्रवणसुखं ] श्रवणयोः सुखयतीति सुखं सुखकरम् । 'सुखहेतौ सुखे सुखम्' इति शब्दार्णवे । [ समुन्नमत्पयोधरध्वनिगुरु ] उद्यन्मेघगर्जितगम्भीरं, [ तूर्य्यम्, अवाद्यत ] वादितम् ; स्वमुखवृंहणैरेव तूर्य्यं सम्पादितमित्यर्थः ॥ ३८ ॥

उदासिरे पवनविधूतवासस-
स्ततस्ततो गगनलिहश्च केतवः।
यतः पुरः प्रतिरिपु शार्ङ्गिणः स्वयं
व्यधीयत द्विपघटयेति मङ्गलम् ॥ ३९ ॥

विशेषकम्।

न शून्यतामगमदसौ निवेशभूः
प्रभूततां दधति बले चलत्यपि।
पयस्यभिद्रवति भुवं युगावधौ
सरित्पतिर्न हि समुपैति रिक्तताम् ॥ ४० ॥

---

उदासिरे इति।—[ पवनविधूतवाससः ] पवनेन विधूतवाससः कम्पितपटाः, [ गगनलिहः ] अभ्रङ्कषाः, [केतवश्च] ध्वजाश्च, [ततस्ततः, उदासिरे ] उत्क्षिप्ताः, [ इति ] इत्थं, [ द्विपघटया, प्रतिरिपु ] रिपून् प्रति। आभिमुख्येऽव्ययीभावः। [ यतः ] गच्छतः। इणो लटः शत्रादेशः। [ शार्ङ्गिणः, पुरः ] अग्रे, [ स्वयं मङ्गलं, व्यधीयत ] विहितम्। अत्र श्लोकद्वये प्रस्तुतद्विपघटाविशेषणसाम्यादप्रस्तुतमङ्गलाचरणपरपुरन्ध्रीप्रतीतिः समासोक्तिरलङ्कारः ॥ ३९ ॥

नेति।—[ प्रभूततां ] भूमानं, [ दधति ] दधाने, [ बले ] सैन्ये, [चलति] प्रतिष्ठमाने [अपि असौ, निवेशभूः] सेनानिवेशभूमिः, [शून्यतां] रिक्ततां, [ नागमत् ]; तथा हि, [ युगावधौ ] युगान्ते, [ पयसि भुवम्, अभिद्रवति] अभिप्लवमाने सति, [सरित्पतिः] समुद्रः, [रिक्ततां न समुपैति हि ]। दृष्टान्तालङ्कारः ॥ ४० ॥

यियासितामथ मधुभिद्विवस्वता
जनो जरन्महिषविषाणधूसराम् ।
पुरः पतत्परबलरेणुमालिनी-
मलक्षयद्दिशमभिधूमितामिव ॥ ४१ ॥

मनस्विनामुदितगुरुप्रतिश्रुतिः
श्रुतस्तथा न निजमृदङ्गनिःस्वनः ।
यथा पुरः समरसमुद्यतद्विष-
द्बलाऽऽनकध्वनिरुदकर्षयन्मनः ॥ ४२ ॥

---

यियासितामिति ।—[ अथ, मधुभिद्विवस्वता ] मधुभिद्धरिरेव विवस्वान् तेन, [ यियासितां ] यातुमिष्टां, जिगमिषितामित्यर्थः । यातेः सन्नन्तात् कर्मणि क्तः । [ पतत्परबलरेणुमालिनीं ] पततोऽभिधावतः, परबलस्य शत्रुसैन्यस्य, रेणून् मलते धारयतीति तन्मालिनी ताम् । मलते-र्णिनिप्रत्ययः । अत एव [ जरन्महिषविषाणधूसरां ] जरतो वृद्धस्य, महिषस्य विषाणवद्धूसरां धूम्रां, [ पुरः ] अग्रे, [दिशम्] ; अभितो धूमो-ऽस्याः सञ्जातस्ताम् [ अभिधूमितामिव, जनः ] लोकः, [ अलक्षयत् ]। मधुभिद्विवस्वतेति रूपकोत्थापिता अग्रदिशि धूमितत्वोत्प्रेक्षेति सङ्करः। अत्राऽऽहुः,—'अङ्गारिणी दिग्रविविप्रयुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता। प्रधूमिता यास्यति यां दिनेशः शेषाः प्रशस्ताः शुभदाश्च ताः स्युः ॥' इति ॥ ४१ ॥

मनस्विनामिति ।—[ उदितगुरुप्रतिश्रुतिः ] उदिता उत्पन्ना, गुरु-र्गभीरा, प्रतिश्रुतिः प्रतिध्वनिर्यस्य सः, [ निजमृदङ्गनिःस्वनः ] स्वसेना-तूर्य्यघोषः, [श्रुतः] सन्, [तथा मनस्विनां मनः, नोदकर्षयत्] न आचकर्ष, कृषिरयं स्वार्थे ण्यन्तः । [ यथा, पुरः ] अग्रे, [ समरसमुद्यतद्विषद्बला-

यथा यथा पटहरवः समीपता-
मुपागमत् स हरिवराग्रतःसरः ।
तथा तथा हृषितवपुर्मुदाकुला
द्विषाञ्चमूरजनि जनीव चेतसा ॥ ४३ ॥
प्रसारिणी सपदि नभस्तले ततः
समीरणभ्रमितपरागरूषिता ।

---

ऽऽनकध्वनिः ] समरसमुद्यते समरोद्युक्ते, द्विषद्बले शत्रुसैन्ये, ये आनकाः तेषां ध्वनिः, उदकर्षयत् । एतेनैषां वीरस्थायी महोत्साह उक्तः । अत्र भयङ्करस्यापि परसैन्यघोषस्योत्साहजनकत्वं महावीरेषु न विरुध्यत इति विरोधाऽऽभासोऽलङ्कारः ; भीहेतौ सत्यपि भयानुत्पत्तेर्विशेषोक्ति-र्विरुद्धकार्य्योत्पत्तेर्विषमभेदश्चेति सङ्करः ॥ ४२ ॥

यथा यथेति ।—[ हरिवराग्रतःसरः ] हरिर्वरो जामातेव हरिवरः। 'वरो जामातृवय्ययोः' इति विश्वः । तस्याग्रतः सरतीत्यग्रतःसरो-ऽग्रेसरः, "पुरोऽग्रतोऽग्रेषु सर्त्तेः" ( ३।२।१८ पा० ) इति टप्रत्ययः । [ सः ] पूर्वोक्तः, [ पटहरवः, यथा यथा ] यावद्यावत्, [ समीपताम् ] आसन्नताम्, [ उपागमत्, तथा तथा ] तावत्तावत्, [ द्विषां ] द्विषतां, [चमूः, जनीव] बधूरिव । 'जनी सीमन्तिनी बधूः' इति विश्वः । [चेतसा, मुदाकुला ] आनन्दाऽऽविला, [ हृषितवपुः ] रोमाञ्चिताङ्गी । "हृषे-र्लोमसु" ( ७।२।२९ पा० ) इति इडागमः । [ अजनि ] जाता । जनेः कर्त्तरि लुङ्, "दीपजन—" ( ३।१।६१ पा० ) इत्यादिना चिण्प्रत्ययः । वधूवरसमागमवत् प्रतिद्वन्द्विसमागमो महोत्साहवर्द्धनो वीरसेनाया इत्युपमाऽर्थः ; तेन सैन्ययोरन्योऽन्यशब्दश्रवणकारिणी प्रत्यासत्तिरासी-दिति व्यज्यते ॥ ४३ ॥

प्रसारिणीति ।—[ ततः ] श्रवणानन्तरं, [ सपदि ] अविलम्बेन,

व्यभाव्यत प्रलयजकालिकाऽऽकृति-
र्विदूरतः प्रतिबलकेतनाऽऽवलिः ॥ ४४ ॥

क्षणेन च प्रतिमुखतिग्मदीधिति-
प्रतिप्रभास्फुरदसिदुःखदर्शना ।
भयङ्करा भृशमपि दर्शनीयतां
ययावसावसुरचमूश्च भूभृताम् ॥ ४५ ॥

पयोमुचामभिपततां दिवि द्रुतं
विपर्य्ययः परित इवाऽऽतपस्य सः ।

---

[ नभस्तले, प्रसारिणी ] व्याप्ता, [ समीरणाभ्रमितपरागरूषिता ] समीरणेन वायुना, भ्रमितेन परागेण रूषिता रूक्षीकृता, अत एव [प्रलयजकालिकाऽऽकृतिः] प्रलयजायाः कल्पान्तप्रादुर्भूतायाः, कालिकाया महाकाल्याः, आकृतिरिवाऽऽकृतिर्यस्याः सा, [प्रतिबलकेतनाऽऽवलिः] प्रतिबले प्रतिपक्षसैन्ये, केतनाऽऽवलिर्ध्वजपंक्तिः, [विदूरतः ] दूरात्, [ व्यभाव्यत ] अलक्ष्यत ; एतावता प्रत्यासत्तिरासीदित्यर्थः । उपमाऽलङ्कारः ॥ ४४ ॥

क्षणेनेति ।—[ प्रतिमुखतिग्मदीधितिप्रतिप्रभास्फुरदसिदुःखदर्शना ] प्रतिमुखस्याभिमुखस्य, तिग्मदीधितेः उष्णांशोः, प्रतिप्रभाभिः प्रतिफलितदीप्तिभिः, स्फुरद्भिर्दीप्यमानैः, असिभिः खड्गैः, दुःखं दुष्करं, दर्शनं यस्याः सा, दुर्दर्शेत्यर्थः, [ असौ, असुरचमूः ] चैद्यसेना, [ च क्षणेन च, भूभृतां] हरिसैनिकानां, [भृशं], भयं करोतीति [भयङ्कराऽपि]। "मेघर्त्तिभयेषु कृञः" ( ३।२।४३ पा० ) इति खच्प्रत्ययः। [ दर्शनीयतां ] मनोहरतामिति विरोधः। दृष्टिविषयतां [ ययौ ], इत्यविरोधः। अत एव विरोधाऽऽभासोऽलङ्कारः ॥ ४५ ॥

पयोमुचामिति ।—[ अथ ] असुरसेनादर्शनानन्तरं, [ समविष-

समक्रमः समविषमेष्वथ क्षणात्
क्षमातलं बलजलराशिरानशे ॥ ४६ ॥
ममौ पुरः क्षणमिव पश्यतो महत्
तनूदरस्थितभुवनत्रयस्य तत् ।
विशालतां दधति नितान्तमायते
बलं द्विषां मधुमथनस्य चक्षुषि ॥ ४७ ॥
भृशस्विदः पुलकविकाशिमूर्त्तयो
रसाधिके मनसि निविष्टसाहसाः ।

---

मेषु] निम्नोन्नतेषु, [समक्रमः] तुल्यसञ्चारः, [सः, बलजलराशिः] सैन्यसागरः, [दिवि] व्योम्नि, [द्रुतम्, अभिपतताम्] अभिधावतां, [पयोमुचां] सम्बन्धी, [आतपस्य विपर्य्ययः इव] छायेव, [परितः क्षणात्, क्षमातलं] भूतलं, [आनशे]। 'अशू व्याप्तौ' "अत आदेः" (७।४।७० पा०) इत्यभ्यासदीर्घः। "अश्नोतेश्च" (७।४।७२ पा०) इति नुमागमः। उपमाऽलङ्कारः ॥ ४६ ॥

ममाविति।—[पुरः] अग्रे, [क्षणमिव पश्यतः] क्षणमात्रं विलोकयतः। इवशब्दो वाक्यालङ्कारे। [तनूदरस्थितभुवनत्रयस्य] तनौ क्षोदीयसि, उदरे कुक्षौ, स्थितं भुवनत्रयं यस्य तस्य, [मधुमथनस्य] हरेः सम्बन्धिनि, [विशालतां] वैपुल्यं, [दधति] दधाने, [नितान्तम्, आयते] दीर्घे, द्राघीयसि इत्यर्थः, [चक्षुषि तत् महत् द्विषां बलं, ममौ] ववृते; क्षणमीक्षणादेव परबले इयत्तां परिचिच्छेदेत्यर्थः; क्षोदीयस्यपि कुक्षौ भुवनत्रयं परिच्छिन्दतो हरेरतिमहति चक्षुषि अल्पबलपरिच्छेदः कियानिति भावः। अत्र भुवनत्रयापेक्षया आधारस्य कुक्षेरल्पत्वात् चक्षुरपेक्षया आधेयस्य बलस्य अल्पत्वाच्चाधिकालङ्कारौ सङ्कीर्य्येते ॥ ४७ ॥

भृशेति।—[क्षितिपचमूवधूगणाः] क्षितिपचम्वो वध्व इवेत्युप-

मुखे युधः सपदि रतेरिवाभवन्
ससम्भ्रमाः क्षितिपचमूवधूगणाः ॥ ४८ ॥
ध्वजांशुकैर्ध्रुवमनुकूलमारुत-
प्रसारितैः प्रसभकृतोपहूतयः ।
यदूनभि द्रुततरमुद्यताऽऽयुधाः
क्रुधा परं रयमरयः प्रपेदिरे ॥ ४९ ॥
हरेरपि प्रति परकीयवाहिनी-
रभिष्यदं प्रववृतिरे चमूचराः ।

---

मितसमासः ; रतेरिवेति लिङ्गात् । तासां गणाः, [ युधो मुखे ]युद्धारम्भे, [ रतेः ] मुखे रत्यारम्भे इत्यर्थः, [ इव सपदि ] ; भृशं स्विद्यन्तीति [ भृशस्विदः ]। क्विप् । [ पुलकविकाशिमूर्त्तयः ] रोमाञ्चोदञ्चितगात्राः, [ रसाधिके ] रसः वीरः शृङ्गारश्च, तेनाधिके निर्भरे, [ मनसि, निविष्टसाहसाः] प्रविष्टधार्ष्ट्याः, [ ससम्भ्रमाः ] सत्वराः, [ अभवन् ]। यादृशी वधूनां सुरतरसकर्मणि उत्कण्ठा, तादृशी चमूनां समरकर्मणि इति उपमाऽर्थः ; तेनैतासां समरसुरतयोः समरसत्वं व्यज्यते ॥ ४८ ॥

ध्वजांशुकैरिति ।—[ अरयः ] चैद्यपक्षाः, [अनुकूलमारुतप्रसारितैः] अनुकूलमारुतेन प्रसारितैः, [ ध्वजांशुकैर्ध्रुवं, प्रसभकृतोपहूतयः ] प्रसभेन बलात्कारेण, कृतोपहूतयः कृताह्वाना इवेत्यर्थः, [ यदून् अभि ] यादवान् प्रति, [ द्रुततरम्, उद्यताऽऽयुधाः ] उत्क्षिप्ताऽऽयुधाः सन्तः, [ क्रुधा ] क्रोधेन, [परम्] अधिकं, [रयं] त्वरां, [प्रपेदिरे]। ध्वजांशुकदर्शनोत्थक्रोधहेतुकस्य शीघ्राभिपातस्य ध्वजाह्वानहेतुकत्वमुत्प्रेक्ष्यते ध्रुवमिति ॥ ४९ ॥

हरेरिति ।—[ हरेरपि ], चमूषु चरन्तीति [ चमूचराः ] सैनिकाः । "चरेष्टः" (३।२।१६ पा०)इति टप्रत्ययः । [परकीयवाहिनीः] परेषामिमाः

विलम्बितुं न खलु सहा मनस्विनो
विधित्सतः कलहमवेक्ष्य विद्विषः ॥ ५० ॥

उपाऽऽहितैर्वपुषि निवातवर्मभिः
स्फुरन्मणिप्रसृतमरीचिसूचिभिः ।
निरन्तरं नरपतयो रणाजिरे
रराजिरे शरनिकराऽऽचिता इव ॥ ५१ ॥

---

परकीयाः, वाहिनीः सेनाः, [ प्रति अभिस्यदम् ] अभिकरयं यथा तथा । 'रंहस्तरसी तु रयः स्यदः' इत्यमरः । [ प्रवबृतिरे ] प्रवृत्ताः । तथा हि, [ मनस्विनः ] धीराः, [ कलहं ] युद्धं, [ विधित्सतः ] विधातुमिच्छतः । दधातेः सन्नन्ताल्लटः शतरि रूपम् । तान् [ विद्विषः ] शत्रून्, [ अवेक्ष्य विलम्बितुम् ] । "शकधृष—" (३।४।६५ पा०) इत्यादिना तुमुन्प्रत्ययः । सहन्ते इति [ सहाः ] क्षमाः । पचाद्यच् । [ न खलु ] । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५० ॥

उपाहितैरिति ।—[ रणाजिरे ] रणाङ्गणे, [ नरपतयः ] राजानः, [ वपुषि, उपाऽऽहितैः ] आमुक्तैः, [ स्फुरन्मणिप्रसृतमरीचिसूचिभिः ] स्फुरन्तो मणिप्रसृता रत्ननिर्गताः, मरीचय एव सूचयो येषां तैः, [निवातवर्मभिः ] अच्छिद्रकवचैः । 'निवातो दृढसन्नाहे निर्वाते चाश्रयेऽपि च' इति विश्वः । 'तनुत्रं वर्म कञ्चुकम्' इत्यमरः । [ निरन्तरं ] नीरन्ध्रं, [ शरनिकराऽऽचिताः ] शरनिकरैराचिताः प्रोताः, [ इव रराजिरे ] । "फणां च सप्तानाम्" ( ६।४।१२५ पा० ) इति विकल्पादेत्वाभ्यासलोपाभावः । मणिरोचिषः साद्दश्याच्छरनिकरत्वोत्प्रेक्षा ॥ ५१ ॥

अथोच्चकैर्जरठकपोतकन्धरा-
तनूरुहप्रकरविपाण्डुरद्युति।
बलैश्चलच्चरणविधूतमुच्चरद्
घनाऽऽवलीरुदचरत क्षमारजः ॥ ५२ ॥

विषङ्गिभिर्भृशमितरेतरं क्वचित्
तुरङ्गमैरुपरि निरुद्धनिर्गमाः।
चलाचलैरनुपदमाहताः खुरै-
र्विबभ्रमुश्चिरमध एव धूलयः ॥ ५३ ॥

---

अथेति।—[अथ] अनन्तरम्, [उच्चकैः] उन्नतं, [जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति] जीर्णपारावतकन्धरारोमनिकरधूसरच्छायमित्युपमा। 'पारावतः कलरवः कपोतः' इत्यमरः। [बलैः] सैन्यैः, [चलच्चरणविधूतं] चलद्भिश्चरणैर्विधूतमुद्धूतं, प्रेरितं सदित्यर्थः, [उच्चरत्] उत्पतत्, [क्षमारजः] भूरेणुः, [घनाऽऽवलीः] घनपंक्तीः, [उदचरत] प्रचक्रामेत्यर्थः। "उदश्चरः सकर्मकात्" (१।३।५३ पा०) इत्यात्मनेपदम्। अस्य प्रत्युदाहरणमुच्चरदिति। अत्र भूरेणोर्मेघमण्डलाक्रमणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरुपमासङ्कीर्णा ॥ ५२ ॥

विषङ्गिभिरिति।—[चलाचलैः] चटुलैः, [खुरैः, अनुपदं] प्रतिपदम्, [आहताः] उद्धताः, [भृशम्, इतरेतरं] परस्परम्। निरन्तरमिति पाठे,—अभितो नीरन्ध्रं, [विषङ्गिभिः] मिथः श्लिष्टैः, [तुरङ्गमैरुपरि, निरुद्धनिर्गमाः] निरुद्धो निर्गमो यासां ताः, [धूलयः क्वचित् चिरम्, अध एव विबभ्रमुः]; नोत्पेतुरिति भावः। अत्रोद्धतानाम् अधोभ्रमणविरोधस्योपरि निर्गमरोधेन विशेषणगत्या परिहारात् काव्यलिङ्गसङ्कीर्णो विरोधाऽऽभासोऽलङ्कारः ॥ ५३ ॥

गरीयसः प्रचुरमुखस्य रागिणो
रजोऽभवद्व्यवहितसत्त्वमुत्कटम् ।
सिसृक्षतः सरसिजजन्मनो जगद्
बलस्य तु क्षयमपनेतुमिच्छतः ॥ ५४ ॥

पुरा शरक्षतिजनितानि संयुगे
नयन्ति नः प्रसभमसृञ्जि पङ्कताम् ।
इति ध्रुवं व्यलगिषुरात्तभीतयः
खमुच्चकैरनलसखस्य केतवः ॥ ५५ ॥

---

गरीयस इति ।—[ गरीयसः ] सर्वलोकपितामहत्वात् पूज्यतरस्य, अन्यत्र,—महत्तरस्य ; [ प्रचुरमुखस्य ] चतुर्मुखस्येत्यर्थः, अन्यत्र,—बहुप्रवाहस्य, [रागिणः] रक्तवर्णस्य, अन्यत्र,—रणे रागिणोऽनुरागवतः, एवम्भूतस्य [ सरसिजजन्मनः ] ब्रह्मणः, [ जगत्सिसृक्षतः ] जगत् स्रष्टुमिच्छतः सतः। सृजेः सन्नन्ताल्लटः शत्रादेशः। [ व्यवहितसत्त्वं ] तिरस्कृतसत्त्वगुणकम्, अन्यत्र,—तिरोहितजन्तुकं, [ रजः ] रजोगुणो रेणुश्च, [ उत्कटम् ] उद्रिक्तम्, [ अभवत्। बलस्य ] सैन्यस्य, [ तु, क्षयं ] जगत्क्षयम्, [ अपनेतुमिच्छतः ] सतः, अभवत्। अत्र ब्रह्मबलयोर्गरीयस्त्वादिसाधर्म्येऽपि रजःशब्देन एकस्य सिसृक्षोरन्यस्य संजिहीर्षोरिति व्यतिरेकः श्लेषोत्थापित इति सङ्करः ॥ ५४ ॥

पुरेति ।—[ संयुगे ] युद्धे सति, [ शरक्षतिजनितानि ] क्षतजानि, [ असृञ्जि ] रुधिराणि, [ नः ] अस्मान्, [ प्रसभं ] प्रसह्य, [ पङ्कतां पुरा, नयन्ति ] नेष्यन्ति। "यावत्पुरानिपातयोर्लट्" ( ३।३।४ पा० ) इति भविष्यदर्थे लट्। [ इति ] इत्थमालोक्य, [ ध्रुवम्, आत्तभीतयः ] प्राप्तभयाः सन्तः, [ अनलसखस्य ] अग्निमित्रस्य वायोः, [ केतवः ]

क्वचिल्लसद्घननिकुरम्बकर्बुरः
क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः।
क्वचिच्छरच्छशधरखण्डपाण्डुरः
खुरक्षतक्षितितलरेणुरुद्ययौ ॥ ५६ ॥

महीयसां महति दिगन्तदन्तिना-
मनीकजे रजसि मुखानुषङ्गिणि।
विसारितामजिहत कोकिलाऽऽवली-
मलीमसा जलदमदाम्बुराजयः ॥ ५७ ॥

---

रेणवः, तल्लिङ्गत्वात्तस्येति भावः ; [ उच्चकैः ] उन्नतं, [खम्] आकाशं, [ व्यलगिषुः ] वियदारूढा इत्यर्थः। ध्रुवमित्युत्प्रेक्षायाम् ॥ ५५ ॥

क्वचिदिति।—[क्वचित्, लसद्घननिकुरम्बकर्बुरः] लसन् घननिकुरम्बवत् नवाभ्रपटलवत्, कर्बुरः शबलः, [ क्वचित्, हिरण्मयकणपुञ्जपिञ्जरः ] कनकचूर्णराशिकपिशः, [ क्वचिच्छरच्छशधरखण्डपाण्डुरः, खुरक्षतक्षितितलरेणुः ] खुरैः क्षतस्य क्षितितलस्य रेणुः, [ उद्ययौ ] उज्जगाम। अलोपमात्रयस्य संसृष्टिः ॥ ५६ ॥

महीयसामिति।—[ महति, अनीकजे ] सेनासमुत्थे, [ रजसि महीयसां, दिगन्तदन्तिनां ] दिगन्ता एव दन्तिनः तेषां, [ मुखानुषङ्गिणि ] मुखानि पुरोभागा एव मुखानि आननानि इति श्लिष्टरूपकम् ; तेष्वनुषङ्गिणि लग्ने सति। [ कोकिलाऽऽवलीमलीमसाः ] कोकिलाऽऽवलीवत् मलीमसाः मलिनाः, [ जलदमदाम्बुराजयः ] जलदा दिङ्मुखसङ्गिन एव ये मेघाः, ते एव मदाम्बुराजयो मदरेखाः, [ विसारितां ] प्रसृमरत्वम्, [ अजिहत ] अगच्छन्, प्राप्ता इत्यर्थः ; पांशुपातस्य दन्तिनां मदहेतुत्वादिति भावः। तदुक्तं महाभारते,—
"स्त्रियो जारेण तुष्यन्ति गावः स्वच्छन्दचारतः। कुञ्जराः पांशुवर्षेण

शिरोरुहैरलिकुलकोमलैरमी
मुधा मृधे मृषत युवान एव मा ।
बलोद्धतं धवलितमूर्द्धजानिति
ध्रुवं जनान् जरत इवाकरोद्रजः ॥ ५८ ॥
सुसंहतैर्दधदपि धाम नीयते
तिरस्कृतिं बहुभिरसंशयं परैः ।

ब्राह्मणाः परनिन्दया ॥" इति । दिगन्तलम्बिनो मेघाः सेनारजोमेलनाद्बहुलीबभूवुरित्यर्थः । अत्र दिगन्तेषु तन्मेघेषु च दन्तित्वतन्मदत्वरूपणात् समस्तवस्तुवर्त्ति सावयवरूपकं, मुखमेव मुखमिति श्लिष्टपरम्परितमिति सङ्करः । अजिहतेति—ओ हाङो लङि तङ्, "श्नाभ्यस्तयोरातः" ( ६।४।११२ पा० ) इत्याकारलोपः, "अदभ्यस्तात्" ( ७।१।४ पा० ) इत्यदादेशः ॥ ५७ ॥

शिरोरुहैरिति ।—[अमी राजानः, [युवानः एव, अलिकुलकोमलैः] भ्रमरवृन्दमनोरमैः, [शिरोरुहैः] केशैरुपलक्षिता, [ मुधा ] वृथा, [मृधे] युद्धे । 'मृधमास्कन्दनम्' इति युद्धपर्य्यायेषु अमरः । [मा मृषत] न म्रियन्ताम् । म्रियतेर्माङि लुङि "न माङ्योगे" (६।४।७४ पा०) इत्यड्भावः, "उश्च" ( १।२।१२ पा० ) इति सिचः कित्त्वात् न गुणः । [ इति ] इत्थम् आलोच्येत्यर्थः, [ बलोद्धतं रजः ] कर्तृ । [ धवलितमूर्द्धजान् ] धवलीकृतकेशान्, [ जनान्, जरत इवाकरोत् ] वृद्धानिवाकरोदित्यर्थः । [ ध्रुवम् ] इत्युत्प्रेक्षायाम् । अत्रेवशब्दस्यावधारणार्थत्वात् न तेन पौनरुक्त्यम् । 'इवौपम्येऽवधारणे' इति विश्वः । 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि' इत्यमरः । "जीर्य्यतेरतृन्" ( ३।२।१०४ पा० ) इति अतृन्प्रत्ययः ॥ ५८ ॥

सुसंहतैरिति ।—[ धाम ] तेजः, [ दधदपि ] दधानोऽपि, तेजस्वी अपीत्यर्थः । [ परैः ] अन्यैः, [ सुसंहतैः ] सुसङ्गतैः, परैरैक्यङ्गतैश्च,

यतः क्षितेरवयवसम्पदोऽणव-

स्त्विषां निधेरपि वपुरावरीषत ॥ ५९ ॥

द्रुतद्रवद्रथचरणक्षतक्षमा-

तलोल्लसद्बहुलरजोऽवगुण्ठितम् ।

युगक्षयक्षणनिरवग्रहे जगत्

पयोनिधेर्जल इव मग्नमाबभौ ॥ ६० ॥

समुल्लसद्दिनकरवक्त्रकान्तयो

रजस्वलाः परिमलिताम्बरश्रियः ।

दिगङ्गनाः क्षणमविलोकनक्षमाः

शरीरिणां परिहरणीयतां ययुः ॥ ६१ ॥

---

[ बहुभिः तिरस्कृतिं नीयते । असंशयं ] निश्चितम् । अर्थाभावेऽव्ययीभावः । कुतः ?—[ यतः, अणवः] सूक्ष्माः, [क्षितेरवयवसम्पदः] रेणुसमूहयः, [ त्विषां निधेः ] सूर्य्यस्य, [ अपि वपुः, आवरीषत ] आच्छादितवत्यः । वृङो लुङि "वृतो वा" (७।२।३८ पा०) इति इटो दीर्घः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५९ ॥

द्रुतेति ।—[ द्रुतद्रवद्रथचरणक्षतक्षमातलोल्लसद्बहुलरजोऽवगुण्ठितं ] द्रुतं शीघ्रं, द्रवतां धावतां, रथानां चरणैश्चक्रैः, क्षतात् क्षुण्णात्, क्षमातलात् उल्लसता पतता, बहुलेन सान्द्रेण, रजसा अवगुण्ठितम् आच्छादितं, [जगत्, युगक्षयक्षणनिरवग्रहे] युगक्षयक्षणे कल्पान्तकाले, निरवग्रहे निष्प्रतिबन्धे, [ पयोनिधेर्जले मग्नमिवाऽऽबभौ ] इत्युत्प्रेक्षा ॥ ६० ॥

समुल्लसदिति ।—[ समुल्लसद्दिनकरवक्त्रकान्तयः ] समुल्लसन्ती दिनकरस्येव वक्त्रस्य कान्तिर्यासां ताः ; रजो रेणुरेव रज आर्त्तवमासामस्तीति [ रजस्वलाः ] । "रजःकृष्यासुतिपरिषदो वलच्" ( ५।२।११२ पा० )

निरीक्षितुं वियति समेत्य कौतुकात्
पराक्रमं समरमुखे महीभृताम् ।
रजस्तताविनिमिषलोचनोत्पल-
व्यथाकृति त्रिदशगणैः पलाय्यत ॥ ६२ ॥
विषङ्गिणि प्रतिपदमापिबत्यपो
हताचिरद्युतिनि समीरलक्ष्मणि ।

---

इत्यादिना मत्वर्थीयो वलच्प्रत्ययः। धूलिधूसराः उदक्याश्च, [ परिमलिताम्बरश्रियः ] परिमलिताः परितः सञ्जातमलाः, अम्बरस्याकाशस्येवाम्बरस्य वस्त्रस्य च, श्रीर्यासां ताः, अत एव [ अविलोकनक्षमाः ] विलोकनानर्हाः, दिश एवाङ्गनाः [ दिगङ्गनाः, शरीरिणां ] प्राणिनां, [ क्षणम् ] ईषत्कालं, [परिहरणीयताम् ] अगम्यतां, [ ययुः ] ; तस्मात् मलवद्वाससं न संविशेदित्यादिनिषेधादिति भावः। श्लिष्टपरम्परितरूपकम् ॥ ६१ ॥

निरीक्षितुमिति ।—[ त्रिदशगणैः ] देवगणैः, [ समरमुखे ] रणारम्भे, [ महीभृतां ] राज्ञां, [ पराक्रमं निरीक्षितुं वियति कौतुकात् समेत्य, रजस्तते ] रजस्तोमे, [ अनिमिषलोचनोत्पलव्यथाकृति ] न निमिषन्ति अनिमिषाणि पक्ष्मपातरहितानि। मिषेः पचाद्यच्, कुटादित्वात् न गुणः। तेषां लोचनोत्पलानां व्यथाकृति दुःखकारिण्यां सत्याम्। कृञः क्विप्। [ पलाय्यत ] अधाव्यत। भावे परापूर्वादयतेर्लङि तङ्, "उपसर्गस्यायतौ" (८।२।१९ पा०) इति रेफस्य लत्वम्। अत्र लोचनोत्पलानां व्यथाऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ ६२ ॥

विषङ्गिणीति ।—[ विषङ्गिणि ] विषक्ते, अत एव [ हताचिरद्युतिनि ] विरमिताचिरद्युतिनि, [ समीरलक्ष्मणि ] वातकेतौ, रजसि

शनैः शनैरुपचितपङ्कभारिकाः
पयोमुचः प्रययुरपेतवृष्टयः ॥ ६३ ॥
नभोनदीव्यतिकरधौतमूर्त्तिभि-
र्वियद्गतैरनधिगतानि लेभिरे ।
चलच्चमूतुरगखुराऽऽहतोत्पतन्-
महीरजःस्नपनसुखानि दिग्गजैः ॥ ६४ ॥
गजव्रजाऽऽक्रमणभरावनम्रया
रसातलं यदखिलमानशे भुवा ।

---

इत्यर्थः, [ प्रतिपदं ] प्रतिक्षणम्, [अपः] अम्भांसि, [आपिबति] आकर्षति सति, अत एव [ अपेतवृष्टयः ] निवृत्तवर्षाः, [ पयोमुचः ], उपचिताः प्रवर्द्धिताः, पङ्कभारिकाः पङ्कभरणानि येषां ते [ उपचितपङ्कभारिकाः] सन्तः । "पर्य्यायार्हणोत्पत्तिषु ण्वुल्" ( ३।३।१११ पा० ) इत्यर्हणार्थे ण्वुल्प्रत्ययः । अर्हणञ्च करणसामर्थ्यम् । अत एव भारात् [ शनैः शनैः, प्रययुः ] प्राप्ताः । अत्र पयोमुचां पङ्कभरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

नभोनदीति ।—[नभोनदीव्यतिकरधौतमूर्त्तिभिः ] नभोनदीव्यतिकरेण आकाशगङ्गाया अवगाहेन, धौतमूर्त्तिभिः क्षालिताङ्गैः, [ वियद्गतैः ] खेचरैः, अत एव [ दिग्गजैः, अनधिगतानि ] अननुभूतचराणि, [ चलच्चमूतुरगखुराऽऽहतोत्पतन्महीरजःस्नपनसुखानि ] चलद्भिश्चमूतुरगखुरैराहतम् अत एवोत्पतदुद्गच्छत्, महीरजस्तेन स्नपनमभिषेचनं, तेन यानि सुखानि तानि, [लेभिरे] । "कुञ्जराः पांशुवर्षेण—" इत्युदाहृतम् ( ५७ श्लोकः ) । अत्रापि दिग्गजानां रजःस्नपनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६४ ॥

गजेति ।—[ यत् ] यस्मात्, [गजव्रजाऽऽक्रमणभरावनम्रया ] गज-

नभस्तलं बहुलतरेण रेणुना
ततोऽगमत्त्रिजगदिवैकतां स्फुटम् ॥ ६५ ॥
समस्थलीकृतविवरेण पूरिता
महीभृतां बलरजसा महागुहाः ।
रहस्त्रपाविधुरवधूरतार्थिनां
नभःसदामुपकरणीयतां ययुः ॥ ६६ ॥
गते मुखच्छदपटसादृशीं दृशः
पथस्तिरोदधति घने रजस्यपि ।

---

व्रजानाम् आक्रमणभरेण पादक्षेपगौरवेण, अवनम्रया, [ भुवा अखिलं, रसातलं ] पातालम्, [ आनशे ] व्याप्तम् । यत् यस्माच्च, [ नभस्तलं बहुलतरेण रेणुना] आनशे, [ ततः ] कारणात्, [त्रिजगत्] जगत्त्रयम् । "तद्धितार्थों—" ( २।१।५१ पा० ) इत्यादिना समाहारे द्विगुः, "द्विगुरेकवचनम्" ( २।४।१ पा० ) इत्येकवचनम् । [ एकतां ] भूलोकताम्, [ इव अगमत् । स्फुटम् ] इत्युत्प्रेक्षायाम् ॥ ६५ ॥

समेति ।—[ समस्थलीकृतविवरेण ] समस्थलीकृतानि विवराणि निम्नस्थानानि येन तेन, [ बलरजसा पूरिताः, महीभृतां ] भूधराणां, [ महागुहाः, रहः ] रहसि । अत्यन्तसंयोगे द्वितीया । [ त्रपाविधुरवधूरतार्थिनां ] त्रपया विधुराणां विलक्षाणां, वधूनां रतं सुरतम्, अर्थयन्त इति तदर्थिनां, [नभःसदां] सुराणाम्, [उपकरणीयताम्] उपकारकत्वं, [ ययुः ]; तासां रजःपूरणात् पुंसामन्धकरणत्वादिति भावः । "कृत्यल्युटो बहुलम्" ( ३।३।११३ पा० ) इत्यनीयरः कर्तर्यर्थता । अत्र रजःपूरणस्य विशेषणगत्योपकारकहेतुत्वात् काव्यलिङ्गभेदः, तथोपकारकत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरिति सङ्करः ॥ ६६ ॥

मदानिलैरधिमधुचूतगन्धिभि-
द्विपा द्विपानभिययुरेव रंहसा ॥ ६७ ॥

मदाम्भसा परिगलितेन सप्तधा
गजान् जनः शमितरजश्चयानधः ।
उपर्य्यवस्थितघनपांशुमण्डला-
नलोकयत्ततपटमण्डपानिव ॥ ६८ ॥

---

गत इति ।—[ मुखच्छदपटसादृशीं ] छाद्यतेऽनेनेति छदः, मुखस्य छदो मुखच्छदः । "पुंसि संज्ञायां घः प्रायेण" ( ३।३।११८ पा० ) इति घप्रत्ययः, "छादेर्घेऽद्व्युपसर्गस्य" ( ६।४।९६ पा० ) इति ह्रस्वः । स चासौ पटश्च, तत्सादृशीं तत्सादृश्यम् । ब्राह्मणादित्वात् ष्यञ्प्रत्यये, "षिद्गौरादिभ्यश्च" ( ४।१।४१ पा० ) इति ङीष् । स च 'ष्यञः षित्करणादीकारो बहुलम्' (५अधि० २अध्या० ५६सू०) इति वामनवचनाद्वैकल्पिकः । [गते] प्राप्ते, गजानां युद्धपूर्वकाले मुखाऽऽवरणकारणात् तत्सदृशे इत्यर्थः, [घने] सान्द्रे, [रजसि, दृशः] दृष्टेः, [पथः] मार्गान्, [तिरोदधति] छादयति सति, [अपि, अधिमधुचूतगन्धिभिः] अधिमधोः अधिकमकरन्दस्य, चूतस्येव गन्धो येषां तैः । "उपमानाच्च"(५।४।१३७ पा०) इति गन्धस्येत्वे तदेकान्तग्रहणन्तु व्यभिचारि । [मदानिलैः] अभिज्ञानैः, [द्विपाः] गजाः, [ द्विपान् ] गजान् प्रति, [रंहसा] वेगेन, [ अभिययुरेव ]। अत्र तिरोहितदृष्टेरभियानविरोधस्य मदानिलैः परिहाराद्विरोधाऽऽभासोऽलङ्कारः ॥ ६७ ॥

मदाम्भसीति ।—[ सप्तधा ] । "करात् कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदस्रुतिः" इति पालकाप्ये । सप्तभिः स्रोतोभिः, [ परिगलितेन ] स्रुतेन, [ मदाम्भसा अधः, शमितरजश्चयान् ] शमितो रजश्चयो यैस्तान्, [ उपर्य्यवस्थितघनपांशुमण्डलान् ] उपर्य्यवस्थितानि तथैव स्थितानि,

अन्यूनोन्नतयोऽतिमात्रपृथवः पृथ्वीधरश्रीभृत-
स्तन्वन्तः कनकाऽऽवलीभिरुपमां सौदामनीदामभिः।
वर्षन्तः शममानयन्नुपलसच्छृङ्गारलेखाऽऽयुधाः
काले कालियकायकालवपुषः पांशून् गजाम्भोमुचः
॥ ६९ ॥

इति श्रीमाघकविकृते शिशुपालवधे महाकाव्ये
यदुवंशक्षोभणं नाम सप्तदशः सर्गः ॥ १७॥

---

घनानि सान्द्राणि, पांशुमण्डलानि पूर्वोत्थरजःपुञ्जा येषां तान्, [गजान्, जनः ] लोकः, [ ततपटमण्डपानिव ] तता उपरि वितताः, पटमण्डपाः येषां तानिव, इत्युत्प्रेक्षा ; [ अलोकयत् ] ॥ ६८ ॥

अन्यूनेति ।—[ अन्यूनोन्नतयः ] महोच्छ्रायाः, [ अतिमात्रपृथवः ] अत्यन्तविपुलाः, अत एव [ पृथ्वीधरश्रीभृतः ] शैलशोभाधारिण इति निदर्शनाऽलङ्कारः। [ कनकाऽऽवलीभिः ] आवरणहेतुहेमराजिभिः करणैः। सुदाम्ना पर्वतेनैकदिशः सौदामन्यो विद्युतः। "तेनैकदिक्" ( ४।३।११२ पा० ] इत्यण्प्रत्यये ङीप्। ताभिर्दामभिरिव [ सौदामनीदामभिः ] विद्युल्लताभिः, [ उपमां ] सादृश्यं, [ तन्वन्तः ]। 'तड़ित् सौदामनी विद्युत्' इत्यमरः। '—अतुलोपमाभ्याम्—' ( २।३।७२ पा० ) इति सदृशवचनस्यैव निषेधादिह सादृश्यवाचित्वात् तृतीया। * [ उपलसच्छृङ्गारलेखाऽऽयुधाः ] उपलसन्तः शृङ्गाराः सिन्दूरादिमण्डनान्येव,

---

* ननु "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" ( २।३।७२ पा० ) इति सूत्रे तुल्यार्थयोगे तृतीयायाः वैकल्पिकविधानात् पक्षे षष्ठी विहिता, तुलोपमयोस्तु प्रतिषेधात् तद्योगे केवलं षष्ठीति, एवञ्च कथमत्र तृतीया ? इति चेन्न, तत्र तयोः सदृशार्थकत्वे एव केवलं षष्ठी, न तु सादृश्यार्थकत्वे, तथात्वे तु तृतीयाषष्ठ्यौ स्याता-मेवेति, तेनात्र उपमाशब्दस्य सादृश्यार्थकत्वात् तृतीयाविधानं सङ्गतमेवेति सन्दर्भार्थः।

## अष्टादशः सर्गः।

—(०*०)—

सञ्जग्माते तावपायानपेक्षौ
सेनाम्भोधी घोरनादौ रयेण।
पक्षच्छेदात् पूर्वमेकत्र देशे
वाञ्छन्तौ वा सह्यविन्ध्यौ निलेतुम्॥ १॥

---

लेखाऽऽयुधानि सुरधनूंषि येषां ते तथोक्ताः। 'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने।' 'लेखो लेख्ये सुरे' इति च विश्वः। [कालियकायकालवपुषः] कालियस्य कालियनागस्य, कायवत् कालवपुषः कृष्णदेहाः, [गजाम्भोमुचः] गजा एव अम्भोमुचो मेघाः, [काले] योग्यकाले, [वर्षन्तः] मदाम्बु मुञ्चन्तः, [पांशून्, शमं] शान्तिम्, [आनयन्] प्रापयन्। रूपकालङ्कारः। शार्दूलविक्रीडितं वृत्तमुक्तम्॥ ६९॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाऽऽख्ये सप्तदशः सर्गः॥१७॥

---

अथाग्रिमसर्गे तुमुलयुद्धवर्णनाय सेनयोर्मेलनं तावदाह, सञ्जग्माते इति।—[अपायानपेक्षौ] अपायोऽपगमः, युद्धादपसरणमित्यर्थः, तस्यानपेक्षौ तमनिच्छन्तौ, युद्धादनिवर्त्तिनावित्यर्थः। ईक्षतेः पचाद्यचि नञ्समासः। [घोरनादौ] गम्भीरघोषौ, [तौ, सेनाम्भोधी] सेनासागरौ, [पक्षच्छेदात् पूर्वं]; पश्चादसम्भवादिति भावः। [एकत्र देशे] एकस्थाने, [निलेतुं] वस्तुम्। 'लीङ् गतौ' इति धातोस्तुमुन्प्रत्यये गुणः। [वाञ्छन्तौ] इच्छन्तौ, [सह्यविन्ध्यौ वा] सह्यविन्ध्याख्यौ पर्वताविव। 'वा स्यादि-

**पत्तिः पत्तिं वाहमेयाय वाजी**
**नागं नागः स्यन्दनस्थो रथस्थम् ।**
**इत्थं सेना वल्लभस्येव रागा-**
**दङ्गेनाङ्गं प्रत्यनीकस्य भेजे ॥ २ ॥**

---

कल्पोपमयोः' इति विश्वः । [ रयेण, सञ्जग्माते ] मिलितवन्तौ । संपूर्वाद्गच्छतेरकर्मकाल्लिटि "समो गम्यृच्छि—" ( १।३।२९ पा० ) इत्यादिना आत्मनेपदम् । अत्र सत्त्वविन्ध्ययोः सपक्षयोरप्येकत्र मिलनस्याप्रसिद्धस्य सम्भावनामात्रेणोक्तत्वात् उपमानाप्रसिद्धेर्नोपमा,किन्तूत्प्रेक्षेति सङ्क्षेपः । अस्मिन् सर्गे शालिनी वृत्तम् । "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति लक्षणात् ॥ १ ॥

सेनाऽम्भोधी सञ्जग्माते इत्युक्तं, तत्सङ्गतिप्रकारं तावद्वर्णयति, पत्तिरिति ।—[ पत्तिः ] पदातिः, [ पत्तिं ] पदातिम् । 'पदातिपत्तिपदगपादातिकपदातयः' इत्यमरः । [ एयाय ] प्राप । आङ्पूर्वादिणो लिट् । [ वाजी ] अश्वः, [ वाहम् ] अश्वम्, एयाय । 'वाजिवाहार्वगन्धर्व—' इत्यमरः । [ नागः ] गजः, [ नागम् ] एयाय । [ स्यन्दनस्थो रथस्थम् ] एयाय, न तु व्युत्क्रमेण, धर्मयुद्धत्वादिति भावः ; इति [ इत्थम् ] उक्तरीत्या, [सेना, रागात्] रणरागात् रतिरागाच्च, [अङ्गेन] स्वाङ्गेन पत्त्यादिना करचरणादिना च, [ वल्लभस्येव ] प्रियतमस्येव, [ प्रत्यनीकस्य ] प्रतिबलस्य । 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः । [ अङ्गं ] पत्त्यादिकं करचरणादिकञ्च, [ भेजे ] । यथा कान्ता कान्तस्योरुमूरुणा, करं करेण, मुखं मुखेन भजति, तथा सेना प्रतिसैन्यस्य पत्तिं पत्तिना, अश्वमश्वेनेत्यादिक्रमेण भेजे, न तु व्युत्क्रमेणेत्यर्थः । वल्लभस्येवेत्युपमया समरसुरतयोः समरसत्वं व्यज्यते ॥ २ ॥

रथ्याघोषैर्बृंहणैर्वारणाना-
मैक्यं गच्छन् वाजिनां ह्रेषया च ।
व्योमव्यापी सन्ततं दुन्दुभीना-
मव्यक्तोऽभूदीशितेव प्रणादः ॥ ३ ॥

रोषाऽऽवेशाद्गच्छतां प्रत्यमित्रं
दूरोत्क्षिप्तस्थूलबाहुध्वजानाम् ।
दीर्घास्तिर्य्यग्वैजयन्तीसदृश्यः
पादातानां भ्रेजिरे खड्गलेखाः ॥ ४ ॥

---

रथ्येति ।—[ सन्ततं ] सततं, [व्योमव्यापी] गगनस्पृक्; अन्यत्र,—सर्वंगत इत्यर्थः, [ दुन्दुभीनां ] रणभेरीणां, [ प्रणादः ] महाघोषः। "उपसर्गादसमासेऽपि णोपदेशस्य" ( ८।४।१४ पा० ) इति णत्वम्। [ रथ्याघोषैः] रथानां समूहाः रथ्याः। 'त्रिषु द्वैपादयो रथ्या रथकड्या रथव्रजे' इत्यमरः। "खलगोरथात्" ( ४।२।५० पा० ) इति यत्प्रत्ययः समूहार्थे। तासां घोषैः, [ वारणानां, बृंहणैः ] कण्ठघोषैः। 'बृंहणं गजगर्जितम्' इति वैजयन्ती। [ वाजिनाम् ] अश्वानां, [ ह्रेषया ] हेषणेन, [ च ]। 'हेषा ह्रेषा च निःस्वनः' इत्यमरः। "गुरोश्च हलः" ( ३।३।१०३ पा० ) इत्यप्रत्यये टाप्। [ ऐक्यं ] मेलनं, [ गच्छन् ]; अन्यत्र,—तत्त्वं पदार्थशोधनादद्वितीयतां गच्छन्। [ ईशिता ] ईशयिता, ईश्वरत्वोपाधिमान् परमात्मा, [इव]। ईशिस्तृच्। [अव्यक्तोऽभूत् ]। अयं दुन्दुभिघोष इति दुर्भेदो बभूव; अन्यत्र,—जीवेश्वरोपाधिविलयादयमीश्वरोऽयं जीव इति भेदरहितोऽभूदित्यर्थः। अत्रैक्यगमनस्य विशेषणगत्या अव्यक्तहेतुत्वात् काव्यलिङ्गमुपमाऽङ्गमिति सङ्करः ॥ ३ ॥

रोषाऽऽवेशादिति।—[ रोषाऽऽवेशात्, प्रत्यमित्रम् ] अभिशत्रु। आभिमुख्येऽव्ययीभावः। [गच्छतां] धावतां, द्रवतामित्यर्थः, [ दूरोत्क्षिप्त-

वर्ध्राऽऽबद्धा धौरितेन प्रयाता-
मश्वीयानामुच्चकैरुच्चलन्तः ।
रौक्मा रेजुः स्थासका मूर्तिभाजो
दर्पस्येव व्याप्तदेहस्य शेषाः ॥ ५ ॥

स्थूलबाहुध्वजानां ] दूरादुत्क्षिप्ताः उद्यताः, स्थूलाः पीवराः, बाहुध्वजाः ध्वजस्तम्भा इव बाहवो येषां तेषां, [ पादातानां ] पदातिसमूहानाम् । 'पादातं पत्तिसंहतिः' इत्यमरः । "षिद्भिदादिभ्योऽङ्" ( ३।३।१०४ पा० ) । [ तिर्य्यग्दीर्घाः ] तिर्य्यगायता इत्यर्थः । लेखा इव खड्गाः [ खड्गलेखाः, वैजयन्तीसदृक्ष्यः ] पताकासदृक्ष्यः सत्य इत्यर्थः । 'वैजयन्ती पताका स्यात्' इत्यमरः । "दृशेः समानान्ययोश्च" ( वा० ) इति समानशब्दोपपदात् दृशेः कञ्प्रत्ययः । "दृक्षे चेति वक्तव्यम्" ( वा० ) इति समानस्य सभावः * । [ भ्रेजिरे ] रेजिरे । 'भ्राजृ दीप्तौ' इति धातोः कर्त्तरि लिट्, "फणाञ्च सप्तानाम्" ( ६।४।१२५ पा० ) इति विकल्पादेत्वाभ्यासलोपौ । आर्थीयमुपमा ॥ ४ ॥

वर्ध्रेति ।—[ धौरितेन ] धौरिताऽऽख्येन गतिविशेषेण, [ प्रयातां ] धावताम् । यातेर्लटः शत्रादेशः । [ अश्वीयानाम् ] अश्वसमूहानाम् । "केशाश्वाभ्यां यञ्छावन्यतरस्याम्" ( ४।२।४८ पा० ) इति छप्रत्ययः । [ उच्चकैः, उच्चलन्तः ] गतिवशादूर्द्ध्वमुत्पतन्तः । [वर्ध्राऽऽबद्धाः] वर्द्धन्ते इति वर्ध्राणि पर्य्याणबन्धनवरत्राः । 'वर्ध्रं लपुवरत्रयोः' इति विश्वः । "वृधुवधिवपिभ्यो रन्" इति रन्प्रत्ययः † लघूपधगुणो रपरः । तैर्ब्बा-

* अत्र दृक्षशब्दपरत्वाभावात् समानशब्दस्य सभावार्थं प्रोक्तवार्त्तिकसूत्रस्योपन्यासः न समीचीनतया प्रतिभाति, तथा च दृशशब्दपरत्वात् "दृग्दृशवतुषु" (६।३।८९ पा० ) इति सूत्रेण सभावः समाधातव्यः ।

† उणादिप्रक्रियायां सिद्धान्तकौमुद्यां "वृधिवपिभ्यां रन्" ( उणा० २पा० २७ सू० ) इति सूत्रं दृश्यते, न तु "वृधुवधिवपिभ्यो रन्" इति ; तथा चैतत् मसीसम्पाताऽऽयातमित्यनुमीयते ।

सान्द्रत्वक्कास्तल्पलाश्लिष्टकच्या
आङ्गीं शोभामाप्नुवन्तश्चतुर्थीम् ।
कल्पस्यान्ते मारुतेनोपनुन्ना-
श्चेलुश्चण्डं गण्डशैला इवेभाः ॥ ६ ॥

सङ्क्रीड़न्ती तेजिताश्वस्य रागा-
दुद्यस्याऽऽरामग्रकायोत्थितस्य ।

---

बद्धाः स्थापिताः, [ रौक्माः ] सौवर्णाः, [ स्थासकाः ] बुद्बुदाऽऽकारमण्ड-लानि, [ व्याप्तदेहस्य ] सर्वाङ्गीणस्य, [ मूर्त्तिभाजः ] मूर्त्तिभृतः, [दर्पस्य] आन्तरस्य तेजसः, [ शेषाः ] अन्तरमानाद्बहिर्निर्गता अतिरेकाः, [ इव रेजुः ] इत्युत्प्रेक्षा ॥ ५ ॥

सान्द्रेति ।—[ सान्द्रत्वक्काः ] सान्द्रचर्माणः । शैषिकः कप्प्रत्ययः । [ तल्पलाश्लिष्टकच्याः ] तल्पलाः पृष्ठवंशाः, तेषु श्लिष्टाः कच्याः मध्यबन्ध-वरत्रा येषां ते । 'दूष्या * कच्या वरत्रा स्यात्' इत्यमरः । गजानां विंशत्युत्तरशताऽऽयुषां द्वादश दशा भवन्ति, तत्र चतुर्दशाऽऽरूढ़ा प्रौढ़शोभा, तदेवाऽऽह ।—अथ [चतुर्थीम्, आङ्गीं] शारीरीं, [शोभामाप्नु-वन्तः ], चत्वारिंशद्वर्षदेश्या इत्यर्थः, [ इभाः ] गजाः, [ कल्पस्यान्ते मारुतेनोपनुन्नाः ] प्रलयमारुतप्रेरिताः, [ गण्डशैलाः ] स्थूलो-पलाः, [ इव, चण्डं ] तीव्रं, [ चेलुः ] प्रतस्थिरे इत्युपमा ॥ ६ ॥

सङ्क्रीड़न्तीति ।—[ सङ्क्रीड़न्ती ] सङ्घर्षात् कूजन्ती । "समो-ऽकूजने च वक्तव्यम्" ( वा० ) इति वचनात् कूजने "क्रीड़ोऽनु-सम्परिभ्यश्च" ( १।३।२१ पा० ) इति नात्मनेपदम् । [ रंहो-भाजां ] वेगभाजां, [स्यन्दनानां ] रथानाम्, अक्षस्य चक्राऽऽधारकाष्ठस्य,

---

* वङ्गदेशमुद्रितामरकोषे "दूष्या" इत्यत्र "चूषा" इति पाठो दृश्यते, दाक्षिणात्यामरकोषे तु "दूष्या" इत्येव पाठः ।

रंहोभाजामक्षधूः स्यन्दनानां
हाहाकारं प्राजितुः प्रत्यनन्दत् ॥ ७ ॥
कुर्वाणानां साम्परायान्तरायं
भूरेणूनां मृत्युना मार्जनाय ।
सम्मार्जन्यो नूनमुद्धूयमाना
भान्ति स्मोच्चैः केतनानां पताकाः ॥ ८ ॥
उद्यन्नादं धन्विभिर्निष्ठुराणि
स्थूलान्युच्चैर्मण्डलत्वं दधन्ति ।

---

धुरग्रम् [ अक्षधूः ]। 'अक्षं रथाङ्ग आधारे' इति वैजयन्ती। अनक्षे इति निषेधात् "ऋक्पूः—" ( ५।४।७४ पा० ) इत्यादिना न समासान्तः। [ रागात्, आरां ] प्रतोदम्, [ उद्यम्य, तेजिताश्वस्य ] तेजिता उत्साहिताः, अश्वा येन तस्य, [ अग्रकायोत्थितस्य ] अग्रश्चासौ कायश्च स उत्थितो यस्य तस्य, उत्थितपूर्वकायस्येत्यर्थः। आहिताग्न्यादित्वात् साधुः। [ प्राजितुः ] सारथेः। 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः। [ हाहाकारम् ] उत्साहवर्द्धनार्थं हाहाशब्दम्। एवकार इत्यत्रैवग्रहणस्योपलक्षणत्वात् अन्यत्रापि यथादर्शनं शब्दनिर्देशात् कारप्रत्ययः, अथवा,—हाहाकारं हाहाकरणम्। भावे घञ्प्रत्ययः। [ प्रत्यनन्दत् ]; साधुसाध्वित्यन्वमोदत किम् ? इत्युत्प्रेक्षा ॥७॥

कुर्वाणानामिति।—[ उच्चैः ] उन्नताः, [केतनानां] ध्वजस्तम्भानां, [ पताकाः ] वैजयन्त्यः, [ साम्परायान्तरायं ] युद्धविघ्नं, [कुर्वाणानाम्]। 'अनीकं साम्परायिकम्' इत्यमरः। [ भूरेणूनां, मार्जनाय ] प्रमार्जनार्थं, [ मृत्युना ] अन्तकेन, [ उद्धूयमानाः ] प्रकम्प्यमानाः, [ सम्मार्जन्यः ] शोधिन्य इव, [ भान्ति स्म ]। 'सम्मार्जनी शोधिनी स्यात्' इत्यमरः। [ नूनम् ] इत्युत्प्रेक्षा ॥ ८ ॥

आस्फाल्यन्ते कार्मुकाणि स्म कामं
हस्त्यारोहैः कुञ्जराणां शिरांसि ॥ ९ ॥
घण्टानादो निःस्वनो डिण्डिमानां
ग्रैवेयाणामारवो वृंहितानि ।
आमेतीव * प्रत्यवोचन् गजाना-
मुत्साहार्थं वाचमाधोरणस्य ॥ १० ॥

---

उद्यन्नादमिति ।—[ धन्विभिः ] धनुष्मद्भिः । व्रीह्यादित्वादिनिः प्रत्ययः । [ निष्ठुराणि ] कर्कशानि, [ स्थूलानि ] पीवराणि, [ उच्चैः ] उन्नतानि, [मण्डलत्वं दधन्ति] वर्त्तुलत्वं दधानानि । एकत्र,—आकर्षणात्, अन्यत्र,—स्वभावाच्चेति भावः । कर्मणि प्रभवन्तीति [कार्मुकाणि] धनूंषि । उक्तञ् । [ उद्यन्नादम् ] उज्जृम्भमाणघोषं यथा तथा, [कामम्, आस्फाल्यन्ते स्म ] पाटवपरीक्षाऽर्थं पाणिभिरास्फालितानि । हस्तिनं रोहन्ति इति [हस्त्यारोहैः] निषादिभिः । कर्मण्यण् । [कुञ्जराणां शिरांसि] आस्फाल्यन्ते स्म । उत्साहार्थमिति भावः । अत्र कार्मुकाणां कुञ्जरशिरसाञ्च प्रकृतानामेव निष्ठुरत्वादिविशेषणसाम्येनौपम्यावगमात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ९ ॥

घण्टानाद इति ।—[ घण्टानादः ] किङ्किण्यादिघोषः, [ डिण्डिमानां ] वाद्यविशेषाणां, [ निःस्वनः ] । ग्रीवासु भवानां [ ग्रैवेयाणां ] कण्ठशृङ्खलानाम् । "कुलकुक्षिग्रीवाभ्यः—" ( ४।२।९६ पा० ) इति

---

* "आमेतीव" इति मूलस्य एवमेवेत्यादिरूपत्वं व्याख्याय टीकाकृता यदमरवचनमुद्धृतं, तत्तु अमरकोषे वङ्गदेशमुद्रिते न दृश्यते, तेन ह्येतत् कोषान्तरमित्यनुमीयते । अत्रेदं चिन्त्यते यत्, "आमेतीव" इति मूलं, किन्तु "आमित्येवम्" ईदृशं भविष्यति, तथात्वे "आम्" इत्यव्ययस्य सत्त्वात् न काचिदनुपपत्तिरिति दिक् ; तथा चामरः,—"आमेवं स्वयमात्मना" इति ।

यातैश्चातुर्विध्यमस्त्राऽऽदिभेदा-
दव्यासङ्गैः सौष्ठवाल्लाघवाच्च ।
शिक्षाशक्तिं प्राहरन् दर्शयन्तो
मुक्तामुक्तैरायुधैरायुधीयाः ॥ ११ ॥
रोषाऽऽवेशादाभिमुख्येन कौचित्
पाणिग्राहं रंहसैवोपयातौ ।

---

ढकञ्प्रत्ययः । [ आरवः । बृंहितानि ] बृंहणानि, [ गजानाम् उत्साहार्थम्, आधोरणस्य ] हस्तिपकस्य । 'आधोरणा हस्तिपकाः' इत्यमरः । [ वाचं ] बृंहणादिशब्दम्, [ आमेति प्रत्यवोचन्निव ] एवमेवेत्यनुकूलमूचिर इव, इत्युत्प्रेक्षा । 'आमानुगुण्ये स्मरणे' इत्यमरः ॥ १० ॥

यातैरिति ।—आयुधेन जीवन्तीति [आयुधीयाः] आयुधजीविनः । 'शस्त्राऽऽजीवे काण्डपृष्ठाऽऽयुधीयाऽऽयुधिकाः समाः' इत्यमरः । "आयुधाच्छ च" ( ४।४।१४ पा० ) इति छप्रत्ययः । [ शिक्षाशक्तिम् ] अभ्यासपाटवं, [ दर्शयन्तः, अस्त्रादिभेदात् ] अस्त्रमहाऽस्त्रादिकभेदात्, [ चातुर्विध्यं, यातैः ] प्राप्तैः, [ सौष्ठवात् ] सुष्ठुभावः सौष्ठवं नैशित्यादिगुणवत्त्वं, तस्मात् । उद्गात्रादित्वादञ्प्रत्ययः । [लाघवात्] वेगवत्त्वात्, [च], "इगन्ताच्च लघुपूर्वात्" ( ५।१।१३१ पा० ) इत्यण्प्रत्ययः । [ अव्यासङ्गैः ] अप्रतिषिद्धैः । मुच्यन्त इति मुक्तानि शरादीनि, न मुच्यन्त इत्यमुक्तानि खड्गादीनि च तैस्तैः [ मुक्तामुक्तैः ] इति द्वन्द्वः । [ आयुधैः प्राहरन् ] । स्वभावानुप्रासयोः संसृष्टिः ॥ ११ ॥

रोषाऽऽवेशादिति ।—[ कौचित् ] योधौ, [रोषाऽऽवेशात्] रोषपारवश्यात्, [ आभिमुख्येन, रंहसा ] वेगेन, [ एव, उपयातौ ] मिथः प्रत्यासन्नौ, अत एव [पाणिग्राहम्] अन्योऽन्यं पाणिं गृहीत्वा । "द्विती-

हित्वा हेतीर्मल्लवन्मुष्टिघातं
घ्नन्तौ बाहूबाहवि व्यासृजेताम् ॥ १२ ॥
शुद्धा: सङ्गं न क्वचित् प्राप्तवन्तो
दूरान्मुक्ता: शीघ्रतां दर्शयन्त:।
अन्त:सैनं विद्विषामाविशन्तो
युक्तं चक्रु: सायका वाजितायाः ॥ १३ ॥

---

यायाश्च" (३।४।५३ पा०) इति णमुल्प्रत्यय:। [ हेती: ] शस्त्राणि, [हित्वा] त्यक्त्वा ; वैकल्यादिति भाव:। 'हेतिस्तु शस्त्रे द्वयो:' इति केशव:। [ मल्लवत् ] मल्लाभ्यां तुल्यम्। "तेन तुल्यं—" ( ५।१।११५ पा० ) इति वतिप्रत्यय:। [ मुष्टिघातं ] मुष्टिभिर्हत्वा। "करणे हन:" ( ३।४।३७ पा० ) इति णमुल्प्रत्यय:। [ घ्नन्तौ ] प्रहरन्तौ। हन्तेर्लट: शत्रादेश:, कषादित्वादनुप्रयोग:। मुष्टिभिर्घ्नन्तावित्यर्थ:। बाहुभ्यां बाहुभ्यां प्रहृत्य प्रवृत्तमिदं युद्धं [ बाहूबाहवि ] बाहुयुद्धम्। "तत्र तेनेदमिति सरूपे" (२।२।२७ पा०) इति बहुव्रीहौ "इच्कर्मव्यतीहारे" (५।४।१२७ पा० ) इतीच्प्रत्यय: समासान्त:, "अन्येषामपि दृश्यते" ( ६।३।१३७ पा० ) इति दीर्घ:, तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्वादव्ययत्वम्। तत्र [ व्यासृजेतां ] व्यासक्तवन्तौ। "कर्त्तरि कर्मव्यतिहारे" ( १।३।१४ पा० ) इत्यात्मनेपदम्। मल्लवदिति तद्धितगता श्रौती पूर्णोपमा ॥ १२ ॥

शुद्धा इति।—[ शुद्धा: ] निर्विषा:। 'न कर्णिभिर्नापि दग्धै-र्नाग्निज्वलिततेजनै:' इति निषेधादिति भाव: ; अन्यत्र,—जात्येत्यर्थ:। [ क्वचित् ] कुत्रापि, [ सङ्गं ] प्रतिबन्धं, [ न प्राप्तवन्त: ] न प्राप्ता:, दुर्वारा इत्यर्थ:, [ दूरान्मुक्ता: ] दूरत एव विसृष्टा:। "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" ( २।१।३९ पा० ) इति समास:।

आक्रम्याऽऽजेरग्रिमस्कन्धमुच्चै-
रास्थायाथो वीतशङ्कं शिरश्च ।
हेलालोला वर्त्म गत्वाऽतिमर्त्यं
द्यामारोहन्मानभाजः सुखेन ॥ १४ ॥

---

"पञ्चम्याः स्तोकादिभ्यः" (६।३।२ पा०) इत्यलुक्। [शीघ्रतां] जवनत्वं, [दर्शयन्तः। विद्विषां], सेनास्वन्तः [अन्तःसेनम्]। विभक्त्यर्थेऽव्ययीभावः। [आविशन्तः] सेनामध्यं प्रविशन्त इत्यर्थः, [सायकाः] बाणाः, [वाजितायाः] पक्षवत्तायाः अश्वत्वस्य च। 'वाजी निःस्वन-पक्षयोः' इति विश्वः। [युक्तम्] अनुरूपं कर्म, [चक्रुः]। एवंविध-सेनाप्रवेशस्य वाजिनामेव सम्भवादिति भावः। अत्राभिधायाः प्रकृत-पक्षतामात्रोपक्षीणत्वाद्वाजिताशब्देन प्रकृतस्यैव प्रतीतेः ध्वनिरेवेति न श्लेषावकाशः; किन्तु शुद्धादिपदार्थपुञ्जविशेषणगत्या सायकानां युक्तकारिताहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ १३ ॥

आक्रम्येति।—[अथो, मानभाजः] अभिमानवन्तः, [उच्चैः] उन्नतम्, [आजेः] युद्धस्य, [अग्रिमस्कन्धम्] अग्रभागमंसप्रदेशञ्च, [आक्रम्य] आरुह्य, [वीतशङ्कं, शिरः] सम्मुखम्, अन्यत्र,—उत्तमकायं, [च, आस्थाय] आरुह्य, [हेलालोलाः] हेलासु युद्धक्रीड़ासु, लीलासु च, लोला उत्सुकाः सन्तः, [अतिमर्त्यं वर्त्म गत्वा] अमानुष्यं युद्धं कृत्वेत्यर्थः; अन्यत्र,—अमानुषगम्यमारोहणमार्गं गत्वा, [सुखेन] अनायासेन, [द्यां] स्वर्गमभ्रङ्कषं गिरिशिखरादि क्रीड़ास्थानम्। 'द्यौः स्वर्गसुखवर्त्मनोः' इति विश्वः। [आरोहन्] आरूढ़ाः। "युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपरा-ङ्मुखाः" इति मनुस्मरणादिति भावः। यथा कथञ्चित् कश्चित् स्कन्ध-मूर्द्धाऽऽरोहणक्रमेण किञ्चिद्दुरारोहमद्रितटादिकमारोहति, तद्वदिति प्रतीतेः, विशेषणमहिम्नाऽऽगता समासोक्तिः ॥ १४ ॥

रोदोरन्ध्रं व्यश्नुवानानि लोलै-
रङ्गस्यान्तर्मापितैः स्थावराणि।
केचिद्गुर्वीमेत्य संयन्निषद्यां
क्रीणन्ति स्म प्राणमूल्यैर्यशांसि॥ १५॥
वीर्योत्साहश्लाघि कृत्वाऽवदानं
सङ्ग्रामाग्रे मानिनां लज्जितानाम्।
अज्ञातानां शत्रुभिर्युक्तमुच्चैः
श्रीमन्नाम श्रावयन्ति स्म नग्नाः॥ १६॥

---

रोदोरन्ध्रमिति।—[केचित्] वीराः, [गुर्वीं] महतीं, [संयन्निषद्याम्] संयतो युध एव निषीदन्त्यस्यामिति निषद्याम् आपणाम्। 'आपणस्तु निषद्यायाम्' इत्यमरः। "संज्ञायां समजनिषद—" (३।३।९९ पा०) इत्यादिना क्यप्। [एत्य] प्राप्य। आङ्पूर्वादिणः क्त्वो ल्यप्। [अङ्गस्य] देहस्य, [अन्तर्मापितैः] अन्तरभ्यन्तरे, मापितैः परिच्छिन्नैः। मातेर्माङो वा ण्यन्तात् कर्मणि क्तः। "अर्त्तिह्री—" (७।३।३६ पा०) इत्यादिना पुगागमः। [लोलैः] अस्थिरैः; प्राणैरेव मूल्यैः [प्राणमूल्यैः, रोदोरन्ध्रं] रोदसोर्द्यावापृथिव्योः, रन्ध्रमन्तरालं, [व्यश्नुवानानि] व्याप्नुवन्ति। अश्नोतेर्लटः शानजादेशः। [स्थावराणि] स्थिराणि, [यशांसि, क्रीणन्ति स्म] स्वीचक्रुरित्यर्थः। अत्र न्यूनैः प्राणैः ततोऽधिकयशःपरिवर्त्तनात् न्यूनपरिवृत्तिरलङ्कारः;—'समन्यूनाधिकानाञ्च यदा विनिमयो भवेत्। साकं समाधिकन्यूनैः परिवृत्तिरसौ मता॥" इति लक्षणात्॥१५॥

वीर्य्योत्साहेति।—[सङ्ग्रामाग्रे] रणाग्रे, [वीर्य्योत्साहश्लाघि] वीर्य्योत्साहाभ्यां श्लाघ्यते इति श्लाघि विक्रमाहङ्कारशोभि, [अवदानं] महत् कर्म, [कृत्वा]। 'अवदानं कर्म वृत्तम्' इत्यमरः। [लज्जि-

आधावन्तः सम्मुखं धारितानामन्यैरन्ये तीक्ष्णकौक्षेयकाणाम् ।
वक्षःपीठैरा त्सरोरात्मनैव
क्रोधेनान्धाः प्राविशन् पुष्कराणि ॥ १७ ॥
मिश्रीभूते तत्र सैन्यद्वयेऽपि
प्रायेणायं व्यक्तमासीद्विशेषः ।

---

तानां ] मानित्वात् स्वनामाऽऽख्याने सङ्कोचवतामित्यर्थः, [ शत्रुभिः, अज्ञातानाम् ] अज्ञातनामकानां, [ मानिनां ] मानशालिनां शूराणां सम्बन्धि, [ श्रीमत् ] शौर्य्यश्रीयुक्तं, [ नाम, नग्नाः ] वन्दिनः । 'वन्दिनि क्षपणे नग्नः' इति विश्वः । [उच्चैः, श्रावयन्ति स्म ] अयमसाविति कथयामासुरित्यर्थः, [ युक्तं ] सर्वमेतदुचितमित्यर्थः । अत्र लज्जमानाज्ञातयोर्विशेषणगत्या वन्दिश्रावणहेतुत्वात् काव्यलिङ्गभेदः ॥१६॥

आधावन्त इति ।—[ क्रोधेन, अन्धाः ] अपश्यन्तः, [अन्ये] भटाः, [आधावन्तः ] अभिमुखमापतन्तः सन्तः, [ अन्यैः] सैन्यैः, [सम्मुखं] प्रतिद्वन्द्वाभिसम्मुखं, [धारितानां ] धृतानां, [तीक्ष्णकौक्षेयकाणां] निशितासीनाम् । "कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु" ( ४।२।९६ पा० ) इति ढकञ्प्रत्ययः । [पुष्कराणि] फलानि, खड्गमुखानीत्यर्थः । 'पुष्करं तूर्य्यवक्त्रे च काण्डे खड्गफलेऽपि च' इति विश्वः । वक्षांसि पीठानीव तैः [ वक्षःपीठैः ] वक्षःस्थलैः, [ आ त्सरोः ] आ मुष्टेः । 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । "आङ् मर्य्यादाऽभिविध्योः" ( २।१।१३ पा० ) इति विकल्पादसमासः । [ आत्मनैव ] स्वयमेव, परप्रयत्नं विनेत्यर्थः, [ प्राविशन् ] प्रविष्टाः । अत्र क्रोधान्धविशेषणगत्या पुष्करप्रवेशहेतुत्वात् काव्यलिङ्गभेदः ॥ १७ ॥

मिश्रीभूत इति ।—[ तत्र ] युद्धे, [ सैन्यद्वयेऽपि, मिश्रीभूते] 'मिलिते

आत्मीयास्ते ये पराञ्चः पुरस्ता-
दभ्यावर्त्ती सम्मुखो यः परोऽसौ ॥ १८ ॥
सद्वंशत्वादङ्गसंसङ्गिनीत्वं
नीत्वा कामं गौरवेणावबद्धा ।
नीता हस्तं वञ्चयित्वा परेण
द्रोहं चक्रे कस्यचित् स्वा कृपाणी ॥ १९ ॥
नीते भेदं धौतधाराऽभिघाता-
दम्भोदाऽऽभे शात्रवेणापरस्य ।

---

सति, [ प्रायेणायं, विशेषः ] असाधारणधर्मः, [ व्यक्तमासीत् ]। क इत्याह ।—[ पुरस्तात् ] अग्रे, [ ये, पराञ्चः ] पराङ्मुखाः, परेऽपीति भावः ; [ ते, आत्मीयाः ] अवध्या इत्यर्थः । 'न भीतं न परावृत्तम्' इति वधनिषेधश्रवणात् । [ यः ] पुरस्तात् [ अभ्यावर्त्ती ] परावर्त्ती, [ सम्मुखः ] अभिमुखः, स्वकीयोऽपीति भावः ; [ असौ, परः ] शत्रुः, बध्य इत्यर्थः । प्राणलुब्धस्य स्वामिद्रोहित्वादित्याशयः ॥ १८ ॥

सदिति ।—[ सद्वंशत्वात् ] शुद्धाऽऽकरत्वात् कुलीनत्वाच्च, [ अङ्ग-संसङ्गिनीत्वम्] अङ्गसम्बन्धित्वं, [नीत्वा] । अगुणत्वविवक्षायां "त्वतलो-र्गुणवचनस्य" ( वा० ) इति न पुंवद्भावः । [ कामं, गौरवेण ] आदरेण, [ अवबद्धा ] संयता च, [ कस्यचित्, स्वा ] स्वकीया, [कृपाणी] असिलता, [ परेण ] अन्येन, [ वञ्चयित्वा ] प्रतार्य्य, [ हस्तं नीता ] स्वाऽऽयत्तीकृता सती, [ द्रोहं ] हिंसां व्यभिचारञ्च, [ चक्रे ] कृतवती । अत्र प्रकृतकृपाणीविशेषणसाम्यादप्रकृतस्वैरिणीप्रतीतेः समासोक्तिः ॥ १९ ॥

नीत इति ।—[ शात्रवेण ] शत्रुणा । प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः ।

सास्रग्राजिस्तीक्ष्णमार्गस्य मार्गो
विद्युद्दीप्तः कङ्कटे लक्ष्यते स्म ॥ २० ॥
आ मूलान्तात् सायकेनाऽऽयतेन
स्यूते बाहौ मण्डुकश्लिष्टमुष्टेः ।
प्राप्यासह्यां वेदनामस्तधैर्य्या-
दप्यभ्रश्यच्चर्म नान्यस्य पाणेः ॥ २१ ॥
भित्त्वा घोणामायसेनाधिवक्षः
स्यूरीपृष्ठो गार्ध्रपक्षेण विद्धः ।

---

[धौतधाराऽभिघातात्] धौताया उत्तेजितायाः, धारायाः खड्गधारायाः, अभिघातात्, [भेदं नीते] विदारिते, [अम्भोदाऽऽभे] मेघश्यामे, [अपरस्य] भटस्य, [कङ्कटे] कवचे। 'उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्' इत्यमरः । सहास्रग्राज्या [सास्रग्राजिः] सरक्तरेखः, [तीक्ष्णमार्गस्य] खड्गस्य, [मार्गः] प्रहारः, [विद्युद्दीप्तः] तड़िदुज्ज्वलः, [लक्ष्यते स्म]। उपमाऽलङ्कारः ॥ २० ॥

आ मूलान्तादिति ।—[अन्यस्य] भटस्य, [बाहौ, आयतेन] दीर्घेण, [सायकेन, आ मूलान्तात्] मूलप्रदेशपर्य्यन्तम्, आ कक्षमित्यर्थः। विकल्पादसमासः। [स्यूते] प्रोते सति,[असह्यां, वेदनां] व्यथां, [प्राप्य], अत एव [अस्तधैर्य्यादपि] त्यक्तधैर्य्यादपि, धारयितुमक्षमादपीत्यर्थः, [मण्डुकश्लिष्टमुष्टेः] मण्डुके सङ्ग्राहे, श्लिष्टा सन्दष्टा, मुष्टिर्यस्य तस्मात्, [पाणेः, चर्म] फलकम्। 'फलकोऽस्त्री फलं चर्म सङ्ग्राहो मुष्टिरस्य यः' इत्यमरः। [नाभ्रश्यत्] नापतत्। अत्र सायकप्रोतमुष्टिश्लेषयोर्विशेषणगत्या धैर्य्यत्यागचर्मभ्रंशौ प्रति हेतुत्वात् काव्यलिङ्गभेदः ॥२१॥

भित्त्वेति ।—[आयसेन] अयोमयेन; गार्ध्रो गृध्रसम्बन्धी, पक्षः

शिक्षाहेतोर्गाढ़रज्ज्वेव बद्धो
हन्तुं वक्त्रं नाशकद्दुर्मुखोऽपि ॥ २२ ॥
कुन्तेनोच्चैः सादिना हन्तुमिष्टा-
न्नाजानेयो दन्तिनस्त्रस्यति स्म ।
कर्मोदारं कीर्त्तये कर्त्तुकामान्
किं वा जात्याः स्वामिनो क्षेपयन्ति ? ॥२३॥

---

पलं यस्य तेन, [ गार्द्धपत्रेण ] बाणविशेषेण, [ घोणां ] नासां, [ भित्त्वा ]। 'घोणा नासा च नासिका' इत्यमरः। [ अधिवक्षः ] वक्षसि। विभक्त्यर्थेऽव्ययीभावः। [ विद्धः ] प्रहृतः। व्यधेः कर्मणि क्तः "ग्रहिज्या—" (६।१।१६ पा०) इत्यादिना सम्प्रसारणम्। [स्थूरी-पृष्ठः] नवाऽऽरूढ़ोऽश्वः ; शिक्षैव हेतुः तस्य [शिक्षाहेतोः] शिक्षया निमित्तेन, शिक्षाऽर्थमिति यावत्। "षष्ठी हेतुप्रयोगे" (२।३।२६ पा०) इति षष्ठी। [गाढ़रज्ज्वा] गाढ़पाशेन, [बद्ध इव] इत्युत्प्रेक्षा। [ दुर्मुखो-ऽपि ] अशिक्षितमुखोऽपि, [ वक्त्रं, हर्त्तुम् ] अपाक्रष्टुं, [ नाशकत् ] न शक्तः। शकेर्लुङि "पुषादि—" (३।१।५५ पा०) इति च्लेरङादेशः। शिक्षितो हि शिक्षावशादबद्धोऽपि बद्धवदास्ते, अशिक्षितस्तु निबद्धोऽपि झटिति मुखमपहरतीति भावः। अपिर्विरोधे। अत एव विरोधा-ऽऽभासोऽलङ्कारः ॥ २२ ॥

कुन्तेनेति।—[ आजानेयः ] कुलीनाश्वः। 'आजानेयाः कुलीनाः स्युः' इत्यमरः। "शुभ्रादिभ्यश्च" (४।१।१२३ पा०) इति ढक्प्रत्ययः। [ सादिना ] अश्वारोहेण कर्त्रा। [ उच्चैः ] उन्नतेन, [ कुन्तेन ] प्रासेन करणेन। [ हन्तुं ] प्रहर्त्तुम्, [ इष्टात् ] अभिप्रेतात्, [ दन्तिनः, न त्रस्यति स्म ] न त्रतः। "वा भ्राश—"(३।१।७० पा०) इत्यादिना श्यन्प्रत्ययः। तथा हि, [ जात्याः ] कुलीनाः। भवार्थे यत्प्रत्ययः।

जेतुं जैत्राः शेकिरे नारिसैन्यै:
पश्यन्तोऽधो लोकमस्तेषुजालाः ।
नागाऽऽरूढाः पार्वतानि श्रयन्तो
दुर्गाणीव त्रासहीनास्त्रसानि ॥ २४ ॥
विष्वद्रीचीर्विक्षिपन् सैन्यवीची-
राजावन्तः क्वापि दूरं प्रयातम् ।

---

[ कीर्त्तये, उदारं कर्म ] महापौरुषं, कर्त्तुं कामो येषां तान् [ कर्त्तुकामान् ]। "तुं काममनसोरपि" (का०) इति मकारलोपः । स्वमेषामस्तीति [ स्वामिनः ] भर्त्तृन् । "स्वामिन्नैश्वर्य्ये" ( ५।२।१२६ पा० ) इति निपातः । [ क्नेपयन्ति ] लज्जयन्ति, [ किं वा ? ], न क्नेपयन्तीत्यर्थः । "अर्त्तिह्री—" ( ७।३।३६ पा० ) इत्यादिना पुगागमः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २३ ॥

जेतुमिति ।—जेतार एव [ जैत्राः ] जयशीलाः । जेतृप्रकृतेः प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः । [ लोकं ] जनम्, [ अधः पश्यन्तः ] स्वयमुपर्य्यवस्थानात् लोकमधोदेशे पश्यन्तः, अधःकृतं मन्यमानाश्च । [ अस्तेषुजालाः ] क्षिप्तशरनिकराः, [ त्रासहीनाः ] दुर्गस्थत्वान्निर्भीकाः, [ नागाऽऽरूढाः ] गजाऽऽरोहाः ; त्रस्यन्ति गच्छन्तीति [ त्रसानि ] जङ्गमानि । 'चरिष्णुजङ्गमचरं त्रसमिङ्गं चराचरम्' इत्यमरः । [पार्वतानि] पर्वतसम्बन्धीनि, [ दुर्गाणि ] गिरिदुर्गाणीत्यर्थः, [ श्रयन्तः ] अधितिष्ठन्तः, [ इव ] इत्युत्प्रेक्षा । तेऽप्येवम्भूता एवेति भावः । [ अरिसैन्यैः ] कर्तृभिः । [ जेतुं, न शेकिरे ] अशक्ता बभूवुरित्यर्थः । शकेः कर्मणि लिट् । अत्र मनुः,—'धनुर्दुर्गं महीदुर्गमब्दुर्गं वनमेव च । नृदुर्गं गिरिदुर्गञ्च समाश्रित्य वसेन्नृपः ॥ सर्वेणैव प्रकारेण गिरिदुर्गं समाश्रयेत् । तेषां हि बहुगुण्येन गिरिदुर्गं विशिष्यते ॥' इति ॥ २४ ॥

विष्वगिति ।—[ एकः ] कोऽपि वीरः । विष्वगञ्चतीति [ विष्व-

बभ्रामैको बन्धुमिष्टं दिदृक्षुः
सिन्धौ वाऽऽद्यो मण्डलं गोर्वराहः ॥ २५ ॥
यावच्चक्रे नाञ्जनं बोधनाय
व्युत्थानज्ञो हस्तिचारी मदस्य ।
सेनास्वानाद्दन्तिनामात्मनैव
स्थूलास्तावत् प्रावहन् दानकुल्याः ॥ २६ ॥

---

ध्रीचीः ] सर्वव्यापिनीः । "विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये" (६।३।९२ पा० ) इति टेरद्र्यादेशः । धातोरप्यञ्चतेरुपसङ्ख्यानात्, "उगितश्च" ( ४।१।६ पा० ) इति ङीप् । "अचः" ( ६।४।१३८ पा० ) इत्यकारलोपे "चौ" ( ६।३।१३८ पा० ) इति दीर्घः । सैन्यानि वीचीरिव [ सैन्यवीचीः ] इत्युपमितसमासः । सिन्धौ वेति लिङ्गात् । [ विक्षिपन् ] अपाकुर्वन्, [ अन्तः ] आजिमध्ये, [ क्वापि दूरं प्रयातम् इष्टं बन्धुं, दिदृक्षुः ] द्रष्टुमिच्छुः सन् । दृशेः सनन्तादुप्रत्ययः । क्वापि, प्रयातं मग्नं, [ गोः ] भूमेः, [ मण्डलं ] भूगोलं, दिदृक्षुः [ आद्यो वराहः, सिन्धौ वा ] समुद्रे इव । 'उपमायां विकल्पे वा' इत्यमरः । [ आजौ बभ्राम ] । एकवीरस्य कुतो भयमित्याशयः ॥ २५ ॥

यावदिति ।—व्युत्थानं गजोत्थापनं, जानातीति [ व्युत्थानज्ञः ] ; हस्तिनि चरतीति [ हस्तिचारी ] यन्ता, [ मदस्य, बोधनाय ] उत्थापनाय, [ अञ्जनम् ] उद्दीपनं कर्म, [ यावत् न चक्रे, तावत् ] प्रागेव, असमाप्ते विधावित्यर्थः, [ सेनास्वानात् ] सेनाकलकलश्रवणादित्यर्थः । [ दन्तिनाम्, आत्मना ] स्वयम्, [ एव, स्थूलाः ] महत्यः, [ दानकुल्याः ] मदसरितः, [ प्रावहन् ] । इति दन्तिनामुत्साहातिरेकोक्तिः । अञ्जनात् प्राग्दानसम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

क्रुध्यन् गन्धादन्यनागाय दूरा-
दारोढारं धूतमूर्द्धाऽवमत्य ।
घोराऽऽरावध्वानिताशेषदिक्के
विष्के नागः पर्य्यणंसीत् स्व एव ॥ २७ ॥

प्रत्यासन्ने दन्तिनि प्रातिपक्षे
यन्त्रा नागः प्रास्तवक्त्रच्छदोऽपि ।
क्रोधाऽऽक्रान्तः क्रूरनिर्दारिताक्षः
प्रेक्षाञ्चक्रे नैव किञ्चिन्मदान्धः ॥ २८ ॥

---

क्रुध्यन्निति ।—[ दूरात् ] दूरत एव, [ गन्धात् ] मदगन्धाऽऽघ्राणात्, [ अन्यनागाय ] प्रतिगजाय, [ क्रुध्यन् ] तं जिघांसुरित्यर्थः । "क्रुध-द्रुहेर्ष्या—" ( १।४।३७ पा० ) इत्यादिना सम्प्रदानत्वम् । [ नागः, धूत-मूर्द्धा ] विधूतमस्तकः सन्, [ आरोढारं ] यन्तारम्, [ अवमत्य ] अवधूय, [ घोराऽऽरावध्वानिताशेषदिक्के ] घोराऽऽरावैः दारुणाक्रन्दनैः, ध्वानिता अशेषदिशो येन तस्मिन्, तथा उच्चैराक्रोशतीत्यर्थः । शैषिकः कप्प्रत्ययः । [स्वे] स्वकीये, [ एव ], स्वपुत्र एवेत्यर्थः । "पूर्वादिभ्यो नवभ्यो वा" ( ७।१।१६ पा० ) इति विकल्पात् न स्मिन्नादेशः । अत एव स्वे स्वपुत्रे विष्क इति श्लिष्टगत्या व्याख्याय पुत्रस्यापि ज्ञातित्वात् न सर्वनामसंज्ञेति वल्लभोक्तिः प्रामादिकी । [ विष्के ] विंशतिवर्षके डिम्भे । 'विष्को विंशतिवर्षकः' इति वैजयन्ती । [ पर्य्यणंसीत् ] तिर्य्यक् प्रजहारेत्यर्थः । 'तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः । "यमरमनमातां सक्च" ( ७।२।७३ पा० ) इति नमेर्लुङि सगिड़ागमौ । "नेटि" (७।२।४ पा०) इति वृद्धिप्रतिषेधः ॥२७॥

प्रत्यासन्ने इति ।—[ प्रातिपक्षे ] प्रतिपक्षसम्बन्धिनि । "तस्येदम्" (४।३।१२० पा०) इत्यण् । [ दन्तिनि ] गजे, [ प्रत्यासन्ने ] सति, [यन्त्रा]

तूर्णं यावन्नापनिन्ये निषादी
वासश्चक्षुर्वारणं वारणस्य ।
तावत् पूगैरन्यनागाधिरूढः
कादम्बानामेकपातैरसीव्यत् ॥ २९ ॥
आस्यद्दृष्टेराच्छदन्न प्रमत्तो
यन्ता यातुः प्रत्यरीभं द्विपस्य ।

---

सादिना, [ प्रास्तवक्त्रच्छदोऽपि ] निरस्तमुखपटोऽपि, [क्रोधाऽऽक्रान्तः], अत एव [ क्रूरनिर्दारिताक्षः ] क्रूरं घोरं, निर्दारिताक्षः, तथाऽपि [ मदान्धः, नागः ] गजः, [ न किञ्चिदेव प्रेक्षाञ्चक्रे ] किमपि पुरोगतं प्रातिपक्षमन्यद्वा न ददर्शेत्यर्थः ; आवरणान्तराभावेऽपि मदाऽऽवरणस्यानपायादिति भावः । "इजादेश्च गुरुमतोऽनृच्छः" ( ३।१।३६ पा० ) इत्याम्प्रत्ययः । अत्रानावृतोन्मीलिताक्षस्याप्यदर्शनविरोधस्य मदान्धेनाविरोधाद्विरोधाऽऽभासोऽलङ्कारः ॥ २८ ॥

तूर्णमिति ।—[निषादी] यन्ता, [वारणस्य] गजस्य, [ चक्षुर्वारणं ] नेत्राऽऽवरणं, [वासः] मुखपटं, [ यावत्तूर्णं, नापनिन्ये ] नापचकार, [तावत्, अन्यनागाधिरूढः] प्रतिगजाधिरोहः ; एकः एककालीनः, पातो येषां तैः [ एकपातैः ] युगपत्पातिभिः इति शीघ्रतोक्तिः । [ कादम्बानां ] शराणाम् । 'कादम्बमार्गणशराः' इत्यमरः । [ पूगैः ] व्रातैः, [ असीव्यत् ] चक्षुषा सह तद्वासः स्यूतवानित्यर्थः । सीव्यतेर्लङ् । अत्र चक्षुषः सीवनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ २९ ॥

आस्यदिति ।—[ यन्ता, प्रमत्तः ] सन्, [ प्रत्यरीभम् ] अरिगजं प्रति । आभिमुख्येऽव्ययीभावः । [यातुः] गन्तुः । यातेस्तृच् । [द्विपस्य दृष्टेः, आच्छदम् ] आवरणम् । "पुंसि संज्ञायां घः प्रायेण" ( ३।३।११८ पा० )

मग्नस्योच्चैर्बर्हभारेण शङ्को-
रावव्राते वीक्षणे च क्षणेन ॥ ३० ॥
यत्नाद्रक्षन् सुस्थितत्वादनाशं
निश्चित्यान्यश्चेतसा भावितेन ।
अन्त्यावस्थाकालयोग्योपयोगं
दध्रेऽभीष्टं नागमापन्नवं वा ॥ ३१ ॥

---

इति घः । [ आस्थत् ] निरस्तवान्, [च] । "अस्यतिवक्तिख्यातिभ्योऽङ्" (३।१।५२ पा०) इति च्लेरङादेशः । "अस्यतेस्थुक्" (७।४।१७ पा०) इति थुगागमः । [मग्नस्य] मुखनिमग्नस्य, [शङ्कोः] शल्याऽऽयुधस्य । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः । [ उच्चैः, बर्हभारेण ] पिच्छपटलेन, [ वीक्षणे ] चक्षुषी, [ क्षणेन, आवव्राते ] आवृते, [ च ] । वृणोतेः कर्मणि लिट् । अन्योऽन्यसमुच्चयचकाराभ्याम् आवरणनिरासे पुनरावरणयोरेककाले सम्बन्धोक्तेरतिशयोक्तिः ॥ ३० ॥

यत्नादिति ।—[ अन्यः ] गजाऽऽरोहः, [ भावितेन ] आलोचितेन, [ चेतसा, सुस्थितत्वात् ] अनपायिदेशत्वात्, [ अनाशम् ] अनपायं, [निश्चित्य यत्नात्, रक्षन् ] वञ्चकेभ्यस्त्रायन्* सन्, [ अन्त्यावस्थाकालयोग्योपयोगम् ] अन्त्यावस्थाकाले साधनान्तरकाले, नाशकाले इत्यर्थः, योग्योपयोगम्, अत एव [अभीष्टं, नागं] गजम्, [आपन्नवं वा] † आपन्नवमिव, [ दध्रे ] अन्यतोऽपसार्य्य धारयामास । धरतेः स्वरितेत्त्वात् कर्त्तरि लिट् तङ् ॥ ३१ ॥

---

* "त्रैङ् पालने" इति भौवादिकस्य त्रायतेरात्मनेपदित्वात् शानचि त्रायमाणः इत्येवमेव पदमत्र भवितुमुचितम् । "त्रायन्" इति तु मसीसम्पाताऽऽयातमिति मन्यामहे ।

† अत्र वाशब्दस्य इवार्थकत्वात्, उपमाऽलङ्कारः इति ज्ञेयम् ; "उपमायां विकल्पे वा" इत्यमरोक्तेः ।

अन्योऽन्येषां पुष्करैरामृशन्तो
दानोद्भेदानुच्चकैर्भुग्नबालाः ।
उन्मूर्द्धानः सन्निपत्यापरान्तैः
प्रायुध्यन्त स्पष्टदन्तध्वनीभाः ॥ ३२ ॥

---

अन्योऽन्येषामिति ।—[ इभाः ] गजाः, [ अन्योऽन्येषां ] परस्परेषाम् । "कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये—" * इति वक्तव्यात् द्वित्वम् । "समासवच्च बहुलम्" † इति विकल्पादसमासत्वपक्षे पूर्वपदस्य प्रथमैकवचनं वक्तव्यम् । उद्भिद्यन्ते एष्विति उद्भेदाः । "अकर्त्तरि च कारके संज्ञायाम्" (३।३।१९ पा०) इत्यधिकरणार्थे घञ्प्रत्ययः । [ दानोद्भेदान् ] कटादिमदस्थानानि, [ पुष्करैः ] हस्ताग्रैः । 'पुष्करं करिहस्ताग्रे' इत्यमरः । [ आमृशन्तः ] जिघ्रन्तः, [ उच्चकैः ] उन्नताः, [ भुग्नबालाः ] प्रह्वीकृतपुच्छाः । 'बालः केशे शिशौ मूर्खे बालो वाजीभपुच्छयोः' इति विश्वः । [ उन्मूर्द्धानः ] उन्नतमस्तकाः सन्तः, [ स्पष्टदन्तध्वनि ] यथा तथा, [सन्निपत्य अपरान्, तैः ] सह, [ प्रायुध्यन्त ] । दिवादियुध्यतेः कर्त्तरि लङ् । स्वभावोक्तिः ॥ ३२ ॥

---

* "कर्म्मव्यतिहारे सर्वनाम्नी द्वे वाच्ये समासवच्च बहुलम्" इत्येकमेव वार्त्तिकसूत्रं टीकाकृता व्याख्यायां विभज्य पठितमिति ज्ञेयम् । पृथग्विधया पाठस्य अनाकरत्वमित्यवधेयम् ।

† अत्रेदमवधातव्यं, प्रोद्धृतखण्डवार्त्तिकसूत्रस्य तु प्रयोजनमन्यदेव, इह तु असमासत्वपक्षे पूर्वपदस्यैकवचनप्रतिपादनार्थमन्यदेव वार्त्तिकमुद्धृतं दीक्षितैः यथा,—"असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः" इति । एतदेव वार्त्तिकं स्वाभीप्सितसिद्धये उद्धर्त्तुमुचितमिति मन्यामहे ; यतः,—"अन्योऽन्येषां पुष्करैरामृशन्तः" इति माघ. इत्युक्त्वा चैतदेव चरणम् उदाहरणविधया प्रोद्धृतमत्रैव वार्त्तिकसूत्रे दीक्षितैः, भ्रमवशात् पाठवैकल्यं जातमिति विभावयामः ।

द्राघीयांसः संहताः स्थेमभाज-
श्चारूदग्रास्तीक्ष्णतामत्यजन्तः ।
दन्ता दन्तैराहताः सामजानां
भङ्गं जग्मुर्न स्वयं सामजाताः ॥ ३३ ॥

मातङ्गानां दन्तसङ्घट्टजन्मा
हैमच्छेदच्छायचञ्चच्छिखाऽग्रः ।
लग्नोऽप्यग्निश्चामरेषु प्रकामं
माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः ॥ ३४ ॥

---

द्राघीयांस इति ।—[ द्राघीयांसः ] दीर्घतराः । "प्रियस्थिर—" ( ६।४।१५७ पा० ) इत्यादिना दीर्घस्य ईयसुनि द्राघादेशः । [ संहताः ] सुघटिताः, अत एव [स्थेमभाजः] स्थैर्यभाजः । "प्रियस्थिर—" ( ६।४। १५७ पा० ) इत्यादिना स्थिरशब्दस्येमनिचि स्थाऽऽदेशः । चारवो रम्याः, उदग्रा उन्नताश्च ते [ चारूदग्राः ] । विशेषणसमासः । [ तीक्ष्णतां ] नैशित्यम्, [ अत्यजन्तः, सामजानां ] गजानां, [दन्ताः, दन्तैः] प्रतिगजविषाणैः, [आहताः] सन्तः, [भङ्गं] भेदं, [ जग्मुः ] बभञ्जुरित्यर्थः, [साम-जाताः ] दन्तिनस्तु, [ स्वयं ] भङ्गं पराजयं, [ न ] जग्मुः, दन्तभङ्गेऽपि स्वयं न परावर्त्तन्त इत्यर्थः । अत्रापरावर्त्तित्वेन वर्ण्यतया प्रकृतत्वादुपमेयानां दन्तिनामुपमानदन्तापेक्षया अभग्नत्वेनाऽऽधिक्योक्तेर्व्यतिरेकस्तुल्ययोगिताया वाधक इति गमयितव्यम् ॥ ३३ ॥

मातङ्गानामिति ।—[ मातङ्गानां ] दन्तिनां, [ दन्तसङ्घट्टजन्मा ] दन्तसङ्घर्षोत्थः, [ हैमच्छेदच्छायचञ्चच्छिखाऽग्रः ] हैमच्छेदच्छायानि कनकपरागवर्णानि, चञ्चन्ति चलन्ति च, शिखाऽग्राणि ज्वालाऽग्राणि यस्य सः, [ अग्निः ]; मञ्जिष्ठया ओषधिविशेषेण, रक्तेषु [ माञ्जिष्ठेषु ]। "तेन रक्तं रागात्" ( ४।२।१ पा० ) इत्यण्प्रत्ययः । 'मञ्जिष्ठा विकसा

ओषामासे मत्सरोत्पातवाता-
ऽऽश्लिष्यद्दन्तक्ष्मारुहां घर्षणोत्थैः।
यौगान्तैर्वा वह्निभिर्वारणानाम्
उच्चैर्मूर्द्धव्योम्नि नक्षत्रमाला ॥ ३५ ॥

सान्द्राम्भोदश्यामले सामजानां
वृन्दे नीताः शोणितैः शोणिमानम्।
दन्ताः शोभामापुरम्भोनिधीनां
कन्दोद्भेदा वैद्रुमा वारिणीव ॥ ३६ ॥

जिङ्गी' इत्यमरः। [चामरेषु लग्नोऽपि सैन्यैः प्रकामं, न व्यज्यते] न विविच्यते, [स्म]; सावर्ण्यादिति भावः। अतः सामान्यालङ्कारः;— 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात्। स च विशेषणोत्थकाव्यलिङ्गसङ्कीर्णः ॥ ३४ ॥

ओषामासे इति।—[मत्सरोत्पातवाताऽऽश्लिष्यद्दन्तक्ष्मारुहां] मत्सरो वैरमेव, उत्पातवातः आकस्मिकवायुः, तेनाऽऽश्लिष्यतां संयुज्यमानानां, दन्तानामेव क्ष्मारुहां वृक्षाणां, [घर्षणोत्थैः] घर्षणेनोत्था जन्म येषां तैः, [वह्निभिर्यौगान्तैर्वा] युगान्तभवैर्वह्निभिरिव, [वारणानाम्, उच्चैः] उन्नतैः; मूर्द्धा व्योमेव तस्मिन् [मुर्द्धव्योम्नि, नक्षत्रमाला] हारविशेषः। 'सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः' इत्यमरः। ज्योतिर्मण्डलञ्च, [ओषामासे] उवोष, दग्धेत्यर्थः। 'उष दाहे' इति धातोः कर्मणि लिट्। "उषविदजागृभ्योऽन्यतरस्याम्" (३।१।३८ पा०) इत्याम्प्रत्ययः, लघूपधगुणः, "कृञ्चानुप्रयुज्यते लिटि" (३।१।४० पा०) इत्यस्तेश्चानुप्रयोगः। अत्र नक्षत्रमालयोरभेदाध्यवसायेन निर्देशात् रूपकश्लेषसङ्कीर्णेयमुपमा ॥ ३५ ॥

सान्द्राम्भोदेति।—[सान्द्राम्भोदश्यामले] सान्द्रश्च तदम्भोदश्याम-

आकम्प्राग्रैः केतुभिः सन्निपातं
तारोदीर्णग्रैवनादं व्रजन्तः ।
मग्नानङ्गे गाढमन्यद्विपानां
दन्तान् दुःखादुत्खनन्ति स्म नागाः ॥३७॥
उत्क्षिप्योच्चैः प्रस्फुरन्तं रदाभ्या-
मीषादन्तः कुञ्जरं शात्रवीयम् ।
शृङ्गप्रोतप्रावृषेण्याम्बुदस्य
स्पष्टं प्रापत् साम्यमुर्वीधरस्य ॥ ३८ ॥

---

लब्ध तस्मिन्, [ सामजानां ] गजानां, [ वृन्दे शोणितैः, शोणितमानम्] आरुण्यं, [ नीताः दन्ताः, अम्भोनिधीनां ] वारिनिधीनां, [ वारिणि] ; विद्रुमाणां प्रवालानां इमे [ वैद्रुमाः ]। 'विद्रुमः पुंसि प्रवालं पुंनपुंसकम्' इत्यमरः। [ कन्दोद्भिदाः ] कन्दो मूलपिण्डः, तस्योद्भिदाः प्ररोहाः, [ इव शोभामापुः ]; इत्युपमा ॥ ३६ ॥

आकम्प्राग्रैरिति।—[ आकम्प्राग्रैः ] आकम्प्राणि दन्तोत्खननसङ्गी-भाङ्गृशं कम्प्राणि, अग्राणि येषां तैः, [ केतुभिः ] ध्वजैः, [ सन्निपातं ] सङ्घर्षं, [ व्रजन्तः ]; इति दुःखहेतूक्तिः। [ नागाः ] गजाः, [ तारो-दीर्णग्रैवनादं ] तारमुच्चैः, उदीर्णः उत्पन्नः, ग्रैवाणां ग्रीवासूत्पन्नानां शृङ्खलभूषणादीनां, नादो यस्मिन् कर्मणि तत् तथा, [ अन्यद्विपानां ] प्रतिगजानाम्, [ अङ्गे, गाढं मग्नान् ] अन्तःप्रविष्टान्, [ दन्तान्, दुःखा-दुत्खनन्ति स्म ] तेषां गाढमग्नत्वात्, स्वयं केतुभाराऽऽक्रान्तत्वाच्च कृच्छ्रादुज्जह्रुरित्यर्थः। अत्रोक्तभारमज्जनयोर्विशेषणगत्या दुःखोत्खनन-हेतुत्वात् काव्यलिङ्गम् ॥ ३७ ॥

उत्क्षिप्येति।—ईषे लाङ्गलदण्डाविव, दन्तौ यस्य सः [ ईषादन्तः ] महादन्तो दन्ती। 'ईषा लाङ्गलदण्डः स्यात्' इत्यमरः। [ प्रस्फुरन्तं

भग्नेऽपीभे स्वे परावर्त्य देहं
योद्धा सार्द्धं व्रीड़या मुञ्चतेषून् ।
साकं यन्तुः सम्मदेनानुबन्धी
दूनोऽभीक्ष्णं वारणः प्रत्यरोधि ॥ ३९ ॥
व्याप्तं लोकैर्दुःखलभ्यापसारं
संरभ्भित्वादेत्य धीरो महीयः ।

---

प्राणोत्क्रमणदुःखादुल्लसन्तम् ; शालवस्येदं [ शालवीयं कुञ्जरं, रदाभ्यां ] दन्ताभ्याम्, [ उच्चैरुत्क्षिप्य ] ऊर्द्ध्वमुद्यम्य, [ शृङ्गप्रोतप्रावृषेण्याम्बुदस्य ] शृङ्गे शिखरे, प्रोतः स्यूतः, प्रावृषेण्यः प्रावृषि भवः, अम्बुदो यस्य तस्य। "प्रावृष एण्यः" ( ४।३।१७ पा० ) इत्येण्यप्रत्ययः । [ उर्वीधरस्य ] गिरेः, [ साम्यं ] सादृश्यं, [ स्पष्टं प्रापत् ]। आप्नोतेर्लुङि "पुषादि—" ( ३।१।५५ पा० ) इति च्लेरङादेशः ॥ ३८ ॥

भग्नेऽपीति ।—[ स्वे ] स्वकीये, [ इभे ] गजे, [ भग्नेऽपि, देहं ] स्वाङ्गं, [ परावर्त्य ] प्रतिपक्षाभिमुखमावर्त्य । वृतेर्ण्यन्ताल्ल्यप् । अण्यन्तत्वपपाठः, अकर्मकस्य कर्मानन्वयात् । [ व्रीड़या सार्द्धमिषून् मुञ्चता] इषुमोक्षणेन स्वगजभङ्गव्रीड़ां निरस्यतेत्यर्थः, [ योद्धा ] भग्नेभस्थेन भटेन कर्त्रा । [ अभीक्ष्णं, दूनः ] इषुभिस्तप्तः । "ल्वादिभ्यः" ( ८।२। ४४ पा० ) इति निष्ठानत्वम् । अनुबध्नातीति [अनुबन्धी वारणः, यन्तुः] प्रतिगजाऽऽरोहस्य, [सम्मदेन साकं] स्वेभजयजन्येन हर्षेण सह । "प्रमदसम्मदौ हर्षे" ( ३।३।६८ पा० ) इति निपातः । [ प्रत्यरोधि ] प्रतिरुद्धः ; तत्प्रतिरोधेन तत्सम्मदस्यापि प्रतिरोधव्याप्तेरिति भावः । 'साकं सार्द्धं समं सह' इत्यमरः । अत्र व्रीड़ितेषुमोक्षयोः सम्मदयन्तृप्रतिरोधयोश्च कार्य्यकारणयोस्तत्पौर्वापर्य्यविपर्य्ययरूपातिशयोक्त्या सहभावोक्तेः सहोक्तिः सङ्कीर्य्यते ॥ ३९ ॥

सेनामध्यं गाहते वारणः स्म
ब्रह्मेव प्रागादिदेवोदरान्तः ॥ ४० ॥
भृङ्गश्रेणीश्यामभासां समूहै-
र्नाराचानां विद्धनीरन्ध्रदेहः ।
निर्भीकत्वादाहवेनाहतेच्छो
हृष्यन् हस्ती हृष्टरोमेव रेजे ॥ ४१ ॥

---

व्याप्तमिति।—[ वारणः ] कश्चिद्दन्ती, [ संरम्भित्वात् ] क्रोधित्वात्। 'संरम्भः सम्भ्रमे कोपे' इति विश्वः। [ धीरः ] निर्भीकः सन्, [ एत्य ] आगत्य, [ महीयः ] विपुलं, [ लोकैः ] जनैः, अन्यत्र,—भुवनैश्च, [व्याप्तम्]। 'लोकस्तु भुवने जने' इत्यमरः। अतः [दुःखलभ्यापसारं] दुःखलभ्यः अपसारोऽपसरणं यत्र तत्, [ सेनामध्यं, प्राक् ] पुरा, [आदिदेवोदरान्तः ] आदिदेवस्य विष्णोः, उदरान्तरुदराभ्यन्तरं, [ब्रह्मा] स्रष्टा, [ इव, गाहते स्म ] प्रविवेश। पुरा किल यथा बाह्यं सिसृक्षुः ब्रह्मा पूर्वसृष्टिदिदृक्षया विष्णोः कुक्षिं प्राविशदिति पौराणिकी कथा। केचित् ब्रह्मा ब्राह्मणो मार्कण्डेय इति व्याचक्षते, सोऽपि भगवन्महिमाऽवलोकनकौतुकात्तदनुज्ञया महाप्रलये तदुदरं प्रविश्य बभ्रामेत्यागमः। 'ब्रह्मा विप्रः प्रजापतिः' इत्यमरः। उपमाऽलङ्कारः ॥ ४० ॥

भृङ्गेति।—[भृङ्गश्रेणीश्यामभासां] भृङ्गश्रेणीव श्यामभासां कृष्णवर्णानां, [ नाराचानाम् ] अयोमयेषुविशेषाणां, [समूहैः, विद्धनीरन्ध्रदेहः ] विद्धः नीरन्ध्रो निर्विवरः, देहो यस्य सः, तथाऽपि [ निर्भीकत्वादाहवेन, अहतेच्छः ] अव्याहतोत्साहः, अत एव [ हृष्यन् ] मोदमानः, [ हस्ती, हृष्टरोमेव ] हर्षात् पुलकित इव इत्युत्प्रेक्षा। "हृषेर्लोमसु" ( ७।२।२९ पा० ) इति विकल्पादिडभावः। [ रेजे ] शुशुभे। "फणाञ्च सप्तानाम्" ( ६।४।१२५ पा० ) इति विकल्पादेत्वाभ्यासलोपौ ॥ ४१ ॥

आताम्राऽऽभा रोषभाजः कटान्ता-
दाशूत्खाते मार्गणे धूर्गतेन ।
निश्च्योतन्ती नागराजस्य जज्ञे
दानस्याऽऽहो लोहितस्येव धारा ॥ ४२ ॥

क्रामन् दन्तौ दन्तिनः साहसिक्या-
दीषादण्डौ मृत्युशय्यातलस्य ।
सैन्यैरन्यस्तत्क्षणादाशशङ्के
स्वर्गस्योच्चैरर्द्धमार्गाधिरूढः ॥ ४३ ॥

---

आताम्रेति ।—[ रोषभाजः ] क्रुद्धस्य, [ नागराजस्य ] महेभस्य, [ कटान्तात् ] गण्डस्थलात्, [ निश्च्योतन्ती ] प्रागेव स्रवन्ती, [ दानस्य] मदस्य, [ धारा, आताम्राऽऽभा ] क्रोधादरुणवर्णा, [ जज्ञे ] जाता, [ आहो, धूर्गतेन ] पुरोगतेन यन्त्रा, [ मार्गणे ] शरे, [ आशूत्खाते, लोहितस्य ] क्षतजस्य, [इव] धारा जज्ञे । जनेः कर्त्तरि लिट् । किमियं क्रोधारुणा मदधारा ? शरोद्धरणजन्या रक्तधारा वा ? इत्युभयकारण-सम्भवात् सादृश्याच्च संशयः ; स च विकल्पितसादृश्यमूल इत्यलङ्कारः ॥ ४२ ॥

क्रामन्निति ।—[ मृत्युशय्यातलस्य ] अन्तकपर्य्यङ्करूपस्य । 'अधः-स्वरूपयोरस्त्री तलम्' इत्यमरः । [ ईषादण्डौ ], दारुविशेषौ, तत्-सदृशावायतावित्यर्थः, [ दन्तिनो दन्तौ ] । सहसा वर्त्तत इति साह-सिकः, "ओजःसहोऽम्भसा वर्त्तते" ( ४।४।२७ पा० ) इति ठक्प्रत्ययः, तस्य भावात् [ साहसिक्यात् क्रामन् ] साहसवानित्यर्थः, [ अन्य-स्तत्क्षणात्, उच्चैः ] ऊर्द्धस्य, [स्वर्गस्य, अर्द्धमार्गाधिरूढः] अर्द्धश्चासौ मार्ग-श्चेत्यर्द्धमार्गः, तमधिरूढः, इति [ सैन्यैः, आशशङ्के ] उत्प्रेक्षितः ; इत्युत्प्रेक्षा ॥ ४३ ॥

कुर्वञ्ज्योत्स्नाविप्रुषां तुल्यरूप-
स्तारस्ताराजालसारामिव द्याम् ।
खड्गाऽऽघातैर्दारिताद्दन्तिकुम्भा-
दाभाति स्म प्रोच्छलन्मौक्तिकौघः ॥ ४४ ॥

दूरोत्क्षिप्तक्षिप्रचक्रेण कृत्तं
मत्तो हस्तं हस्तिराजः स्वमेव ।
भीमं भूमौ लोलमानं सरोषः
पादेनासृक्पङ्कपेषं पिपेष ॥ ४५ ॥

---

कुर्वन्निति ।—[ ज्योत्स्नाविप्रुषां तुल्यरूपः ] चन्द्रिकाबिन्दुस्वरूपः, [ तारः ] शुद्धः । 'तारो मुक्तादिसंशुद्धौ' इति विश्वः । [ खड्गाऽऽघातैर्दारिताद्दन्तिकुम्भात्, प्रोच्छलन् ] उत्पतन्, [ मौक्तिकौघः ] मुक्तापुञ्जः, [ द्याम् ] आकाशं, [ ताराजालसारां ] नक्षत्रशबलितां, तारकितामित्यर्थः, [कुर्वन्निव] ; इत्युत्प्रेक्षा । 'सारः शबलपीतयोः' इति विश्वः । [आभाति स्म ] बभौ ॥ ४४ ॥

दूरोत्क्षिप्तेति ।—[ मत्तः, हस्तिराजः ] करीन्द्रः, [ दूरोत्क्षिप्तक्षिप्रचक्रेण ] दूरात् उत्क्षिप्तेन प्रास्तेन, अत एव क्षिप्रेण सत्वरेण, चक्रेण, [ कृत्तम् ] ; अत एव [ भूमौ, लोलमानं ] लुठमानम् । लोलतेरनात्मनेपदित्वात् "ताच्छील्यवयोवचनशक्तिषु चानश्" ( ३।२।१२९ पा० ) इति ताच्छील्ये चानश्प्रत्ययः । अत एव 'लोलमानादयश्चानशि' (५अधि० २अध्या० ८सू०) इति वामनः । [भीमं] भयङ्करं, [स्वं] स्वकीयम्, [एव हस्तं सरोषः] सन्, [पादेन] अङ्घ्रिणा ; असृक्पङ्केन पङ्कीभूतेनासृजा, पिनष्टीति [ असृक्पङ्कपेषम् ] । "स्नेहने पिषः" ( ३।४।३८ पा० ) इति णमुल् । [ पिपेष ] । कषादित्वादनुप्रयोगः । रक्तपङ्केन स्नेह-

आपस्फाराल्लूनगात्रस्य भूमिं
निःसाऽऽधारं गच्छतोऽवाङ्मुखस्य ।
लब्धाऽऽयामं दन्तयोर्युग्ममेव
स्वं नागस्य प्रापदुत्तम्भनत्वम् ॥ ४६ ॥

लब्धस्पर्शं भूव्यधादव्यथेन
स्थित्वा किञ्चिद्दन्तयोरन्तराले ।
ऊर्द्धार्द्धासिच्छिन्नदन्तप्रवेष्टं
जित्वोत्तस्थे नागमन्येन सद्यः ॥ ४७ ॥

---

द्रव्येण ममर्देत्यर्थः । क्रुद्धमत्तयोः कुतो विवेकः ? इति भावः । अत्र पेषणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ४५ ॥

आपस्फारादिति ।—गात्रमूलमापस्फारम् [ आपस्फारात् ] आमूलात् । आङो विकल्पादसमासः । [ लूनगात्रस्य ] छिन्नजङ्घस्य । 'द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्राऽवरे क्रमात्' इत्यमरः । अत एव [ अवाङ्मुखस्य] सतः ; साऽऽधारं सावलम्बनं न भवतीति [निःसाऽऽधारं] यथा तथा, [ भूमिं गच्छतः ] पततः इत्यर्थः, [ नागस्य, लब्धाऽऽयामं ] प्राप्तदैर्घ्यम्, आयतमित्यर्थः, । [ स्वं ] स्वकीयं, [ दन्तयोर्युग्ममेव, उत्तम्भनत्वम् ] अवलम्बनत्वं, [ प्रापत् ]। जङ्घाच्छेदेऽपि दन्तावष्टम्भादपतित इत्यर्थः । अत्र स्वभावातिशयोक्त्योः संसृष्टिः ॥ ४६ ॥

लब्धस्पर्शमिति ।—[ भूव्यधात् ] दन्ताभ्यां भुवो विद्धत्वादित्यर्थः । "व्यधजपोरनुपसर्गे" (३।३।६१ पा०) इत्यप्प्रत्ययः । [ अव्यथेन ] स्वयमविद्धत्वादव्यथेन सता, [ अन्येन ] केनचिद्भटेन, [ दन्तयोरन्तराले किञ्चित्, लब्धस्पर्शं ] लब्धः स्पर्शो यस्मिन् कर्मणि तत्, दन्ताभ्यां भटस्पर्शं यथा तथा, [ स्थित्वा, ऊर्द्धार्द्धासिच्छिन्नदन्तप्रवेष्टम् ] ऊर्द्ध्वं प्रसा-

हस्तेनाग्रे वीतभीतिं गृहीत्वा
कश्चिद्व्यालः क्षिप्तवानूर्ध्वमुच्चैः ।
आसीनानां व्योम्नि तस्यैव हेतो-
र्दिव्यस्त्रीणामर्पयामास नूनम् ॥ ४८ ॥

कश्चिद्दूरादायतेन द्रढीयः-
प्रासप्रोतस्रोतसाऽन्तःक्षतेन ।
हस्ताग्रेण प्राप्तमेवाग्रतोऽभू-
दानैश्वर्य्यं वारणस्य ग्रहीतुम् ॥ ४९ ॥

---

रितेन, अर्द्धासिना खड्गैकदेशेन, छिन्नः चूर्णितः, दन्तप्रवेष्टो दन्तवेष्टनं यस्य तं, [ नागं जित्वा, सद्यः ] एव, [ उत्तस्थे ] उत्थितम् । भावे लिट् । अत्रापि तथोत्थानाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥४७॥

हस्तेनेति ।—[ व्यालः ] दुष्टदन्ती । 'व्यालो दुष्टगजे सर्पे' इति विश्वः । [ अग्रे, वीतभीतिं] निर्भीकं, भीतेः स्वर्गाभावादिति भावः । [ कश्चित् ] वीरं, [ हस्तेन गृहीत्वा, ऊर्ध्वम् ] उपरि, [उच्चैः क्षिप्तवान्] । उत्प्रेक्ष्यते ; [ तस्यैव हेतोः ] तेनैव हेतुना, तद्वरणार्थमेवेत्यर्थः । "सर्वनाम्नस्तृतीया च" (२।३।२७ पा०) इति चकारात् षष्ठी । [ व्योम्नि, आसीनानाम् ] अवस्थितानाम् । "ई दासः" ( ७।२।८३ पा० ) इति शानच ईकारः । [ दिव्यस्त्रीणां ] स्वर्गस्त्रीणाम्, अमरनारीणामिति यावत्, [ अर्पयामास नूनम् ]॥ ४८ ॥

कश्चिदिति ।—[ दूरादायतेन अन्तः, क्षतेन ] विक्षतेन, अत एव [ द्रढीयःप्रासप्रोतस्रोतसा ] द्रढीयसा प्रासेन प्रोतं स्रोतो यत्र तेन, [ हस्ताग्रेण ], करेण । [ अग्रतः एव, प्राप्तम् ] अपि, [ कश्चित् ] भटं, [ ग्रहीतुम् ] आदातुं, [वारणस्य] ; अनीश्वरस्य भावः [आनैश्वर्य्यम्]

तन्वाः पुंसो नन्दगोपाऽऽत्मजायाः
कंसेनेव स्फोटितायाः गजेन।
दिव्या मूर्त्तिर्व्योमगैरुत्पतन्ती
वीक्षामासे विस्मितैश्चण्डिकेव ॥ ५० ॥

आक्रम्यैकामग्रपादेन जङ्घा-
मन्यामुच्चैराददानः करेण।
सास्थिस्वानं दारुवद्दारुणाऽऽत्मा
कश्चिन्मध्यात् पाटयामास दन्ती ॥ ५१ ॥

---

असामर्थ्यम्, [ अभूत् ]। "नञः शुचीश्वर—" ( ७।३।३० पा० ) इत्यादिना नञ्पूर्वपदोभयपदवृद्धिः। अत्रापि आनैश्वर्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ४९ ॥

तन्वा इति।—[ गजेन, स्फोटितायाः ] विदारितायाः, [ पुंसः ] कस्यचिद्वीरस्य, [ तन्वाः ] शरीरात्, [ कंसेन ] स्फोटितायाः [ नन्दगोपाऽऽत्मजायाः ] नन्दकन्यायाः, [ इव, उत्पतन्ती दिव्या मूर्त्तिः चण्डिकेव ] नन्दकन्याशरीरादाविर्भवन्ती कालिकेव, [ विस्मितैः, व्योमगैः ] खेचरैः, [ वीक्षामासे ] वीक्षिता। ईक्षतेः कर्मणि लिट्, "इजादेश्च गुरुमतोऽनृच्छः" ( ३।१।३६ पा० ) इत्याम्प्रत्ययः। मनुष्यभावमुत्सृज्य देवभावं गतेत्यर्थः। उपमा व्यक्ता। पुरा किल दुरात्मनः कंसस्य प्रतारणाय भगवदाज्ञया तन्मायाशक्तिर्नन्दगोपाज्जाता कंसेन हिंसितेति पौराणिकाः ॥ ५० ॥

आक्रम्येति।—[दारुणाऽऽत्मा] क्रुद्धचित्तः, [दन्ती एकां जङ्घामग्रपादेनाऽऽक्रम्य, अन्यां] जङ्घाम्, [उच्चैः] उन्नतेन, [करेण, आददानः] आकर्षयन्, [ सास्थिस्वानं ] भज्यमानास्थिपटत्कारशब्दयुक्तं यथा तथा,

शोचित्वाऽग्रे भृत्ययोर्मृत्युभाजो-
रर्य्यः प्रेम्णा नो तथा वल्लभस्य ।
पूर्वं कृत्वा नेतरस्य प्रसादं
पश्चात्तापादाप दाहं यथाऽन्तः ॥ ५२ ॥

उत्प्लुत्याऽऽरादर्द्धचन्द्रेण लूने
वक्त्रेऽन्यस्य क्रोधदष्टोष्ठदन्ते ।
सैन्यैः कण्ठच्छेदलीने कबन्धा-
द्भूयो बिभ्ये वल्गतः सासिपाणेः ॥ ५३ ॥

---

[ कश्चित् ] वीरं, [ दारुवत् ] काष्ठवत्, [ मध्यात् पाटयामास ] मध्यं विभज्य पाटयामासेत्यर्थः। ल्यब्लोपे पञ्चमी। उपमा ॥ ५१ ॥

शोचित्वेति।—ऋच्छतीति [ अर्य्यः ]। "अर्य्यः स्वामिवैश्ययोः" ( ३।१।१०३ पा० ) इति यत्प्रत्ययान्तो निपातः। [ अग्रे ] समक्षमेव, [ मृत्युभाजोः ] मरणं गतयोः, [ भृत्ययोः शोचित्वा, वल्लभस्य ] एतयोर्मध्ये प्रियभृत्यस्य सम्बन्धिना, [ प्रेम्णा ] तद्गतप्रेम्णेत्यर्थः, [ तथा ] तेन प्रकारेण, [ अन्तः, दाहं ] सन्तापं, [ नो आप; यथा ] येन प्रकारेण, [ इतरस्य ] अवल्लभस्य, [ पूर्वं ] जीवनकाले, [ प्रसादं ] प्रीतिदानाद्यनुग्रहं, [ न कृत्वा, पश्चात्तापात् ] हतोऽयमस्माभिरप्रीणित एव प्राणान् प्रादादित्यनुशयात्, दाहमाप। प्रियभृत्यमरणादप्यसम्मानितमरणमेव स्वामिनो दुःसहदुःखहेतुरासीदित्यर्थः। स्वभावोक्तिः ॥ ५२ ॥

उत्प्लुत्येति।—[ अर्द्धचन्द्रेण ] बाणेन, [ लूने ] छिन्ने, तथाऽपि [ क्रोधदष्टोष्ठदन्ते ] क्रोधेन दष्टौ ओष्ठौ यैस्ते दन्ता यस्य तस्मिन्, [ अन्यस्य ] योधस्य, [ वक्त्रे, आरात् ] अनतिदूरम्, [ उत्प्लुत्य ]। 'आराद्दूरसमी-

तूर्य्याऽऽरावैराहितोत्तालताले-
र्गायन्तीभिः काहलं काहलाभिः।
नृत्ते चक्षुःशून्यहस्तप्रयोगं
काये कूजन् कम्बुरुच्चैर्जहास ॥ ५४ ॥

---

पयोः' इत्यमरः। [ भूयः ] पुनरपि, [ कण्ठच्छेदलीने ] कण्ठस्य छेदः छिन्नदेशः, तत्र लीने स्थिते सति, [ वक्त्रात् ] नृत्यतः, [ सासिपाणेः ] सासिः पाणिर्यस्य तस्मात्, [ कबन्धात् ] अपमूर्द्धकलेवरात्। "भीत्रार्थानां भयहेतुः" ( १।४।२५ पा० ) इति पञ्चमी। [ सैन्यैः, बिभ्ये ] भीतम्। भावे लिट्। लूनस्यापि वक्त्रस्य पुनः स्वस्थानपातित्वाद्वल्गनासिधारणाभ्यां कबन्धादप्यकबन्धभ्रान्त्या सर्वे बिभ्युरित्यर्थः। अत एव भ्रान्तिमदलङ्कारः ॥ ५३ ॥

तूर्य्याऽऽरावैरिति।—[ आहितोत्तालतालैः] आहिताः सम्पादिताः, उत्तालाः प्रस्फुटाः, तालाः करपुटादिक्रियामानानि येषु तैः। 'तालः कालक्रियामानम्' इत्यमरः। [तूर्य्याऽऽरावैः] मृदङ्गादिवाद्यघोषैः, तथा [ काहलं ] भृशं, [ गायन्तीभिः ] ध्वनन्तीभिः, [काहलाभिः ] शुष्कैर्वाद्यविशेषैश्च करणैः। 'काहलं भृशशुष्कयोः। वाद्यभाण्डविशेषे तु काहला: काहलः खले ॥' इति विश्वः। [ काये ] अपमूर्द्धि कलेवरे, अत एव [ चक्षुःशून्यहस्तप्रयोगं ] चक्षुःशून्यो दृष्टिरहितः, हस्तप्रयोगो यस्मिन् कर्मणि तत् यथा तथा, [ नृत्ते ] नृत्यति सति। कर्त्तरि क्तः। [ कूजन् ] ध्वनन्, [ कम्बुः ] शङ्खः, तटस्थ इवेत्यर्थः। [ उच्चैः ] उच्चैस्तरां, [ जहास ], दृष्टिशून्याभिनयस्य नाट्यशास्त्रविरोधात् अट्टहासमकरोदित्यर्थः। व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा। 'अङ्गैरालापयेद्गीतं हस्तेनार्थं प्रदर्शयेत्। दृष्टिभ्यां भावयेद्भावं पादाभ्यां तालनिर्णयः ॥' इति नाट्यविदः ॥ ५४ ॥

प्रत्यावृत्तं भङ्गभाजि स्वसैन्ये
तुल्यं मुक्तैराकिरन्ति स्म कञ्चित् ।
एकौघेन स्वर्णपुङ्खैर्द्विषन्तः
सिद्धा माल्यैः साधुवादैर्द्वयेऽपि ॥ ५५ ॥

बाणाऽऽच्छिन्नाऽऽरोहशून्याऽऽसनानां
प्रक्रान्तानामन्यसैन्यैर्ग्रहीतुम् ।
संरब्धानां भ्राम्यतामाजिभूमौ
वारौ वारैः सस्मरे वारणानाम् ॥ ५६ ॥

---

प्रत्यावृत्तमिति ।—[ स्वसैन्ये भङ्गभाजि ] सति, [ प्रत्यावृत्तम् ] ; अभ्यमित्रं, [ कञ्चित् ] वीरं, [ तुल्यम् ] एककालं, [ मुक्तैः, स्वर्णपुङ्खैः ] शरविशेषैः, [ एकौघेन ] एकप्रहारेण, [ द्विषन्तः आकिरन्ति स्म । सिद्धाः ] खेचराः, [ माल्यैः ] दिव्यमालाभिः । चातुर्वर्ण्यादित्वात् ष्यञ्प्रत्ययः । आकिरन्ति स्म । [ द्वयेऽपि ] द्विषन्तः सिद्धाश्च, [साधुवादैः ] साधु साध्विति वाक्यैः, आकिरन्ति स्म । एतत् त्रितयमपि युगपत् प्रवृत्तमित्यर्थः । अत्र स्वर्णपुङ्खशरमाल्यसाधुवादानां प्रकृतानामेव तुल्यकालैकौघप्रवृत्तिसाम्यादौपम्यावगमात् केवलप्रकृताऽऽस्पदा तुल्ययोगिता ॥ ५५ ॥

बाणेति ।—[ बाणाऽऽच्छिन्नाऽऽरोहशून्याऽऽसनानां ] बाणैराच्छिन्नाः पातिताः, आरोहाः सादिनो येभ्यस्तानि, अत एव शून्यानि रिक्तानि, आसनानि आस्तरणानि येषाम्, अत एव [अन्यसैन्यैः] अन्यैः सैन्यैः, परसैनिकैरित्यर्थः, [ ग्रहीतुं, प्रक्रान्तानाम् ] आरब्धानां, समन्तादवरुध्यमानानामित्यर्थः, अत एव [संरब्धानां] क्षुभितानाम्, अत एव [ आजिभूमौ, भ्राम्यताम् ] अनवतिष्ठमानानां, [ वारणानां, वारैः ] वृन्दैः,

पौनःपुन्यादस्रगन्धेन मत्तो
मृद्नन् कोपाल्लोकमायोधनोर्व्याम् ।
पादे लग्नामत्र मालामिभेन्द्रः
पाशीकल्पामायतामाचकर्ष ॥ ५७ ॥

कश्चिन्मूर्च्छामित्य गाढप्रहारः
सिक्तः शीतैः शीकरैर्वारणस्य ।
उच्छ्वस्य प्रस्थिता तं जिघृक्षु-
र्व्यर्थाऽऽकूता नाकनारी मुमूर्च्छ ॥ ५८ ॥

---

[ वारी ] बन्धनस्थानम् । 'वारः सूर्य्यादिदिवसे वारी वरण-बन्दयोः । वारी कटीभबन्धन्योः' इति विश्वः । [ सस्मरे ] स्मृता ; तद्धर्मयोगादिति भावः । कर्मणि लिट् । अत्र शून्याऽऽसनत्वादीनां विशेषणगत्या वारीस्मरणहेतुत्वात् काव्यलिङ्गम् ॥ ५६ ॥

पौनःपुन्यादिति ।—[ अत्र, आयोधनोर्व्यां ] युद्धभूमौ, [ पौनःपुन्यात् ] पुनःपुनरावृत्तेरित्यर्थः । ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । "अव्ययानां भमात्रे टिलोपस्य सायंप्रातिकाद्यर्थमुपसङ्ख्यानम्" ( वा० ) इति टिलोपः । [ अस्रगन्धेन ] रक्तगन्धाऽऽघ्राणादिनेत्यर्थः, [ मत्तः, इभेन्द्रः ] महागजः, [ कोपात्, लोकं ] जनं, [ मृद्नन् ] क्षुभ्नन्, [पादे लग्नाम्] ; ईषदसमाप्तां पाशीं [ पाशीकल्पां ] पाशबन्धनसदृशीम् । 'पाश-स्त्वश्वादिबन्धनम्' इति विश्वः । "बह्वादिभ्यश्च" ( ४।१।४५ पा० ) इति विकल्पादीकारः, अभाषितपुंस्कत्वात् "घरूप—"( ६।३।४३ पा० ) इत्यादिना ह्रस्वो न भवति । [ आयतां ] दीर्घां, [ मालामाचकर्ष ] । पाशीकल्पेत्यत्र तद्धितगता पूर्णोपमा ॥ ५७ ॥

कश्चिदिति ।—[ गाढप्रहारः ] गाढः प्रहारो यस्य सः, [ कश्चित् ] वीरः, [ मूर्च्छामित्य, वारणस्य शीतैः शीकरैः ] पुष्करतुषारैः, [ सिक्तः ]

लूनग्रीवात् सायकेनापरस्य
द्यामत्युच्चैराननादुत्पतिष्णोः ।
लेभे मुग्धैः सैंहिकेयानुकारा-
द्रौद्राऽऽकारादप्सरोवक्त्रचन्द्रैः ॥ ५९ ॥
वृत्तं युद्धे शूरमाश्लिष्य काचित्
रन्तुं तूर्णं मेरुकुञ्जं जगाम ।

---

सन्, [ उच्छ्वास ] उज्जीवति स्म । किन्तु [ तं ] मूर्च्छामागतं, [ जिघृक्षुः ] ग्रहीतुमिच्छुः । ग्रहेः सनन्तादुप्रत्ययः । [ प्रस्थिता ] तं वरीतुमागतेत्यर्थः, [ नाकनारी, व्यर्थाऽऽकूता ] तदुज्जीवनाद्विफल-मनोरथा सती, [ मुमूर्च्छ ] । अत्राऽऽकूतवैयर्थ्यस्य विशेषणगत्या नाक-नारीमूर्च्छाहेतुत्वात् काव्यलिङ्गं मूर्च्छासम्बन्धातिशयोक्त्या सङ्कीर्य्यते ॥ ५८ ॥

लूनग्रीवादिति ।—[ अपरस्य सायकेन, लूनग्रीवात् ] छिन्नकण्ठात्, अत एव [ द्याम् ] आकाशं प्रति, [ अत्युच्चैः, उत्पतिष्णोः ] उत्पतन-शीलात् । "अलङ्कृञ्—" ( ३।२।१३६ पा० ) इत्यादिना इष्णुच्प्रत्ययः । अत एव [ सैंहिकेयानुकारात् ] सिंहिकाया अपत्यं पुमान् सैंहिकेयो राहुः । 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः । "स्त्रीभ्यो ढक्" (४।१।१२० पा०) इति ढक् । तमनुकरोतीति तदनुका-रात्, तत्सदृशादित्यर्थः । कर्मण्यण्प्रत्ययः । [ रौद्राऽऽकारात् ] भीषणा-ऽऽकृतेः, अस्य वीरस्य [ आननात्, मुग्धैः ] सुन्दरैः, [ अप्सरोवक्त्रचन्द्रैः ] अप्सरसां वक्त्रैरेव चन्द्रैः , [ लेभे ] लब्धम् । भावे लिट् । अत्र राहुहेतुक-लाभस्य चन्द्र एव सम्भवात् वक्त्र चन्द्रैरिति रूपकं सिद्धम् ; तस्य सैंहिकेया-नुकारादिति स्पष्टोपमाऽपेक्षत्वात् सङ्करः ॥ ५९ ॥

वृत्तमिति ।—[ काचित् ] अमरनारी, [ युद्धे, वृत्तं ] मृतम् । 'वृत्तो-

त्यक्त्वा नाग्नौ देहमेति स्म यावत्
पत्नी सद्यस्तद्वियोगासमर्था ॥ ६० ॥
त्यक्तप्राणं संयुगे हस्तिनीस्था
वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुः ।
प्राप्याखण्डं देवभूयं सतीत्वा-
दाशिश्लेष स्वैव कञ्चित् पुरन्ध्री ॥ ६१ ॥
स्वर्गवासं कारयन्त्या चिराय
प्रत्यग्रत्वं प्रत्यहं धारयन्त्या ।

---

ऽतीते दृढे ख्याते वर्त्तुलेऽपि वृते मृते' इति विश्वः। [ शूरमाश्लिष्य रन्तुं तूर्णं, मेरुकुञ्जं ] मेरोः कुञ्जं गह्वरं, [ जगाम। यावत्, तद्वियोगासमर्था ] तद्विरहासहा, [ पत्नी सद्योऽग्नौ देहं त्यक्त्वा, नैति स्म ] नाऽऽजगाम। अत्र मेरुकुञ्जासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६० ॥

त्यक्तेति।—[ संयुगे ] युद्धे, [त्यक्तप्राणं, कञ्चित् ] वीरम् ; हस्तिन्यां तिष्ठतीति [ हस्तिनीस्था ] करिणीमारूढा सती, [ वीक्ष्य प्रेम्णा तत्क्षणात्, उद्गतासुः ] गतप्राणा, [स्वैव पुरन्ध्री] स्वभार्य्यैव, [सतीत्वात्] पतिव्रतात्वात्, [ अखण्डम् ] अक्षयं, [देवभूयं] देवत्वम्। "भुवो भावे" ( ३।१।१०७ पा० ) इति क्यप्। [ प्राप्याऽऽशिश्लेष ]। स्त्रीणां पातिव्रत्यमेव पतिसालोक्यनिदानं, नाग्निप्रवेशादिकमिति भावः। अत्र सतीत्वस्य विशेषणगत्या देवभूयहेतुत्वानुक्तेर्न काव्यलिङ्गम्। अतिशयोक्त्यादिकन्तु यथासम्भवमूह्यम् ॥ ६१ ॥

स्वर्गं इति।—[ कश्चित् ] वीरः, [ चिराय ] चिरकालं, [ स्वर्गवासम् ]। "शयवासवासिष्वकालात्" ( ६।३।१८ पा० ) इति विकल्पादलुक्। [ कारयन्त्या ] अनुभावयन्त्या, अहन्यहनि [ प्रत्यहम् ]।

कश्चिद्भेजे दिव्यनार्य्या परस्मिन्
लोके लोकं प्रीणयन्त्येह कीर्त्या ॥ ६२ ॥
गत्वा नूनं वैबुधं सद्म रम्यं
मूर्च्छाभाजामाजगामान्तरात्मा ।
भूयो दृष्टप्रत्ययाः प्राप्तसंज्ञाः
साधीयस्ते यद्रणायाद्रियन्ते ॥ ६३ ॥

"नपुंसकादन्यतरस्याम्" (५।४।१०९ पा०) इत्यव्ययीभावे समासान्त-टच्प्रत्ययः, "अव्ययानां भमात्रे टिलोपः" (वा०) * इत्युक्तम्। [प्रत्यग्रत्वं] नूतनत्वं, [धारयन्त्या]; परमप्रेमाऽऽस्पदत्वादिति भावः; [लोकं, प्रीणयन्त्या] अद्भुतत्वं प्रापयन्त्या। प्रीञो ण्यन्ताल्लटः शतरि ङीप्। "धूञ् प्रीञोर्नुग्वक्तव्यः" (वा०) † इति नुगागमः। [दिव्यनार्य्या परस्मिँल्लोके, इह] लोके [कीर्त्या] च [भेजे] प्राप्तः। भेजेः कर्मणि लिट्। रणमरणाल्लोकद्वयमपि जिगायेत्यर्थः। अत्र दिव्याङ्गनाकीर्त्योः प्रकृतयोरेव तुल्यधर्मसम्बन्धात् केवलप्रकृताऽऽस्पदा तुल्ययोगिता ॥ ६२ ॥

गत्वेति।—[मूर्च्छाभाजाम्, अन्तरात्मा] जीवः, [रम्यं, वैबुधं सद्म] दिव्यभवनं, [गत्वा आजगाम], मूर्च्छासमये सुरलोकरामणीयकं दृष्ट्वा आजगाम, [नूनम्] उत्प्रेक्षायाम्। कुतः?—[यत्] यस्मात्, [प्राप्तसंज्ञाः] लब्धबोधाः सन्तः, [दृष्टप्रत्ययाः] दृढविश्वासाः, [ते, भूयः] पुनरपि, [साधीयः] गाढतरम्। गाढादीयसुनि ‡ "अन्तिकबाढयो-

* "अव्ययात् त्यप्" (४।२।१०४ पा०) इति सूत्रस्य वार्त्तिकमेतत्।

† कौमुद्यां तिङन्ते चुरादौ "धूञ् कम्पने" इति धातुपाठे उद्धृतमेतत् वार्त्तिकसूत्रमिति ज्ञेयम्।

‡ "गाढादीयसुनि" इत्यत्र "बाढादीयसुनि" इत्येवमेव भवितुमुचितम्; उद्धृतसूत्रेण हि बाढशब्दस्यैव साधाऽऽदेशस्य अनुशिष्टत्वात्; प्रचलितपाठस्तु लिपिकरप्रमादादायातः इत्यनुमीयते।

कश्चिच्छस्त्राऽऽपातमूढोऽपवोढु-
र्लब्ध्वा भूयश्चेतनामाहवाय ।
व्यावर्त्तिष्ट क्रोशतः सख्युरुच्चै-
स्त्यक्तश्चाऽऽत्मा का च लोकानुवृत्तिः ? ॥६४॥

भिन्नोरस्कौ शत्रुणाऽऽकृष्य दूरा-
दासन्नत्वात् कौचिदेकेषुणेव ।
अन्योऽन्यावष्टम्भसामर्थ्ययोगा-
दूर्द्ध्वाविव स्वर्गतावप्यभूताम् ॥ ६५ ॥

---

र्नैदसाधौ" ( ५।२।६३ पा० ) इति साधाऽऽदेशः । [ रणाय ] रणं कर्त्तुम्, [ आद्रियन्ते ] उत्सेहिरे इत्यर्थः । कर्त्तरि लट् श्यन्प्रत्ययः । कथञ्चि-दुज्जीवितानां पुनर्मृत्युप्राप्तिः श्रेयोदर्शनहेतुकेति भावः ॥ ६३ ॥

कश्चिदिति ।—[ शस्त्राऽऽपातमूढः ] प्रहारमूर्च्छितः, [कश्चित् ] वीरः, [ चेतनां ] संज्ञां, [ लब्ध्वा, अपवोढुः ] मूर्च्छासमये युद्धभूमेरपनेतुः, [ सख्युः ] मित्रस्य, [ उच्चैः क्रोशतः ] आगच्छाऽऽगच्छेत्याक्रोशति सति । "षष्ठी चानादरे" ( २।३।३८ पा० ) इति षष्ठी । क्रोशन्तमनादृत्येत्यर्थः, [ भूयः ] पुनरपि, [ आहवाय ] रणाय, [ व्यावर्त्तिष्ट । आत्मा ] देहः, [ त्यक्तश्च ] । तथा हि,—[ लोकानुवृत्तिश्च का ? ], नैवेत्यर्थः । सुहृ-ज्जनानुरोधस्तु हितानर्थिनः परिच्छेत्तुं वृथेत्यर्थः । सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यासः ॥ ६४ ॥

भिन्नोरस्काविति ।—[शत्रुणा दूरादाकृष्य, आसन्नत्वात्] सन्निकृष्टत्वात्, तयोरित्यर्थः । [ एकेषुणेव, भिन्नोरस्कौ ] विदारितवक्षसौ, [ कौचित् ] वीरौ, [ अन्योऽन्यावष्टम्भसामर्थ्ययोगात् ] अन्योऽन्यावष्टम्भ एव सामर्थ्यं तस्य योगात् स्वभावात्, [ ऊर्द्ध्वाविव ] ऊर्द्ध्वं तिष्ठन्ताविव, [ स्वर्गतावपि ]

भिन्नानस्त्रैर्मोहभाजोऽभिजातान्
हन्तुं लोलं वारयन्तः स्ववर्गम् ।
जीवग्राहं ग्राहयामासुरन्ये
योग्येनार्थः कस्य न स्याज्जनेन ? ॥ ६६ ॥

भग्नैर्दण्डैरातपत्राणि भूमौ
पर्य्यस्तानि प्रौढचन्द्रद्युतीनि ।
आहाराय प्रेतराजस्य रौप्य-
स्थालानीव स्थापितानि स्म भान्ति ॥ ६७ ॥

---

मृतौ, [ अभूताम् ]। अपिश्चार्थः। तत्र मृतयोरूर्ध्वावस्थानासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६५ ॥

भिन्नानिति।—[ अन्ये ] वीराः, [ अस्त्रैः, भिन्नान् ] विदारितान्, अत एव [मोहभाजः] मूर्च्छाभाजः, मूर्च्छाङ्गतानित्यर्थः, [ अभिजातान् ] कुलीनान्। 'अभिजातः स्थितो न्याय्ये कुलीनप्राज्ञयोरपि' इति विश्वः। [ हन्तुं, लोलम् ] उत्सुकं, [ स्ववर्गं वारयन्तः ]; जीवं गृहीत्वा [ जीवग्राहं ग्राहयामासुः ] जीवमेव ग्राहयामासुरित्यर्थः। "समूलाकृतजीवेषु हन्कृञ्ग्रहः" ( ३।४।३६ पा० ) इति णमुल्प्रत्ययः, कषादित्वादनुप्रयोगः। जीवग्रहणप्रयोजनमर्थान्तरन्यासेनाऽऽह, तथा हि,—[ योग्येन जनेन ] हेतुना, [ कस्य ] पुंसः, [ अर्थः ] कीर्त्यादिप्रयोजनं, [ न स्यात् ? ]। स्यादेव सर्वस्यापि इत्यर्थः। अतो वीराणां रणेष्वपि अतिपरिचितरक्षणमेव श्रेयः। 'नाऽऽर्त्तं नातिपरिचितम्' इति हनननिषेधादिति भावः ॥ ६६ ॥

भग्नैरिति।—[ भग्नैर्दण्डैः ] हेतुना; भग्नदण्डत्वादिति भावः। [ भूमौ, पर्य्यस्तानि ] उत्तानपतितानि, [ प्रौढचन्द्रद्युतीनि ] पूर्णेन्दुप्रभाणि, [ आतपत्राणि ] श्वेतच्छत्राणीत्यर्थः, [ प्रेतराजस्य ] अन्त-

रेजुर्भ्रष्टा वक्षसः कुङ्कुमाङ्का
मुक्ताहाराः पार्थिवानां व्यसूनाम्।
हासाल्लक्ष्याः पूर्णकामस्य मन्ये
मृत्योर्दन्ताः पीतरक्ताऽऽसवस्य॥ ६८॥

निम्नेष्वोघीभूतमस्रक्षताना-
मस्रं भूमौ यच्चकासाञ्चकार।
रागार्थं तत् किं नु कौसुम्भमम्भः
संव्यानानामन्तकान्तःपुरस्य?॥ ६९॥

---

कस्य, [आहाराय] भोजनाय, [स्थापितानि] विहितानि, [रौप्य-स्थालानि] राजतभाजनानि, [इव भान्ति स्म] इत्युत्प्रेक्षा॥ ६७॥

रेजुरिति।—[व्यसूनां] मृतानां, [पार्थिवानां वक्षसः, भ्रष्टाः] पतिताः, [कुङ्कुमाङ्काः] कुङ्कुमाङ्किता इत्यर्थः, [मुक्ताहाराः, पूर्ण-कामस्य] सकलराजकसंहारात् सफलमनोरथस्य, अत एव [पीत-रक्ताऽऽसवस्य] पीतं रक्तमेव आसवं येन तस्य, [मृत्योः, हासात्] अट्ट-हासात्, [लक्ष्याः] दृश्याः, [दन्ता रेजुः], इति [मन्ये] इत्युत्प्रेक्षा॥ ६८॥

निम्नेष्विति।—[भूमौ, निम्नेषु] निम्नस्थलेषु, [ओघीभूतं] राशी-भूतम्, [अस्रक्षतानां] सम्बन्धि, [यत्, अस्रं] रक्तं, [चकासाञ्चकार] दिदीपे। 'चकासृ दीप्तौ' इति धातोर्लिट्, "कास्यनेकाच आम् वक्तव्यः" * इत्याम्प्रत्यये कृञोऽनुप्रयोगः। [तत्] अस्रम्, [अन्त-कान्तःपुरस्य] कृतान्तावरोधस्य, [संव्यानानाम्] उत्तरीयाणां,

---

* कौमुद्यां दीक्षितैः "कास्प्रत्ययादाममन्त्रे लिटि" (३।१।३५ पा०) इति सूत्रे "कास्यनेकाज्ग्रहणं कर्त्तव्यम्" एवमेव वार्त्तिकरूपं पठितमिति ज्ञेयम्।

रामेण त्रिःसप्तकृत्वो ह्रदानां
चित्रं चक्रे पञ्चकं क्षत्रियास्रैः ।
रक्ताम्भोभिस्तत्क्षणादेव तस्मिन्
सङ्ख्येऽसङ्ख्याः प्रावहन् द्वीपवत्यः ॥ ७० ॥

सन्दानान्तादस्त्रिभिः शिक्षितास्त्रै-
राविश्याधः शातशस्त्रावलूनाः ।
कूर्मौपम्यं व्यक्तमन्तर्नदीना-
मैभाः प्रापन्नङ्घ्रयोऽसह्ययीणाम् ॥ ७१ ॥

---

[ रागार्थं ] रञ्जनार्थं, कुसुम्भस्येदं [ कौसुम्भम् अम्भः किं नु ? ] कुसुम्भद्रवो नु वा ? इत्युत्प्रेक्षा ॥ ६९ ॥

रामेणेति ।—[ रामेण ] भार्गवेण, त्रीन् वारान् त्रिः । "द्वित्रिचतुर्भ्यः सुच्" ( ५।४।१८ पा० ) इति सुच्प्रत्ययः । त्रिरावृत्ताः सप्त [ त्रिःसप्तकृत्वः ] एकविंशतिवारानित्यर्थः । "सङ्ख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच् ( ५।४।१७ पा० ) इति कृत्वसुच्प्रत्ययः । [ क्षत्रियास्रैः ] राजन्यरक्तैः, [ चित्रम् ] अद्भुतं, [ ह्रदानां ], पञ्च परिमाणमस्य [ पञ्चकम् ] । "सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" ( ५।१।५८ पा० ) इति सङ्ख्यार्थे कन्प्रत्ययः । [ चक्रे ] कृतं, [ तस्मिन्, सङ्ख्ये ] युद्धे । 'मृधमास्कन्दनं सङ्ख्यम्' इत्यमरः । [ तत्क्षणादेव, रक्ताम्भोभिः ] रक्तैरेवाम्भोभिः, [ असङ्ख्याः, द्वीपवत्यः ] नद्यः, [ प्रावहन् ] प्रासरन् । रामेण बहुकालेन च स्यमन्तपञ्चकाऽऽख्यं ह्रदपञ्चकमेव कथञ्चित् कृतम् । अत्र तु क्षणमात्रेणासङ्ख्या नद्यः प्रवृत्ताः, इत्युपमानादुपमेयस्याऽऽधिक्योक्तेर्व्यतिरेकालङ्कारः ॥ ७० ॥

सन्दानान्तादिति ।—[ शिक्षितास्त्रैः] अभ्यस्तास्त्रविद्यैः, [ अस्त्रिभिः] आयुधीयैः, [ अधः ] रथानामधस्तात्, [ आविश्य ] प्रविश्य, [ सन्दा-

पद्माऽऽकारैर्योधवक्त्रैरिभानां
कर्णाभ्रष्टैश्चामरैरेव हंसैः ।
सोपस्कारा: प्रावहन्नस्रतोया:
स्रोतस्विन्यो वीचिषूच्चैस्तरङ्गिः ॥ ७२ ॥

---

नान्तात्] बन्धनप्रदेशात्, गुल्फप्रदेशमधिकृत्येत्यर्थः । 'सन्दानं पशुनां पादबन्धनम्' इति विश्वः । [शातशस्त्रावलूनाः] शातं शितम् । "शाच्छोरन्यतरस्याम्" (७।४।४१ पा०) इति विकल्पादीत्वाभावः । तेन शस्त्रेणावलूनाः छिन्नाः ; इभानामिमे [ऐभाः, अङ्घ्रयः] चरणाः, [असृङ्मयीणां] रक्तविकाराणां, [नदीनाम्, अन्तः] अभ्यन्तरे, [व्यक्तं, कूर्मौपम्यं] कमठोपमाम् । स्वार्थे ष्यञ्प्रत्ययः । अत एव "औपम्यादयः चातुर्वर्ण्यवत्" (५अधि० २अध्या० ५५सू०) इति वामनः । [प्रापन्] प्राप्ताः । आपो लुङि "पुषादि—" (३।१।५५ पा०) इति च्लेरङादेशः । उपमा ॥ ७१ ॥

पद्माऽऽकारैरिति ।—[उच्चैर्वीचिषु, तरङ्गिः] प्लवमानैः, [पद्माऽऽकारैः] कमलकल्पैः, [योधवक्त्रैः] भटमुखैः, [इभानां, कर्णाभ्रष्टैः] कर्णाभ्यो भ्रष्टैः, [चामरैर्हंसैः एव, सोपस्काराः] सपरिकराः । "संपर्युपेभ्यः करोतौ भूषणे" (६।१।१३७ काशि०) इति सुडागमः * । [अस्र-

---

* अत्र "संपर्युपेभ्यः करोतौ भूषणे" (६।१।१३७ पा०) इति सूत्रेण सुडागमः इति काशिकामतम् ; कौमुद्यान्तु दीक्षितैः "उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च" (६।१।१३९ पा०) इति सूत्रेण सुडागमः प्रतिपादितः । अत्रेदमवधेयम् ; दीक्षितेन "संपरिभ्यां करोतौ भूषणे" (६।१।१३७ पा०) इत्यमेव सूत्रमुद्धृतं, काशिकायान्तु अत्र सूत्रे उपः अधिकतया सन्निविष्टः, परन्तु "उपात्—" (६।१।१३९ पा०) इति सूत्रे काशिकायां चकारस्य पाठो न दृश्यते, दीक्षितैः अधिकः तत्र चकारः पठितः, तेनैतदायाति यत् चकारेण भूषणार्थस्य समुच्चयात् दीक्षितमते "उपात्—" इति सूत्रेणैव सुडागमः सिध्यतीति ।

उत्क्रान्तानामामिषायोपरिष्टा-
दध्याकाशं बभ्रमुः पत्त्रवाहाः ।
मूर्त्ताः प्राणा नूनमद्याप्यवेक्षा-
मासुः कायं त्याजिता दारुणास्त्रैः ॥ ७३ ॥
आतन्वद्भिर्दिक्षु पक्षाग्रनादं
प्राप्तैर्दूरादाशु तीक्ष्णैर्मुखाग्रैः ।

तोयाः ] रक्तजलाः, [ स्रोतस्विन्यः ] नद्यः, [ प्रावहन् ]। अत्र रूपकोपमयोः सङ्करः सुगमः ॥ ७२ ॥

उत्क्रान्तानामिति।—पत्त्राणि वहन्तीति [ पत्त्रवाहाः ] पक्षिणः, [आमिषाय] आमिषमत्तुम् । "क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः" ( २।३।१४ पा० ) इति चतुर्थी । [उत्क्रान्तानां] मृतानाम्, [ उपरिष्टात्, अध्याकाशम् ] आकाशे । विभक्त्यर्थेऽव्ययीभावः । [ बभ्रमुः ] भ्रेमुः । "वा जॄभ्रमुत्रसाम्" ( ६।४।१२४ पा० ) इति विकल्पादेत्वाभ्यासलोपाभावः । अत्रोत्प्रेक्ष्यते।—[ दारुणास्त्रैः ] घोरास्त्रैः, [ कायं, त्याजिताः ] विसर्जिताः । त्यजेर्ण्यन्तात् द्विकर्मकात् कर्मणि क्तः । 'ण्यन्ते कर्त्तुश्च कर्मणः' इति वचनात् । * [मूर्त्ताः] मूर्त्तिमन्तः, [प्राणाः, अद्य] इदानीम्, [अपि ] कायम् [अवेक्षामासुः नूनम्] । पूर्वाभिमानात् पुनः कायप्रवेशापेक्षिणो मूर्त्ताः प्राणा एव नूनमारान्भ्रमन्तीत्युत्प्रेक्षाऽर्थः । "इजादेश्च गुरुमतोऽनृच्छः" ( ३।१।३६ पा० ) इत्याम्प्रत्ययः, "कृञ्चानुप्रयुज्यते लिटि" (३।१।४० पा०) इत्यस्तेरनुप्रयोगः । "आम्प्रत्ययवत्—" ( १।३।६३ पा० ) इत्यत्र कृञ एवेति नियमादस्तेर्नाऽऽत्मनेपदम् ॥ ७३ ॥

* द्विकर्मकनिर्देशे "अकथितञ्च" ( १।४।५१ पा० ) इति सूत्रे भाष्यकारेणोक्त एष कारिकापादः; सम्पूर्णकारिका यथा,—"प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मणः ॥" इति ।

आदौ रक्तं सैनिकानामजीवै-
जीवैः पश्चात् पत्रिपूगैरपायि ॥ ७४ ॥
ओजोभाजां यद्रणे संस्थिताना-
मादत्तीव्रं सार्द्धमङ्गेन नूनम् ।
ज्वालाव्याजादुद्वमन्ती तदन्त-
स्तेजस्तारं दीप्तजिह्वा ववाशे ॥ ७५ ॥

---

आतन्वद्भिरिति।—[ आदौ दिक्षु, पत्राग्रनादं ] पत्रान्तघोषम्, [ आतन्वद्भिः] विस्तृणद्भिः, [दूरादाशु, प्राप्तैः] आगतैः, न जीवन्ति इति [अजीवैः] अचेतनैः। पचाद्यजन्तेन नञ्समासः। [ पत्रिपूगैः ] बाणव्रातैरित्यर्थः, [ तीक्ष्णैर्मुखाग्रैः ] फलैः। [ सैनिकानां रक्तम्, अपायि ] पीतम्। पिबतेः कर्मणि लुङ् "आतो युक्चिण्कृतोः" ( ७।३।३३ पा० ) इति युगागमः। [ पश्चात्, जीवैः ] चेतनैः, पत्रिपूगैः पक्षिसङ्घैः, कर्तृभिः। तीक्ष्णैः, मुखाग्रैः चञ्चुपुटैः, करणैः। अपायि। अत्रोभयेषां पत्रिणां प्रकृतत्वात् केवलप्रकृतविषयः श्लेषः ॥ ७४ ॥

ओजोभाजामिति।—दीप्ता ज्वलन्ती जिह्वा यस्याः सा [दीप्तजिह्वा] शिवा, [रणे, संस्थितानां] मृतानाम्, [ ओजोभाजाम् ] ओजस्विनाम्, [ अङ्गेन ] गात्रेण, [ सार्द्धं यत्, तीव्रं ] तिग्मं, [ तेजः, आदत् ] अभक्षयत्। अदेर्लङ् "अदः सर्वेषाम्" (७।३।१०० पा० ) इत्यडागमोऽपृक्तस्य। "आडजादीनाम्" ( ६।४।७२ पा० ) इत्याडागमोऽङ्गस्य। "आटश्च" (६।१।९० पा०) इति वृद्धिः। [ तत्, अन्तः ] अन्तरेऽन्तरितं, तेजः [ ज्वालाव्याजात् ] मुखोल्काच्छलात्, [ उद्वमन्ती, तारम् ] उच्चैः, [ ववाशे ] रौति स्म। 'तिरश्चां वाशितं रुतम्' इत्यमरः। [ नूनम् ] इत्युत्प्रेक्षायाम्। अत्र व्याजशब्देन ज्वालात्वापह्नवेन तेजस्त्वोत्प्रेक्षणेन सापह्नवोत्प्रेक्षेति सर्वस्वकारः॥ ७५ ॥

नैरन्तर्य्यच्छिन्नदेहान्तरालं
दुर्भक्षस्य ज्वालिना वाशितेन।
योद्धुर्बाणप्रोतमादीप्य मांसं
पाकापूर्वस्वादमादे शिवाभिः॥ ७६॥

नैरन्तर्य्येति।—[नैरन्तर्य्यच्छिन्नदेहान्तरालं] नैरन्तर्य्येण अविच्छेदेन, छिन्नं देहस्यान्तरालं यस्मिन् कर्मणि तत् यथा तथा, [बाणप्रोतं] बाणैः प्रोतं स्यूतम्, अत एव [दुर्भक्षस्य] भक्षितुमशक्यस्य। कृच्छ्रार्थे खल्प्रत्ययः। [योद्धुः] योधस्य सम्बन्धि, [मांसं, ज्वालिना] ज्वालावता, [वाशितेन] रुतेन। शिवानां वाशेन जिह्वा ज्वलतीति प्रसिद्धिः। [आदीप्य] प्रज्वाल्य, बाणदाहाय मांसपाकाय चेति भावः; अत एव [पाकापूर्वस्वादं] पाकेन अपूर्वोऽभिनवः, स्वादो रुचिर्यस्य तत् तथा, [शिवाभिः] गोमायुभिः। 'स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तकाः' इत्यमरः। [आदे] जघसे, भक्षितमित्यर्थः। "लिट्यन्यतरस्याम्" (२।४।४० पा०) इति विकल्पाददेर्न घस्लादेशः। वाशितोल्कया जिह्वाज्वालया दग्धेषुष्वप्रतिबन्धेन पाकरुचिरं जघस इत्यर्थः *। अत्र पाकापूर्वास्वादाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः॥ ७६॥

---

* वाशितोल्कया—शब्दकरणसमकालमेव प्रज्वलितया। जिह्वाज्वालया—रसनाऽनलेन। दग्धेषुषु—विद्धबाणसमूहेषु भस्मीभूतेषु सत्सु। अप्रतिबन्धेन—विद्धबाणरूपप्रतिबन्धं विनैव। पाकरुचिरं—सुखनिःसृताग्निसंयोगात् मनोरमं, सुपक्वमित्यर्थः, मांसमिति शेषः। जघसे—अभोजि, शिवाभिरिति शेषः। अत्रायमाशयः,—उल्कामुख्यः शिवाः मृतानां योद्धॄणां सशराणि शरीराणि भक्षितुमशक्नुवत्यः "हुक्काहुया" इति वङ्गभाषाप्रसिद्धरुतविशेषसमकालं स्वमुखनिःसृतैः वह्निभिः बाणान् दग्ध्वा मांसं पक्त्वा च सुखेनाप्रतिबन्धं मृतशरीरमघसन् इति।

ग्लानिच्छेदी चुत्प्रबोधाय पीत्वा
रक्तारिष्टं शोषिताजीर्णशेषम् ।
स्वादुङ्कारं कालखण्डोपदंशं
क्रोष्टा डिम्बं व्यष्वणद्व्यस्वनच्च ॥ ७७ ॥

---

ग्लानीति ।—[ क्रोष्टा ] जम्बुकः, [ चुत्प्रबोधाय, ग्लानिच्छेदी * ] खेदहारी, [ शोषिताजीर्णशेषं ] शोषितो जारितः, अजीर्णशेषो येन तत्, [ रक्तारिष्टं ] रक्तमेवारिष्टं पानविशेष इति रूपकम् । तत्, [ पीत्वा, स्वादुङ्कारं ] स्वादूकृत्य । "स्वादुमि—" ( ३।४।२६ पा० ) इति णमुल् । [ कालखण्डोपदंशं ] कालखण्डेन यकृता, उपदंशं, कालखण्डमुपदंशं कृत्वेत्यर्थः । 'कालखण्डयकृती तु समे' इत्यमरः । "उपदंशस्तृतीयायाम्" ( ३।४।४७ पा० ) इति णमुल् । कालखण्डस्य दंशनक्रियाकर्मत्वेऽपि भुजिक्रियाकरणत्वात् तृतीयोपपदतया "तृतीया-प्रभृतीन्यन्यतरस्याम्" ( २।२।२१ पा० ) इति विकल्पेनोपपदसमासः । [ डिम्बं ] कलेवरं, [ व्यष्वणत् ] भुक्तवानित्यर्थः । "वेश्च स्वनो भोजने" ( ८।३।६९ पा० ) इति षत्वम् । [ व्यस्वनत् ] अवादयत्, [ च ] इति समुच्चयः । अभोजनार्थत्वात् षत्वं न ॥ ७७ ॥

---

* "ग्लानिच्छेदी" इति पदस्य "रक्तारिष्टम्" इत्यस्य विशेषणत्वेन प्रयोगः अभिमतश्चेत् कवेः, तदैतत्पदं "ग्लानिच्छेदि" इति ह्रस्वेकारान्तत्वेनैव भाव्यं, तस्य नपुंसकलिङ्गत्वात् । ग्लानिं छेत्तुं शीलं यस्येति शीलार्थे णिनिप्रत्ययेन साधयित्वा "क्रोष्टा" इत्यस्य विशेषणत्वेनाभिमतश्चेत्, तदा दीर्घान्तमेव भवितुमर्हति इति सुधीभिर्विभावनीयम् । अत्र ब्रूमः ;—टीकाकृतः व्याख्यानरीत्यनुसारतः, "ग्लानिच्छेदी" इति विशेषणपदस्य "रक्तारिष्टम्" इति विशेष्यपदस्यैव प्रागुपन्यस्तत्वेन, तस्यैव विशेषणविधया प्रयोगो भवितुमुचित इति ; तथा च "ग्लानिच्छेदी" "खेदहारी" इति च पदद्वयस्य ह्रस्वान्तत्वेनैव पाठः भवितुं न्याय्यः इति ।

क्रव्यात्पूगैः पुष्कराण्यानकानां
प्रत्याशाभिर्मेदसो दारितानि ।
आभीलानि प्राणिनः प्रत्यवस्यन्
कालो नूनं व्याददावाननानि ॥ ७८ ॥

कीर्णा रेजे साऽऽजिभूमिः समन्ता-
दप्राणद्भिः प्राणभाजां प्रतीकैः ।
बह्वारम्भैरर्द्धसंयोजितैर्वा
रूपैः स्रष्टुः सृष्टिकर्मान्तशाला ॥ ७९ ॥

---

क्रव्यादिति ।—[ क्रव्यात्पूगैः ] क्रव्यमदन्तीति क्रव्यादो मांसभक्षकाः, कङ्कगृध्रादयः इति यावत् । "क्रव्ये च" ( ३।२।६९ पा० ) इति विट्-प्रत्ययः । तेषां पूगैः कर्तृभिः । [ मेदसः ] वसायाः । 'मेदस्तु वपा वसा' इत्यमरः । [ प्रत्याशाभिः ] तृष्णाभिः, [ दारितानि ] मेदस्त्विवभ्रान्त्या पाटितानि, [ आनकानां ] तूर्य्याणां, [ पुष्कराणि ] मुखानि । 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले' इत्यमरः । [ प्राणिनः ] करितुरगादीन्, [ प्रत्यवस्यन् ] अभ्यवहरन् । 'अभ्यवहारः प्रत्यवसानं भोजनं जग्धिः' इति हलायुधः । [ कालः ] अन्तकः, [ आभीलानि ] भयङ्कराणि । 'आभीलं भीमकृच्छ्रयोः' इति विश्वः । [ आननानि, व्याददौ ] विजहार । "आङो दोऽनास्यविहरणे" ( १।३।२० पा० ) इत्यस्य प्रत्युदाहरणमेतत् । यानि विदारितानि पुष्कराणि तान्येवाननानि । [ नूनम् ] इत्युत्प्रेक्षायाम् ॥ ७८ ॥

कीर्णेति ।—[ अप्राणद्भिः ] अजीवद्भिः, छिन्नत्वान्निष्प्राणैरित्यर्थः । 'अन प्राणने' इति धातोर्लटः शत्रादेशः । [ प्राणभाजां ] प्राणिनां, [ प्रतीकैः ] अवयवैः । 'अङ्गं प्रतीकोऽवयवः' इत्यमरः । [ समन्तात् कीर्णा सा आजिभूमिः ], ईषदसमाप्ताऽऽरम्भैरिति [ बह्वारम्भैः ] किञ्चि-

आयन्तीनामविरतरयं राजकानीकिनीना-
मित्थं सैन्यैः सममलघुभिः श्रीपतेरूर्मिमद्भिः।
आसीदोघैर्मुहुरिव महद्वारिधेरापगानां
दोलायुद्धं कृतगुरुतरध्वानमौद्धत्यभाजाम् ॥८०॥

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
सङ्कुलयुद्धवर्णनं नामाष्टादशः सर्गः ॥ १८ ॥

---

दूनस्पष्टैरित्यर्थः। "विभाषा सुपो बहुच्पुरस्तात्तु" (५।३।६८ पा०) इति बहुच्प्रत्ययः। तथा [ अर्द्धसंयोजितैः ] अर्द्धस्पष्टैश्च, [ रूपैः ] आकारैः। 'रूपं स्वरूपे सौन्दर्य्ये आकारश्लेषयोरपि' इति विश्वः। कीर्णा [ स्रष्टुः ] धातुः, [ सृष्टिकर्मान्तशाला वा ] सृष्टिकर्मणो नियताऽऽगारमिव, [ रेजे ] इत्युत्प्रेक्षा ॥ ७९ ॥

आयन्तीनामिति।—[ इत्थम् ] उक्तरीत्या, [ अविरतरयम् ] अविच्छिन्नवेगं यथा तथा, [ आयन्तीनाम् ] अभिधावन्तीनाम्, [ औद्धत्यभाजां ] प्रागल्भ्यभाजाम्; राज्ञां समूहा राजकानि। "गोत्रोक्ष—" (४।२।३९ पा०) इत्यादिना वुञ्प्रत्ययः। तेषामनीकिन्यः सेनास्तासां [ राजकानीकिनीनाम्, अलघुभिः ] महद्भिः, [ ऊर्मिमद्भिः ] तरङ्गवद्भिः, [ श्रीपतेः ] कृष्णस्य, [ सैन्यैः समं ] सेनाभिः सह; अपां समूह आपम्। "भिक्षादिभ्योऽण्" (४।२।३८ पा०) इति अण्प्रत्ययः। आपेन गच्छन्तीति [ आपगानाम् ], उक्तविशेषणविशिष्टानां, [वारिधेः, ओघैः] प्रवाहैः, [ इव, कृतगुरुतरध्वानं ] कृतो गुरुतरध्वानो महाध्वनिः यस्मिन् तत्, [महत्, दोलायुद्धम्] अनियतजयपराजययुद्धं, [मुहुरासीत्]। उपमा। मन्दाक्रान्तावृत्तमेतत् ॥ ८० ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाऽऽख्येऽष्टादशः सर्गः ॥१८॥

---

# एकोनविंशः सर्गः ।

—)०•०(—

**अथोत्तस्थे रणाटव्याममुहृद्वेणुदारिणा ।**
**नृपाङ्घ्रिपौघसङ्घर्षादग्निवद्वेणुदारिणा ॥ १ ॥**

---

तदेवमष्टादशसर्गे तुमुलं युद्धमभिधाय इदानीमेकोनविंशतिसर्गे द्वन्द्वयुद्धमनुष्टुभेन छन्दसा चित्रबन्धेन वर्णयितुमारभते, अथेत्यादि।— [ अथ ] एवं तुमुलयुद्धानन्तरम् ; रणोऽटवीवेत्युपमितसमासः। अग्निवदिति तद्धितौपम्यलिङ्गात्। एवमुत्तरत्रापि द्रष्टव्यम्। तस्यां [ रणाटव्याम् ] ; असुहृदः शत्रवः, वेणवो वंशा इव। 'वेणुमस्करतेजनाः' इति वंशपर्य्यायेष्वमरः। तान् दारयति यः तेन [ असुहृद्वेणुदारिणा, वेणुदारिणा ] बाणात्मजेन, [ नृपाङ्घ्रिपौघसङ्घर्षात् ] नृपाः अङ्घ्रिपाः पादपा इव, तेषाम् ओघाः सङ्घाः, तेषां सङ्घर्षात् मत्सरात् श्लेषाच्च, [ अग्निवत् ] अग्नितुल्यम्। "तेन तुल्यम्—" ( ५।१।११५ पा० ) इति तुल्यार्थे वतिप्रत्ययः। [ उत्तस्थे ] उत्थितम्। भावे लिट्। अत्राग्निवदिति तुल्यार्थेन वतिना धर्मव्यवधाने सादृश्यप्रतिपादिना उपमानोपमेयसमानधर्मसादृश्यप्रतिपादकानां चतुर्णां चोपादानाच्चेयमार्थी तद्धितगता पूर्णोपमा ; सा च रणाटव्यादिसमासगतोपमासापेक्षेति सङ्करः। सर्गेऽस्मिन् अनुष्टुभं वृत्तम्। 'पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः। गुरु षष्ठञ्च सर्वेषामेतच्छ्लोकस्य लक्षणम् ॥' इति लक्षणात्। अत्रैकान्तरक्रमेण यमकाद्यन्यतमशब्दालङ्कारनियमः, सर्वत्र यथासम्भवमर्थालङ्कारश्च। तत्र यमकलक्षणमुक्तं दण्डिना,—'अव्यपेतव्यपेताऽऽत्मा व्यावृत्तिर्वर्णसंहतेः। यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥ एकद्वित्रिचतुष्पादैर्यमकानां विकल्पना। आदिमध्यान्तमध्यान्तमध्याऽऽद्याऽऽद्यान्तसर्वतः ॥' इति। अत्रेदं समपादान्तं यमकं द्विपादयमकभेदः ॥१॥

आपतन्तममुं दूरादूरीकृतपराक्रमः ।
बलोऽवलोकयामास मातङ्गमिव केसरी ॥ २ ॥

एकाक्षरपादश्लोकः ।

जजौजोजाऽऽजिजिज्जाजी तं ततोऽतिततातितुत् ।
भाऽऽभोऽभीभाभिभूभाभूराराररिररीररः ॥३॥

---

आपतन्तमिति ।—[ आपतन्तम् ] आधावन्तम्, [ अमुं ] वेगुदारिणं, [ दूरात्, ऊरीकृतपराक्रमः ] अङ्गीकृतपौरुषः, तेन सहानुगतसम्प्रहार इत्यर्थः, [ बलः ] बलभद्रः, [ केसरी ] सिंहः, [ मातङ्गं ] गजम्, [ इव अवलोकयामास ]। अनयोरिव तदन्तरमिति भावः। अतोऽलङ्कारेण वस्तुध्वनिः ॥ २ ॥

जजाविति ।—[ ततः ] अवलोकनानन्तरं, जजन्तीति जजाः योधाः। 'जज युद्धे' पचाद्यच्। जजानामोजसा जाता जजौजोजा, तामाजिं जयतीति [ जजौजोजाऽऽजिजित् ]। जयतेः क्विप्। जजतीति [ जाजी ] योधी। ताच्छील्ये णिनिः। [ अतिततातितुत् ] अतिततानत्युद्धतान्, अतितुदति अतिव्यथयतीति अतितुत्। तुदतेः क्विप्। भस्याऽऽभेवाऽऽभा यस्य सः [ भाऽऽभः ] नक्षत्रकान्तिः। 'नक्षत्रमृक्षं भं तारा' इत्यमरः। नास्ति भीर्येषां तेऽभियो निर्भीकाः, तानिभान् गजान्, अभिभवतीति अभीभाभिभूः। क्विप्। तस्याः, भासस्तेजसः, भूः स्थानम् [ अभीभाभिभूभाभूः ]; अराः सन्त्येषामित्यरीणि चक्राणि, तैः रीयन्ति गच्छन्तीति अरिर्यो रथाः। 'री गतिरेषणयोः' * इति धातोः क्विप्। तेषाम् ईरं प्रेरणं, राति [ अरिरीररः ] रथिकः। "आतोऽनुपसर्गे कः" (३।२।३ पा०) इति कः। [अरिः] शत्रुः, बलभद्र इति

---

* "रेषणं वृकशब्दः" इति कौमुद्यां दीक्षिताः। रिणाति इति लटि रूपमस्येति ज्ञेयम्।

भवन् भयाय लोकानामाकम्पितमहीतलः ।
निर्घात इव निर्घोषभीमस्तस्यापतद्रथः ॥ ४ ॥
रामे रिपुः शरानाजिमहेष्वास विचक्षणे ।
कोपादथैनं शितया महेष्वा स विचक्षणे ॥ ५ ॥

---

यावत्, [ तं ] वेणुदारिणम्, [ आर ] योद्धमाससारेत्यर्थः । 'ऋ गतौ' इति धातोर्लिट्, द्विर्भावे कृते णलि वृद्धिः, अभ्यासस्य "उरत्" (७।४।६६ पा०) इत्यत्वे "अत आदेः" ( ७।४।७० पा० ) इति दीर्घे पुनः सवर्णदीर्घः । भिन्नैकाक्षरपादाऽऽख्योऽनुप्रासभेदः । भाऽऽभ इत्युपमाऽनुप्रासयोरेकवाचकानुप्रवेशलक्षणः सङ्करः ॥ ३ ॥

भवन्निति ।—[ लोकानां ] जनानां, जगताञ्च । 'लोकस्तु भुवने जने' इत्यमरः । [ भयाय, भवन् ] सम्पद्यमानः, भयं जनयन्नित्यर्थः । "क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या" (वा०) * इति क्लृपेरर्थनिर्देशाच्चतुर्थी । [ आकम्पितमहीतलः ] भूकम्पं कुर्वन्नित्यर्थः, [ निर्घोषभीमः ] निर्घोषेण भीमो भयङ्करः, [ तस्य ] बलभद्रस्य, [ रथो निर्घात इव, अपतत् ] अधावत् । श्रौती पूर्णोपमा ॥ ४ ॥

राम इति ।—[ रिपुः ] वेणुदारी, [ आजिमहेषु ] रणोत्सवेषु, इति रूपकम् । 'मह उद्धव उत्सवः' इत्यमरः । [ विचक्षणे ] प्रगल्भे । विचष्ट इति कर्त्तरि ल्युडिति न्यासकारः । "असनयोश्च प्रतिषेधो वक्तव्यः" (वा०) इति चक्षिङः ख्याञादेशाभावः † । [ रामे ] बलभद्रे,

---

* प्रोद्धृतं वार्त्तिकं काशिकासम्मतम् । दीक्षितैस्तु कौमुद्यां "क्लृपि सम्पद्यमाने च" इत्येवमेव वार्त्तिकसूत्रं पठितमित्यवधेयम् ।

† "चक्षिङः ख्याञ्" ( २।४।५४ पा० ) इति सूत्रीया काशिकावृत्तिरेषा, असप्रत्यये अनप्रत्यये परे चक्षिङः ख्याञादेशः न भवति इति तदर्थः । तत्र वृत्तौ उदाहरणं दर्शितं यथा,—"नृचक्षाः राक्षसाः हिंसाऽर्थोऽत्र धातुः । अन्ने खल्वपि विचक्षणः पण्डितः" इति ।

दिशमर्कमिवावाचीं मूर्च्छागतमपाहरत्।
मन्दप्रतापं तं सूतः शीघ्रमाजिविहायसः॥ ६॥
कृत्वा शिनेः शाल्वचमूं सप्रभावा चमूर्जिताम्।
ससर्ज वक्त्रैः फुल्लाब्जसप्रभा वाचमूर्जिताम्॥ ७॥

---

[ शरान्, आस ] चिक्षेप। अस्यतेर्लिट् "अत आदेः" ( ७।४।७० पा० ) इत्यभ्यासदीर्घे सवर्णदीर्घः। [ अथ कोपात्, सः ] रामः, [ एनं ] वेणुदारिणं, [ शितया ] शातया। "शाच्छोरन्यतरस्याम्" (७।४।४१ पा०) इतीत्वम्। [ महेष्वा ] महेषुणा। 'पत्री रोप इषुर्द्वयोः' इत्यमरः। [ विचक्षणे ] जघान। 'क्षणु हिंसायाम्' इति धातोः कर्त्तरि लिट्। अभिन्नसमपादो नाम पादाभ्यासयमकभेदः। एवमुत्तरत्रापि द्रष्टव्यम्॥ ५॥

दिशमिति।—[ मूर्च्छागतं ] रामेषुपातान्मोहमुपगतम्, अत एव [ मन्दप्रतापम् ] अल्पप्रकाशं, [ तं ] वेणुदारिणम्, [ अवाचीं ] दक्षिणां, [ दिशं ], प्राप्तम्; अत एव मन्दप्रतापम् [ अर्कमिव, सूतः ] सारथिः अनूरुश्च; आजेर्विहायसः आकाशादिव [ आजिविहायसः ]। इत्युपमितसमासः। [ शीघ्रम्, अपाहरत् ] अपसारितवान्। उपमा॥ ६॥

कृत्वेति।—प्रभावेण सह वर्त्तत इति [ सप्रभावा ] महाऽनुभावा, [ शिनेः ] सात्यकिपितामहस्य, [ चमूः ] सेना, [ शाल्वचमूं ] शाल्वो नाम चैद्यपक्षो राजा, तस्य चमूं सेनां, [ जितां कृत्वा ] जित्वेत्यर्थः; अत एव [ वक्त्रैः ] मुखैः। "येनाङ्गविकारः" ( २।३।२० पा० ) इति तृतीया। विकासस्यापि विकारत्वात्। [ फुल्लाब्जसप्रभा ] फुल्लाब्जस्य प्रफुल्लारविन्दस्य, सप्रभा समानप्रभा, हर्षेण विकसितवक्त्रा सतीत्यर्थः, [ ऊर्जिताम् ] उदारां, [ वाचं ससर्ज ] के यूयमस्मदग्र इत्यादुच्चैर्जगर्ज, जगादेत्यर्थः। उपमायमकयोः संसृष्टिः॥ ७॥

उल्मुकेन द्रुमं प्राप्य सङ्कुचत्पत्त्रसञ्चयम् ।
तेजः प्रकिरता दिक्षु सप्रतापमदीप्यत ॥ ८ ॥
पृथोरध्यक्षिपद्रुक्मी यया चापमुदायुधः ।
तयैव वाचाऽपगमं ययाचापमुदा युधः ॥ ९ ॥
समं समन्ततो राज्ञामापतन्तीरनीकिनीः ।
कार्ष्णिः प्रत्यग्रहीदेकः सरस्वानिव निम्नगाः ॥१०॥

---

उल्मुकेनेति ।—[ दिक्षु, तेजः ] प्रभावं प्रकाशञ्च, [ प्रकिरता ] विक्षिपता, [ उल्मुकेन ] भागवतेन राज्ञा अलातेन च, [ सङ्कुचत्पत्त्रसञ्चयं ] सङ्कुचन्ती पत्त्रसम्पद्वाहनसम्पत्पर्णसमृद्धिश्च यस्य तं, * [ सप्रतापं ] सपराक्रमं प्रकटतापसहितञ्च, [ द्रुमं ] द्रुमाऽऽख्यं राजानं वृक्षञ्च, [ प्राप्य, अदीप्यत ] प्रजज्वले । भावे लङ् । अत्राभिधायाः प्रकृतार्थे नियन्त्रणादप्रकृतार्थप्रतीतिर्ध्वनिरेव, न श्लेषः ॥ ८ ॥

पृथोरिति ।—[ रुक्मी ] भीष्मकाऽऽत्मजो रुक्मिणीभ्राता, [ उदायुधः ] उद्यताऽऽयुधः सन्, [ यया वाचा, पृथोः ] राज्ञः, [ चापम्, अध्यक्षिपत् ] धिगिदं त्वया कष्टमिति निनिन्द ; अपगता मुत् यस्यास्तया [ अपमुदा ] निरुत्साहया, [ तयैव ] वाचा [ युधः ] युद्धात्, [ अपगमम् ] अपसरणं, [ ययाच ] मां त्वाहि पलायमानं शरणमाऽऽगतोऽस्मीति प्रार्थयामासेत्यर्थः । याचिरुभयपदी ॥ ९ ॥

सममिति ।—[ समं ] युगपत्, [समन्ततः, आपतन्तीः] आगच्छन्तीः, [ राज्ञां ] चैद्यपक्षाणाम्, [ अनीकिनीः ] सेनाः ; कृष्णस्यापत्यं पुमान्

---

* सङ्कुचन् पत्त्ररुच्चयः पत्त्रसम्पत्, वाहनसम्पदित्यर्थः, पर्णसमृद्धिश्च यस्य तम् इत्येवं भवितुं न्याय्यम् । मूले "सङ्कुचत्पत्त्रसम्पदम्" इति पाठे तु प्रोक्ता व्याख्या सङ्गच्छते ।

दधानैर्घनसादृश्यं लसदायसदंशनैः ।
तत्र काञ्चनसच्छाया ससृजे तैः शराशनिः ॥११॥

निरोष्ठ्यम् ।

नखांशुमञ्जरीकीर्णामसौ तरुरिवोच्चकैः ।
बभौ बिभ्रद्धनुःशाखामधिरूढशिलीमुखाम् ॥१२॥

प्राप्य भीममसौ जन्यं सौजन्यं दधदानते ।
विध्यन्मुमोच न रिपूनरिपूगान्तकः शरैः ॥ १३ ॥

---

[ कार्ष्णिः ] प्रद्युम्नः । "अत इञ्" ( ४।१।९५ पा० ) इति इञ् । [ निम्नगाः ] नदीः, [ सरस्वान् ] समुद्रः, [ इव, एकः ] असहायः, [ प्रत्यग्रहीत् ] प्रत्यवरुरोध ॥ १० ॥

दधानैरिति ।—[ लसदायसदंशनैः ] लसन्ति आयसानि अयोमयानि, दंशनानि येषां तैः । 'तनुत्रं वर्म दंशनम्' इत्यमरः । अत एव [ घनसादृश्यं ] कार्ष्ण्यान्मेघसाम्यं, [ दधानैः, तैः ] सैनिकैः, [ तत्र ] कार्ष्णौ, [ काञ्चनसच्छाया ] सुवर्णवर्णा, [ शराशनिः ] शर एव अशनिः विद्युत्, [ ससृजे ] उत्सृष्टा । उपमारूपकयोः संसृष्टिः । ओष्ठ्यवर्णविरहान्निरोष्ठ्यं चित्रभेदः । शब्दालङ्कारः ॥ ११ ॥

नखेति ।—[ नखांशुमञ्जरीकीर्णां ] नखांशवो मञ्जर्य्य इव, ताभिः कीर्णां व्याप्ताम्, [ अधिरूढशिलीमुखाम् ] अधिरूढाः शिलीमुखाः बाणा अलयश्च यस्यां ताम् । 'अलिबाणौ शिलीमुखौ' इत्यमरः । [ धनुःशाखां ] धनुः शाखेव तां, [ बिभ्रत्, असौ ] कार्ष्णिः, [ उच्चकैः ] उन्नतः, [ तरुरिव बभौ ] । तरुरिवेति लिङ्गात् सर्वलोपमितसमासः । शिलीमुखेति श्लिष्टविशेषणेयमुपमा ॥ १२ ॥

प्राप्येति ।—अरिपूगानां शत्रुसङ्घानामन्तकः [अरिपूगान्तकः, असौ ] कार्ष्णिः, [ भीमं ] भयङ्करं, [ जन्यं ] युद्धं, [ प्राप्य ] । 'युद्धमायोधनं

कृतस्य सर्वक्षितिपैर्विजयाऽऽशंसया पुरः ।
अनेकस्य चकारासौ बाणैर्बाणस्य खण्डनम् ॥ १४ ॥
या बभार कृतानेकमाया सेना ससारताम् ।
धनुः स कर्षन् रहितमायासेनाऽऽससार ताम् ॥ १५ ॥
ओजो महौजाः कृत्वाऽधस्तत्क्षणादुत्तमौजसः ।
कुर्वन्नाजावमुख्यत्वमनयन्नाम मुख्यताम् ॥ १६ ॥

---

न्यम्' इत्यमरः । [ आनते ] नम्रे, [ सौजन्यं ] सौहार्दं, [ दधत् ] ; न तु विध्यन् । 'न क्लीबं न कृताञ्जलिम्' इति निषेधादिति भावः ; [ रिपून् ] प्रतिपक्षान्, [ शरैः, विध्यन् ] प्रहरन्, [ न मुमोच ] न ररक्षेत्यर्थः । सन्दंशयमकभेदः ॥ १३ ॥

कृतस्येति ।—[ असौ ] कार्ष्णिः, [ सर्वक्षितिपैः, विजयाऽऽशंसया ] विजयाऽऽशङ्कया, [ पुरः ] अग्रे, [ कृतस्य ] नियुक्तस्य प्रयुक्तस्य वा, [ अनेकस्य ] अनेकाकिनः, ससहायस्येत्यर्थः ; अन्यत्र,—अनेकस्य बहुसङ्ख्यस्य, [ बाणस्य ] बाणासुरस्य शरजातस्य च, [ बाणैः, खण्डनं ] छेदं, [ चकार ] । अत्र बाणयोर्द्वयोरपि प्रकृतत्वात् केवलप्रकृतयोः श्लेषः ॥ १४ ॥

येति ।—[ या सेना, कृतानेकमाया ] कृतबहुकपटा सती, [ ससारतां ] सारवत्तां, [ बभार, तां ] सेनां, [ सः ] कार्ष्णिः, [ धनुः कर्षन् ] धनुषा विध्यन्नित्यर्थः, [ आयासेन रहितम् ] अनायासं यथा तथा, [ आससार ] अभियुक्तवानित्यर्थः । बाणं भङ्क्त्वा तत्सेनां बभञ्जेत्यर्थः ॥ १५ ॥

ओज इति ।—[ महौजाः ] महाबलः प्रद्युम्नः, [ उत्तमौजसः ] नाम राज्ञः, [ ओजस्तत्क्षणात् ], एव [ अधः कृत्वा ] अभिभूय, [ आजौ ] युद्धे, [ अमुख्यत्वम् ] अप्रधानत्वं, [ कुर्वन् ] ; अथवा,—अमुख्यत्वम् अमु-

दूरादेव चमूर्भल्लैः कुमारो हन्ति स स्म याः।
न पुनः सांयुगीं ताः स्म कुमारोहन्ति सस्मयाः ॥१७
निपीड्य तरसा तेन मुक्ताः काममनास्थया।
उपाययुर्विलक्षत्वं विद्विषो न शिलीमुखाः ॥१८॥
तस्यावदानैः समरे सहसा रोमहर्षिभिः।
सुरैरशंसि व्योमस्थैः सह सारो महर्षिभिः ॥१९॥

---

स्वार्थत्वं तन्नाम्नः कुर्वन्, [ नाम ] निजं प्रद्युम्ननामधेयं, [ मुख्यतां ] प्रधानतां प्रसिद्धार्थताञ्च, [ अनयत् ]। प्रकृष्टं द्युम्नं बलं यस्येति प्रद्युम्न इति स्वामी ॥ १६ ॥

दूरादिति।—[ सः कुमारः ] प्रद्युम्नः, [सस्मयाः] सगर्वाः, [ याश्चमूर्दूरादेव, भल्लैः ] बाणविशेषैः, [ हन्ति स्म ] जघान, [ ताः ] चम्वः, [ पुनः ] भूयः ; संयुगस्येमां [ सांयुगीं, कुं ] पृथ्वीं, रणभुवमित्यर्थः। 'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः। [ न आरोहन्ति स्म ] नाऽऽरूढ़ाः ॥ १७ ॥

निपीड्येति।—[ तेन ] प्रद्युम्नेन, [ तरसा ] बलेन, [ कामं निपीड्य, अनास्थया ] अनादरेण, [ मुक्ताः ] 'आर्त्ता न परिहन्तव्याः' इति निषेधेनावध्या, इति जीवन्तो मुक्ता इत्यर्थः ; अन्यत्र,—क्षिप्ताः, [ विद्विषः, विलक्षत्वं ] सत्रपत्वम्, [ उपाययुः ]। 'विलक्षस्तु त्रपाऽन्विते' इत्यमरः। [ शिलीमुखाः ] बाणास्तु, विलक्षत्वं लक्ष्यभ्रष्टत्वं, [ न ] उपाययुः। अत्र द्वयोरपि विलक्षत्वयोरभेदाध्यवसायादयं व्यतिरेकः, विद्विषां शिलीमुखानाञ्च प्रकृतत्वात्तुल्ययोगितौपम्याऽऽश्रितः, इति सङ्करः ॥ १८ ॥

तस्येति।—[समरे, तस्य ] प्रद्युम्नस्य, [ अवदानैः ] अत्युग्रकर्मभिः, करणैः। [ सहसा ] सद्यः, [ रोमहर्षिभिः ] रोमाञ्चवद्भिः, [ व्योमस्थैः

सुगन्धयद्दिशः शुभ्रमम्लानि कुसुमं दिवः ।
भूरि तत्रापतत्तस्मादुत्पपात दिवं यशः ॥ २० ॥
सोढुं तस्य द्विषो नालमपयोधरवा रणम् ।
ऊर्णुनाव यशश्च द्यामपयोधर-वारणम् ॥ २१ ॥
केशप्रचुरलोकस्य पर्य्यस्कारि विकासिना ।
शेखरेणेव युद्धस्य शिरः कुसुमलक्ष्मणा ॥ २२ ॥

---

सुरैः महर्षिभिः, सह ] साङ्गं, [ सारः ] बलम्, [ अशंसि ] शंसितः ॥ १९ ॥

सुगन्धयदिति ।—[ दिशः, सुगन्धयत् ] सुगन्धाः कुर्वत् । सुगन्धात् "तत् करोति—" (ग०) इति ण्यन्ताल्लटः शत्रादेशः । [ शुभ्रं ] धवलम्, [ अम्लानि ] म्लानिरहितं, [ भूरि ] प्रभूतं, [ कुसुमं, दिवः ] अन्तरीक्षात्, [ तत्र ] प्रद्युम्ने, [ अपतत् । तस्मात् ] प्रद्युम्नात्, [ यशः ] पूर्वोक्तगुणयुक्तं, [ दिवम् ] अन्तरिक्षं प्रति, [ उत्पपात ] । अत्र द्युप्रद्युम्नयो कुसुमयशोभ्याम् अन्योऽन्योपस्कारजननादन्योऽन्यालङ्कारः,—"परस्परं क्रियाजननेऽन्योऽन्यम्" इति लक्षणात् ॥ २० ॥

सोढुमिति ।—अपगता भयान्निवृत्ताः, योधानां रवाः सिंहनादा येषां ते [ अपयोधरवाः, द्विषः ] शत्रवः, [ तस्य ] कार्ष्णेः, [ रणं सोढुं, नालम् ] अशक्ताः ; अत एव [ यशश्च ] ; अविद्यमानं पयोधराणां वारणं मेघप्रतिघातो यस्य तत् [ अपयोधरवारणं ] सत्, [ द्यामूर्णुनाव ] मेघमण्डलं विलङ्घ्य स्वर्गमाच्छादयामासेत्यर्थः । ऊर्णोतिर्लिट् । "अजादेर्द्वितीयस्य" (६।१।२ पा०) इति द्वितीयस्याचो द्विर्भावः । नुवङ्गावादाम्प्रतिषेधः । यमक-वाक्यार्थहेतुकाव्यलिङ्गयोः संसृष्टिः ॥ २१ ॥

केशेति ।—[ विकासिना ] विविधमार्गचारिणा विकस्वरेण च,

सादरं युध्यमानाऽपि तेनान्यनरसादरम्।
सा दरं पृतना निन्ये हीयमाना रसादरम् ॥२३॥

---

[ कुसुमलक्ष्मणा ] पुष्पकेतुना प्रद्युम्नेन ; अन्यत्र,—कुसुमचिह्नेन, तन्मयेनेत्यर्थः, [ केशप्रचुरलोकस्य ] केशवत् प्रचुराः प्रभूताः, लोकाः जना यस्मिन् तस्य, [ युद्धस्य, शिरः ] अग्रभूमिः ; अन्यत्र,—केशैः प्रचुरस्य केशाऽऽढ्यस्य, लोकस्य जनस्य, शिरः मूर्द्धा, [शेखरेण इव ] आपीड़ेनेव, शिखामाल्येनेवेत्यर्थः। 'शिखास्वापीड़शेखरौ' इत्यमरः। [ पर्य्यस्कारि ] परिष्कृतं, भूषितमित्यर्थः। परिपूर्वात् करोतेः कर्मणि लिट्, "संपर्य्युपेभ्यः करोतौ भूषणे" ( ६।१।१३७ काशि० ) * इति सुडागमः, "अडभ्यासव्यवायेऽपि" ( ६।१।१३६ काशिका ) † इति नियमात्। "परिनिविभ्यः—" ( ८।३।७० पा० ) इत्यादिना षत्वे, "सिवादीनां वाऽड्व्यवायेऽपि" ( ८।३।७१ पा० ) इति विकल्पः। उपमा ॥ २२ ॥

सादरमिति।—[ सादरं ] साभिनिवेशं, [ युध्यमानाऽपि ] सम्प्रहरन्त्यपि, [ अरं ] द्रुतं, हठादिति यावत्, [ रसात् ] रणे रागात्, [ हीयमाना ] अपकृष्यमाणा, प्रद्युम्नमहिम्नेति भावः। अत एवात्र विरोधाऽऽभासोऽलङ्कारः। जहातेः कर्मणि लटः शान-

---

* प्रोद्धृतं सूत्रन्तु काशिकासम्मतम्। कौमुद्यान्तु "संपरिभ्यां करोतौ भूषणे" इति अन्यथा पठितम्।

† सूत्रमेतत् केवलं काशिकायां दृश्यते, दीक्षितैस्तु कौमुद्यां "अडभ्यासव्यवायेऽपीत्युक्तम्" इति "सुट् कात्पूर्वः" (६।१।१३५ पा०) इति सूत्रे पृथक्तया उक्तम्। तदीया काशिकावृत्तिर्यथा,—"अड्व्यवायेऽभ्यासव्यवाये सुट् कात्पूर्वो भवति। समस्करोत्, समस्कार्षीत्, सञ्चस्कार, परिचस्कार। किमर्थं पुनरिदमुच्यते? पूर्वं धातुरुपसर्गेण युज्यते इति, तत्र धातूपसर्गयोः कार्य्यमन्तरङ्गमिति पूर्वं सुट् क्रियते, पश्चादडभ्यासौ" इत्यादि।

इत्यालिङ्गितमालोक्य जयलक्ष्म्या झषध्वजम् ।
क्रुद्धयेव क्रुधा सद्यः प्रपेदे चेदिभूपतिः ॥ २४ ॥
अहितानभि वाहिन्या स मानी चतुरङ्गया ।
चचाल वल्गत्कलभसमानीचतुरङ्गया ॥ २५ ॥

---

जादेशः । [ सा, पृतना ] चैद्यसेना, [ तेन ] प्रद्युम्नेन ; अन्येषां नटस्थानामपि, नराणां सादं निश्चेष्टतां, राति ददातीति तम् [अन्यनरसादरम् ]। "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) इति कप्रत्ययः । [ दरं ] भयम् । 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः । [ निन्ये ] नीता । नयतेः प्रधाने कर्मणि लिट् । "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इति वचनात् (भाष्य०) । विरोधाऽऽभासयमकयोः संसृष्टिः ॥२३॥

इतीति । [ इति ] इत्थं, [ जयलक्ष्म्या आलिङ्गितं, झषध्वजं ] मत्स्यकेतुं प्रद्युम्नम् । 'पृथुरोमा झषो मत्स्यः' इत्यमरः । [ आलोक्य सद्यः, क्रुद्धया ] सपत्न्यागमात् कोपितया, [इव], इत्युत्प्रेक्षा । [ क्रुधा ] प्रद्युम्नाऽऽश्रितया रुषा, कर्त्र्या । [ चेदिभूपतिः, प्रपेदे ] प्राप्तः ; तं विहायेति शेषः । कामिन्यः प्रायेण साहसिक्यः सपत्नीगन्धमसहमानाः सद्यः पुरुषान्तरमाश्रयन्ते इति भावः । विजयिनं प्रद्युम्नं दृष्ट्वा सद्यश्चैद्यश्चुकोपेत्यर्थः * ॥ २४ ॥

अहितानिति ।—[ मानी ] अभिमानवान्, [ सः ] क्रुद्धश्चैद्यः ; वल्गन्तः प्लवमानाः, कलभसमाः कलभप्रमाणाः, अत एवानीचा उच्चाः, तुरङ्गा यस्यां तया [ वल्गत्कलभसमानीचतुरङ्गया ] ; चत्वार्यङ्गानि

---

* अत्र प्रस्तुतयोः राजश्रीक्रोधयोः स्त्रीलिङ्गलक्ष्मीक्रुच्छब्दप्रयुक्ततया लिङ्गसाम्येनाप्रस्तुतनायिकासपत्नीनायिकयोर्व्यवहारसमारोपात् समासोक्तिः ; क्रोधे कुपितत्वोत्प्रेक्षणादुत्प्रेक्षा च, अनयोरङ्गाङ्गिभावेन संस्थितेः सङ्करः ।

ततस्ततधनुर्मौर्वीविष्फारस्फारनिःस्वनैः ।
तूर्य्यैर्युगक्षये क्षुभ्यदकूपारानुकारिणी ॥ २६ ॥

सर्वतोभद्रः ।

स का र ना नाऽऽ र का स-
का य सा द द सा य का ।
र साऽऽ ह वा वा ह सा र-
ना द वा द द वा द ना ॥२७॥

---

हस्त्यादीनि यस्यास्तया [ चतुरङ्गया वाहिन्या ], करणेन । [ अहिताभि ] शत्रून् प्रति, [ चचाल ] । कलभसमेत्युपमा यमकेन संसृज्यते ॥ २५ ॥

अथ कलापकेन सेनां वर्णयति, ततस्ततेत्यादि ।—[ ततः ] चैद्यचलनानन्तरं, [ ततधनुर्मौर्वीविष्फारस्फारनिःस्वनैः ] ततानामाकृष्टानां, धनुर्मौर्वीणां विष्फारैः स्फाराः प्रभूताः, निःस्वनाः येषां तैः, [ तूर्य्यैः, युगक्षये] कल्पान्ते, [क्षुभ्यदकूपारानुकारिणी] क्षुभ्यन्तमुद्वेलन्तम्, अकूपारं समुद्रम्, अनुकरोतीति तदनुकारिणी, सा सेनेत्युत्तरेणान्वयः । उपमा ॥ २६ ॥

सकारेति ।—पुनः कीदृशी ?—[ सकार-नानाऽऽर-कास-कायसादद-सायका ] 'कारो बधे निश्चये च बले यत्ने रतावपि' इति विश्वः । सकाराः सयत्नाः, सोत्साहाः इत्यर्थः, नाना नानाविधाश्च, ये आरा अरीणां समूहाः । "भिक्षादिभ्योऽण्" (४।२।३८ पा०) इत्यण् । तेषां कासा गतिभेदाः, काया विग्रहाश्च, तेषां सादं ददातीति साददाः नाशकारकाः, सायका यस्यां सा तथोक्ता ; रसेन रागेण, आहवो यस्याः सा

लोलासिकालियकुला यमस्येव स्वसा स्वयम् ।
चिकीर्षुरुल्लसल्लोहवर्मश्यामा सहायताम् ॥२८॥

[रसाऽऽहवा] रणरागिणीत्यर्थः ; वाहसाराणां वाहश्रेष्ठानां, ये नादाः क्रेषादिघोषाः, तेषां वादं कलहं, ददतीति वाददानि, तैः सह कलहायमानानि इत्यर्थः, वादनानि वाद्यानि यस्यां सा [वाहसार-नाद-वादद-वादना] तूर्य्यतुल्यवाहघोषेत्यर्थः । अत एव तेषां तुल्यतोक्तेरतिशयोक्तिः । सर्वतो भ्रमणात् सर्वतोभद्राऽऽख्यश्चित्रबन्धः । अत एव दण्डी,—'तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः' इति । उद्धारस्तु,—चतुःषष्टिकोष्ठे सर्वतोभद्रचित्रम् ।

| स | का | र | ना | ना | र | का | स |
|---|---|---|---|---|---|---|---|
| का | य | सा | द | द | सा | य | का |
| र | सा | ह | वा | वा | ह | सा | र |
| ना | द | वा | द | द | वा | द | ना |
| ना | द | वा | द | द | वा | द | ना |
| र | सा | ह | वा | वा | ह | सा | र |
| का | य | सा | द | द | सा | य | का |
| स | का | र | ना | ना | र | का | स |

चतुरङ्गबन्धे क्रमेणाऽऽद्यपङ्क्तिचतुष्टये पादचतुष्कं विलिख्यानन्तरं पङ्क्तिचतुष्टयेऽप्यधःक्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु प्रथमपादः सर्वतो वाच्यते । एवं द्वितीयादिषु द्वितीय इत्यादि ॥ २७ ॥

लोलेति ।—[ लोलासिकालियकुला ] लोलान्यसीनामेव कालियानां कृष्णसर्पविशेषाणां, कुलानि यस्यां सा, [ उल्लसल्लोहवर्मश्यामा ] उल्लसद्भिर्लोहवर्मभिरयःकञ्चुकैः, श्यामा ; अत एव [ यमस्य ] अन्तकस्य,

मुरजबन्धः ।

सा, सि ना, ग म नाऽऽ र म्भे,
र सि नाऽऽ सौ द ना र ता ।
ता र ना द ज ना, म त्त-
धी र ना ग म ना म या ॥२८॥

---

[ सहायतां ] भ्रातृस्नेहादस्मिन् सेनासंहारे साहाय्यं, [चिकीर्षुः, स्वयं] साक्षात्, [स्वसा ] तस्यैव भगिनी यमुना, [इव], स्थितेत्युत्प्रेक्षा ॥ २८ ॥

सा सेनेति ।—तारोऽत्युच्चैः, नादः सिंहनादो येषां ते, जना यस्यां सा [ तारनादजना, अनामया ] अव्यथा, [ सा ] पूर्वोक्ता, [ सेना, मत्तधीरनागं ] मत्ता धीरा अदृष्टाश्च, नागा गजा यस्मिन् कर्मणि तत् तथा, [ गमनाऽऽरम्भे, रसेन ] रागेण, [अनारता] अविरता, [आसीत्] अविच्छिन्नरणरागा अभूदित्यर्थः । मुरजबन्धः । तस्योद्धारस्तु,—

मुरजबन्धचित्रम् ।




'तिर्य्यग्रेखा लिखेत्पञ्च नवोर्द्धास्तत्र पङ्क्तयः । अष्टकोष्ठाश्चतस्रः स्युस्तासु श्लोकं लिखेत् क्रमात् ॥ तत्राऽऽद्यद्वितितुर्य्यासु तुर्य्यलिङ्गाद्य-

धूतधौतासयः प्रष्ठाः प्रातिष्ठन्त क्षमाभृताम् ।
शौर्य्यानुरागनिकषः सा हि वेलाऽनुजीविनाम् ॥ ३०

---

पङ्क्तिषु । आद्यद्वित्रिचतुःपञ्चषट्सप्ताष्टमकोष्ठगः ॥ दृश्यते प्रथमः पादश्चतुर्थश्चैवमेव हि । चतुर्थपङ्क्तिप्राथम्यात् प्रथमावधिवीक्षणात् ॥ द्वितीयादावाद्यत्रिगोर्द्विं तुर्य्ये त्रि तुरीयके । तुर्य्यत्रिद्विगोस्तृतीयाऽन्ये द्रष्टव्योऽङ्घ्रिर्द्वितीयकः ॥ तृतीयोऽङ्घ्रिर्द्वितीयान्त्ये आद्यसप्तमषष्ठयोः । द्वित्रिपञ्चमयोस्तुर्य्यषष्ठसप्तमयोः क्रमात् ॥ तृतीयान्त्ये च लक्ष्योऽय-मथान्यः क्रम उच्यते । आद्यन्त्ययुग्मयोः पङ्क्त्योश्चिन्त्यो गोमूत्रिकाक्रमः ॥ कृत्वैकं त्रितयं द्वे च द्वयमेकमिति क्रमात् । यद्वा त्रितयमेकञ्च द्वयमेकं द्वयं पुनः ॥ स्वपङ्क्तिप्रक्रमादेव विन्यासत्रितयं भवेत् । यद्वा प्रथम-तुर्य्याङ्घ्री स्वपङ्क्त्योस्तदनुक्रमात् ॥ द्वितीयोऽङ्घ्रिर्द्वितीयस्यां क्रमादाद्य-चतुष्टये । व्युत्क्रमाच्च तृतीयस्यामाद्यमेव चतुष्टये ॥ व्युत्क्रमेण द्विती-यस्यां तृतीयस्यां क्रमेण च । द्रष्टव्यो हि तृतीयोऽङ्घ्रिरन्त्यकोष्ठचतुष्टये ॥ विन्यासभेदास्त्वन्येऽपि सन्त्येव बहवोऽत्र हि । विस्तरात्तु न लिख्यन्ते स्वयमूह्या विचक्षणैः ॥' इति । कलापकम् ॥ २९ ॥

धूतेति ।—[ क्षमाभृतां ] राज्ञाम् ; प्रतिष्ठन्त इति [ प्रष्ठाः ] अग्रे-सराः । "सुपि स्थः" ( ३।२।४ पा० ) इति कप्रत्ययः । "प्रष्ठोऽग्र-गामिनि" ( ८।३।९२ पा० ) इति षत्वे ष्टुत्वम् । धूताः कम्पिताः, धौता उत्तेजिताः, असयो यैस्ते [ धूतधौतासयः ] सन्तः, [ प्रातिष्ठन्त ] प्रस्थिताः । "समवप्रविभ्यः स्थः" ( १।३।२२ पा० ) इति तङ् । [ सा वेला, अनुजीविनां ] शस्त्रजीविनां, [ शौर्य्यानुरागनिकषः ] शौर्य्यानु-रागयोः पुरुषकारस्वामिभक्त्योः, निकषः परीक्षास्थानं, [ हि ] । अतोऽग्रे स्थातव्यम्, अन्यथा भीरुत्वं स्वामिद्रोहश्च स्यातामिति भावः । वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३० ॥

दिवमिच्छन् युधा गन्तुं कोमलामलसम्पदम् ।
दधौ दधानोऽसिलतां कोऽमलामलसं पदम् ? ॥३१॥
कृतोरुवेगं युगपद्व्यजिगीषन्त सैनिकाः ।
विपक्षं बाहुपरिघैर्जङ्घाभिरितरेतरम् ॥ ३२ ॥
वाहनाऽजनि मानासि साराऽऽजावनमा ततः ।
मत्तसारगराजेभे भारीहावज्जनध्वनि ॥ ३३ ॥

---

दिवमिति ।—[युधा] युद्धेन ; कोमलाश्चारव:, अमला: शीतोष्णादि-दोषरहिता:, सम्पदो यस्यां तां [ कोमलामलसम्पदं, दिवं ] स्वर्गं, [ गन्तुमिच्छन्, क: ] पुमान्, [ अमलां ] धौताम्, [ असिलतां दधान: अलसं पदं दधौ ? ]; सर्वोऽपि नि:शङ्कमाक्रमत इत्यर्थ: । अत्र स्वर्गेच्छाया विशेषणगत्या नि:शङ्कप्रस्थानहेतुत्वात् काव्यलिङ्गम् ; तत् यमकेन संसृज्यते ॥ ३१ ॥

कृतेति ।—सेनायां समवेता: [ सैनिका: ] सैन्या: । सेनाया: पाक्षिकष्ठक् । बाहुभि: परिघैरिव [ बाहुपरिघै: ] बाहुदण्डै:, [विपक्षं] शत्रुं, [ जङ्घाभि: ] प्रसृताभि: । 'जङ्घा तु प्रसृता' इत्यमर: । [ इतरेतरम् ] अन्योऽन्यं सयूथीयमेव, [ कृतोरुवेगं ] कृत उरुर्महान् ऊर्वोश्च वेगो यस्मिन् कर्मणि तत् यथा तथा, [युगपत्, व्यजिगीषन्त ] विजेतुमैच्छन्, अहमहमिकया योद्धुमधावन्नित्यर्थ: । विपूर्वाज्जयते: सन्नन्ताल्लङि "पूर्ववत् सन:" ( १।३।६२ पा० ) इत्यात्मनेपदम् । अत्र विपक्षसयूथ्ययोर्बाहुजङ्घयोश्च प्रकृतत्वात् केवलप्रकृताऽऽस्पदा तुल्ययोगिता ॥ ३२ ॥

वाहनेति ।—[ तत: ] अनन्तरम् ; मानमभिमानम्, अस्यति क्षिपतीति तस्मिन् [ मानासि ] पराहङ्कारहारिणि । कर्मण्यण् । मत्ता: सारगा: बलभाजश्च, राजेभा नृपगजा यस्मिन् [ मत्तसारगराजेभे,

श्लोकप्रतियमकम् ।

**निध्वनज्जवहारीभा भेजे रागरसात्तमः ।**
**ततमानवजाऽऽरासा सेना मानिजनाऽऽहवा ॥३४॥**

लोमप्रतिलोमयमकम् ।

**अभग्नवृत्ताः प्रसभादाकृष्टा यौवनोद्धतैः ।**
**चक्रन्दुरुच्चकैर्मुष्टिग्राह्यमध्या धनुर्लताः ॥ ३५ ॥**

---

साराऽऽजौ ] श्रेष्ठयुद्धे । आजेः पुंलिङ्गता ज्ञेया । भारी भारवान्, पूर्णा इति यावत्, ईहावतामुत्साहवतां, जनानां ध्वनिर्यस्मिन् तत् [ भारीहावज्जनध्वनि ] यथा तथा ; न नमतीति [ अनमा ] अभङ्गुरा । पचाद्यजन्तेन नञ्समासः । [वाहना] निर्वाहयितृत्वम् । "ण्यासश्रन्थो युच्" (३।३।१०७ पा० ) इति युच् । [ अजनि ] जाता । सैनिकानामित्यर्थात् सिद्धम् । जनेः कर्त्तरि लुङि "दीपजन—" ( ३।१।६१ पा० ) इत्यादिना चिण् ॥ ३३ ॥

एतत् प्रातिलोम्येन श्लोकान्तरमाह, निध्वनदिति ।—निध्वनन्तो बृंहन्तः, जवा जवनाः, हारिणो मनोहराश्च, इभा यस्यां सा [ निध्वनज्जवहारीभा] ; ततो विस्तृतः, मानवजो मनुष्यजातः, आरासः कलकलो यस्यां सा [ततमानवजाऽऽरासा] ; मानिनां मानवतां, जनानामाहवो यस्यां सा [ मानिजनाऽऽहवा, सेना ] ; रज्यतेऽनेनेति रागः क्रोधः, स एव रसस्तस्मात् [ रागरसात्, तमः ] मोहं, [ भेजे ] ; क्रोधान्धा अजनीत्यर्थः । अत्र प्रातिलोम्येन पूर्वश्लोकाऽऽवृत्तेः श्लोकप्रतिलोमयमकम् । तदुक्तं दण्डिना,—'आवृत्तिः प्रातिलोम्येन पादार्द्धश्लोकगोचरा । यमकं प्रतिलोमत्वात् प्रतिलोममिति स्मृतम् ॥' इति ॥ ३४ ॥

अभग्नेति ।—अभग्ना अभङ्गुराः, वृत्ता वर्त्तुलाग्राश्च यास्ताः [अभग्नवृत्ताः ]। विशेषणसमासः । अन्यत्र,—अचलितचरित्राः । बहुव्रीहिः । मुष्टिग्राह्यं मुष्टिधार्य्यं, मध्यं यासां ताः [ मुष्टिग्राह्यमध्याः

करेणुः प्रस्थितोऽनेको रेणुर्घण्टाः सहस्रशः।
करेऽणुः शीकरो जज्ञे रेणुस्तेन शमं ययौ ॥३६॥
धृतप्रत्यग्रशृङ्गाररसरागैरपि द्विपैः।
सरोषसम्भ्रमैर्बभ्रे रौद्र एव रणे रसः ॥ ३७ ॥

---

धनुर्लताः ] ; अन्यत्र,—मुष्टिमेयमध्याः, [यौवनोद्धतैः] यौवनेन उद्धतैः धृष्टैर्धूर्तैश्च, [ प्रसभात् ] बलात्, [ आकृष्टाः ] सत्यः, एकत्र,—गुणेषु, अन्यत्र,—कचेषु चेति भावः। [ उच्चकैः ] उच्चैस्तरां, [ चक्रन्दुः ] टङ्कार-ध्वनिं चक्रुर्धनुर्लताः, अन्यत्र,—चुक्रुशुश्च। अत्र प्रस्तुतधनुर्लताविशेषणाद-प्रस्तुतधूर्त्ताऽऽस्कन्दितपतिव्रताप्रतीतिः समासोक्तिः; तथा च आकर्ष-णस्य विशेषणगत्या क्रन्दनहेतुत्वात् काव्यलिङ्गमङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ३५ ॥

करेणुरिति।—[ अनेकः ] बहुः, [ करेणुः ] करेणवः, [प्रस्थितः]। जातावेकवचनम्। असङ्ख्याताः करिणो योद्धुं ययुरित्यर्थः। 'करेणु-रिभ्यां स्त्री नेभे' इत्यमरः। [सहस्रशः, घण्टाः], करिकण्ठस्थाः इति शेषः, [ रेणुः ] दध्वनुः। "अत एकहल्मध्येऽनादेशादेर्लिटि" (६।४।१२० पा०) इत्येत्वाभ्यासलोपौ। [ करे ] पुष्करे, [ अणुः ] अल्पः, [शीकरः] अम्बुकणः, [ जज्ञे ]। जातावेकवचनम्। करेष्वणवः शीकरा जाता इत्यर्थः। जनेः कर्त्तरि लिट्। [ तेन ] अणुना शीकरेण, [ रेणुः ] रजः, [ शमं ययौ ]। एतेन करिणां बाहुल्यं व्यज्यते ॥ ३६ ॥

धृतेति।—[ धृतप्रत्यग्रशृङ्गाररसरागैः ] धृतः प्रत्यग्रः शृङ्गाररस एव रागो यैस्तैः, [ अपि ], इति विरोधः। रौद्रशृङ्गारयोर्विरोधित्वात्। धृतसिन्दूररञ्जनैरित्यविरोधः; अत एव विरोधाऽऽभासोऽलङ्कारः। 'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने। शृङ्गारं चूर्णसिन्दूरे लवङ्ग-कुसुमेऽपि च॥' इति विश्वः। [ सरोषसम्भ्रमैः द्विपैः रणे, रौद्ररस एव ] क्रोधरस एव, [ बभ्रे ] भृतः। कर्मणि लिट् ॥ ३७ ॥

न तस्थौ भर्त्तृतः प्राप्तमानसम्प्रतिपत्तिषु ।
रणैकसर्गेषु भयं मानसं प्रति पत्तिषु ॥ ३८ ॥
बाणाहिपूर्णतूणीरकोटरैर्धन्विशाखिभिः ।
गोधाऽऽश्लिष्टभुजाशाखैरभूद्भीमा रणाटवी ॥३९॥

---

नेति ।—[ भर्त्तृतः ] स्वामिनः ; प्राप्ते मानसम्प्रतिपत्ती पूजासौमनस्ये यैस्तेषु [ प्राप्तमानसम्प्रतिपत्तिषु, रणैकसर्गेषु ] रणे एकसर्गेषु नियतोत्साहेषु, नियतनिश्चयेषु वा । 'सर्गास्तु सज्जनाध्यायस्वभावोत्साहनिश्चयाः' इति वैजयन्ती । [ पत्तिषु ] पदातिषु, [ मानसं प्रति ] पत्तीनां मानसेष्वित्यर्थः । "कर्मप्रवचनीययुक्ते द्वितीया" (२।३।८ पा० ) इति द्वितीया । [ भयं न तस्थौ ] पूर्वोपकारस्मारिणो रणाय निर्भीकाः प्रातिष्ठन्तेत्यर्थः । अन्यथा,—'यस्तु भीतिपरावृत्तः सङ्ग्रामे हन्यते परैः । भर्त्तुर्यद्दुष्कृतं किञ्चित् तत्सर्वं प्रतिपद्यते ॥ यदस्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम् । भर्त्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ॥' इति निषेधस्मरणादिति भावः । अत्र मानसम्प्रतिपत्त्योर्विशेषणगत्या भयानवस्थानहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं यमकेन संसृज्यते ॥३८॥

बाणेति ।—रणमेवाटवी [ रणाटवी, बाणाहिपूर्णतूणीरकोटरैः ] बाणैरेवाहिभिः पूर्णाः तूणीरा निषङ्गा एव, कोटराः कुहरा येषां तैः, [गोधाऽऽश्लिष्टभुजाशाखैः] गोधास्तलानि निहाकाश्च । 'गोधा तले निहाकायाम्' इति विश्वः । तलं ज्याघातवारणम् । ततो गोधा एव गोधा इति श्लिष्टरूपकम् । ताभिराश्लिष्टाः भुजा एव शाखा येषां तैः, [ धन्विशाखिभिः ] धन्विभिर्धानुष्कैरेव, शाखिभिः वृक्षैः, [ भीमा ] भयङ्करा, [ अभूत् ] । समस्तवस्तुवर्णनात् सावयवरूपकम् ॥ ३९ ॥

प्रतिलोमानुलोमपादः ।

**नानाऽऽजाववजानाना सा जनौघघनौजसा ।**
**परानिहाहानिराप तान्वियाततयाऽन्विता ॥ ४० ॥**

**विषमं सर्वतोभद्रचक्रगोमूत्रिकाऽऽदिभिः ।**
**श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम् ॥ ४१ ॥**

**संहत्या सात्वतां चैद्यं प्रति भास्वरसेनया ।**
**ववले योद्धुमुत्पन्नप्रतिभा स्वरसेन या ॥ ४२ ॥**

---

नानेति ।—[ इह ] अस्यां, [ नाना ] नानाविधायाम्, [ आजौ ] चित्रयुद्धे, [ ओजसा ] तेजसा, [ अवजानाना ] अवज्ञां कुर्वती। "अकर्मकाच्च" ( १।३।४५ पा० ) इत्यात्मनेपदम् । जनौघैर्घना सान्द्रा [ जनौघघना ] बहुजनेत्यर्थः, [ अहानिः ] अभया, [ वियाततया ] वैयात्येन, धार्ष्ट्येन इत्यर्थः, [अन्विता] ; धृष्टेत्यर्थः । 'धृष्टो धृष्णुर्वियातश्च' इत्यमरः । [ सा ] चैद्यसेना, [ तान्, परान् ] अरीन्, [ आप ] प्राप। अत्र प्रतिपादं पादार्द्धस्यैवाऽऽवृत्तेरर्द्धपादप्रतिलोमयमकम् ॥ ४० ॥

विषममिति ।—[ तद्बलं ] चैद्यसेना, [ सर्वतोभद्रचक्रगोमूत्रिका-ऽऽदिभिः ] ; आदिग्रहणान्मुरजबन्धादिसङ्ग्रहः । [ श्लोकैः, महाकाव्यं ] शिशुपालवधादिकम्, [इव, व्यूहैः] सर्वतोभद्राऽऽदिभिरेव बलविन्यासैः। 'व्यूहस्तु बलविन्यासे' इत्यमरः । [ विषमं ] दुरवग्रहम्, [ अभवत् ]। नगनगरादिवर्णनयुक्तलक्षणं महाकाव्यम् ॥ ४१ ॥

संहत्येति ।—भास्वरा तेजिष्ठा, सेना यस्यास्तया [ भास्वरसेनया, सात्वतां ] यदूनां, [ संहत्या ] सङ्घेन, [ चैद्यं प्रति, ववले ] प्रचेले। 'वल चलने' इति धातोर्भावे लिट् । "न शसददवादि—" (६।४।१२६ पा०) इति वकारादित्वादेत्वाभ्यासलोपयोः प्रतिषेधः । [ या ] यदूनां संहतिः, [ स्वरसेन ] स्वभावेन, [ योद्धुम्, उत्पन्नप्रतिभा ] सञ्जात-

विस्तीर्णमायामवती लोललोकनिरन्तरा ।
नरेन्द्रमार्गं रथ्येव पपात द्विषतां बलम् ॥ ४३ ॥
वारणागगभीरा सा साराभीगगणाऽऽरवा ।
कारितारिबधा सेना नाऽऽसेधा वरितारिका ॥ ४४

युग्मम् ।

अधिनागं प्रजविनो विकसत्पिच्छचारवः ।
पेतुर्बर्हिणदेशीयाः शङ्कवः प्राणहारिणः ॥ ४५ ॥

---

प्रतिभा ; या स्वयं रणकण्डूला, सा पराहृता कथं निवर्त्तते ? इति भावः ॥ ४२ ॥

अथ यदुसेनायाः प्रतिबलाभियोगं युग्मेनाऽऽह, विस्तीर्णमित्यादि ।— [ आयामवती ] द्राघीयसी, [ लोललोकनिरन्तरा ] चलज्जनसङ्कुला, सा सेनेत्युत्तरश्लोकेनान्वयः । सा यदुसेना, [ विस्तीर्णं द्विषतां बलं, नरेन्द्रमार्गं ] राजपथं, [ रथ्या ] विशिखा, [ इव, पपात ] सञ्जगाम । उपमानेऽपि विशेषणं योज्यम् ॥ ४३ ॥

वारणेति ।—कीदृशी सेना ?—वारणैरेवागैरचलैः, गभीरा दुरवगाहा [ वारणागगभीरा ], सा ; साराणां श्रेष्ठाणां, न भियं गच्छन्तीत्यभीगानां निर्भीकाणां, गणानां जन्तुसङ्घानाम्, आरवो यस्यां सा [ साराभीगगणाऽऽरवा, कारितारिबधा ] कृतशत्रुबधा । 'रामो राज्यमकारयत्' इतिवदत्र स्वार्थे णिच् । नास्त्यासेधः प्रतिषेधो यस्यां सा [ नाऽऽसेधा ] । नञर्थेन नशब्देन बहुव्रीहिः । अनासेधा वा । [ वरितारिका ] ईप्सितशत्रुका, अनेनाहं योत्स्ये इति स्वयंवृतप्रतिभटेत्यर्थः । शैषिकः कप्प्रत्ययः । [सा सेना] पपात इति पूर्वेणान्वयः । अत्र प्रातिलोम्येन अर्द्धाऽऽवृत्तेः अर्द्धप्रतिलोमयमकमेतत् । लक्षणं तूक्तं निष्वनदित्यादि(३४ सङ्ख्यक)श्लोकप्रतिलोमयमके ॥ ४४ ॥

अधीति ।—प्रजवन्तीति [ प्रजविनः ] अतिजवनाः । "प्रजो-

गोमूत्रिकाबन्धः ।

प्र वृ त्ते वि क स द्वा नं सा ध नेऽ प्य वि षा दि भिः ।
व वृ षे वि क स द्दा नं यु ध मा प्य वि षा णि भिः ४६

---

रिनिः" ( ३।२।१५६ पा० ) इति इनिप्रत्ययः। [ विकसत्पिच्छचारवः ] विकसद्भिः पिच्छैः कलापैः, चारवः ; अत एव ईषदसमाप्तबर्हिणाः [बर्हिणदेश्यीयाः] मयूरकल्पाः । "ईषदसमाप्तौ—"(५।३।६७ पा०) इत्यादिना देश्यीयर्प्रत्ययः । [प्राणहारिणः, शङ्कवः] शल्याऽऽयुधानि। 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः । नागेषु [अधिनागम्] । विभक्त्यर्थेऽव्ययीभावः । गजेषु सर्पेषु च, [ पेतुः ] निपेतुः । सर्पेषु बर्हिणा इवेत्यर्थः । अत एव उपमाऽलङ्कारः । 'ग्रहग्राहिगजा नागाः' इति वैजयन्ती ॥ ४५ ॥

प्रवृत्ते इति ।—[ विकसद्ध्वानं ] विकसन् जृम्भमाणः, ध्वानो ध्वनिर्यस्मिन् तद्यथा तथा, [ साधने ] सम्प्रहारे, [प्रवृत्तेऽपि, अविषादिभिः] विषादरहितैः, [ विषाणिभिः ] दन्तिभिः, [ युधम्, आप्य ] प्राप्य, [ विकसत् ] प्रभूतं, [ दानं ] मदः, [ ववृषे ] । युद्धाऽऽरम्भे घनदानञ्च ध्वन्यते, सत्त्वसम्पन्नत्वात् । साधनेऽपि अविषादस्याविरोधाद्विरोधाऽऽभासः । गोमूत्रिकाचित्रबन्धोऽयम् ;—'वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः । गोमूत्रिकेति तत्प्राहुर्दुष्करं तद्विदो विदुः ॥' इति लक्षणात् ।

गोमूत्रिकाबन्धचित्रम् ।

प्र वृ त्ते वि क स द्वा नं सा ध ने प्य वि षा दि भिः

व वृ षे वि क स द्दा नं यु ध मा प्य वि षा णि भिः

षोड़शकोष्ठद्वये पङ्क्तिद्वयेऽर्द्धद्वयं क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरित्युद्धारः ॥ ४६ ॥

पुरः प्रयुक्तैर्युद्धं तच्चलितैर्लब्धशुद्धिभिः ।
आलापैरिव गान्धर्वमदीप्यत पदातिभिः ॥ ४७ ॥
केनचित् स्वासिनाऽन्येषां मण्डलाग्रानवद्यता ।
प्रापि कीर्त्तिप्लुतमहीमण्डलाग्राऽनवद्यता ॥ ४८ ॥
विहन्तुं विद्विषस्तीक्ष्णः सममेव सुसंहतेः ।
परिवारात् पृथक् चक्रे खड्गश्चाऽऽत्मा च केनचित् ४९

---

पुर इति ।—[ तद्युद्धं, पुरः प्रयुक्तैः ] गजादिभ्यः प्राक् प्रवर्त्तितैः ; अन्यत्र,—गानात् पूर्वमुच्चारितैः, [ चलितैः ] मण्डलचारिभिः ; अन्यत्र,—मुहुरावर्त्तितैरित्यर्थः, [ लब्धशुद्धिभिः ] कातर्य्यकपटादिदोषरहितैरित्यर्थः ; अन्यत्र,—आप्तैः, रागानुगुणैरित्यर्थः, [ पदातिभिः ] पत्तिभिः, करणैः । [ गान्धर्वं ] गानम्, [ आलापैः ] आलापिभिः, [ इव ] अक्षरविशेषैरिव, [ अदीप्यत ] अशोभत ॥ ४७ ॥

केनचिदिति ।—[ स्वासिना ] स्वखड्गेन, [ अन्येषां मण्डलाग्रान्, अवद्यता ] खण्डयता । द्यतेर्लटः शत्रादेशः । [ केनचित् ] वीरेण ; कीर्त्तिप्लुतं यशोव्याप्तं, महीमण्डलाग्रं भूपृष्ठं यस्याः सा [ कीर्त्तिप्लुतमहीमण्डलाग्रा, अनवद्यता ] अनिन्द्यता, [ प्रापि ] प्राप्ता ॥ ४८ ॥

विहन्तुमिति ।—[ केनचित् ] वीरेण, [ विद्विषो विहन्तुं, तीक्ष्णः ] निशितः परिच्छेत्ता च, [खड्गश्च, सुसंहतेः] सुघटितात् सुष्ठु सङ्घीभूताच्च, [ परिवारात् ] कोशात् परिजनाच्च । 'परिवारः परिजने खड्गकोशे परिच्छदे' इति विश्वः । [ सममेव, पृथक् चक्रे ] उद्धृतः, [ आत्मा च ] पृथक् चक्रे विभक्तः ; खड्गमुत्कृष्य स्वसैन्यान्निर्गत्यारिमध्ये पपातेत्यर्थः । अत्र खड्गाऽऽत्मनोः प्रकृतयोः समानक्रियायोगात् केवलप्रकृताऽऽस्पदा तुल्ययोगिता ॥ ४९ ॥

**अन्येन विदधेऽरीणामतिमात्रा विलासिना।**
**उद्गूर्णेन चमूस्तूर्णमतिमात्राऽऽविलाऽसिना ॥५०॥**
**सहस्रपूरणः कश्चिल्लूनमूर्द्धाऽसिना द्विषः।**
**तथोर्द्ध एव काबन्धीमभजन्नर्त्तनक्रियाम् ॥ ५१ ॥**

---

अन्येनेति।—[ अन्येन ] वीरेण, [ विलासिना ] विलसनशीलेन, [ उद्गूर्णेन ] उद्यतेन, [ असिना ] खड्गेन; मात्रं मानमतिक्रान्ता [ अतिमात्रा ] अपरिमिता, [ अरीणां, चमूः ] सेना, [ तूर्णं ] शीघ्रम्; अतिमात्रमत्यन्तम्, आविला कलुषा [ अतिमात्राऽऽविला ] अत्याविला, [ विदधे ] कृता ॥ ५० ॥

सहस्रेति।—पृणातीति पूरणः। "पॄ पालनपूरणयोः" कर्त्तरि ल्युट् *। सहस्राणां पूरणः पालयिता पूरयिता वा [ सहस्रपूरणः ] सहस्ररक्षी सहस्रहन्ता वा, [ कश्चित् ] भटः। कबन्धस्तु सहस्रपूरणः सहस्रसङ्ख्यापूरकः। सहस्रादिकः कबन्धो नृत्यतीति प्रसिद्धिः। [असिना] स्वासिना, [ द्विषो लूनमूर्द्धा ] लूनशत्रुमूर्द्धा। सापेक्षत्वेऽपि गमकत्वात् समासः। कबन्धस्तु द्विषोऽसिना लूनमूर्द्धा [ तथा ] कबन्धवदेव, [ ऊर्द्ध एव ]; तिष्ठते। कबन्धस्येमां [ काबन्धीं नर्त्तनक्रियामभजत् ] विजयहर्षात् स्वयमपि कबन्धवन्ननर्त्तेत्यर्थः। अत एव सादृश्याऽऽक्षेपादसम्भवद्वस्तुसम्बन्धाऽऽख्यो निदर्शनाभेदः। 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्' इत्यमरः ॥ ५१ ॥

---

* पृणातेः कर्त्तरि ल्युटि "इल्लोल्लाभ्यां गुणवृद्धी विप्रतिषेधेन" इति वार्त्तिकेन गुणस्य प्राप्तेः परणः इत्येवमेव पदं भविष्यति, न तु पूरणः इति। पूरयतेः चौरादिकात् कर्त्तरि ल्युटि अस्य प्रयोगः समीचीनः। तथा च पृणातेः ल्युटि पूरणः इत्यभिधानन्तु भ्रान्तिविजृम्भितमिति मन्यामहे, अत एव वल्लभेनाव "पूर्य्यन्ते आप्यायन्ते" इति व्याख्यातम्।

शस्त्रव्रणमयश्रीमदलङ्करणभूषितः ।
ददृशेऽन्यो रावणवदलङ्करणभूषितः ॥ ५२ ॥
द्विषद्विशसनच्छेदनिरस्तोरुयुगोऽपरः ।
सिक्तश्चास्त्रैरुभयथा बभूवारुणविग्रहः ॥ ५३ ॥

---

शस्त्रेति ।—[ शस्त्रव्रणमयश्रीमदलङ्करणभूषितः ] शस्त्रव्रणमयानि तद्रूपाणि । स्वार्थे मयट् । तैरेव श्रीमद्भिः शोभावद्भिः, अलङ्करणैरलङ्कारैः, भूषितोऽलङ्कृतः, शस्त्रव्रणालङ्कृत इत्यर्थः, [ अन्यः ] कश्चित्; अविद्यमाना लङ्का यस्याः सा अलङ्केति बहुव्रीहिः । अत एव "स्त्रियाः पुंवत्—" ( ६।३।३४ पा० ) इत्यादिना पुंवद्भावः । सा रणभूश्च तस्यामुषितः स्थितः [ अलङ्करणभूषितः ] । वसेर्निवासार्थात् कर्त्तरि क्तः, "वचिस्वपि—" ( ६।१।१५ पा० ) इत्यादिना सम्प्रसारणम् । [ रावणवत्, ददृशे ] दृष्टः । सर्वाङ्गीणव्रणभूषणत्वेन रावण एवायं लङ्कासम्बन्धविरहात् तु व्यतिरेक इत्यर्थः । उपमाव्यतिरेकयमकानां सङ्करः ॥ ५२ ॥

द्विषदिति ।—[ द्विषद्विशसनच्छेदनिरस्तोरुयुगः ] द्विषद्विशसनम् । 'निर्वापणं विशसनं मारणं प्रतिघातनम्' इत्यमरः । तस्मिंश्छेदेन अरिशस्त्रप्रहारेण, निरस्तमूरुयुगं यस्य सः, अत एव [ अस्रैः ] असृग्भिः, [ च सिक्तः, अपरः ] वीरः, [उभयथा] उभाभ्यां प्रकाराभ्याम् । "प्रकारे गुणवचनस्य" ( ८।१।१२ पा० ) इति थाल् । अरुणस्यानूरोरिव अरुणोऽरुणवर्णश्च विग्रहो यस्य सः [ अरुणविग्रहो बभूव ] । 'अरुणोऽर्कार्कसारथ्योररुणो लोहितेऽन्यवत्' इति विश्वः । अत्रोरुच्छेदास्रसिक्तयोर्विशेषणगत्योभयथाऽरुणविग्रहभावहेतुत्वात् काव्यलिङ्गम्, उपमाश्लेषाभ्यां सङ्कीर्य्यते ॥ ५३ ॥

भीमतामपरोऽम्भोधिसमेऽधित महाऽऽहवे ।
दाक्षे कोप: शिवस्येव समेधितमहा हवे ॥ ५४ ॥
दन्तैश्चिच्छिदिरे कोपात् प्रतिपक्षं गजा इव ।
परनिस्त्रिंशनिर्लूनकरवाला: पदातय: ॥ ५५ ॥
रणे रभसनिर्भिन्नद्विपपाटविकासिनि ।
न तत्र गतभी: कश्चिद्विपपाट विकासिनि ॥५६॥

---

भीमेति ।—[ अम्भोधिसमे ] सागरसदृशे ; महान् आहवस्तस्मिन् [ महाऽऽहवे, समेधितमहा: ] सम्यगेधितमहा:, संवर्द्धिततेजा इत्यर्थ:, [अपर:] वीर: ; दक्षप्रजापतेरयं दाक्षस्तस्मिन्, [दाक्षे, हवे] यज्ञे । 'हवो यज्ञे तथा ह्वाने' इति विश्व: । समेधितमहा: सन्दीपिततेजा:, [शिवस्य कोप इव ] वीरभद्र इवेत्यर्थ: । [ भीमतां ] भयङ्करताम्, [ अधित ] धृतवान् । बिभेत्यस्मादिति भीम: । "भिय: षुक्वा" ( उणा० १पा० १४७सू० ) इत्यौणादिके मप्रत्यये भीमो भीष्मश्च । "भीमादयोऽपादाने" ( ३।४।७४ पा० ) इति निपातनादपादानार्थता । उपमायमकयो: संसृष्टि: ॥ ५४ ॥

दन्तैरिति ।—[ परनिस्त्रिंशनिर्लूनकरवाला: ] परेषां निस्त्रिंशै: खड्गै:, निर्लूनकरवाला: छिन्नखड्गा: ; पादाभ्यामतन्तीति [ पदातय: ] पत्तय: । "पादे च" ( उणा० ४पा० १३१ सू० ) इत्यौणादिक इण्, "पादस्य पदाज्यातिगोपहतेषु" ( ६।३।५२ पा० ) इति पदादेश: । [ कोपात् गजा इव, प्रतिपक्षं ] शत्रुं, [ दन्तै: ] दशनैर्विषाणैश्च, [ चिच्छिदिरे ] चिच्छिदु: ॥ ५५ ॥

रण इति ।—[ रभसनिर्भिन्नद्विपपाटविकासिनि ] । 'रभसो वेगहर्षयो:' इति विश्व: । रभसेन वेगेन, निर्भिन्नद्विपा: पाटितगजा:, पाटविकानां पाटववताम्, असयो यस्मिन् । पाटवशब्दान्मत्वर्थीयठक्-

यावन्न सत्कृतैर्भर्त्तुः स्नेहस्याऽऽनृण्यमिच्छुभिः ।
अमर्षादितरैस्तावत्तत्यजे युधि जीवितम् ॥ ५७ ॥

समुद्गयमकम् ।

अयशोभिदुरा लोके कोपधामरणाऽऽहृते ।
अयशोभिदुरालोके कोपधा मरणाहृते ॥ ५८ ॥

---

प्रत्ययः । [ विकासिनि ] प्रवृद्धे, [ तत्र ] तस्मिन्, [ रणे, गतभीः ] निर्भीकः, अत एव [ कश्चित् ] कोऽपि, [ न विपपाट ] न पाटयामास, न पलायत इत्यर्थः । अत्र गतभीकत्वस्य विशेषणगत्या अपलायनहेतुत्वात् काव्यलिङ्गम्; द्विपदलनेऽपि रणे निर्भीक इति विरोधश्च, यमकेन संसृज्यते ॥ ५६ ॥

यावदिति ।—[ सत्कृतैः ] स्वस्वामिना पूर्वसम्मानितैः, अत एव [ भर्त्तुः स्नेहस्य ] स्वामिप्रेम्णः, [ आनृण्यम् ] अनृणत्वम्, [ इच्छुभिः ], योधैरिति शेषः; [युधि जीवितं यावन्न, तत्यजे] त्यक्तं, [तावत्, इतरैः] असत्कृतैः, [ अमर्षात् ] असत्कारक्रोधात्, जीवितं तत्यजे अथ वाऽस्मान् पश्येति स्वामिनमुपालभ्य स्वयमेव प्राक् प्राणान् प्रजहुरित्यर्थः । सत्कारादिविशेषणोत्थकाव्यलिङ्गं सुगमम् ॥ ५७ ॥

अथैवंविधानां मरणस्यैव कर्त्तव्यतामुपपादयति, अयश इति ।—"अयः शुभाऽऽवहो विधिः" इति अयशोभी भाग्यवान्, स चासौ दुरालोकस्तेजस्वित्वाद्दुर्दर्शश्चेति विशेषणसमासः । तस्मिन् [ अयशोभिदुरालोके ] । कोपधाम कोपाऽऽश्रयः, कुपित इत्यर्थः । अथाप्यकोपे भीरुत्वाऽऽपातात् । अत एव रणमाहृतः रणाऽऽहृतः रणार्थीत्यर्थः । कर्त्तरि क्तः । कोपधाम चासौ रणाऽऽहृतश्च तस्मिन् [ कोपधामरणाऽऽहृते, लोके ] एवंविधे वीरलोके, [ अयशोभिदुरा ] स्वाम्यनादरनिमित्तापकीर्त्तिनिवर्त्तिका । "विदिभिदिच्छिदेः कुरच्" (३।२।१६२ पा०) इति कुरच्प्रत्ययः । [उपधा] उपायः, [ मरणाहृते ] प्राणत्यागं विनेत्यर्थः, [ का ? ] न काऽपीत्यर्थः ।

स्खलन्ती न क्वचित्तैक्ष्ण्यादभ्यग्रफलशालिनी ।
अमोचि शक्तिः शाक्तीकैर्लोहजा न शरीरजा ॥५९॥
आपदि व्यापृतनयास्तथा युयुधिरे नृपाः ।
आप दिव्या पृतनया विस्मयं जनता यथा ॥६०॥

---

"अन्याऽऽरादितरर्त्ते—" (२।३।२९ पा०) इति पञ्चमी । अत्रायशोभि-त्वादीनां लोकविशेषणद्वारा तद्वर्त्तिनामुपजीविनामवसरे जीवत्यागहेतु-त्वात् काव्यलिङ्गं यमकेन सङ्कीर्य्यते । समुद्गयमकभेदोऽयम् ;—'अर्द्धा-भ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः' इति लक्षणात् ॥ ५८ ॥

स्खलन्तीति ।—शक्तिः प्रहरणं येषां तैः [ शाक्तीकैः ] । 'शाक्तीकः शक्तिहेतिकः' इत्यमरः । "शक्तियष्ट्योरीकक्" ( ४।४।५९ पा० ) इति प्रहरणार्थे ईकक्प्रत्ययः । [ तैक्ष्ण्यात् ] नैशित्यात्, [ क्वचित् ] क्वचिदपि, [ न स्खलन्ती ] प्रतिहतिं न प्राप्नुवती ; अभ्यग्रं समग्रं, यत् फलं शल्यं, तेन शालते ; अन्यत्र,—अभ्यग्रेणाऽऽसन्नेन, फलेन श्रेयसा, शालत इति [ अभ्यग्रफलशालिनी, लोहजा ] अयोमयी, [ शक्तिः ] आयुधविशेषः, [ अमोचि ] शत्रुषु मुक्ता । [ शरीरजा] शक्तिः सामर्थ्या-ऽऽख्या तु, [ न ] अमोचि । अतिव्यायामेऽप्यक्षीणशक्तिका एवायुध्य-न्तेत्यर्थः । अत्र द्वयोरपि प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ ५९ ॥

आपदीति ।—[ नृपाः ] राजानः, [ आपदि ] व्यसनेऽपि, [व्यापृत-नयाः ] प्रवृत्तनीतिका एव सन्तः, न तु श्वापदवत्त्येति भावः ; [ पृत-नया ] सेनया साधनेन । वाक्यान्तरस्थस्यापि पृतनाशब्दस्यात्रान्वयः चित्रे सोढव्यः । [ तथा ] तेन प्रकारेण, [ युयुधिरे ] सम्प्रजह्रुः, [ यथा, दिव्या जनता ] अन्तरिक्षवर्त्तिसिद्धविद्याधरसङ्घः, [ विस्मय-माप ], अमानुषं युद्धं चक्रुरित्यर्थः । अयञ्च पादाभ्यासयमकभेदः ॥ ६० ॥

**स्वगुणैरा फलप्राप्तेराकृष्य गणिका इव ।**
**कामुकानिव नालीकांस्त्रिणताः सहसाऽमुचन् ॥६१॥**
**वाजिनः शत्रुसैन्यस्य समारब्धनवाऽऽजिनः ।**
**वाजिनश्च शरा मध्यमविशन् द्रुतवाजिनः ॥६२॥**
**पुरस्कृत्य फलं प्राप्तैः सत्पत्त्राऽऽश्रयशालिभिः ।**
**कृतपुङ्खतया लेभे लक्ष्मप्याशु मार्गणैः ॥६३॥**

---

स्वगुणैरिति ।—त्रिषु स्थानेषु मध्येषु नताः [त्रिणताः] शार्ङ्गाणि । "पूर्वपदात्संज्ञायाम्—" (८।४।३ पा०) इति णत्वम् । [गणिकाः] वेश्याः, [इव], ता अपि त्रिणताः, मध्ये भ्रुवोश्च नतत्वात् । [नालीकान्] इषुविशेषान् । 'नालीकः शरशल्ययोः' इति विश्वः । [कामुकानिव, स्वगुणैः] स्वेषां ज्याभिः, स्वासां रूपलावण्यादिभिश्च । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । [आ फलप्राप्तेः] आ शल्यस्पर्शात् आ धनलाभाच्च, [आकृष्य] कर्णान्तिकं नीत्वा वशीकृत्य च, [सहसा, अमुचन्] अत्याक्षुः । मुचेर्लुङि "पुषादि—" (३।१।५५ पा०) इति च्लेरङादेशः । अनेकैवोपमा ॥ ६१ ॥

वाजिन इति ।—द्रुतं वजन्तीति [द्रुतवाजिनः] शीघ्रगामिनः । 'वज गतौ' इति धातोर्णिनिः । [वाजिनः] अश्वाः, [वाजिनः] पक्षवन्तः, [शराश्च] । 'पक्षो वाजस्त्रिषूत्तरे' इत्यमरः । समारब्धा नवा अपूर्वा, आजिर्युद्धं येन तस्य [समारब्धनवाऽऽजिनः शत्रुसैन्यस्य मध्यमविशन्] । अत्र वाजिनां शराणाञ्च प्रवेशाऽऽख्यतुल्ययोगिताभेदो यमकेन संसृज्यते ॥ ६२ ॥

पुरस्कृत्येति !—[फलं] शल्यं, [पुरस्कृत्य] पुरोधाय ; अन्यत्र,—फलं लाभं, पुरस्कृत्य सम्भाव्येत्यर्थः, [प्राप्तैः] आगतैः, [सत्पत्त्राऽऽश्रयशालिभिः] सत्पत्त्राऽऽश्रयेण साधुकङ्कादिपत्रग्रन्थनेन ; अन्यत्र,—

रक्तस्रुतिं जपासूनसमरागामिषुव्यधात्।
कश्चित् पुरः सपत्नेषु समराऽऽगामिषु व्यधात् ॥६४

रयेण रणकाम्यन्तौ दूरादुपगताविभौ।
गतासुरन्तरा दन्ती वरण्डक इवाभवत् ॥६५॥

---

साधुसहायावलम्बनेन, शालन्ते इति तथोक्तैः, [ मार्गणैः ] सायकैरर्थिभिश्च। 'मार्गणौ सायकार्थिनौ' इत्यमरः। [ कृतपुङ्खतया ] सुवङ्कर्त्तरीकृतया। 'मुखस्थकर्त्तरी पुङ्खः' इति यादवः। अन्यत्र,—कुशलतयेत्यर्थः, [ लक्षं ] शरव्यम् ; अन्यत्र,—लक्षसङ्ख्याम्, [ अपि ], धनम्, [ आशु लेभे ], शतादिकं किमु वक्तव्यम् ? इति भावः। 'लक्षं शरव्ये सङ्ख्यायाम्' इति विश्वः। अत्राभिधायाः प्राकृतार्थनियन्त्रणादर्थान्तरप्रतीतिर्ध्वनिरेव ॥ ६३ ॥

रक्तेति।—[ कश्चित् ] वीरः, [ पुरः ] अग्रे, [ समराऽऽगामिषु ] समरमागतेषु, [ सपत्नेषु, इषुव्यधात् ] बाणप्रहारात्। "व्यधजपोरनुपसर्गे" ( ३।३।६१ पा० ) इत्यप्प्रत्ययः। [ जपासूनसमरागां, रक्तस्रुतिं ] रक्तस्रावं, [ व्यधात् ] विहितवान्। दधातेर्लुङि "गातिस्था—" ( २।४।७७ पा० ) इत्यादिना सिचो लुक्। उपमायमकयोः संसृष्टिः ॥ ६४ ॥

रयेणेति।—रणमात्मन इच्छन्तौ [ रणकाम्यन्तौ ]। "काम्यच्च" ( ३।१।९ पा० ) इति रणशब्दात् काम्यच्प्रत्यये, सनाद्यन्तधातुत्वाल्लटि शत्रादेशः। [ रयेण दूरादुपगतौ, इभावन्तरा ] इभयोर्मध्ये। "अन्तराऽन्तरेण युक्ते" ( २।३।४ पा० ) इति द्वितीया। [ गतासुः ] मृतः, [ दन्ती ] दैवात् मध्यवर्ती हस्तिकुणप इत्यर्थः, [ वरण्डकः ] अन्तरावेदिः [ इवाभवत् ]। 'वरण्डकोऽन्तरावेदौ सन्दोहमुखरामयोः' इति विश्वः। अभ्यासकाले काञ्चन वेदिमन्तर्द्धाय दन्तिनौ योधयत इति प्रसिद्धम्। उपमा ॥ ६५ ॥

द्व्यक्षरः ।

भूरिभिर्भारिभिर्भीरैर्भूभारैरभिरेभिरे ।
भेरीरेभिभिरभ्राऽऽभैरभीरुभिरिभैरिभाः ॥६६॥

निशितासिलतालूनैस्तथा हस्तैर्न हस्तिनः ।
युध्यमाना यथा दन्तैर्भग्नैरापुर्विहस्तताम् ॥६७॥

असंयोगः ।

निपीड़नादिव मिथो दानतोयमनारतम् ।
वपुषामदयाऽऽपातादिभानामभितोऽगलत् ॥६८॥

---

भूरिभिरिति ।—[ भूरिभिः ] भूयोभिः, [ भारिभिः ] पताकाऽऽस्तरणादिभारवद्भिः । मत्वर्थीय इनिप्रत्ययः । भियं रान्तीति भीरास्तैः [ भीरैः ] भयदैः । 'रा दाने' "आतोऽनुपसर्गे कः" (३।२।३ पा०) इति कः । [भूभारैः] महाकायत्वाद्भुवो भारायमाणैः ; भेर्य्य इव रेभन्ते ध्वनन्तीति [ भेरीरेभिभिः]। 'रेभृ शब्दे' ताच्छील्ये णिनिः । [अभ्राऽऽभैः] मेघमेचकैः, इति चोपमाद्वयम् । [ अभीरुभिः ] निर्भीकैः, [ इभैः ] गजैः, [ इभाः ] प्रतिगजाः, तादृशा एव, [ अभिरेभिरे ] अभियुक्ताः । उपमाऽनुप्रासयोः सङ्करः । द्व्यक्षरानुप्रासः ॥ ६६ ॥

निशितेति ।—[ युध्यमानाः ] सम्प्रहरन्तः ; हस्ता येषां सन्तीति [ हस्तिनः ]। "हस्ताज्जातौ" (५।२।१३३ पा०) इतीनिप्रत्ययः । [ यथा भग्नैः, दन्तैः ] विषाणैः, [ विहस्ततां ] हस्तहीनत्वमितिकर्त्तव्यतामूढ़त्वञ्च, [आपुः]। 'विहस्तव्याकुलौ समौ' इत्यमरः । [ तथा, निशितासिलतालूनैः ] निशिताभिरसिलताभिः लूनैश्छिन्नैः, [ हस्तैः ] शुण्डादण्डैः, विहस्ततां [ न ] आपुः ; हस्तेभ्योऽपि दन्तानां प्रहारसाधनत्वादिति भावः । अत्र हस्तस्याच्छेदे वैहस्त्यं, न हस्तच्छेदे इति विरोधः प्रतिपत्तिमूढ़तया समाहित इति विरोधाऽऽभासोऽलङ्कारः ६७ ॥

निपीड़नादिति ।—[इभानां वपुषाम्, अदयाऽऽपातात्] निर्दयाभि-

रणाङ्गणं सर इव प्लावितं मदवारिणा ।
गजः पृथुकराऽऽकृष्टशतपत्रमलोडयत् ॥६९॥
शरक्षते गजे भृङ्गैः सविषादिविषादिनि ।
रुतव्याजेन रुदितं तत्राऽऽसीदतिसीदति ॥७०॥
अन्तकस्य पृथौ तत्र शयनीय इवाऽऽहवे ।
दशनव्यसनादीयुर्मत्कुणत्वं मतङ्गजाः ॥७१॥

---

योगाद्धेतोः, [ मिथः, निपीडनादिव ] वस्त्राऽऽदिनिपीडनादिव, इत्युत्प्रेक्षा । [ अनारतम् ] अश्रान्तं, [ दानतोयमभितोऽगलत् ]। वस्त्रवत् निर्दयाऽऽपातेऽपि मदातिरेक इति गजानामुत्साहातिशयोक्तिः । अत्र संयोगाभावादसंयोगश्लिष्टभेदः । "हलोऽनन्तराः संयोगः" ( १।१।७ पा० ) इति सूत्रात् ॥ ६८ ॥

रणेति ।—[ गजो मदवारिणा, प्लावितम् ] उक्षितं, [ रणाङ्गणं सर इव, पृथुकराऽऽकृष्टशतपत्रं ] पृथुना करेण आकृष्टानि, शतपत्राणि अमितवाहनानि, अन्यत्र,—कुशेशयानि च यस्मिन् कर्मणि तत्तथा, [ अलोडयत् ] उपाक्षोभयत् । श्लेषविशेषणेयमुपमा ॥ ६९ ॥

शरक्षते इति ।—[गजे, शरक्षते] शरेण क्षते प्रहृते ; अत एव विषादिना विषादवता, विषादिना यन्त्रा सह वर्त्तते इति तस्मिन् [सविषादिविषादिनि, तत्र ] रणे, [ अतिसीदति ] अतिसन्ने सति, मृते सतीत्यर्थः । सदेर्लटः शत्रादेशः । [ भृङ्गैः ], कर्तृभिः । "न लोका—" ( २।३।६९ पा० ) इत्यादिना षष्ठीप्रतिषेधः । [रुतव्याजेन] रुतच्छलेन, [ रुदितं ] रोदनम्, [ आसीत् ]। स्वाऽऽश्रयनाशदुःखाद्रोदनं कृतमिव, इत्युत्प्रेक्षा, व्यञ्जकाप्रयोगाद्गम्या । सा च रुतव्याजेनेत्यपह्नवपूर्वकत्वात् सापह्नवेति सर्वस्वकारः ॥ ७० ॥

अन्तकस्येति ।—[ अन्तकस्य ] मृत्योः सम्बन्धिनि ; शेतेऽस्मिन्निति

अर्द्धभ्रमकः ।

अ भी क म ति के ने द्धे

भी ता ऽऽ न न्द स्य ना श ने ।

क न त्स का म से ना के

म न्द का म क म स्य ति ॥७२॥

---

[ शयनीये ] तल्पे, [ इव ] स्थित इत्यर्थः । "कृत्यल्युटो बहुलम्" ( ३।३।११३ पा० ) इत्यधिकरणेऽनीयर् । [ पृथौ ] विशाले, [ तत्र- ऽऽहवे मतङ्गजाः, दशनव्यसनात् ] विषाणभङ्गाद्धेतोः, [ मत्कुणत्वम् ईयुः ] मत्कुणा इव दृष्टा इत्यर्थः । सुप्तरक्तपायिनः खट्वाऽऽश्रयाः कीटविशेषाः मत्कुणाः । 'कालेऽप्यजातदन्ते च श्य्याजन्तौ च मत्कुणः' इत्युक्तेः । तस्मादुभ्यादन्तेषु दन्तिषु तथात्वरूपकम् अन्तकस्य शयनीय इवेत्युत्प्रेक्षासापेक्षमिति सङ्करः ॥ ७१ ॥

अथ युग्मेनाऽऽह,—अभीकेत्यादि ।—अभीका निर्भीका, मतिर्यस्य तेन [ अभीकमतिकेन ] निर्भयचित्तेन । शैषिकः कप्प्रत्ययः । [ इद्धे ] दीप्ते, [ भीताऽऽनन्दस्य ] भीतानामानन्दस्य, [ नाशने ] । नशे- र्ण्यन्तात् कर्त्तरि ल्युट् । कनन्ती दीप्यमाना, सकामा विजयित्वात् पूर्णकामा, सेना यत्र तस्मिन् [ कनत्सकामसेनाके ] । पूर्ववत् कप् । [ मन्दकामकं ] मन्दोत्साहम् । पूर्ववदेव कप् । [ अस्यति ] निरा- कुर्वाणे, रण इत्युत्तरेण सम्बन्धः । अत्र सर्वतोभद्रवत् सर्वपादभ्रमणा- भावात्, पादार्द्धानामेव भ्रमणादर्द्धभ्रमकम् । उद्धारस्तु सर्वतोभद्रवत् स्यादेव ॥ ७२ ॥

युग्मम् ।

दधतोऽपि रणे भीममभीक्ष्णं भावमासुरम् ।
हताः परैरभिमुखाः सुरभूयमुपाययुः ॥७३॥

येनाङ्गमूहे व्रणवत्सरुचा परतोमरैः ।
समत्वं स ययौ खड्गत्सरुचापरतोऽमरैः ॥७४॥

---

अर्द्धभ्रमकचित्रम् ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अ | भी | क | म | ति | के | ने | ऊ |
| भी | ता | न | न्द | स्थ | ना | श | ने |
| क | न | त्स | का | म | से | ना | के |
| म | न्द | का | म | क | म | स्थ | ति |

दधत इति ।—[ रणे ] पूर्वोक्तप्रकारे, [ अभीक्ष्णम् ] अत्यन्तं, [भीमं] भयङ्करम्, [ आसुरम् ] असुरसम्बन्धिनं, [ भावं ] पुरुषकारलक्षणम् । 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति वैजयन्ती। असुरत्वञ्च, [ दधतः ] दधानाः, [ अपि, परैः ] शत्रुभिः, [ अभिमुखाः ]; एव स्थिताः [ हताः ], वीरा इति शेषः ; अत एव सुराणां भावं [सुरभूयं] सुरत्वं, देवत्वमित्यर्थः, [उपाययुः] । "स्वर्गं यान्त्यपराङ्मुखाः" इति स्मरणादिति भावः। "भुवो भावे" ( ३।१।१०७ पा० ) इति क्यप्। अत्रासुरभावेऽपि सुरभूयमुपाययुरिति विरोधस्य भावशब्दस्यार्थान्तरत्वेन परिहाराद्विरोधाऽऽभासः। इति युग्मम् ॥ ७३ ॥

येनाङ्गमिति ।—रुचा सह वर्त्तते यस्तेन [ सरुचा ] तेजस्विना, [ येन ] वीरेण, [ परतोमरैः ] शत्रुशस्त्रैः, [ व्रणवत् ] सव्रणम्, [ अङ्गम्,

निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।
पाणिनीयमिवालोकि धीरैस्तत्समराजिरम् ॥७५॥

ऊढे ] ऊढम् । वहेः कर्मणि लिट्, सम्प्रसारणम् । खड्गत्सरौ खड्गमुष्टौ, चापे च रतः [ खड्गत्सरुचापरतः ] खड्गेषुप्रहारेण युद्धं कुर्वन्नित्यर्थः । 'त्सरुः खड्गाऽऽदिमुष्टौ स्यात्' इत्यमरः । [ सः ] वीरः, [अमरैः समत्वं ययौ ], पौरुषेणेति भावः । उपमायमकयोः संसृष्टिः ॥७४॥

निपातितेति ।—[ निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलं] निपातिता वीरशय्यां गमिताः, सुहृदादयो यत्र तत् तथोक्तम् ; अभिमुखबन्धोरपि रणे बध्यत्वादिति भावः । अन्यत्र,—निपातिताः लक्षणाभावे शब्दसाधुत्वाय सूत्रकृता * सूत्रस्वरूपेणोच्चारिताः, सुहृदादिशब्दा यत्र तदित्यर्थः ; अत एव [ तत्, समराजिरं ] रणाङ्गम् ; पाणिनिना प्रोक्तं [ पाणिनीयम् ] अष्टाध्यायीव्याकरणम्, [इव] । "तेन प्रोक्तम्" ( ४।३।१०१ पा० ) इति छप्रत्ययः । [ धीरैः ] धृष्टैरेव, † [ अलोकि ] दृष्टम् । उभयत्रापि अधीरैर्दुरवगाहत्वादिति भावः । शोभनं हृदयं यस्य स सुहृत् । "सुहृद्दुर्हृदौ मित्रामित्रयोः" ( ५।४।१५० पा० ) इति हृदयशब्दस्य हृद्भावो निपातितः । स्वमस्यास्तीति स्वामी ईश्वरः । "स्वामिन्नैश्वर्ये" ( ५।२।१२६ पा० ) इति मत्वर्थीयनिपातः । 'पितुर्भ्राता पितृव्यः स्यात् मातुर्भ्राता तु मातुलः' इत्यमरः । 'पितृव्यमातुलमातामहपितामहाः" ( ४।२।३६ पा० ) इति व्यड्डुलड्डामहजन्तनिपाताः । ‡ बिभर्त्तीति भ्राता "नप्तृनेष्टृ—" इत्यादिसूत्राद्दीर्घादिको निपातः § ॥ ७५ ॥

---

* सूत्रकृता—सूत्रकारेण, महर्षिणा पाणिनिनेत्यर्थः ।

† प्रतिभान्वितैरेवेत्यर्थः ।

‡ अत्र दीक्षितैः वार्त्तिकसूत्रत्रयमुद्धृतं यथा,—"पितुर्भ्रातरि व्यत्", "मातुर्डुलच्" "मातृपितृभ्यां पितरि डामहच्" इति ।

§ वैशद्यार्थं सूत्रमुद्ध्रियते यथा,—"नप्तृ-नेष्टृ-त्वष्टृ-होतृ-पोतृ-भ्रातृ-जामातृ-मातृ-

अभावि सिन्धुः सन्ध्याऽभ्रसदृग्रुधिरतोयया ।
हते योद्धुं जनः पांशौ स दृग्रुधि रतो यया ॥७६॥
विदलत्पुष्कराऽऽकीर्णाः पतच्छङ्खकुलाऽऽकुलाः ।
तरत्पत्त्ररथा नद्यः प्रासर्पन् रक्तवारिजाः ॥७७॥
असृग् जनोऽस्त्रक्षतिमानवमज्जवसादनम् ।
रक्षःपिशाचं मुमुदे नवमज्जवसाऽदनम् ॥७८॥

---

अभावीति ।—[सन्ध्याऽभ्रसदृग्रुधिरतोयया] सन्ध्याऽभ्रसदृक् सन्ध्यामेघसदृशं, रुधिरमेव तोयं यस्यास्तया, [ सिन्धुः ] रक्तनद्या, [ अभावि ] भूतम् । भावे लुङि चिण् । [ यया ] सिन्धुः ; दृशो रुणद्धीति [ दृग्रुधि ] दृष्टिरोधके । रुधेः क्विप् । [ पांशौ ] रजसि, [ हते ] सति, [ स जनः ] वीरलोकः, [ योद्धुं, रतः ] उत्सुकः, अभूदिति शेषः । उपमायमकयोः संसृष्टिः ॥ ७६ ॥

विदलदिति ।—[ विदलत्पुष्कराऽऽकीर्णाः ] विदलद्भिर्विदीर्यमाणैः, पुष्करैः करिहस्ताग्रैः ; अन्यत्र,—विकसद्भिः पद्मैः, आकीर्णाः व्याप्ताः, [ पतच्छङ्खकुलाऽऽकुलाः ] पतद्भिः शङ्खकुलैः ललाटास्थिसङ्घैः कम्बुसङ्घैश्च, आकुलाः, [ तरत्पत्त्ररथाः ] तरन्ति प्लवमानानि, पत्त्राणि वाहनानि, रथाश्च ; अन्यत्र,—तरन्तः पत्त्ररथा अण्डजा यासु ताः, [रक्तवारिजाः] रुधिरतोयजन्याः ; अन्यत्र,—रक्तानि वारिजानि यासु ताः, [ नद्यः, प्रासर्पन्] प्रावहन् । अत्र नदीनां रक्तनदीनाञ्च श्लेषः ॥ ७७ ॥

असृगिति ।—[ अस्त्रक्षतिमान् ] अस्त्रप्रहारवान्, [ जनः ] वीरजनः, [ असृक् ] रक्तं, [ जवसादनं ] जवस्य चेष्टावेगस्य, सादनं सादकं

---

पितृ-दुहितृ'' इति ( उणा० २पा० ९६सू० ) । न पतन्त्यनेन नप्ता, पौत्री दौहित्रश्च । नयतेः षुक् गुणश्च, नेष्टा । त्विषेरितोऽत्वं, त्वष्टा । होता पोता ऋत्विग्भेदः । भ्राजतेः जलोपः भ्राता । जायां माति जामाता । मान पूजायां, नलोपः माता इत्यादि ।

चित्रं चापैरपेतज्यैः स्फुरद्रक्तशतह्रदम् ।
पयोदजालमिव तद्वीराऽऽशंसनमाबभौ ॥७९॥
बन्धौ विपन्नेऽनेकेन नरेणेह तदन्तिके ।
अमोचि सैन्ये घण्टाभिर्न रेणे हतदन्तिके ॥८०॥
कृत्तैः कीर्णा मही रेजे दन्तैर्गात्रैश्च दन्तिनाम् ।
तुमुलोकासुभिर्मृत्योर्मुसलोलूखलैरिव ॥८१॥

---

यथा स्यात् तथा, [ अवमत् । नवमज्जवसाऽदनं ] नवयोर्मज्जवसयो-र्मेदोरसयोः, अदनं भक्षकम् । कर्त्तरि ल्युट् । रक्षांसि च पिशाचाश्च [ रक्षःपिशाचम् ] । समाहारे द्वन्द्वैकवद्भावः । [ मुमुदे ] जहर्ष । अत्र मोदस्य वमनवाक्यार्थहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गं, तच्च यमकेन संसृज्यते ॥ ७८ ॥

चित्रमिति ।—[ अपेतज्यैः ] अपगतमौर्वीकैः । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । [ चापैः, चित्रं ] विचित्रं, [ स्फुरद्रक्तशतह्रदं ] स्फुरन्ति रक्तान्येव शतह्रदाः शम्पा यस्मिन् तत् । 'शम्पा शतह्रदा ह्रादिनी' इत्यमरः । [ तत् ] प्रकृतम् ; वीरः आशंस्यते अत्रेति [ वीरा-ऽऽशंसनं ] भयङ्करा युद्धभूमिः । 'सा वीराऽऽशंसनं युद्धभूमिर्याऽतिभय-प्रदा' इत्यमरः । [ पयोदजालमिवाऽऽबभौ ] ॥ ७९ ॥

बन्धाविति ।—[ इह सैन्ये बन्धौ, विपन्ने ] मृते सति, [ अनेकेन नरेण ] अनेकैर्नरैरित्यर्थः । जातावेकवचनम् । [ तदन्तिके ] तस्य मृतस्य बन्धोरन्तिके, [ अमोचि ] । किञ्च, हता दन्तिनो यत्र तस्मिन् [ हतदन्तिके ] सैन्ये, [ घण्टाभिः, न रेणे ] न दध्वने । रणतेर्भावे लिट् । अत्र हतदन्तिके इति विशेषणगत्या घण्टानामरणनहेतुत्वात् पदार्थ-हेतुकं काव्यलिङ्गं यमकेन संसृज्यते ॥ ८० ॥

कृत्तैरिति ।—[ कृत्तैः ] छिन्नैः, [दन्तिनां दन्तैर्गात्रैश्च कीर्णा, मही ]

युद्धमित्थं विधूतान्यमानवानभियोगतः।
चैद्यः परान् पराजिग्ये मानवानभियो गतः ॥८२॥
अथ वक्षोमणिच्छायाच्छुरितपीतवाससा। *
स्फुरदिन्द्रधनुर्भिन्नतड़ितेव तड़िज्वता ॥८३॥

---

रणभूमिः, [ क्षुसलोकासुभिः ] क्षुण्णाः पिष्टाः, लोकासवो जनप्राणा यैस्तैः, [ मृत्योर्मुसलोलूखलैः ] कीर्णा [ इव रेजे ]। 'अयोऽग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम्' इत्यमरः। अत्र मुसलोलूखलैरिति राजदन्तादिपाठेऽपि "सर्वकूलाभ्र—" ( ३।२।४२ पा० ) इत्यादिसूत्रादेव व्यभिचारज्ञापकात् परनिपातव्यत्ययः ॥ ८१ ॥

युद्धमिति।—[ मानवान् ] अभिमानवान्, [ चैद्यो युद्धं, गतः ] प्राप्तः सन्, [इत्थम्] ; विधृता अभिभूताः, अन्ये चैद्यातिरिक्ताः, मानवा यैस्तान् [ विधूतान्यमानवान्, अभियः ] निर्भीकान्, [ परान् ] अरीन्, [अभियोगतः] अभियोगात्, अभ्यवरोधादित्यर्थः, [पराजिग्ये] जिगायेत्यर्थः। "विपराभ्यां जेः" ( १।३।१९ पा० ) इत्यात्मनेपदम्। "सँल्लिटोर्जेः" ( ७।३।५७ पा० ) इति कुत्वम् ॥ ८२ ॥

अथ भगवदभियोगं पञ्चभिः कुलकेनाऽऽह, अथेति।—[ अथ ] चैद्यजयानन्तरं, "वपुषा राजन्" (८५ श्लोकः) "परः पुमान् अदृश्यत" (८७ श्लोकः) इति पञ्चमेन सम्बन्धः। तद्वपुस्तावत् त्रिभिर्विशिनष्टि।—[वक्षोमणिच्छायाच्छुरितपीतवाससा] वक्षोमणेः कौस्तुभस्य, छायया छुरितानि व्याप्तानि, पीतवासांसि पीताम्बराणि यस्य तेन, अत एव

---

* अत्र "वक्षोमणिच्छायाच्छुरिताऽऽपीतवाससा" इति पाठान्तरं दृश्यते। वक्षोमणेः कौस्तुभस्य, छायया छुरितानि व्याप्तानि, आपीतवासांसि पीताम्बराणि यस्य तेन, इति तदीया व्याख्या। अत्र आङित्यव्ययस्य ईषदर्थकतया, कौस्तुभस्य प्रभाभिः अम्बराणि ईषत्पीतानि सञ्जातानीति वेदितव्यम्।

द्व्यक्षरः ।

**नीलेनानालनलिननिलीनोल्ललनालिना ।**
**ललनाललनेनालं लीलालोलेन लालिना ॥८४॥**
**अपूर्वयेव तत्कालसमागमसकामया ।**
**दृष्टेन राजन् वपुषा कटाक्षैर्विजयश्रिया ॥८५॥**

---

[ स्फुरदिन्द्रधनुर्भिन्नतड़िता ] स्फुरता इन्द्रधनुषा भिन्नाः सङ्गताः, तड़ितो यस्य तेन, [ तड़ित्त्वता ] मेघेन, [इव] स्थितेनेत्यर्थः ॥ ८३ ॥

नीलेनेति ।—पुनः कीदृशेन वपुषा ?—[नीलेन] श्यामलेन ; तथा, अनालं नालरहितं, यन्नलिनं, तत्र निलीना आसन्नाः, उल्ललन्तीति उल्ललनाश्चलाश्च, अलयो यस्य तेन [ अनालनलिननिलीनोल्ललनालिना ] मुखसौरभलोभपरिभ्रमद्भ्रमरेणेत्यर्थः, [ ललनाललनेन ] ललनानां विलासिनीनां स्त्रीणां, लालनेन उपलालनेन, वशीकरणेनेत्यर्थः, [ अलम् ] अत्यन्तं, [ लीलालोलेन ] क्रीड़ालोलुपेन । 'लीलाऽऽलानेन' इति पाठे,—लीलानां विलासानाम्, आलानेन आलयेनेत्यर्थः ; लालयति भक्तानिति तेन [लालिना] भक्तानुकम्पिनेत्यर्थः । द्व्यक्षरानुप्रासोऽलङ्कारः ॥ ८४ ॥

अपूर्वयेति ।—किञ्च, [ अपूर्वयेव ] अपूर्वसमागमयेव, [ तत्कालसमागमसकामया] तत्कालसमागमे सकामया साभिलाषया, [विजयश्रिया ], चैद्यविरक्तयेति भावः ; [ कटाक्षैः ] अपाङ्गैः, [ दृष्टेन ] आलोकितेन, [वपुषा, राजन्] दीप्यमानः । अत्र प्रस्तुतजयश्रीविशेषणसाम्यादप्रस्तुतानुरक्तमानिनीप्रतीतेः समासोक्तिः, प्रतीयमानाभेदाध्यवसायादपाङ्गदर्शनोत्प्रेक्षा च ॥ ८५ ॥

द्यक्षरः।

विभावी विभवी भाऽऽभो विभाभावो विवो विभीः।
भवाभिभावी भावावो भवाभावो भुवो विभुः॥८६॥
उपैतुकामैस्तत्पारन्निश्चितैर्योगिभिः परैः।
देहत्यागकृतोद्योगैरदृश्यत परः पुमान्॥८७॥

---

विभावीति।—विभावोऽस्यास्तीति [विभावी] प्रभावसम्पन्नः; विभवोऽस्यास्तीति [विभवी] ऐश्वर्य्यवान्; भस्याऽऽभैवाऽऽभा यस्य सः [भाऽऽभः] नक्षत्रवदुज्ज्वल इत्यर्थः; विभां विशिष्टाऽऽभां, भावयति सम्पादयति, विश्वस्येति [विभाभावी]। 'तस्य भासा सर्वमिदं विभाति' (श्वेता० उप० ६अध्या० १४मन्त्रः+मुण्ड० उप० २मुण्ड० २खण्ड० १०मन्त्रः) इति श्रुतेः। भुवो ण्यन्तात् णिनिः। विना पक्षिणा, वाति गच्छतीति [विवः] पक्षिवाहन इत्यर्थः। "आतोऽनुपसर्गे कः" (३।२।३ पा०) इति कः। [विभीः] निर्भीकः; भवं संसारम्, अभिभवतीति [भवाभिभावी] भक्तानां संसारनिवर्त्तक इत्यर्थः। भुवो णिनिः। भावान् जन्तून्, अवतीति [भावावः] विश्वत्राता। 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति वैजयन्ती। अवतेः कर्मण्यण्। भवाभावोऽस्यास्तीति [भवाभावः] संसारदुःखैरस्पृष्ट इत्यर्थः। "अर्श आदिभ्योऽच्" (५।२।१२७ पा०) इति अच्प्रत्ययः। [भुवः] भूमेः, [विभुः] भर्त्ता॥ ८६॥

उपैत्विति।—एवम्भूतः [परः पुमान्] परमपुरुषो हरिः; [तत्पारं] तस्य हरेः, पारम् अन्तम्, [उपैतुकामैः] तं जिगीषुभिः; अन्यत्र,— दिदृक्षुभिरित्यर्थः। "तुङ्काममनसोरपि" (का०) इति मकारलोपः। [निश्चितैः] योद्धुं कृतनिश्चयैरित्यर्थः; अन्यत्र,—निश्चिततत्त्वैः। सकर्मकादप्यविवक्षिते कर्मणि क्तः। यद्वा,—पीता गावः, विभक्ता भ्रातर इत्यादिवद्द्रष्टव्यम्। स्फुटीकृतं चैतत् घण्टापथे 'स वर्णि-

गतप्रत्यागतः ।

**तं श्रिया घनयाऽनस्तरुचा सारतया तया ।**
**यातया तरसा चारुस्तनयाऽनघया श्रितम् ॥८८॥**
**विद्विषोऽद्विषुरुद्वीक्ष्य तथाऽप्यासन्निरेनसः ।**
**अरुच्यमपि रोगघ्नं निसर्गादेव भेषजम् ॥८९॥**

युग्मम् ।

---

लिङ्गी विदितः' इत्यत्र । * [ देहत्यागकृतोद्योगैः ] मरणोद्यतैः ; अन्यत्र,—मुमुक्षुभिरित्यर्थः, [ योगिभिः ] सन्नाहवद्भिरुपायवद्भिर्वा ; अन्यत्र,—ध्यानवद्भिः । 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । [ परैः ] शत्रुभिः ; अन्यत्र,—परमयोगिभिः, [ अदृश्यत ] परेषामग्रेऽतिष्ठदित्यर्थः ; अन्यत्र,—साक्षात्कृतः । 'तमेव विदित्वाऽतिमृत्युमेति' ( श्वेता० उप० ३अध्या० ८मन्त्रः ) इति श्रुतेः । अर्थान्तरप्रतीतिर्ध्वनिरेव, न श्लेषः, अभिधायाः प्रकृतार्थे नियन्त्रणात् ॥ ८७ ॥

युग्मेनाऽऽह, तमिति ।—[ घनया ] आनन्दसान्द्रया, [ अनस्तरुचा ] अक्षीणकान्त्या, [ सारतया ] सारत्वेन, सर्वोत्कर्षगुणेनेत्यर्थः, [यातया] व्याप्तया, [चारुस्तनया] रम्यकुचया । "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" ( ४।१।५४ पा० ) इति विकल्पादनीकारः । [ अनघया ] निर्दोषया, [ तया ] प्रसिद्धया, [ श्रिया ] रमया, [ तरसा ] त्वरया, [श्रितम्] आलिङ्गितं, [तं] हरिम्, उद्वीक्ष्येत्युत्तरेण सम्बन्धः । अत्रापि प्रातिलोम्येनार्द्धाऽऽवृत्तेरर्द्धप्रतिलोमयमकम् । एतल्लक्षणन्तु प्रागेवोक्तम् ॥ ८८ ॥

विद्विष इति ।—तं पूर्वोक्तं हरिम् [ उद्वीक्ष्य, विद्विषः ] शत्रवः, [ अद्विषुः ] द्विषन्ति स्म । लङि "द्विषश्च" ( ३।४।११२ पा० )

---

* किरातार्ज्जुनीयस्य १म श्लोकस्य व्याख्यायाम् ।

विदितं दिवि केऽनीके तं यातं निर्जिताऽऽजिनि ।
विगदं गवि रोद्धारो योद्धा यो नतिमेति न ? ॥९०॥

प्रतिलोमेनायमेवार्थः ।

नियुज्यमानेन पुरः कर्मण्यतिगरीयसि ।
आरोप्यमाणोरुगुणं भर्त्रा कार्मुकमानमत् ॥९१॥

---

इति विकल्पेन भेजुंषादेशः । [ तथाऽपि ] द्विषन्तोऽपि, [ निरेनसः ] निष्पापाः, [ आसन् ] । द्वेषवीजस्याप्येनोनिवर्त्तकत्वं दृष्टान्तेनाऽऽह, अरुच्यमिति ।—रोचत इति रुच्यं, "राजसूय—" ( ३।१।११४ पा० ) इत्यादिना क्यबन्तो निपातितः । [ अरुच्यम् ] अरुच्यमानम्, [ अपि, भेषजम् ] औषधम् । 'भेषजौषधभैषज्यानि' इत्यमरः । [ निसर्गात् ] स्वभावशक्तेः, [ एव ] ; रोगं हन्तीति [ रोगघ्नम् ] आरोग्यकारि । 'हरिर्हरति पापानि' इति वचनादिति भावः । "अमनुष्यकर्तृके च" ( ३।२।५३ पा० ) इति टप्रत्ययः ॥ ८९ ॥

विदितमिति ।—किञ्च, [ योद्धा ] वीरः, [ यः ] हरिः, [ नतिं ] परेषां नम्रतां, [ नेति ] नोपैति ; नितरां जिता आजयो येन तस्मिन् [ निर्जिताऽऽजिनि ] अनेकाऽऽजिविजयिनि अपि, [ अनीके ] सैन्ये । 'वरूथिनी बलं सैन्यं चक्रञ्चानीकमस्त्रियाम्' इत्यमरः । [ यातं ] योद्धुमागतं, [ दिवि ] स्वर्गेऽपि, [ विदितं ] प्रख्यातं, [ विगदं ] निरामयं, [ तं ] हरिं, [ गवि ] भुवि, [ रोद्धारः ] जेतारः, [ के ? ] न केऽपीत्यर्थः । प्रातिलोम्येऽप्येत एव पदार्थवाक्यार्थाः । एतदपि श्लोकप्रतिलोमयमकमेव । पदपदार्थादिसंवादस्तु वैचित्रीविशेषः । लक्षणन्तु ३४ सङ्ख्यकश्लोके निध्वनदित्यत्रैवोक्तमनुसन्धेयम् ॥ ९० ॥

नियुज्यमानेनेति ।—[ पुरः ] अग्रे, [ अतिगरीयसि, कर्मणि ] रणकर्मणि ; अन्यत्र,—दुष्करे क्वचित् कृत्यवस्तुनि, [ नियुज्यमानेन ] व्यापारयिष्यता आज्ञापयिष्यता च, [ भर्त्रा ] स्वामिना, [ आरोप्यमाणोरु-

तत्र बाणाः सुपरुषः समधीयन्त चारवः।
द्विषामभूत् सुपरुषस्तस्याऽऽकृष्टस्य चाऽऽरवः ॥९२॥
पश्चात्कृतानामप्यस्य नराणामिव पत्रिणाम्।
यो यो गुणेन संयुक्तः स स कर्णान्तमाययौ ॥९३॥

---

गुणम्] आरोप्यमाणः अधिक्रियमाणः, उरुर्महान्, गुणो ज्या यस्मिन् तत्; अन्यत्र,—वर्ण्यमानसौन्दर्य्यादिकः; कर्मणि प्रभवतीति [कार्मुकं] धनुः। "कर्मण उकञ्" (५।१।१०३ पा०) इत्युकञ्प्रत्ययः। [आनमत्] गुणाऽऽकर्षणादाकुञ्चितकोटिकमभूत्; अन्यत्र,—प्रणत इत्यर्थः। अत्र प्रकृतकार्मुकविशेषणसाम्यादप्रस्तुतनियोज्यपुरुषप्रतीतेः समासोक्तिः ॥ ९१ ॥

तत्रेति।—[तत्र] कार्मुके; शोभनानि परूंषि येषां ते [सुपरुषः] सुपर्वाणः, अत एव [चारवः] अतिरम्याः, [बाणाः, समधीयन्त] निहिताः, [आकृष्टस्य, तस्य] कार्मुकस्य, [आरवश्च द्विषाम्]; सुष्ठु परुषः [सुपरुषः] अतिकर्कशः, [अभूत्]। यमकविशेषालङ्कारः ॥ ९२ ॥

पश्चादिति।—[नराणां] पुंसाम्, [इव, पश्चात्कृतानां] निषङ्गसङ्गितया पृष्ठस्थापितानाम्, [अपि]; अन्यत्र,—अवधीरितानामपि, [पत्रिणाम्] इषूणां मध्ये इत्यर्थः, [यो यः] पत्री नरश्च, [गुणेन] ज्यया, दाक्षिण्यादिना च, [संयुक्तः] सम्बद्धः, [स सः] पत्री नरश्च, [अस्य] हरेः, [कर्णान्तं] कर्णसमीपम्, [आययौ] आगतः, गुणयोगादाकर्णमाकृष्टः इत्यर्थः; अन्यत्र,—अन्तिकमागत इत्यर्थः। श्लेषसङ्कीर्णोपमा ॥ ९३ ॥

द्व्यक्षरः।

प्रापि रूपी पुराऽरेपाः * परिपूरी परः परैः।
रोपैरपारैरुपरि पुपूरेऽपि पुरोऽपरैः ॥९४॥
दिङ्मुखव्यापिनस्तीक्ष्णान् ह्रादिनो मर्मभेदिनः।
चिक्षेपैकक्षणेनैव सायकानहितांश्च सः ॥९५॥

---

प्रापे इति।—[ पुरा ] पूर्वं, [ रूपी ] मत्स्यकूर्माद्यनेकरूपवान्, [ अरेपाः ] निष्पापः; परिपूरयति कामैर्भक्तानिति [ परिपूरी ] भक्तवरदः। पूरयतेर्णिनिः। [ परः ] परमपुरुषो हरिः, [ परैः ] शत्रुभिः, [ प्रापि ] प्राप्तः, अवरुद्ध इत्यर्थः, [ अपरैः ] अन्यैः शत्रुभिः कर्त्तृभिः, [ अपारैः ] अनन्तैः, [ रोपैः ] इषुभिः। 'पत्री रोप इषुर्द्वयोः' इत्यमरः। [ पुरः ] अग्रे, [ उपरि, अपि ] च, [ पुपूरे ] पूरितः। पृणातेः † कर्मणि लिट्। द्व्यक्षरानुप्रासोऽलङ्कारः ॥ ९४ ॥

दिगिति।—[ सः ] हरिः, [ दिङ्मुखव्यापिनः ] दिगन्तव्यापकान्, [ तीक्ष्णान् ] अतितीक्ष्णान्, निशितान् इत्यर्थः, क्रूरांश्च; ह्रादन्ते इति

---

* "पुराऽरेपाः" इत्यत्र "पुराऽरेपः" इत्येवमेव पाठः कल्पनीयः, रेपशब्दस्य निन्दितार्थकस्य नञ्समासाऽऽश्रयणेन अरेपस्य निष्पापार्थकत्वस्य प्रत्ययात्; तथा हि मेदिनी,—"रेपः स्यान्निन्दिते क्रूरे रोपो रोपणबाणयोः" इति। रेपते इत्यस्य भौवादिकस्य कर्त्तरि असुनि तत्तु कथञ्चित् सम्पाद्यं मन्यते चेत्, तदा प्रसिद्धैराभिधानिकैः "रेपस्" इति शब्दस्यापठितत्वात् अनाभिधानिकत्वमेवास्यावधातव्यम्।

† पृणातेः "पुपूरे" इति रूपासिद्धिः; "शॄदॄप्रां ह्रस्वो वा" (७।४।१२ पा०) इति सूत्रेण ह्रस्वस्य वैकल्पिकत्वदर्शनात् पप्रे इति रूपं स्यात्, पक्षे "ऋच्छत्यॄताम्" (७।४।११ पा०) इति सूत्रेण गुणे च प्राप्ते पपरे इति पदं स्यात्; तथा च दैवादिकस्य पूर्य्यते इत्यस्य लिटि रूपमेतत् इत्यवधेयम्।

गूढचतुर्थः ।

शरवर्षी महानादः स्फुरत्कार्मुककेतनः ।
नीलच्छविरसौ रेजे केशवच्छलनीरदः ॥९६॥
न केवलं जनैस्तस्य लघुसन्धायिनो धनुः ।
मण्डलीकृतमेकान्ताद्बलमैक्षि द्विषामपि ॥९७॥

---

[ह्लादिनः] पञ्चनादवतः सिंहनादवतश्च, [मर्मभेदिनः] मर्मस्थानविदारकान्, [सायकान्] इषून्, [अहितान्] अरीन्, [च एकक्षणेनैव, चिक्षेप] निरास । अत्र सायकानामहितानाञ्च प्रकृतानामेव तुल्यधर्मयोगादौपम्योपगमात् तुल्ययोगिताभेदः ॥ ९५ ॥

शरेति ।—[शरवर्षी] बाणवर्षी नीरवर्षी च । 'शरं नीरे शरो बाणे' इति विश्वः । महान् नादः सिंहनादो गर्जितञ्च यस्य सः [महानादः, स्फुरत्कार्मुककेतनः] स्फुरन्ती कार्मुककेतने धनुर्ध्वजो यस्य सः; अन्यत्र,—इन्द्रचापचिह्न इत्यर्थः, [नीलच्छविः] श्यामकान्तिः; केशवस्य छलं कपटं यस्य सः नीरदः [केशवच्छलनीरदः] हरिमेघः, [असौ, रेजे] रणरङ्गे सर्वोत्कर्षेण दिदीपे इत्यर्थः । अत्र छलशब्देन हरित्वापह्नवेन मेघत्वाऽऽरोपणाच्छलादिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः । त्रिपाद्यन्तर्गतचतुर्थपादाक्षरत्वाद्गूढचतुर्थाऽऽख्यश्चित्रविशेषः, शब्दालङ्कारश्चेति सङ्करः ॥ ९६ ॥

नेति ।—लघु शीघ्रं, सन्धत्ते यस्तस्य [लघुसन्धायिनः, तस्य] हरेः, [धनुः]; एव [केवलम्, एकान्तात् मण्डलीकृतं] शीघ्राऽऽकर्षान्नियमेन वलयीकृतं, [जनैर्नैक्षि] । कर्मणि लुङ् । किन्तु [द्विषां बलमपि] मण्डलीकृतं त्रासादेकत्र पुञ्जीकृतम्, ऐक्षि । अत्र धनुर्बलयोः प्रकृतयोरेव तुल्यधर्मयोगात् केवलप्रकृताऽऽस्पदा तुल्ययोगिता ॥ ९७ ॥

द्व्यक्षरः ।

लोकाऽऽलोकी कलोऽकल्ककलिलोऽलिकुलालकः ।
कालोऽकलोऽकलिः काले कोलकेलिकिलः किल ॥९८॥

अक्षितारासु विव्याध द्विषतः स तनुत्रिणः ।
दानेषु स्थूललक्ष्यत्वं न हि तस्य शराऽऽसने ॥९९॥
युग्मम् ।

---

युग्मेनाऽऽह, लोकाऽऽलोकीत्यादि ।—लोकान् आलोकते इति [लोकाऽऽलोकी] त्रैलोक्यदर्शी, [कलः] मधुरभाषी ; कल्केन पापेन दम्भेन वा, कलिलो न भवतीति [ अकल्ककलिलः ] । 'कल्कः पापाऽऽशये पापे दम्भे' इति विश्वः । [ अलिकुलालकः ] अलिकुलनीलमूर्द्धज इत्यर्थः, [कालः ] नीलवर्णः कालाऽऽत्मको वा ; नास्ति कला यस्य सः [अकलः] निरंश इत्यर्थः, [ अकलिः ] अकलहः, स्वयमकलहशील इत्यर्थः, [ काले ] प्रलयकाले ; कोलकेल्या वराहलीलया, किलति क्रीड़तीति [ कोलकेलिकिलः, किल ] किलशब्दस्तु खल्वर्थे । विव्याधेत्युत्तरेण सम्बन्धः । द्व्यक्षरानुप्रासः ॥ ९८ ॥

अक्षीति ।—[ सः ] पूर्वोक्तगुणविशिष्टो हरिः ; तनुत्राणि एषां सन्तीति [ तनुत्रिणः ] वर्मिणः । 'तनुत्रं वर्म दंशनम्' इत्यमरः । तान्, [ द्विषतः ] शत्रून्, [ अक्षितारासु ] नेत्रकनीनिकासु, [ विव्याध ] प्रजहार । [ हि ] तथा हि, [ तस्य ] हरेः, [ दानेषु ] वितरणेषु एव, [ स्थूललक्ष्यत्वं ] विपुलविषयत्वम् । 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः । [ शराऽऽसने ] शरक्षेपे तु, [ न ] ;किन्तु सूक्ष्मलक्ष्यत्वमेव । अतोऽक्षितारावेधित्वमस्य युक्तमित्यर्थः ; अतो वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ९९ ॥

द्व्यक्षरः ।

वररोऽविवरो वैरिविवारी वारिराऽऽरवः ।
विववार वरो वैरं वीरो रविरिवौर्वरः ॥१००॥

मुक्तानेकशरं प्राणानहरद्भूयसां द्विषाम् ।
तदीयं धनुरन्यस्य न हि सेहे सजीवताम् ॥१०१॥

द्व्यक्षरः ।

राजराजीरुरोजाऽऽजेरजिरेऽजोऽजरोऽरजाः ।
रेजारिजूरजोर्जार्जी रराजर्जुरजर्जरः ॥१०२॥

---

वरर इति ।—वरान् रातीति [ वररः ] वरप्रदः । 'रा दाने' "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) इति कः । [ अविवरः ] निर्विवरः, नीरन्ध्रः इत्यर्थः ; वैरिणः शत्रून्, विवारयतीति [ वैरिविवारी ] ; वारीणि रातीति वारिरः । पूर्ववत् कः । तस्येवाऽऽरवो यस्य सः [ वारिराऽऽरवः, वरः] श्रेष्ठः, [वीरः] शूरः, स कृष्णः इति यावत् ; उर्वरा भूमिः । 'उर्वरा सर्वसस्याऽऽढ्यभूमौ स्याद्भूमिमात्रके' इत्यमरः । तस्यां भवः [ औवरः ] पृथ्वीभवः, [ रविरिव, वैरं ] वैरिणां वृन्दं, [ विववार ] विवारयामास, जघानेत्यर्थः । द्व्यक्षरानुप्रासः ॥ १०० ॥

मुक्तेति ।—[ मुक्तानेकशरं ] क्षिप्तबहुबाणम् ; तस्य हरेरिदं [ तदीयं धनुः भूयसां द्विषां प्राणानहरत् ] । [ हि ] तथा हि, [ अन्यस्य ] परस्य, [ सजीवतां न सेहे ] ; अथ वा,—अन्यस्य धनुषः, सजीवतां सज्याकत्वं, न सेहे । 'त्रिषु जीवति जीवः स्याज्मौर्व्यां स्त्री' इति वैजयन्ती । वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ १०१ ॥

राजेति ।—न जायते इति [ अजः ] अनादिः । "अन्येष्वपि दृश्यते" ( ३।२।१०१ पा० ) इति जनेर्डप्रत्ययः । न जीर्यति इति [ अजरः ] अनन्तः । पचाद्यच् । नास्ति रजो यस्य इति [ अरजाः ]

उद्धतान् द्विषतस्तस्य निघ्नतो द्वितयं ययुः।
पानार्थे रुधिरं धातौ रक्षाऽर्थे भुवनं शराः ॥१०३॥

द्व्यक्षरः।

क्रूरारिकारी कोरेककारकः कारिकाकरः।
कोरकाऽऽकारकरकः करीरः कर्करोऽर्करुक् ॥१०४॥

---

रजोगुणरहितः; रेजन्तीति रेजाः तेजिष्ठाः। 'रेजृ दीप्तौ' पचाद्यच्। ते च ते अरयश्च, तेषां जूरी हिंसनं, तेन जातं रेजारिजूरजं, तदूर्ज्जं बलम्, अर्जयतीति [रेजारिजूरजोर्जार्जी]। अर्जेर्णिनिः। [ऋजुः] आर्जववान्; जर्जरो न भवतीति [अजर्जरः] दृढः स हरिः, [आजेरजिरे] रणाङ्गणे, [राजराजीः] राजश्रेणीः, [रुरोज] बभञ्ज। 'रुजो भङ्गे' लिट्। अत एव [रराज] दिदीपे। द्व्यक्षरानुप्रासः ॥ १०२ ॥

उद्धतानिति।—[उद्धतान्] दृप्तान्, [द्विषतः] शत्रून्, [निघ्नतः] हिंसतः। "जासिनिप्रहण—" (२।३।५६ पा०) इति सूत्रे निप्रेतिसङ्घातविपर्यस्तव्यस्तग्रहणोपदेशान्निहन्तेरशेषकर्मणि द्वितीयैव। [तस्य] हरेः, [शराः, पानार्थे धातौ] 'पा पाने' इति धातौ सति, [रुधिरं, रक्षाऽर्थे] धातौ 'पा रक्षणे' इति [भुवनं] जगच्च, इति [द्वितयं ययुः]। रुधिरमपिबन् भुवनमरक्षंश्चेति श्लेषार्थः। अत्र पानयोरभेदाध्यवसायेन रुधिरभुवनयोस्तुल्ययोगिताऽलङ्कारः। तत्र पानार्थं इत्यादिवाक्यस्य शत्रुवधेन भुवनमरक्षन्निति सूक्ष्मार्थगर्भत्वात् सौक्ष्म्यं नाम गुणः,—'अतः सङ्कल्परूपत्वं शब्दानां सौक्ष्म्यमुच्यते' इति लक्षणात् ॥ १०३ ॥

अथ युग्मेनाऽऽह, क्रूरेति।—क्रूरान् अरीन् किरति विक्षिपति इति [क्रूरारिकारी]। किरतेर्णिनिप्रत्ययः। [कोः] भूमेः, [एककारकः] एककर्त्ता। करोतेर्ण्वुल्। कारिका यातनाः, करोति दुष्टानामिति

विधातुमवतीर्णोऽपि लघिमानमसौ भुवः ।
अनेकमरिसङ्घातमकरोद्भूमिवर्द्धनम् ॥१०५॥

द्व्यक्षरः ।

दारी दरदरिद्रोऽरिदारुदारोऽद्रिदूरदः ।
दूरादरौद्रोऽददरद्रोदोरुद्दारुरादरी ॥१०६॥

---

[ कारिकाकरः ]। 'कारिका यातनावृत्त्योः' इत्यमरः। "कृञो हेतु—" ( ३।२।२० पा० ) इत्यादिना ताच्छील्ये टप्रत्ययः। कारिकाः क्रियाः। धात्वर्थनिर्देशे ण्वुल्। तत्कर इति केचित्। कोरकाऽऽकारौ करौ यस्य सः [ कोरकाऽऽकारकरकः ] कमलमुकुलरमणीयपाणिरित्यर्थः। शैषिकः कप्प्रत्ययः। करिणो गजान्, ईरयति क्षिपतीति [ करीरः ]। कर्मण्यण्। [ कर्करः ] रणकर्कश इत्यर्थः। 'कर्करो दर्पणे दृढे' इति शाश्वतः। अर्कस्येव रुक् यस्य सः [ अर्करुक् ]; इत्युपमा। द्व्यक्षरानुप्रासः॥ १०४॥

विधातुमिति।—[ भुवः ] भूमेः, [लघिमानं] लघुत्वं, भारावतरणमिति यावत्, [ विधातुम्, अवतीर्णोऽपि ] भुवि जातोऽपि, [ असौ ] पूर्वोक्तगुणो भगवान् हरिः, [ अनेकं ] बहुम्, [ अरिसङ्घातं, भूमिवर्द्धनं ] भूभारम्, [अकरोत्]; इति विरोधः। मृतमकरोदित्यविरोधः। अत एव विरोधाऽऽभासोऽलङ्कारः॥ १०५॥

दारीति।—[ दारी ] बहुदारवान्। भूमार्थे मत्वर्थीयः। [ दरदरिद्रः ] दरेण भयेन, दरिद्रो निर्भीकः। 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः। [ उदारः ] महान्, दाता वा। 'उदारो दातृमहतोः' इत्यमरः। अद्रिवत् दुःखेन दर्यते दूरदो दुर्भेदः [ अद्रिदूरदः ]। 'दृ विलेखने' खल्प्रत्ययः। [ अरौद्रः ] साधूनां सौम्यः; रोदसी रुणद्धीति [ रोदोरुत् ] विश्वव्यापी। रुधेः क्विप्। ददातीति [ दारुः ] दाता। ददातेरौणादिको रुप्रत्ययः। आदरोऽस्यास्तीति [ आदरी ]

एकेषुणा सङ्ख्यतिथान् द्विषोऽभिन्दन् द्रुमानिव ।
स जन्मान्तररामस्य चक्रे सदृशमात्मनः ॥ १०७॥

द्व्यक्षरः ।

शूरः शौरिरशिशिरैराशाऽशैराशु राशिशः ।
शशारुः श्रीशरीरेशः शुशूरेऽरिशिरः शरैः ॥१०८॥

---

सन्मार्गाऽऽदरवान् स हरिः ; अरिरेव दारु काष्ठम् [ अरिदारु दूरात् ] ; एव [ अददरत् ] दारयति स्म । दारयतेर्णौ चङि "अत्स्मृदृत्वरप्रथम्रद-स्तॄस्पशाम्" ( ७।४।९५ पा० ) इत्यभ्यासस्यात्वम् । अरिदार्विति रूपकमर्थालङ्कारो द्व्यक्षरानुप्रासश्च ॥ १०६ ॥

एकेषुणेति ।—[ सः ] हरिः, [ एकेषुणा ] एकेनैव शरेण ; सङ्ख्यानां पूरणान् [ सङ्ख्यतिथान् ] सङ्ख्यशः स्थितानित्यर्थः । "बहुपूगगणसङ्घस्य तिथुक्" ( ५।२।५२ पा० ) इति तिथुगागमादेव ज्ञापकादसङ्ख्यात्वेऽपि सङ्ख्यात् डट्प्रत्ययः । [द्विषः] शत्रून्, [ द्रुमानिव ] ; इत्युपमा । [भिन्दन्] विदारयन्, [ जन्मान्तररामस्य ] जन्मान्तरे रामस्य दाशरथेः, [ आत्मनः सदृशं चक्रे ] ; एकशरेणानेकारिद्रुमभेदस्तु जन्मान्तरभाव-नया जात इति भावः । "बिभेद च पुनस्तालान् सप्तैकेन महेषुणा" इति रामायणे ॥ १०७ ॥

शूर इति ।—शृणातीति [ शरारुः ] दुष्टघातुकः । 'शरारुर्घातुको हिंस्रः' इत्यमरः । "शृवन्द्योरारुः" ( ३।२।१७३ पा० ) इत्यारुप्रत्ययः । श्रीशरीरस्येशः [श्रीशरीरेशः] लक्ष्मीप्राणनाथः, [ शूरः ] वीरः, [ शौरिः ] कृष्णः, [अशिशिरैः] तीक्ष्णैः ; आशा दिशः, अश्नुवत इति [ आशाऽशैः ] दिगन्तव्यापकैः । अश्नोतेः कर्मण्यण् । [ शरैः ] बाणैः, [ अरि-शिरः ] शत्रुशिरांसि । जातावेकवचनम् । [ राशिशः ] सङ्घशः, [ आशु ] शीघ्रं, [ शुशूरे ] जघान । 'शूर हिंसास्तम्भनयोः' इति धातोर्लिट् । द्व्यक्षरानुप्रासः ॥ १०८ ॥

**व्यक्ताऽऽसीदरिताऽरीणां यत्तदीयास्तदा मुहुः ।**
**मनोहृतोऽपि हृदये लेगुरेषां न पत्त्रिणः ॥ १०९ ॥**

अतालव्यः ।

**नामाक्षराणां मलिता * मा भूद्भर्त्तुरतः स्फुटम् ।**
**अग्रहीत पराङ्गानामसूनस्रं न मार्गणाः ॥ ११० ॥**

---

व्यक्तेति ।—[ तदा ] तस्मिन् समये, [ एषाम् अरीणाम्, अरिता ] शत्रुता, [ मुहुर्व्यक्ता आसीत् । यत् ] यस्मात्; तस्य हरेरिमे [ तदीयाः, पत्त्रिणः ] बाणाः; मनो हरन्ति कायादुद्धरन्ति इति मनोहृतः, मारका इत्यर्थः । हरतेः क्विप् । मनोज्ञाः प्रतीयन्ते । अत एव [ मनोहृतोऽपि, हृदये ] मनसि, [ न लेगुः ] न लग्नाः; इति विरोधः । वक्षो निर्भिद्य निर्जग्मुरित्यर्थः; इत्यविरोधः । 'हृदयं वक्षसि स्वान्ते' इति विश्वः । विरोधाऽऽभासोऽलङ्कारः ॥ १०९ ॥

नामेति ।—[भर्त्तुः] स्वामिनः, [नामाक्षराणां] फलेषु लिखितानां, [मलिता] * मालिन्यं, तिरोधानमित्यर्थः, [ मा भूत् ] इति बुद्ध्येत्यर्थः, [ अतः, मार्गणाः] हरिशराः, [पराङ्गानाम्] अरिशरीराणाम्, [ असून् ] प्राणान्, [ अग्रहीत ] । ग्रहेर्लङ् । [ न, अस्रं ] रक्तम् । रक्ताविलेपस्य आशुभावनिमित्तस्य स्वामिनामाक्षरमालिन्यपरिहारार्थत्वमुत्प्रेक्ष्यते, [स्फुटम्] इति । अत्र तालव्यवर्णाभावादतालव्य इति चित्रभेदः । 'इचुयशानां तालु' † इति इवर्णस्यापि तालुत्वेऽपि व्यञ्जनापेक्ष एवायं नियम इति न दोषः ॥ ११० ॥

---

* "मलिता" इत्यत्र "मलना" इति पाठान्तरं दृश्यते, अर्थस्तु एक एवेति वेदितव्यम् ।

† "तुल्यास्यप्रयत्नं सवर्णम्" ( १।१।९ पा० ) इति सूत्रे दीक्षितप्रदर्शिता वृत्तिरियमिति ज्ञेयम्; दीक्षितानां टीकाकर्तृतः उत्तरकालवर्त्तितया "इचुयशानां तालु" इत्यादि टीकासन्दर्भः पश्चादेव सन्निवेशित इति विभावयामः; "मलना" इति पाठान्तरमपि दृश्यते, अस्यैव पाठस्य ग्रन्थकर्त्तुरभीष्टतया स्वीकारे न कश्चिद्दोषः, यतोऽत्र पाठे इकारस्याभावान् न श्लोकस्यातालव्यत्वव्याघात इति विभाव्यम् ।

आच्छिद्य योधसार्थस्य प्राणसर्वस्वमाशुगाः ।
ऐकाऽऽगारिकवद्भूमौ दूराज्जग्मुरदर्शनम् ॥१११॥
भीमास्त्वराजिनस्तस्य बलस्य ध्वजराजिनः ।
कृतघोराऽऽजिनश्चक्रे भुवः सरुधिरा जिनः ॥११२॥
मांसव्यधोचितमुखैः शून्यतां दधदक्रियम् ।
शकुन्तिभिः शत्रुबलं व्यापि तस्येषुभिर्नभः ॥११३॥

---

आच्छिद्येति ।—[ आशुगाः ] बाणाः, [ योधसार्थस्य ] वीरवर्गस्य, [ प्राणसर्वस्वम् आच्छिद्य ]; ऐकाऽऽगारिकाश्चौराः । 'चौरैकाऽऽगारिक-स्तेनः' इत्यमरः । "ऐकाऽऽगारिकट् चौरे" ( ५।१।११३ पा० ) इत्यर्थे निपात्यते इत्येके । 'इकट्प्रत्ययो वृद्धिश्च निपात्यते' इत्यपरे । तैस्तुल्यम् [ ऐकाऽऽगारिकवत् ] । तुल्यार्थे वतिः । [दूराद्भूमौ, अदर्शनम्] अदृश्यतां, [ जग्मुः ] ॥ १११ ॥

भीमेति ।—[ जिनः ] हरिः, अवतारान्तरनाम्ना व्यपदेशः । भीमा अस्त्वराजयो यस्य तस्य [ भीमास्त्वराजिनः ] । "इकोऽचि विभक्तौ" ( ७।१।७३ पा० ) इति नुमागमः । ध्वजैः राजते यत् तस्य [ ध्वज-राजिनः ] । ताच्छील्ये णिनिः । कृता घोरा आजिर्युद्धं येन तस्य [ कृतघोराऽऽजिनः ] । पूर्ववत् नुमागमः । [ तस्य, बलस्य ] सैन्यस्य, सम्बन्धिनीः [ भुवः ] तद्रणभूमीः, [ सरुधिराः ] सास्राः, [ चक्रे ] । चतुष्पादयमकम् ॥ ११२ ॥

मांसेति ।—[ मांसव्यधोचितमुखैः ] मांसव्यधो मांसखण्डनम् । "व्यधजपोरनुपसर्गे" ( ३।३।६१ पा० ) इत्यप्प्रत्ययः । तत्रोचितानि परिचितानि, मुखानि चञ्चवः शल्यानि च येषां तैः, [ शकुन्तिभिः ]; कर्तृभिः । [ शून्यताम् ] अचेतनत्वम्; अन्यत्र,—तुच्छत्वममूर्त्तत्वं वा, [ दधत् ]; अत एव [ अक्रियम् ] अस्पन्दं, [ शत्रुबलं, व्यापि ] व्याप्तम् ।

एकाक्षरः ।

दाददो दुद्दुद्दादी दादादो दूददीददोः ।
दुद्दादं दददे दुद्दे ददाददददोऽददः ॥ ११४॥

---

आप्नोतेः कर्मणि लुङ्। [ तस्य ] हरेः, [ इषुभिः नभः ] व्यापि । अलेषुपक्षिणां नभोवलयोर्व्याप्तितुल्यधर्मयोगित्वात् तुल्ययोगिताभेदः ॥ ११३ ॥

दाददः इति ।—दद्यते इति दादः दानम् । 'दद दाने' इति धातोः कर्मणि घञ्। दादं ददातीति [ दाददः ] दानप्रदः । "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) इति कः । दुत् उपतापः । 'टु दु उपतापे' क्विप् । दुतम् उपतापं, ददति साधूनामिति दुद्दाः खलाः । पूर्ववत् कः । तेषां दुतम् उपतापं, ददत इति [ दुद्दुद्दादी ] । 'दद दाने' इति धातोर्णिनिः । दाः शुद्धिः । 'दैप् शोधने' क्विप् । तां ददत इति [ दादादः ] । 'दद दाने' कर्मण्यण् । दूः परितापः । 'दूङ् परितापे' क्विप् । तां ददतीति दूदा दुष्टाः, दीः क्षयः । 'दीङ् क्षये' क्विप् । तां दत्तः इति दीदौ नाशदौ । उभयत्र "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) इति कः । दूदानां दीदौ दुष्टमर्दकौ, दोषौ भुजौ यस्य सः [ दूददीददोः ] दुष्टभञ्जकभुज इत्यर्थः ; ददन्ते इति ददाः दातारः, न ददन्ते इति अददा अदातारः, तेषां द्वयानामपि ददो दाता [ ददाददददः ] । सर्वत्र 'दद दाने' पचाद्यच् । अदन्तीत्यदाः वकासुरपूतनाप्रभृतयः । अदः पचाद्यच् । तान् द्यति खण्डयति इति [अददः] । 'दोऽवखण्डने' इति धातोः "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) इति कः । एवम्भूतो हरिः ; दुतं ददातीति दुद्दः दुःखदः तस्मिन् [ दुद्दे ] शत्रौ ; दुतं ददत इति [ दुद्दादं ] शस्त्रम् । 'दद दाने' कर्मण्यण् । [ दददे ] ददौ, प्रयुक्तवानित्यर्थः । 'दद दाने' कर्त्तरि लिट् । एकाक्षरानुप्रासोऽलङ्कारः ॥ ११४ ॥

प्लुतेभकुम्भोरसिजैर्हृदयक्षतिजन्मभिः ।
प्रावर्त्तयन्नदीरस्रैर्द्विषां तद्योषिताञ्च सः ॥११५॥

अर्थत्रयवाची ।

सदामदबलप्रायः समुद्धृतरसो बभौ ।
प्रतीतविक्रमः श्रीमान् हरिर्हरिरिवापरः ॥११६॥

---

प्लुतेति ।—[ सः ] हरिः, [ प्लुतेभकुम्भोरसिजैः ] प्लुताः उच्छिताः, इभकुम्भाः उरसि जाता उरसिजा इव, इभकुम्भा इवोरसिजाश्च यैस्तैः, [ हृदयक्षतिजन्मभिः ] हृदयक्षतिभिर्वक्षःप्रहारैः मनोभङ्गैश्च विषादाऽऽपादकैः, जन्म येषां तैः । 'हृदयं वक्षसि स्वान्ते' इति विश्वः । [ द्विषां तद्योषिताञ्च, अस्रैः ] शोणितैरश्रुभिश्च । 'अस्रमश्रुणि शोणिते' इति विश्वः । [ नदीः, प्रावर्त्तयत् ] प्रावाहयत्, अरिबधेन तन्नारीररोदयदित्यर्थः । अत्र इयानामपि अस्राणां प्रकृतत्वात् प्रकृतश्लेषः । तैरस्रैर्द्विषां तद्योषितां यथासङ्ख्यसम्बन्धात् यथासङ्ख्यालङ्कारः । तदुपजीवनेन द्विषां तद्योषिताञ्चास्रैः शोणितैः श्लेषमूलाभेदातिशयोक्तिमहिम्ना असरूपतुल्यधर्मयोगित्वात् तुल्ययोगिता इत्यङ्गाङ्गिभावेनैषां सङ्करः ॥ ११५ ॥

सदेति ।—सदा मदो यस्य स सदामदः नित्यमत्तः, तं बलं बलभद्रं, प्रीणातीति [ सदामदबलप्रायः ]। परत्वात् कर्मण्यण्प्रत्ययः । समुद्धृता रसा भूर्येन सः [ समुद्धृतरसः, प्रतीतविक्रमः ] प्रतीताः प्रसिद्धाः, विक्रमाः पादन्यासा यस्य सः, त्रिविक्रम इत्यर्थः, [ श्रीमान् ] रमापतिः, [ हरिः ] कृष्णः, [ अपरः ] अन्यः, [ हरिः ] इन्द्रः, [ इव बभौ ]। सोऽपि सतामामदो दुःखदः, यो बलासुरस्तस्य प्रायो नाशः, तं करोतीति सदामदबलप्रायः । "तत्करोति—" ( ग० ) इति ण्यन्तात् पचाद्यच् । समुद्धृतरसः अमृतपानेन सम्यगपहृतविषः । 'शृङ्गारादौ विषे वीर्य्ये द्रवे रागे गुणे रसः' इत्यमरः । प्रतीतविक्रमः

**द्विधा त्रिधा चतुर्धा च तमेकमपि शत्रवः।**
**पश्यन्तः स्पर्द्धया सद्यः स्वयं पञ्चत्वमाययुः ॥११७॥**

---

प्रसिद्धपराक्रमः, श्रीमान् स्वाराज्यलक्ष्मीयुक्तः, तथा अपरः अन्यः, हरिः सूर्य्यः, इव बभौ। सोऽपि आमं रोगं, द्यति खण्डयतीति आमदः। बलं पृणातीति बलप्रः। मूलविभुजादित्वात् कः। सतां भक्तानाम्, आमदो बलप्रश्च अय उदयो यस्य सः सदामदबलप्रायः, स्वोदयेन सतामारोग्यबलकारीत्यर्थः। 'उद्यन्नद्य—'इत्यादिश्रुतेरिति भावः। समुद्धृतरसः घर्मकालसंशोषितसलिलः। प्रतीतविक्रमः प्रसिद्धखगगतिः। 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥' इत्यमरः। तदेवमुपमानयोरुपमेये चार्थश्लेषवचनादर्थश्लेषवाच्येष चित्रभेदः। एतावदेव कवेर्विवक्षितमतोऽन्यत् सुवाच्यस्त्रोपेक्ष्यमेव। अत्रापरो हरिरिवेत्यपरशब्दप्रयोगादुत्प्रेक्षेयं, नोपमा; अपरस्येन्द्रस्यार्कस्य वाऽप्रसिद्धेः। प्रसिद्धसादृश्यवर्णनमुपमा। प्रसिद्धताद्रूप्याऽऽरोपे रूपकम्। प्रसिद्धताद्रूप्यभावनमुत्प्रेक्षा। अत एव लक्षयन्ति ;—'अप्रकृतगुणक्रियाऽभिसम्बन्धादप्रकृतेन प्रकृतस्य सम्भावनमुत्प्रेक्षा' इति सर्वस्वकारः। तस्मादपरशब्देन प्रकृतस्याप्रकृतत्वाध्यवसायप्रतीतेरिवशब्देन तस्य साध्यत्वप्रतीतेरुत्प्रेक्षैवेति। तस्मादिवशब्दमात्रप्रयोग एवोपमा। अपरशब्दमात्रप्रयोगेऽतिशयोक्तिः। उभयोः प्रयोगे तूत्प्रेक्षैवेति विवेकः। अत एवात्रानेकार्थवर्णनव्यवसायिभिरपरशब्दस्यान्यार्थताव्यतिरेकेणार्थान्तरकल्पनाऽपि नालङ्कारिकाणां पन्थाः। श्लेषश्चात्रोत्प्रेक्षाबीजभूतसाधर्म्यनिर्वाहमात्रोपक्षीणतया तदङ्गमिति सङ्कर इत्यलमतिप्रसक्त्या ॥ ११६ ॥

द्विधेति।—[ शत्रवः एकमपि, तं ] हरिं, [ द्विधा ] द्वित्वेन, [त्रिधा] त्रित्वेन, [चतुर्धा] चतुष्टयेन, [च पश्यन्तः] ; भयात्तथा भ्राम्यन्त इत्यर्थः, [ स्पर्द्धया ] मत्सरेण, [ सद्यः स्वयं, पञ्चत्वं ] पञ्चधाभावं मरणञ्च, [ आययुः ] ; मत्सरिणस्तदधिकमाचरन्तीति भावः। 'स्यात् पञ्चता

समुद्गः ।

सदैव सम्पन्नवपू रणेषु
स दैवसम्पन्नवपूरणेषु ।
महोदधेः स्तारि महानितान्तं
महो दधेऽस्तारिमहा नितान्तम् ॥ ११८ ॥

इष्टं कृत्वाऽर्थं पत्रिणः शार्ङ्गपाणे-
रैत्याऽऽधोमुख्यं प्राविशन् भूमिमाशु ।

---

कालधर्मौ दिष्टान्तः प्रलयोऽत्ययः । अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥' इत्यमरः । पाञ्चभौतिकस्य शरीरस्य पञ्चधाभावः पञ्चता । अत्र स्पर्द्धेति हेतोरुत्प्रेक्षणाद्धेतूत्प्रेक्षा, सा च व्यञ्जकाप्रयोगाद्गम्या । स्पर्द्धयैवेत्यर्थः ॥ ११७ ॥

सदेति ।—[ सदैव ] सर्वदैव ; सम्पन्नं सर्वलक्षणसमग्रं, वपुर्यस्य सः [ सम्पन्नवपुः] नित्यपरिपूर्णमूर्त्तिः । संहितायां "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ( ६।३।१११ पा० ) इति पूर्वस्याणो दीर्घः । अस्तं निरस्तम्, अरीणां महस्तेजो येनासौ [अस्तारिमहाः, महान्] अधिकः, [सः] हरिः ; दैवसम्पत् भाग्यसम्पत्तिः, सैव नवं पूरणं प्रत्ययसाधनं येषां तेषु [दैवसम्पन्नवपूरणेषु] दैवसहायेषु, [ रणेषु, महोदधेः ] महाऽर्णवस्य, [ इतान्तं ] प्राप्तपारं, समुद्रपारगामि इति यावत्, [ नितान्तं, स्तारि ] विस्तीर्णं, [ महः ] तेजः, [ दधे ] धारयामास । अर्द्धाभ्यासलक्षणसमुद्गयमकभेदः,—'अर्द्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः' इत्युक्तं दण्डिना । उपेन्द्रवज्रा वृत्तम् ॥११८॥

इष्टमिति ।—शार्ङ्गं पाणौ यस्य तस्य [ शार्ङ्गपाणेः ] कृष्णस्य । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" ( वा० ) इति पाणेः परनिपातः । [ पत्रिणः ] बाणाः, [ इष्टम्, अर्थं ] शत्रुवधाऽऽत्मकं, [कृत्वा,

शुद्धा युक्तानां वैरिवर्गस्य मध्ये
भर्त्रा क्षिप्तानामेतदेवानुरूपम् ॥ ११९ ॥

चक्रबन्धः ।

सत्वं मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो
लब्धावच्चयशुद्धिरुद्धुरतरश्रीवत्सभूमिर्मुदा ।
मुक्त्वा काममपास्तभीः परमृगव्याधः स नादं हरे-
रेकौघैः समकालमभ्रमुदयी रोपैस्तदाऽऽतस्तरे १२०

इति श्रीमाघकविकृतौ शिशुपालवधे महाकाव्ये
एकोनविंशतितमः सर्गः ॥ १९ ॥

---

आधोमुख्यम् ] अधोमुखत्वम्, [ एत्य ] प्राप्य, [ आशु भूमिं प्राविशन्, शुद्धा ] लोहशुद्धा पवित्रतया च, [ युक्तानाम् ] ; तथाऽपि [ भर्त्रा ] स्वामिना, [ वैरिवर्गस्य मध्ये, क्षिप्तानां ] पातितानाम्, [ एतदेव ] आधोमुख्येन क्वचिन्निलयनमेव, [ अनुरूपम् ] उचितम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । जागतं वैश्वदेवीवृत्तम्;—'पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ' इति लक्षणात् ॥ ११९ ॥

सत्वमिति ।—[ भव्यः ] कल्याणमूर्त्तिः ; लब्धोऽवचयः शुद्धिश्च येन सः [ लब्धावचयशुद्धिः ] ; श्रीवत्सस्य लाञ्छनविशेषस्य, भूमिर्वक्षः, सा उद्धुरतरा उन्नततरा यस्य सः [ उद्धुरतरश्रीवत्सभूमिः कामम्, अपास्तभीः ] निर्भीकः, [परमृगव्याधः] परे शत्रवः, त एव मृगास्तेषां व्याधः मृगयुः ; इत्यश्लिष्टरूपकम् । 'व्याधो मृगवधाऽऽजीवो मृगयुर्लुब्धकोऽपि च' इत्यमरः । [ उदयी ] नित्याभ्युदयवान् । नित्ययोगे मत्वर्थीयः । [ सः ] हरिः, [ पुरः ] पूर्वम्, [ आजिरभसात् ] रणरागात्, [ मानविशिष्टम् ] अहङ्कारोद्धुरं, [ सत्वं ] बलम्, [ आलम्ब्य ] आस्थाय, [ मुदा ] उत्साहेन, [ हरेः ] सिंहस्य, [ नादं मुक्त्वा ], सिंहनादं कृत्वे-

त्यर्थः, [समकालम्] एककालम्। अत्यन्तसंयोगे द्वितीया। एक ओघो येषां तैः [एकौघैः] एकप्रहारैः, [रोपैः] इषुभिः, [अभ्रम्] आकाशं, [तदा] तस्मिन् काले, [आततरे] आच्छादयामास। "ऋच्छत्यृताम्" (७।४।११ पा०) इति गुणः। चक्रबन्धाऽऽख्यश्चित्र-विशेषोऽलङ्कारः, पूर्वोक्तरूपकेण संसृज्यते। चक्रबन्धोद्धारस्तु,—

चक्रबन्धचित्रम्।



दशमण्डलरेखाऽऽत्मके नवमण्डलान्तरालवर्ति चक्रे नाभिस्थानेन सहैकोनविंशतिकोष्ठं प्रत्येकं द्व्यग्रगतं पङ्क्तित्रयं समरेखया लिखित्वा तत्रैकस्यां पङ्क्तौ वामपार्श्वप्रक्रमेण आद्यपादमालिख्य, तथा प्रादक्षिण्येन द्वितीय-

# विंशः सर्गः ।

—)०=०(—

मुखमुल्लसितत्रिरेखमुच्चै-
र्भिदुरभ्रूयुगभीषणं दधानः ।
समिताविति विक्रमानमृष्यन्
गतभीराह्वत चेदिराण्मुरारिम् ॥ १ ॥

---

तृतीययोर्द्वितीयतृतीयौ लिखित्वा नेमिस्थाने वाह्यवलये साक्षरकोष्ठ-षट्केन सहाष्टादशकोष्ठवति तृतीयपादान्तकोष्ठवर्त्तिवर्णमारभ्य प्राद-क्षिण्येन चतुर्थपादं लिखित्वा तत्रैव समापयेत्। तत्र तत्राद्यन्तवर्णाः सह चतुर्थपादोद्धारः। तत्र नाभिस्थाने आद्यपादत्रयदशमाक्षरसंवादः। तृतीयान्तकोष्ठे चतुर्थाद्यन्तवर्णयोः संवादः। तृतीयवलये "माघकाव्य-मिदं" षष्ठे "शिशुपालवधः" इति कविकाव्यनामोद्धारः। शार्दूल-विक्रीडितं वृत्तम् ॥ १२० ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाऽऽख्ये एकोनविंशतितमः सर्गः ॥ १९ ॥

---

अथ हरिशिशुपालयोर्युद्धं वर्णयितुमुपोद्घातं करोति, मुखमिति।—[ इति ] इत्थं, [ समितौ ] आजौ। 'समित्याजिसमिद्युधः' इत्यमरः। [ विक्रमान् ] मुरारेः पराक्रमान्, [ अमृष्यन् ] असहमानः; अत एव तिस्रो रेखास्त्रिरेखाः। "दिक्सङ्ख्ये संज्ञायाम्" ( २।१।५० पा० ) इति समासः। ता उल्लसिताः क्रोधादुद्भूता यस्मिन् तत् [ उल्लसित-त्रिरेखम् ]। क्वचित् "त्रिलोकम्" इत्यपि पाठः। तथा [ भिदुरभ्रूयुग-

शितचक्रनिपातसम्प्रतीच्छं
वहतः स्कन्धगतञ्च तस्य मृत्युम् ।
अभिशौरि रथोऽथ नोदिताश्वः
प्रययौ सारथिरूपया नियत्या ॥ २ ॥

---

भीषणं ] भिदुरेण ग्रन्थिलेन, भ्रूयुगेण भीषणं भयङ्करम्, [ उच्चैः] उन्नतं, [मुखं दधानः] ; चेदिषु राजते [चेदिराट्]। "सम्पदादिभ्यः क्विप्" (वा०) इति क्विप्। यद्वा,—चेदीनां राट् चेदिराट्। "अन्येभ्योऽपि दृश्यते" (३।२।१७८ पा०) इति क्विप्। 'राजा राट् पार्थिवः क्ष्माभृत्' इत्यमरः। [ गतभीः ] निर्भीकः सन्, [ मुरारिं] हरिम्, [आह्वत] अयमहं, क्वासि ? मामभ्युपैहि इति स्पर्द्धया अमर्षादाकारयामासेत्यर्थः ; विनाशकाले विपरीतबुद्धेर्दुर्वारत्वादिति भावः। "स्पर्द्धायामाङः" (१।३।३१ पा०) इति ह्वयतेर्लुङि तङ् ; "आत्मनेपदेष्वन्यतरस्याम्" (३।१।५४ पा०) इति च्लेरङादेशः। अत्रामर्षस्य विशेषणगत्या आह्वानहेतुत्वात् काव्यलिङ्गम्। सर्गेऽस्मिन्नौपच्छन्दसिकं वृत्तं, वैतालीये गुर्वाधिक्यात्। तदुक्तं,—'वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते र्लौ:' 'गौपच्छन्दसिकम्' इति ॥ १ ॥

शितेति।—[ अथ ] आह्वानानन्तरम् ; शितचक्रनिपातं शितसुदर्शनप्रहारं, सम्प्रतीच्छत इति [ शितचक्रनिपातसम्प्रतीच्छम् ]। ईच्छतेः कर्मण्यण्। [ स्कन्धगतञ्च मृत्युं वहतः, तस्य ] चैद्यस्य, [ रथः सारथिरूपया, नियत्या] विधिना ; इति रूपकम्। 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः। [ नोदिताश्वः ] प्रेरिताश्वः सन्, [ अभिशौरि ] शौरिमभि। आभिमुख्येऽव्ययीभावः। "अव्ययादाप्सुपः" (२।४।८२ पा०) इति सुपो लुक्। [ प्रययौ ] प्रतस्थे ॥ २ ॥

अभिचैद्यमगाद्रथोऽपि शौरे-
रवनिं जागुडकुङ्कुमाभिताम्रैः ।
गुरुनेमिनिपीड़नावदीर्ण-
व्यसुदेहस्रुतशोणितैर्विलिम्पन् ॥ ३ ॥
स निरायतकेतनांशुकान्तः
कलनिक्वाणकरालकिङ्किणीकः ।
विरराज रिपुक्षयप्रतिज्ञा-
मुखरो मुक्तशिखः स्वयं नु मृत्युः ? ॥ ४ ॥

---

अभीति ।—अथ [ शौरेः ] कृष्णस्य, [ रथोऽपि, जागुड़कुङ्कुमाभिताम्रैः ] जागुड़ो देशविशेषः, तत्र यत् कुङ्कुमं, तद्वदभिताम्रैररुणैः ; इत्युपमा । यावकेति पाठे,—यावकस्य कुङ्कुमस्य ताभ्यामभिताम्रैरित्यर्थः । [ गुरुनेमिनिपीड़नावदीर्णव्यसुदेहस्रुतशोणितैः ] गुरूणां नेमीनां चक्रधाराणां, निपीड़नेन नोदनेन, अवदीर्णेभ्यो व्यसूनां विगतप्राणानां, देहेभ्यः स्रुतैः शोणितैरसृग्भिः, [ अवनिं, विलिम्पन् ] उपदिहानः सन्, [ अभिचैद्यं ] चैद्यमभि । समासो व्यासो वा विकल्पात् । [ अगात् ] । "इणो गा लुङि" (२।४।४५ पा०) इति गाऽऽदेशः ॥ ३ ॥

स इति ।—[ निरायतकेतनांशुकान्तः] निरायतोऽतिदीर्घः, केतनांशुकान्तः ध्वजपटाञ्चलो यस्य सः, [ कलनिक्वाणकरालकिङ्किणीकः ] कलनिक्वाणैः मधुरस्वरैः, करालाः कुशलाः, प्रगल्भाः इति यावत्, किङ्किण्यः क्षुद्रघण्टिका यस्य सः तथोक्तः । "नद्यृतश्च" ( ५।४।१५३ पा० ) इति कप् । 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः । [ सः ] कृष्णस्य रथः, [ रिपुक्षयप्रतिज्ञामुखरः ] रिपुक्षयस्य शिशुपालबधस्य, प्रतिज्ञया मुखरो वाचालः, अत एव [ मुक्तशिखः ] मुक्तकेशः,

सजलाम्बुधराऽऽरवानुकारी
ध्वनिरापूरितदिङ्मुखो रथस्य।
प्रगुणीकृतकेकमूर्ध्वकण्ठैः
शितिकण्ठैरुपकर्णयाम्बभूवे ॥ ५ ॥
अभिवीक्ष्य विदर्भराजपुत्री-
कुचकाश्मीरजचिह्नमच्युतोरः।
चिरसेवितयाऽपि चेदिराजः
सहसाऽवाप रुषा तदैव योगम् ॥ ६ ॥

---

[ चिरराज ], नाहमेनमहत्वा शिखाबन्धं करिष्यामीत्युद्घोषयन्नित्यर्थः, [ स्वयं ] साक्षात्, [ नु मृत्युः ] अन्तकः किम्? इत्युत्प्रेक्षा। ॥ ४ ॥

सजलेति।—[ सजलाम्बुधराऽऽरवानुकारी ] सजलो योऽम्बुधरः, तस्याऽऽरवं गर्जितम्, अनुकरोतीति तथोक्तः, तद्वद्गम्भीर इत्यर्थः। उपमाऽलङ्कारः। [ आपूरितदिङ्मुखः ] व्याप्तदिगन्तः, [ रथस्य ] कृष्णरथस्य, [ ध्वनिः ]; ऊर्ध्वाः कण्ठाः येषां तैः [ ऊर्ध्वकण्ठैः ] आकस्मिकघनरवलोभाद्विस्मयहर्षोन्नमितकन्धरैरित्यर्थः, [ शितिकण्ठैः ] नीलकण्ठैः, [ प्रगुणीकृतकेकं ] प्रगुणीकृताः अतितारीकृताः, केका यस्मिन् कर्मणि तत् यथा तथा। 'केका वाणी मयूरस्य' इत्यमरः। [उपकर्णयाम्बभूवे ]; मेघाऽऽरवभ्रान्त्या दत्तकर्णैरित्यर्थः। एतेन भ्रान्तिमदलङ्कारो व्यज्यत इति वस्तुनाऽलङ्कारध्वनिः ॥ ५ ॥

अभीति।—[ चेदिराजः ] शिशुपालः। "राजाहःसखिभ्यष्टच्" (५।४।९१ पा०) इति टच्। [विदर्भराजपुत्रीकुचकाश्मीरजचिह्नं] विदर्भराजपुत्र्याः रुक्मिण्याः, कुचयोर्यत् काश्मीरजं कुङ्कुमं, तच्चिह्नं यस्य तत्, [अच्युतोरः] कृष्णवक्षः, [अभिवीक्ष्य, चिरसेवितया] चिरोपयुक्ता, [अपि];

जनिताशनिशब्दशङ्कमुच्चै-
र्धनुरास्फालितमध्वनन्नृपेण ।
चपलानिलचोद्यमानकल्प-
क्षयकालाग्निशिखानिभस्फुरज्ज्यम् ॥ ७ ॥
समकालमिवाभिलक्षणीय-
ग्रहसन्धानविकर्षणापवर्गैः ।

---

रुक्मिणीहरणात् प्रभृति सम्भृतयाऽपीत्यर्थः, [ रुषा ] रोषेण, [ तदैव ] तदानीमिव ; इत्युत्प्रेक्षा । [सहसा, योगं] सम्बन्धम्, [ अवाप ] ; यथा कामी काम्यन्तरभोगचिह्नदर्शनोद्दीप्तः कान्तया संयुज्यते, तद्वदित्यर्थः । परमार्थस्वरूप एव कोपो वैदर्भीकुचकुङ्कुमदर्शनादुद्दीपित इत्यर्थः । अत्र प्रकृतरुड्विशेषणसाम्यादप्रकृतकान्ताप्रतीतिः समासोक्तिः । उक्तोत्प्रेक्षा त्वङ्गमस्याः ॥ ६ ॥

जनितेति।—[ नृपेण ] चेदिपेन, [ आस्फालितं ] सङ्घट्टितम्, अत एव [ चपलानिलचोद्यमानकल्पक्षयकालाग्निशिखानिभस्फुरज्ज्यं ] चपलानिलेन तीव्रानिलेन, चोद्यमानस्य संवर्द्ध्यमानस्य, कल्पक्षयकालाग्नेर्या शिखा ज्वाला, तया समाना तन्निभा । इति नित्यसमासः । सा स्फुरन्ती दोधूयमाना, ज्या मौर्वी यस्य तत् तथोक्तं, [ धनुः, जनिताशनिशब्दशङ्कं ] जनिता उत्पादिता, अशनिशब्दशङ्का यस्मिन् कर्मणि तत् तथोक्तम्, [ उच्चैः ] उच्चैस्तराम्, [ अध्वनत् ]। अत्राग्निशिखानिभेत्युपमाया अशनिशब्दशङ्केति भ्रान्तिमतः आस्फालितमध्वनदिति पदार्थहेतुककाव्यलिङ्गस्य च सापेक्षत्वात् सङ्करः॥ ७ ॥

समेति।—[ अथ ] धनुरास्फालनानन्तरं, [ तरस्वी ] बलवान्, [ सः ] चैद्यः, [ समकालमिव ] ; इत्युत्प्रेक्षा । अत्यन्तसंयोगे द्वितीया ।

अथ साभिसरं शरैस्तरस्वी
स तिरस्कर्त्तुमुपेन्द्रमभ्यवर्षत् ॥ ८ ॥
ऋजुताफलयोगशुद्धिभाजां
गुरुपक्षाऽऽश्रयिणां शिलीमुखानाम् ।
गुणिना नतिमागतेन सन्धि:
सह चापेन समञ्जसो बभूव ॥ ९ ॥

---

[ अभिलक्षणीयग्रहसन्धानविकर्षणापवर्गैः] अभिलक्षणीया दृश्याः, ग्रहो ग्रहणं, सन्धानं मौर्व्या योजनं, विकर्षणमाकर्षणम्, अपवर्गो मोक्षश्च येषां तैः, [ शरैः, साभिसरं ] सानुचरम्, [ उपेन्द्रं ] हरिं, [ तिरस्कर्त्तुम् ] आच्छादयितुम्, [ अभ्यवर्षत् ] ॥ ८ ॥

ऋजुतेति । [ ऋजुताफलयोगशुद्धिभाजाम् ] ऋजुता अवक्रत्वम् अकुटिलबुद्धित्वञ्च, फलं शल्यं श्रेयश्च, तेन योगः, शुद्धिर्लौहशुद्धिर्निर्विषयत्वञ्च ; अन्यत्र,—वाह्याऽऽभ्यन्तरशुद्धिः, तां भजन्तीति तद्भाजाम् ; गुरोर्महतः, पक्षस्य कङ्कादिपत्रस्य सहायस्य च, आश्रयः आश्रयणमेषामस्तीति [गुरुपक्षाऽऽश्रयिणां, शिलीमुखानां] शराणां, [गुणिना] ज्यावता, [नतिमागतेन ] आकर्षणाऽऽकुञ्चितकोटित्वं विधेयत्वञ्च प्राप्तेन, [ चापेन सह, सन्धिः ] सम्बन्धः, [ समञ्जसः ] साधीयान्, [ बभूव ] ; अबलवतां बलिना नम्रेण सन्धिरेवोचित इति भावः । अत्र प्रस्तुतचापशिलीमुखयोर्विशेषणसाम्यादप्रस्तुतारिविजिगीषुवस्तुप्रतीतेः समासोक्तिः ; तच्च साम्यं वाच्यप्रतीयमानयोरभेदाध्यवसायात् सिद्धम् । न चात्र समानालङ्कारशङ्का कार्य्या ;—"समानालङ्कृतिर्योगे वस्तुनोरनुरूपयोः" इत्यनुरूपयोरेव वस्तुनोर्योगेन तस्योपस्थानादित्यनुसन्धेयम् ; जिगीषुगुणयोगिनोरिह भेदात् ॥ ९ ॥

अविषह्यतमे कृताधिकारं
वशिना कर्मणि चेदिपार्थिवेन ।
अरसद्धनुरुच्चकैर्दृढार्त्ति-
प्रसभाऽऽकर्षणवेपमानजीवम् ॥ १० ॥
अनुसन्ततिपातिनः पटुत्वं
दधतः शुद्धिभृतो गृहीतपक्षाः ।
वदनादिव वादिनोऽथ शब्दाः
क्षितिभर्त्तुर्धनुषः शराः प्रसस्रुः ॥ ११ ॥

---

अविषह्येति ।—[ वशिना ] स्वतन्त्रेण, [ चेदिपार्थिवेन, अविषह्यतमे ] दुष्करे, [ कर्मणि ] अरिजयव्यापारे, [ कृताधिकारं ] कृतनियोगं, नियुज्यमानमित्यर्थः, अत एव [ दृढार्त्तिप्रसभाऽऽकर्षणवेपमानजीवं] दृढयोरर्त्त्योः कोट्योः, प्रसभाऽऽकर्षणेन वेपमाना दोधूयमाना, जीवा ज्या यस्य तत् ; अन्यत्र,—दृढया अर्त्या ताडनेन, प्रसभाऽऽकर्षणेन च वेपमानः कम्पमानः, जीवः प्राणो यस्येत्यर्थः । 'अर्त्तिः पीडाधनुष्कोट्योः' इत्यमरः । 'जीवः प्राणेऽस्त्रियां ना तु जन्तावात्मनि गोष्पतौ । विषु जीवति मौर्व्यां स्त्री' इति वैजयन्ती । [ धनुरुच्चकैः, अरसत् ] अध्वनत्, आक्रन्ददित्यर्थः । यथा राज्ञा नियुक्तः पराधीनः बलादाकृष्यमाणः क्रोशति, तद्वदित्यर्थः । अत्रापि प्रकृतविशेषणसाम्यादप्रकृतापराध्यधिकृतपुरुषप्रतीतिः समासोक्तिः ॥ १० ॥

अन्विति ।—[ अथ ] आकर्षणानन्तरं, [ क्षितिभर्त्तुः ] चैद्यस्य, [ धनुषः ] सकाशात् ; अनुसन्तत्या पतन्तीति [ अनुसन्ततिपातिनः ] अविच्छेदवर्त्तिनः, [ पटुत्वं ] लक्ष्यभेदपाटवं वाचकत्वशक्तिञ्च, [ दधतः, शुद्धिभृतः ] लोहशुद्धिभृतः निर्विषा वा ; अन्यत्र,—साधव इत्यर्थः,

गवलासितकान्ति तस्य मध्य-
स्थितघोराऽऽयतबाहुदण्डनासम् ।
ददृशे कुपितान्तकोन्नमद्भ्रू-
युगभीमाऽऽकृति कार्मुकं जनेन ॥ १२ ॥

तड़िदुज्ज्वलजातरूपपुङ्खैः
खमयःश्यामसुखैरभिध्वनद्भिः ।
जलदैरिव रंहसा पतद्भिः
पिदधे संहतिशालिभिः शरौघैः ॥ १३ ॥

---

[ गृहीतपक्षाः ] स्वीकृतकङ्कादिपत्राः ; अन्यत्र,—गृहीतनित्यत्वादि-साध्यार्थाः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । [ शराः, वादिनः ] कथकास्य, [ वदनात्, शब्दाः ] प्रतिज्ञाहेत्वादयः, [ इव, प्रसस्रुः ] निर्जग्मुः । श्लिष्टविशेषणेयमुपमेति केचित् । श्लेष एव प्रकृताप्रकृतविषय इत्यन्ये ॥ ११ ॥

गवलेति ।—[ गवलासितकान्ति ] 'गवलं माहिषं शृङ्गम्' इत्यमरः । तद्वदसितकान्ति कृष्णवर्णं, [ मध्यस्थितघोराऽऽयतबाहुदण्डनासं ] मध्ये स्थिता घोरा भीमा, आयता च बाहुदण्डो नासा नासिकेव यस्मिन् तत्तथोक्तं, [ कुपितान्तकोन्नमद्भ्रूयुगभीमाऽऽकृति ] कुपितस्यान्तकस्य मृत्योः, उन्नमत् उन्नतं, यद्भ्रूयुगं, तद्वद्भीमा आकृतिर्यस्य तत्, [ तस्य ] चैद्यस्य, [ कार्मुकं जनेन, ददृशे ] दृष्टम् ; सभयविस्मयमिति भावः । उपमाऽलङ्कारः ॥ १२ ॥

तड़िदिति ।—[ तड़िदुज्ज्वलजातरूपपुङ्खैः ] तड़िद्वदुज्ज्वला दीप्ताः, जातरूपस्य हेम्नः, पुङ्खाः कर्त्तर्य्यो येषां तैः, [ अयःश्यामसुखैः ] अयोवत् श्याममुखैः श्यामाग्रैः, [अभिध्वनद्भिः ] ध्वनिभिः स्वनत्पक्षैर्गर्जद्भिश्च,

शितशल्यमुखावदीर्णमेघ-
च्चरदम्भःस्फुटतीव्रवेदनानाम् ।
स्रवदस्रुततीव चक्रवालं
ककुभामौर्णविषुः सुवर्णपुङ्खाः ॥ १४ ॥
अमनोरमतां यतो जनस्य
च्चणमालोकपथान्नभःसदां वा ।

[ रंहसा ] वेगेन, [ पतद्भिः ] धावद्भिः, [ संहतिशालिभिः ] सङ्घ-वाहिभिः, [ शरौघैर्जलदैरिव, खम् ] आकाशं, [ पिदधे ] पिहितम्। कर्मणि लिट्। "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" (का०) इत्यपि-बकारलोपः। * उपमाऽलङ्कारः ॥ १३ ॥

शितेति।—[ सुवर्णपुङ्खाः ] सुवर्णकर्त्तरिकाः शराः, [ शितशल्य-मुखावदीर्णमेघच्चरदम्भःस्फुटतीव्रवेदनानां ] शितैर्निशितैः, शल्यमुखैः फलाग्रैः, अवदीर्णा अवभिन्नाः, ये मेघास्तेभ्यः च्चरता स्रवता, अम्भसा स्फुटा व्यक्ता, तीव्रा वेदना यासां तासां, [ ककुभां ] सम्बन्धि, [ स्रवदस्रुततीव ] स्रवन्ती असुततिरस्रुसन्ततिर्यस्य तदिव, शरप्रहारवेदनया रुददिव स्थितम् ; इत्युत्प्रेक्षा। [ चक्रवालं ] मण्डलम्, [ और्णविषुः ] आच्छादयामासुः। ऊर्णोतेर्लुङीडागमे तस्य "विभाषोर्णोः" ( १।२।३ पा० ) इति ङित्त्वाभावपक्षे "ऊर्णोतेर्विभाषा" ( ७।२।६ पा० ) इति वृद्धिविकल्पात् पक्षे गुणः, अजादित्वात् "आटश्च" ( ६।१।९० पा० ) इति वृद्धिः ॥ १४ ॥

अमन इति।—[ विशिखैः ] चैद्यबाणैः ; कर्त्तृभिः। [ पिहिता-

* "अव्ययादाप्सुपः" ( २।४।८२ पा० ) इति सूत्रे दीक्षितैः धृता एषा कारिका। परार्द्धन्तु तत्र प्रदर्शितं यथा,—"आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥" इति।

रुरुधे पिहिताहिमद्युतिर्द्यौ-
विंशिखैरन्तरिता च्युता धरित्री ॥ १५ ॥

विनिवारितभानुतापमेकं
सकलस्यापि मुरद्विषो बलस्य।
शरजालमयं समं समन्ता-
दुरु सद्मेव नराधिपेन तेने ॥ १६ ॥

इति चेदिमहीभृता तदानीं
तदनीकं दनुसूनुसूदनस्य।

---

हिमद्युतिः] तिरोहितार्का; अत एव [अमनोरमतां, यती] प्राप्नुवती। इणः शतरि "उगितश्च" (४।१।६ पा०) इति ङीप्। [द्यौः] आकाशं, [जनस्य] भौमलोकस्य, [आलोकपथात्] दृष्टिमार्गात्, [त्वयां, रुरुधे] रुद्धा। रुधेः कर्मणि लिट्। अत्र पथो रोधापायत्वात् "ध्रुवमपाये—" (१।४।२४ पा०) इति अपादानत्वेन पञ्चमी। तथा [अन्तरिता च्युता] तिरोहिता नष्टा, अत एव अमनोरमतां यती [धरित्री नभःसदां वा] आलोकपथात् रुरुधे। वाकारो जनसमुच्चयार्थः। अत्र द्युधरित्र्योः प्रकृतयोरेव रोधाऽऽख्यतुल्यधर्मयोगात्तुल्ययोगिताभेदौ, ताभ्यामेव जनस्य नभःसदां यथासङ्ख्यान्वयात् यथासङ्ख्याऽलङ्कारः सापेक्षतया सङ्कीर्य्यते ॥ १५ ॥

विनिवारितेति।—[नराधिपेन सकलस्यापि, मुरद्विषः] हरेः, [बलस्य] सैन्यस्य, [विनिवारितभानुतापं] विनिवारितो भानुतापो येन तत्, [एकम्] अद्वितीयं, [शरजालमयं] बाणवृन्दाऽऽत्मकम्, [उरु] महत्, [सद्मेव] सदनमिव; इत्युत्प्रेक्षा। [समं] युगपत्, [समन्तात्, तेने] कृतमित्यर्थः। तनोतेः कर्मणि लिट् ॥ १६ ॥

इतीति।—[इति] इत्थं, [चेदिमहीभृता] चैद्येन, [तदानीं]

वयसामिव चक्रमक्रियाकं
परितोऽरोधि विपाटपञ्जरेण ॥ १७ ॥
इषुवर्षमनेकमेकवीर-
स्तदरिप्रच्युतमच्युतः पृषत्कैः ।
अथ वादिकृतं प्रमाणमन्यैः
प्रतिवादीव निराकरोत् प्रमाणैः ॥ १८ ॥
प्रतिकुञ्चितकूर्परेण तेन
श्रवणोपान्तिकनीयमानगव्यम् ।

---

तत्काले, [ दनुसूनुसूदनस्य ] दानवान्तकस्य हरेः, [तत्, अनीकं] बलम् । 'वरूथिनी बलं सैन्यं चक्रञ्चानीकमस्त्रियाम्' इत्यमरः । [ वयसां चक्रं ] पक्षिसङ्घः, [ इव, अक्रियाकं ] निश्चेष्टं यथा तथा, [ विपाट-पञ्जरेण ] विपाटयन्तीति विपाटाः शराः । पचाद्यच् । तैरेव पञ्ज-रेण, [ परितः ] सर्वतः, [ अरोधि ] रुद्धम् । रुधेः कर्मणि लुङ् । उपमा ॥ १७ ॥

इष्विति । [ अथ ] अनीकरोधनानन्तरम्, [ एकवीरः ] महा-शूरः, [ अच्युतः ] हरिः, [ अरिप्रच्युतं ] शत्रुगलितं, [ तत्, अनेकम् ] अपरिमितम्, [ इषुवर्षं, पृषत्कैः ] बाणैः, [ वादिकृतं ] वादिना प्रयुक्तं, [ प्रमाणम् ] अनुमानम्, [ अन्यैः प्रमाणैः ] प्रत्यनुमानैः, [ प्रतिवादीव निराकरोत् ] । "इवेन समासो विभक्त्यलोपश्च" (वा०) * इति समासात् समासगता श्रौती पूर्णोपमा ॥ १८ ॥

प्रतीति ।—[ प्रतिकुञ्चितकूर्परेण ] कुञ्चितकफोणिना । 'स्यात्

---

* "सुपो धातुप्रातिपदिकयोः" ( २।४।७१ पा० ) इति सूत्रे दीक्षितधृतं वार्त्तिकमूलमेतत् ।

ध्वनति स्म धनुर्घनान्तमत्त-
प्रचुरक्रौञ्चरवानुकारमुच्चैः ॥ १९ ॥
उरसा विततेन पातितांसः
स मयूराञ्चितमस्तकस्तदानीम् ।
क्षणमालिखितो नु सौष्ठवेन
स्थिरपूर्वापरमुष्टिराबभौ वा ? ॥ २० ॥

---

कफोणिस्तु कूर्परः' इत्यमरः । [ तेन ] हरिणा, [ श्रवणोपान्तिकनीयमानगव्यं ] श्रवणोपान्तिकं नीयमाना आकृष्यमाणा, गव्या ज्या यस्य तत् । 'गव्यं गवां हिते गव्या ज्यायां चौरादिके लिपु' इति विश्वः । [ धनुः ] शार्ङ्गं, [ घनान्तमत्तप्रचुरक्रौञ्चरवानुकारं ] घनान्ते शरदि, ये मत्ताः प्रचुरा भूरयः, क्रौञ्चास्तेषां रवमनुकरोतीति तदनुकारं, क्रौञ्चकूजितसदृशं यथा तथेत्यर्थः । "कर्मण्यण्" (३।२।१ पा०) इत्यण् । [उच्चैः] तारं, [ ध्वनति स्म ] दध्वान । "लट् स्मे" ( ३।२।११८ पा० ) इति भूते लट् । स्वभावोक्त्युपमयोः सङ्करः ॥ १९ ॥

उरसेति ।—[ तदानीं ] धनुष्कर्षणसमये, [ विततेन] विस्तारितेन, [ उरसा ] उपलक्षितः, [ पातितांसः ] नमितस्कन्धः, [ मयूराञ्चितमस्तकः ] मयूरवदञ्चितं मनोहरं, मस्तकं यस्य सः, उन्नमितमूर्द्धेत्यर्थः, [ स्थिरपूर्वापरमुष्टिः ] स्थिरौ दृढौ, पूर्वापरौ अग्रिमचरमौ, मुष्टी, गृहीतहस्ततलमौर्वीकौ पाणी यस्य सः, [ सः ] हरिः ; सुष्ठु भावः, सौष्ठवं तेन [ सौष्ठवेन ] स्थानकपाटवेन हेतुना, [ क्षणम्, आलिखितो नु ] लिखित इव, [ आबभौ वा ? ] बभासे किम् ? नुशब्दो वितर्कार्थे । 'नु पृच्छायां वितर्के च' इत्यमरः । वाशब्दोऽपि तादृश इत्युत्प्रेक्षाऽलङ्कारोऽयम् ॥ २० ॥

ध्वनतो नितरां रयेण गुर्व्य-
स्तड़िदाकारचलद्गुणादसङ्ख्याः ।
इषवो धनुषः सशब्दमाशु
न्यपतन्नम्बुधरादिवाम्बुधाराः ॥ २१ ॥

शिखरोन्नतनिष्ठुरांसपीठः
स्थगयन्नेकदिगन्तमायतान्तः ।
निरवर्णि सकृत्प्रसारितोऽस्य
क्षितिभर्त्तेव चमूभिरेकबाहुः ॥ २२ ॥

---

ध्वनत इति ।—[नितरां, ध्वनतः] गर्जतः, [तड़िदाकारचलद्गुणात्] तड़ित इवाऽऽकारो यस्य सः तड़िदाकारः, चलनात्तेजोमयत्वाच्चाचिरप्रभाऽऽकारः, चलन् गुणो मौर्वी यस्य तस्मात् । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । [धनुषः] शार्ङ्गात्, [गुर्व्यः] महत्यः, [असङ्ख्याः] अपरिमिताः, [इषवः, अम्बुधरात्] मेघात्, [ अम्बुधारा इव रयेणाऽऽशु सशब्दं न्यपतन् ]। अत्रोपमानोपमेययोरेकलिङ्गताऽन्वयादिषुशब्दो द्विलिङ्गोऽपि स्त्रीलिङ्ग एव प्रयुक्त इति ज्ञापनाय गुर्व्य इति विशेषणम् ॥ २१ ॥

शिखरेति ।—[ शिखरोन्नतनिष्ठुरांसपीठः ] शिखरं शृङ्गमिव, उन्नतं निष्ठुरञ्चांसपीठं यस्य सः, [ एकदिगन्तम् ] एकदिग्भागं, [ स्थगयन्, आयतान्तः ] द्राघिष्ठस्वरूपः । 'अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती । [ सकृत्प्रसारितः ] ; न तु पुनःपुनरिति स्थैर्योक्तिः । [ अस्य ] हरेः, [ एकबाहुः ] चापरोपितो वामबाहुरित्यर्थः, [ चमूभिः, क्षितिभर्त्तेव ] भूधर इव, [ निरवर्णि ] साधु निरीक्षित इत्यर्थः । 'निर्वर्णनन्तु निध्यानं दर्शनाऽऽलोकनेक्षणम्' इत्यमरः ॥ २२ ॥

तमकुण्ठमुखाः सुपर्णकेतो-
रिषवः क्षिप्तमिषुव्रजं परेण ।
विभिदामनयन्त कृत्यपक्षं
नृपतेर्नेतुरिवायथार्थवर्णाः ॥ २३ ॥

दयितैरिव खण्डिता मुरारे-
र्विशिखैः सम्मुखमुज्ज्वलाङ्गलेखैः ।
लघिमानमुपेयुषी पृथिव्यां
विफला शत्रुशराऽऽवलिः पपात ॥ २४ ॥

---

तमिति ।—[ अकुण्ठमुखाः ] निशिताग्राः प्रभल्भगिरश्च, [ सुपर्णकेतोः ] गरुड़ध्वजस्य हरेः, [ इषवः, परेण ] अरिणा, [ क्षिप्तं ] मुक्तं, [ तम् इषुव्रजम्, अयथार्थवर्णाः ] असत्याक्षराः, कपटवचनाः उभयवेतना इत्यर्थः । 'कृत्यज्ञेयो यथावर्णश्चारः प्रणिधिरेव च' इत्युत्पलमाला । [नेतुः] नायकस्य जिगीषोः, [ नृपतेः, कृत्यपक्षम् ] अमात्यादिभेद्यवर्गम्, [इव] । 'कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः' इत्यमरः । [ विभिदां ] भेदम् । "षिद्भिदादिभ्योऽङ्" ( ३।३।१०४ पा० ) इत्यङ् । [ अनयन्त ] । "स्वरितञितः—" (१।३।७२ पा०) इत्यात्मनेपदम् ॥ २३ ॥

दयितैरिति ।—[ उज्ज्वलाङ्गलेखैः ] उज्ज्वलाः स्फुटाः, अङ्गेषु लेखाश्चित्रलेखा नखरेखाश्च येषां तैः, [ मुरारेर्विशिखैः, दयितैः ] प्रियैः, [इव, सम्मुखं] समक्षमेव, [खण्डिता] नुन्ना ; अन्यत्र,—अवमानिता ; अत एव [विफला] विशल्या अलब्धकामा च ; अत एव [लघिमानम्] अगुरुत्वम् अल्पताञ्च, [उपेयुषी शत्रुशराऽऽवलिः पृथिव्यां पपात] । अत्र प्रकृतशराऽऽवलिविशेषणसाम्यादप्रकृतखण्डितानायिकाप्रतीतेः समासोक्तिः । दयितैरिवेत्युपमा खण्डिताविशेषणान्तःपातित्वादङ्गमेव ; अत एव

प्रमुखेऽभिहताश्च पत्रवाहाः
प्रसभं माधवमुक्तवत्सदन्तैः ।
परिपूर्णतरं भुवो गतायाः
परितः कातरवत् प्रतीपमीयुः ॥ २५ ॥

इतरेतरसन्निकर्षजन्मा
फलसङ्घट्टविकीर्णविस्फुलिङ्गः ।
पटलानि लिहन् बलाहकाना-
मपरेषु क्षणमज्वलत् कृशानुः ॥ २६ ॥

---

"ततश्च विशेषणसाम्यं श्लिष्टतया साधारण्येनौपम्यगर्भत्वेन च भावात्त्रिधा भवति" इत्युक्तं सर्वस्वकारैः । 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति । साऽप्येवं पृथिव्यां पततीति भावः ॥ २४ ॥

प्रमुख इति ।—पत्राणि वहन्तीति [ पत्रवाहाः ] पत्त्रिणश्चेष्व-शराः । "कर्मण्यण्" ( ३।२।१ पा० ) इति अण् । [ माधवमुक्तवत्सदन्तैः ] शौरिक्षिप्तशरैः, [ प्रसभं ] बलात्, [ प्रमुखे ]शल्याग्रे वदने च, [ अभिहताः ] खण्डिताः सन्तः, अत एव कातरैः लस्तैस्तुल्यं [ कातरवत् ] । तुल्यार्थे वतिप्रत्ययः । [ परिपूर्णतरं गतायाः ] यावत् गन्तव्यं गताया इत्यर्थः, [ भुवः ] अन्तरालभूमेः, [ परितः, प्रतीपं ] प्रतिकूलम्, [ईयुः] प्रापुः, प्रत्यागता इत्यर्थः, [च], माधवान्तिकात् प्रत्यावृत्य जग्मुरित्यर्थः । चकारः पूर्वश्लोकोक्तपतनसमुच्चयार्थः । केचित् खण्डितास्तत्रैव पेतुः, केचिन्मुखेषु प्रतिहताः प्रतिनिवृत्ताः इत्यर्थः । कातरवदिति तद्धितगता श्रौती पूर्णोपमा ॥ २५ ॥

इतरेतरेति ।—[ इतरेतरसन्निकर्षजन्मा ] शराणां मिथः संश्ले-

शरदीव शरश्रिया विभिन्ने
विभुना शत्रुशिलीमुखाभ्रजाले।
विकसन्मुखवारिजाः प्रकामं
बभुराशा इव यादवध्वजिन्यः॥ २७॥
स दिवं समचिच्छदच्छरौघैः
कृततिग्मद्युतिमण्डलापलापैः।

---

प्रोत्थः। जन्मोत्तरपदत्वाद्व्यधिकरणोऽपि बहुव्रीहिरिष्यते। * [फल-सङ्घट्टविकीर्णविस्फुलिङ्गः] फलसङ्घट्टेन शल्यसङ्घट्टनेन, विकीर्णा विस्फुलिङ्गा यस्य सः, [कृशानुः] अग्निः, [बलाहकानां] वारि वहन्तीति बलाहकाः। पृषोदरादित्वात् साधुः। तेषां, [पटलानि, लिहन्] आस्वादयन्, [अपरेषु] शत्रुषु। "समरेषु" इति पाठे,—समरेषु युद्धेषु, [क्षणम्, अज्वलत्] अदीप्यत। अत्र शत्रुबलाहकानाम् अग्निदाहाऽऽस्वादासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः॥ २६॥

शरदीवेति।—[विभुना] देवेन; कर्त्रा। [शरश्रिया] शरसम्पदा; करणेन। [शरदीव, शत्रुशिलीमुखाभ्रजाले] शत्रुशिलीमुखा अभ्राणीव, तेषां जाले, [विभिन्ने] सति, [विकसन्मुखवारिजाः] विकसन्ति मुखानि वारिजानि इव यासां ताः, [यादवध्वजिन्यः] यदुसेनाः, [आशाः] दिशः, [इव प्रकामं बभुः]। अनेकैवेयम् उपमा॥ २७॥

स इति।—[कृततिग्मद्युतिमण्डलापलापैः] कृतस्तिग्मद्युतिमण्डलस्यापलापो निह्नवो यैस्तैः, आच्छादितार्कमण्डलैरित्यर्थः, [शरौघैः, दिवम्]

---

* "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः" (५अधि० २अध्या० १९ सू०) इति वामनसूत्रात्।

ददृशेऽथ च तस्य चापयष्ट्या *
इषुरेकैव जनैः सकृद्विसृष्टा ॥ २८ ॥
भवति स्फुटमागतो विपक्षात्
न सपक्षोऽपि हि निर्वृतेर्विधाता ।
शिशुपालबलानि कृष्णमुक्तः
सुतरां तेन ततापं तोमरौघः ॥ २९ ॥

---

आकाशं, [सः] हरिः, [समचिच्छदत्] छादयति स्म । छादेः "णौ चङ्युप-धाया ह्रस्वः" (७।४।१ पा०) इति ह्रस्वः । "सन्यतः" (७।४।७९ पा०) इत्यभ्यासस्येत्वम् । युक्तञ्चैतत्, लघुहस्तत्वादस्येत्याशयेनोत्प्रेक्ष्यते ;— [अथ] अस्मिन्नवसरे, [तस्य] हरेः, [ चापयष्ट्या इषुः, सकृत् ] एकदा, [ विसृष्टा ] मुक्ता, [ एकैव जनैः, ददृशे ] दृष्टा, [ च ]। इषूणां पुङ्खानु-पुङ्खगमनाद्द्राघीयानेक एवेषुरेकदैव गच्छति ; इत्युत्प्रेक्षा । ईदृशलघुहस्त-स्याऽऽकाशसञ्छादनं युक्तमिति भावः ॥ २८ ॥

भवतीति ।—[ विपक्षात् ] शत्रुकुलात्, [ आगतः, सपक्षः ] कङ्कादिपक्षवान्, सुहृच्च, [अपि, निर्वृतेर्विधाता ] सुखकरः, [न भवति । हि ] यतः, [ स्फुटं, तेन ] कारणेन, [ कृष्णमुक्तस्तोमरौघः शिशुपालबलानि सुतरां, ततापं ] ददाह ; अतः शत्रुकुलादागतः स्वजनोऽपि न विश्वसनीय इत्यर्थः । सपक्षोऽप्यनिर्वर्त्तक इति विरोधे-ऽपिशब्दः । विपक्षादागत इत्यविरोधाद्विरोधाऽऽभासः ॥ २९ ॥

---

* "चापयष्ट्याः" इत्यत्र "चापयष्ट्याम्" इति क्वचित् पाठो दृश्यते । षष्ठी-सप्तम्योरविशेषात् तत्र अर्थगतं किञ्चिद्वैशिष्ट्यं नास्तीति ज्ञेयम् ।

गुरुवेगविराविभिः पतत्रै-
रिषवः काञ्चनपिङ्गलाङ्गभासः ।
विनतासुतवत्तलं भुवः स्म
व्यथितभ्रान्तभुजङ्गमं विशन्ति ॥ ३० ॥

शतशः परुषाः पुरो विशङ्कं
शिशुपालेन शिलीमुखाः प्रयुक्ताः ।
परमर्मभिदोऽपि दानवारे-
रपराधा इव न व्यथां वितेनुः ॥ ३१ ॥

---

गुर्विति ।—[ गुरुवेगविराविभिः ] गुरुणा वेगेन विरुवन्ति ध्वनन्तीति तथोक्तैः । रौतेर्णिनिः । शीघ्रवेगविराववद्भिः, [ पतत्रैः ] पक्षैरुपलक्षिताः, [ काञ्चनपिङ्गलाङ्गभासः ] काञ्चनेन पुङ्खलिप्तेन, पिङ्गलाङ्गभासः ; अन्यत्र,—काञ्चनवदिति विग्रहः, [ इषवः ] शौरिशराः, [ विनतासुतवत् ] वैनतेयैस्तुल्यं, [व्यथितभ्रान्तभुजङ्गमं ] व्यथिता भीषिताः, अत एव भ्रान्ता मूढाः, भुजङ्गमा यस्मिन् तत्तथा, [भुवस्तलं] पातालं, [ विशन्ति स्म ]। तद्धितगता श्रौती पूर्णोपमा, पातालप्रवेशासम्बन्धातिशयोक्त्या सङ्कीर्यते ॥ ३० ॥

शतश इति ।—[ शिशुपालेन, पुरः ] अग्रे, [ विशङ्कं ] निःशङ्कं, [ शतशः, प्रयुक्ताः ] क्षिप्ताः, उच्चारिताश्च, [ परुषाः ] निष्ठुराः, [ परमर्मभिदोऽपि, शिलीमुखाः] शराः, शतशः [अपराधाः] पञ्चदशसर्गोक्ताः अभिशापाः, [ इव, दानवारेः ] हरेः, [ व्यथां ] दुःखं, [न वितेनुः]। खलापकारा महतामकिञ्चित्करा इति भावः । समासगतोपमा ॥ ३१ ॥

विहिताद्भुतलोकसृष्टिमाये
जयमिच्छन् किल मायया मुरारौ ।
भुवनक्षयकालयोगनिद्रे
नृपतिः स्वापनमस्त्रमाजहार ॥ ३२ ॥

सलिलाऽऽर्द्रवराहदेहनीलो
विदधद्भास्करमर्थशून्यसंज्ञम् ।
प्रचलाऽऽयतलोचनारविन्दं
विदधे तद्बलमन्धमन्धकारः ॥ ३३ ॥

---

विहितेति ।—[ नृपतिः ] चैद्यः, [ विहिताद्भुतलोकसृष्टिमाये ] विहिता अद्भुता लोकसृष्टिरेव माया यस्मिन् तस्मिन्, [ भुवनक्षयकालयोगनिद्रे ] भुवनक्षयकाले प्रलयकाले, न त्विदानीमिति भावः, उचिता योगनिद्रा यस्य तस्मिन्, [ मुरारौ मायया जयमिच्छन् किल ]; न तु जेष्यतीति भावः ; स्वापयतीति [ स्वापनम् अस्त्रम्, आजहार ] प्रयुक्तवानित्यर्थः। अनादिमायाऽऽधारे सकलभुवनसृष्टिसंहारमहानाटकसूत्रधारे सर्वाद्भुतनिधाने सकलकलुषकषणपटुतराभिधाने पुराणेन्द्रजालिके भगवति हरावपि मायया जिगीषेत्यहो ! महानस्य व्यामोह इति भावः। अत्र हरिविशेषणैस्तस्य दुर्जयत्वसिद्धेः काव्यलिङ्गम् ॥३२॥

सलिलेति ।—[सलिलाऽऽर्द्रवराहदेहनीलः] सलिलेनाऽऽर्द्रो यो वराहदेहस्तद्वन्नीलः, [ भास्करं ] भासं प्रकाशं, करोतीति भास्करः। "दिवाविभा—" ( ३।२।२१ पा० ) इत्यादिना टप्रत्ययः। तम्, [ अर्थशून्यसंज्ञम्] अर्थशून्या भास्करत्वरूपप्रवृत्तिनिमित्तशून्या, संज्ञा भास्कराऽऽख्या यस्य तं, [ विदधत् ], सौरलोकमभिभवन्नित्यर्थः ; अन्धं करोतीति [ अन्धकारः ] स्वापनास्त्रप्रभवतमः। "कर्मण्यण्" (३।२।१ पा०) इत्यण्। [प्रचलाऽऽयतलोचनारविन्दं] प्रचलानि निद्राघूर्णितानि, आयतलोचना-

गुरवोऽपि निषद्य यन्निदद्रु-
र्धनुषि क्ष्मापतयो न वाच्यमेतत् ।
क्षयिताऽऽपदि जाग्रतोऽपि नित्यं
ननु तत्रैव हि तेऽभवन्निषण्णाः ॥ ३४ ॥
श्लथतां व्रजतस्तथा परेषा-
मगलद्वारणशक्तिमुज्झतः स्वाम् ।
सुगृहीतमपि प्रमादभाजां
मनसः शास्त्रमिवास्त्रमग्रपाणेः ॥ ३५ ॥

---

न्दीवरारविन्दानि यस्मिन् कर्मणि तत्तथा ; सूर्य्यतिरोधानेऽरविन्दमुकुलो-भावस्यावश्यम्भावादिति भावः । [ तद्बलं ] हरिसैन्यम्, [अन्धम्] अपश्यं, [ विदधे ], निद्रां प्राविशदित्यर्थः । अत्रान्धमन्धेति सकृदावृत्तनयुग्मपौन-रुक्त्यादृत्त्यनुप्रासभेदः ; तस्य वराद्गदेहनीललोचनारविन्देत्युपमा-रूपकयोः संसृष्टिः ॥ ३३ ॥

गुरव इति ।—[ गुरवः ] धीराः, [ क्ष्मापतयोऽपि धनुषि, निषद्य ] श्रयित्वा, [ निदद्रुः ] सुषुपुः, इति [यत्, एतत्] धनुषि निद्रायां, [वाच्यं] निन्द्यं, [ न ]; भवति । कुतः ?—[ हि ] यस्मात्, [ ते ] क्ष्मापतयः, [ जाग्रतोऽपि ] प्रबुद्धा अपि । जागर्त्तेः शतरि अस्य "अभ्यस्तात् झस्य अत्" ( ६।१।६ पा० ) इत्यभ्यस्तसंज्ञा, "नाभ्यस्ताच्छतुः" (७।१।७८ पा०) इति नुम्प्रतिषेधः । [क्षयिताऽऽपदि] सर्वापन्निवारक इत्यर्थः, [ तत्रैव] धनुषि, [ नित्यं, निषण्णाः ] संश्रिताः, [ अभवन् ननु ] ; जागरेऽपि धनुरेकशरणानां स्वापे तदाश्रये न दोष इत्यर्थः । अत्र सदा धनुराश्रयवाक्यार्थस्यावाच्यताहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥३४॥

श्लथतामिति ।—[ तथा ] इति पूर्वोक्तधनुराश्रयणसमुच्चये ; यथा

उचितस्वपनोऽपि नीरराशौ
स्वबलाम्भोनिधिमध्यगस्तदानीम्।
भुवनत्रयकार्य्यजागरूकः
स परं तत्र परः पुमानजागः ॥ ३६ ॥

---

तेषां धनुराश्रयणं, तथाऽन्येषां धनुर्गलनञ्चाभूदित्यर्थः, [ श्लथतां ] प्रयत्नशैथिल्यं, [ व्रजतः ] भजतः, [ स्वां ] निजां, [ धारणशक्तिं ] वाहनसामर्थ्यम्, [ उज्झतः ] त्यजतः, [ परेषां ] राज्ञाम्; अग्रश्चासौ पाणिश्चेति समानाधिकरणसमासः। 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात् ( ५अधि० २अध्या० २०सू० ) इति वामनवचनात्। तस्मात् [ अग्रपाणेः, सुगृहीतमपि ] सुष्ठु धृतमपि; अन्यत्र,—स्वभ्यस्तमपि, [ प्रमादभाजां ] गुणनिकायवधानरहितानां, [ मनसः ] चित्तात्, [ शास्त्रं ] विद्या, [ इव अस्त्रम्, अगलत् ] अभ्रश्यत्, निद्रापारवश्यादित्यर्थः। इवेन सह नित्यसमासात् समासगता श्रौती पूर्णोपमा ॥ ३५ ॥

उचितेति।—[ नीरराशौ ] समुद्रे, [ उचितस्वपनोऽपि ] परिचितनिद्रोऽपि, [ तदानीं ] सर्वनिद्राऽवसरे, [ स्वबलाम्भोनिधिमध्यगः ] स्वसेनासागरमध्यगतः। "बलपाथोनिधि" इत्यपि पाठः। [ भुवनत्रयकार्य्यजागरूकः ] भुवनत्रयकार्य्ये त्रैलोक्यरक्षाविधौ, जागरूकः प्रबुद्धः। "जागरूकः" ( ३।२।१६५ पा० ) इत्यूकप्रत्ययः। [ सः, परः पुमान् ] परमपुरुषः, [ परं ] केवलं, हरिरेवेत्यर्थः। 'परमव्ययमिच्छन्ति केवले' इति विश्वः। [ तत्र ] निद्राणलोके, [ अजागः ] जागर्त्ति स्म। सर्वान्धकारहारिणो नित्यप्रकाशचिदात्मनः तत्रापि कार्य्यग्रस्तस्य कुतो निद्रेति भावः। जागर्त्तेर्लङि तिप्। अदादित्वाच्छपो लुकि सार्वधातुकगुणे रपरे "हल्ङ्याप्—" ( ६।१।६८ पा० ) इति तिलोपे च रेफस्य विसर्जनीयः। अत्र समुद्रनिद्रालोस्तत्रैव जागरे विरोधपरि-

अथ सूर्य्यरुचीव तस्य दृष्टा-
वुदभूत् कौस्तुभदर्पणं गतायाम्।
पटु धाम ततो न चाद्भुतं तत्
विभुरिन्द्वर्कविलोचनः किलासौ ॥ ३७ ॥

महतः प्रणतेष्विव प्रसादः
स मणेरंशुचयः ककुम्मुखेषु।
व्यकसद्विकसद्विलोचनेभ्यो
ददालोकमनाविलं बलिभ्यः ॥ ३८ ॥

---

द्वारमुखेण कार्य्यंजागरूकत्वपरमपुरुषत्वयोर्विप्रोषणगत्या तात्त्विकजागरणहेतुकत्वात् विरोधाऽऽभाससङ्कीर्णं काव्यलिङ्गम् ॥ ३६ ॥

अथेति।—[ अथ ] अन्धकारव्याप्त्यनन्तरं, [ तस्य ] हरेः, [ दृष्टौ ] चक्षुषि, तेजसि इत्यर्थः। [ सूर्य्यरुचीव ] सूर्य्यतेजसि इव। कौस्तुभो दर्पण इवेत्युपमितसमासः। सूर्य्यरुचोवेति लिङ्गात्। तं [ कौस्तुभदर्पणं, गतायां ] प्रविष्टायां सत्यां, [ ततः ] कौस्तुभात्, [ पटु ] सर्वान्धकारद्रावणे समर्थं, [ धाम ] तेजः, [ उदभूत् ] उदगात्। [ तत् ] धामोद्भवनं, [ न चाद्भुतम् ]। कुतः?—[ असौ, विभुः ] भगवान्, [ इन्द्वर्कविलोचनः ] इन्द्वर्कौ विलोचने यस्य सः, [ किल ] खलु; अतस्तच्चक्षुषोः सूर्य्याऽऽत्मकत्वात् तदभिहतात् कौस्तुभाद्दर्पणादेरिव धामप्रादुर्भावो व्यज्यते इत्यर्थः। अतो वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३७ ॥

महत इति।—[सः] पूर्वोक्तः, [ मणेः ] कौस्तुभस्य, [ अंशुचयः, विकसद्विलोचनेभ्यः ] विकसन्ति उन्मीलन्ति, विलोचनानि येषां तेभ्यः, [ बलिभ्यः, अनाविलं] प्रसन्नम्, [आलोकं ] दर्शनं, तत्त्वज्ञानञ्च, [ ददत् ] प्रतियच्छन्, [ महतः ] महाऽऽत्मनः, [ प्रसादः ] अनुग्रहः, [ प्रणतेषु ]

प्रकृतिं प्रतिपादुकैस्स्य पादै-
स्त्वक्लृपे भानुमतः पुनः प्रसत्तुम् ।
तमसोऽभिभवादपास्य मूर्च्छा-
मुदजीवत्सहसैव जीवलोकः ॥ ३९ ॥
घनसन्तमसैर्जवेन भूयो
यदुयोधैर्युधि रेधिरे द्विषन्तः ।
ननु वारिधरोपरोधमुक्तः
सुतरामुत्तपते पतिः प्रभाणाम् ॥ ४० ॥

---

भक्तेषु, [ इव, ककुम्मुखेषु ] ककुभामग्रेषु, [ व्यकसत् ] अमूर्च्छत् । पूर्णोपमा ॥ ३८ ॥

प्रकृतिमिति ।—[ प्रकृतिं ] स्वभावं, [ प्रतिपादुकैः ] प्रतिपद्यमानैः । "लषपतपद—" ( ३।२।१५४ पा० ) इत्यादिना उकञ्प्रत्ययः, "न लोका—" ( २।३।६९ पा० ) इत्यादिना षष्ठीप्रतिषेधः । [ भानुमतः ] अंशुमतः, [ पादैः ] रश्मिभिः, [ च, पुनः ] भूयः, [प्रसत्तुं, चक्लृपे ] प्रेके । 'क्लृपू सामर्थ्ये' भावे लिट्, "कृपो रो लः" ( ८।२।१८ पा० ) इति ऋकारस्थस्यापि रेफस्य लकारः । [ जीवलोकः ] प्राणिवर्गश्च, [ तमसः ] अन्धकारस्य, [ अभिभवात् ] अभिभूतत्वादित्यर्थः । "कर्तृकर्मणोः कृति" ( २।३।६५ पा० ) इति कर्मणि षष्ठी । [ सहसैव मूर्च्छामपास्य, उदजीवत् ] उदश्वसीत् । अत्रोज्जीवनस्य अर्ककरप्रसारहेतुकत्वाद्वाक्यार्थ-हेतुकं काव्यलिङ्गम् ॥ ३९ ॥

घनेति ।—[ घनसन्तमसैः ] घनं सान्द्रं, सन्तमसम् अन्धकारो येषु । "अवसमन्धेभ्यस्तमसः" ( ५।४।७९ पा० ) इति समासान्तोऽच्प्रत्ययः । "गत—" इति पाठे,—गतं सन्तमसं येषां तैः, [यदुयोधैः ] यादवभटैः,

व्यवहार इवानृताभियोगं
तिमिरं निर्जितवत्यथ प्रकाशे ।
रिपुरुल्बणभीमभोगभाजां
भुजगानां जननीं जजाप विद्याम् ॥ ४१ ॥
पृथुदर्विभृतस्ततः फणीन्द्रा
विषमाशीभिरनारतं वमन्तः ।

---

[भूयः] पुनरपि, [जवेन युधि द्विषन्तः, रेधिरे] जिहिंसिरे, हता इत्यर्थः । राध्यतेः कर्मणि लिट् । "राधो हिंसायाम्" (६।४।१२३ पा० ) इत्येत्वा-भ्यासलोपौ । तथा हि, [ वारिधरोपरोधमुक्तः ] वारिधरोपरोधात् मेघा-पवरणात्, मुक्तः, [ प्रभाणां ] द्युतीनां, [पतिः] ; अर्कः इत्यर्थः, [सुतरा-मुत्तपते ननु ] प्रकाशत एव खलु । "उद्विभ्यां तपः" ( १।३।२७ पा० ) इत्यात्मनेपदम् । अत्र यदुयोधानां द्युतिपतेश्च वाक्यभेदेन प्रतिबिम्ब-करणाद्दृष्टान्तालङ्कारः । न चोपमानोपमेययोर्भिन्नवचनत्वदोषः । लोके चन्द्रार्कादीनामुपमानानामबहुत्वेऽपि चन्द्रानना इतिवत् प्रत्येक-मौपम्यात् ॥ ४० ॥

व्यवहार इति ।—[ व्यवहारे ] न्यायवादे, [ अनृताभियोगं ] मिथ्याऽभिशंसनम्, [ इव, प्रकाशे ] कौस्तुभतेजसि, [ तिमिरं ] प्रस्वा-पनास्त्रकारं, [ निर्जितवति ] निरस्तवति सति, [ अथ ] एतन्निरस-नानन्तरं, [ रिपुः ] चैद्यः, [उल्बणभीमभोगभाजाम् ] उल्बणान् महतः, भीमांश्च भोगान् फणान् कायांश्च, भजन्तीति तद्भाजः । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । तेषां, [भुजगानां, जननीम्] उत्पादिकां, [ विद्यां ] मन्त्रं, [ जजाप ] जपति स्म ; भुजगास्त्र-माजहारेत्यर्थः । "उल्बण" इत्यत्र क्वचित् "उत्फण" इति पाठः । उपमाऽलङ्कारः ॥ ४१ ॥

अभवन् युगपद्विलोलजिह्वा-
युगलीढोभयसृक्कभागमाविः ॥ ४२ ॥

कृतकेशविडम्बनैर्विहायो
विजयं तत्क्षणमिक्षुभिश्छलेन ।
अमृताग्रभुवः पुरेव पुच्छं
बड़वाभर्त्तुरवारि काद्रवेयैः ॥ ४३ ॥

---

पृथ्विति ।—[ ततः ] भुजगास्त्रप्रयोगानन्तरं, [ पृथुदर्विभृतः ] * महाफणाधारिण इत्यर्थः ; अत एव 'दर्वीकरो दीर्घपृष्ठः' इत्यत्र दर्वीरूपः फण एव करो हस्तो यस्य प्रहारादौ इति व्याख्यातम् । [ आशीभिः ] दंष्ट्राभिः । 'आशी उरगदंष्ट्रायाम्' इति वैजयन्ती । [ अनारतम् ] अश्रान्तं, [ विषं, वमन्तः ] उद्गिरन्तः, [ फणीन्द्राः ] महासर्पाः, [विलोलजिह्वायुगलीढोभयसृक्कभागं] विलोलैश्चञ्चलैः, जिह्वायुगैर्लीढौ आस्वादितौ, उभयसृक्कभागौ उभौ ओष्ठप्रान्तदेशौ यस्मिन् कर्मणि तत्तथा । 'प्रान्तावोष्ठस्य सृक्कणी' इत्यमरः । [ युगपत् आविरभवन् ]। अत्र "उभादुदात्तो नित्यम्" ( ५।२।४४ पा० ) इति नित्यग्रहणसामर्थ्यात् वृत्तिविषये उभशब्दस्य स्थानेऽप्युभयशब्दस्यैव प्रयोगः । 'उभयपुत्रः' इत्यादिप्रयोगसिद्धेरिति कव्युक्तमस्माभिः प्रकटितं बहुधा सञ्जीविन्यां घण्टापथे सर्वङ्कषायाञ्च तत्र तत्र । स्वभावोक्तिरलङ्कारः ॥४२॥

कृतेति ।—[कृतकेशविडम्बनैः] काशादिविहितकेशानुकारैः, [छलेन] कपटेन, [ विजयम्, इक्षुभिः ] अभिलाषुकैः । "विन्दुरिच्छुः" ( ३।२।१६९ पा०) इति उप्रत्ययान्तो निपातः, "न लोका—"(२।३।६९ पा० )

---

* "वृदृभ्यां विन्" (उ० ४पा० ५३सू०) इति दृणातेः विनि ङीषः वैभाषिकत्वेन विधानात् दर्विः इत्यपि सिध्यति ।

दधतस्तनिमानमानुपूर्व्या
बभुरक्षिश्रवसो मुखे विशालाः ।
भरतज्ञकविप्रणीतकाव्य-
ग्रथिताङ्का इव नाटकप्रपञ्चाः ॥ ४४ ॥

---

इत्यादिना षष्ठीप्रतिषेधः । [ विहायः ] आकाशं, [ तत्क्षणं, काद्रवेयैः ] कद्रुपुत्रैः फणीन्द्रैः । "स्त्रीभ्यो ढक्" ( ४।१।१२० पा० ) इति ढक् । [ पुरा ] पूर्वम्, [ इव, अमृताग्रभुवः ] अमृताग्रजस्य, [ वड़वाभर्तुः ] उच्चैःश्रवसः, [ पुच्छम्, अवारि ] आवृतम् । वृतेः कर्मणि लुङ् । पुरा किल कद्रुविनतयोः कश्यपभार्य्ययोरुच्चैःश्रवसः पुच्छस्य कार्ण्यश्वैत्यविवादे दास्यपणे काद्रवेयैः स्वमातुर्विजयाय गृहीतबालाकारैरुच्चैःश्रवसः पुच्छाऽऽच्छादनं चक्रे इति कथा पुराणादनुसन्धेया । उपमा ॥ ४३ ॥

दधत इति ।—[ मुखे ] मुखभागे, मुखसन्धौ च, [ विशालाः ] विस्तृताः, [ आनुपूर्व्या ] अनुक्रमेण, [ तनिमानं ] तनुत्वं, मुखादन्यत्र शरीरे उत्तरोत्तरं तनुत्वमित्यर्थः, [दधतः] ; अन्यत्र,—प्रतिमुखादिसन्धिषु गोपुच्छवत् सङ्क्षिप्तत्वं दधानाः, [ अक्षिश्रवसः ] सर्पाः, [ भरतज्ञकवि-प्रणीतकाव्यग्रथिताङ्काः ] भरतज्ञो नाट्यशास्त्रज्ञः । 'भरतो नाट्य-शास्त्रेऽपि' इति विश्वः । तेन कविना प्रणीतं प्रकल्पितं, यत् काव्यं कविकर्म, लक्षणया काव्यार्थः, कथावस्तु इति यावत् । ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । तेन ग्रथिता गुम्फिताः, अङ्काः परिच्छेदरूपाः अवान्तर-सन्दर्भविशेषा येषु ते तथोक्ताः, [ नाटकप्रपञ्चाः ] नाटकविस्ताराः, [इव बभुः ] ; इत्युपमा । "प्रपञ्चाः" इत्यत्र "प्रबन्धाः" इति क्वचित्पाठः । 'प्रत्यक्षनेतृचरितो बिन्दुबीजपुरस्कृतः । अङ्को नानाप्रकारार्थसंविधान-रसाऽऽश्रयः ॥' इति अङ्कलक्षणम् । 'मुखं प्रतिमुखं गर्भोऽवमर्श उप-संहृतिः' इति सन्धयः ॥ ४४ ॥

सविषश्वसनोद्धतोरुधूम-
व्यवधिम्लानमरीचि पन्नगानाम् ।
उपरागवतेव तिग्मभासा
वपुरौदुम्बरमण्डलाऽऽभमूहे ॥ ४५ ॥
शिखिपिच्छकृतध्वजावचूड-
क्षणसाशङ्कविवर्त्तमानभोगाः ।
यमपाशवदाशु बन्धनाय
न्यपतन् वृष्णिगणेषु लेलिहानाः ॥ ४६ ॥

---

सेति ।—[ तिग्मभासा ] सूर्य्येण, [ उपरागवता ] राहुग्रासवता, [इव], राहुग्रस्तेनेवेत्यर्थः । 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च' इत्यमरवचनं ग्रासस्याप्युपलक्षणम् । [पन्नगानां, सविषश्वसनोद्धतोरुधूमव्यवधिम्लानमरीचि ] सविषैः श्वसनैः फूत्कारैः, उद्धतेनोरुधूमेन यो व्यवधिस्तिरोधानं, तेन म्लाना निष्प्रभाः, मरीचयो यस्य तत्, अत एव [ उदुम्बरमण्डलाऽऽभं ] ताम्रपिण्डसच्छायम् । 'अथ ताम्रकम् । शुल्वं म्लेच्छमुखद्व्यष्टवरिष्ठोदुम्बराणि च' इत्यमरः । [वपुः, ऊहे] ऊढम् । वहेः कर्मणि लिट् । यजादित्वात् सम्प्रसारणम् ॥ ४५ ॥

शिखीति ।—पुनःपुनर्लेहनशीलाः [ लेलिहानाः ] सर्पाः । लिहेर्यङ्लुगन्तात्ताच्छील्ये शानच्प्रत्यये "गुणो यङ्लुकोः" (७।४।८२ पा० ) इत्यभ्यासस्य गुणः । लिहेर्लिटः कानजिति वल्लभः । तदानीमभ्यासगुणानुपपत्तिः, भूतार्थासङ्गतिश्च । [ शिखिपिच्छकृतध्वजावचूडक्षणसाशङ्कविवर्त्तमानभोगाः ] शिखिपिच्छैः मयूरबर्हैः, कृतेभ्यो ध्वजानामवचूडेभ्यः प्रकीर्णेभ्यः, क्षणं साशङ्काः जीवन्मयूरभ्रान्त्या सभयाः, अत एव विवर्त्तमानभोगाः विवर्त्तमानकायाः, व्यावृत्तदेहाः सन्तः इत्यर्थः, [आशु,

पृथुवारिधिवीचिमण्डलान्त-
र्विलसत्फेनवितानपाण्डुराणि ।
दधति स्म भुजङ्गमाङ्गमध्ये
नवनिर्मोकरुचिं ध्वजांशुकानि ॥ ४७ ॥
कृतमण्डलबन्धमुल्लसद्भिः
शिरसि प्रत्युरसं विलम्बमानैः ।
व्यरुचज्जनता भुजङ्गभोगै-
र्दलितेन्दीवरमालभारिणीव ॥ ४८ ॥

---

वृष्णिगणेषु] यादवतङ्घेषु, [ बन्धनाय ]; यमपाशैस्तुल्यं [यमपाशवत्] कालपाशवत्; इत्युपमा। [ न्यपतन् ] निपत्य बबन्धुरित्यर्थः ॥ ४६ ॥

पृथ्विति ।—[ भुजङ्गमाङ्गमध्ये, पृथुवारिधिवीचिमण्डलान्तर्विलसत्फेनवितानपाण्डुराणि ] पृथोर्वारिधिवीचिमण्डलस्य अन्तर्मध्ये, विलसन्तः फेना इव वितानपाण्डुराणि वितानपाण्डुरद्युतीनि, शुभ्रवर्णानीत्यर्थः ; इत्युपमा। [ ध्वजांशुकानि, नवनिर्मोकरुचिं ] नवकञ्चुकशोभां, [ दधति स्म ]। 'समौ कञ्चुकनिर्मोकौ' इत्यमरः। निर्मोकरुचिमित्यत्रान्यधर्मस्यान्यत्रासम्बन्धेन, निर्मोकस्येवेति सादृश्याऽऽक्षेपादसम्भवद्वस्तुसम्बन्धनिदर्शना फेनपाण्डुरोपमयाऽङ्गेन सङ्कीर्यते ॥ ४७ ॥

कृतेति ।—[ जनता ] जनसमूहः। "ग्रामजन—" ( ४।२।४३ पा० ) इत्यादिना सामूहिकस्तल्प्रत्ययः। [ शिरसि, कृतमण्डलबन्धं ] कृतो मण्डलबन्धो वलयीभावो यस्मिन् कर्मणि तत्तथा, [ उल्लसद्भिः, प्रत्युरसम् ] उरसि उरसि। "प्रतेरुरसः सप्तमीस्थात्" ( ५।४।८२ पा० ) इति समासान्तोऽच्प्रत्ययः। [ विलम्बमानैः ] विशेषेण लम्बमानैः, [भुजङ्गभोगैः ] अहिकायैः, [ दलितेन्दीवरमालभारिणी ] विक-

परिवेष्टितमूर्त्तयश्च मूला-
दुरगैरा शिरसः सरत्नपुष्पैः ।
दधुरायतवल्लिवेष्टिताना-
मुपमानं मनुजा महीरुहाणाम् ॥ ४९ ॥
बहुलाञ्जनपङ्कपट्टनील-
द्युतयो देहमितस्ततः श्रयन्तः ।
दधिरे फणिनस्तुरङ्गमेषु
स्फुटपल्याणनिबद्धवर्ध्रलीलाम् ॥ ५० ॥

---

सितनीलोत्पलमालभारिणो, [इव] ; इत्युत्प्रेक्षा । [व्यरुचत्] व्यरोचिष्ट । "द्युद्भ्यो लुङि" ( १।३।९१ पा० ) इति विकल्पात्परस्मैपदम् ॥ ४८ ॥

परिवेष्टितेति ।—[ च ] किञ्चेति चार्थः, [ मूलात् ] पादमारभ्ये-त्यर्थः । ल्यब्लोपे पञ्चमी । * [ आ शिरसः ] शिरोऽन्तम् । "आङ्-मर्य्यादा—" ( २।१।१३ पा० ) इत्यादिना विकल्पादसमासः । रत्नैरेव पुष्पैः सह वर्त्तन्ते इति [ सरत्नपुष्पैः ] । "तेन सहेति तुल्ययोगे" ( २।२।२८ पा० ) इति बहुव्रीहिः । [ उरगैः, परिवेष्टितमूर्त्तयः ] वेष्टिताङ्गाः, [ मनुजाः, आयतवल्लिवेष्टितानाम् ] आयताभिर्वल्लीभि-र्लताभिः, वेष्टितानां, [महीरुहाणाम्, उपमानं] सादृश्यं, [दधुः] ; इत्यु-पमा ॥ ४९ ॥

बहुलेति ।—[ बहुलाञ्जनपङ्कपट्टनीलद्युतयः ] बहुलाञ्जनस्य सान्द्र-कज्जलस्य, पङ्कपट्टः पङ्कघनः, तद्वन्नीलद्युतयः श्यामभासः, [देहं] शरीरम्, [ इतस्ततः ] पुच्छपार्श्वादिस्थानेषु, [ श्रयन्तः ] भजन्तः, [ फणिनस्तुर-ङ्गमेषु, स्फुटपल्याणनिबद्धवर्ध्रलीलां] स्फुटानि उज्ज्वलानि, यानि पल्या-

---

* "ल्यब्लोपे कर्मण्यधिकरणे च" इति वार्त्तिकसूत्रम् ।

प्रसृतं रभसादयोऽभिनीला
प्रतिपादं परितोऽभिवेष्टयन्ती ।
तनुरायतिशालिनी महाऽहे-
र्गजमन्दूरिव निश्चलं चकार ॥ ५१ ॥

अथ सस्मितवीक्षितादवज्ञा-
चलितैकोन्नमितभ्रु माधवेन ।
निजकेतुशिरःश्रितः सुपर्णा-
दुदपप्तन्नयुतानि पक्षिराजाम् ॥ ५२ ॥

---

णेषु पल्ययनेषु, निबद्धानि वर्ध्राणि वरत्राः। 'वध्रं लपुवरत्रयोः' इति विश्वः। तेषां लीलां शोभां, [ दधिरे ] दधुः। वर्ध्रलीलामित्यत्रा-सम्भवद्वस्तुसम्बन्धान्निदर्शनोक्तलक्षणा ॥ ५० ॥

प्रसृतमिति।—[ अयोऽभिनीला ] अयसा अयोवत् इत्यर्थः, अभि-नीला; पादेषु [ प्रतिपादम् ]। विभक्त्यर्थेऽव्ययीभावः। [ अभि-वेष्टयन्ती ]; आयत्या आयतेन, दीर्घेण इत्यर्थः, शालते या सा [ आयतिशालिनी, महाऽहेः ] महोरगस्य, [ तनुः ] वपुः, [ अन्दूः ] शृङ्खला, [ इव ]। 'अन्दूस्तु शृङ्खलायां स्त्री' इति वैजयन्ती। [ रभसात् परितः, प्रसृतं ] प्रचरन्तं, [ गजं निश्चलं चकार ]। उपमा ॥ ५१ ॥

अथेति।—[ अथ ] नागपाशबन्धनानन्तरं, [ माधवेन ] कृष्णेन, [ अवज्ञाचलितैकोन्नमितभ्रु ] अवज्ञया अकिञ्चित्करत्वादनादरेण, चलिता प्रेरिता, एका उन्नमिता उत्क्षिप्ता, च भ्रूर्यस्मिन् कर्मणि तत् तथा। "गोस्त्रियोरुपसर्जनस्य" ( १।२।४८ पा० ) इति ह्रस्वत्वम्। [सस्मितवीक्षितात्] सस्मितं चैद्यचापल्यदर्शनात् समन्दहासं, वीक्षितात्, [ निजकेतुशिरःश्रितः ] निजध्वजाग्रस्थितात्। श्रयतेः क्विप्। [ सुप-

द्रुतहेमरुचः खगाः खगेन्द्रा-
दलघूदीरितनादमुत्पतन्तः ।
क्षणमैक्षिषतोच्चकैश्चमूभि-
र्ज्वलतः सप्तरुचेरिव स्फुलिङ्गाः ॥ ५३ ॥
उपमानमलाभि लोलपक्ष-
क्षणविक्षिप्तमहाऽम्बुवाहमल्यैः ।

---

र्णात् ]; पक्षिणां राजः राजानः तेषां [ पक्षिराजां ] पक्षिराजानां गरुत्मताम् । 'राजा राट् पार्थिवः' इत्यमरः । "अन्येभ्योऽपि दृश्यते" ( ३।२।१७८ पा० ) इति क्विप् । [ अयुतानि ] अयुतसङ्ख्याः, [उदपप्तन् ] उत्पेतुः । "पुषादि—" (३।१।५५ पा०) इति लुङि च्लेरङादेशः । "पतः पुम्" (७।४।१९ पा०) इति पुमागमः । "उदभूवन्" इति पाठे,—"भुवो वुक्—" (६।४।८८ पा०) इति वुगागमः । माधवस्य सुपर्णवीक्षणावस्थोचितभ्रूविक्षेपाऽऽदिचेष्टाविवरणात् स्वभावोक्तिः । तदुक्तं दण्डिना,—'नानाऽवस्थं पदार्थानां रूपं साक्षाद्विवृण्वती । स्वभावोक्तिश्च जातिश्च' (२ परि० ८ श्लोकः) इति, 'जातिक्रियागुणद्रव्यस्वभावाऽऽख्यानमीदृशम्' ( २ परि० १३ सङ्ख्याकश्लोकस्य पूर्वार्द्धम् ) इति च ॥ ५२ ॥

द्रुतेति ।—[ द्रुतहेमरुचः ] प्रतप्तकाञ्चनभासः ; इत्युपमा । [अलघूदीरितनादम् ] अलघु उच्चैः, उदीरितनादम् उच्चरितघोषं यथा तथा, [ खगेन्द्रात् ] गरुत्मतः, [ उत्पतन्तः ] उड्डयन्तः, [ खगाः ] सुपर्णाः, [ ज्वलतः ] प्रज्वलतः, [ सप्तरुचेः ] सप्तार्चिषोऽग्नेः, [ उच्चकैः ] ऊर्द्ध्वं प्रसृताः, [ स्फुलिङ्गा इव चमूभिः क्षणम्, ऐक्षिषत ] ईक्षिताः । ईक्षतेः कर्मणि लुङ् । अलोपमयोः सङ्करः ॥ ५३ ॥

उपमानमिति ।—[ गगनार्णवं ] गगनमर्णव इव गगनार्णवः तम्, [ अन्तरा ] तस्य मध्ये इत्यर्थः । "अन्तराऽन्तरेण युक्ते" ( २।३।४ पा० )

गगनार्णवमन्तरा सुमेरोः
कुलजानां गरुडैरिलाधराणाम् ॥ ५४ ॥
पततां परितः परिस्फुरद्भिः
परिपिङ्गीकृतदिङ्मुखैर्मयूखैः ।
सुतरामभवद्दुरीक्ष्यबिम्ब-
स्तपनस्तत्किरणैरिवाऽऽत्मदर्शः ॥ ५५ ॥

---

इति द्वितीया । अत्रार्णवस्यैकत्वेऽपि तदेकदेशापेक्षया भेदवत्त्वेन मध्यप्रतियोगित्वसम्भवात् न द्वितीयाऽनुपपत्तिः । [ लोलपक्षक्षणविक्षिप्तमहाऽम्बुवाहमत्स्यैः ] लोलैः पक्षैः क्षणाद्विक्षिप्ता महाऽम्बुवाहा मत्स्या इव यैस्तैः, [ गरुडैः ] गरुत्मद्भिः, [ सुमेरोः कुलजानां ] हेमाद्रिवंश्यानाम्, अन्येषामहिरण्मयतया गरुडसाम्यासम्भवादित्यर्थः । [ इलाधराणां ] भूधराणाम्, अर्णवान्तश्चराणामित्यर्थः । 'गौरिला कुम्भिनी क्षमा' इति कोषः । [ उपमानं ] सादृश्यम्, [ अलाभि ] अलम्भि । लभेः कर्मणि लुङि "विभाषा चिण्णमुलोः" ( ७।१।६९ पा० ) इति विकल्पात् नुमभावः । अत्रेलाधराणामुपमानमिति व्यस्तोपमाया अन्याभ्यां समासगताभ्यामङ्गाङ्गिभावेन सङ्करः ॥ ५४ ॥

पततामिति ।—[ परितः परिस्फुरद्भिः ] स्वविषयसङ्क्रमात् समन्तादुल्लसद्भिः, अत एव [ परिपिङ्गीकृतदिङ्मुखैः ] परिपिङ्गीकृतानि सौवर्णत्वात् पिशङ्गीकृतानि, दिङ्मुखानि यैस्तैः, [ पततां ] पक्षिणां, [ मयूखैः, तपनः ] सूर्य्यः, [ तत्किरणैः ] तपनकिरणैः, सङ्क्रान्तैरिति भावः ; आत्मा स्वरूपं दृश्यतेऽत्र इति [ आत्मदर्शः ] दर्पणः, [ इव, सुतरां दुरीक्ष्यबिम्बः अभवत् ] स्वत एव दुर्दर्श इदानीमतिदुर्दर्शोऽभूदित्यर्थः । अत्र तपनस्य दुरीक्ष्यत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ५५ ॥

दधुरम्बुधिमन्थनाद्रिमन्थ-
भ्रमणाऽऽयस्तफणीन्द्रपित्तजानाम् ।
रुचमुल्लसमानवैनतेय-
द्युतिभिन्नाः फणभारिणो मणीनाम् ॥५६॥
अभितः क्षुभिताम्बुराशिधीर-
ध्वनिराकृष्टसमूलपादपौघः ।
जनयन्नभवद्युगान्तशङ्का-
मनिलो नागविपक्षपक्षजन्मा ॥ ५७ ॥

---

दधुरिति ।—[ उल्लसमानवैनतेयद्युतिभिन्नाः ] उल्लसमानाभिः दीप्यमानाभिः, वैनतेयानां द्युतिभिः भिन्नाः संवलिताः, [ फणभारिणः ] फणाभृतः, [ अम्बुधिमन्थनाद्रिमन्थभ्रमणाऽऽयस्तफणीन्द्रपित्तजानाम् ] अम्बुधिमन्थने समुद्रमन्थने, अद्रेर्मन्दराद्रेरेव, मन्थस्य मन्थनदण्डस्य, भ्रमणेन आयस्तस्य निष्पीडितस्य, फणीन्द्रस्य वासुकेः, पित्तात् पित्तधातोः, जातास्तज्जास्तेषाम् । 'वैशाखमन्थमन्थानमन्थनो मन्थदण्डके' इत्यमरः । मथेर्भौवादिकस्येदित्त्वात् सर्वत्र नुमागमः । [ मणीनां ] मरकतानां, [ रुचं दधुः ]; वैनतेयपीतिमसम्भेदात् कृष्णोरगा मरकतच्छायामाच्छन्नित्यर्थः । अत्रान्यस्यान्यधर्मायोगेन रुचमिवेति सादृश्याऽऽक्षेपादसम्भवद्वस्तुसम्बन्धात् निदर्शनाऽलङ्कारः ॥ ५६ ॥

अभित इति ।—[ अभितः ] उभयतः, [ क्षुभिताम्बुराशिधीरध्वनिः ] क्षुभितो योऽम्बुराशिः उद्वेलाम्बुराशिः, तद्वद्धीरध्वनिः गम्भीरध्वनिः ; इत्युपमा । [आकृष्टसमूलपादपौघः] आकृष्टाः पाटिताः, समूलाः पादपौघाः तरुसमूहाः येन सः । अत्र पादपोन्मूलनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । [युगान्तशङ्कां जनयन्] कल्पक्षयोत्प्रेक्षां जनयन् ; इत्यपि

प्रचलत्पतगेन्द्रपत्रवात-
प्रसभोन्मूलितशैलदत्तमार्गैः ।
भयविह्वलमाशु दन्दशूकै-
र्विवशैराविविशे स्वमेव धाम ॥ ५८ ॥

खचरैः क्षयमक्षयेऽहिसैन्ये
सुकृतैर्दुष्कृतवत् तदोपनीते ।
अयुगार्चिरिव ज्वलन् रुषाऽसौ
रिपुरौदर्चिषमाजुहाव मन्त्रम् ॥ ५९ ॥

---

सैवातिशयोक्तिः । [ नागविपक्षपक्षजन्मा ] गरुड़पक्षोद्भवः, [ अनिलः, अभवत् ] उदभवदित्यर्थः ॥ ५७ ॥

प्रचलदिति ।—[ प्रचलत्पतगेन्द्रपत्रवातप्रसभोन्मूलितशैलदत्तमार्गैः ] प्रचलतां पतगेन्द्राणां ये पत्रवातास्तैः प्रसभम् उन्मूलितैः आकृष्टैः, उत्पाटितैरित्यर्थः, शैलैर्दत्तो मार्गो रन्ध्रं येभ्यस्तैः, [विवशैः] परवशैः, निश्चेष्टैरित्यर्थः ; गर्हितं दशन्ति भृशमिति [दन्दशूकैः] सर्पैः । 'दन्दशूको बिलेशयः' इत्यमरः । "लुपसदचर—" (३।१।२४ पा०) इत्यादिना दंशेर्भावगर्हायां यङ् । "जपजभदहदशभञ्जपशाञ्च" ( ७।४।८६ पा० ) इति अभ्यासस्य नुगागमः । "यजजपदशां यङः" ( ३।२।१६६ पा० ) इति दंशेर्यङन्तादूकञ्प्रत्ययः । [ भयविह्वलं ] भयेन विह्वलं विक्षिप्तं, विचिलम् इत्यर्थः, यथा तथा, [ आशु, स्वमेव धाम ] पातालमेव, [ आविविशे ], तार्क्ष्यपत्रपवनोन्मूलितशैलरन्ध्रवर्त्मनैव पातालं प्रविष्टमित्यर्थः । विशेः कर्मणि लिट् । दन्दशूकानां रन्ध्रप्रवेशासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ५८ ॥

खचरैरिति ।—खे चरन्तीति [ खचरैः ] वैनतेयैः । "चरेष्टः" ( ३।२।१६ पा० ) इति टः । "तत्पुरुषे कृति बहुलम्" ( ६।३।१४

सहसा दधदुद्धताट्टहास-
श्रियमुत्त्रासितजन्तुना स्वनेन ।
वितताऽऽयतहेतिबाहुरुच्चै-
रथ वेताल इवोत्पपात वह्निः ॥ ६० ॥

चलितोद्धतधूमकेतनोऽसौ
रभसादम्बररोहिरोहिताश्वः ।

---

पा० ) इति लुग्विकल्पः । [ अवधे ] अनन्ते, [ अहिसैन्ये ] सर्पसङ्घे, [ सुकृतैः ] हरिस्मरणादिपुण्यैः, [ दुष्कृतवत् ] ब्रह्महत्याद्येनोवत् । "तत्र तस्येव" (५।१।११६ पा० ) इति तत्रार्थे वतिप्रत्ययः । [ क्षयमुपनीते ] नाशं गमिते सति, [ तदा ] तत्काले, [ रुषा ] पौरुषवैफल्यरोषेण, [ अयुगार्चिः इव ] सप्तार्चिरिव, [ ज्वलन् ] दीप्यमानः, [असौ रिपुः] चैद्यः ; उदर्चिष इमम् [ औदर्चिषम् ] आग्नेयं, [ मन्त्रम्, आजुहाव ] आहूतवान्, जजापेत्यर्थः । ह्वयतेर्लिट्, "अभ्यस्तस्य च" ( ६।१।३३ पा० ) इति द्विर्वचनात् प्रागेव सम्प्रसारणम् । दुष्कृतवदिति तद्धितगता श्रौती पूर्णोपमा ॥ ५८ ॥

सहसेति ।—[अथ] आग्नेयास्त्राऽऽह्वानानन्तरम्, [उत्त्रासितजन्तुना] भीषितप्राणिकेन, [ स्वनेन ] ध्वनिना, [ उद्धताट्टहासश्रियं ] महाऽट्टहाससम्पदं, [ दधत् ], तेनैवाट्टहासवान्, तत्तुल्यनादवानित्यर्थः ; [विततऽऽयतहेतिबाहुः ] वितताः प्रसारिताः, आयता दीर्घाः, हेतयो ज्वालाः, बाहव इव हेतिबाहवो यस्य सः, [वह्निः, वेतालः] भूतविशेषः, सः [ इव, सहसा ] झटिति, [ उच्चैः ] ऊर्ध्वम्, [ उत्पपात ] उत्तस्थौ । उपमा ॥ ६० ॥

चलितेति ।—[चलितोद्धतधूमकेतनः] चलितश्चलंश्च, उद्धत उन्नतश्च, धूम एव केतनं केतुः यस्य सः, [रभसात्] वेगात्, [अम्बररोहिरोहिताश्वः]

द्रुतमारुतसारथिः शिखावान्
कनकस्यन्दनसुन्दरश्चचाल ॥ ६१ ॥

ज्वलदम्बरकोटरान्तरालं
बहुलाऽऽर्द्राम्बुदपत्त्रबद्धधूमम् ।
परिदीपितदीर्घकाष्ठमुच्चै-
स्तरुवद्विश्वमुवोष जातवेदाः ॥ ६२ ॥

गुरुतापविशुष्यदम्बुशुभ्राः
खगमालग्नकृशानुताम्रभासः ।

---

अम्बररोहिणो रोहिता वाहनमृगाः, अश्वा इव यस्य सः, [ द्रुतमारुत-सारथिः ] द्रुतमारुताः शीघ्रवाता एव, सारथिर्यस्य सः, [ कनकस्यन्दन-सुन्दरः ] कनकद्रववद्रम्यः; इत्युपमा। [ असौ ]; शिखा ज्वाला अस्य सन्तीति [ शिखावान् ] आशुशुक्षणिः, [ चचाल ] ॥ ६१ ॥

ज्वलदिति।—जातं वेदो धनं यस्मात् [ जातवेदाः ] तनूनपात्, [ ज्वलदम्बरकोटरान्तरालम्] अम्बरं कोटरमिव तस्यान्तरालम् अभ्यन्तरं, ज्वलत् यस्य तत्, [ बहुलाऽऽर्द्राम्बुदपत्त्रबद्धधूमं ] बहुलाः सान्द्राः, आर्द्राम्बुदाः पत्त्राणीव तेषु बद्धधूमं, [ परिदीपितदीर्घकाष्ठं ] परि-दीपिताः प्रज्वलिताः, दीर्घाः काष्ठा दिशः, काष्ठानीव यस्य तत्, [उच्चैः] उन्नतं, [ विश्वं ] जगत्; तरुणा तुल्यं [ तरुवत् ] तरुमिवेत्यर्थः। तुल्यार्थे वतिप्रत्ययः। [ उवोष ] ददाह। 'उष दाहे' लिट् लघू-पधगुणे पश्चात् द्विर्भावः। "अभ्यासस्यासवर्णे" ( ६।४।७८ पा० ) इत्युवङादेशः, अनादिष्टादचः पूर्वत्वेन गुणस्य स्थानिवत्त्वाभावात्। तरुवदिति स्पष्टोपमालिङ्गात् सर्वलोपमितसमासः ॥ ६२ ॥

गुर्विति।—[ गुरुतापविशुष्यदम्बुशुभ्राः ] गुरुतापेन अतिदाहेन,

स्वमसारतया मसीभवन्तः
पुनराकारमवापुरम्बुवाहाः ॥ ६३ ॥
ज्वलितानललोलपल्लवान्ताः
स्फुरदष्टापदपत्रपीतभासः ।
क्षणमात्रभवामभावकाले
सुतरामापुरिवाऽऽयतिं पताकाः ॥ ६४ ॥
निखिलामिति कुर्वतश्चिराय
द्रुतचामीकरचारुतामिव द्याम् ।

---

विशुष्यदम्बवः क्षीयमाणोदकाः, अत एव शुभ्राश्चेति विशेषणसमासः । ततः [ क्षणम्, आलग्नकृशानुताम्रभासः ] आलग्नेन कृशानुना ताम्रभासो रोहितवर्णाः, अथ [ असारतया ] जलशोषान्निःसारतया, [ मसीभवन्तः अम्बुवाहाः पुनः, स्वमाकारं ] नीलरूपम्, [ अवापुः ] । अत्र मेघानां मसीभावाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

ज्वलितेति ।—[ ज्वलितानललोलपल्लवान्ताः ] ज्वलितेन प्रज्वलता, अनलेन अनलपातेन, लोलाः पल्लवान्ताः अञ्चलाग्राणि यासां ताः, [ स्फुरदष्टापदपत्रपीतभासः ] स्फुरद्भिः दीप्यमानैः, अष्टापदपत्रैः कनकरचनाभिः, पीतभासः पिङ्गलवर्णाः, [ पताकाः ] वैजयन्त्यः, [ अभावकाले ] विनाशकाले, [ क्षणमात्रभवां ] क्षणमात्रभाविनीं, क्षणमात्रस्थायिनीमित्यर्थः, [ आयतिं ] दैर्घ्यं, [ सुतरामापुरिव ] ; प्रदीपवदिति भावः । अष्टसु लोहेषु पदम् अस्येत्यष्टापदम् । "अष्टनः संज्ञायाम्" ( ६।३।१२५ पा० ) इति दीर्घः । 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमरः ॥ ६४ ॥

निखिलामिति ।—[ अथ ] अनन्तरं, [ मुरारिः, इति ] इत्थं,

प्रतिघातसमर्थमस्त्रमग्ने-
रथ मेघङ्करमस्मरत् मुरारिः ॥ ६५ ॥
चतुरम्बुधिगर्भधीरकुक्षे-
र्वपुषः सन्धिषु लीनसर्वसिन्धोः।
उदगुः सलिलाऽऽत्मनस्त्रिधाम्नो
जलवाहाऽऽवलयः शिरोरुहेभ्यः ॥ ६६ ॥

---

[ निखिलां, द्याम् ] आकाशं, [द्रुतचामीकरचारुतां] प्रतप्तहेमकर्बुराम्, [ इव ]; इत्युत्प्रेक्षा। [ चिराय कुर्वतोऽग्नेः, प्रतिघातसमर्थं ] प्रशमनक्षमम्; मेघान् करोतीति [ मेघङ्करं ] मेघजननम्। "मेघर्त्तिभयेषु कृञः" ( ३।२।४३ पा० ) इति खच्प्रत्ययः। "अरुर्द्विषदजन्तस्य मुम्" ( ६।३।६७ पा० ) इति मुमागमः। [ अस्त्रं ] वारुणास्त्रम्, [ अस्मरत् ] अध्याहरत् * ॥ ६५ ॥

चतुरिति।—[ चतुरम्बुधिगर्भधीरकुक्षेः ] चत्वारोऽम्बुधय एव गर्भस्तेन धीरो गम्भीरः, कुक्षिर्यस्य तस्य, [ वपुषः सन्धिषु, लीनसर्वसिन्धोः ] लीनाः सर्वाः सिन्धवो नद्यो यस्य तस्य, [ सलिलाऽऽत्मनः ] तोयाऽऽत्मकस्य; त्रीणि धामानि स्थानानि भूरादीनि सत्वादीनि वा यस्य तस्य [ त्रिधाम्नः ] हरेः, [ शिरोरुहेभ्यः, जलवाहाऽऽवलयः ] मेघपरम्पराः, [ उदगुः ] उद्भूवुः। "इणो गा लुङि" ( २।४।४५ पा० ) इति गाऽऽदेशे "गातिस्था—" ( २।४।७७ पा० ) इत्यादिना सिचो लुक्। 'यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु। कुक्षौ समुद्राश्चत्वारस्तस्मै तोयाऽऽत्मने नमः॥' ( महा० शान्तिपर्व० ४७ अध्या० ६० श्लोकः ) इत्यागमोक्तं प्रमाणमिति भावः ॥ ६६ ॥

---

* "अध्याहरत्" इत्यत्र "दध्यौ, आजहार इत्यर्थः" इति पाठान्तरम्।

ककुभः कृतनादमास्तृणन्त-
स्तिरयन्तः पटलानि भानुभासाम् ।
उदनंसिषुरभ्रमभ्रसङ्घाः
सपदि श्यामलिमानमानयन्तः ॥ ६७ ॥

तपनीयनिकर्षराजिगौर-
स्फुरदुत्तालतडिच्छटाऽट्टहासम् ।
अनुबद्धसमुद्धताम्बुवाह-
ध्वनिताऽऽडम्बरमम्बरं बभूव ॥ ६८ ॥

---

ककुभ इति ।—[ कृतनादं ] कृतगर्जनं * यथा तथा, [ ककुभः, आस्तृणन्तः] आच्छादयन्तः। स्तृणातेर्लटः शत्रादेशः। "श्नाभ्यस्तयोः—" (६।४।११२ पा०) इत्याकारलोपः। [भानुभासाम्] अर्कांशूनां, [पटलानि, तिरयन्तः ] तिरस्कुर्वन्तः। तिरःशब्दात् "तत्करोति—" ( ग० ) इति ण्यन्ताल्लटः शत्रादेशः, णाविष्ठवद्भावाट्टिलोपः। [ अभ्रम् ] आकाशं, [ श्यामलिमानमानयन्तः ] श्यामलत्वं प्रापयन्तः, [अभ्रसङ्घाः ] मेघौघाः, [ सपदि ] सद्यः, [ उदनंसिषुः ] उत्पेतुः। उत्पूर्वात् नमतेर्लुङि "यमरमनमातां सक् च" ( ७।२।७३ पा० ) इति सगिडागमौ, "नेटि" (७।२।४ पा०) इति वृद्धिप्रतिषेधः। स्वभावोक्तिः ॥ ६७ ॥

तपनीयेति ।—[तपनीयनिकर्षराजिगौरस्फुरदुत्तालतडिच्छटाऽट्टहासं] तपनीयस्य हेम्नः, निकर्षराजयः कषणलेखा इव, गौर्य्यः पीताः। 'गौरोऽरुणे सिते पीते' इत्यमरः। स्फुरन्त्यः, उत्ताला उद्धताः, तडिच्छटा विद्युल्लताः, एवाट्टहासा यस्य तत्तथोक्तम्, [अनुबद्धसमुद्धताम्बुवाहध्वनिताऽऽडम्बरम्] अनुबद्धोऽनुस्यूतः, समुद्धतः तारः, अम्बुवाहानां ध्वनिताऽऽडम्बरो

---

* "कृतगर्जारावम्" इति पाठान्तरम् ।

सवितुः परिभावुकैर्मरीची-
नचिराभ्यक्तमतङ्गजाङ्गभाभिः ।
जलदैरभितः स्फुरद्भिरुच्चै-
र्विदधे केतनतेव धूमकेतोः ॥ ६९ ॥

ज्वलतः शमनाय चित्रभानोः
प्रलयाऽऽप्लावमिवाभिदर्शयन्तः ।
वृषवद्वृषनादिनो नदीनां
प्रतटाऽऽरोपितवारि वारिवाहाः ॥ ७० ॥

---

गर्जिताऽऽडम्बरो यस्य तत्, [ अम्बरं बभूव ], तदाऽम्बुवाहैर्विद्युत्प्रभाभिर्गर्जिताऽऽडम्बरैश्चाट्टहासं कुर्वद्भिरिवाम्बरं बभावित्यर्थः । व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा ॥ ६८ ॥

सवितुरिति ।—[ सवितुः, मरीचीन् ] मयूखान्, [ परिभावुकैः ] तिरस्कुर्वद्भिः । "लषपत—" ( ३।२।१५४ पा० ) इत्यादिना उकञ्प्रत्यये "न लोका—" ( २।३।६९ पा० ) इत्यादिना षष्ठीप्रतिषेधः । [ अचिराभ्यक्तमतङ्गजाङ्गभाभिः ] अचिराभ्यक्तस्य सद्यःकृताभ्यङ्गस्य, मतङ्गजाङ्गस्य नागदेहस्य, इव भासो येषां तैस्तथोक्तैः । "भोभगो—" ( ८।३।१७ पा० ) इत्यादिना रोर्यकारस्य "हलि सर्वेषाम्" ( ८।३।२२ पा० ) इति लोपः । [ अभितः, स्फुरद्भिः ] जृम्भमाणैः, [ उच्चैः ] उन्नतैः, [जलदैः, धूमकेतोः] अग्नेः, [केतनता] केतुत्वं, [विदधे इव] विहितेव, धूमकेतोः केतुत्वं प्राप्तमित्यर्थः । उत्प्रेक्षाऽलङ्कारः ॥ ६९ ॥

ज्वलत इति ।—[ ज्वलतः, चित्रभानोः ] अग्नेः, [ शमनाय, प्रलयाऽऽप्लावं ] प्रलये कल्पान्ते, य आप्लावो महापूरः तम्, [अभिदर्शयन्त इव]; इत्युत्प्रेक्षा । वृषवत् वृषभवत् नदन्ति गर्जन्तीति [ वृषनादिनः ] । "कर्त्तर्य्युपमाने" ( ३।२।७९ पा० ) इति णिनिः । अत एवोपमा ।

**मधुरैरपि भूयसा स मेध्यैः**
**प्रथमं प्रत्युत वारिभिर्दिदीपे ।**
**पवमानसखस्ततः क्रमेण**
**प्रणयक्रोध इवाशमद्विवादैः ॥ ७१ ॥**

वारि वहन्तीति [ वारिवाहाः ] मेघाः । "कर्मण्यण्" ( ३।२।१ पा० ) इत्यण् । [नदीनां, प्रतटाऽऽरोपितवारि] प्रतटेषु प्रतीरेषु, आरोपितानि भावितानि, वारीणि यस्मिन् कर्मणि तद्यथा तथा, [ ववृषुः ]; प्रलयकालमेघवदवर्षन्नित्यर्थः ॥ ७० ॥

मधुरैरिति ।—पवत इति पवमानो वायुः । "पूङ्यजोः शानन्" ( ३।२।१२८ पा० ) इति शानन् । * तस्य सखा [पवमानसखः ] अग्निः । "राजाहःसखिभ्यष्टच्" (५।४।९१ पा०) इति टच् । मैत्रीमात्रविवक्षायामयं निर्देशः, स्वसहकारिणी मैत्रीति नियमात् । सहकारित्वाविवक्षायां वैपरीत्यात् बहुव्रीहौ तु न समासान्तः । स्वामी तु 'रोहिताश्वो वायुसखा' इति असमासान्तपाठेन बहुव्रीहिमाह ; अत्रापि तथा पाठे न कश्चिदुपद्रवः । † [ सः ] अग्निः, [ मधुरैः ] प्रियैः, [ अपि, विवादैः ] विविधवाक्यैः, [ प्रणयक्रोधः ] प्रणयप्रयुक्तकोपः, [ इव ] मधुरैः स्वादुभिः, अनुद्दीपकैरित्यर्थः, [ मेध्यैः ] मेघभवैः । "दिगादिभ्यो यत्" ( ४।३।५४ पा० ) इति यत् । [ वारिभिः प्रथमं, प्रत्युत ] वैपरीत्येनापि । 'प्रत्युतेति वैपरीत्ये' इति गणव्याख्याने । [ भूयसा ]

* खुलादिवत् स्वतन्त्रोऽयं, न तु शतादिवन्नाऽऽदेशः इति तत्त्वबोधिनीकाराः प्राहुः ।

† "राजाहःसखिभ्यष्टच्" ( ५।४।९१ पा० ) इति सूत्रस्य कर्मधारयतत्पुरुषद्विगुसमासमात्रविषयतया बहुव्रीहौ टचः अप्राप्तेः, वायुः सखा यस्य इति बहुव्रीहौ वायुसखा इति पदसिद्धिः । वायोः सखा इति तत्पुरुषे तु टचः प्राप्तेः वायुसखः इति पदं भवति इति टीकाकृतामाशयः ।

परित: प्रसभेन नीयमान:
शरवर्षैरवसायमाश्रयाश: ।
प्रबलेषु कृती चकार विद्यु-
द्व्यपदेशेन घनेष्वनुप्रवेशम् ॥ ७२ ॥

प्रयत: प्रशमं हुताशनस्य
क्वचिदालक्ष्यत मुक्तमूलमर्चि: ।
बलभित्प्रहिताऽऽयुधाभिघातात्
त्रुटितं पक्षिपतेरिवैकपत्रम् ॥ ७३ ॥

---

अत्यन्तं, भृशमित्यर्थ:, [ दिदीपे ] प्रजज्वाल ; [ तत: क्रमेण, अशमत् ] शान्तोऽभूत् । शाम्यतेर्लुङि "पुषादि—" ( ३।१।५५ पा० ) इति च्लेरङा-देश: । जलाऽऽहतोऽग्निर्ज्वलितो नश्यति , प्रणयकोपोऽपि प्रियै: भृशा-यित्वा शाम्यतीति प्रसिद्धम् । उपमा ॥ ७१ ॥

परित इति ।—[ परित:, प्रसभेन ] बलात्कारेण, [ शरवर्षै: ] नीरसेकै: । 'शरं नीरे शरो बाणे' इति विश्व: । [ अवसायम् ] अवसादं, [ नीयमान:, कृती ] कुशल: ; आश्रयमश्नातीति [आश्रयाश:] अग्नि: । "कर्मण्यण्" ( ३।२।१ पा० ) इत्यण् । [ प्रबलेषु, घनेषु ] मेघेषु, [ विद्युद्व्यपदेशेन ] तडिच्छलेन, [ अनुप्रवेशं चकार ] ; अस्या-ग्निर्विद्युद्रूपेण मेघेष्वेव प्रविष्ट: । बलवताऽभिभूतस्य विदेशगमनं तदनुप्रवेशो वेति नीतेरिति भाव: । अत्र विशेषणसाम्यादग्नावप्रकृत-दुर्बलत्वप्रतीते: समासोक्ति: ॥ ७२ ॥

प्रयत इति ।—[ प्रशमं ] नाशं, [ प्रयत: ] गच्छत: ; प्रैतीति प्रयन्, तस्य प्रयत: । इण: शतरि यणादेश: । [ हुताशनस्य ] अग्ने: सम्बन्धि, [ मुक्तमूलं ] त्यक्तमूलं, त्यक्ताऽऽश्रयमित्यर्थ:, [ अर्चि: ] ज्वाला ।

व्यगमन् सहसा दिशां मुखेभ्यः
शमयित्वा शिखिनं घनाघनौघाः ।
उपकृत्य निसर्गतः परेषा-
मुपरोधं न हि कुर्वते महान्तः ॥ ७४ ॥

कृतदाहमुदर्चिषः शिखाभिः
परिषिक्तं मुहुरम्भसा नवेन ।
विगताम्बुधरव्रणं प्रपेदे
गगनं तापितपायितासिलक्ष्मीम् ॥ ७५ ॥

---

'ज्वालाभासोर्नपुंस्यर्चिः" इत्यमरः । [बलभित्प्रहिताऽऽयुधाभिघातात्] बलभिदा शक्रेण, प्रहितस्य प्रयुक्तस्य, आयुधस्य वज्रस्य, अभिघातात् प्रहारात्, [ लुटितं ] छिन्नं, [ पत्रिपतेः ] पक्षिराजस्य, गरुत्मतः इत्यर्थः, [ एकपत्रम् ] एकं पत्रं पक्षम्, [ इव क्वचित्, आलक्ष्यत ] अदृश्यत ; इत्युपमा । पुरा मातृदास्यविमोक्षायामृतमाहरता गरुडेनेन्द्रप्रयुक्तवज्रगौरवादेकं पत्रं त्यक्तमित्यागमः ॥ ७३ ॥

व्यगमन्निति ।—[ घनाघनौघाः ] वर्षुकाब्दसमूहाः । 'शक्रघातुकमत्तेभवर्षुकाब्दा, घनाघनाः' इत्यमरः । [ शिखिनम् ] अग्निं, [ शमयित्वा सहसा दिशां मुखेभ्यः, व्यगमन् ] अपसस्रुः । गमेर्लुङि "पुषादि—"(३।१।५५ पा०) इति च्लेरङादेशः । तथा हि,—[महान्तः, निसर्गतः ] स्वभावादेव, [ परेषाम्, उपकृत्य ] उपकारं कृत्वा, [ उपरोधं न हि कुर्वते ] । महतां निष्फलावस्थानं परोपरोधायेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७४ ॥

कृतेति ।—[ उदर्चिषः ] अग्नेः, [ शिखाभिः ] ज्वालाभिः, [ कृतदाहं ] विहिततपनं, ततः [ नवेनाम्भसा मुहुः परिषिक्तं, विगताम्बु-

इति नरपतिरस्त्रं यद्यदाविश्चकार
प्रकुपित इव रोगः क्षिप्रकारी विकारम् ।
भिषगिव गुरुदोषच्छेदिनोपक्रमेण
क्रमविदथ मुरारिः प्रत्यहंस्तत्तदाशु ॥ ७६ ॥

शुद्धिं गतैरपि परामृजुभिर्विदित्वा
बाणैरजय्यमविघट्टितमर्मभिस्तम् ।
मर्मातिगैरनृजुभिर्नितरामशुद्धै-
र्वाक्सायकैरथ तुतोद तदा विपक्षः ॥७७॥

---

धरव्रणं ] विगता अम्बुधरा एव व्रणा दोषा यस्य तत्, [ गगनं, तापित-पायितासिलक्ष्मीं ] तापितस्तापं प्रापितः, स चासौ पायितः पानं कारितः । पिबतेर्ण्यन्तात् कर्मणि क्तः । "शाच्छासाह्वाव्यावेपां युक्" ( ७।३।३७ पा० ) इति युगागमः । तस्य तापितपायितस्य तप्त-सिक्तस्य, असेः खड्गस्य, लक्ष्मीं, [ प्रपेदे ] प्राप, इति निदर्शनाऽलङ्कारः अम्बुधरव्रणेति रूपकसङ्कीर्णः ॥ ७५ ॥

इतीति ।—[ इति ] इत्थम् ; क्षिप्रं करोतीति [ क्षिप्रकारी ] शीघ्र-प्रयोक्ता ; अन्यत्र,—विकारकारी, [ नरपतिः ] चैद्यः, [ प्रकुपितः ] प्रक्षुभितः सन्, [ यद्यदस्त्रम् आविश्चकार रोगो विकारमिव अथ, क्रमवित् ] परिपाटीवेदी, [ मुरारिः, भिषक् ] वैद्यः, [ इव, गुरु-दोषच्छेदिना ] गुरुदोषप्रतिघातकेन दोषनिवर्त्तकेन च, [ उपक्रमेण ] उपायेन, प्रत्यस्त्रप्रयोगेणेत्यर्थः ; अन्यत्र,—महौषधप्रयोगेण, [ तत्तत् ] अस्त्रम्, [ आशु ] शीघ्रं, तद्विकारमिवेति भावः ; [ प्रत्यहन् ] प्रति-जघान । हन्तेर्लङ्, अदादित्वाच्छपो लुक्, "हल्ङ्याप्—" ( ६।१।६८ पा० ) इति तिलोपे रूपम् । उपमा ॥ ७६ ॥

शुद्धिमिति ।—[ तदा ] तस्मिन् समये, [ विपक्षः ] अरिः, चैद्यः इति

राहुस्त्रीस्तनयोरकारि सहसा येनाश्लथाऽऽलिङ्गन-
व्यापारैकविनोददुर्ललितयोः कार्कश्यलक्ष्मीर्वृथा ।
तेनाऽऽक्रोशत एव तस्य मुरजित्तत्काललोलानल-
ज्वालापल्लवितेन मूर्द्धविकलं चक्रेण चक्रे वपुः ॥ ७८ ॥

---

यावत्, [ पराम् ] उत्कृष्टां, [ शुद्धिं ] लोहशुद्धिं, [ गतैः ऋजुभिरपि, अविघट्टितमर्मभिः ] अस्पृष्टमर्मस्थानैः, [ बाणैः, तं ] हरिम्, [ अजय्यं ] जेतुमशक्यम् । "क्षय्यजय्यौ शक्यार्थे" ( ६।१।८१ पा० ) इति निपातः । [ विदित्वा, अथ ] अस्मिन्नवसरे ; मर्माणि अतिगच्छन्तीति [ मर्मातिगैः ] मर्मभेदिभिः, [ अनृजुभिः ] वक्रैः, [ नितराम्, अशुद्धैः ] अपवित्रैः ; वाच एव सायकास्तैः [ वाक्सायकैः ] ; इति रूपकम् । [ तुतोद ] व्यथयामास । चक्रप्रयोगस्यायमुपोद्घात इति भावः । अत्र वाक्सायकानां प्रसिद्धसाधनव्यतिरेकोक्तेर्व्यतिरेकरूपकयोः सङ्करः । * वसन्ततिलका वृत्तम् ॥ ७७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाऽऽख्ये विंशतितमः सर्गः ॥ २० ॥

---

अधस्तात् न्यस्तयोः श्लोकयोः मल्लिनाथकृता व्याख्या नोपलभ्यते, या च पुस्तकान्तरे तत्कृता व्याख्येति दृश्यते, साऽपि नास्माभिः मल्लिनाथविरचिततया सम्यक् मन्यते, तेन हि तौ यथामति विशदीकृत्यात्र व्याख्यायेते ।—

अथेदानीं प्रतिनायकस्य चैद्यस्य विवर्णितस्य वधोत्कीर्त्तनेन काव्यमुपसंहरति, राहुस्त्रीति ।—मुरं तन्नामप्रसिद्धमसुरविशेषं जयति यः सः [ मुरजित् ] हरिः, [ येन, चक्रेण ] सुदर्शननाम्नैयेनास्त्रविशेषेण, [ अश्लथाऽऽलिङ्गनव्यापारैकविनोददुर्ललितयोः ] अश्लथः सुदृढः, यः आलिङ्गनव्यापारः समाश्लेषक्रिया, राहुकर्तृकेत्यर्थः, स एव एकः मुख्यः । "एके मुख्यान्यकेवलाः" इत्यमरः । विनोदः कौतूहलं, समधिकसमालिङ्गनस्पृहाजनितमिति भावः, तेन हेतुना दुर्ललितौ तत्र लोलुपतया अतीव

---

* अत्रोपमेयभूतानां प्रसिद्धसाधनानां बाणानां वाक्सायकेभ्यः न्यूनत्वप्रतिपादनात् व्यतिरेकालङ्कारः इत्यभिप्रायः ।

**श्रिया जुष्टं दिव्यैः सपटहरवैरन्वितं पुष्पवर्षै-**
**र्वपुष्टश्चैद्यस्य क्षणमृषिगणैस्तूयमानं निरीय।**

---

दुर्विनीतौ तयोः, राहुकर्तृकदृढतरसमाश्लेषस्पृहयोरिति भावः, [ राहुस्त्रीस्तनयोः ] राहुरमणीकुचयोः, [ कार्कश्यलक्ष्मीः ] निरतिशयकाठिन्यसुषमेत्यर्थः, [ वृथा ] विफला, [ अकारि ] कृता ; समुद्रमन्थनोद्भूतामृतपानावसरे भगवता निशित-सुदर्शनास्त्रेण निकृत्तस्य शिरोमात्रावशिष्टस्य राहोः आलिङ्गनसुखमनधिगतवत्याः तत्पत्न्याः स्तनयोः तथाविधं कार्कश्यम् उपयोगाभावात् व्यर्थीभूतमभूदित्यभिप्रायः। [ तत्काललीलानलज्वालापल्लवितेन ] तत्काले तस्मिन् समये, लोलाभिः चञ्चलाभिः, समन्तात् प्रसृतदीधितिभिरित्यर्थः, अनलज्वालाभिः पावकहेतितितिभिः, पल्लवितेन सञ्जातपल्लवेन। तारकादित्वादितच्। परितः प्रक्षिप्तमरीचिकलया आताम्रबाल-किसलयवद्विकाशमानेनेत्यर्थः, [ तेन ] चक्रेण, [ आक्रोशत एव ] शप-मानस्यैव, [ तस्य ] शिशुपालस्य, [ वपुः ] शरीरं, [ सहसा ] सपदि, तथा-विधनिर्भर्त्सनक्षण एवेत्यर्थः ; [ मूर्द्धविकलं ] विशिरस्कं, [ चक्रे ] विदधौ, तदीयं शिरश्चिच्छेदेत्यर्थः। करोतेः कर्त्तरि लिट्। पुरा हि भगवता सैंहिकेयस्य शिरः वपुर्विकलं कृतम्, इदानीन्तु अस्य वपुः शिरःशून्यमकारीत्यभिप्रायः। अत्र साधनीभूतस्य सुदर्शनास्त्रस्य प्रभावाऽऽतिशय्यबोधकतया उपन्यस्तस्य राहुस्त्री-स्तनकार्कश्यविफलीभावस्य प्रस्तुतस्यैव गम्यस्य वस्तुनः चैद्यबधस्य वैचित्र्य-विशेषप्रतिपत्तये उपन्यस्तत्वात् पर्य्यायोक्तमलङ्कारः ;—"पर्य्यायोक्तं यदा भङ्ग्या गम्य-मेवाभिधीयते" इति दर्पणलक्षणात्। शार्दूलविक्रीडितं वृत्तम् ;—"सूर्य्याश्वैर्मसज-स्तताः सगुरवः शार्दूलविक्रीडितम्" इति लक्षणात्॥ ७८॥

अथेदानीं शिशुपालस्य निर्वाणमुक्तिप्रकारमाह, श्रियेति —[ अथ ] शिरश्छेद-नानन्तरं, [ श्रिया ] अपूर्वया सुषमया, [जुष्टं] सेवितं, भगवद्धस्तेन विनाशप्राप्तेरित्यर्थः, अत एव [ दिव्यैः ] दिविभवैः, [ सपटहरवैः ] दुन्दुभिनिर्घोषसहितैः, [ पुष्पवर्षैः ] कुसुमवृष्टिभिः, [ अन्वितं ] सम्बद्धं, तूर्य्यध्वनिसहितपुष्पवृष्टिसमाच्छन्नमित्यर्थः ; [ क्षणं ] शिरश्छेदनसमकालमिति यावत्, [ ऋषिगणैः, स्तूयमानं ] स्तुतिवादैन समर्च्चमानम्, आसुरकायध्वंसात् परं तदानीं तस्य मोक्षाधिगमादीश्वरै-क्याधिगतेरिति भावः, तथा [ चैद्यस्य ] शिशुपालस्य, [ वपुष्टः ] शरीरात्। पञ्चम्यास्तसिल्। [ निरीय ] निर्गत्य। "इण् गतौ" इति धातोः "समासेऽनञ्-

प्रकाशेनाऽऽकाशे दिनकरकरान् विक्षिपद्विस्मिताक्षै-
र्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षाम्बभूवे ॥ ७९ ॥

अथ कविवंशवर्णनम् ।—

सर्वाधिकारी सुकृताधिकारः श्रीधर्मनाभस्य * बभूव राज्ञः ।
असक्तदृष्टिर्विरजाः सदैव देवोऽपरः सुप्रभदेवनामा ॥ ८० ॥

पूर्वे क्त्वो ल्यप्" (७।१।३७ पा०) इति ल्यप्। [प्रकाशेन] स्वप्रभयेत्यर्थः, [आकाशे] व्योम्नि, [दिनकरकरान्] सूर्यरश्मीन्, [विक्षिपत्] निरस्यत्, स्वप्रभया सहस्रांशुकिरणानपि विजयमानमित्यर्थः; उपेन्द्रस्य इदम् [औपेन्द्रं वपुः] भगवतो हरेर्विग्रहं, [विशत्] तत्र निविशमानमित्यर्थः, भगवत्तेजसा सह सम्मिलदिति भावः; [धाम] चेदं तेजः, [विस्मिताक्षैः] विस्मयेन विस्फारितलोचनैः, [नरेन्द्रैः] राजन्यकैः, [वीक्षाम्बभूवे] निरैक्ष्यत, सविस्मयमालोकयाञ्चक्रे इत्यर्थः। ईक्षतेः कर्मणि लिट्। "इजादेश्च गुरुमतोऽनृच्छः" (३।१।३६ पा०) इत्याम्। "कृञ्चानु प्रयुज्यते लिटि" (३।१।४० पा०) इति भुवोऽनुप्रयोगः। "भावकर्मणोः" (१।३।१३ पा०) इत्यात्मनेपदम्। तथा च भगवान् व्यासः,—"ततश्चेदिपतेर्देहात्तेजोऽग्र्यं ददृशे नृपैः। उत्पपात यदा राजन् तदा तेजो विवेश च॥ दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता। यदि भाः सदृशी सा स्यात् धाम्नस्तस्य महात्मनः॥" इति। एतेन भगवति द्विषद्बुद्धेरपि तस्य निरन्तरं ध्येयत्वेन तदैकान्तिकतया भगवत्प्रसादलाभ इति अनुसन्धेयम्। अत्राऽऽह नारदः,—"कामाद्गोप्यो भयात् कंसो द्वेषाच्चैद्यादयो नृपाः। सम्बन्धाद्वृष्णयः स्नेहाद् यूयं भक्त्या वयं प्रभो!॥" इति। दिनकरकिरणपरिभावितया अत्यद्भुतस्य शिशुपालतेजसः भगवच्छरीरप्रवेशकालिकस्य प्रत्यक्षायमाणत्वेनाभिवर्णनात् भाविकालङ्कारः;—"अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः। यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम्॥" इति दर्पणलक्षणात्। अत्र वैचित्र्यजनकतया मङ्गलाऽऽचरणरूपतया च अन्ते श्रीशब्दप्रयोगः; यथाऽऽह भाष्यकारः,—"मङ्गलाऽऽदीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते" इत्यादि। मेघविस्फूर्जिता वृत्तम्;—"रसर्त्वश्वैर्म्यौ न्सररगुरुयुता मेघविस्फूर्जिता स्यात्" इति लक्षणात् ॥७९॥

अथेदानीं तत्रभवान् महाकविर्माघः स्वप्रशस्त्यन्ववायं विवरिषुरादौ प्रख्यात-

* श्रीवर्मलाऽऽख्यस्य इति पाठान्तरम्।

**काले मितं तथ्यमुदर्कपथ्यं तथागतस्येव जनः सचेताः ।**
**विनाऽनुरोधात् स्वहितेच्छयैव महीपतिर्यस्य वचश्चकार ॥ ८१ ॥**

---

नाम्नः स्वपितामहस्य परिचयं विवृणोति, सर्वेति ।—[ श्रीधर्म्मनामस्य राज्ञः ] श्रीधर्म्मनाम इति समाख्यया प्रसिद्धस्य भूपतेः, [ सर्वाधिकारी ] सर्वस्मिन् अधिकारे नियुक्तः, दण्डनीत्यर्थनीत्यादिविविधराजकीयकर्म्मणां पर्य्यवेक्षितेत्यर्थः, प्रधानमन्त्रीति भावः, [ सुकृताधिकारः ] सुकृते पुण्ये कर्म्मणि, अधिकारः व्यापारः यस्य सः, सदैव पुण्यकर्म्मणामनुष्ठाता, तत्रैवाधिकारितया कदाचित् प्रमादपि पापकर्म्मणामप्रयोक्ता इति फलितार्थः । यः सुकृते एव केवलमधिकृतः, स कथं सर्वाधिकारी ? इति आपाततः विरोधः, सर्वस्मिन् नियुक्तोऽपि अनासक्त इव सर्वत्राऽऽसीत् इति तत्परिहारात् विरोधाऽऽभासोऽलङ्कारः । असक्ता कुत्रचिदपि स्रक्चन्दनवनिताऽऽदिभोग्यवस्तुषु अनाकृष्टा, दृष्टिः चक्षुः यस्य सः [ असक्तदृष्टिः ] विषयेषु निस्पृह इत्यर्थः, अत एव [सदैव] सततमेव ; विगतं दूरीभूतं, रजः रजोगुणः यस्मात् तथाभूतः [ विरजाः ] रजोगुणेनापि अपराभूतचेताः, मोक्षमार्गे स्थितः इत्यर्थः, [ अपरः ] द्वितीयः, [ देवः ] अमरविग्रहवान्, देवसदृश इत्यर्थः, [ सुप्रभदेवनामा बभूव ] सुप्रभदेव इत्याख्यया प्रसिद्धः मे पितामहः आसीत् इति फलितार्थः । देवा हि सर्वाधिकारिणः सर्वेष्वेव भोग्यविषयेषु अधिकारवन्तः, अतीव सौभाग्यशालित्वात् । सुकृताधिकाराः पुण्यभाजः । असक्तदृष्टयः अनिमिषलोचनाः । विरजाः विगतपापाः निर्धूलयश्च भवन्ति इति ज्ञेयम् ; अत एव सुप्रभदेवस्य साक्षात् देवात् भेदेऽपि अपरदेवत्वेनाभेदोक्तेः भेदेऽभेदाध्यवसायमूलातिशयोक्त्यलङ्कारः । वृत्तमिदमुपजातिः ॥ ८० ॥

अथेदानीं स्वपितामहस्य सुप्रभदेवस्यातिमनीषित्वं राज्ञश्चातिप्रेमविश्वासभूमित्वञ्चाऽऽह, काले मितमिति ।—चेतसा प्रशस्तया धिया सह वर्त्तमानः [ सचेताः ] प्राज्ञः इत्यर्थः, [ जनः ] लोकः, [ तथागतस्येव ] शाक्यमुनेरिव । 'सर्व्वज्ञः सुगतो बुद्धो धर्म्मराजस्तथागतः' इत्यमरः । भगवतः शाक्यसिंहस्य शासनं यथा प्राज्ञः जनः स्वहितेच्छयैव नियतमेवानुतिष्ठति, तथैवेत्यर्थः, [महीपतिः] भूमिपतिः श्रीधर्म्मदेवः, [ अनुरोधात् विना ] कस्यापि प्रार्थनाम् ऋते, केश्चिदननुरुद्धोऽपि इत्यर्थः ; एतेन तस्य आदराऽऽतिशय्यं प्रकटीकृतम् । [स्वहितेच्छयैव] स्वहितोदर्ककर्म्मचिकीर्षयैव, [ यस्य ] सुप्रभदेवस्य, [ काले ] यथासमये, उपदेशग्रहणयोग्ये काले इत्यर्थः, [ मितं ] स्वल्पाक्षरं, तथा [ तथ्यं ] सत्यम्, [ उदर्कपथ्यम् ] आयत्यां

तस्याभवद्दत्तक इत्युदात्तः क्षमी मृदुर्धर्मपरस्तनूजः ।
यं वीक्ष्य वैयासमजातशत्रोर्वचो गुणग्राहि जनैः प्रतीये ॥ ८२ ॥
सर्वेण सर्वाऽऽश्रय इत्यनिन्द्यमानन्दभाजा जनितं जनेन ।
यश्च द्वितीयं स्वयमद्वितीयो मुख्यः सतां गौणमवाप नाम ॥ ८३ ॥

---

हितकरम्, उत्तरकाले अतीव शुभफलप्रदमित्यर्थः । 'उदर्कः फलमुत्तरम्' इत्यमरः । [ वचः ] उपदेशवाक्यं, [ चकार ] अनुष्ठितवान् ; सदैव सावहिततया महीपतिः सायहमुपश्रुत्य यस्यैतादृशं हितं वचनमनुपालितवानिति भावः ; यो हि राज्ञश्चातीव प्रियङ्करः प्रीत्यास्पदश्चाऽऽसीदिति समुदितार्थः । वृत्तं पूर्ववदुपजातिः ॥ ८१ ॥

अथ स्वपितुः दत्तकस्य विद्वद्गणाग्रेसरत्वमतीव धर्मपरायणत्वञ्चाऽऽह, तस्याभवदिति ।—[ तस्य ] सुप्रभदेवस्य, [ उदात्तः ] प्रशस्तचित्तः, महोदारचेता इत्यर्थः, [ क्षमी ] क्षान्तः, क्षमावानित्यर्थः,—"आक्रुष्टोऽभिहतो वाऽपि नाऽऽक्रोशेन्न च हन्ति वा । अदुष्टैर्वाङ्मनःकायैस्तितिक्षुः सा क्षमा मता ॥" इत्युक्तगुणसम्पन्न इति भावः ; [ मृदुः ] अकठोरः, निरतिशयकोमलमतिरित्यर्थः, [ धर्मपरः ] स्वधर्मपरायणः, सुकृतैकाऽऽसक्त इति भावः ; [ दत्तक इति ] दत्तक इति समाख्यया प्रसिद्धः, [तनूजः] तनयः, [ अभवत् ] आसीत् ; देवसदृशस्य तस्य सुप्रभदेवस्य तथाविधः धार्मिकः तनयः समजनि इति भावः । तस्य धार्मिकत्वं विद्यावत्त्वञ्च विशदीकरोति, यमिति ।—[ जनैः ] गुणग्राहिभिः पुम्भिः, [ यं ] दत्तकं, [ वीक्ष्य ] दृष्ट्वा, [ वैयासं ] भगवता श्रीकृष्णद्वैपायनेन प्रोक्तं, [ गुणग्राहि ] गुणग्राहकं, गुणभूयिष्ठमित्यर्थः ; न जाताः शत्रवो यस्य तस्य [ अजातशत्रोः ] केषुचिदपि विद्वेषस्याकृतत्वादेव निःसपत्नस्य, अतीव दयावतः धार्मिकस्य युधिष्ठिरस्य सम्बन्धि इति यावत्, [ वचः ] वचनं, धर्मपरत्व-क्षमित्व-मृदुत्वादिज्ञापकमित्यर्थः, [ प्रतीये ] प्रतीतं, तथ्यतया विज्ञातमित्यर्थः । प्रतिपूर्वकात् अादादिकस्य इण् धातोः कर्मणि लिटि रूपम् । यो हि युधिष्ठिर इव निरतिशयः पवित्राऽऽत्मा धार्मिकश्चाऽऽसीदिति समुदितार्थः । आख्यानकी वृत्तम् ॥ ८२ ॥

अथ स्वपितुरन्वर्थं नामान्तरमासीदिति विदुषां विशेषाभिज्ञानायाऽऽह, सर्वेणेति ।—[सतां] सज्जनानाम् ; मुखमिव [मुख्यः] अग्रेसरः, वरेण्य इत्यर्थः । "शाखादिभ्यो यः" (५।३।१०३ पा०) इति यः । [अद्वितीयः] स्वसजातीयद्वितीयरहितः, सर्वोत्कृष्ट इत्यर्थः,

श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म
लक्ष्मीपतेश्चरितकीर्त्तनचारु माघः * ।

[ यश्च ] यो हि दत्तकः, [ द्वितीयम् ] अपरं, दत्तक इति समाख्यया अन्यदित्यर्थः, [अनिन्द्यं] प्रशस्ततया अनवद्यं, श्लाघ्यमित्यर्थः, [आनन्दभाजा] निरतिशयाऽऽनन्दवता, तुष्टेन सतेत्यर्थः, [सर्वेण जनेन] निखिलेन लोकेन, [स्वयम्] आत्मनैव, [ जनितम् ] उद्घोषितं, [सर्वाऽऽश्रय इति] सर्वाऽऽश्रय इति प्रसिद्धं, सर्वेषां द्विजानाथातिथिमित्रा-णामाश्रयभूततया अनुगतार्थमित्यर्थः, [गौणं] मुख्यात् दत्तकनामधेयादन्यत्, गुणप्रवृत्ति-निमित्तभूततया अर्थानुगमित्यर्थः, [ नाम, अवाप ] प्रापत् ; तस्य दत्तकस्य अन्वर्थं सर्वाऽऽश्रय इति नामान्तरमासीत्, न तु तैलमपीतवानपि कीटविशेषः तैलपायि-केत्याख्यामिव विफलं नाम दधार इति समुदितार्थः। यो हि द्वितीयं नाम दधार, स कथमद्वितीयः भवेत् ?—अपि च यो हि मुख्यः, सः कथं गौणः भवेत् ?—अपि च यस्य नाम लोकैः जनितं, स कथं स्वयं लेभे ?—इति आपाततः विरोधः, तत्परिहारस्तु अद्वितीयेत्यादीनां लोकोत्तरेत्यादिभिन्नार्थपरतया भिन्नविषयत्वेन समाधानीयः इति विरोधाऽऽभासोऽलङ्कारः। इन्द्रवज्रा वृत्तम् ॥ ८३ ॥

अथ तत्रभवान् कविः स्वरचितमहाकाव्यनामधेयमभिदधत् स्वीयं निरतिशय-विनयित्वमुत्कीर्त्तयति, श्रीशब्देति।—[ तस्य ] पुण्यश्लोकस्य दत्तकस्य, [ आत्मजः ] तनयः, [ माघः ] माघनामधेयः, [ सुकविकीर्त्तिदुराशया ] सुकवीनां सुमधुरकाव्य-प्रणेतॄणां श्रेष्ठावदुषा वररुचि-सुबन्धु-सोमनाथ-भवभूति-क्रीड़ाऽऽनन्द-कालिदास-भारवि-बाण-मयूराऽऽदीनां, या कीर्त्तिः ख्यातिः, कवित्वयशः इति यावत्, तस्याः दुराशा दुरभि-लाषः, तत्सदृशं यशः लब्धुं दुराकाङ्क्षा इत्यर्थः, तया, महाकविकीर्त्तिलिप्सयेति यावत्, आशायाः दुष्टत्वन्तु स्वस्य स्वल्पबुद्धित्वादिति वेदितव्यम् ; [ श्रीशब्दरम्यकृतसर्ग-समाप्तिलक्ष्म ] श्रीशब्देन श्रीरितिशब्दसमुच्चारणेनेत्यर्थः,—"आदिमध्यान्तमङ्गलानि शास्त्राणि झटिति प्रसिद्धानि भवन्ति" इति स्मरणात् स्वग्रन्थस्य झटिति प्रसिद्धये आशङ्कितविघ्नविध्वंसाय च "श्रियः पतिः" इत्यादौ, तथा प्रतिसर्गस्यान्ते च माङ्गलिक-श्रीशब्दसमुत्कीर्त्तनेनेति भावः, रम्यं निरतिशयमनोहरं, कृतं सर्गसमाप्तौ

---

* चरितकीर्त्तनमात्रचारु इति पाठान्तरम् ।

तस्याऽऽत्मजः सुकविकीर्त्तिदुराशयाऽदः
काव्यं व्यधत्त शिशुपालवधाभिधानम् ॥ ८४ ॥

इति शिशुपालवधे महाकाव्ये श्रीदत्तकसूनुकविश्रीमाघविरचिते शिशुपालवधो नाम विंशतितमः सर्गः ॥ २० ॥

---

प्रतिसर्गान्ते, लक्ष्म चिह्नं यत्र तत् तथोक्तं, प्रतिसर्गान्ते श्रीरूपमाङ्गलिकाङ्कविशोभितमिति भावः, [ लक्ष्मीपतेः ] नायकस्य भगवतो नारायणस्य, [ चरितकीर्त्तनचारु ] गुणगणानामुत्कीर्त्तनेन मनोज्ञम् ; यद्यपि सहृदयमानसाऽऽकृष्टकरं मे कवित्वयशःसौरभं किमपि नास्ति, तथाऽपि विष्णुगुणानामत्रोपवर्णनात् पवित्राऽऽशयैः सामाजिकैः भगवद्गुणश्रवणलोभात् श्रोतव्यं, न त्वलङ्कारादिगौरवात् इति स्वकीयानौद्धत्योक्तिरिति ज्ञेयम् ; भङ्ग्या तु सर्वेऽत्र काव्यगुणाः सन्तीत्यावेदितम् । [ शिशुपालवधाभिधानं ] शिशुपालवधाऽऽख्यम्, [ अदः काव्यम् ] एतत् महाकाव्यं, [ व्यधत्त ] विरचयामास । विपूर्वकात् दधातेः कर्त्तरि लङि रूपम् । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" ( १।३।७२ पा० ) इत्यात्मनेपदम् । वसन्ततिलका वृत्तम् ॥ ८४ ॥

इति कविवंशवर्णनम् ।




## भ्रमनिरसनम्—

९६७ पृष्ठायां १९श सर्गस्य ९४ श्लोकीया टिप्पनी भ्रान्तिविजृम्भिता,—
"रेपाः स्यादधमे क्रूरे कृपणेऽप्यभिधेयवत्" इति मेदिनीदर्शनात् ।